आचार्यश्रीमण्डनमिश्रविरचिता

# ब्रह्मसिद्धिः

कुलपतेः प्रो॰ वाचस्पति-उपाध्यायस्य 'नैवेद्य'पुरोवाचा पुरस्कृता

सम्पादकः

प्रो॰ केदारनाथत्रिपाठी

श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठम्
(मानितविश्वविद्यालयः)
नई दिल्ली

VIDYĀPĪṬHA-GRANTHAMĀLĀ
[ Vol. 4 ]

# BRAHMASIDDHI

OF

## ĀCĀRYA ŚRĪ MAṆḌANA MIŚRA

*With the Commentary*

'KALĀ

*By*

ĀCĀRYA ŚRĪ KEDĀRANĀTHA TRIPĀṬHĪ

*FOREWORD BY*

PROF. VACHASPATI UPADHYAYA
VICE-CHANCELLOR

EDITED BY

**ĀCĀRYA ŚRĪ KEDĀRANĀTHA TRIPĀṬHĪ**
Ex - Head of the Philosophy Dept.
Banaras Hindu University
Varanasi

**NEW DELHI**
**1999**

विद्यापीठ-ग्रन्थमाला
[ चतुर्थं पुष्पम् ]

आचार्यश्रीमन्मण्डनमिश्रविरचिता

# ब्रह्मसिद्धिः

आचार्यश्रीकेदारनाथत्रिपाठिकृतया 'कला'-व्याख्यया
कुलपतेः प्रो०वाचस्पति-उपाध्यायस्य 'नैवेद्य'-पुरोवाचा च
पुरस्कृता

सम्पादकः
आचार्यश्रीकेदारनाथत्रिपाठी
दर्शनविभागाध्यक्षचरः
काशीहिन्दूविश्वविद्यालये
वाराणसी

नवदेहल्याम्

२०५६ तमे वैक्रमाब्दे १९२१ तमे शकाब्दे १९९९ तमे खैस्ताब्दे

प्रकाशकः :
**कुलसचिवः**
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य
(मानितविश्वविद्यालयस्य)
नई दिल्ली – ११००१६

❑

प्राप्तिस्थानम् :
**प्रकाशन-विभागः**
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य
(मानितविश्वविद्यालयस्य)
नई दिल्ली – ११००१६

❑

**प्रथमं संस्करणम्**, १००० प्रतिरूपाणि
**मूल्यम्** – ३८०.०० रूप्यकाणि

❑

मुद्रकः :
**आनन्द प्रिंटिंग प्रेस**
सी० २७/१७०-ए, जगतगंज
वाराणसी - २२१ ००२

|| श्रीः ||

## अनन्तश्रीविभूषितानां ज्योतिर्द्वारकाशारदापीठ-द्वयाधीश्वराणां जगद्गुरुशङ्कराचार्याणां

# स्वामिस्वरूपानन्दसरस्वतीमहाराजानां

## शुभाशीर्वादः

इह खलु अमन्दानन्दकन्दसन्दोहमनुबोभवीति मे चेतो यद् भगवत्पादाद्य-शङ्कराचार्यप्रधानशिष्यसकलभूमण्डलमण्डनश्रीमन्मण्डनमिश्रकृतो **ब्रह्मसिद्धिग्रन्थः** पूर्वं कथापथातीतोऽपि सम्प्रति दृष्टिपथमवतरतीति। पुनश्चायं ततोऽपि सौभाग्यास्पदं पदं यदमुष्मिन् ग्रन्थरत्ने काशीहिन्दूविश्वविद्यालयीयदर्शनविभागाध्यक्षचरैः काशी-विद्वत्परिषदध्यक्षैरस्माकमत्यन्तस्नेहास्पदैर्दार्शनिकसार्वभौमैराचार्य **श्रीकेदारनाथत्रिपाठिमहोदयैः** स्वरचितकलाख्यव्याख्याऽपि संयोजिता, तैरेव सम्पादिता च।

स्वव्याख्यायाम् आचार्यचरणानां सर्वेऽपि आशयाः कार्त्स्न्येन एभिः प्रकाशिता इति दर्शं दर्शं मोमुदीति मे मनः।

एतेषामायुष्यं वैदुष्यं प्रतिक्षणं वर्धतामिति शारदाम्बाचन्द्रमौलीश्वर-पूर्णाम्बाज्योतिरीश्वरं मुहुः प्रार्थयामहे।

इति नारायणस्मृतिः।

# नैवेद्यम्

नमो निखिलरूपाय जगज्जन्मादिहेतवे।
सच्चिदानन्दरूपाय निर्विशेषपरात्मने॥

श्रीवङ्गभूमिभवभास्करतुल्यतेजा विद्याप्रकर्षबुधमानसराजहंसः।
विद्वन्नियोजनसमर्जितपुण्यराशिर्वन्द्यो वदान्यचरितो गुरुगौरिनाथः॥
शास्त्रेषु निष्ठितमतिः स्फुटवाक्प्रवाहो विद्वच्छिरोमणिरबोधतमोऽपहन्ता।
शिष्यैः शतैः श्रुतदिगन्तविशुद्धकीर्त्तिः पट्टाभिरामगुरुरेष जयत्यजस्रम्॥

अथ श्रीमण्डनमिश्रैः पूर्वोत्तरमीमांसादिशास्त्राम्भोधितलावगाहिमन्दरायमाणैराचार्यैः साक्षाद् भगवत्पादशिष्यैर्विरचितामपूर्वां **'ब्रह्मसिद्धि'**मधिकृत्य किञ्चित् प्रस्तूयते। ब्रह्मतर्कनियोगसिद्धिरूपैश्चतुर्भिः काण्डैर्विभूषितमिदं ग्रन्थरत्नमधुनापि विद्वत्कृतिशिरोमौलिषु चकास्तितराम्। तत्र **पण्डितश्रीकेदारनाथत्रिपाठिवर्यै**र्महादार्शनिकैः सकलशास्त्रपारावारपारीणैरधिगताखिलतत्त्वार्थैः काशीहिन्दूविश्वविद्यालयीय-भूतपूर्व-दर्शनविभागाध्यक्षैर्ग्रन्थग्रन्थिश्लथीकरणकुशला पाण्डित्यपूर्णा कलाख्या व्याख्या कृताऽस्ति। तादृशाद्भुतव्याख्यासख्येन ग्रन्थोऽयं सुगमतां गतो विदुषां विद्यार्थिनाञ्च झटिति प्रतीतिकरत्वाद् मोदमावहन् सफलतामेति, एष्यति चेति कामये।

तत्र आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यश्चेति बृहदारण्यमैत्रेयीब्राह्मणाद् आत्मैव द्रष्टव्यत्वेन निश्चीयते नान्यत् किञ्चित्। आत्मदर्शनोपायाश्च श्रवणमनननिदिध्यासनानि। श्रुतिवाक्येभ्यः श्रोतव्य उपपत्तिभिः श्रुत्यर्थानुग्राहितर्कैश्च मन्तव्यः असम्भावनाविपरीतभावनारहिताखण्डाकारचित्तवृत्त्या च साक्षात् कर्तव्यः। श्रवणं नाम वेदान्तानामद्वैते ब्रह्मणि तात्पर्यावधारणम्। मननं नाम शब्दावधारितेऽर्थे मानान्तरविरोधशङ्कायां तन्निराकरणानुकूलतर्कात्मज्ञानजनको मानसो व्यापारः। निदिध्यासनं नाम अनादिवासनावासितान्तःकरणस्य विषयेभ्य आकृष्य आत्मविषये स्थिरीकरणं मानसो व्यापारः। 'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वेता० १-३)। 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' (मु० ३-१-८) इत्यादिश्रुतेः। एवमुपायैरात्मा द्रष्टव्यः।

अत्ति चराचरं जगदिति आत्मा, अत्ता चराचरग्रहणादिति सूत्रात्। आदत्ते गृह्णाति धारयति वा विषयान् इति, अतति सर्वत्र व्याप्नोति वेत्यात्मा ब्रह्मैव, 'अयमात्मा

ब्रह्म', 'आत्मा वा इदमेक एवाग्र आसीत्' (श्वेता० १) 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत' (छा०) 'एष तेऽन्तर्याम्यमृत' इत्यादिश्रुतेः। 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत'! 'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' इत्यादि-स्मृतेश्च।

एवं बृहत्त्वाद् व्यापनाद् विविधरूपेण बृंहणाद् विवर्तनाद् ब्रह्म तदेव आत्मा। स च आनन्दविज्ञानघन एकोऽद्वितीयो निष्कल इत्यादिश्रुतिस्मृतीतिहासादिभ्यो विज्ञायते। 'आनन्दं ब्रह्म' (बृ० ३-९-२८), 'विज्ञानमानन्दं ब्रह्म' (बृ० ३-९-२८), 'एकमेवाद्वितीयम्' (छा० ६-२-१), 'अस्थूलमनण्वह्रस्वम्' (बृ० ३-८-८) इत्यादिश्रुतेः। ब्रह्मसिद्धिकारैर्मङ्गलश्लोक एव परब्रह्मस्वरूपं स्पष्टीकृतम् –

**आनन्दमेकममृतमजं विज्ञानमक्षरम्।**
**असर्वं सर्वमयं नमस्यामः प्रजापतिम्॥**

विवृतञ्चैतत् श्रुतिस्मृतियुक्तिभिः स्वयं सिद्धिग्रन्थे। तत्र प्रथमे ब्रह्मकाण्डे अस्यैव आनन्दमेकमित्यादिमङ्गलश्लोकस्य प्रतिपक्षप्रदर्शननिरसनपूर्वकं प्रतिपदं पाण्डित्यपूर्णं व्याख्यानं कृतम्।

द्वितीये तर्ककाण्डे शब्दप्रमाणात् सिद्धस्य ब्रह्मात्मैक्यस्य प्रत्यक्षादिप्रमाण-विरोधोद्धारः कृतः। तृतीये नियोगकाण्डे च प्रत्यक्षादिप्रमाणविरोधात् कर्मादिविधि-विरोधाच्च वेदान्तानामुपचरितार्थत्वं यत् पूर्वपक्षिभिरुपक्षिप्तं "कार्ये एव वेदस्य प्रामाण्यं न भूते, आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इत्यादिजैमिनीयसूत्रात्, तत् सर्वं समाहितम्।

चतुर्थे सिद्धिकाण्डेऽपि वेदान्तवाक्यानां नैव कथमपि ब्रह्मात्मनि प्रामाण्यमिति पूर्वमुपक्षिप्तं तस्य समाधानं कृत्वा अद्वैते ब्रह्मणि वेदान्तानां प्रामाण्यं व्यवस्थापितम्। अत्र ब्रह्मण एवाद्वितीयस्य विज्ञानानन्दलक्षणस्य सिद्धस्य सर्वाधिष्ठानसतः स्वयं–प्रकाशस्य सर्वविरोधनिराकरणपूर्वकं सिद्धिनिश्चयः = दृढा संशयविपर्ययशून्या प्रतिपत्तिः कृतेति 'ब्रह्मसिद्धिः' अन्वर्थनामा ग्रन्थः।

ननु कथमात्मैव द्रष्टव्यः साक्षात्कर्तव्यः, यावता बहूनि साक्षात्कर्त्तव्यानि सन्ति ? किञ्चात्मदर्शने प्रयोजनम् ? साक्षात् प्रत्येत्येव अहमसीत्यादिरूपेण आत्मानं सर्वो लोकः। तत्र च कथमात्मदर्शन एवादरवती दृश्यते श्रुतिरिति चेत्, उच्यते– आत्मनो नित्यानन्दरूपत्वात्, आनन्दस्य परमपुरुषार्थत्वात्, आनन्दमेव कामयन्ते अन्विष्यन्ति तदुपलब्धौ च सततं यतन्ते लोकाः। लौकिकवैदिकानि कर्माणि उपासनानि च आनन्दार्थं विहितानि। किञ्च अवैदिकान्यपि हेयजनक्रियमाणानि भूतप्रेतपिशाचसाधनाय कर्माण्यपि आनन्दार्थं सन्ति। एवं सर्वो लोक आनन्दार्थं प्रवर्तमानो दृश्यते।

पुरुषार्था अप्यानन्दमूला धर्मार्थकाममोक्षाख्याः। लौकिकानन्दस्यापि सातिशयता दृश्यते लोके। आनन्दार्थिनश्च विषयेषु आनन्दमन्विष्यन्ति क्षणिकमानन्दं लब्ध्वा तत्र व्यामूढा पुनः पुनर्लब्धुं यतन्ते, यतमाना एव विषयात्मानो म्रियन्ते तथा पुनः पुनरुत्पद्यन्ते। ते स्वमेवानन्दरूपं न जानन्ति भ्रमन्ति च जडेषु आनन्दार्थिनः। यथा कस्तूरीमृगः स्वस्मिन् स्थितं कस्तूरीगन्धमज्ञात्वा तद्गन्धप्रमत्तस्तदन्विष्यन् परितो धावति तद्वद् अयमात्मा सुखरूपः सुखार्थं प्रतिविषयमनुसज्जते।

अयमानन्दो न दुःखनिवृत्तिरूपः, तस्य भावरूपत्वात्। दुःखविगमानन्तरमपि विशिष्टसुखोपलब्धौ यत्नदर्शनात्। अतः सुखं स्वतन्त्रं भावरूपं वस्तु न दुःखाभावरूपं तच्च आत्मनः स्वरूपम्। 'आनन्दं ब्रह्मणो विद्वान्' इत्यादिश्रुतेः। स चानन्दः स्वप्रकाशः न परसंवेद्यो न वा स्वसंवेद्यः। आद्ये जडत्वप्रसङ्गात्, द्वितीये कर्तृकर्मविरोधात्। उक्तञ्च ग्रन्थकारेण – "तस्माद् आत्मप्रकाशतैव संवेद्यतेति"। 'विज्ञानमानन्दं ब्रह्म' (बृ० ३।९।२८) इति श्रुतेरानन्दरूपस्यात्मनो विज्ञानरूपताऽपि सिध्यति। आनन्दस्वभावतास्यात्मनः परमप्रेमास्पदत्वात् सिध्यति, 'तदेतत् प्रेयः पुत्रात्' (बृ० १।४।८) इत्यादिश्रुतेः। एवमात्मानन्दविज्ञानरूपो द्रष्टव्यः। अन्यच्च सर्वं दृश्यं शुक्तिरूप्यादिवद् आत्मनि कल्पितमेव, तद्दर्शने चानिष्टप्रसक्तिः स्यात्। दर्शितश्च आत्मानात्माध्यासो भगवत्पादैरध्यासभाष्ये। अनाद्यविद्यावशादेव आत्मनि अनात्मप्रपञ्चः कल्पितोऽवभासते। यथा शुक्तिसाक्षात्कारे तत्राध्यस्तं रजतं निवर्तते तथा ब्रह्मणि दृष्टे सर्वः समूलप्रपञ्चो निवर्तते।

जीवात्माऽपि ब्रह्मैव, अयमात्मा ब्रह्मेति श्रुतेः। जीवब्रह्मणोर्भेदोऽपि आविद्यिक एव। निवृत्तायामविद्यायां जीवस्य ब्रह्मरूपत्वं सम्पद्यते। जीवात्मा वस्तुतः सत्यज्ञानानन्दः शुद्धबुद्धमुक्तस्वरूपो मायावशात् संसारमनुभवति। माया हि स्वयमनुपपद्यमाना अनादिभावरूपा अनिर्वचनीया आवरणविक्षेपशक्तिद्वययुक्ताऽखिलानात्मप्रपञ्चमूला दृश्यते। अतो जीवा न परमार्थतो ब्रह्मणो भिद्यन्ते, तत्त्वमसीत्यादिमहावाक्यात् तयोरभेदप्रतिपत्तेः। अतो जीवब्रह्मणौरैक्यमेव। तयोरैक्यप्रतिपत्तिर्हि महावाक्यश्रवणमनननिदिध्यासनलब्धा ब्रह्मविद्योच्यते। सा च समूलं प्रपञ्चमुपनिषदयति ब्रह्म वा गमयतीत्युपनिषत्पदेनापि कथ्यते। ब्रह्मविद्यैव पराविद्याशब्देनोच्यते। यथोक्तं मुण्डके – "द्वे विद्ये वेदितव्ये परा चापरा च। अपरा ऋग्यजुःसामाथर्वलक्षणा। अथ परा यया तदक्षरमधिगम्यते" इति।

ऐक्यप्रतिपत्तौ ब्रह्मसाक्षात्काररूपायां जातायां जीवन्नेव मुक्तः सन् जीवात्मा अन्ते विदेहमुक्तो भवति, 'विमुक्तश्च विमुच्यत' इति श्रुतेः। तस्माज्जीवब्रह्मणोरद्वैतविज्ञानस्य मोक्ष एव प्रयोजनम्। स च परमपुरुषार्थो नित्यो ज्ञातत्वोपलक्षित आत्मरूप एव।

ननु नित्यमुक्तस्यात्मनः का नाम मुक्तिरिति चेत्, न, प्राप्तस्यापि अप्राप्तस्येव प्राप्तस्वरूपत्वात्। यथा ग्रीवास्थस्यापि ग्रैवेयकस्य विस्मरणाद् अज्ञानवशाद् ग्रीवास्थलं विहायान्यत्रान्विष्यमाणस्य कस्यचिद् आप्तपुरुषस्य ग्रीवास्थमेवास्तीति सत्यवचनात् प्रापणम्, तद्वद् अद्वैतविज्ञानान्नित्यमुक्तस्यापि अविद्यावशाद् बद्धस्येव मुक्तिर्भवति। एवं प्रयोजनाद् आत्मा द्रष्टव्यः।

भ्रान्तानां जीवानां परमपुरुषार्थसिद्धये अत्यादरवती दयावती मातृस्थानीया श्रुतिः शतकृत्वोऽद्वैतं प्रकाशयन्ती नोपरमति। कर्मकाण्डोपासनानुष्ठानसृष्ट्यादि-प्रतिपादनद्वारा अद्वैते ब्रह्मणि तात्पर्यं दधाति। कर्मणां विधिनिषेधलक्षणानां प्रतिपादनं चित्तशुद्ध्यर्थम् उपासनानां च चित्तैकाग्रतार्थं कृतम्। विशुद्धे स्थिरे मनसि चाद्वैत-निश्चयः सम्भवतीति विविधोपायेनात्मतत्त्वप्रतिपादने श्रुतिः प्रभवति। न च कर्मसु न वोपासनासु श्रुतीनां परमं तात्पर्यम्, अपि त्वद्वैत एव ब्रह्मण्यस्ति। तात्पर्यग्राहकाणि च षड्विधानि लिङ्गानि वर्णितानि—

**उपक्रमोपसंहारावभ्यासोऽपूर्वताफलम्।**
**अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिश्चये॥**

यथा छान्दोग्ये तृतीयप्रपाठके 'सदेव सोम्येदमग्र' इत्याद्युपक्रमः। 'तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इत्युपसंहारः। तस्यैव तत्त्वमसीति वाक्यस्य नवकृत्वः कथनमभ्यासः। अभ्यासे हि भूयस्त्वमर्थानां भवति। तत्रैव तत्त्वंपदार्थयोरैक्यस्य मानान्तरागम्यत्वाद् अपूर्वता। तस्य तावदेव चिरं यावन्न विमोक्ष्ये इत्याद्यर्थवादः। मृल्लोहदृष्टान्तैरद्वैतप्रतिपादनमुपपत्तिः। एवं षड्विधतात्पर्यलिङ्गोपेतश्रुतीनामद्वैतात्मनि तात्पर्यमवसितम्।

न केवलमुपनिषदामेवापि तु सर्वेषामेव वेदानां साक्षात् परम्परया वा अद्वैते ब्रह्मणि तात्पर्यम्। तत्र जैमिनीयाः— आम्नायस्य क्रियार्थत्वाद् आनर्थक्यमतदर्थानामिति सूत्रात् सर्वस्यापि वेदराशेः क्रियायां विधावन्वयः। न च विधिसंस्पर्शमन्तरेण वेदवाक्यं प्रामाण्यं भजते। अर्थवादवाक्यनामधेयादिवाक्यानामपि लक्षणादिना विधिनैकवाक्यतया क्रियार्थता सम्भवति। उपनिषद्वाक्यानामपि यागादिकर्तृदेवता-प्रकाशनद्वारा विध्यङ्गत्वे सिद्ध एव प्रामाण्यं भवितुमर्हति, न तु ब्रह्मणि तस्य सिद्धत्वात्, अक्रियारूपत्वात्, विधिनिषेधाविषयत्वात्। उपासनाविधिपरत्वाद्वा वेदान्तवाक्यानां सार्थक्यमस्तु, सर्वथा सिद्धे ब्रह्मणि तेषां प्रामाण्यं नास्तीति।

अत्रोच्यते— ब्रह्मज्ञानप्रतिपादकवेदान्तानां कर्मप्रतिपादकवेदवाक्यानाञ्च प्रतिपाद्यफलादिभेदाद् अस्ति भेदः। तथा हि कर्मप्रतिपादकवाक्यानां कर्मविषयत्वम्, तच्च साध्यं विविधानुष्ठानगम्यम्। फलञ्च स्वर्गादि। तच्चानित्यम्, उपनिषदां तु ब्रह्म विषयः, तच्च सिद्धं न साध्यमनुष्ठानापेक्षम्। अद्वैतं भेदरहितमुपनिषज्ज्ञाप्यम्।

फलञ्च मोक्षः, स च नित्यः। अत एव अथातो धर्मजिज्ञासेत्यपि द्वादशाध्यायलक्षणं मीमांसाशास्त्रं प्रत्यक्स्वरूपफलं महर्षिजैमिनिप्रोक्तम्। अथातो ब्रह्मजिज्ञासेति चतुरध्यायलक्षणं ब्रह्ममीमांसाशास्त्रं साधनचतुष्टयसम्पत्तिमतां मुमुक्षूणां कृते भगवता बादरायणेन पृथक् कृतम् ?

न चैष नियमो यत् क्रियार्थत्वेनैव वेदानां प्रामाण्यम्, अन्यथा "ब्राह्मणो न हन्तव्यः", "मा हिंस्यात् सर्वा भूतानी"त्यादिनिषेधवाक्यानामप्रामाण्यप्रसङ्गात्। न हि तत्र क्रिया काचिद् गम्यते, अपि तु हननाद् निवृत्तिरौदासीन्यं गम्यते।

न च निष्प्रयोजनत्वात् प्रवृत्तिनिवृत्त्यभावात् सिद्धे ब्रह्मणि वेदान्तानां न प्रामाण्यमिति वाच्यम्, दुःखत्रयस्यात्यन्तिकनिवृत्तेर्नित्यानन्दस्वरूपावाप्तेश्च परमप्रयोजनत्वात्। तस्मात् प्रवाद एवायं यत् सिद्धे वेदानां प्रामाण्यं नास्तीति। अतो निर्द्वन्द्वं वेदान्तवाक्यानामद्वैतात्मनि प्रामाण्यं घटते। उपपादितञ्चैतद् भगवत्पादैः समन्वय-सूत्रे भाष्ये। तदुक्तं ब्रह्मसिद्धिग्रन्थकारेण नियोगकाण्डान्ते –

**यथान्यमानव्यतिभेदमुक्ता मतिः प्रमाणत्वमुपैति कार्ये।**
**अपौरुषेयागमलब्धजन्मा तथैव सिद्धे निरपेक्षभावात्॥**

व्याख्यातञ्चैतद्वाक्यं सम्यक् टीकाकृता श्रीकेदारनाथत्रिपाठिमहाभागेन।

ननु कथं ब्रह्मणो वेदान्तशास्त्रप्रमाणकत्वमुक्तम्, ब्रह्मणोऽवाक्यार्थत्वात्। वाक्यार्थस्यान्वितपदार्थत्वात् पदार्थतामप्राप्य ब्रह्मणो वाक्यार्थत्वानुपपत्तिः स्यात्। पदार्थत्वाङ्गीकारे च प्रमाणान्तराधिगतत्वं तस्य सुतरामापद्यते। न हि मानान्तरासिद्धः कश्चित् पदार्थो भवति। अतो मानान्तरसिद्धत्वे ब्रह्मणस्तद्बोधकवाक्यानामनुवादकत्वापत्तिः स्यादिति न वेदान्तानां सिद्धे ब्रह्मणि प्रामाण्यं घटत इति। तदिदमुक्तं ग्रन्थकारैः –

"नन्वन्वितपदार्थत्वाद् वाक्यार्थस्य पदार्थताम् अप्राप्य न स्याद् वाक्यार्थः, पदार्थत्वेऽन्यमानक इति चेत्, अत्रोच्यते –

**सामान्येन पदार्थत्वे सिद्धेऽसाधारणैर्गुणैः।**
**शक्याऽपूर्वविशेषस्य लोकवत् प्रतिपादना"॥२॥**

अयं भावः – सत्तादिसामान्यरूपेण ब्रह्मणः सामान्यपदार्थत्वे प्रसिद्धे सति असाधारणैरन्तर्यामित्वामृतत्वादिगुणैरपूर्वैर्वेदान्तवाक्येन लोकवदेव प्रतिपत्तिः क्रियते। यथा लोके पक्षिसामान्यं विजानन् कश्चिज्जनो द्वीपान्तरं गतो मरकतमयपादादिना असाधारणधर्मयुक्तान् पक्षिणो दृष्ट्वा प्रमाणान्तरेणानधिगतं विशेषस्वरूपमासादयति, एवंनामानो मरकतमयपादाः पद्मरागमयचञ्चवः पक्षिणो भवन्तीति, तद्वत्।

सर्वस्यापि वाक्यस्यानधिगतविशेष एव प्रमेयः; अन्यथा पदार्थ एव वाक्यार्थः स्यात्; वाक्यार्थस्यापूर्वता भज्येत। एवमेव कारणसामान्यं "यतो वा इमानी"त्यादि-

वाक्येन सत्सामान्यं वा ''सदेव सोम्ये''त्यादिवाक्येन ज्ञात्वा ''विज्ञानमानन्दं ब्रह्म, अस्थूलमनण्वि''त्यादिवाक्येन संसृज्यमानं विशेषगुणकं ब्रह्म प्रत्यक्षादिमानान्तरागम्यं वाक्येन वेदान्तेन बुध्यत इति । अतो वेदान्तानां न ब्रह्मानवबोधकत्वं न वाऽनुवादकत्वम् । अथवा न लोकेऽत्यन्तमप्रसिद्धं ब्रह्म सर्वप्रत्ययवेद्यत्वात् प्रतिबोधविदितं मतममृतत्वं हि विन्दते इत्यादि - केनोपनिषद्वाक्यात् । ब्रह्मव्यतिरेकेण प्रत्येतव्यस्याभावात्; वाचारम्भणं विकारो नामधेयमित्यादिश्रुतेः । उक्तञ्च ग्रन्थकृता –

**सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते ।**
**प्रपञ्चानां प्रविलयः शब्देन प्रतिपाद्यते ॥**

अयं भावः – सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मणि व्यवस्थिते वेदान्तवाक्येन ब्रह्म न प्रतिपाद्यते, अपि तु प्रपञ्चाभावः । प्रपञ्चोऽपि सिद्धः प्रत्यक्षादिना तन्निषेधोऽपि सिद्धः । तथा च प्रतीतयोस्तयोः प्रपञ्चतन्निषेधयोः परस्परसम्बन्धात् प्रपञ्चाभावस्य शब्देन प्रतिपत्तिर्भवति ।

ननु तर्हि मानान्तरासिद्धत्वं ब्रह्मणो न स्यादिति चेत्, न, यथोक्तम् –

**प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः ।**
**मानान्तरस्येति मतमाम्नायैकनिबन्धनम् ॥** इति ।

अयं भावः – यद्यपि ब्रह्म सिद्धं विदितं तथापि प्रविलीनप्रपञ्चरूपेण न मानान्तरगोचरमिति वेदान्तैकगम्यमेव ब्रह्मणस्तादृशं रूपम् । एवं सिद्धं ब्रह्मणः शास्त्रप्रमाणकत्वम् ।

ननु अद्वयं ब्रह्म न शब्दप्रमाणगम्यं प्रत्यक्षादिप्रमाणविरोधात् । यथा हि 'ग्रावाणः प्लवन्ते' इत्यादिवाक्यं न प्रमाणं प्रत्यक्षादिप्रमाणैर्ग्राव्णां प्लवादर्शनात् । एवं प्रत्यक्षादिप्रमाणैः परस्परं व्यावृत्ता भिन्ना एव पदार्था विषयीक्रियन्ते, न त्वभिन्ना इत्यद्वैते कथं शब्दः प्रमाणमिति चेत्, अत्रोच्यते –

**आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः ।**
**नैकत्वे आगमस्तेन प्रत्यक्षेण विरुध्यते ॥**

अयमर्थः – मीमांसका विपश्चितः प्रत्यक्षं प्रमाणं सर्वथा विधायकमेव मन्यन्ते, न तु श्रुतिप्रमाणसिद्धस्य निषेधकम् । अतः प्रत्यक्षादिकं प्रमाणं श्रुतिसिद्धार्थं न विरुणद्धि ।

ननु भवेदेतदेवं यदा भिन्नविषयाणि प्रमाणानि सन्ति । यत्र त्वेकत्रैव श्रुत्या मिथ्यात्वं बोध्यते प्रत्यक्षेण च सत्यत्वं तत्र कस्य प्रामाण्यमप्रामाण्यं वा स्यात् । प्रत्यक्षेण च भेदः प्रमाप्यते श्रुत्या चाभेद इति। अतः प्रत्यक्षविरोधाद् अद्वैते श्रुतिरप्रामाणिकी सती उपचरितार्था स्यात् । न हि आगमाः सहस्रमपि घटं पटयितुमीशते ।

न च आम्नायविरोधादेव प्रत्यक्षादीनि प्रमाणानि स्वप्रामाण्यात् च्यवन्ताम्, न पुनः श्रुतिरिति वाच्यम्, प्रत्यक्षस्य ज्येष्ठत्वात् श्रुतेरुपजीव्यत्वात् । प्रत्यक्षादिविरोधे

आम्नायस्य दौर्बल्यात् । प्रत्यक्षसापेक्षा हि श्रुतिर्निरपेक्षं प्रत्यक्षं कथं बाधताम् । स्वरूपसिद्ध्यर्थं श्रुतिः प्रत्यक्षमपेक्षते । प्रत्यक्षस्यापबाधने श्रुतेः स्वरूपमेव न निष्पद्येत ।

किञ्च निरवकाशो विधिरपवाद इति न्यायाद् अभेदश्रुतौ प्रामाणिक्यां सत्यां प्रत्यक्षस्य भेदोपस्थापकस्य निरवकाशता स्यात् । श्रुतेस्तु गौणार्थेनापि सावकाशता स्यात् ।

किञ्च अव्याकुलत्वात् प्रत्यक्षप्रमाणादेर्बलवत्त्वम् । श्रुतिस्तु परस्परं व्याकुला विरोध्यर्थप्रतिपादकत्वात् । क्वचिद् द्वैतं प्रतिपादयन्ती क्वचिच्चाद्वैतं प्रतिपादयन्ती श्रुतिः परस्परं व्याकुला । किञ्च मुख्यत्वाद् ज्येष्ठत्वाच्च प्रत्यक्षस्य प्राबल्यमस्तीति चेत्, अत्रोच्यते – आम्नाय एव बलवान् । तद्विरोधे पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् । ''प्रकृतिवद् विकृतिः कर्तव्ये''त्यतिदेशवाक्यात् प्रकृतियागविहितानां कुशानां शरमयं बर्हिर्भवतीति प्रत्यक्षश्रुत्या यथा बाधो भवति, शरा एव विधीयन्ते न कुशाः तथैव प्रत्यक्षोपनीतस्य द्वैतस्य पूर्वं प्राप्तस्य एकमेवाद्वितीयमित्यादिश्रुत्या बाध एव न्याय्यः । द्वैतबोधो निसर्गजः, अद्वैतबोधस्तु न निसर्गसिद्धः, अपि तु आगन्तुको विभक्तपदपदार्थरूपवस्तुपरिच्छेदापेक्षया परः केनचिदेव लभ्यः । अतः परः पूर्वमनुपमृद्य उदेतुमशक्नुवन् पूर्वं बाधत एव; परः पूर्वापबाधात्मा उदयते ।

किञ्च आम्नायस्य अपौरुषेयत्वाद् निरस्तसमस्तपुंदोषरहिततया प्राबल्यम् । प्रत्यक्षस्य च भ्रमप्रमोभयसाधारण्याद् भेदस्य प्रत्यक्षभ्रमविषयत्वेनाप्युपपत्तेर्न श्रुत्यपेक्षया तस्य प्राबल्यम् । शुक्तिरजतादिस्थले प्रत्यक्षेणोपनीतस्यापि रजतस्य आप्तवाक्याद् इयं शुक्तिरित्यादिवाक्याद् बाधदर्शनात् ।

अपि चाभेद एव पारमार्थिको, न भेदः, तस्य निरूपयितुमशक्यत्वात् । खण्डनादिग्रन्थे सर्वविधभेदस्य खण्डितत्वात् । व्यावहारिकभेदमादायापि प्रत्यक्षस्य गतार्थत्वात् सावकाशत्वात् सर्वाद्वैतबोधिकायाः श्रुतेः पदप्रसरस्यानिरुद्धत्वात् । घटपटौ भिन्नावित्यादिप्रत्यक्षस्य घटपटभेदविषयत्वेऽपि घटपटविषयतज्ज्ञानयोर्भेदाविषयत्वात्, यत्रैव प्रत्यक्षं भेदविषये न प्रवर्तते तत्रैव अद्वैतश्रुतेर्दत्तपदत्वात् । उक्तञ्च खण्डनकृद्भिः–

**सुदूरधावनश्रान्ता बाधबुद्धिपरम्परा ।**
**निवृत्तावद्वयाम्नायैः पार्ष्णिग्राहैर्विजीयते ॥**

किञ्च न हि परमार्थाद्वैतं प्रतिपादयन्ती श्रुतिः स्वोपजीव्यं व्यावहारिकं भेदमुपहन्ति । व्यावहारिकेण लोकसिद्धेन भेदेनाद्वैतागमस्य विरोधो नास्ति; अपि तु भेदस्य पारमार्थिकत्वे विरोधः । अद्वैतश्रुतेरद्वैते तात्पर्यमवधारयन्त्या न लौकिकभेदनिरासे तात्पर्यमस्ति । तथा च अद्वयागमस्य प्राबल्यं सिद्धमेव ।

किञ्च श्रुतेः स्वरूपसिद्धौ प्रत्यक्षापेक्षत्वेऽपि स्वप्रमितौ तदपेक्षा नास्ति, अतः श्रुतिर्न सापेक्षा। निरपेक्षा सती अद्वैते पारमार्थिके प्रवर्तते। किञ्च प्रत्यक्षं न भेद-पारमार्थिकत्वे प्रवर्तते, तस्य भ्रान्तत्वाद् व्यावहारिकत्वात्। न वा अभेदे तस्य प्रवृत्तिः, तदविषयत्वात्। तस्माद् व्यावहारिकप्रामाण्यं प्रतिपादयत् प्रत्यक्षं तत्त्वावेदकश्रुतिं न विरुणद्धि, तयोर्विरोधाभावाद् भिन्नविषयत्वात्। तस्मान्नास्ति उपजीव्यविरोधः। न चान्यार्थमादाय वेदान्तानामुपचरितार्थत्वं युक्तम्, षड्विधतात्पर्यलिङ्गोपेतत्वात् परमार्थमावहन्ती श्रुतिर्नोपचरितार्था भविष्यतीति। एवं खण्डनचित्सुख्यादिग्रन्थे विस्तरेणैतत्सर्वं प्रतिपादितमिह केवलं निदर्शनमात्रं मया कृतम्। **आचार्यश्रीमण्डनमिश्रेण** कृता **ब्रह्मसिद्धिः** उत्तराचार्याणां कृते सम्यग् मार्गदर्शिकाऽस्ति।

तत्राचार्यप्रवरैर्वेदान्तशास्त्रसागरप्रविष्टैः **श्रीकेदारनाथत्रिपाठि**महोदयैर्दुर्गमस्यास्य ग्रन्थस्य मनोरमा पाण्डित्यपूर्णा व्याख्या कृताऽस्ति। अधीत्य चेमां मम मनो भूयो भूय आनन्दं किमपि कौतुकञ्च बिभर्त्ति। टीकावलोकनेनैषां महाविदुषाम् अदूष्यं वैदुष्यं ग्रन्थप्रणयनकौशलं प्रकरणज्ञतां चतुरस्रं पाण्डित्यं प्रबन्धरचना-चातुरी च सुधियां हृदयानि बलादेवावर्जयन्ति। अस्याष्टीकायाः कर्तुः श्रीत्रिपाठि-महोदयस्य विद्वत्कुलालङ्कारस्य चिरायुष्यं सौख्यमस्य ग्रन्थस्य प्रसरं साफल्यं च कामयमानः, सहैव ग्रन्थस्यास्य मुद्रकाय 'आनन्द-प्रिंटिंग-प्रेस' यन्त्रालयसञ्चालकाय **श्रीदिवाकरत्रिपाठिने** धन्यवादं समर्पयन् श्रीसाम्बशिवं प्रार्थयमानश्च श्रुतितात्पर्यभूतं परं ब्रह्म ध्यायं ध्यायं वक्तव्याद् विरमति –

**नवदेहल्याम्**
वसन्तपञ्चम्याम्,
वि० सं० २०५५

**वाचस्पति - उपाध्यायः**
कुलपतिः
श्रीलालबहादुरशास्त्रिराष्ट्रियसंस्कृतविद्यापीठस्य
(मानितविश्वविद्यालयस्य)

## शुभाशंसा

मिथिलामहीमण्डलमण्डनस्य पूर्वोत्तरमीमांसयोर्महीयसो विपश्चितः श्रीमन्मण्डनमिश्रस्य निर्विशेषाद्वैतवेदान्तस्य पथिकृत्कृतिरयं **ब्रह्मसिद्धि-ग्रन्थः**। अद्वैतवेदान्तग्रन्थेषु निकषीभूतस्तथा प्राचीनपरम्परया लघुलघुवाक्यैः प्रचुरार्थभरैः पूरितोऽयमतीवदुरूहः। सत्यामपि श्रीशङ्खपाणिटीकायामस्मिन् प्रवेशो दुष्करः। एवं-विधमस्य काठिन्यं मनसि निधाय शास्त्रकान्तारविहारिणा पण्डितप्रवरशार्दूलेन न्याय-वेदान्त-सांख्य-योगाचार्येण श्रीमता **डॉ० केदारनाथत्रिपाठिना 'कला'**-नाम्नी व्याख्याऽत्र व्यधायि, ययाऽयं ग्रन्थः सुकरप्रवेशो जातः। समाहितमनसा मयेयं व्याख्या व्यलोकि। साध्वी प्रमेयबहुला प्राञ्जलभाषाभूषिता ऋजुधियामपि कृते लब्धप्रसरा विदुषां मोदाय भवेदिति द्रढीयान् मे विश्वासः। एतदर्थं श्रीत्रिपाठि-महोदया अनन्तानन्तधन्यवादार्हाः, श्रीविश्वेश्वरप्रसादात् श्रेयःप्रेयःपरम्परामवाप्नु-युरित्याशासे।

**वाराणसी**
माघ-पूर्णिमा,
वि० सं० २०५५

**मण्डनमिश्रः**
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# प्राक्कथनम्

अथेयं प्रस्तूयते वेदान्तस्य प्रकरणग्रन्थतया सुप्रसिद्धा **ब्रह्मसिद्धिराचार्य**–श्रीमण्डनमिश्रकृता मया स्वविवेचनसहिता। अस्या ब्रह्मसिद्धेर्विवेचननिर्णयो मया तदा कृतो यदाऽहं पञ्चाशीत्यधिकोनविंशशततमे (१९८५) खीस्ताब्दे शिक्षामन्त्रालयस्य शास्त्रचूडामणियोजनायां वाराणस्यामेव नियुक्तोऽभवं वर्षत्रयस्य कृते। यद्यपि तस्यां योजनायां ब्रह्मसिद्धेर्विशिष्टाध्यापनभार एव मयि समर्पितोऽभूत्, तथापीदानीमस्य ग्रन्थस्य दुर्लभतामाकलय्याध्यापनेन सहैवास्य महतो ग्रन्थस्य सुबोधसरण्या विवेचनं कर्त्तुमहं सोत्साहं प्रवृत्तः। ब्रह्मसिद्धेर्निर्मितासु चतसृषु व्याख्यासु मध्ये श्रीमद्वाचस्पतिमिश्राणां तत्त्वसमीक्षाख्यव्याख्यायाः साम्प्रतमनुपलब्धतया, आनन्दपूर्णमुनिविद्यासागरकृताया भावशुद्धेश्चित्सुखमुनिविरचितायाश्चाभिप्रायप्रकाशिकाया अतिसंक्षिप्ततया व्याख्याद्वयीयं ग्रन्थार्थस्याञ्जस्येन प्रकाशने नालमभूत्। शङ्खपाणिकृता व्याख्या तु नूनमभूद् महदुपकारिणी तदर्थजिज्ञासूनां प्रबुद्धजनानां तथापि अध्येतृवर्गसामान्यस्य सुखबोधमुद्दिश्य विवेचनाभिधां व्याख्यामिमां स्वीये वर्षत्रयात्मके योजनाकार्यकाले समपूपुरमहम्।

पूर्वप्रकाशितव्याख्याभिः सहिताया ब्रह्मसिद्धेः सम्पादनमपि पाठकानां नातितरामुपयोगायालमभूत्। दिल्ल्यां श्रीसद्गुरुप्रकाशनसंस्थातः प्रकाशिते शङ्खपाणिकृतव्याख्यासंवलिते ब्रह्मसिद्धिग्रन्थे मूलभागस्यादौ पृथङ् मुद्रणं कृतं तद्व्याख्यायाश्च तदन्ते पृथगेव स्वातन्त्र्येण सन्निवेशः कृत इत्यतो मूलस्य व्याख्यायाश्चाधरोत्तरभावराहित्यात् तथाप्रकाशनं पाठकानां महतेऽसौविध्याय समजायत। भावशुद्धिरभिप्रायप्रकाशिका चेत्युभे व्याख्ये तु मूलरहिततया पूर्वप्रकाशनतोऽपि बहुतरक्लेशाय जाते इति सविवेचनमभिनवप्रकाशनं परमावश्यकमन्वभवम्। एवञ्च बहुपूर्वं प्रकाशितास्ते व्याख्याग्रन्था अधुना दुर्लभा अपि सञ्जाताः। अयमपि हेतुरभूद् ब्रह्मसिद्धेरभिनवप्रकाशनापेक्षायाम्। पूर्वतनीषु व्याख्यासु मध्ये शङ्खपाणिकृता व्याख्यैव निगूढाभिप्रायाया आचार्यमण्डनमिश्राणामुक्तेः प्रकटनपटुतामञ्चतीति तत्सरणिरेवास्मिन् विवेचने मयाऽऽधारीकृतेति तदुपज्ञतास्वीकृत्यौचितीं सबहुमानमहं प्रकाशये।

**आचार्यमण्डमिश्राणां व्यक्तित्वपरिचयो ग्रन्थविषयसारांशश्च —**

आचार्यमण्डनमिश्र – श्रीसुरेश्वराचार्ययोर्भेदाभेदविकल्पमाश्रित्य महन्मतवैभिन्न्यं प्रचरतीदानीमपि। प्रो० एस० कुप्पूस्वामिशास्त्रिणा विषयेऽस्मिन् बृहन्निबन्धः प्रस्तुतो दिल्लीतः श्रीसद्गुरुप्रकाशनसंस्थातः स्वसम्पादितस्य प्रकाशितस्य ब्रह्मसिद्धिग्रन्थस्य भूमिकायाम्। यदा इदं वृत्तं प्रकाशमायातं यत् "सुरेश्वराचार्यस्य गृहस्थाश्रमीयं नाम विश्वरूप इत्यासीदिति" तदा इयं या प्रसिद्धिर्यद् "गार्हस्थ्यावस्थायां मण्डनमिश्रनामा मीमांसक एव श्रीशङ्कराचार्यात् शास्त्रार्थानन्तरं तच्छिष्यतां गतोऽद्वैतवादे ब्रह्मसिद्धिनामानमतिमहत्त्वपूर्णं ग्रन्थं प्रणीतवान्, स एव च शृङ्गेरीपीठाधिष्ठितः सुरेश्वराचार्यनाम्ना नैष्कर्म्यसिद्धिप्रभृतीन् ग्रन्थान् प्रणिनायेति" सा पूर्वतनी प्रसिद्धिः सन्दिग्धा जाता तथा तदनन्तरमेवास्मिन् प्रसङ्गे वस्तुस्थितिनिर्धारणप्रयासः प्रवृत्तोऽभूत्। यद्यपि उक्तवृत्तान्ते प्रकाशमायातेऽपि परम्परानुगामिनो निःशङ्कभावेनेदं स्वीकृतवन्तो यत् सुरेश्वराचार्यस्य गृहस्थाश्रमीयं नाम विश्वरूपाचार्य इत्यप्यासीत्, 'मण्डनमिश्र' इति नामातिरिक्तम् इति।

अत्र सर्वप्रथमं प्रो० हिरियन्नामहोदयो मण्डनमिश्रसुरेश्वराचार्ययोः सैद्धान्तिकं वैषम्यमाधृत्य गुरुवंशकाव्ये निर्दिष्टां शृङ्गेरीपरम्पराञ्चाश्रित्यानयोरभेदं प्रत्याख्यातवान्। प्रो० कुप्पूस्वामिशास्त्रिमहाभागश्च प्रो० हिरियन्नामहोदयस्य विचारं स्वीकुर्वन् अस्याः समस्याया उपरि विशिष्टपरीक्षां कृतवान् ब्रह्मसिद्धेर्भूमिकायां च तदुल्लिखितवान्। यथा मण्डनमिश्रोऽविद्यां द्विविधां प्रतिपादयति – अग्रहणरूपामन्यथाख्यातिरूपां च। सुरेश्वराचार्यस्तु अन्यथाख्यातिं नानुमन्यते। आचार्यमण्डनमिश्रोऽविद्याया आश्रयं जीवं मन्यते ब्रह्म चाविद्याया विषयम्। सुरेश्वराचार्यस्तु "आश्रयत्व – विषयत्वभागिनी निर्विभागचितिरेव केवला" इति नैष्कर्म्यसिद्धावाह। तत्त्वमसीति महावाक्यार्थ-विषयेऽप्यनयोर्विचारवैषम्यं लक्ष्यते। इत्येवंप्रभृतिभिर्हेतुभिर्मण्डनमिश्रश्रीसुरे-श्वराचार्ययोर्व्यक्तित्वं भिद्यत इति ससंरम्भं प्रतिपादितं प्रो० कुप्पूस्वामिशास्त्रिभि-र्भूमिकायाम्।

प्रसङ्गेऽस्मिन् प्रो० हिरियन्ना- प्रो० कुप्पूस्वामिशास्त्रिणोः कथनमसमर्थयता श्रीसुब्रह्मण्यशास्त्रिणा श्रीसद्गुरुप्रकाशनसंस्थातः प्रकाशिताया ब्रह्मसिद्धेरुक्त-संस्करणस्य अग्रसारणे प्रतिपादितमस्ति यत् – नैताभिर्युक्तिभिराचार्यमण्डनमिश्रस्य श्रीसुरेश्वराचार्यस्य चैक्यानैक्यप्रश्नः समाहितो जायते। सम्भवत्येकस्यापि

मण्डनमिश्रस्य गार्हस्थ्यावस्थायां 'विश्वरूप' इत्यपि नामान्तरम्, श्रीशङ्कराचार्याद् दीक्षाग्रहणानन्तरं 'सुरेश्वराचार्य' इत्यपि च नामान्तरम्। क्वचित्तु तस्य 'उम्बेक' इत्यपि नामान्तरोल्लेखोऽस्ति। स्वकृतनिबन्धेषु कालभेदाद् विचारेषु विकासोऽपि सम्भवत्येव। एवं ह्येक एव मण्डनमिश्रः पूर्वं महान् मीमांसकः पश्चाच्च महानद्वैत-वादी भवितुमर्हतीति। किं बहुना, एकस्मिन्नेव शाङ्कराद्वैतवेदान्तसम्प्रदाये प्रस्थानभेदो दृश्यत एव भामतीप्रस्थानं विवरणप्रस्थानमिति। सम्भवति कश्चिदन्यो मण्डनमिश्रो य आजीवनं गृहस्थाश्रमी भवेत्, तस्मादेव च श्रीसुरेश्वराचार्यो भिन्नः प्रतिपादितो भवेदिति। किन्तु पूर्वं मीमांसकादपि प्रसिद्धान्मण्डनमिश्रात् श्रीसुरेश्वराचार्यो भिन्न एव भवेदिति न निश्चप्रचं वक्तुमर्हम्। एवम्, अनेके समानविचाराः श्लोका ब्रह्मसिद्धौ सम्बन्धवार्तिके च दृश्यन्ते। एवंविधं श्लोकेषु विचाराणामेकरूपत्वं भिन्नभिन्नकर्तृकत्वे नोपपद्येत, यदा स्वभिन्नकर्तृकत्वेन तेषां श्लोकानां समुल्लेखः श्रीसुरेश्वराचार्याणां वार्तिकग्रन्थे कृतो नास्ति। अतः श्रीमण्डनमिश्र-श्रीसुरेश्वराचार्ययोरेष भेदाभेदान्यतर-निर्णयोऽद्याप्यपर्यवसित एवेति श्रीसुब्रह्मण्यशास्त्रिणः स्पष्टमाहुः। न ह्यमूला प्रसिद्धिरिति न्यायमनुहरतो ममापि तावच्छ्रीसुब्रह्मण्यशास्त्रिविचारोऽनुरोद्धव्यो भाति। अतोऽधुनाऽपि प्रश्नोऽयं सुधीनां सम्मुखे समाधेयकोटावेवास्तीत्यहमपि मन्ये।

**ब्रह्मसिद्धिविषयसारांशः—**

यथानामगुणा इति लोकप्रसिद्धेर्वेदान्तवाक्येषु विप्रतिपद्यमानानां वादिनां विप्रतिपत्तिनिरासद्वारा ब्रह्मस्वरूपसाधनमेवास्य ब्रह्मसिद्धिनाम्नः प्रकरणग्रन्थस्योद्देश्यम्। तत्र केचिद् भूतार्थप्रतिपादने अर्थात् सिद्धब्रह्मात्मप्रतिपादने वेदान्तानामप्रामाण्यं मन्यन्ते। अन्ये प्रतिपत्तिकर्तव्यताव्याजमाश्रित्य प्रतिपत्तिक्रियायामेव वेदान्तानां प्रामाण्यात् सिद्धार्थभूतब्रह्मणि तेषामप्रामाण्यमाहुः। अन्ये तु कर्मविधिविरोधात् प्रत्यक्षादिप्रमाणविरोधाच्चोपचरितार्थान्येव सिद्धब्रह्मप्रतिपादकानि वेदान्तवाक्यानीति मन्यन्ते। एवंविधाः सर्वा विप्रतिपत्तयोऽत्र ग्रन्थे समाहिता आचार्यमण्डनमिश्रेण। यथा – भूतार्थवादित्वेऽपि न प्रमाणान्तरसापेक्षत्वं वेदान्तवाक्यानाम्, अपौरुषेयत्वात्तेषाम्। अतोऽत्र प्रमाणान्तरविरोधोऽकिञ्चित्करः। तस्मात् प्रमाणान्तरनिरपेक्षाम्नायत एव ब्रह्मणो बोधः। तच्च ब्रह्म संहृताखिलभेदतया सामान्यात्मनैव वेदान्तैर्वर्णितम्, यथा कटककुण्डलादिभेदोपसंहारपूर्वकं सामान्यात्मना हेम वर्ण्यते लोके, तद्वदिति प्रथमे ब्रह्मकाण्डे निरूपितम्।

द्वितीये च तर्ककाण्डे प्रत्यक्षादिप्रमाणविरोधाद् या वेदान्तानां प्रामाण्ये विप्रतिपत्तिरुपस्थापिता, साऽऽञ्जस्येन निराकृता। तृतीये सुविस्तृते नियोगकाण्डे हि "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति न्यायेन कर्मविधिविरोधोऽपि भवतीति वेदान्तानुपचरितार्थान्, अत एवाप्रमाणभूतान् अनुवादमात्रान् ये मन्यन्ते, तेषां निपुणं निरासः प्रतिपादितः।

चतुर्थे तु सिद्धिकाण्डे ये प्रतिवादिनो वेदान्तानां गौणमपि प्रामाण्यमस्वीकुर्वन्तः सर्वथैवाप्रामाण्यमाशेरते, तेषां मतं प्रत्याख्याय ब्रह्मसिद्धिः कृतेति सर्वथाऽन्वर्थनामायं ग्रन्थ इति वेदितव्यमस्ति।

**कृतज्ञताज्ञापनम् –**

अत्र सर्वप्रथममेतद्देशराजधानीस्थितस्य श्रीलालबहादुरशास्त्रिकेन्द्रीयसंस्कृत-विद्यापीठस्य कुलपतिपदं विभूषयतां संस्कृतविद्योन्नयने सततोत्साहवतां **प्रो० वाचस्पत्युपाध्याय**महानुभावानामहं भृशमनुगृहीतोऽस्मि यत्तैरेतस्य महतो ग्रन्थस्य केन्द्रीयसंस्कृतविद्यापीठतः प्रकाशनं स्वीकृत्य ममायं सारस्वतः श्रमः सफलीकृतः, संस्कृतवाङ्मयस्य महती सेवा च समनुष्ठिता। सहैव सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतिपदं मण्डयतां स्वनामधन्यानां माननीयानां **डॉ०मण्डनमिश्र**महाभागानामप्यहं भृशमनुगृहीतोऽस्मि यत् तैरिह सम्पूर्णानन्दसंस्कृतविश्वविद्यालये कुलपतिपदभार-ग्रहणानन्तरमेव मत्कृतव्याख्यासनाथं सांख्यदर्शनस्यातिमहनीयं **युक्तिदीपिका**भिधानं भव्यकलेवरं ग्रन्थं लोकार्पणीकारयद्भिर्दार्शनिकजगतश्चिरप्रतीक्षिताऽऽकाङ्क्षा प्रपूरिता।

एवमधुना लोकार्पणहेतोः प्रस्तोष्यमाणाया ब्रह्मसिद्धेः प्रकाशने तेषामाशीः-कामनैव फलीभूता। यतो हि विश्वविद्यालयतो युक्तिदीपिकाया इव ब्रह्मसिद्धेरपि प्रकाशनाय मया साग्रहं निवेदितास्ते मां द्रुतमुक्तवन्तः– दिल्लीतो वा वाराणसीत्तो वा तिरुपतितो वा, यत एव कथयन्तु ततः प्रकाशयिष्यामि, वाराणस्यान्तु स्वयमेवास्मि इति। एवमेषामुक्तिं श्रुत्वाऽहन्तु निकाममुत्साहितोऽभवमेव, तेभ्य एव प्राप्तपरामर्शा दिल्लीस्थकेन्द्रीयसंस्कृतविद्यापीठस्य कुलपतयो डॉ०श्रीवाचस्पत्युपाध्यायमहोदयाः प्रसन्नाः सन्तो विद्यापीठत एवेमं ग्रन्थं प्रकाशयितुमैच्छन्। इत्थं डॉ०श्रीमण्डनमिश्रमहा-भागानामुक्तिमन्वर्थयन्तः श्रीमदुपाध्यायमहानुभावाः सोत्कण्ठं ब्रह्मसिद्धिं प्रकाशयितुं

निर्णीतवन्त इति । इत्थं त्वहं डॉ० मण्डनमिश्रमहाभागैर्द्विधाऽनुगृहीत इति तान् प्रति भूयस्तरां कृतज्ञोऽस्मि । एवं तस्या एव हि युक्तिदीपिकायाः स्वकार्यकाले प्रकाशन-स्वीकृतिं प्रदाय कृतिनैरन्तर्ये ममोत्साहं वर्धयतः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य पूर्वकुलपतीन् **प्रो० श्रीवेङ्कटाचल**महानुभावान् प्रत्यपि निजां हार्दिकीमनुगृहीततामभिव्यनज्मि ।

एवं काशीहिन्दूविश्वविद्यालये दर्शनविभागस्य प्रतिभावान् प्राध्यापको **डॉ० एस० विजयकुमारो** ममात्मीयो ब्रह्मसिद्धिकर्तुः परिचयसामग्र्युपलम्भनेन मम निर्व्याजं साहाय्यं कृतवानिति तं प्रति निजां हार्दिकीं कृतज्ञतां प्रकटयामि । एवं मुद्रणकाले प्रारूप (प्रूफ)दर्शने कृतसहयोगस्य स्नेहास्पद-**डॉ० श्रीहरिवंशपाण्डेयस्य** तथाऽस्मिन्नेव प्रसङ्गे कृतानेकसहयोगस्य सम्पूर्णानन्दसंस्कृतविश्वविद्यालये योगतन्त्रविभागे प्राध्यापकस्य **पण्डितश्रीशीतलाप्रसादोपाध्याय**महोदयस्य च कृते साधुवादप्रदानौचितीं न विस्मरामि । अस्य ग्रन्थस्य मुद्रणे सततसावधानाय आनन्द-प्रिंटिंग-प्रेसाध्यक्षायापि मम हार्दिकाः साधुवादाः सन्ति । अस्य च महतो ग्रन्थस्य शुद्धत्वे सौष्ठवे चातिसावधानस्यापि मम बहुकार्यव्यासङ्गाद् मानुष्यकनान्तरीयकात् स्खलिताद् वा जातास्त्रुटीः सुधियः क्षमिष्यन्त इति निवेदयन् एतत्कार्यपूर्णताहेतुं श्रीकाशीविश्वनाथं भृशं नमन्नस्मीति शम् ।

**पौषी पूर्णिमा**
२०५५ वि.सं.
२-१-१९९९

विदुषामाश्रवः
**केदारनाथत्रिपाठी**

# विषयानुक्रमणिका

## ब्रह्मकाण्डस्य

## तर्ककाण्डस्य

## सिद्धिकाण्डस्य

॥श्रीगणेशाय नमः॥

# ब्रह्मसिद्धिः

## [आचार्यश्रीमन्मण्डनमिश्रविरचिता]

॥मङ्गलम्॥

आनन्दमेकममृतमजं विज्ञानमक्षरम्।
असर्वं सर्वमभयं नमस्यामः प्रजापतिम्॥

**वेदान्तेषु विप्रतिपद्यन्ते विपश्चितः—केचिदप्रामाण्यं मन्यन्ते, आत्मनः प्रमाणान्तरसिद्धत्वे तेषामनुवादकत्वात्, असिद्धत्वे सम्बन्धाग्रहणात्, अपदार्थत्वे वाक्यस्याविषयत्वात्, प्रवृत्तिनिवृत्त्यनुपदेशे चापुरुषार्थत्वात्।**

---

॥ आचार्यश्रीकेदारनाथत्रिपाठिकृता कला-व्याख्या ॥

यस्मिन् ध्याते भवेत् सिद्धिर्गणनाथे गजानने।
सोऽनुगृह्णातु नस्तूर्णं बुद्धिराशिर्गुणालयः॥१॥
शास्त्राणि स्वाञ्जसा भान्ति भास्वतोर्यद्द्वयोरिह।
नौमि सूर्यं[1] गुरुं शुक्लं कृपालुं[2] च द्विवेदिनम्॥२॥

**आनन्दमिति** मङ्गलश्लोकोऽयमाचार्यश्रीमन्मण्डनमिश्रैर्वेदान्तेष्वप्रामाण्यादि-विप्रतिपत्तिनिरासपरतयाऽपि ग्रन्थादौ समवतारितः। अतो विप्रतिपत्तीस्तावत् प्रदर्श-यति— **वेदान्तेष्वित्यादिना।**

तत्र तावत् केचिद् विपश्चितो वेदान्ता नात्मनि प्रमाणमिति मन्यमाना वेदान्तानामप्रामाण्यं प्रतिपादयन्ति। तेषामाशङ्का—आत्मा प्रमाणान्तरसिद्धो न वा? यदि सिद्धस्तर्हि प्रमाणान्तरसिद्धे आत्मनि वेदान्तानामनुवादकत्वमात्रमायाति न प्रमाणत्वम्। यदि न प्रमाणान्तरसिद्धः, तदाऽसिद्धेन तेन सह वेदान्तपदानां वाच्यवाचकलक्षणसम्बन्धग्रहाभावात् तेभ्यः कथमात्मपदार्थस्योपस्थितिः स्यात्? अनुपस्थितौ स आत्मा कथं वेदान्तवाक्यानां विषयः स्यात्। यतः पदार्था एव

---

१. श्रीसूर्यनारायणम्।

२. श्रीहरिहरकृपालुम्।

**अन्ये तु प्रतिपत्तिकर्तव्यताप्रामाण्यव्याजेन अप्रामाण्यमेवाहुः।**

---

वाक्यार्थ इति मतमस्ति। अविषयत्वे च स न वेदान्तोपदेशजन्यप्रवृत्तिविषयः स्यात्, न वा तज्जन्यनिवृत्तिविषयः स्यादिति प्रवृत्तिनिवृत्त्यविषयतयाऽपुरुषार्थत्वमात्मन आपद्येत। तच्चानिष्टमिति सारः।

**अन्ये त्विति**। अयं भावः – कार्येऽर्थे वेदस्य प्रामाण्यं न सिद्धेऽर्थे। अत आत्मप्रतिपत्तावेव कार्यभूतायां वेदस्य प्रामाण्यम्। अस्यां स्थितौ आत्मा प्रतिपत्तव्य इत्युक्ते कथंभूतः स आत्मा इति जिज्ञासायाम् 'इत्थंभूत' इति अपेक्षितमात्मस्वरूपं समर्पयन्ति उपनिषद आनन्दादिबोधिकाः। अतः प्रतिपत्तिक्रियानुप्रवेशादेव आत्मनि विषये प्रामाण्यमश्नुवन्ति वेदान्ता न क्रियासंस्पर्शशून्ये सिद्धे आत्मनीति।

एवं यदि उपनिषद आत्मस्वरूपं न समर्पयेयुस्तदा आत्मा प्रतिपत्तव्य इत्यात्मविशिष्टप्रतिपत्तिविधिरेव अनुपपन्नः स्यात्। अतो विशिष्टविध्यनुपपत्त्या विशेषणभूतम् औपनिषदमात्मस्वरूपमपि सिद्धं भवति। यथा द्रव्यदेवताविशिष्टयागविधौ विशिष्टंविध्यनुपपत्त्या द्रव्यं देवता च सिध्यतस्तद्वत्।

एवं रीतिस्वीकारे प्रवृत्तिविषयत्वेन पुरुषार्थत्वमपि पूर्वपक्षिभिराक्षिप्तं समाहितं भवति। तथा प्रतिपत्तौ प्रवर्तनाद् वेदान्ताध्ययनविधिरपि सार्थको भवतीति वेदान्तानां सिद्धे आत्मनि प्रामाण्यसमर्थकानामन्येषां मान्यताऽस्ति।

किन्तु नेदं मतं चारु रोचते। आत्मप्रतिपत्तिव्याजेनैव आत्मनि ते वेदान्तानां प्रामाण्यं समर्थयन्ति। अतो व्याजमात्रमिदं वेदान्तानां प्रामाण्यसमर्थनम्। परमार्थतस्तु न वेदान्तानां तत आत्मस्वरूपे प्रामाण्यं सिद्ध्यति। यतो हि तदा एवंभूत आत्मा प्रतिपत्तव्य इति विधिवचनमेव व्यज्यते उपनिषद्वाक्येन, न तु "एवंभूत आत्मा" इति वचनं व्यज्यते, अतत्परत्वादुपनिषदाम्। अर्थात् प्रतिपत्तिपरत्वेन अनात्मपरत्वादुपनिषदामात्मस्वरूपे तात्पर्याभावादिति सारः।

ननु कथमनेवंभूत एवंभूतः प्रत्येतुं शक्यत इति चेत्, न, **"वाचं धेनुमुपासीत"** इतिवद् अध्यारोपेणाप्युपपत्तेः।

एवं च यदि उपनिषदोऽध्यारोपितात्मस्वरूपविषया मन्यन्ते तदा विशिष्टविधेरपि नात्मस्वरूपं सिद्ध्यति। अनेवंभूतस्यापि आत्मस्वरूपस्य प्रतिपत्तिसम्भवाद् अध्यारोपादिति। यागस्थले तु द्रव्यदेवतामन्तरेण यागो नैव सिध्यतीति युक्तं तत्र द्रव्यदेवताक्षेप इत्यनयोर्वैषम्यम्।

**अन्ये तु कर्मविधिविरोधात् प्रत्यक्षादिविरोधाच्च श्रुतार्थपरिग्रहे उपचरितार्थान् मन्यन्ते।**

**तन्निरासायेदमारभ्यते — आनन्दमिति। परां च देवतां गुणाभिधानलक्षणया स्तुत्या कायवाङ्मनःप्रह्वतालक्षणया च प्रणत्या पूजयति; प्रकरणार्थं चोपक्षिपति — विप्रतिपत्तिनिराकरणमुखेन वेदान्तानामेवंभूतेऽर्थे प्रामाण्यप्रतिपादनात्, यतो भवत्येषोऽपि प्रकरणार्थः।**

**अत्र केचित् — आनन्दात्मकत्वे ब्रह्मणः, आनन्दरागान्मुमुक्षुप्रवृत्तिः स्यात्; रागनिबन्धना च प्रवृत्तिः संसारबीजमिति न मुक्तये स्यात्; शान्तस्य दान्तस्य चात्मनि दर्शनमुच्यते; न चानन्दरागात् प्रवर्तमानः शान्तो भवति। तस्मात् सकलदुःखातिगे ब्रह्मतत्त्वे दुःखेभ्य उद्विग्नः सुखेभ्यश्च वीतरागः प्रवर्तमानो मुच्यते। आनन्दश्रुतयश्च सकलदुःखातिक्रममेवाहुः; दृष्टो हि क्षुद्दुःखादिनिवृत्तौ सुखशब्दः; सैव च सुखमित्यन्ये। न चाश्मादौ प्रसङ्गः, प्रत्यग्वृत्तेरुपलभ्यमानायाः सुखत्वात्, तद्विशिष्टात्मोपलब्धेर्वा। तान् प्रत्याह — आनन्दमिति।**

---

एवं प्रतिपत्तिविध्यसम्भवादपि उपनिषदामप्रामाण्यमायाति। न हि ज्ञानं (प्रतिपत्तिः) विधिविषयो भवतीति स्वीकारादिति भावः।

मतान्तरमुपक्षिपति — **अन्ये त्विति**। अयमर्थः— एकमेवाद्वितीयम् इत्यादिवेदान्ता यदि मुख्यार्था मन्येरन् तदा साध्यसाधनेतिकर्तव्यतादिभेदविषयेभ्यः कर्मविधिभ्यस्तेषां विरोध आपद्येत। एवं नीलादिभेदविषयकेभ्यः प्रत्यक्षादिप्रमाणेभ्योऽपि अभेदविषयकाणां वेदान्तवाक्यानां विरोध आपद्येत। अतो नोक्तवेदान्ता अभेदमुख्यार्थाः किन्तु उपचरितार्था इति मन्तव्यम्। अर्थाद् उक्तवेदान्तवाक्येभ्यो न वास्तविकोऽभेदः प्रतिपाद्यते किन्तु देशकालजात्याद्यभेदेन औपचारिक एवाभेद उच्यते। यथा तेजस्त्वादिगुणोपचारेण अग्निर्माणवक इत्युपचारेण प्रयोगो भवति लोक इति भावः। एतद् विप्रतिपत्तित्रितयोक्तिरुपलक्षणमिति मन्तव्यम्। अन्या अपि विप्रतिपत्तयः सन्ति, यासां निराकरणमग्रे यथास्थानं कृतमिति मन्तव्यम्।

आनन्दमित्यादिमङ्गलश्लोकेन ग्रन्थकारो गुणाभिधानलक्षणस्तुत्या कायवाङ्मनःप्रह्वतालक्षणप्रणत्या च परां[1] देवतां पूजयति। अनेनैव मङ्गलश्लोकेन प्रकरणार्थमपि (सूचयति) उपस्थापयति। पूर्वोक्तविप्रतिपत्तिनिराकरणद्वारा वेदान्तानामानन्दाद्यात्मकेऽर्थे ब्रह्मणि प्रामाण्यप्रतिपादनात्। इत्थञ्चात्र ब्रह्मरूपप्रकरणार्थश्चोपक्षिप्तो भवतीति। तथा चायं मङ्गलश्लोको नमस्कारात्मको वस्तुनिर्देशात्मकश्चास्तीति बोध्यम्। आनन्दमित्युक्तौ बीजमाह — **अत्र केचिदिति**। स्पष्टार्थः।

---

१. सा हि परा देवता, देहेन्द्रियवाङ्मनोभिरसंस्पृष्टस्वरूपत्वात् ततः परा, द्योतमानत्वात् स्वतःस्फुरणात् प्रकाशमानत्वाद् देवता चोच्यते।

**न तावद् दुःखनिवृत्तिरेव सुखम्, युगपत् सुखदुःखयोर्दर्शनात् सन्तापवतः शीतहृदे निमग्नार्धकायस्य। अथ सत्यप्यनिमग्नार्धकायदुःखे इतरस्याभावात् सुखमिति, कुम्भीपाके पच्यमानस्य नरकान्तरदुःखाभावात् सुखित्वप्रसङ्गः; एकेन्द्रियद्वारदुःखस्य च इन्द्रियान्तरद्वारदुःखाभावात्। इतश्च, अदुःखस्यापि विषयविशेषसम्पर्कात् संवेद्याह्लादोत्पत्तेः। यत्रापि दुःखविगमः, तत्रापि न तन्मात्रमेव सुखम्, अन्नपानविशेषोपादानात्; दुःखविगमो हि यैस्तैरन्नपानैः सिध्यति; न च स विशेषवान्, येन तद्विशेषाय तत्साधनविशेषोऽपेक्ष्यते; सुखे त्वतिशयवत्त्वाद्युक्ता तत्साधनातिशयापेक्षा।**

---

नमस्यामः=पूजयामः स्तुतिपूर्वकप्रणत्या पूजयाम इत्यर्थः। यद्यपि प्रणतिर्हि कायवाङ्मनोनम्रतारूपा भवति तथापि वाक्प्रह्वतालक्षणो गुणसङ्कीर्तनात्मको वाचिक एवात्र प्रणतिविशेषोऽभिप्रेतो ग्रन्थकारस्य। वाचिकोऽप्ययं नमस्कारः कायमनःपूर्वक एव पर्यवसितोऽस्तीति मन्तव्यम्।

अत्रेयमाशङ्का—आद्यश्लोकोऽयं यदि नमस्कारार्थस्तदा प्रकरणार्थस्तु ततो बहिरस्तीति आनन्दमिति उक्तिः प्रकरणप्रतीकरूपेति कथमुक्तं भवतीति।

अत्रोत्तरम्—य एव गुणाः परदेवतास्तुत्यर्थे उक्तास्त एव प्रकरणप्रतिपाद्याः सन्तीति। अर्थात् प्रकरणार्थमपि संक्षेपतः सूचयति अयं मङ्गलश्लोकः। अतो युक्तमस्य प्रकरणप्रतीकत्वमानन्दादिपदस्येति।

यद्यपि विप्रतिपत्तिनिरासाय प्रकरणमिदमित्युक्तं ग्रन्थकारेण, अतो विप्रतिपत्ति-निरासोपपत्तिरेवास्य प्रतिपाद्यत्वाद् विषयोऽस्ति, न आनन्दादिरूपं ब्रह्म, तथापि न केवलं विप्रतिपत्तिनिरासोपपत्तिमात्रं विषयः, किन्तु आनन्दादिरूपं ब्रह्मापीति बोध्यम्। यतो हि विप्रतिपत्तिनिरासोपपत्त्यभिधानं नादृष्टार्थं किन्तु आनन्दादिरूपे ब्रह्मणि वेदान्तानां प्रामाण्यमिति प्रतिपादनार्थम्। तथा तेषां प्रामाण्यप्रतिपादनमपि आनन्दादिरूपं ब्रह्मतत्त्वमिति प्रतिपादयितुम्। अतो ब्रह्मापि आनन्दादिरूपं प्रतिपाद्यत्वादस्य प्रकरणग्रन्थस्य विषय इति सिध्यति।

**न तावदिति**। शरीरस्य सर्वांशे तापवतो जनस्य शीतहृदे निमग्नार्धकायस्यार्ध-भागावच्छेदेन सुखोपलब्धिः, अर्धभागावच्छेदेन च दुःखस्योपलब्धिर्युगपद् दृश्यते। तस्मान्न दुःखनिवृत्तिरेव सुखं किन्तु स्वतन्त्रं वस्त्विति सिद्धान्तः।

ननु तस्य अनिमग्नार्धकायावच्छेदेन दुःखे सत्यपि इतरस्य भागस्यावच्छेदेन दुःखं नास्तीति तत्रापि दुःखाभाव एव सुखमस्ति, न स्वतन्त्रमिति चेत्, न, तत्र यदीतरदुःखस्याभावात् सुखित्वप्रतीतिर्मन्येत, तदा कुम्भीपाके पच्यमानस्यापि

**यदपि मन्यन्ते—यदापि नान्यद् दुःखं निवर्त्यम्, तदापि कामस्य दुःखात्मकत्वात् तन्निबर्हणरूपं सुखमिति।**

**तत्राप्यकामस्य विषयविशेषोपभोगे न सुखिता स्यात्, भवति च मध्यस्थोऽपि रमणीयविषयसम्पर्के ह्लादवानिति।**

---

प्राणिन इतरनरकस्य दुःखं नास्तीति तस्य सुखित्वं प्रसज्येत। एवं यस्य पुरुषस्यैकेन्द्रियद्वारकं दुःखमस्ति तस्यापि इन्द्रियान्तरद्वारकं दुःखं नास्तीति तस्यापि सुखित्वं प्रसज्येत। तस्मान्न सुखं दुःखाभावरूपम्।

एवं यस्य जनस्य किमपि दुःखं नास्ति तस्यापि यदि विषयविशेषस्य सम्पर्को लभ्यते, तदा तस्यापि संवेद्याह्लादविशेषस्योत्पत्तिर्दृश्यते। यदि सुखं स्वतन्त्रं तत्त्वं न स्यात् तदा तत्र सुखविशेषो नोत्पद्येत। तस्मादस्ति सुखतत्त्वं स्वतन्त्रं वस्त्विति।

एवं यत्रापि दुःखविगमोऽस्ति तत्रापि न तन्मात्रमेव सुखमस्ति। अत एव विशिष्टसुखप्राप्त्यर्थं विशिष्टान्नपानमुपादीयते जनैः। यतो दुःखविगमरूपं सुखं तु समानमेव भवतीति किमर्थं विशिष्टान्नपानादिकमुपादीयते। दुःखविगमस्तु यैः कैरपि अस्वादुभिरपि अन्नपानैः सिध्यति, स च दुःखविगमो न कमपि विशेषं धारयति, येन सुखविशेषाय विशिष्टसाधनमपेक्ष्येत। अतस्तत्र साधनविशेषजन्ये सुखविशेषे कोऽपि अतिशयोऽवश्यमभ्युपगन्तव्यो यदर्थं तत्साधनातिशयस्यापेक्षा भवति लोकस्येति भावः।

**यदपीति**। अदुःखस्यापि जनस्य विषयविशेषसम्पर्काद् ह्लादविशेषस्यानुभवाद् न दुःखनिवृत्तिरेव सुखं किन्तु स्वतन्त्रं वस्तु इति यदुक्तं सिद्धान्तिना, तन्न शोभनम्। यतो हि तत्रापि जने ह्लादविशेषे या कामनाऽस्ति, सैव दुःखमस्ति, विषयप्राप्तिं विना जायमानायाः कामनाया दुःखात्मकत्वात्। अतस्तत्र विषयविशेषसम्पर्कादनुभूयमानं सुखं कामस्वरूपदुःखनिवृत्तिरूपमेव मन्तव्यमित्याशङ्कितुराशयः। तत्रायं समाधिः—

कामनादुःखवतो जनस्य विषयविशेषोपभोगमासाद्य भवतु नाम सुखिता, भवतु च तत्र कामनात्मकदुःखविगमस्वरूपमेव सुखम्, तथापि कामनाभावेऽपि विषयविशेषोपभोगे सति जनस्य या सुखिता दृश्यते, सा न स्यात्। भवति च मध्यस्थो(तटस्थो)ऽपि जनः कामनादुःखरहितोऽपि सन् रमणीयविषयसम्पर्कमधि-

**स्यादेतत् – यत्रैव कामः स एव सुखयति विषयः, नेतरः। तस्मात् कामनिवृत्त्यैव विषयाः सुखयितारः। अन्यथा य एकस्य सुखः स सर्वस्य स्यात्। कामनिवृत्त्या तु सुखत्वे यत्र यस्य कामोऽभिरुचिः स एव तस्य सुख इति युज्यते। तत्राकामस्यापि विषयविशेषोपभोगात् कामाभिव्यक्तौ तन्निवृत्तौ तत्सुखित्वमिति।**

---

गतो ह्लादवानिति दृश्यते। यथा हि कामनाऽभावेऽपि जनो गन्धवहोपनीताचिन्तितचम्पकगन्धादिविषयविशेषोपभोगे सति सुखी भवत्येव, न च न भवति, तद्वत्। तंस्मान्न दुःखविगम एव सुखं किन्तु स्वतन्त्रमेव भाववरित्वति सिद्धम्। अत्र "मध्यस्थोऽपि" इत्यस्य रागवैराग्ययोर्मध्ये वर्तमानोऽपीत्यर्थः। यो न रागवान्, नापि वैराग्यवान्, तादृशो जन इति यावत्। यो हि तादृशगन्धादिविषये रागवान् भवेत्, तस्य तु कामनानिवृत्तिरेव सुखं स्यात्, न स्वतन्त्रं वस्तु भवेत्। यस्तु जनस्तथाविधगन्धादिकं प्रति वैराग्यवान् भवति सोऽपि तादृशं स्वत उपनतं विषयमासाद्यापि नानन्दमनुविन्दतीति न तादृशनिदर्शनेन सुखाभिधानं किमपि स्वतन्त्रं वस्तु सिध्येदतो मध्यस्थोऽपीत्युक्तम्।

यत्र यत्र सुखिता तत्रावश्यं कामनिवृत्तिसत्तेति व्याप्तौ व्यभिचारप्रदर्शनार्थम् "अकामस्यापी"त्युक्तम्। सत एव कस्यचिन्निवृत्तिर्भवति नासतः, प्राप्तौ सत्यां निषेध इति नियमात्। अतो यस्य मध्यस्थस्य कामनैव नास्ति तस्य कुतः कामनिवृत्तिरिति तत्र कामनिवृत्त्यभावेऽपि सुखितादर्शनात् तादृशव्याप्तौ व्यभिचार इति तात्पर्यम्।

कामनिवृत्तिसुखित्वयोर्यो व्यभिचारः प्रदर्शितः, स न सङ्गच्छत इति पूर्वपक्षयति – **स्यादेतदित्यादिना**। अयं भावः–

न हि स्वसत्तामात्रेण विषयाः सुखं जनयन्ति, किन्तु यं विषयं प्रति पुंसः कामोऽभिरुचिर्भवति, स एव विषयस्तं पुमांसं सुखयति। यं विषयं प्रति कामनैव न भवति, स न नरं सुखयति विषयः। तस्मात् काम्यमानविषयोपभोगे

**तदप्यसारम्, यतो विषयोपभोगा नावश्यं कामनिबर्हणाः। उक्तं हि "न जातु कामः कामानामुपभोगेन शाम्यति" (मनु० २/९४) इति। तथा—"भोगाभ्यासमनुविवर्धन्ते रागाः, कौशलानि चेन्द्रियाणाम्" (यो० सू० भा० २/१५) इति। विषयदोषदर्शनादपि च कामनिवृत्तिः, तत्रोपभोगतुल्य आह्लादः स्यात्। समाने च प्रार्थितार्थलाभे प्रमोदभेदो न स्यात्, कामनिवृत्तेरविशेषात्।**

---

सति कामनिवृत्तौ सत्यां सुखमनुभूयत इति स्वीकरणीयमेव। तथाऽस्वीकारे यो विषय एकस्य पुंसः सुखकरः स स्वसत्तामात्रेग सर्वस्य सुखकरः स्यात्, न त्वेवं दृश्यते। कामनिवृत्त्या तु सुखजनकत्वे यत्र विषये यस्य पुंसः कामः, स एव विषयस्तस्यैव पुंसः सुखकरो, न सर्वस्येति युज्यते। अतः कामनिवृत्तिसुखित्वयोर्व्याप्तौ नास्ति व्यभिचार इति।

यत्राकामस्यापि सुरभिगन्धादिविषयविशेषसम्पर्कात् सुखमनुभूयमानं लोके दृश्यते, तत्रेयं प्रक्रिया—स्वाभाविको हि रागः सर्वपुंसामस्ति, वीतरागजन्मादर्शनात्। स एव सहजो रागो विषयविशेषसम्पर्कमासाद्याविर्भवति आविर्भवंश्च तद्विषयस्योपभोगात् पश्चात् शाम्यति=निवर्तते सुखी च भवति जन इति। तस्मात् कामनिवृत्तिरेव सुखं न स्वतन्त्रं वस्त्विति सिद्धम्।

**तदप्यसारमिति**। अयमत्र समाधातुराशयः—यदुक्तं "विषयविशेषोपभोगात् कामशान्तौ सुखित्वमि"ति तदपि न युक्ततरम्, यतो हि विषयोपभोगाः कामं शमयन्तीति नास्ति नियमः। प्रत्युत भोगविवृद्धौ हविषा कृष्णवर्त्मेव भूयोऽभिवर्धत एव कामः। निदर्शितं चैतद् गीतामनुस्मृतियोगभाष्येषु "न जातु कामः......" इत्यादि-वाक्यैः।

एवं यथा विषयोपभोगात् कामनिवृत्तिस्तथा विषयेषु दोषदृष्ट्याऽपि कामो निवर्तते। अतो यदि कामनिवृत्त्या सुखं भवेच्चेत् तदा विषयोपभोग -

**स्यादेतत् — कामातिरेके तन्निवृत्तौ सुखातिशयाभिमानः, इतरत्राऽन्यथेति। तच्च न, कामातिरेकात् प्रयस्यन्तमवाप्तोऽर्थो न तथा प्रीणयति, यथाऽप्रार्थितो विना प्रयासादुपनतः। तथा हि— क्लेशादवाप्तोऽयमिति**

---

जन्यकामनिवृत्त्या यादृश आह्लादस्तादृश एवाह्लादो विषयदोषदर्शनजन्यकाम-निवृत्त्याऽपि पुंसो भवेत् न त्वेवं भवति। तस्मान्न कामनिवृत्तिरेव सुखम्।

एवं यत्र द्वौ त्रयो बहवो वा पुरुषाः स्वस्वानुकूलं यं कमपि विषयं प्रार्थयन्ते, तेषां स्वस्वप्रार्थितार्थलाभे समाने सत्यपि तेषामाह्लादेषु (प्रमोदेषु) भेदो दृश्यते, यथा कस्यचित् प्रार्थितार्थलाभे महान् प्रमोदो भवति, अन्यस्य त्वल्पः प्रमोदो भवति। स न स्यात्। यतो विषयलाभजन्या कामनिवृत्तिः सर्वेषामविशिष्टैव भवतीति।

**स्यादेतदिति**। यं विषयं प्रति यस्य पुंसः कामातिशयो भवति, तस्य पुंसस्ता-दृशोत्कटकामनिवृत्तौ सत्यां सुखाधिक्याभावेऽप्यधिकसुखलाभस्याभिमानमात्रं भवति, न तु भावभूतं किमप्यधिकं सुखं भवति। वस्तुतस्तु तत्रोत्कटकामनिवृत्ति-रेवाधिकसुखतयाऽभिमन्यते तेन पुंसेति मन्तव्यम्। यस्य तु पुरुषस्य यं विषयं प्रति रागस्तु वर्तते किन्तु स राग उत्कटो न भवति, तस्य तद्विषयलाभे सति नातिशयसुखाभिमानो भवति यतस्तस्याणीयसः कामस्य निवृत्तिर्भवतीति। काम एव क्वचिदुत्कटो भवति क्वचिदनुत्कटो वा भवति, तन्निवृत्तिस्तु अविशिष्टैवोभयत्र भवतीति रहस्यम्। तथा च सर्वथा कामनिवृत्तिरेव सुखमिति पूर्वपक्षः।

यदुक्तम्— "कामातिरेके तन्निवृत्तौ सुखातिशयः, कामनैयून्ये तन्निवृत्तौ अल्पीयः सुखमिति", तन्न युज्यते, वैपरीत्योपलब्धेः। तथा हि यस्योत्कटः कामः स यदि भृशं प्रयतमानः सन् क्लेशाद् अभीष्टमर्थमवाप्नोति चेत्, तदा स न तथा प्रीतिमान् भवति, यथा विना कामनां विना प्रयासं विना क्लेशं विषयमासाद्य प्रीयते कश्चित्।

**न तेन तथा प्रीयते, यथाऽनाशंसितोपनतेन। कामाभावमात्रे च सुखेऽकामितविषयोपभोगे न भोगावस्थायाः पूर्वापरे अवस्थे भिद्येयाताम्। कामप्रध्वंसे वा परावस्था न भिद्येत।**

---

एवं, यदि कामाभावमात्रं सुखं, तर्हि अकामितविषयोपभोगकाले यथा सुखं भवति, तथैव विषयोपभोगात् पूर्वावस्थायां परावस्थायां च सुखं भवेत्। यतो हि तिसृष्वप्यवस्थासु समानः कामाभावो वर्तते। पूर्वावस्थायां कामप्रागभाव-सत्त्वात्, विषयोपभोगकाले कामनिवृत्तेः, परावस्थायामपि च कामनिवृत्तेरनु-वर्तनेन कामाभावसत्त्वात्। तथा च तथाविधविषयोपभोगावस्थातो तत्पूर्वावस्था भिन्ना न स्यात्, न वा तत्परावस्थाऽपि ततो भिद्येत। किन्तु भिद्येते हि ते अवस्थे भोगावस्थापेक्षयेत्यस्ति सर्वजनानुभवः। एवं, कामाभावमात्रे सुखे सति यथा भोगावस्थातः पूर्वपरावस्थे न भिद्येयाताम्, तथा परस्परमपि ते अवस्थे न भिन्ने स्याताम्। यतो हि पूर्वपरावस्थयोः समान एव कामाभावोऽस्तीति वा मूलग्रन्थो व्याख्यातव्यः।

एवं, यत्र सफलः कामस्तत्र भोगात् कामनिवृत्तौ सत्यां यादृशी सुखात्मिका परावस्था भवति, तथैव यत्र कुतश्चित् कारणात् कामना प्रध्वस्ता निष्फलश्च कामः, तदुत्तरकालीनापि अवस्था तत्र सुखात्मिका भवेत्। परं न तथा भवति। भिन्नैव सा कामप्रध्वंसकालीना परावस्थेत्यपि सर्वजनानुभवः। तस्मान्न कामाभावमात्रं सुखमिति स्वीकरणीयमेव।

अथवा "कामाभावे च सुखे" इत्यादिसमाधानमूलमेवं व्याचक्षते केचित्– किं कामाभावमात्रं सुखम्, अथ कामप्रध्वंसः? आद्यपक्षे दोषमाह– **कामाभावमात्रे चेति**। अयमाशयः– अकामितविषयोपभोगे भोगात् प्राक् कामस्य प्रागभावः, भोगावस्थायां ततः परावस्थायां च विषयप्राप्त्युद्बुद्धस्य कामस्य निवृत्त्यात्मकः प्रध्वंसाभावः। अतः कामाभावस्याविशेषाद् भोगावस्थातः सकाशात् पूर्वापरे अवस्थे न भिद्येयाताम् इति तस्यामिव तयोरपि पुमान् सुखी स्यात्। न चैवमस्तीति।

**भोगावस्थायां प्रबुद्धाध्वस्तकाम एवेति चेत्, पूर्वापरयोरपि द्वयोरवस्थयोस्तर्हि सुखी इतरत्र दुःखीत्यनुभवविरुद्धमापद्येत। अप्राप्तश्च स्मरणविपरिवर्ती विषयः कामस्योद्बोधकः, प्राप्तो निवर्तकः। प्राप्तस्योद्बोधकत्वे न ततो निवृत्तिः स्यात्।**

---

द्वितीये कामध्वंसस्य सुखत्वपक्षे दोषमाह – **कामप्रध्वंस इति**। कामप्रध्वंसे च सुखे भोगावस्थातः सकाशात् परावस्था न भिद्येत। उभयत्रापि कामध्वंसाविशेषाद् भोगावस्थायामिव भोगसमाप्त्युत्तरकालमपि जनः सुखी स्यादित्यर्थः।

शङ्कते – **भोगावस्थायां** कामः प्रबुद्धो भवति न ध्वस्तो भवति। अतः कामप्रध्वंसकालीना परावस्था अप्रध्वस्तकामाया भोगावस्थातो भेत्स्यत एवेति।

समाधत्ते – एवमभ्युपगमेऽनुभवविरुद्धमापद्येत। यतो हि भवद्रीत्या भोगावस्थायां कामानिवृत्त्या कामात्मकदुःखसद्भावाद् दुःखी स्यात् पूर्वापरयोरवस्थयोस्तु कामप्रागभावेन कामप्रध्वंसेन च कामसंसर्गाभावात् कामाभावमात्रात्मकसुखसद्भावादिति यावत्, सुखी स्याज्जनः। एतदुभयमेव विरुद्धमस्ति। प्रत्युत भोगकाल एव सुखी भवति जनो नेतरयोरवस्थयोरिति सर्वजनानुभवः।

यदुक्तम् – "**अकामस्यापि** पुंसो विषयोपभोगात् कामस्याभिव्यक्तौ ततस्तन्निवृत्तौ जातायां **सुखं** भवतीति, तन्न युज्यते। यतो विपरीतमुच्यते भवता यद् विषयोपभोगः काममुद्बोधयति। प्रत्युत सुखहेतुत्वेन स्मर्यमाणो विषयोऽप्राप्त एव सन् कामस्योद्बोधको भवति, प्राप्तस्तु कामं निवर्तयत्येव। प्राप्तस्यापि विषयस्य कामोद्बोधकत्वे तस्यानिवर्तकस्वभावत्वात् तस्माद् विषयात् कामस्य कदापि निवृत्तिर्न स्यात्। एवं च कामनिवृत्तिरेव यदा नास्ति तदा कामनिवृत्तिः सुखमिति कथनं स्वप्नभाषितमेवेति तात्पर्यम्।

**न यत्र कामस्तत्र सुखम्, मनोरथशतार्थितस्याप्युपभोगेन कस्यचिद् दुःखित्वदर्शनात्। सुखपूर्वकस्तु कामः, अनुभूततद्भावे तद्दर्शनात्। यापि काचिदननुभूतेऽपि जातिविशेषभाजां कामप्रवृत्तिः,**

---

**एवं, सतः कामस्य** विषयोपभोगेन निवृत्तिः सुखमिति नास्ति नियमः, मनोरथशतैः प्रार्थितस्यापि दौर्भाग्यात् प्राप्तस्य कुकलत्रादेरुपभोगेन कस्यचित् पुंसो दुःखित्वदर्शनात्। न च तत्र कुकलत्रादेरुपभोगेन कामनिवृत्तिरेव नास्तीति वाच्यम्, कामस्योत्पत्तिमत्त्वेन तन्निवृत्तेरवश्यंभावित्वात्। अतस्तत्र कुकलत्रादिभोगेनावश्यं सुखेन भाव्यम्, किन्तु तथा न भवति, प्रत्युत दुःखित्वमेव दृश्यत इति भावः। तस्माद् विषयोपभोगेन कामनिवृत्तिः, कामनिवृत्तिश्च सुखमिति वचो न मनोरमम्।

एवं, कामतन्निवृत्तिपूर्वकमेव सुखमित्यपि नास्ति नियमः, प्रत्युत सुखपूर्वक एव काम इति दृश्यते, सुखेऽनुभूते सति अनन्तरं तद्विषये कामदर्शनात्। अतः सुखपूर्वक एव काम इति निश्चयात् कामनिवृत्तेरन्यत् प्राग्भाविसुखं वस्तुभूतं स्वीकरणीयम्।

ननु यदि सुखानुभवपूर्वक एव कामस्तदा अननुभूते स्तनपानादौ गवादिजातिविशेषभाजां वत्सादीनां कामो न स्यात्, न वा कामात् स्तनपानादौ प्रवृत्तिः स्याद् इति चेत्, न, तत्रापि पूर्वजन्मनि अनुभूतसुखस्यैव प्रयोजकत्वात्। अतस्तत्रापि सुखानुभवपूर्वक एव कामः कामाच्च प्रवृत्तिरिति मन्तव्यम्।

ननु कामाभावेऽपि सुखस्वीकारे यो विषय एकस्य सुखकरः स सर्वस्यापि सुखकरः स्यादिति अव्यवस्थाऽऽपद्येतेति चेत्, न, सुखवत् कामेऽपि अव्यवस्थायास्तुल्यत्वात्। अयं भावः– यस्य कामस्तस्य सुखमिति भवतु नाम, तथापि काम एव कस्यचिद् भवति कस्यचिद् न भवतीत्यत्र किं नियामकमिति

**सापि प्राग्गवीयानुभवनिबन्धना। यथा च कस्यचित् क्वचित् कामो जातिभेदादिनिमित्तः, तथा किञ्चित् कस्यचित् सुखमिति नाव्यवस्था।**

**अपि च, कामनिवृत्त्यापि केचिद् दूयन्ते, तदभावे विषयोपभोगसामर्थ्याभावात्। न तर्हि निवृत्तकामाः, निवृत्तकामा विषयं प्रति, तस्य कुतश्चिन्निमित्तादनुपभोग्यत्वात्।**

**किमिति तर्हि दूयन्ते ? अनुभूतचरस्य तज्जन्मनः सुखस्याप्राप्तेः। यथा पित्ताद्युपहतेन्द्रिया विशिष्टेभ्योऽन्नपानेभ्यो निवृत्तकामाः, तथैव**

---

वक्तव्यम्। तस्माद् यथा कस्यचित् प्राणिनः क्वचिद् विषये जातिवचोऽवस्था-निमित्तः कामो जायते, तथा कस्यचित् कश्चिद् विषयः सुखकरः कस्यचिन्नेत्यत्र जातिवयोऽवस्थाविशेष एव निमित्तमिति सुखेऽपि कामादेव नाव्यवस्थेति विज्ञेयम्।

***एवं, यदि कामनिवृत्तिः*** सुखं स्यात् तदा कामनिवृत्त्याऽपि केचिद् दुःखिता भवन्तीति यद् दृश्यते लोके तन्न स्यात्। ते कथं दुःखिता भवन्तीति चेत्, इत्थम् – पित्तवार्धक्यादिदोषाक्रान्तानां जनानां कामाभावे सति ते स्वस्मिन् विषयोपभोगसामर्थ्याभावमनुभवन्ति, तथा अनुभवन्तश्च दुःखिता भवन्तीति।

शङ्कते – यदि ते दूयन्त इति भवान् मन्यते, तर्हि न ते निवृत्तकामा इत्यपि भवान् मन्यताम्। यद्युच्येत वृद्धस्त्रैणादीनां विषयस्यानिष्टतया कामो निवर्तते, इत्थं कामनिवृत्तावपि ते दूयन्त इति। तन्न साधु, यतो हि यो विषयोऽनिष्टः, तस्मिन् यदि कामो निवर्तते, तर्हि न तत्रोपतापस्य प्रसङ्गः। अतः कामनिवृत्त्यापि ते दूयन्त इति रिक्तं वचः। अत्रायं पूर्वपक्षयितुराशयः – द्वयी हि गतिर्वस्तुनः, इष्टं वा भवति वस्तु अनिष्टं वा भवति। यद्यनिष्टं, तदा ततः कामनिवृत्त्या नोपतापस्यावसरः। यदीष्टम्, तदा तत्र कामो भवत्येव

**कामनिवृत्त्या तप्यन्ते। तत्रानुभूतचरतज्जन्याह्लादविच्छेदान्नान्यो हेतुः। तस्मात् प्रत्यात्मवेदनीयसुखप्रत्याख्यानमयुक्तम्। सुखसङ्गि-जनोपच्छन्दनाय तु तत्रभवद्भिर्वर्णितमिति पश्यामः।**

---

कामश्च दुःखमित्युक्तम्। अतस्तत्र भोगात् कामनिवृत्त्या सुखमेव जायते न दुःखमिति सर्वथा कामनिवृत्तिरेव सुखमिति सिद्धम्।

सिद्धान्तवादी समाधत्ते– दूयमानास्ते पित्तदोषात् तिक्ततयाऽवभासमानं सितशर्करादिविषयं प्रति निवृत्तकामा एव भवन्ति न तु सकामाः। अत एव ते तत्र रुचिसमुत्पादाय यतन्ते "कथमत्र नो रुचिः स्यादि"ति। अर्थाद् रुच्युत्पादे सकामा अपि विषयं प्रति निवृत्तकामा एव ते भवन्तीति मन्तव्यम्। तथा च निवृत्तकामतया सुखिन एव ते भवेयुः, न तु दूना इति।

अत्र वयं प्रतीमः – उक्तरीत्या रुचेः काम्यत्वे रुचिः कामः सुखं स्यात् काम्यस्य सुखात्मकत्वात्। तथा च पूर्वपक्षिणः कामस्य दुःखत्वकथनं तन्निवृत्तेश्च सुखत्वकथनं द्वयमप्यनुपपन्नमिति।

कथं विषयं प्रति निवृत्तकामा इति चेदित्थम् – तस्य विषयस्य कुतश्चिद् वार्धक्यादिदोषनिमित्ताद् उपभोक्तुमनर्हत्वादिति विज्ञेयम्।

विषयं प्रति निवृत्तकामत्वेऽपि कथं तर्हि दूयन्त इति प्रश्नश्चेत्, तत्रेदं विज्ञेयम्– पूर्वमनुभूतस्य विषयभोगजन्यसुखस्य तदानीं वार्धक्ये अप्राप्तेर्दूयन्त इति। यथैव हि पित्ताद्युपहतेन्द्रिया जना विशिष्टेभ्योऽन्नपानेभ्यो निवृत्तकामाः सन्तो दूयन्ते, तथैव भोगे असमर्था जना विषयेभ्यो निवृत्तकामाः सन्तस्तप्यन्त इति। तत्र तापे पूर्वानुभूतविषयजन्यानन्दस्य विच्छेद एव हेतुर्नान्यः। तस्मात् प्रत्यात्मम् अनुभूयमानस्य सुखस्य निराकरणं न युक्तम्।

ननु सुखं यदि स्वतन्त्रं भाववस्तु, तर्हि कथम्, "अनित्याशुचिदुःखा-नात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इत्यादिवचोभिराचार्यैः संसारे

**तदेवं दुःखनिवृत्तेरन्यत् सुखम् । स चानन्दशब्दस्य मुख्योऽर्थः। शब्दप्रमाणके च यथाशब्दं प्रतिपत्तिर्युक्ता।**

**न च रागनिबन्धना तत्र प्रवृत्तिः। न हीच्छामात्रं रागः। अविद्याक्षिप्तमभूतगुणाभिनिवेशं रागमाचक्षते। तत्त्वदर्शनवैमल्यात्तु मध्ये**

---

सुखाभाव उक्त इति चेत्, विषयसुखेऽत्यन्तमासक्तं परमश्रेयोविमुखं जनमनुकूलयितुं तत्रभवद्भिः पूज्यैराचार्यैः सुखं नाम वस्तु नास्तीति वर्णितमिति मन्तव्यम्।

**तस्माद् दुःखनिवृत्तेरन्यत्** सुखं स्वतन्त्रं भावभूतं वस्तु। तदेवानन्द-शब्दस्य मुख्योऽर्थः।

ननु भवतु नामानन्दशब्दस्य सुखमर्थो मुख्यः, तथापीह दुःखनिवृत्तिरूपामुख्य एवार्थः कथं न गृह्यते। यथा गङ्गायां घोष इति वाक्ये गङ्गापदस्यामुख्य एवार्थस्तीरं गृह्यते, तद्वदिति चेत्, न, तत्र प्रत्यक्षप्रमाणेन तीर एव घोषो दृश्यते न प्रवाहेऽतस्तत्र गङ्गापदस्यामुख्य एवार्थो लक्षणया गृह्यत इति युक्तम्। इह तु शब्दैकगोचर आत्मस्वरूपो न प्रमाणान्तरगोचरो येन तीरे घोषस्थितिमिव प्रमाणान्तरेण ब्रह्मणि दुःखनिवृत्त्यात्मकत्वमाकलय्य प्रकृते आनन्दशब्दो लक्षणया दुःखनिवृत्त्यात्मकेऽमुख्येऽर्थे नेयः स्यात्। तस्मादिह मङ्गलश्लोके आनन्दशब्दस्य न दुःखनिवृत्तिरर्थः, किन्तु भावभूतं सुखमेवार्थः। तच्चात्मनः स्वरूपमित्यवधेयम्।

**एवम्, आनन्दस्य** भावात्मकत्वे ब्रह्मणश्चानन्दात्मकत्वे आनन्दरागात्तत्र मुमुक्षुप्रवृत्तिः स्यात्। रागनिबन्धना च प्रवृत्तिः संसारबीजमिति न मुक्तये स्यात्। आत्मनि दर्शनं हि मुक्तिसाधनमुच्यते श्रुतौ। तच्चात्मदर्शनं शान्तदान्तस्य च भवति। न चानन्दरागात् प्रवर्तमानः शान्तो भवति। तस्मात् सकलदुःखातिगे ब्रह्मतत्त्वे दुःखेभ्य उद्विग्नः सुखेभ्यश्च वीतराग एव प्रवर्तमानो मुमुक्षु-र्मुच्यते नानन्दरागात् प्रवर्तमान इति यदुक्तम्, तन्न सम्यक्। यतो हि

चेतसः प्रसादोऽभिरुचिरभीच्छा न रागपक्षे व्यवस्थाप्यते। यथा संसारासारतातत्त्वदर्शननिष्पन्नो नोद्वेगस्ततो द्वेषपक्षे। अन्यथा सर्वदुःखातिगेऽपि तत्त्वे तद्द्वेषनिबन्धना प्रवृत्तिरिति संसारानुबन्धः स्यात्।

अपि च दृष्टपरोत्कर्षरागिभ्योऽपीन्द्रियजय उपदिश्यते साधनत्वेन कामादित्यागात्मकः, तथेहापि भविष्यति। कथं च तत्र समीहितेतर-

---

आनन्दात्मके ब्रह्मणि मुमुक्षुप्रवृत्तिर्न रागनिवन्धना भवति, मुमुक्षौ रागाभावात्। मोक्षेच्छासत्त्वादस्ति राग इति चेत्, न हीच्छामात्रं राग उच्यते। किन्तर्हि? अविद्याप्रयुक्तं रूपरसादिगुणेष्वसत्येष्वभिनिवेशं रागमाचक्षते मनीषिणः। न हि तपस्वी तपांसि इच्छन् रागीत्युच्यते लोके। तस्याविद्याप्रयुक्तविषयाभिनिवेशाभावात्। तस्माद् विमलात् संशयविपर्ययरहितात् तत्त्वज्ञानाद् या चेतसः प्रशान्तिः अभिरुचिरभीच्छा सा रागपक्षे न व्यवस्थाप्यते। अतो न सा संसारबीजमिति मन्तव्यम्।

अत एव संसारासारतारूपतत्त्वदर्शनाज्जायमानो यः संसारं प्रत्युद्वेगो वैराग्यम्, सोऽपि संसाराद् द्वेषपक्षे न मन्यते। यदि तथाविधः संसारं प्रत्युद्वेगो द्वेषपक्षे मन्येत, तर्हि यो हि जनो ब्रह्म आनन्दात्मकं न मत्वा सर्वदुःखातिक्रान्तमात्रं तत्त्वमभिप्रैति, तस्य तथाविधे ब्रह्मतत्त्वे प्रवृत्तिर्दुःखात्मकसंसाराद् द्वेषप्रयुक्तैव स्यात्, द्वेषश्च संसारबीजमिति संसारद्वेषाद् ब्रह्मणि प्रवर्तमानो न संसारबन्धान्मुच्येतेति। अर्थादुद्वेगमात्रस्य द्वेषत्वे तवापि मुक्तिर्न स्यादिति सारः।

अतस्तथाविधः संसारोद्वेगो यथा द्वेषपक्षे नास्ति, तथा नित्यनिरतिशयाऽऽनन्दात्मके ब्रह्मणि प्रवर्तमानस्य मोक्षेच्छापि न रागपक्षे वर्तत इति न तादृशीच्छा संसारबीजमिति मन्तव्यम्।

एवं नित्यनिरतिशयानन्दात्मके ब्रह्मणि यो रागः स रागः सन्नपि "शान्तो दान्त" इत्यादिशान्ततताप्रतिपादकश्रुत्या न निषिध्यते, किन्तु अनित्य-

**विषयाभिष्वङ्गनिषेधः? सर्वनिषेधेऽप्रवृत्तिप्रसङ्गात् । तथोत्तम-सुखरागादितरस्मादुपनतादपि निवृत्तिः। तथा चोक्तम् — "कामात्मता न प्रशस्ता न चैवेहास्त्यकामता" इति । (मनु. २/२)**

---

सातिशयविषयसुखराग एव तया श्रुत्या निषिध्यते। अत एव प्रमाणान्तरदृष्टे परे परमे उत्कर्षे सार्वभौमराज्यादिलाभे ये रागिणो भवन्ति, तेषां कृतेऽपि तत्प्राप्तिसाधनत्वेन क्षुद्रविषये कामलोभादित्यागादिरूप इन्द्रियजय उपदिश्यते लोके।शान्ततादिप्रतिपादिका श्रुतिश्च– "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्येत्" इति ।

तत्र सर्वरागनिषेधे सार्वभौमराज्यविषयरागस्यापि निषेधात् प्रमाणान्तर-दृष्टायां सार्वभौमराज्यप्राप्तावपि लोकस्य प्रवृत्त्यभावः प्रसज्येत। एवं हि सति तत्प्राप्तिसाधनतया तत्परिपन्थिभूतविषयत्यागात्मकस्येन्द्रियजयादेरुपदेशो व्यर्थ एव स्यात्। अतो यथा समीहितादत्यन्ताभीष्टात् सार्वभौमराज्याद् इतरस्मिन् तद्विरोधिविषये *अभिष्वङ्ग आसक्तिर्निषिध्यते शास्त्रे*, तथैव उत्तमे नित्यनिरतिशये ब्रह्मानन्दे ये रागिणो मुमुक्षवस्तेषां कृते क्षुद्रे अनित्यसातिशये विषयसुखे उपस्थितेऽपि तत्प्रति आसङ्गो निषिध्यते निवृत्तिश्चोपदिश्यते उक्त-शमविधिनेति न काचिदनुपपत्तिः।

अत्रायं निष्कर्षः – ब्रह्मानन्दवर्जमितरत्र विषयसुखे रागः शमविधिना निषिध्यते। तस्माद् ब्रह्मानन्दरागादपि जायमानायां मुमुक्षुप्रवृत्तौ नैव "शान्तो दान्त" इति शमविधिविरोध इति। तथा चोक्तं मनुना – **कामात्मता न प्रशस्तेति।** अत्यन्तकामात्मता प्रशस्ता नास्ति, तथा सर्वथाऽकामतापि कस्यापि नास्ति। अत एव मुमुक्षोरप्यत्यन्तमकामिता नास्ति, तस्यापि हि मुक्तौ कामोऽस्त्येवेति मनुवाक्याभिप्रायः।

**स्यादेतत्, आनन्दश्चेद् ब्रह्मणि संवेद्यः, कर्तुरन्यत् कर्मेति द्वैतप्रसङ्गः। कर्तृकर्मभावश्च न क्रियां करणं चान्तरेण यतः, ततः "आनन्दं ब्रह्म" (बृ. ३/९/२८) इति च न स्यात् । तद्वत्तया व्यपदेशे अद्वितीयमिति न युज्यते। असंवेदने सन्नप्यसत्कल्प इति व्यर्थं तत्कीर्तनम् । पुरुषार्थत्वाय हि तत्सङ्कीर्तनम्, असंवेद्यश्च कथं पुरुषार्थः?**

---

अत्रायं पूर्वपक्षः– **आनन्दो ब्रह्मणि** संवेद्यो न वा ? यदि संवेद्यस्तर्हि आनन्दो विषयः कर्म, संवेदनं क्रिया, ब्रह्म च संवेदनक्रियायाःकर्ता, कर्म च कर्तुरन्यद् भवति । अत आनन्दब्रह्मणोः परस्परं भिन्नतत्त्वतया द्वैतं प्रसज्यते । एवं न केवलं कर्मद्वारैव द्वैतप्रसङ्गः; किन्तु क्रियाकरणद्वाराऽपि द्वैतं प्रसज्यते। यतो हि कर्तृकर्मभावः काञ्चित् क्रियां किञ्चित्करणं च विना न भवति । तस्मात् कर्ता ब्रह्म, कर्म आनन्दः, क्रिया संवेदनम् , करणमपि च किञ्चिद् भवेदेवेति सर्वथा द्वैतप्रसङ्गोऽद्वैतभङ्गश्चेति आपद्यते । एवञ्च कर्मकर्तृभावेन आनन्दब्रह्मणोर्भेदे सिद्धे घटपटयोरिवानन्दब्रह्मणोरपि आनन्दो ब्रह्मेति सामानाधिकरण्यं नोपपद्यते ।

अथ यथा शुक्लगुणवानित्यर्थाभिप्रायेण शुक्लो घट इति लाक्षणिको व्यवहारो भवति, तथैव आनन्दवद् ब्रह्म इत्यभिप्रायेण आनन्दो ब्रह्मेत्यपि व्यवहारो लक्षणया भविष्यतीत्युच्यते, तदपि न सम्भवति, ब्रह्मापेक्षया द्वितीयस्यानन्दस्य स्वीकारेण अद्वितीयं ब्रह्मेति कथनमयुक्तं स्यात्, अद्वैतश्रुतिविरोधश्चापद्येत ।

यदि च ब्रह्मणोऽद्वितीयत्वसंरक्षणाय आनन्दोऽसंवेद्य एवेत्युच्येत, तर्हि असत्कल्पस्यानन्दस्य विज्ञानमानन्दं ब्रह्मेति श्रुतौ सङ्कीर्तनं व्यर्थमेव। यतो हि पुरुषार्थत्वायैव तत्सङ्कीर्तनं भवेत् । असंवेद्यतयाऽसत्कल्प आनन्दः कथं पुरुषार्थः स्यात् । तस्मादानन्दं ब्रह्मेति ग्रन्थकृदुक्तिरसङ्गतेति पूर्वपक्षः ।

**उच्यते— फलवत् कर्तृवच्चेदं द्रष्टव्यम्। तथा हि— प्रमाणस्य फलमर्थान्तरमनर्थान्तरं वा सर्वपरीक्षकैः प्रतिज्ञायते प्रज्ञायते च । न च तदसंवेद्यम्, तदसंवेद्यत्वे सर्वासंवेद्यत्वप्रसङ्गात्, तत्कृतत्वात् संवेद्यभावस्य भावानाम् ।**

**न च संवेद्यम्, फलान्तरानुपलब्धेरनवस्थाप्रसङ्गाच्च । तस्मात् संवेद्यम्, आत्मप्रकाशत्वात् । असंवेद्यं च, विषयवत् कर्मभावाभावात् ।**

---

उक्तपूर्वपक्षे इदं समाधानमस्ति – **फलवत्** कर्तृवच्चानन्दस्य संवेद्यत्वमवगन्तव्यम्। अर्थात् प्रमाणस्य फलमनुभवोऽस्ति, तथा प्रमाणफलस्यानुभवस्य कर्ता चानुभविताऽस्तीति सर्वैर्विचारकैः स्वीक्रियतेऽनुभूयते च। तद्वदेवानन्दोऽपि अनुभूयमानत्वेन स्वीकरणीयः। स च अनुभवः प्रमाणादर्थान्तरमस्तीति नैयायिकादयोऽभ्युपगच्छन्ति। बौद्धाश्च अनुभवः प्रमाणादात्मनोऽनर्थान्तरमिति मन्यते। प्रमाणशब्दस्य भावव्युत्पत्त्यभिप्रायेण प्रमाणादनर्थान्तरमनुभवः, करणव्युत्पत्त्यभिप्रायेण तु प्रमाणादर्थान्तरमनुभव इति मूलाभिप्राय इति केचिद् व्याचक्षते। भवतु यथा तथा तथापि प्रमाणफलीभूतोऽनुभवो नापलप्यते केनापि ।

एवं, सर्वपरीक्षकस्वीकृतः प्रमाणफलीभूतोऽनुभवो नासंवेद्यः। यद्यसंवेद्यो भवेत् शशशृङ्गवदलीक एव भवेदनुभवः। एवं सति अलीकानुभवप्रयुक्तं भावानां संवेद्यत्वमपि असत् स्यात्। भावा न कस्यापि संवेद्याः स्युरर्थात् सर्वं वस्तुजातमसंवेद्यं प्रसज्येत ।

एवम्, अनुभवरूपं प्रमाणफलं यदि संवेद्यमुच्येत, तदपि न युक्तम्, यतो हि अनुभवात्मकं भावानां संवेदनं प्रमाणफलमस्ति, अनुभवस्य संवेद्यत्वस्वीकारेऽनुभवसंवेदनरूपं किमपि फलान्तरं तत्र कल्प्येत। किन्तु अनुभवस्यानुभवरूपं फलान्तरं नोपलभ्यते। यदि अनुभवस्याप्यनुभवान्तरमुपगम्येत, तदा तस्यानुभवान्तरस्याप्यनुभवान्तरं फलं कल्प्येत। तथा चानवस्था प्रसज्येतेति भावः। तस्मादनुभवः स्वतो भासमान एवार्थं भासयति प्रदीपवत्, न त्विन्द्रियवदभासमानोऽपि

**यथा च कर्तर्यात्मन्यसंवेद्ये संविदेव न स्यात्। न हि तदैवं भवति – "मयेदं विदितमिति"। न ह्यात्माऽसंवेद्यः फले विषये चानुसन्धातुं शक्यः। अननुसन्धाने च स्वपरसंवेद्ययोः कोऽतिशयः। न च संवेद्यः, कर्मत्वे कर्तुर्व्यतिरेकप्रसङ्गाद् अनात्मत्वप्रसङ्गाच्च। तस्मादात्मप्रकाशतैव तस्य संवेद्यता।**

---

सन्। तथा च प्रमाणफलमनुभवः संवेद्योऽप्यस्ति, प्रदीपवद् आत्मप्रकाशत्वात्, असंवेद्योऽप्यस्ति, आत्मप्रकाशत्वादेव। अर्थाद् विषयवत् कस्यापि प्रकाशकस्य कर्मभावं न भजतेऽनुभवः। एतद्दृष्ट्या सोऽसंवेद्योऽप्यस्तीति बोध्यम्।

कर्तृवच्चेति दृष्टान्तभागं स्वयं व्याचक्षाण आह – **यथा चेति**। अयं भावः – यथा हि घटादिविषयज्ञानस्य कर्ता विषयेण सहैवात्मानमपि जानात्येव। यदि स आत्मानं न जानीयात्, तदा तस्य घटज्ञानमपि न स्यात्। अर्थात् "मया इदं विदितम्" इत्याकारानुभवस्तस्य न भवेत्। अस्मिन्ननुभवे त्रयाणामनुसन्धानं भवति "मया" इति आत्मनः, "इदम्" इति विषयस्य, "विदितम्" इति ज्ञानरूपफलस्य। यद्यात्मा स्वयमसंवेद्यः स्यात् तदाऽत्र विषयफलयोः सम्बन्धितया तस्यानुसन्धानं कथं सम्भवेत्? विषयवेत्तृत्वेन तस्यानुसन्धानं भवितुं न शक्नुयादिति तात्पर्यम्।

न च वाच्यम् – "विषयवेत्तृत्वेन कर्तुरनुसन्धानं मा नाम भवतु, का हानिरिति"। एवं सति यो विषयः स्वस्य संवेद्यः, यश्च परस्य संवेद्यः, तयोर्विषययोः स्वपरसंवेद्ययोः को विशेषः स्यात्? न कोऽपि विशेषः स्यादित्यर्थः। स्वपरसंवेद्ययोस्तयोर्विषययोरयमेव तु विशेषोऽस्ति यदेकस्य स स्वयं वेत्ताऽस्ति अपरस्य च विषयस्य परो वेत्ताऽस्तीति। तस्माद् विषयभानेन सहात्मनोऽपि भानं भवत्येवेति आत्मा न असंवेद्यः।

एवमुक्तयुक्त्या आत्मा यथाऽसंवेद्यो नास्ति, तथा कर्मकर्तृविरोधात् संवेद्योऽपि नास्ति। संवेद्यत्वं नाम वेदनकर्मत्वम्। आत्मा यदि वेदनक्रियां प्रति

**तथा ब्रह्मणः स्वात्मप्रकाशस्यानन्दः स्वभावो न संवेद्यः, कर्मत्वाभावात्। न चासंवेद्यः, स्वप्रकाशत्वात्। "तत् केन कं पश्येत्"? (बृ. ४/५/१५) इत्यपि निषेधः कर्मविषयः। तथा हि सर्वकर्मप्रत्यस्तमयहेतुक एव स उच्यते, "यदास्य सर्वमात्मैवाभूत्" (बृ. ४/५/१२) इति।**

---

कर्म भवेत् तदा स्वयं वेदनकर्ता स कथं भवेत् ? कर्तुः कर्मव्यतिरिक्तत्वात्। न हि कर्मैव कर्ता भवति। न हि स्वस्कन्धमारोहति कश्चित्।

एवम्, आत्मा विषयस्य वेत्ता भवति, स यदि वेद्यकोटौ प्रविशेत्, तदा स आत्मैव न स्यात्। तस्यानात्मत्वं प्रसज्येत संवेद्यत्वात्, घटवत्। एवम्, आत्मनः संवेद्यत्वे तस्य यो वेत्ता भवेत्, सोऽपि कस्यापि अन्यस्य संवेद्यः स्यात्, तस्यापि वेत्तुरन्यो वेत्ता भवेत् तस्यापि कश्चिदन्यो वेत्ता भवेदिति रीत्या अनवस्थादोषोऽपि प्रसज्येत। तस्मात् स्वप्रकाशतैवात्मनः संवेद्यता न तु संवित्तिकर्मत्वरूपेति सिद्धम्।

**यथा दृष्टान्तभूतौ** फलं च कर्ता च स्वप्रकाशौ तथा दार्ष्टान्तिकभूतं ब्रह्मापि स्वप्रकाशम्। इत्थञ्च स्वप्रकाशब्रह्मस्वभाव आनन्दोऽपि स्वप्रकाशः। यो यादृशस्य यस्य स्वभावभूतः स तत्स्वभावभूततया तादृश एवेति नियमात्। अतः स्वप्रकाशतयाऽऽनन्दो न संवेद्यः, कर्मत्वाभावात्। नाप्यसंवेद्यः, स्वप्रकाशत्वादिति युक्तम्।

ननु ब्रह्म यदि स्वप्रकाशं तदा "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति श्रुतेर्नित्यदृष्टेस्तस्य "तत् केन कं पश्येत्" इति श्रुत्या दर्शनप्रतिषेधो न सङ्गच्छत इति चेत्, न, "कम्" इति कर्मबोधकतया दृशिकर्मणो दृश्यजातस्य प्रतिषेधः कृतः श्रुत्या न दृशेर्दर्शनस्यैवेति विज्ञेयम्। अत एव "यदास्य सर्वमात्मैवाभूत्" इति श्रुतिभागो दृशिकर्मणो दृश्यजातस्यात्मनि विलयमाह, विलयनिमित्तक एव च दृश्यजातस्य प्रतिषेधः "कं पश्येत्"? इति श्रुत्या कृत इति मन्तव्यम्। "यदास्य सर्वमात्मैवाभूत्" इति श्रुतेरयमर्थः– अस्य विदुषो यदा सर्वं दृश्यजातमात्मैवाभूत् प्रपञ्चविलयाद् नात्मव्यतिरिक्तमस्ति, तदा कं पश्येत् ? न कमपीति भावः।

**अन्ये मन्यन्ते– द्विविधा धर्माः– भावरूपा अभावरूपाश्चेति। तत्राभावरूपा नाद्वैतं विघ्नन्ति, यथा "एकममृतमजम्" इति। न हि भेदोदयव्ययानां निवृत्तिः किञ्चिद् वस्तु, येन द्वैतमावहेत्। आनन्दश्च यदि भावः, तस्य धर्मित्वे विज्ञानं धर्मः स्यात्। अथ विज्ञानं धर्मिरूपम्, आनन्दो धर्मः। न ह्येकस्य द्वे रूपे युज्येते, विरोधात्। तत्र "विज्ञानमानन्दं ब्रह्म" (बृ. ३/९/२८) इति भावरूपयोरानन्दब्रह्मणोर्धर्मधर्मिणोर्भेदादद्वैतविघातः।**

---

केचिदन्ये तु आनन्दशब्दस्य सुखवाचित्वेऽवश्यमद्वैतविघातः स्यादतो दुःखाभावपरत्वमेव मन्तव्यम् इत्याक्षिपन्त आहुः– ब्रह्मणि हि द्विविधा धर्माः सन्ति– केचिद् भावरूपाः, केचिच्चाभावरूपाः। तत्राभावरूपा ये धर्मास्ते नाद्वैतविघाताय कल्पन्ते, निवृत्तिरूपस्याभावस्यावस्तुत्वात्। यथा– "एकममृतमजम्" इत्यत्रैव मङ्गलश्लोके उक्ता एकत्वामृतत्वाजत्वधर्माः। तत्र "एकम्" इत्यस्य आत्माऽनात्मनामर्थानां भेदस्य नानात्वस्य निवृत्तिरर्थः। "अजम्" इत्यस्य ब्रह्मण उदयनिवृत्तिरर्थाद् जन्मनिवृत्तिरर्थः। "अमृतम्" इत्यस्य च ब्रह्मणो व्ययनिवृत्तिरर्थाद् विनाशनिवृत्तिरर्थः। एते त्रयो निवृत्तिरूपा ब्रह्मधर्मा अवस्तुरूपत्वाद् न ब्रह्मणि द्वैतमापादयिष्यन्ति न चाद्वैतविघाताय कल्पिष्यन्ते।

किन्तु आनन्दो यदि भावरूपस्तदा स धर्मी भवेद् विज्ञानं च तस्य धर्मो भवेत्। अथवा विज्ञानमेव तस्यानन्दस्य धर्मी भवेदानन्दश्च तस्य धर्मो भवेत्। न च सम्भवति– आनन्दो धर्मी अपि भवेद् धर्मश्च भवेदिति। एकस्य विरुद्धद्विरूपत्वानुपपत्तेः।

तस्माद् "विज्ञानमानन्दं ब्रह्म" इत्यत्र विज्ञानात्मकं ब्रह्म धर्मी आनन्दश्च तस्य धर्म इत्यवश्यमङ्गीकरणीयम्। तत्र धर्मी ब्रह्मापि भावरूपम्, तस्य धर्म आनन्दोऽपि भावरूपः। तथा चोभयोर्भावरूपयोरानन्दब्रह्मणोर्धर्मधर्मिणोः परस्परं भेदादद्वैतविघात आपद्येत। तस्माददद्वैतविघातो यथा मा भूद् इत्येतदर्थम् आनन्दशब्दस्य दुःखनिवृत्तिपरत्वमभ्युपेयमित्याक्षेपकर्तॄणामाशयः।

**स्यादेतत्— धर्मोऽपि न धर्मिणो भिन्नः, भेदे गवाश्ववद् धर्मधर्मिभावानुपपत्तेः। तदसत्, अभेदेऽपि धर्मिरूपवत्तदनुपपत्तेः। तस्मात् कथञ्चिद् भिन्नो धर्मः। तथा चात्यन्तिकभेदाभावश्रुतिः— "एकमेवाद्वितीयम्" (छां. ६/२/१) इति न युज्यते। एवं योऽप्येकस्य रूपद्वयं प्रतिपद्यते। तस्माद् विज्ञानात्मनो ब्रह्मणो दुःखाभावोपाधिरेवानन्दशब्दः। यथा— स्थूलाभावाद्युपाधयः "अस्थूलमनण्वह्रस्वम्" (बृ. ३/८/८) इत्यादयः शब्दाः।**

---

**ननु धर्मधर्मिणौ** यदि भिन्नौ स्यातां तदाऽद्वैतविघातः स्यात्, नान्यथा। न च धर्मधर्मिणौ भिन्नौ स्तः, तयोः परस्परं भिन्नत्वे गवाश्ववत् तयोर्धर्मधर्मित्वानुपपत्तेः। अतो धर्मधर्मिणोरभेदाद् नाद्वैतविघातो भविष्यति। अयं भावः — आनन्दो धर्मोऽस्ति ब्रह्मणो धर्मिणः, धर्मधर्मिणोश्चाभेदस्वीकाराद् नाद्वैतविघातापत्तिरिति।

उक्तमवान्तरसमाधानं न युक्तम्। यथाऽत्यन्तभेदे गवाश्ववद् न धर्मधर्मिभावः सम्भवति, तथाऽत्यन्ताभेदेऽपि आनन्दब्रह्मणोर्न धर्मधर्मिभावः सम्भवति। अत एव स्वतो अत्यन्ताभेदे धर्मिस्वरूपे स्वापेक्षया न धर्मधर्मिभावो भवति। न हि भवति गौरेव गोर्धर्म इति, अश्व एवाश्वस्य धर्म इति वा। तस्मात् कथञ्चिद् भिन्नोऽप्यस्त्यानन्दो धर्मो विज्ञानात्मकब्रह्मणः सकाशात्, न त्वानन्द एव ब्रह्मेति। तथा चात्यन्तिकभेदाभावबोधिका "एकमेवाद्वितीयम्" इति श्रुतिर्न युक्ता। इयं हि श्रुतिरेकाद्वितीयैवशब्दैः पुनः पुनरात्यन्तिकभेदाभावं प्रतिपादयन्ती दृश्यते, किन्तु तस्यास्तत्परत्वं न युक्तमित्याक्षेप्तुराशयः।

एवं योऽपि ब्रूते यदानन्दविज्ञानयोर्न परस्परं धर्मधर्मिभावः, किन्त्वेकमेव ब्रह्म विज्ञानानन्दरूपद्वयात्मकम्। तथा च नाद्वैतश्रुतेर्बाध इति। सोऽपि उक्तरूपद्वयस्य मिथः, तथा रूपिणो ब्रह्मणश्च सकाशाद् भेदाभेदावभ्युपगच्छति। अतस्तस्यापि आत्यन्तिकभेदाभावबोधिका "एकमेवाद्वितीयम्" इति श्रुतिर्न युज्यते।

**न च विज्ञानानन्दयोरेकत्वम्, शब्दद्वयप्रयोगवैयर्थ्यात्। कथं चापर्यायशब्दाभिधेय एकत्वम्?**

**तस्माद् दुःखोपरम एवानन्दशब्दस्य ब्रह्मण्यर्थ इति।**

---

तस्माद् विज्ञानात्मनो ब्रह्मणो यो दुःखाभावरूपोपाधिः, तत्परक एवायमानन्दशब्दो न तु भावभूतसुखपर इति। यथा– "अस्थूलमनण्वह्रस्वम्" इत्यादयः शब्दा न भाववाचकाः, किन्तु ब्रह्मणः स्थूलाभावाण्वभावह्रस्वाभावारूपोपाधिपरा एवेति गम्यते, तद्वत्।

इदमत्र रहस्यम्– ब्रह्म विज्ञानैकरूपं न तु भावभूतानन्दरूपमपि, येन विज्ञानानन्दाख्यरूपद्वयकृतं द्वैतं प्रसज्येत। तथा आनन्दशब्दवाच्यो दुःखाभावोपाधिरपि तस्य अवस्तुभूतः, अभावस्यावस्तुत्वात्। अतो यथा भावरूपानन्दपक्षे आनन्दब्रह्मणोर्धर्मधर्मिभेदकृतो द्वैतप्रसङ्गदोष आयाति स्म, तथा न दुःखाभावारूपोपाधिपक्षे दुःखाभावब्रह्मणोर्धर्मधर्मिभेदकृतो द्वैतप्रसङ्गदोष आयाति, अभावस्यावस्तुत्वादिति बोध्यम्।

**ननु न विज्ञानानन्दयोर्मिथो** धर्मधर्मिभावः, न वा एकं ब्रह्म विज्ञानानन्दरूपानेकात्मकं येन द्वैतदोषः प्रसज्येत। किन्तु विज्ञानमानन्दश्चेत्येकमेव तत्त्वं विज्ञानानन्दशब्दद्वयेनात्र मङ्गले उच्यते। एतावता ब्रह्मणोऽद्वैतत्वमानन्दस्य भावरूपत्वं च निर्बाधं भवतीति चेत्, न, विज्ञानानन्दयोरेकत्वे विज्ञानानन्दशब्दौ पर्यायौ स्याताम्। तथा च सति एकवस्तुनः कृते सहपर्यायशब्दद्वयप्रयोगस्य वैयर्थ्यं स्यात्। यदि न तौ शब्दौ पर्यायौ तदा घटपटयोरिव न तद्वाच्ययोरेकत्वं सम्भवि। तस्माद् विज्ञानानन्दयोरभेदानुपपत्तेर्भेदे चाद्वैतबाधापत्तेर्दुःखाभाव एव लक्षणया ब्रह्मण्यानन्दशब्द इति स्वीकरणीयम्। अन्यत्र भवतु नामानन्दशब्दः सुखस्य वाचकः, अत्र ब्रह्मणि तु आनन्दशब्देन दुःखाभाव एव लक्षणया बोध्यत इति पूर्वपक्षाशयः।

**अत्रोच्यते – विशिष्टस्याह्लादात्मनः प्रकाशस्य चान्द्रमसस्येव शब्दद्वयेन प्रतिपादनान्न दोषः। यथा च – प्रकृष्टप्रकाशः सविता इति। न च प्रकृष्टप्रकाशशब्दयोः पर्यायत्वम्। अथ च एक एवाभ्यामर्थविशेषः प्रतिपाद्यते प्रकाशविशेषः। न हि प्रकर्षोऽन्यः प्रकाशरूपात् सवितरि, न प्रकाशरूपो वा प्रकर्षात्, अपि तु प्रकाशभेदः शब्दद्वयोपायः प्रतीयते। तथा "विज्ञानमानन्दं ब्रह्म" (बृ. ३/९/२८) इत्यानन्दभेदो विज्ञानभेदो वा ब्रह्मरूपमिति शब्दद्वयेनावगम्यते।**

---

यथा हि – "**प्रकृष्टप्रकाशश्चन्द्रः**" इत्यादिस्थले चान्द्रमसस्य प्रकाशविशेषस्य प्रतीतिः प्रकृष्टप्रकाशशब्दाभ्यां द्वाभ्यां भवति, तथैव "विज्ञानमानन्दं ब्रह्म" इत्यत्रापि द्वाभ्यां विज्ञानानन्दशब्दाभ्यामाह्लादात्मनः प्रकाशस्य एकस्यैवार्थस्य प्रतिपत्तिर्भवति, न तु तत्रार्थद्वयप्रतीतिर्जायते। अतो नाद्वैतबाधो दोषः।

एवं प्रकृष्टप्रकाशशब्दौ न पर्यायौ येन एकस्यैवार्थस्य पर्यायशब्दाभ्यां प्रतिपादने एकस्य शब्दस्य वैयर्थ्यापत्तिः स्यात्। अथ च एक एवार्थः प्रकाशविशेषस्ताभ्यामपर्यायशब्दाभ्यां प्रतिपाद्यते, न तु विभिन्नोऽर्थः प्रतिपाद्यते। न हि सवितरि वर्तमानः प्रकर्षः प्रकाशरूपादन्यः, प्रकाशो वा प्रकर्षादन्यः। अपि त्वेक एवार्थः प्रकाशविशेषस्तत्र शब्दद्वयेनोपायेन प्रतीयते।

तथैव "विज्ञानमानन्दं ब्रह्म" इत्यत्रापि द्वाभ्यां शब्दाभ्यां ब्रह्मस्वरूपभूत आनन्दविशेषो विज्ञानविशेषो वा बोध्यते। तथा चात्र विज्ञानानन्दात्मकस्यैकस्यैव ब्रह्मस्वरूपस्य बोधनाद् नाद्वैतबाधदोषापत्तिरिति भावः। विस्तरस्तु शङ्खपाणेः सिद्धिव्याख्यायामनुसन्धेयः।

तद्यथाह – "विज्ञानानन्दयोरभेदे तच्छब्दयोः पर्यायत्वं स्यात्, पर्यायत्वे च सहप्रयोगानुपपत्तिः। प्रकृष्टप्रकाशयोस्तु अभिधेयभेदादपर्यायत्वम् अपर्यायत्वाच्च सहप्रयोग उपपद्यते। यदि तु विज्ञानानन्दशब्दयोरभिधेयभेदस्तदा "विज्ञानमानन्दं ब्रह्म" इत्यत्र गुणगुणिभावो बलादापतितः, द्वैतापत्तिश्च स्यात्। अत्र समाधानम् –

**परमतामप्यस्य केचित् साधनपारतन्त्र्यलक्षणायाः क्षयिता-लक्षणायाश्च दुःखताया अभावान्मन्यन्ते। तदपि यथाशब्दं प्रतिपत्तेः शब्दप्रमाणकेऽर्थे नानुमन्यन्ते। न हि स्वरूपतः परमतासम्भवे विरोध्य-संसर्गादुपचरिता सा युक्ता भवितुम्। तस्मादात्मप्रकाशप्रकृष्टानन्द-स्वभावमेव ब्रह्मेति युक्तम्।**

---

अत्रापि अविद्याकल्पितो भेदोऽस्तीति न पर्यायत्वमपर्यायत्वाच्च सहप्रयोगे काचिद् बाधेति। अत एवाविद्यासिद्धार्थभेदात् तत्त्वमोर्न पर्यायत्वं न वा सह-प्रयोगानुपपत्तिः। यद्वा प्रकर्षो न गुणो गुणेऽपि भावात्, यथा प्रकृष्टगन्धं चन्दनमिति। अत एव न द्रव्यान्तरं गुणेऽपि भावात्। न कर्म कर्मणि भावात्-प्रकृष्टगतिरश्व इति। तस्मात् प्रकर्षो नाम तत्त्वतो व्यक्तिविशेष एव। व्यक्तेश्च विशेषः स्वत एव न प्रकर्षयोगात्, अनवस्थानात्। तस्मात् कल्पनयाऽर्थभेदाद् अपर्यायत्वमिति''।

**''एषोऽस्य परम आनन्दः''** इति श्रुतौ आनन्दस्य या परमता उक्ता सा स्रक्चन्दनादिसाधनपारतन्त्र्यलक्षणायाः क्षयितालक्षणायाश्च दुःखताया अभावादौपचारिकीति मन्यमानाः केचिदानन्दस्य दुःखाभावात्मकत्वं साधयन्ति। तदपि न स्वीकारार्हम्। प्रमाणान्तरगोचरोऽर्थः कामं तथा वर्ण्यतां नाम, किन्तु शब्दप्रमाणकस्तु अर्थो यथाशब्दमेव प्रतिपत्तव्यो भवति नान्यथा। यत्र हि ब्रह्मानन्दे स्वरूपतः मुख्या परमता सम्भवति, तत्रानन्दविरोधिदुःखस्याभावाद् हेतोरौपचारिकी परमता न ग्रहीतुमुचिता। तस्मादात्मप्रकाशमंर्थात् स्वप्रकाशत्वेन विज्ञानस्वरूपम्, एवं प्रकृष्टानन्दमर्थाद् अनुपचरितमुख्यपरमानन्दस्वभावं ब्रह्मेति युक्तम्। इहानन्दस्य भावत्वेन दुःखाभावात्मकत्वानौचित्यात्। विज्ञानानन्दयो-र्ब्रह्मणः स्वरूपभूतत्वादभेदोऽप्यस्तीति न द्वैतप्रसङ्गावसर इति विवेकः।

अत एव ''एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति'' श्रुतिवचनमपि सङ्गतं भवति। अर्थात् लौकिकोऽप्यानन्दो भावरूप एवास्य ब्रह्मानन्दस्य मात्रा अर्थात् सावच्छिन्नत्वाद् एकदेशभूतः। भावो ह्यनवच्छिन्नो विषयैरवच्छिद्याल्पीकर्तुं

**इतश्चानन्दस्वभाव आत्मा, परप्रेमास्पदत्वात्। श्रूयते हि परप्रेमास्पदत्वम् – "तदेतत् प्रेयः पुत्रात्" (बृ. १/४/८) इति। प्रतीयते च। तथा हि– सर्वस्येयमाशीःकृमेरपि "मा न भूवम्, भूयासम्" इति। सा च प्रियेऽवकल्पते, प्रेमा च सुखात्मनि, न दुःखे नोभयरूपरहिते, द्वेषाद् उपेक्षणाच्च।**

**अन्ये तु सुषुप्ते "सुखमहमस्वाप्सम्" इति परामर्शाद् आत्मनि सुखानुभवमाहुः। न ह्यननुभवे परामर्श एवं स्यात्, सुषुप्ताभ्युपगमश्च।**

---

शक्यते। यथाऽनवच्छिन्न आकाशो घटादिभिः सङ्कोच्यते, तद्वत्। अभावस्तु खपुष्पाद्यभाववद् न सावच्छिन्नः कर्तुं शक्यते। आनन्दस्य दुःखनिवृत्तिरूपत्वे हि एतस्यैवानन्दस्येति श्रुतिर्न सङ्गच्छेतेति।

एवं च लौकिकानन्द एतस्य मात्रेति युज्यते, अवच्छेदात्। दुःखनिवृत्तौ तु दुर्योजमेतत्।

**एवं, ब्रह्म** आत्माऽऽनन्दस्वभावः, यतस्तत् परमस्य निरतिशयस्य प्रेम्ण आस्पदं ब्रह्म। तथा च श्रुतिः– "तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात्" इत्यादिः। न केवलं श्रुतिः प्रमाणं तस्य परमप्रेमास्पदत्वे, किन्तर्हि? सर्वस्य स्वानुभवोऽप्यस्ति प्रमाणम्। अत एव सर्वस्य कृमिपर्यन्तस्यापि इयमाशीर्दृश्यते– मा कदाचिन् न भूवम्, किन्तु सदा भूयासम् इति। सा चाशीः प्रिये वस्तुनि कल्पते, प्रियञ्च तदेव वस्तु भवति यत् सुखात्मकम्। यद् दुःखात्मकं तत्तु न प्रि[illegible] भवति, तत्प्रति द्वेषभावात्। यच्च वस्तु न सुखरूपं नापि दुःखरूपम्, तदपि न प्रेमास्पदं भवति, तत्प्रति उपेक्षाभावात्। तस्मात् परमप्रेमास्पदभूतत्वादपि आनन्दस्वभाव आत्मा इति गम्यते।

केचिदन्ये तु एवं मन्यन्ते– न केवलं परमप्रेमास्पदत्वादिलिङ्गैरात्मनः सुखस्वरूपत्वं प्रत्येतव्यम्, किन्तर्हि ? सुषुप्तावस्थायामात्मनः सुखात्मकत्वमनुभूयते, ततोऽपि। अत एव सुप्तोत्थितस्य "सुखमहमस्वाप्सम्" इति परामर्शो लोकस्य

**न ह्यन्यथानुभवे सुखमिति परामर्शः। न च तत्रात्मनोऽन्यदनुभवनीयमस्ति। तथा चाहरहर्ब्रह्मलोकावाप्तिः श्रूयते।**

**तत्रान्य आहुः – दुःखोपरमादपि तथा परामर्शसिद्धेर्नैकान्ततः सुखित्वसिद्धिः। तान् प्रत्याहुः – अन्यथाभावेऽवगते दुःखोपरमनिमित्तः**

---

भवति। स्वाभाविकोऽयं सुषुप्तिकालीनः सुखानुभवस्तत्परामर्शश्च प्रबोधे। ननु "दुःखमहं कष्टमहमस्वाप्सं चित्तं मे भ्रमतीदानीम्" इत्यपि सुप्तोत्थितस्य कदाचित् परामर्शो भवति, तावता दुःखात्मकत्वमप्यात्मनः स्वीक्रियेतेति चेत्, न, तदा निद्रोच्छेदप्रयुक्तो हि तादृशानुभवः परामर्शश्च। तदानीं निद्रैव नासीत्, वस्तुतो निद्रोच्छेदो विविधो दुःस्वप्नो वा भवेदिति मन्यामहे। घोरनिद्रायां सुषुप्त्याख्यायां तु सुखस्वाप एवानुभूयते लोकैः।

यद्युच्येत – सुषुप्तावस्थायां सर्वथाननुभव एव कथं न स्वीक्रियेतेति तन्न युक्तम्, एवं सति सुषुप्तानुभवेनापि न भवितव्यम्। भवति च सुषुप्तानुभवस्तेन सहैव सुखानुभवश्चेति। तस्मात् सुखपरामर्शात् "सुखम्" इति विशिष्टानुभवः सिध्यति।

ननु भवतु नाम सुषुप्ते सुखानुभवस्तथापि तत्सुखं पृथगेवात्मनि विशेषणतयाऽनुभूयत इति चेत्, इत्यपि न वक्तुं शक्यम्, सुषुप्ते सर्वेषां करणानामुपरमाद् आत्मनोऽन्यन्न किमप्यनुभूयते। अत आत्मैव सुखस्वभावः स्वप्रकाशतया स्वतो भासत इति तस्य सुखात्मत्वं सुतरां सिध्यति। अत एव "एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्ति य एतं ब्रह्मलोकं न विदन्ति" इति श्रुतौ प्रत्यहं सुषुप्तौ सुखात्मकब्रह्मलोकावाप्तिः प्रदर्शितेति।

ये हि आत्मनः सुखात्मकत्वं नाङ्गीकुर्वन्ति, ते वदन्ति यत् सुप्तोत्थितस्य "सुखमहमस्वाप्समिति" परामर्शो न केवलं सुखानुभवादेव सिध्यति, किन्तर्हि ? दुःखस्य उपरमादपि उक्तपरामर्शो भवितुमर्हति। अतः स परामर्श आत्मनः सुखात्मकत्वे प्रमाणीकर्तुं न शक्यत इति। तदेतत् प्रत्याचक्षते सिद्धान्त्येकदेशिनः– अत्र सुप्तोत्थितस्योक्तपरामर्शेन लिङ्गेन सुखानुभव एव प्रत्याय्यते, न

**सुखशब्द इति युज्यते, अन्यथा मुख्यार्थतैव युक्ता। तत्राहुः – उभयथा व्यपदेशस्य दर्शनादुपपत्तेश्च न व्यपदेशमात्रादर्थसिद्धिरित्यलमतिविस्तरेण।**

---

दुःखोपरमः। यतो हि आत्मनोऽन्यथाभावोऽर्थादसुखात्मकत्वं यदि प्रमाणान्तरादवगतं स्यात्, तदा सुखात्मकत्वस्य बाधितत्वेन दुःखाभावनिमित्तः सुखशब्द आत्मनि प्रयुक्तः स्यात्। सुखशब्देन लक्षणया दुःखाभावो बोध्येतेति तात्पर्यम्। यदि त्वात्मनोऽसुखात्मकत्वं न केनापि प्रमाणान्तरेणावगतं तदाऽऽत्मनि सुखशब्दस्य मुख्य एवार्थो ग्राह्यः सुखात्मकत्वरूपः।

तत्र मुख्यः सिद्धान्ती आह– सुखशब्दस्य सुखे दुःखाभावे चोभयत्रापि व्यपदेशस्य "सुखम्" इति परामर्शस्य दर्शनाद् न सुखशब्दः सुखमात्रे व्यपदेष्टुं शक्यते। उपपद्यते च सुखाविनाभावेन दुःखोपरमोऽपि।

अयं भावः– सुप्तादुत्थितस्य जीवस्यैव "सुखमहमस्वाप्सम्" इति परामर्शो भवति, तेन परामर्शेन च तस्यैव सुषुप्तिकालीनः सुखानुभवः कल्पनीयो नान्यस्य। तस्य च तदानीमुपसंहृताखिलोपाधेः संस्कारमात्रशेषस्याविद्याच्छादितात्मनः सुषुप्तसुखोपलम्भो नैव सम्भवति। तस्मात् प्रतिबुद्धस्य "सुखम्" इति परामर्शमात्रं भवति। न तु तेन लिङ्गेन सौषुप्तसुखोपलम्भः कल्पयितुं शक्यते। अनुभवाभावे स्मरणासम्भवात्। अनुभवमूलकम् "सुखम्" इति परामर्शमात्रं तु सुखे दुःखाभावे चोभयत्रापि लोके दृश्यते। तस्मान्नोक्तपरामर्शमात्रेण सुखशब्दः सुखमात्रे व्यपदेष्टुं शक्यत इति।

अथवा न केवलं "सुखमहमस्वाप्सम्" इति व्यपदेशः, किन्तर्हि "न किञ्चिदवेदिषम्" इति व्यपदेशोऽपि भवतीति। तस्मादुभयथा व्यपदेशात् स्वापकाले सर्वथा अज्ञानं तिष्ठति। अस्यां स्थितौ सुखपरामर्शो नानुभवनिमित्तः, तदानीं सर्वथाऽज्ञानसाम्राज्यात्, किन्तु दुःखोपरमनिमित्त एव। तथा चोभयथा व्यपदेशस्य, सुखे दुःखाभावे च सुखशब्दस्योपपत्तेश्च न सुखव्यपदेशमात्रात् सुषुप्ते सुखानुभवसिद्धिरिति भावः।

**अत्र केचित्— भोगव्यवस्थानात्, मुक्तसंसारिविभागोपपत्तेश्च, दृक्शक्तेश्चार्थवत्त्वात् स्वात्मनि वृत्तिविरोधात्, दृश्येन द्रष्टुरनुमानात्, दृश्यस्य च सुखदुःखमोहभेदवच्छब्दादिविभागोपलब्धेः, एकत्वश्रुति-**

---

यच्च प्रतिबुद्धस्य "सुखमहमस्वाप्सम्" इति सुखानुभवानुसन्धानं तद् दुःखानुभवाभावानुसन्धानाभिप्रायेणेति बोध्यम्। न च तदानीं दुःखाननुभवोऽपि न ज्ञातः, सर्वथैवाज्ञानसाम्राज्यात्, तथा च कथं प्रतिबुद्धस्य दुःखानुभवाभावानुसन्धानमपीति वाच्यम्, यदि तदानीं दुःखमन्वभविष्यत् तदाऽवश्यं दुःखमस्मरिष्यत्, न चैवम्। तस्माद् दुःखानुभवाभावानुसन्धानं सुस्थितम् इति शङ्खपाणयो विशेषमाहुः।

मङ्गलश्लोकोक्तं ब्रह्मण एकत्वं नोपपद्यते निर्देक्ष्यमाणहेतुभिः। तत्र प्रथमो हेतुः "**भोगव्यवस्थानात्**"। यदि सर्वात्मनामेकत्वं स्यात्तदा लोके कश्चित् सुखी कश्चिद् दुःखीति सुखदुःखयोर्भोगव्यवस्था न स्यात्। सर्वे सुखिन एव वा भवेयुर्दुःखिन एव वा भवेयुरिति। मुक्तसंसारिविभागोपपत्तिश्च द्वितीयो हेतुः। आत्मैकत्वे कश्चिन्मुक्तः कश्चित् संसारीति विभागोऽपि नोपपद्यते, प्रत्युतैकस्मिन् मुक्ते सर्वे मुक्ताः स्युः, न कश्चित् संसारी अवशिष्येत। तस्मादात्मनां नानात्वं प्रतीमो नैकत्वम्। एवं दृक्छक्तेः सार्थक्यं भेद एव घटते न सर्वैकत्वे। यद्यात्मनः पृथग् दृश्यं न स्यात् तदाऽऽत्मनो दृक्छक्तिर्निरर्थिकैव स्यात्। न च वाच्यम् आत्मा आत्मानमेव द्रक्ष्यति न पृथग् दृश्यमस्तीति, स्वात्मनि स्वव्यापारे विरोधात्। न हि कश्चित् स्वस्कन्धमारोहति।

दृश्येन द्रष्टुरनुमानं भवतीति चतुर्थीयुक्तिर्नानात्वे। दृश्यं हि दर्शनक्रियायाः कर्म भवति, दर्शनं च कर्तारं द्रष्टारमन्तरा न सम्भवतीति दृश्येन हेतुना द्रष्टा पृथग्भूतोऽनुमीयते। तस्मादस्ति द्रष्टुरन्यत् तदनुमापकं दृश्यमिति आत्मदृश्ययोर्भेदे सिद्धे आत्मैवैकं तत्त्वमिति न सिध्यति।

र्जातिदेशकालविभागाभावनिमित्तोपचारान्मन्यन्ते। "आत्मैवेदं सर्वम्" (छां. ७/२५/२२) इति च तादर्थ्यनिमित्तोपचारात्। तान् प्रत्युच्यते—एकमिति।

**तान् प्रत्युच्यते—"इन्द्रो मायाभिः पुरुरूप ईयते" (बृ. २/५/१९) इति व्यक्तमेव नानारूपावगमो मायानिबन्धनो दर्शितः, तत्र कथमेकत्वमुपचरितमिति वक्तुं शक्यम् ?**

**तत्र व्यक्तो नानात्वनिषेधः—"नेह नानास्ति किञ्चन" (बृ. ४/४/१७) इति। नानात्वदर्शननिन्दा च—"मृत्योः स मृत्युमाप्नोति"**

---

एवं दृश्यजातं शब्दस्पर्शरूपरसगन्धात्मकविभागैर्युक्तमुपलभ्यते, ते च शब्दादयस्त्रिगुणजन्यतया सुखदुःखमोहभेदवन्तः सन्ति। तथा हि केचिच्छब्दादयः सुखरूपाः, केचिद् दुःखरूपाः, केचिच्च मोहरूपाः सन्ति। अतः सुखदुःखमोह-भेदवन्तः शब्दादयः परस्परं भिन्नाः सन्ति। इत्थं च दृश्यानां भेदे सिद्धे आत्ममात्रैकत्वं न कथमपि सेद्धुमर्हतीति भावः।

ननूक्तयुक्तिभिर्भेदस्वीकारे "एकमेवाद्वितीयम्" इत्यादिश्रुतीनाम-भेदबोधिकानां का गतिः स्यादिति चेत्, उक्तश्रुतिरात्मत्वजातेरेकत्वं बोधयति देशकालभेदं च बोधयति। जगन्मात्रस्यैकत्वमपि सत्तारूपेण बोधयति। या च "आत्मैवेदं सर्वम्" इति श्रुतिस्तस्या अपि आत्माद्वैतं नार्थः, किन्तु "तादर्थ्यात् तच्छब्दः" इति न्यायेन "यूपाय दारु यूपदारु" इतिवत् "आत्मार्थमेवेदं सर्वम्" इत्यर्थाभिप्रायिका गौणी मन्तव्येति केचिदाक्षिपन्ति।

पूर्वोक्तयुक्त्या भेदसिद्धेः **"एकमेवाद्वितीयम्"**, **"आत्मैवेदं सर्वम्"** इत्यादि-श्रुत्युक्तमेकत्वमुपचरितमेव बोध्यम् इति यदुक्तं तन्नोपपद्यते, **"इन्द्रो मायाभिः पुरुरूप ईयते"** इति श्रुतौ नानात्वं मायाप्रयुक्तमिति स्पष्टं प्रतिपादनात्, ब्रह्मण एकत्वं नोपचरितं भवितुमर्हति, किन्तु मुख्यमेव श्रुत्युक्तमेकत्वमिति मन्तव्यम्।

**(बृ. ४/४/१९) इति। भेददर्शनस्य चाभावः, भेददृष्टिरिव भ्रमात् – "य इह नानेव पश्यति" (बृ. ४/४/ १९) इति इवशब्देन प्रकाशितो नोपचरित एकत्वेऽवकल्पते।**

**काममुपचारादस्त्वेकत्वम्, न तु भाविकस्य नानात्वस्य निवृत्तिः। साऽप्युपचारेणैवोच्यत इति चेत्, न, प्रयोजनाभावात्। सति निमित्ते प्रयोजने चोपचारः। न च नानात्वनिवृत्त्युपचारे प्रयोजनं पश्यामः।**

---

एवम्, नानात्वस्य स्फुटं प्रतिषेधोऽपि श्रुत्याऽवगम्यते। यथा "नेह नानास्ति किञ्चन" इति। एवं नानात्वं मायाप्रयुक्तं प्रतिषिद्धं च श्रुत्या इति स्थितम्। "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इति श्रुत्या नानात्वदर्शनस्य निन्दाऽपि कृताऽस्ति। अर्थाद् नानात्वदर्शी जनो जन्ममृत्युचक्रेषु वारं वारं भ्रमति। एवं "य इह नानेव पश्यति" इति श्रुत्यंशे नानाशब्देन सह "इव"शब्दः पठ्यते। तेनावगम्यते यद् भेददृष्टिरिव वर्तते, न तु वस्तुगतिर्भेददृष्टेरस्ति। तस्मादत्र श्रुत्युक्तेन इवशब्देन वास्तविकस्य भेददर्शनस्य अभावः संसूचितो भवति। अतः "एकमेवाद्वितीयम्" इति श्रुत्युक्तमेकत्वं नोपचरितं कर्तुं शक्यम्, नानात्वस्य मायाप्रयुक्तत्वप्रतिपादनात्, भेददर्शनस्य निन्दाकरणात्, इवशब्दस्य प्रयोगाच्चेति मन्तव्यम्।

एवम्, अभ्युपगमवादेनाह – कामम् एकत्वमुपचरितमस्तु, तथापि नानात्वं यदि वास्तविकं स्यात्, तदा वास्तविकस्य तस्य निवृत्तिप्रतिपादिका श्रुतिः कथं घटेत ? न च नानात्वं वास्तविकमेव, तस्य श्रुत्युक्ता निवृत्तिस्तु सत्ताजात्यभेदमाश्रित्य उपचारात् सङ्गता भविष्यतीति वाच्यम्, नानात्वनिवृत्तेरुपचारस्वीकारे प्रयोजनाभावात्।

न च सत्ताजात्यभेदरूपे उपचारनिमित्ते विद्यमाने प्रयोजनाभावेऽपि न काचिद् बाधा उपचारे इति वाच्यम्, निमित्ते सत्यपि उपचारे प्रयोजनस्यावश्यमपेक्षितत्वात्। अत एव "आदित्यो यूपः" इति श्रुतौ यूपस्यादित्यत्वोपचारे तेजस्वितारूपनिमित्ते सत्यपि स्तुतिप्रयोजनमपेक्ष्यैव आदित्यशब्दो यूपे उपचर्यते न निष्प्रयोजनमुपचर्यते।

विपर्ययाच्च। अभ्युदयाय निःश्रेयसाय वा नानात्वनिवृत्तिरुपचर्येत। सा हि साध्यसाधनादिविभागं निवर्तयन्ती सर्वत्र चात्माभिमानमाविर्भावयन्ती तद्विरोधिनी स्यात्। तथा हि सर्वतो निवृत्तस्य निःश्रेयसमित्यपि संवादः।

तथा "एकमेवाद्वितीयम्" (छा. ६/२/१) इत्यवधारणाद्वितीयशब्दाभ्यां तस्यैवार्थस्य पुनः पुनरभिधानात् सर्वप्रकारभेदनिवृत्तिपरता

---

प्रकृते "नेह नानास्ति किञ्चन" इति श्रुतौ नानात्वनिवृत्तेरौपचारिकत्वस्वीकारे न किमपि प्रयोजनं दृश्यते। तस्माद् एकत्वं नोपचरितं किन्तु वास्तविकम्। तथा नानात्वनिवृत्तिरपि वास्तविकी एव नौपचारिकी। नानात्वमेव तु औपाधिकभेदमादाय औपचारिकमिति स्वीकरणीयम्।

**नानात्वनिवृत्तेरुपचारो** न केवलं निष्प्रयोजनः, प्रत्युत प्रयोजनविपर्ययकारकोऽपि वर्तते, तद्विरोधित्वात्। तथा हि, नानात्वनिवृत्त्युपचारस्य प्रयोजनम् अभ्युदयो वा भवेन् निःश्रेयसं वा स्यात्, तद्द्वयमपि न सम्भवति। तथा हि नानात्वनिवृत्तिरुपचर्यमाणा साध्यसाधन-(स्वर्गतत्साधनयागा)दिविभागमपि निवर्तयन्ती कथं स्वर्गकामजनं यागकर्मणो न निवर्तयेत्? तथा चाभ्युदयप्रयोजनं न संसाधितं भवेत्। एवम्, यदि उपचरिता नानात्वनिवृत्तिस्तदा सा "आत्मैवेदं सर्वम्" इत्याकारं सर्वत्रात्माभिमानमाविर्भावयन्ती सती निःश्रेयसस्यापि विरोधिनी स्यात्। यतो हि "नान्यत्र सर्वसंन्यासान्मोक्षं विन्दति मानवः" इति वचनानुसारेण सर्वपरित्यागान्निःश्रेयसं भवतीत्युच्यते। न हि सर्वपरित्यागोऽस्ति, पुत्रकलत्रादावभिमानस्यैव विद्यमानत्वेन सर्वपरित्यागासत्त्वात्। तस्मादपि नानात्वनिवृत्त्युपचारो नाङ्गीकरणीयः, अभ्युदयनिःश्रेयसयोर्विरोधित्वादिति भावः।

एवम्, अनुपदमेव य एकत्वस्योपचार उक्तः। सोऽभ्युपगमसिद्धान्तादुक्तः। न त्वेवमस्ति यदेकत्वोपचारे श्रुतेरभिप्रायोऽस्ति। यतो हि **"एकमेवाद्वितीयम्"** इति श्रुतौ पूर्वमेकत्वं प्रतिपाद्य एवशब्दाद्वितीयशब्दाभ्यां तदर्थस्याभेदस्यैव पुनः पुनः कथनं कृतमस्ति। इत्थञ्चोक्तश्रुतिः सर्वविधभेदनिवृत्तिं लक्षयति। अर्थाद् न

**श्रुतेर्लक्ष्यते। अभ्यासे हि भूयस्त्वमर्थस्य भवति, यथा "अहो दर्शनीया अहो दर्शनीया" इति, न न्यूनत्वमपि, दूरत एवोपचरितत्वम्।**

**यत्तु भोगव्यवस्थानादिति, तत्रोच्यते– कल्पितादपि भेदाद् भोगव्यवस्थासिद्धेः। असारमेतत्। तथा हि– एकस्मिन्नप्यात्मनि सर्वगते शरीरपरिमाणेऽणुपरिमाणे वा कल्पितभेदनिबन्धना भोगव्यवस्था दृश्यते– पादे मे वेदना, शिरसि मे वेदना इति। न हि पादस्य शिरसो वा वेदनयाभिसम्बन्धः, अज्ञत्वात्। शरीरपरिमाणात्मवादिनोऽपि नावयवा एव वेदनाभाजः, आत्मनस्तद्विरहप्रसङ्गात्।**

---

केवलं सत्ताजात्यभेदाद्धेतोः सर्वत्रैकत्वं किन्तु व्यक्तिदृष्ट्याऽपि भेदनिवृत्तिर्लक्षिताऽस्ति। यतो वारं वारमावृत्त्या हि भूयस्त्वमेव विषयस्य भवति, न त्वल्पीयोऽपि न्यूनत्वमायाति। उपचारेण विषयस्य सर्वथा निवृत्तिस्तु सुदूरपराहतेति।

संसारे कश्चित् सुखी कश्चिद् दुःखीति पृथक् पृथक् सुखदुःखयोर्व्यवस्थादर्शनादात्मनानात्वमस्तीति· यदुक्तम्, तदसारम्, आत्मैकत्वेऽपि कल्पितभेदमाश्रित्यापि पृथक् पृथग् भोगव्यवस्थाया उपपन्नत्वात्। यथा– एकस्मिन्नपि देवदत्ताद्यात्मनि कस्यचिन्मतेन सर्वव्यापके कस्यचिन्मते शरीरपरिमाणे कस्यचिन्मतेन चाणुपरिमाणे तस्मिन् कल्पितभेदमाश्रित्य दुःखादिभोगव्यवस्था दृश्यते। पादे मे व्यथा शिरसि मे व्यथेति। न च वाच्यम्, वस्तुतः पादस्यैव शिरस एव वा वेदनया सह सम्बन्धोऽस्ति न तु देवदत्ताद्यात्मन इति पादादेरचेतनत्वेन चेतनदेवदत्ताद्यात्मन एव वेदनासम्बन्धस्य स्वीकर्तुमुचितत्वात्।

ननु यो विभुमणुं वा निरवयवमात्मानं मन्यते तद्दृष्ट्या कल्पितभेदमादाय उक्तसमाधाने सम्भवत्यपि यः शरीरपरिमाणात्मवादी सावयवमात्मानं मन्यते, तदनुसारेण तु पादस्य शिरसो वा भेदो न काल्पनिकः किन्तु वास्तविक एवास्ति। तथा च वस्तुतो भिन्नस्य पादस्य शिरसो वा यथा वेदनासम्बन्धो भवति तथा वस्तुतो नानात्मनामेव पृथक् पृथक् 'कश्चित् सुखी भवति, कश्चिद् दुःखी भवति' इति व्यवस्थायाः स्वीकरणीयत्वाद् नानात्वमेवात्मनः सिद्ध्यति नैकत्वमिति चेत्,

**स्यादेतत्, ऐकात्म्ये तद्वदेव देहान्तरभोगानुसन्धानं स्यात्। अन्यदिदानीमेतत्। अस्ति तावद् भोगव्यवस्था। अपि च तत्रापि न प्रदेशः प्रदेशान्तरवेदनामनुसन्दधाति, तथेहापि न जीवो जीवान्तरवेदनामनुसन्दधातीति समानम्। तथा मणिकृपाणदर्पणादिषु मुखादीनां वर्णसंस्थानभेदव्यवस्थानमुपलभ्यते भेदाभावेऽपि।**

---

न, तथा सति पादो दुःखी शिरो दुःखीत्येव व्यवहारः स्यात्, न तु देवदत्तः, अहं वा दुःखीति व्यवहारो भवेत्। तथा च देवदत्तात्मन एकत्वेऽपि यथा पादशिर आदिभेदेन दुःखव्यवस्था दृश्यते तथा आत्मैक्येऽपि कल्पितभेदवद्देवदत्ताद्यवच्छेदेन सुखदुःखभोगव्यवस्थोपपद्यते।

अत्रेयमाशङ्का – यथैकदेहवर्ती एक एव आत्मा पादशिरसोर्भिन्नयोर्द्वयोर्वेदनामनुसन्धत्ते तथा बहुषु देहेषु विद्यमान एक एवात्मा स्वदेहस्य पादशिरोवर्ति दुःखवद् देहान्तरवर्त्यपि दुःखजातमनुसन्दधीत, किन्तु नानुसन्धत्ते। तस्मादगत्याऽऽत्मनानात्वं स्वीकरणीयमेव।

अत्रोच्यते – भोगव्यवस्थां प्रति इदं दूषणं भवतु नाम, आत्मैक्ये तु नेदं दूषणं स्पृशति। तथा च प्रकृतं परित्यज्य सिद्धान्तादददूषणं नाम निग्रहस्थानमेतदापतितं पूर्वपक्षिण उपरि।अयमेवाभिप्रायो दर्शितो ग्रन्थकर्त्रा "अन्यदिदानीमेतत्" इति वाक्येनेति ध्येयम्। तथा च भोगव्यवस्थायाः सुस्थिरत्वाद् आत्मैक्यसिद्धान्तो निर्दोष इति।

एवं, यथा देहैक्येऽपि पादप्रदेशः स्वभिन्नस्य शिरःप्रदेशस्य वेदनां नानुसन्धत्ते, तथैव आत्मैकत्वेऽपि एको जीवो न जीवान्तरवेदनामनुसन्दधातीति समाना स्थितिः पूर्वपक्षयितुः सिद्धान्तिनश्चेति नैक़तर एव पर्यनुयोज्यः। तथा चोक्तमभियुक्तैः– "यत्रोभयोः समो दोषः परिहारश्च तादृशः। नैकः पर्यनुयोज्योऽस्ति तुल्यार्थप्रसाधने"।।इति।

एवं भेदाभावेऽपि एकमेव मुखं मणिकृपाणदर्पणादिषु विभिन्नवर्णकं विभिन्नाकृति चोपलभ्यते, तथैव एक एवात्मा विचित्रभोगशालितया व्यवस्थित उपलभ्यत इति न काचिदनुपपत्तिः।

**एवं च मुक्तसंसारिविभागोऽप्युपपन्नः। तथा हि – एकोऽप्यात्मा प्रदेशैः सुखदुःखादिभिर्युज्यमानस्तत्र बद्ध इव इतरत्र मुक्त इव च गम्यते। यथा मलीमसे दर्पणतले मलीमसं मुखं, विशुद्धे विशुद्धं, दर्पणरहितं च गम्यमानं तदुपाधिदोषासंपृक्तम्।**

**स्यादेतत्, कल्पना प्रतिपत्तुः प्रत्ययस्य धर्मः, न वस्तु व्यवस्थापयितुमलम्। न खलु प्रतिपत्तुः प्रत्ययमनु विपरिवर्तन्ते वस्तूनि। न चोपचरितात् कार्यमुपपद्यते। न हि उपचरिताग्निभावो माणवको दहति। उदाहृता तु व्यवस्था।**

---

आत्मैक्येऽपि यथा कल्पितभेदमादाय भोगव्यवस्थानमुपपद्यते तथा कल्पितभेदमादायैव कश्चिन्मुक्तः कश्चित् संसारीति लौकिको विभागोऽपि उपपन्नो भवति।अयमाशयः – एकोऽप्यात्मा यैर्देवदत्तादिदेहप्रदेशैरुपाधिभिरवच्छिन्नः सन् सुखदुःखादिभिर्युक्तो बद्ध इव भवति, तथा शुकदेवादिदेहप्रदेशैरुपाधिभिरुपलक्षितः सन् सुखदुःखादिरहितो मुक्त इव प्रतीयते। निरुपाधिकस्तु स वस्तुतो न बद्धो नापि मुक्तः। अस्यामुपपत्तौ दृष्टान्तो यथा – एकोऽपि जीवः शिरःपाण्याद्युपाधिकल्पितभेदप्रदेशद्वारेण सुखादिभिर्युज्यमानः सन् यत्र भागे तैर्युक्तः तत्र भागे स बद्धः, अन्यत्र भागे तैर्मुक्त इत्यवगम्यते। तथैवैक एवात्मा देवदत्तादिदेहावच्छेदेन बद्धः, शुकदेवादिदेहावच्छेदेन च मुक्त इति संसारिमुक्तव्यवस्थाऽप्युपपद्यते। एवं यथा एकमेव मुखं मलिने दर्पणे मलिनं प्रतीयते, अमलिने च दर्पणेऽमलिनं यथास्थितं भाति। तथा एक एवात्मा मलिनामलिनयोरन्तःकरणयोः दुःखी सुखी च भवति। एवं रीत्या सुखदुःखभाग् जीवः संसारी बद्ध इव भवति, दर्पणरहितं मुखमिव मलिनामलिनान्तःकरणरहितः स एव आत्मा तु सुखदुःखाभ्यामनाक्रान्तो मुक्तो भवतीति संसारिमुक्तव्यवस्थाऽपि सूपपन्ना।

ननु उपचारो नाम कल्पना, सा च कल्पना प्रतिपत्तुर्जनस्य यः प्रत्ययः – अन्तःकरणं तस्य धर्मोऽस्ति।अतोऽन्तःकरणधर्मभूतया कल्पनया वस्तु व्यवस्थापयितुं न शक्या। यतो हि प्रतिपत्तृजनस्य प्रत्ययानुसारेण = कल्पनानुसारेण

**सत्यम्, विभ्रमो हि सः। अत्रापि विभ्रमत्वं न दण्डवारितम्। कल्पितोऽपि चाहिदंशो मरणकार्याय कल्पते, प्रतिसूर्यकश्च प्रकाशकार्याय।**

**यदपि दृश्येनैव द्रष्टुरनुमानात् द्रष्टृदृश्ययोर्भेदः, दृश्यस्य च सुखादिभेदोपलब्धेर्नानात्वमिति। तदप्यसत्, न द्रष्टर्यप्रकाशे यतो दृश्यस्य सिद्धिरस्तीत्युक्तम्।**

---

वस्तूनि न विपरिवर्तन्ते। कल्पनानुसारेण वस्तूनां स्वरूपं न परिवर्तितं भवतीति यावत्। एवम् उपचरितात् – कल्पितात् पदार्थात् किञ्चित् कार्यमपि नोपपद्यते। अत एव "अग्निर्माणवकः" इत्यग्नित्वेन उपचरितः – कल्पितो माणवको दाहको न भवति। अतो जीवो यदि कल्पितस्तदा कल्पितात् तस्माद् दृष्टमदृष्टं वा किमपि कार्यं न स्यात्। यत्तूक्तम् – शिरःपादादिभेदेन कल्पितादपि देहगतभेदात् "शिरसि मे वेदना न पादयोः, अथवा पादे मे वेदना न शिरसि" इति वेदनातदभावयो-र्व्यवस्था दृश्यते। किं बहुना, पादयोरपि "वामपादे मे वेदना न दक्षिणे पादे" इति च व्यवस्था दृश्यत इति। सा तु भ्रान्तिर्न वास्तविकी व्यवस्था सा। अतो मदुदाहृतैव व्यवस्था साध्वी यद् वास्तविकाद् जीवभेदात् कश्चित् सुखी कश्चिद् दुःखीति भोगव्यवस्था, कश्चित् संसारी कश्चिन्मुक्त इति बद्धमुक्तव्यवस्था चोपपत्स्यत इति।

**अत्रेदं समाधानम्** – सत्यम्, शिरःपादादिभेदाद् देहभेदप्रतीतिर्भ्रान्तिः। अहमपि तथैव मन्ये। किन्तु तद्वदेव हि जीवभेदप्रतीतिरपि भ्रान्तिरेव। सा न भवता दण्डेन निवारयितुं शक्या।

यच्चोक्तम् – न कल्पितात् किमपि कार्यमुपपद्यत इति, तन्न युक्तम्, असत्यपि सर्पदंशे कल्पितादपि तस्माद् मरणकार्यं जायमानं दृश्यते, दर्पणादौ प्रतिबिम्बितात् कल्पितसूर्यात् प्रकाशकार्यं भवतीति दृश्यते।

तस्मादेकमेवाद्वितीयं ब्रह्म, तत्र भेदास्तु कल्पिता एवेति युक्तः सिद्धान्तः।

दृश्येनैव द्रष्टाऽनुमीयते। अतो द्रष्टा भिन्नो दृश्यं च भिन्नमस्ति। एवं दृश्यमपि किञ्चित् सुखात्मकं, किञ्चिद् दुःखात्मकं, किञ्चिन्मोहात्मकमुप-

दृश्यभेदोपलब्धिश्च नास्ति, प्रमाणस्यानवच्छेदकत्वादिति वक्ष्यते। दृक्शक्तेश्चार्थवत्त्वं स्वात्मोपयोगात्। न च स्वात्मनि वृत्तिविरोधः, प्रदीपवत् प्रमाणफलवच्चेत्युक्तम्।

अपि चैकत्व एवायं द्रष्टृदृश्यभावोऽवकल्पते, द्रष्टुरेव चिदात्मनस्तथा तथा विपरिणामाद् विवर्तनाद् वा। नानात्वे तु विविक्तस्वभावयोरसंसृष्ट-

---

लभ्यतेऽतो दृश्यमपि नानास्ति ।तथा च "एकमेवाद्वितीयं ब्रह्म" **इति श्रुत्युक्तमेकत्वं** न मुख्यमवकल्पत इति पूर्वपक्षः। अत्राह – सोऽपि न शोभनः पक्षः। **यतो हि** प्रकाशात्मके द्रष्टरि सत्येव दृश्यस्य सिद्धिर्भवति, न दृश्याधीना द्रष्टृसिद्धिरस्तीति "यथा च कर्तर्यसंवेद्ये" इति मूले पूर्वं निरूपितम्। तथा चासिद्धो द्रष्टृदृश्यभेदसाधको हेतुः। अत्रेत्थं पूर्वपक्षिणोऽनुमानाकारः – "दृश्यं द्रष्टृभिन्नं, द्रष्टृसिद्धिप्रयोजकज्ञानविषयत्वात्, वह्निभिन्नधूमवत्" इति। भेदसाधको हेतुरयमसिद्धो हेत्वाभास इति सिद्धान्तयितुरभिप्रायः।

यदप्युक्तम् – सुखादिभेदोपलब्धेर्दृश्यस्य नानात्वमिति, तदप्यसिद्धम्, प्रत्यक्षादिप्रमाणानां दृश्यभेदबोधने सामर्थ्याभावादिति "आहुर्विधातृप्रत्यक्षम्" इत्यग्रे वक्ष्यते तर्ककाण्डे प्रारम्भे।

यदप्युक्तम् – दृक्शक्तेः सार्थक्यं तदैव सम्भवति, यदा द्रष्टृभिन्नं दृश्यजातं स्यात्। दृश्याभावे द्रष्टुर्दृक्शक्तिर्निरर्थिकैव सम्पद्येतेति। तदपि न शोभनम्, स्वात्मदर्शन एव दृक्शक्तेरुपयोगात् तत्सार्थक्योपपत्तेः। न च द्रष्ट्रा स्वदर्शने आत्माश्रयो दोषः कर्तृकर्मविरोधश्चेति वाच्यम्, यथा प्रदीपः प्रदीपान्तरनिरपेक्षः स्वत एव प्रकाशते, तथाऽऽत्मापि स्वत एव प्रकाशिष्यते, नात्र कश्चिद् विरोधः। एवं, प्रमाणफलवच्चैतदुपपत्स्यत इति निरूपितं पूर्वम्। तच्चानुसन्धेयम्।

**द्रष्टृदृश्ययोरेकत्व एव** द्रष्टृदृश्यभावस्तयोः उपपद्यते, न नानात्वे। यतो हि एकत्वपक्षे द्रष्टैव तत्तद्दृश्यरूपेण विपरिणमते परमते तथा विवर्तते स्वमते। अतद्रूपस्य भ्रान्त्या तद्रूपाध्यासो विवर्तः। तथा च नानात्वपक्षे द्रष्टृदृश्ये परस्परं विविक्तस्वभावे, अत एव ते परस्परमसंसृष्टे। अस्यां दशायां सम्बन्धाभावात् को

**परस्परस्वरूपयोरसम्बद्धयोः कीदृशो द्रष्टृदृश्यभावः। न हि चित्यसंसृष्टं चेतितमिति युज्यते।**

**एकान्तःकरणसङ्क्रान्तावस्त्येव सम्बन्ध इति चेत्, न, चितेः शुद्धत्वाद् अपरिणामाद् अप्रतिसङ्क्रमाच्च। दृश्या बुद्धिश्चिति-सन्निधेस्तच्छायया विवर्तत इति चेत्, अथ केयं तच्छायता? अतदात्मनस्तदवभासः, न तर्हि परमार्थतो दृश्यं दृश्येत। परमार्थतश्चा-दृश्यमानं द्रष्टृव्यतिरिक्तमस्तीति दुर्भणम्।**

---

द्रष्टा स्यात् किञ्च दृश्यं स्यात्। अतो द्रष्टृदृश्यभावोपपत्तये तयोरेकत्वम-वश्यमङ्गीकरणीयम्। यच्च चिति द्रष्टृभूतायाम् असंसृष्टं भवति, तत्कृते चेतितमिति व्यवहारो न युज्यते। तस्मात् संसर्गार्थं द्रष्टृदृश्यभावोपपत्त्यर्थं च तयो-रेकत्वमङ्गीकरणीयमिति तात्पर्यम्।

**ननु स्वच्छे चेतसि** दृश्यजातमिन्द्रियप्रणालिकया सङ्क्रान्तं भवति, तत्रैव चात्मचैतन्यरूपा द्रष्टृभूता चितिरपि सङ्क्रान्ता भवति। एवं रीत्याऽन्तःकरणरूपे एकस्मिन् अधिकरणे द्रष्टृदृश्ययोरुभयोः सम्बद्धतया तयोः परस्परं द्रष्टृदृश्यभावः सुष्ठूपपत्स्यत इति चेत्, भवतु नामैकान्तःकरणसङ्क्रान्ता चितिः, तथापि सर्वथा शुद्धायास्तस्या अर्थसंसर्गकालुष्यं न सम्भवति। न च विशुद्धाऽपि सती चितिः सङ्क्रान्तिमधिगत्यार्थाकारेण परिणंस्यत। इत्येवं रीत्याऽर्थसम्बन्धस्य सद्भावाद् द्रष्टृदृश्यभावः सूपपन्न इति वाच्यम्, चितेः कूटस्थतया तस्या अर्थाकारपरिणामा-सम्भवात्। वस्तुतस्तु निष्क्रियत्वाच्चितेः अन्तःकरणसङ्क्रान्तिरेव नास्ति। दृश्य-स्यापि अचेतनत्वेन निष्क्रियत्वात् सङ्क्रान्तिर्नास्ति। तथा च सर्वथैव सङ्क्रान्ति-माध्यमेन द्रष्टृदृश्यसम्बन्धोऽनुपपन्नः, सम्बन्धानुपपत्तेश्च द्रष्टृसम्बन्धादर्थस्य दृश्यत्वमिति रिक्तं वचः। अतो द्रष्टृदृश्यभावानुपपत्तेर्न नानात्वमिति भावः।

यद्युच्येत– दृश्यभूतो बाह्यपदार्थो नैवास्ति, बुद्धिरेव तु अर्थाकारेण परिणता सती अर्थाकारेण दृश्या कथ्यते। तस्याश्च बुद्धेश्चितिसन्निधानात् चितिच्छाया-

**योऽपि मन्यते — दृश्यतयैव दृश्यं व्यवस्थाप्यते, न सम्बन्धेन। दर्शनं च "इदम्" इति पराग्रूपविषयम्।**

**स वक्तव्यः — सत्यं पराग्रूपविषयम्, तत्त्वेकस्यैवात्मनस्तथा तथा विपरिणामाद् विवर्तनाद् वा दर्पणतल इवात्मनः। तथा हि दर्पणतलस्थमात्मानं विभक्तमिवात्मनः प्रत्येति। चितेस्तु विभक्तमसंसृष्टं तथा**

---

पत्त्या अर्थाकारेण विवर्तनाद् दृश्यत इति व्यवहारो भवति। अस्मिन् पक्षे चितेः सङ्क्रान्तेरस्वीकारेण चितेर्नाशुद्धत्वापत्तिः, नापि परिणामित्वापत्तिरिति द्रष्टृदृश्यभावः साधूपपद्यत इति।

तदपि न सङ्गतम्, का नाम बुद्धेः चितिच्छायापत्तिरिति वक्तव्यत्वात्। अतदात्मनस्तदवभासस्तच्छायेति चेत्, तर्हि मिथ्याभूतः स चितिच्छायारूपः सम्बन्ध इति मिथ्याभूतेन चितिसम्बन्धेन परमार्थतो दृश्यासिद्धेः। परमार्थतोऽदृश्यमानं दृश्यं द्रष्टुरतिरिक्तं कथं स्यात्। तथा च सिद्धं द्रष्टुर्ब्रह्मणोऽद्वैतत्वमिति ध्येयम्।

अत्र मीमांसकः प्रत्यवतिष्ठते — दृश्यत्वं ह्युपाधिः, तेनोपाधिनैव इदं दृश्यमिति व्यवस्था क्रियते, न तु द्रष्ट्रा सह सम्बन्धेन दृश्यस्य व्यवस्था भवति। तस्माद् वाच्यवाचकवद् द्रष्टृदृश्यभाव एवानयोः सम्बन्धः, न तु ताभ्यां तटस्थः कश्चिदन्यः सम्बन्धः। "नीलमिदम्" इत्याकारं दर्शनं व्यवह्रियते, तदपि पराग्विषयकम्, अर्थादात्मनो व्यतिरिक्तं नीलं विषयीकरोति। अन्यथा "अहं नीलम्" इत्याकारं दर्शनं स्यात्। अतो द्रष्टृव्यतिरिक्तं दृश्यमित्यायाति।

अत्रेत्थं समाधत्ते सिद्धान्ती — सत्यम्, "इदं नीलम्" इति दर्शनमात्मव्यतिरिक्तत्वेन नीलमुपस्थापयति, किन्तु न तद् वस्तुत आत्मव्यतिरिक्तम्, प्रत्युत एक एवात्मा भ्रान्त्या तथा तथा नीलादिव्यतिरिक्तरूपेण विपरिणमते वा विवर्तते वा इति मन्तव्यम्। यथा च दर्पणतले प्रतीयमानं प्रतिबिम्बितमात्मानमात्मनो व्यतिरिक्तमिवावगच्छति, तद्वत्।

चेत्यत इति दुरवगमम्। एवं च द्रष्टुरव्यतिरेको दृश्यस्याम्नायते— "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" (बृ. ४/५/६) इति। तस्मात् सुष्टूक्तमेकमिति।

क्षणिकज्ञानात्मवादिनस्तु सवासनक्लेशसमुच्छेदाज्ज्ञानोपरम-लक्षणामेव ब्रह्मप्राप्तिमाहुः। तथा च श्रूयते— "न प्रेत्य संज्ञाऽस्ति" (बृ. २/४/१२) इति।

---

न च दृष्टान्ते प्रतिविम्बस्य बाधो भवति दर्पणापसारणे, अतस्तत्र बिम्बा-दतिरिक्तं प्रतिबिम्बं मा भवतु, अत्र तु दृश्यस्य द्रष्टुरतिरिक्तत्वे न कश्चिद् बाध इति वाच्यम्, अत्रापि दृश्यस्य द्रष्टृव्यतिरिक्तत्वे द्रष्ट्रा सर्वथाऽसंसृष्टं दृश्यं द्रष्टृभूतया चित्या कथं चेत्येत? तथा च सति दृश्यस्यावगम एवासम्भवः स्यात्। अत एव "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" इति श्रुतिः सर्वस्य दृश्यजात-स्यात्मनोऽव्यतिरिक्तत्वं प्रतिपादयतीति। अन्यथा आत्मनि विज्ञाते सर्वविज्ञानश्रुतिव्याकोपः स्यादिति भावः। तस्मात् सुष्ठूक्तं मङ्गलश्लोके— "एकं ब्रह्मेति"।

**शून्यवादिनो माध्यमिका** विज्ञानवादिनो योगाचाराश्चोभयेऽपि क्षणिक-विज्ञानात्मवादिपदेनेहोपक्रान्ताः। तत्र माध्यमिका व्यवहारकाले क्षणिकं विज्ञान-मात्मत्वेन मन्यन्ते, न परमार्थतोऽपि क्षणिकविज्ञानमात्मास्तीति। परमार्थदशायां शून्यात्मन एव तैः स्वीकारात्। अत एव ते सवासनस्याविद्यादिक्लेशपञ्चकस्य समुच्छेदाद् ज्ञानोपरमलक्षणामेव ब्रह्मप्राप्तिं मुक्तिमाहुः। माध्यमिकस्य मते शून्यलक्षणमेव ब्रह्म, अतस्तस्य प्राप्तिरेव ब्रह्मप्राप्तिरस्ति। तथा च शून्यत्व-प्राप्तिरेव तन्मते मुक्तिरस्ति। तदुक्तम्— "प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तापिनः" इति। श्रुतिमप्युदाहरन्ति— "न प्रेत्य संज्ञास्ति" संसारात् प्रेत्य मृत्वा संज्ञा-ज्ञानं नास्तीति श्रुत्यर्थं वर्णयन्ति।

अन्ये तु समुच्छिन्नसकलवासनत्वाद् विधूतविषयाकारोपप्लव-विशुद्धज्ञानोत्पादलक्षणाम्। अनादिनिधनत्वे हि नापनेयं नोपनेयं वा किञ्चिदस्तीति तदर्थानि शास्त्राणि तदर्थाश्च प्रवृत्तयो व्यर्थाः स्युः।

तथा हि– विद्यास्वभावं चेत्, न किञ्चिन् निवर्त्यमवाप्तव्यं वा स्यात्, अविद्याया अभावाद् विद्यायाश्च भावात्। अविद्यास्वभावं चेत्, तस्य नित्यत्वे पूर्वस्वभावात्यागात् स्वभावान्तरानापत्तेश्च। एवमुभयस्व-भावत्वेऽपि विद्यायाः प्राप्तत्वादविद्यायाश्चोच्छेत्तुमशक्यत्वात्।

---

**अन्ये बौद्धा** योगाचारास्तु व्यवहार इव परमार्थतोऽपि क्षणिकविज्ञान-धाराऽवतिष्ठत इति मन्यन्ते। तन्मतानुसारेण विषया हि ज्ञानस्यैवाकारविशेषा न स्वातन्त्र्येण वस्तुसन्तः, अतस्त एव निराकारविशुद्धज्ञानोत्पादे ब्रह्मप्राप्तिभूते उपप्लवाः– उपद्रवाः सन्ति। ते च विषयोपप्लवाः सकलवासनासमुच्छेदानन्तरं विधूता भवन्ति अपास्ता भवन्तीति यावत्। तथा चायं क्रमः– अभ्यासादविद्यादि-क्लेशनिवृत्तौ सत्यां सकलवासनोच्छेदः, ततो विशुद्धज्ञानोत्पादे ये उपद्रवा ज्ञानस्य विषयाकारतारूपास्ते नश्यन्ति। तदानीं विषयाकारताया निरासाद् निराकारा चित्सन्ततिरनुवर्तते। सैव विशुद्धज्ञानोत्पादरूपा मुक्तिरस्तीति।

एवं चोभयेऽपि बौद्धा माध्यमिका योगाचाराश्च नित्यात्मवादं विरुन्धन्ति। नित्यात्मवादे तेषामयमाक्षेपो यद् यदि नित्य आत्मा स्यात्, तदा तस्यानादि-सिद्धत्वाद् न किञ्चित् प्राप्तव्यमवशिष्यते। एवं निधनरहितत्वेन न किञ्चिद् हातव्यमप्यस्तीति किञ्चित्प्राप्तिपरिहारप्रतिपादकानि विधिनिषेधशास्त्राणि व्यर्थानि स्युः, तथा किञ्चित्प्राप्तिपरिहारावुद्दिश्य मानवानां प्रवृत्तयोऽपि व्यर्थाः स्युरिति। तस्मान्न नित्यात्मवादोऽभ्युपगमार्हः।

एतमेव पूर्वपक्षमुपपादयति मूले– **"तथा ही"**त्यादिना।

अयमाशयः– तस्य नित्यात्मनः किं स्वरूपम्? यदि विद्या तस्य स्वभावस्तदा विद्यायाः सदा भावेन न किञ्चिदवाप्तव्यं स्यात्। एवं विद्यानिवर्त्याया अविद्यायाः

**तान् प्रत्याह— अमृतमजमिति। न च शास्त्राणां मुक्त्यर्थानां च प्रवृत्तीनां वैयर्थ्यम्, अविद्याया निवर्त्यत्वात्। सर्वप्रवादेषु चानादिरप्यविद्योच्छेद्याऽभ्युपगम्यते।**

**न ब्रूमोऽनादेर्नोच्छेद इति, किन्तु नित्यस्य ब्रह्मणः स्वभावस्य। अथाऽविद्या न ब्रह्मणः स्वभावः, अर्थान्तरं ब्रह्मण आपद्येत, न वा स्यात्, तत्र किं निवर्त्यम् ?**

---

स्वत एवाभावेन न किञ्चिन्निवर्तनीयमपि स्यादिति निवर्त्यावाप्तव्ययोरभावाद् नित्यात्मपक्षे मानवानां प्रवृत्तयो व्यर्था एव स्युः।

एवं तस्य नित्यात्मनो यदि अविद्या स्वभावस्तदा तस्य स्वभावस्य नित्यत्वेन अविद्यारूपस्य पूर्वस्वभावस्य त्यागोऽसम्भवः स्यात्। तथा अविद्यास्वभावे नित्ये जागरूके स्वभावान्तरस्य विद्याया उदयानुपपत्तिः स्यात्।

एवं विद्याऽविद्योभयस्वभावत्वस्वीकारपक्षेऽपि किञ्चिन्निवर्त्यावाप्तव्ययोरभावप्रसङ्गरूपो दोषस्तदवस्थ एव स्यात्, विद्यायाः प्राप्तत्वेन प्राप्तव्याभावात्, तथाऽविद्यास्वभावस्यापि सदातनत्वेन निवर्तयितुमशक्यत्वाद् इति भावः।

**अत्र सिद्धान्ती समाधत्ते**— तद् ब्रह्म अमृतमविनाशि, अजमुत्पत्तिरहितञ्चास्तीति। यदुक्तमनादिनिधनत्वे स्वीकृतेऽवाप्तव्यस्य परिहर्तव्यस्य चाभावेन शास्त्राणां मुक्त्यर्थप्रवृत्तीनां च वैयर्थ्यं स्यादिति, तन्न युक्तम्, अविद्याया निवर्त्यत्वस्वीकारात्। न चानादित्वादविद्याऽपि ब्रह्मवदेवानुच्छेद्येति वाच्यम्, सर्ववादिभिरेवाविद्याया अनादित्वेऽपि उच्छेद्यत्वाङ्गीकारात्। अनादिरपि प्रागभावो विनश्यतीति सर्वैः प्रत्यक्षमीक्ष्यते।

पूर्वपक्षी शङ्कते — अनादेरुच्छेदो न भवतीति वयं न ब्रूमः, अतोऽनादिरपि प्रागभाव उच्छिद्यतां नाम। किन्तु नित्यब्रह्मणः स्वभावभूताऽविद्या कथमुच्छिद्येत ? तथात्वे ब्रह्मणोऽप्युच्छेद्यत्वापत्तेः। अत्र यदि सिद्धान्ती ब्रूयात् — यदविद्या न ब्रह्मणः

**अथ मतम्— अग्रहणमविद्या, सा कथमर्थान्तरं स्यात्? न चानिवर्त्या, सर्वप्रमाणव्यापाराणामग्रहणनिवृत्त्यर्थत्वात्।**

**तदप्ययुक्तम्, तत्त्वाग्रहणात्मिका ह्यविद्या तत्त्वग्रहणात्मिकया विद्यया निवर्त्यते, सा च नित्या ब्रह्मणि। न च ब्रह्मणोऽन्योऽस्ति, यस्य तत्त्वाग्रहणं ब्रह्मणि प्रयत्नलभ्यया विद्यया निवर्त्येत। ब्रह्मणि तु**

---

स्वभाव इति, तदा अविद्या ब्रह्मणोऽर्थान्तरं स्यात्, द्वैतापत्तिश्च स्यात्। न च वाच्यं सिद्धान्तिना अविद्या न ब्रह्मणः स्वभावो नाप्यर्थान्तरमिति, तथा सति साऽविद्या स्वरूपतः स्यादेव न, एवं सति किं निवर्त्यं स्यात्? शास्त्राणि मुमुक्षुप्रवृत्तयश्च निवर्त्याभावे व्यर्थाः स्युरिति पूर्वोक्तो दोषः पुनरापतति।

अत्र सिद्धान्ती समाधत्ते— **अथेति**। अयमर्थः— अविद्याऽग्रहण-रूपाऽर्थादभावात्मिका। अतोऽवस्तुभूता सा कथमर्थान्तरं स्यात्? तथा च न द्वैत—प्रसक्तिरिति। अवस्तुभूताऽपि च सा निवर्त्याऽस्ति, नानिवर्त्या, सर्वेषां प्रमाण-व्यापाराणां प्रमेयाग्रहणनिवृत्तप्रयोजनकत्वात्। यदि प्रमाणव्यापारोऽग्रहणं न निवर्तयेत्, तदा प्रमाणे जागरूकेऽपि प्रमेयस्याज्ञानं यथापूर्वमनुवर्तेत। नानुवर्ततेऽज्ञानम्, तस्मादज्ञाननिवृत्तिरेव प्रमाणप्रयोजनमिति स्वीकार्यम्। अर्थात् प्रमेयविषयकं यदग्रहणमविद्या, तन्निवृत्तिरेव प्रमाणव्यापाराणां प्रयोजनम्। अतो न प्रमाणव्यापाराणां व्यर्थत्वप्रसङ्ग इति भावः।

सिद्धान्तिकृतमवान्तरसमाधानं पूर्वपक्षी प्रतिक्षिपति— **तदप्ययुक्तमिति**। तदेवोपपादयति— तत्त्वाग्रहणेत्यादिना। अयमाशयः— तत्त्वाग्रहणात्मिका अभाव-भूताऽविद्या तत्त्वग्रहणात्मिकया भावभूतया विद्यया निवर्त्येत, सा च विद्या ब्रह्मणि नित्या। तथा च नित्यसिद्धया ब्रह्मगतविद्ययाऽविद्यापि नित्यनिवृत्तैव स्यात्। एवञ्चाविद्यानिवृत्तिः शास्त्रादीनां प्रयोजनमिति रिक्तं वचनम्।

**युगपद्ग्रहणाग्रहणे विप्रतिषिद्धे। अविप्रतिषेधे वा न कदाचिदविद्या निवर्त्येत।**

**यस्य तु विपर्ययग्रहणमविद्या, तस्य ब्रह्मणः स्वभावश्चेत् स नित्यः कथं निवर्त्येत ? अस्वभावश्चेद् अर्थान्तरमापद्येत। कस्य तदिति वाच्यम्, ब्रह्मणोऽन्यस्याभावात्। ब्रह्मण एवेति चेत्, विप्रतिषेधः, तस्य विद्यास्वरूपत्वात्। अविप्रतिषेधे वा केन निवृत्तिः ?**

---

ननु ब्रह्मणि नित्यसिद्धविद्यया ब्रह्मगताऽविद्या कामं नित्यनिवृत्ता स्यात्, परन्तु जीवगता या ब्रह्मविषयिणी अविद्या सा न नित्यनिवृत्ताऽस्ति। अतो जीवगता तत्त्वाग्रहणरूपाऽविद्यैव शास्त्रोक्तश्रवणादिप्रयत्नलभ्यया ब्रह्मविषयकविद्यया निवर्त्येत इति न शास्त्रादिवैयर्थ्यप्रसङ्गदोषावकाश इति चेद् आह– **न चेति**। अयमर्थः– नोक्तं समाधानं युज्यते। ब्रह्मव्यतिरिक्तस्य जीवस्याभ्युपगमे द्वैतप्रसङ्गदोषाद् ब्रह्मणोऽन्यस्य जीवस्यास्तित्वाभावात्।

ननु मा भूद् ब्रह्मणोऽन्यो जीवो नाम, तथापि ब्रह्मण्येव सत्यविद्या ब्रह्मगतयैव विद्यया निवर्त्येत, तथा च नोक्तद्वैतप्रसङ्गदोष इति चेत्, न, ब्रह्मणि विद्याऽविद्ययोर्ग्रहणाग्रहणरूपयोर्युगपत् स्वीकारे परस्परविरोधापत्तेः। यदि तु विद्याविद्ययोर्युगपत् सत्त्वे नास्ति विरोधश्चेत् तथा सति कदाचिदपि अविद्या न निवर्तेत, विद्यया सहैव अविद्याया अपि सदा सत्त्वे विरोधाभावात्।

तत्त्वाग्रहणात्मिकाऽविद्या पूर्वपक्षिणाऽऽक्षिप्ता, यस्तु विपर्ययग्रहणात्मिकाम-विद्यां मन्यते, तन्मतमपि पूर्वपक्षीदानीं निराकरोति– **"यस्य तु"** इत्यादिना। अयमभिप्रायः– विपरीतग्रहणरूपाऽप्यविद्या किं ब्रह्मणः स्वभावः? अथवाऽस्वभावः? स्वभावश्चेत्, नित्यब्रह्मस्वभावभूताऽविद्याऽपि नित्यैव स्यात्। तथा च नित्यः सोऽविद्यास्वभावः कथं विद्यया निवर्त्येत? एतद्दोषपरिहाराय "अविद्या न ब्रह्मणः स्वभावः" इति यदि उच्यते, तदाऽविद्या ब्रह्मणो भिन्नाऽर्थान्तरं स्यात्। एवं सति द्वैतवादः प्रसज्येत, अद्वैतवादश्च विलीयते। एवं, तद् विपर्ययग्रहणं (अविद्या) कस्यास्ति? ब्रह्मातिरिक्तस्याद्वैतवादिभिरस्वीकारात्, निराश्रयस्य च विपर्ययग्रहणस्यासम्भवात्।

**अत्रोच्यते— नाविद्या ब्रह्मणः स्वभावः, नार्थान्तरम्, नात्यन्तमसती, नापि सती। एवमेवेयमविद्या माया मिथ्यावभास इत्युच्यते। स्वभावश्चेत् कस्यचित्, अन्योऽनन्यो वा परमार्थ एवेति नाविद्या। अत्यन्तासत्त्वे खपुष्पसदृशी न व्यवहाराङ्गम्, तस्मादनिर्वचनीया।**

---

यद्युच्येत— अविद्यारूपस्य विपर्ययग्रहणस्य ब्रह्मैवाश्रय इति, तदपि नोपपद्यते, स्वोक्त्यैव विरोधात्। भवन्मते ब्रह्मणो विद्यास्वरूपत्वेन कथं विद्यास्वरूपे ब्रह्मणि अविद्यारूपं विपर्ययग्रहणं सहावतिष्ठेत? विद्याविद्ययोः सहावस्थाने विरोधात्।

यद्युच्येत— विद्याऽविद्या च सहैवावस्थास्येते, नास्ति तयोर्विरोध इति, तदाऽविद्याया न कदापि निवृत्तिः स्यात्, निवृत्तिकारणाभावात्, विद्यायाश्चाविरोधित्वेन तन्निवर्तकत्वासम्भवादिति।

अत्रेदं सिद्धान्तिनः समाधानम्— अविद्या हि न ब्रह्मणः स्वभावः, नापि ब्रह्मणोऽतिरिक्तं वस्तु, नात्यन्तमसद्रूपा शशशृङ्गवत्, नापि सद्रूपा ब्रह्मवत्। नन्वविद्या यदि न ब्रह्मणो भिन्ना, नाप्यभिन्ना, न सती, नाप्यसती, तदा कीदृशी सेति चेत्—ईदृश्येवानवस्थितरूपाऽविद्या, सा च माया इति मिथ्यावभास इति चैवमादिभिः शब्दैर्लोके व्यवह्रियते। अत्राविद्या यदि ब्रह्मस्वभावः स्यात्, तदा स स्वभावो ब्रह्मणो भिन्नो भवेदभिन्नो वा भवेत्, सर्वथैव ब्रह्मवत् परमार्थ एव स्यात्। तथा च तस्या अविद्यात्वं हीयेत। तस्मादविद्याया अविद्यात्वान्यथानुपपत्तिरेव तस्याः परमार्थत्वाभावे प्रमाणम्।

नन्वेवं यद्यविद्या न सती, तदाऽत्यन्तासती भवेदाकाशपुष्पवदिति चेत्, न, अत्यन्तासद्रूपत्वे तस्या लोके व्यवहारो न भवेत्। व्यवह्रियते च साऽविद्या माया मिथ्यावभास इत्यादिभिः शब्दैरिति नात्यन्तमसती सा। तस्मात् सदसद्भ्याम् अनिर्वचनीया साऽविद्येति मन्यते।

**सर्वप्रवादिभिश्चेत्थमियमास्थेया। तथा हि— शून्यवादिना सत्त्वे यथादर्शनम्, नाविद्या। खपुष्पतुल्यत्वे न व्यवहाराङ्गम्। विज्ञानमात्रवादिनोऽपि यथावभासं ज्ञानसद्भावे नार्थापह्नवः, नीलपीतादेर्ज्ञेयाकारस्य बहिरवभासानपह्नवात्। अत्यन्तासत्त्वे बहिरवभासायोगात्, खपुष्पवत्।**

**बाह्यार्थवादिनामप्यनित्यादिषु नित्यादिख्यातयो रजतादिविभ्रान्त-**

---

**इयमविद्या** न केवलमस्माभिरेवानिर्वचनीयाऽभ्युपगम्यते, प्रत्युत सर्वैरेव प्रवादिभिः स्वीकार्याऽस्ति। यतो हि सर्वशून्यत्ववादिनां माध्यमिकानां दृष्टौ जगदिदं यादृशं दृश्यते, तादृशमेव यदि सदस्ति, तदा परमार्थसत्त्वाद् अविद्यायाः क्वावसरः? अर्थात् सत्त्वाविद्ययोर्विरोधात् सत्त्वे जागरूके नास्ति काचिदविद्या नामेति तात्पर्यम्। यदि चाविद्यात्मकं जगद् आकाशकुसुमवत् तुच्छं तदा अविद्यात्मकं जगद् अविद्या च लोके व्यवहारविषयो न भवेत्, तुच्छस्य व्यवहारानङ्गत्वात्। तस्मान्माध्यमिकैरपि अविद्या सदसद्भ्यामनिर्वचनीयेति अङ्गीकरणीयम्।

विज्ञानवादिनां योगाचाराणामपि दृष्टौ यदि प्रतीतिमनुरुध्य ज्ञानस्य सत्ता स्वीक्रियते, तदा अर्थस्यापि प्रतीतिर्भवत्येवेति ज्ञानवदर्थस्यापि लोपो न शक्यते कर्तुम्। न हि ज्ञेयाकारस्य नीलपीतादेः बहिः प्रतीतिर्न भवति। तस्माद् नीलपीतादिप्रतीतेरनपह्नवे नीलपीताद्यर्थस्यापि सुतरामनपह्नव इति मन्तव्यम्। यदि तु नीलपीतादिरर्थः अत्यन्तासन् भवेत् तदाऽऽकाशपुष्पवद् नीलपीताद्यर्थस्य बहिरवभासो न स्यात्। तस्माद् योगाचारैरपि अविद्यात्मकजगतो अविद्यायाश्चानिर्वचनीयत्वमेवाङ्गीकरणीयम्।

ये च बाह्यार्थवादिनः सन्ति— यथाऽऽस्तिकेषु पतञ्जलिप्रभृतयो बौद्धेषु सौत्रान्तिकप्रभृतयश्च, तैरपि अविद्याया अनिर्वचनीयत्वमेवोररीकरणीयमित्याह— **बाह्यार्थवादिनामपीति**। तत्राह पतञ्जलिः — "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इति (पा. सू.)। एतदनुसारेण अनित्यादिषु नित्यादिख्यातयः शुक्त्यादिषु च रजतादिविभ्रान्तयश्चाविद्यात्वेनाङ्गीकृताः। किन्त्वे-

यश्चावभासमानरूपसद्भावे नाविद्यात्वमश्नुवीरन्। नात्यन्तासत्त्वे तन्निबन्धनः कश्चन व्यवहारः स्यात्।

स्यादेतत्, अवभासमानं रूपं मा भूत्, अवभासस्तु सन्नेव, स चाविद्येति गीयते।

नैतत् सारम् — अवभासमानेऽसति तदवभासोऽपि सत्यतो दुर्निरूपः। अवभासमात्रं तु स्यात्, तदवभास इत्यपि भ्रान्तिरेव। तस्मान्नाविद्या सती, नाप्यसतीति।

---

तासु ख्यातिषु अवभासमानं यत् स्वरूपं नित्यत्वादिकं रजतादिकञ्च, तस्य स्वरूपस्य यदि सत्त्वं स्यात्, तदा ताः ख्यातयो विभ्रान्तयश्चाविद्यात्वं जहीरन् अविद्या एव न स्युरिति यावत्। अतो नित्यत्वादीनां रजतादीनां च स्वरूपाणां सत्त्वं न स्वीकर्तुं शक्यते। यदि तु नित्यत्वादिकं रजतादिकं च स्वरूपम् अत्यन्तासद् भवेत्, तदा तन्निवन्धनः कश्चन प्रतीत्यादिव्यवहार एव न भवेत्, रजतादिकं प्रतीयेतैव न, खपुष्पवदिति। तस्मात् तैर्बाह्यार्थवादिभिरपि अविद्या सदसद्विलक्षणाऽनिर्वचनीयैव स्वीकरणीयेति भावः।

अत्रेदं पुनराशङ्क्यते — शुक्तिरजतादिविभ्रमेषु रजतादिकमसद् भवतु नाम, रजतादेरवभासस्तु सन्नेवास्ति, सोऽवभास एव चाविद्यापदेनोच्यते, अतः सा सत्येवास्तीति नानिर्वचनीयाऽविद्येति।

अत्रेदं समाधानम् — यद्यवभासमानं रजतादिकमसदस्ति, तदाऽसद्रजताद्युपरक्तोऽवभासः स्वयं सत्य इति निरूपयितुमशक्यम्। न हि वन्ध्यासुतेऽसति तदुपरक्तागमनादिक्रिया "वन्ध्यासुतो यातीति" सत्या भवति, तद्वत्। अर्थोपरागरहितमनुभवमात्रं तु केवलं वयमपि सदेव मन्यामहे। स सद्भूतोऽर्थोपरागरहितः केवलोऽनुभवो भ्रान्तेन रजताद्युपरागकारणादेव अविद्येत्युच्यते, न तु स्वतस्तस्याऽविद्यात्वमस्ति। अतस्तदवभास इत्यपि भ्रान्तिरेव, विशेषणीभूतस्य रजतादितत्पदार्थस्यैवासत्त्वात्। तस्मादसदर्थोपरागलब्धसंज्ञामात्राऽविद्या स्वरूपतो न सती। व्यवहाराङ्गत्वाच्च नासतीति अनिर्वचनीयैवाङ्गीकार्येति भावः।

**अत एव चास्या निवृत्तिरदृढस्वभावायाः, मायामात्रत्वात्। अन्यथास्वभावे दृढं व्यवस्थितायाः कथमन्यथात्वम्? स्वभावाहानात्, शून्यत्वे स्वयं निवृत्तत्वात्। एवं च नाद्वैतहानम्, न निवर्तनीयस्याभावो वा।**

**यत्तु कस्याविद्येति, जीवानामिति ब्रूमः। ननु न जीवा ब्रह्मणो भिद्यन्ते, एवं ह्याह—"अनेन जीवेनात्मनाऽनुप्रविश्य" (छा. ६/३/२) इति।**

---

**यतोऽविद्या** न सती, अत एव साऽदृढस्वभावा मायामात्रम्। यत् सद् भवति, तदेव दृढस्वभावं भवति। एवं, यतोऽदृढस्वभावाऽविद्या, अत एव तस्या निवृत्तिर्भवति। दृढस्वभावस्यैवानिवर्त्यत्वाभ्युपगमात्।

तथा चाविद्याया अन्यथाभावेऽर्थात् सत्त्वेन दृढस्वभावत्वे दृढं व्यवस्थितायास्तस्याः कथमन्यथात्वम्? अर्थात् कथं निवृत्तिः स्यात्? दृढस्वभावा सा सदा सत्येव स्यान्न कदाचिदपि निवर्तेत, स्वभावाहानात्। अर्थाद् अविद्यायाः सत्स्वभावत्वेऽबाधात् सा स्वं सत्स्वभावं न जह्यात्, न कदाचिदपि निवर्तेतेति यावत्।

यदि तु अविद्या शून्यत्वेनासती स्यात् तदा स्वत एव तस्याः सदा निवृत्तत्वात्, तन्निवृत्तये बाधकज्ञानं निरर्थकं स्यात्। तस्मादविद्याऽसत्यपि नास्ति। एवञ्चाविद्यायाः सदसद्भ्यामनिर्वचनीयत्वेन नाद्वैतहानिः, न वाऽनिवर्त्यत्वं, तस्या मायामात्रत्वेनावश्यं निवर्तनीयत्वाद् इति भावः।

यत्तु प्रश्नः कृतः – कस्य साऽविद्या, यस्या निवृत्तिः शास्त्राणां मुमुक्षुप्रवृत्तीनां च प्रयोजनमिति। तत्र प्रश्ने "जीवानां साऽविद्येति" उत्तरं ब्रूमः।

अत्रेयं पुनराशङ्का– ननु जीवा ब्रह्मणो भिन्ना न सन्ति वेदान्तसिद्धान्ते यदीयाविद्यानिवृत्तौ शास्त्राणां प्रवृत्तीनां च सार्थक्यं भवेत्। तथा चाह श्रुतिः– "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति।

**सत्यं परमार्थतः, कल्पनया तु भिद्यन्ते। कस्य पुनः कल्पना भेदिका? न तावद् ब्रह्मणः, तस्य विद्यात्मनः कल्पनाशून्यत्वात्। नापि जीवानाम्, कल्पनायाः प्राक् तदभावात्, इतरेतराश्रयप्रसङ्गात्, कल्पनाधीनो हि जीवविभागो जीवाश्रया कल्पनेति।**

**अत्र केचिदाहुः – वस्तुसिद्धावेव दोषः, नासिद्धं वस्तु वस्त्वन्तर-निष्पत्तयेऽलम्, न मायामात्रे। न हि मायायां काचिदनुपपत्तिः, अनुपपद्य-मानार्थैव हि माया, उपपद्यमानार्थत्वे यथार्थभावान्न माया स्यात्।**

---

अत्रेदं समाधानम् – सत्यं जीवा न ब्रह्मणः परमार्थतो भिद्यन्ते, काल्प-निकस्तु भेदो जीवब्रह्मणोः स्वीक्रियते। एवं च भेदमात्रमत्र काल्पनिकं न तु जीववस्त्वेवेति रहस्यम्। अत एव "तत्त्वमसि" इति भेद एव बाध्यते, न तु जीववस्त्विति बोध्यम्।

अत्र पूर्वपक्षयितुराशङ्का – ननु सा कल्पना कस्य धर्मोऽस्ति, यया जीवा ब्रह्मणो भिद्यन्त इति? न तावत् कल्पना ब्रह्मणो धर्मः, विद्यास्वरूपत्वेन ब्रह्मणः कल्पनाशून्यत्वात्। नापि जीवानां धर्मः सा कल्पना, जीवानान्तु कल्पनाप्रसूतत्वेन कल्पनायाः प्राग् जीवानामेवाभावात्। तथा च इतरेतराश्रयदोषप्रसङ्गः, कल्पनाधीनो हि जीवविभागः, जीवाश्रिता च कल्पनेति। तस्मादाश्रयाभावेना-विद्यास्वरूपालाभात् तन्निवृत्तौ शास्त्राणां मुमुक्षुप्रवृत्तीनां च सार्थक्यमिति रिक्तं वचः। अतो मङ्गलश्लोकोक्ते प्रजापतेर्ब्रह्मणोऽमृतत्वाजत्वविशेषणे शास्त्राणां प्रवृत्तीनां च वैयर्थ्यमेवापादयेतामिति शङ्कितुराशयः।

अस्या आशङ्कायाः सिद्धान्त्येकदेशिनः केचिदेवं समाधानमुपस्थापयन्ति, अयमाशयः– यदि अविद्या नाम वस्तुसिद्धा भवेत्, तदा उक्त इतरेतराश्रयदोष आपद्येत – "जीवाश्रिताऽविद्या, अविद्याप्रसूता च जीवकल्पना" इति रीत्या। अविद्या तु स्वयमेवासिद्धाऽस्ति, अतो नाविद्याजीवरूपवस्त्वन्तरनिष्पत्तौ समर्था भवितुं शक्नुयात्। तस्मान् मायामात्ररूपायामविद्यायां स्वीक्रियमाणायां नोक्तेतरे-

**अन्ये तु अनादित्वादुभयोरविद्याजीवयोर्बीजाङ्कुरसन्तानयोरिव नेतरेतराश्रयत्वमप्रक्लृप्तिमावहतीति वर्णयन्ति। तथा चोक्तमविद्योपादानभेदवादिभिः– "अनादिरप्रयोजना चाविद्या" इति। तत्रानादित्वान्नेतरेतराश्रयत्वदोषः, अप्रयोजनत्वान्न भेदप्रपञ्चसर्गप्रयोजनपर्यनुयोगावकाशः।**

**यदेके पर्यनुयुञ्जते– "प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते" (श्लो. वा., पृ. ६५३) इति, तत्र परस्य ब्रह्मणः प्रपञ्चसर्गप्रयोजनं**

---

तराश्रयदोषप्रसङ्गः। मायामात्रमविद्या कामं जीवाश्रिता भवेत्, जीवस्तु नाविद्याधीनः, मायामात्रत्वात्तस्या इति नात्र कश्चिद् दोषः।

ननु अविद्या यदि मायामात्रं न वस्तुसिद्धा, तदा कथं तत्प्रयुक्ता व्यवहारा उपपद्येरन्? इति चेत्, व्यवहारा अपि मायिकत्वादनुपपन्ना एव स्युः, न काचित् क्षतिस्तावताऽस्माकम्। अनुपपद्यमानार्थता तु मायाया भूषणमेवास्ति, न दूषणम्। यदि तु मायाविषय उपपन्नः स्यात्, तदा यथार्थविषयत्वाद् मायैव सा न स्यात्, मायायाः स्वरूपमेव हीयेतेति यावत्। अतो अविद्याया मायामात्रत्वपक्षे न काचिदनुपपत्तिरिति एकदेशिनां समाधानाशयो बोध्यः।

**अन्ये त्वेकदेशिनः** सिद्धान्तिन एवमितरेतराश्रयदोषं परिहरन्ति– यदविद्या जीवश्चेत्युभावपि अनादी, तस्मादनादित्वाद् यथा बीजाङ्कुरसन्तानयोर्न परस्पराश्रयत्वं कस्मैचिद् दोषाय कल्पते, तथैवाविद्याजीवयोरप्यन्योन्याश्रयत्वं न दोषाय कल्पिष्यत इति। तथा चोक्तम्–भेदप्रपञ्चं प्रति अविद्यामेवोपादानं मन्वानैः "अनादिरप्रयोजना चाविद्या" इति। अयमर्थः– अविद्याऽनादिरस्ति प्रयोजनशून्या च वर्तते। तत्रानादित्वादितरेतराश्रयत्वं न दोषः। प्रयोजनशून्यत्वाच्च भेदात्मकप्रपञ्चसृष्टेः किं प्रयोजनमिति प्रश्नस्यावसर एव नास्तीति निष्प्रयोजनत्वदोषोऽपि नास्तीति भावः।

अविद्याकृतसृष्टेः प्रयोजनशून्यत्वस्वीकारे तदुपरि पुनः केचिदनुपपत्तिमुद्भावयन्ति यत् प्रयोजनमनभिप्रेत्य कश्चिन् मन्दोऽपि यदि क्वचित् साधारणेऽपि

वाच्यम्। न तावत् परानुग्रहः, प्राक् सर्गादनुग्राह्याणामभावात्, दुःखोत्तरत्वाच्च सर्गस्य। नात्मक्रीडादि, आप्तकामत्वादिति तस्य अविद्यानिबन्धने सर्गे नावकाशः। न ह्यविद्या प्रयोजनमपेक्ष्य प्रवर्तते। न हि गन्धर्वनगरादिविभ्रमाः समुद्दिष्टप्रयोजना भवन्ति।

तथा "पुरुषस्य विशुद्धस्य नाशुद्धा विकृतिर्भवेत्" (श्लोकवा., पृ. ६६२) इत्यपि प्रत्युक्तमविद्यानिबन्धने सर्गविभागे।

---

कर्मणि न प्रवर्तते, तदा प्रयोजनं विनाऽविद्याया महति सृष्टिकर्मणि कथं प्रवृत्तिः स्यादिति? इमामनुपपत्तिं प्रतिप्रश्नेन परिहरति– **तत्र परस्य ब्रह्मण इति**। अर्थात् तर्हि ब्रह्मणोऽपि प्रपञ्चसृष्टौ किं प्रयोजनमस्तीति वाच्यम्। यद्युच्येत परानुग्रह एव ब्रह्मकृतसृष्टिपक्षे प्रयोजनमस्तीति चेत् सृष्टेः प्राग् अनुग्राह्याणामभावात् काननुगृह्य ब्रह्मापि जगत्सृष्टौ प्रवर्तेत? एवं यदि परानुग्रहः सृष्टेः प्रयोजनं तदाऽनुग्रहात् सुखिन एव ब्रह्म सृजेत्, न दुःखिनः।

प्रयोजनान्तराभावेऽपि आत्मक्रीडैव कुतूहलमेव वा प्रयोजनं स्यादिति चेत्, न, ब्रह्मण आप्तसकलकामत्वेन कृतार्थत्वात् क्रीडादिप्रयोजनस्याप्यसम्भवात्। अतो ब्रह्मनिबन्धनसृष्टिपक्ष इवाविद्यानिबन्धनसृष्टिपक्षेऽपि प्रयोजनप्रश्नस्य नावकाशः। तदुक्तमभियुक्तैः– "यत्रोभयोः समो दोषः परिहारश्च तादृशः। नैकः पर्यनुयोज्योऽस्ति तादृशार्थविचारणे" ।।इति।

तस्मादविद्या किमपि प्रयोजनमपेक्ष्य न भेदवत्प्रपञ्चसृष्टौ प्रवर्तत इति मन्तव्यम्। अत एव गर्न्धवनगर-रज्जुसर्प-शुक्तिकारजतादिविभ्रमाणां सृष्टौ किमपि प्रयोजनं पूर्वतो नाभिप्रेतं भवति। अतः प्रयोजनाभावेऽपि अविद्यातो भेदप्रपञ्चसृष्टौ न काचिदनुपपत्तिरिति।

एवम्, अविद्याप्रयुक्तभेदप्रपञ्चसर्गपक्षे अयमप्याक्षेपो निराकृतो भवति यत् "सर्वथा विशुद्धस्य ब्रह्मणोऽशुद्धिबहुलो जगत्प्रपञ्चो विकारः कथं सम्भवेत्" इति। यतो यथाऽविद्या प्रपञ्चसृष्टौ प्रयोजनं नापेक्षते तथाऽविद्यावशादेव विशुद्धब्रह्मणोऽपि सुखदुःखाद्यशुद्धिबहुलो जगत्सर्गो विवर्तरूपो भवेदित्यत्र न

**अपि च कृतार्थानामाप्तकामानामेव क्रीडादिप्रवृत्तिरुल्लासात्। प्रार्थनापरिक्लिष्टचेतसां तु रतिविरहिणामनभिमतैव क्रीडा भवति।**

**न च वैषम्यनैर्घृण्यदोषः, न हि मायाकारस्य विविधं प्रपञ्चं दर्शयतोऽङ्गसाकल्यवैकल्यविभागेन रागद्वेषविभागः। चित्रपुस्तकादिकृतां वा विकलाविकलादिभेदेन चित्राणि तानि तानि कुर्वताम्, बालानां च मृन्मयादिभिः प्रतिकृतिभेदैर्विचित्रैः क्रीडतां न तेषु किञ्चिद् वैषम्यं नैर्घृण्यं वा।**

---

काचिदनुपपत्तिः, अविद्यायां सर्वसम्भवात्। अत एव विमलेऽपि गगने तलमलिनतादिविभ्रमोऽविद्याकृतो दृश्यते। एवं नात्राद्वैतवादे ब्रह्मजगतोः प्रकृतिविकारोऽभ्युपगम्यते, विवर्तवादस्यैव स्वीकारादित्याशयः।

**एवं, ये ह्याप्तकामाः** कृतार्था भवन्ति, तेषामेव क्रीडादौ प्रवृत्तिर्भवति, उल्लासात्=क्रीडां प्रत्युत्साहादिति यावत्। ये त्वभीष्टवस्त्वभावग्रस्ततया तत्प्राप्तिकामनाभिभूतमनसो भवन्ति, ते तु अकृतार्थतया तद्वस्तूपलब्धावेव यत्नवन्तो भवन्ति, न क्रीडादौ प्रवर्तन्ते, तदानीं क्रीडां प्रति रत्यभावेन तस्या अनभीष्टत्वात्।

एवं, यत्र रागद्वेषप्रयुक्ता सुखिदुःखिसृष्टौ प्रवृत्तिर्भवति, तत्र कस्यचित् सुखिनः सृष्टौ कस्यचिच्च दुःखिनः सृष्टौ वैषम्यदोषो भवेत्, भवेच्च दुःखिनः सर्जने नैर्घृण्यदोषोऽपि। किन्तु यत्र मायाकारवत् चित्रकारवद् बालवच्च रागद्वेषविवर्जिता प्रवृत्तिस्तत्र न वैषम्यनैर्घृण्यदोषावापादयितुं शक्येते।

तथा हि, मायाकारो मायया विविधं प्रपञ्चं दर्शयति जनान्, किन्तु पूर्णाङ्गं कञ्चिद् दर्शयति कञ्चिच्च विकलाङ्गं छिन्नाङ्गं दर्शयति। न स रागद्वेषवशात् तथा दर्शयति। एवं, चित्रकारः किञ्चित् चित्रं विकलं निम्नाङ्गरहितमुपरितनाङ्गमात्रं निर्माति, किञ्चित्तु अधस्तनोपरितनसर्वावयवोपेतम् अविकलं चित्रं निर्माति, किन्तु न तावता स वैषम्यनैर्घृण्यदोषभाग् भवति, तथा चित्राङ्कने तस्य

**कर्माशयानुरोधेन च विदधतो वैचित्र्यं न दोष इत्याचार्याः। न चानीश्वरत्वदोषः। न हि सेवाभेदानुरोधेन फलभेदप्रदः प्रभुरप्रभुर्भवति। तथा शुद्धस्याप्यशुद्धो विकारः। न हि प्रकृतिविकारयोरत्यन्तमवैलक्षण्यम्, प्रकृतिविकारभाव एव न स्यात्। द्रवाणां चापां करकादिः कठिनो विकारः, तथाऽचेतनस्य गोमयस्य चेतनो वृश्चिक इत्यादि बहुविधं प्रकृतिविकार-वैलक्षण्यमुत्प्रेक्षितव्यमित्यलमतिप्रसङ्गेन।**

---

रागद्वेषयोरभावात्। एवं बालका मृण्मयादीन् विचित्रान् प्रतिकृतिभेदान् आकृति-विशेषान् क्रीडार्थं निर्मान्ति क्रीडन्ति च, न तावता तेषु वैषम्यनैर्घृण्यदोषावा-पततस्तथा आप्तकामस्य ब्रह्मणोऽपि क्रीडार्थं जगत् सृजतो नास्ति वैषम्य-नैर्घृण्यदोषावकाश इति।

तत्तत्प्राणिकर्मवासनानुसारेण विचित्रमर्थात् कञ्चित् सुखिनं कञ्चिच्च दुःखिनं सृजन् ईश्वरो न वैषम्यनैर्घृण्यदोषभाग् भवतीति बादरायणप्रभृतय आचार्या मन्यन्ते। अयमाशयः— पर्जन्यस्थानीयो भगवान् कार्यमात्रं प्रति साधारणं कारणमस्ति। तत्र कश्चित् सुखी कश्चिद् दुःखीति भेदस्तु बीजभेदादङ्कुरभेद इव स्वस्वकर्म-भेदाद् भविष्यति, न तावता तस्मिन् भगवति वैषम्यादिदोषप्रसर इति।

प्राणिभेदसृष्टौ तत्तत्कर्माण्यपेक्षमाणस्य भगवत ईश्वरत्वव्याघातः स्यादिति चेत्, न, यथा हि लोके सेवाविशेषमपेक्ष्य फलभेदं प्रयच्छन् प्रभुः अप्रभुर्न भवति, सेवाभेदमपेक्ष्यापि अन्यस्य फलप्रदानेऽसामर्थ्यात्, तथा कर्मभेदमपेक्ष्यापि ईश्वरस्यैव फलप्रदाने सामर्थ्यान्न तस्येश्वरत्वव्याघातः।

एवं ''पुरुषस्य विशुद्धस्य नाशुद्धा विकृतिर्भवेत्'' इत्याक्षेपस्य परिहारः पूर्वं विवर्तवादमनुसृत्य सृष्टेर्मायिकत्वपक्षेण कृतः। परिणामवादिनां दृष्ट्याऽपि स आक्षेपः परिहर्तुं शक्यते। यतो हि प्रकृतिविकारयोरपि अत्यन्तमवैलक्षण्यं नास्ति, अत्यन्तवैलक्षण्ये प्रकृतिविकारभाव एवानुपपन्नः स्यात्। न ह्यत्यन्तविलक्षणयो-र्गोमहिषयोः प्रकृतिविकारभावो भवति। अतो यथा द्रवात्मकानां जलानां कठिनो विकारः करकादिर्भवति, यथा चाचेतनस्य गोमयस्य विकारश्चेतनो वृश्चिको

**ननु जीवा अपि ब्रह्मतत्त्वाव्यतिरेकाद् विशुद्धस्वभावाः, तत् कथं तेष्वविद्याऽवकाशः। वार्तमेतत्, न च तावद् बिम्बादवदातात् प्रतिबिम्बं कृपाणादिषु भिन्नम्, अथ च तत्र श्यामतादिरशुद्धिरवकाशं लभते। विभ्रमः स इति चेत्, समानमेतज्जीवानामप्यशुद्धिर्विभ्रमः। अन्यथा दुरवापैव विशुद्धिः स्यादित्युक्तम्।**

---

भवति। अन्यदपि बहुनिदर्शनं प्रकृतिविकारयोर्वैलक्षण्ये उत्प्रेक्षितुं शक्यते। तथैव विशुद्धस्यापि ब्रह्मणो विकारोऽशुद्धं जगद् भवितुमर्हति इत्यभ्युपगमवादेनापि समाधानं वैषम्यनैर्घृण्यदोषाक्षेपस्य मन्तव्यमिति।

ननु ब्रह्मविषयिण्या अविद्याया आश्रयो जीव इति पूर्वं सिद्धान्तितम्। किन्तु जीवा अपि ब्रह्मस्वरूपान्न व्यतिरिक्ताः "जीवो ब्रह्मैव नापरः" इत्युक्तेः। तथा च यथा ब्रह्म विशुद्धस्वभावं तथा **जीवा अपि** सर्वथा निर्मलविद्यास्वभावा एव, ततः कथं जीवा अविद्याश्रयाः स्युरिति चेत्, न, वार्तमिदं कथनम्। वार्तात आगतं वार्तम्। वार्तामात्रमिदं न प्रमाणावगतम्, असारमिति यावत्। तथा च "ब्रह्माभिन्ना जीवा ब्रह्मवदेव अविद्याश्रया न भवितुमर्हन्ति" इति पूर्वपक्षिशङ्कावचनं न युक्तं प्रतिबिम्बवदुपपत्तेः।

यथा हि निर्मलाद् बिम्बात् कृपाणादिषु भासमानं प्रतिबिम्बं यद्यपि भिन्नं नास्ति, तथापि तत्र प्रतिबिम्बे श्यामत्वादिमालिन्यं प्रतीतिपथमायाति लोकस्य, तथैव जीवाः सर्वथानिर्मलाद् ब्रह्मणो वस्तुतो भिन्ना न सन्ति, तथापि जीवा अविद्याश्रयत्वेन भान्तीति न काचिदनुपपत्तिः।

यद्युच्येत कृपाणादिषु भासमानं श्यामत्वादिकं विभ्रम इति चेत्, समानमेतत् सिद्धान्तिपक्षेऽपि। अर्थाज्जीवेष्वपि अविद्यारूपा अशुद्धिर्भ्रान्तिरेवास्तीति वयं सिद्धान्तिनो मन्यामहे। अशुद्धेर्वास्तविकत्वे तु जीवस्वभावभूताऽविद्या न कदापि निवर्तेत स्वभावाहानात्। तथा च तत्त्वज्ञानसहस्रैरपि जीवेषु विशुद्धिर्दुर्लभैव स्यादित्युक्तप्रायम्।

**स्यादेतत् — कृपाणादयो मुखे विभ्रान्तिहेतवः, तथेहापि विभ्रम-हेतुर्वाच्यः। अनादौ विभ्रमे हेत्वन्वेषणमसाम्प्रतमिव। तथा च "स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किं कृता" (श्लोकवा. ६६३ पृ.) इति प्रत्युक्तम्।**

**ननु स्वाभाविक्यनादिरविद्या निर्हेतुः कथमुच्छिद्येत? सर्वशास्त्राण्येव तावन्नैसर्गिक्या अविद्याया उच्छेदाय प्रस्थितानि। अपि च पार्थिवानामणूनां श्यामताऽनादिः पाकजेन वर्णेन निवर्त्यते।**

---

**अत्र पूर्वपक्षिणः** पुनराक्षिपन्ति—ननु मुखे श्यामतादिविभ्रमस्य हेतवः कृपाणादयो भवन्ति। अत्र ब्रह्माव्यतिरिक्तेषु जीवेषु अविद्याविभ्रमस्य को हेतुरस्तीति वक्तव्यम्। अत्र सिद्धान्ती निराकरोति— आगन्तुकेषु सादिविभ्रमेषु कृपाणादयो विभ्रमहेतवो भवन्तु नाम, अनादौ अनागन्तुके जीवगतत्वेन अविद्याविभ्रमे तु आगन्तुकबाह्यकारणान्वेषणमयुक्तम्, अनादितत्त्वाग्रहणादेव अनादिविभ्रमस्य तादृशस्योपपत्तेः। अत एव यथाऽनादिविभ्रमे हेत्वन्वेषणमयुक्तं तथा अविद्यायाः प्रवृत्तिः किं हेतुका इति हेत्वन्वेषणमप्ययुक्तं मन्तव्यम्, अविद्याविभ्रमवदेव अविद्याप्रवृत्तेरप्यनादित्वात्।

अत्र पूर्वपक्षी शङ्कते— **नन्विति**। यदि अविद्याऽनादिः, स्वाभाविकी, निर्हेतुरस्ति, तदा तस्या उच्छेदः कथं स्यात्? हेतूच्छेदाद् हेतुमत उच्छेदो दृश्यते लोके। तस्मादविद्योच्छेदोऽसम्भव एव स्याद् ब्रह्माद्वैतवादे इति शङ्का-ग्रन्थाशयः।

अत्र सिद्धान्ती समाधत्ते— **सर्वशास्त्रेति**। स्वाभाविक्यपि अनादिरविद्या विद्यया उच्छेत्स्यते, अन्यथा अविद्यानिवृत्तये प्रवृत्तानि शास्त्राणि व्यर्थान्येव भवेयुरिति। एवं, स्वांभाविकस्यापि अनादेरपि उच्छेदो लोके दृश्यते। यथा पार्थिवपरमाणूनां श्यामता स्वाभाविक्यपि अनादिरपि आगन्तुकेन पाकेन रक्तरूपादिना निवृत्तिर्दृश्यते, तद्वदिहापि भविष्यतीति।

ननु स्वाभाविकमपि किञ्चिद् विलक्षणप्रत्ययोपनिपातान्निवर्तताम् ऐकात्म्यवादिनस्त्वनागन्तुकार्थस्य तदभावात् कुतो निवृत्तिः? न खल्वात्मस्वभाव एव विद्या अविद्यानिवर्तिका, अविद्यायास्तया सह वृत्तेरविरोधात्। विरोधे वा नित्यनिवृत्तेर्नित्यमुक्तं जगत् स्यात्।

न च विद्यान्तरमागन्तुकं विरोधि निवर्तकम्, ऐकात्म्यवादे व्यतिरिक्तस्य तस्यायोगात्, आगन्तुकस्य ब्रह्मस्वभावत्वानुपपत्तेश्च। तदुक्तम्—

"स्वाभाविकीमविद्यां तु नोच्छेत्तुं कश्चिदर्हति।
विलक्षणोपपाते हि नश्येत् स्वाभाविकं क्वचित्॥
न त्वैकात्म्याभ्युपायानां हेतुरस्ति विलक्षणः"॥

(श्लो. वा., पृ. ६६३)

---

पूर्वपक्षी पुनराशङ्कते— **नन्विति**। अयमाशयः— पार्थिवपरमाणूनां स्वाभाविकमपि श्यामत्वं विलक्षणप्रत्ययस्य विलक्षणहेतो रक्तगुणस्योपनिपातात् कामं निवर्तताम्, किन्तु अद्वैतवादे आगन्तुकस्य द्वितीयार्थस्य निवर्तकहेतोरभावाद् अविद्यायाः कुतो निवृत्तिः स्यात्? न च आत्मस्वभावभूता विद्यैवाविद्यां निवर्तयिष्यतीति वाच्यम्, अविद्याया विद्यया सहास्तित्वस्वीकारे विद्याविद्ययोर्विरोधाभावात् कथं सा विद्या अविद्यां निवर्तयेत्? यदि तु विद्याविद्ययोः सहवृत्तौ विरोधो भवेत् तदा आत्मस्वभावभूतायां विद्यायां सत्यां नित्यमेवाविद्याया निवृत्तत्वेन जगन्मात्रं नित्यमुक्तं भवेत्, मुक्तौ प्रवर्तकं शास्त्रं च (उपदेशकं) व्यर्थं स्यात्।

ननु श्रवणादिजन्यम् आगन्तुकं विद्यान्तरं (वृत्तिरूपम्) अविद्याया विरोधि सत् तस्या निवर्तकं भविष्यतीति न जगतो नित्यमुक्तत्वापत्तिर्न वा शास्त्रोपदेशवैयर्थ्यापत्तिरिति चेत्, न, अद्वैतवादे ब्रह्मव्यतिरिक्तस्य विद्यान्तरस्याप्यभावात्, भावे वा ऐकात्म्यहानिः प्रसज्येत। नन्वागन्तुकमपि विद्यान्तरं ब्रह्मणः स्वभाव एवेति नैकात्म्यहानिरिति चेत्, न, यथाऽविद्या न ब्रह्मणः स्वभावस्तथा

**अत्रोच्यते— उक्तमेतज्जीवानामविद्याकलुषितत्वम्, न ब्रह्मणः। तद्धि विशुद्धनित्यप्रकाशमनागन्तुकार्थम्, अन्यथा ब्रह्मभूयं गतस्यापि नाविद्या निवर्तेत, तत्रानिर्मोक्षः।**

---

आगन्तुकमनित्यं विद्यान्तरमपि न ब्रह्मणः स्वभावो भवितुमर्हति, अनित्यवस्तुनो नित्यस्वभावत्वानुपपत्तेः।

पूर्वपक्षी परोक्तिमुद्धृत्य स्वपक्षं समर्थयति— **स्वाभाविकीमिति**। अयमर्थः— यदि नामाविद्या स्वाभाविकी अनागन्तुकी नित्या स्यात् तदा सा न केनाप्युच्छेत्तुं शक्या। यदि कश्चिदाचक्षीत— स्वाभाविकमपि पार्थिवपरमाणूनां श्यामत्वं विलक्षणेन पाकजेन रक्तगुणेन नश्यतीति, तदपि न सम्भवति। ऐकात्म्यम् (अद्वैतम्) अभ्युपेतवतां वेदान्तिनां ब्रह्मव्यतिरिक्तस्य अविद्यानिवर्तकस्य कस्यचिद् हेतोरस्वीकारादिति।

सिद्धान्तमाह— **अत्रोच्यत इति**। अयं भावः — जीवा एवाविद्याकलुषिता अविद्याश्रया न ब्रह्मेति पूर्वं बिम्बप्रतिबिम्बदृष्टान्तेन प्रतिपादितम्। यतो हि ब्रह्म नित्यविमलप्रकाशस्वरूपम्, अत एव अनागन्तुकार्थम् अर्थाद् ब्रह्मणो नित्यनिर्मलप्रकाशस्वरूपत्वेन तत्राविद्याया मात्रयाऽपि लेशो नास्ति, यन्निवर्तनाय तत्रागन्तुकः कश्चिद् बाह्योऽर्थोऽपेक्ष्येत। तस्मादनागन्तुकार्थं च ब्रह्मास्ति। अत्र "विशुद्धनित्यप्रकाशम्" इति विशेषणेन ब्रह्मणि स्वाभाविकी अविद्या नैवास्तीति संसूचितम्। "अनागन्तुकार्थम्" इति विशेषणेन च विद्यात्मके ब्रह्मणि अविद्यानिवर्तकतयाऽपि कश्चिदागन्तुकोऽर्थो नास्ति, किमु वक्तव्यम् आगन्तुकी अविद्याऽपि स्वयं नास्तीति। तस्माद् ब्रह्मणि न स्वाभाविकी अविद्या, नापि चागन्तुकी अविद्याऽस्तीति तात्पर्यम्। नित्यविद्यास्वभावेऽपि ब्रह्मणि यदि अविद्याकलुषितत्वं स्यात्, तदा ब्रह्मभावं प्राप्तस्यापि अविद्या न निवर्तेत। अविद्याया अनिवृत्तौ अनिर्मोक्ष एव प्रसज्येत। मोक्षशास्त्रं च व्यर्थं स्यादिति भावः।

**अथ ब्रह्मैव संसरति ब्रह्मैव मुच्यते, एकमुक्तौ सर्वमुक्तिप्रसङ्गः। यतो भेददर्शनेन ब्रह्मैव संसरति, अभेददर्शनेन च मुच्यते— तत्र सर्वविभागप्रत्यस्तमये युगपत् सर्वमोक्षप्रसङ्गः। तस्मादविद्यया जीवाः संसारिणः, विद्यया मुच्यन्ते।**

**तेषां च निसर्गजाविद्याकलुषाणां विलक्षणप्रत्ययविद्योदयेनोप-**

---

पुनः पूर्वपक्षमुत्थाप्य दूषयति— **अथेत्यादिना**। अत्र "अथ"शब्दो यद्यर्थे वर्तते। अयमाशयः— यदि तु ब्रह्मैव संसरति मुच्यते च न जीवा इति मतं स्वीक्रियेत, तदा ब्रह्मण एकत्वात् तस्मिन् मुक्ते सर्वमुक्तिः प्रसज्येत। यतो हि तन्मते भेददृष्ट्या ब्रह्मैव संसारी जायते अभेददृष्ट्या च ब्रह्मैव मुक्तो भवति। तथा च एकस्मिंस्तस्मिन् ब्रह्मणि मुक्ते जाते तदन्यस्य भेदद्रष्टुर्बद्धस्य कस्यचिदभावात् सहसैव सर्वभेदबुद्धिविलोपाद् युगपदेव सर्वेषां मोक्षः प्रसज्येत, न कश्चिदेकोऽपि बद्धोऽवशिष्येत। तस्मादविद्यया जीवाः संसरन्ति, जीवा एव हि विद्यया मुच्यन्त इति सिद्धान्तः समीचीनः। ब्रह्म तु न संसरति न वा मुच्यत इति श्रीमन्मिश्राणामभिप्रायः।

ननु भवतु नाम जीवाश्रिताऽनाद्यविद्या तथापि तन्निवर्तको अविद्या-विलक्षणः कश्चिद् वस्तुभूतो हेतुरस्ति न वा? नास्ति चेत्, कथमविद्यानिवृत्तिः? कथं तेषां च मोक्षः? यदि चास्ति अविद्याया निवर्तको वस्तुभूतो हेतुस्तदा ब्रह्मव्यतिरिक्तस्य तस्य वस्तुभूतस्य हेतोः सद्भावाद् अद्वैतवादहानिः स्यात्, इति शङ्कामभिप्रेत्य तत्समाधानमुच्यते— **तेषां चेति**। अयमाशयः – जीवगता-विद्यानिवर्तकस्य सत्यभूतस्य विलक्षणहेतोरभावेऽपि जीवानां या नैसर्गिकी अविद्याऽस्ति, तादृशाविद्याकल्पितेभ्यः श्रवणादिभ्योऽविद्याविरोधी विद्योदयो भवति, स एव च विद्योदयो विलक्षणहेतुरस्ति अविद्याया निवर्तकः। तेन च विद्योदयेनागन्तुकेन नैसर्गिक्या जीवगतानाद्यविद्याया निवृत्तिरुपपद्यते।

ननु यथा जीवानामविद्या नैसर्गिकी तथा विद्याऽपि नैसर्गिकी एव स्वीकरणीया नागन्तुकीति चेत्, न, विरोधात्। विद्याविद्ययोरुभयोर्नैसर्गिकत्वे

**पद्यतेऽविद्यानिवृत्तिः। न हि जीवेषु निसर्गजा विद्याऽस्ति, अविद्यैव हि नैसर्गिकी। तस्या आगन्तुक्या विद्यया प्रविलयः।**

**अव्यतिरेकेऽपि च ब्रह्मणो जीवानां बिम्बप्रतिबिम्बवद् विद्याऽविद्याव्यवस्था व्याख्याता।**

**केन पुनरुपायेनाविद्या निवर्तते ? श्रवणमननध्यानाभ्यासैर्ब्रह्मचर्यादिभिश्च साधनभेदैः शास्त्रोक्तैः।**

---

सहावस्थानं प्रसज्येत, तच्च विरुद्धम्। तस्माद् जीवेषु न निसर्गजा विद्याऽस्ति, अविद्यैव हि नैसर्गिकी अस्ति। अतो जीवगताया नैसर्गिक्या अविद्यायास्तद्विलक्षणया आगन्तुक्या विद्यया नाशो भवतीति सिद्धान्त एव साधीयान्।

ननु जीवानां ब्रह्माभिन्नत्वात् कथं ब्रह्म विद्यास्वभावम्, जीवाश्च निसर्गजाऽविद्यास्वभावाः स्युरिति चेत्, न, यथा प्रतिबिम्बस्य विम्बः स्वच्छस्वभावो भवति प्रतिबिम्बश्च दर्पणमालिन्यात् मलिनस्वभावः प्रतीयते, तद्वदेव जीवानां ब्रह्माभेदेऽपि ब्रह्म विद्यास्वभावं जीवाश्चाविद्यास्वभावाः स्युरिति न काचिदनुपपत्तिरिति पूर्वं निरूपितम्।

जिज्ञासुभावेन पूर्वपक्षी पृच्छति– **केनेति**। आगन्तुकी विद्या जीवगता नैसर्गिकीमविद्यां निवर्तयतीति पूर्वमुक्तम्, सा च विद्या कथं लभ्यते कया च रीत्याऽविद्यां निवर्तयतीति गूढाभिप्रायः प्रश्नः। तत्रोत्तरम्– श्रवणमननध्यानाभ्यासैरित्यादि। एतैरुपायैरविद्या निवर्तते। तत्र श्रवणं नाम गुरोः सकाशाद् वेदान्तवाक्यार्थस्य बोधः, मननं चोपपत्तिभिस्तर्कैर्वेदान्तार्थानुसन्धानम्, ध्यानाभ्यासश्च आवृत्त्या वारं वारं वेदान्तार्थानुचिन्तनम्। तेषूपायेषु मध्ये श्रवणमननाभ्यां शाब्दी विद्या उत्पद्यते। ब्रह्मचर्यादिना चित्तकल्मषं नश्यति। ध्यानाभ्यासेन चाद्वितीयात्मप्रकाशोऽभिव्यज्यते। इत्येवंरीत्या एभिरुपायैर्विद्योदये जाते अविद्या निवर्तत इति।

कथम्? योऽयं श्रवणमननपूर्वको ध्यानाभ्यासः प्रतिषिद्धाखिलभेदप्रपञ्चे "स एष नेति नेति" [बृ. ३।९।२६] आत्मनि, स व्यक्तमेव भेददर्शनप्रतियोगी तन्निवर्तयति। स च सामान्येन भेददर्शनं प्रविलापयन्नात्मनाऽपि प्रविलीयते।

न च श्रोतृश्रवणश्रोतव्यादिविभागपरिहाण्या विभागान्तरनिवृत्तिविषयाः श्रवणादयः, अपि तु सामान्येन। तथा च तस्मिन्नपि प्रविलीने स्वच्छः परिशुद्धोऽस्यात्मा प्रकाशते। यथा रजःसम्पर्ककलुषितमुदकं द्रव्यविशेषचूर्णरजःप्रक्षिप्तं रजोऽन्तराणि संहरत् स्वयमपि संह्रियमाण स्वच्छां स्वरूपावस्थामुपनयति, एवमेव श्रवणादिभिर्भेददर्शने प्रविलीयमाने विशेषाभावात् तद्गते च भेदे, स्वच्छे परिशुद्धे स्वरूपे जीवोऽवतिष्ठते।

---

एतदेव स्पष्टयति ग्रन्थकारः– **योऽयमित्यादिना**। अयमाशयः – "स एष नेति नेति" इति श्रुतिरात्मनि समस्तभेदप्रपञ्चं प्रतिषेधति। तथाविधे आत्मनि क्रियमाणः श्रवणमननपूर्वको ध्यानाभ्यासो भेदबुद्धिविरोधी सन् अविद्यात्मिकां भेदबुद्धिं निवर्तयति। यद्यपि ध्यानाभ्यासः स्वयमपि अविद्यात्मकोऽस्ति, तथापि ध्यानाभ्यासरूपाया अविद्याया निवर्तनाय कोऽपि अन्य उपायो नापेक्ष्यते। तथा सति तस्यापि निवृत्तये उपायान्तरमपेक्षितं स्यात्। तथा च तस्य तस्य निवृत्तये अन्यस्य अन्यस्योपायान्तरस्यापेक्षायामनवस्था प्रसज्येत। अतः प्रथमो ध्यानाभ्यासो जीवगतामनाद्यविद्यां सामान्यतो निवर्तयन् सामान्यान्तर्गतः स्वयमपि प्रविलीयते।

**श्रवणमनन**ध्यानाभ्यासरूपा उपायाः श्रोतृश्रोतव्यादिभेदान् विहायैव भेदान्तरस्यैव निवर्तकाः सन्तीति चेत्, न, सामान्येन सर्वभेदनिवर्तकत्वेन श्रोतृश्रोतव्यादिभेदस्यापि तत एव निवृत्तेः। तथा चेतरभेदवत् श्रोतृश्रोतव्यादिभेदेष्वपि प्रविलीनेषु सत्सु स्वच्छो निर्मलः, अत एवापगतागन्तुकाविद्याकालुष्यो जीव आत्मरूपेण प्रकाशितो भवन् मुच्यत इति।

**अविद्ययैव तु ब्रह्मणो जीवो विभक्तः, तन्निवृत्तौ ब्रह्मस्वरूपमेव भवति। यथा घटादिभेदे तदाकाशं परिशुद्धपरमाकाशमेव भवति।**

**स्यादेतत् — कथं भेदेनैव भेदः प्रतिसंह्रियते? भेदप्रतिपक्षत्वात्, यथा "रजसा रजः" इत्युक्तम्। व्यक्तमेव भेदातीतब्रह्मणि श्रवणमनन-ध्यानाभ्यासानां भेददर्शनप्रतिपक्षित्वमविद्यानुबन्धेऽपि। यथा पयः पयो**

---

तत्रायं दृष्टान्तोऽनुसन्धेयः— यथा केतकचूर्णरजो जले प्रक्षिप्तं सद् इतररजांसि अधः कुर्वत् स्वयमप्यधोऽवस्थितं भवति, जलं च स्वच्छं करोति, तच्च तदीयनिर्मलस्वरूपावस्थां प्रापयति। एवमेव श्रवणाद्युपायैरितरसकल-भेददृष्टौ विलीनायां संजातायाम् अविशेषात् श्रोतृश्रोतव्यादिभेददृष्टिरपि विलीना जायते। तादृश्यामवस्थायां जीवो निर्मलेऽविद्याकालुष्यरहिते परिशुद्धे स्वरूपेऽवस्थितो भवति।

यावदविद्याऽऽसीत्, तावदेव जीवो ब्रह्मणो विभक्त इवाप्रतीयत, श्रवणाद्युपायैरविद्यायां निवृत्तायान्तु ब्रह्मस्वरूपमेव जीवो भवति। यथा घटादिभङ्गे जाते घटाकाशं न तिष्ठति, किन्तु तत् परिशुद्धं परमाकाशमेव भवति, तद्वदित्याशयः।

ननु विजातीययोरुष्णशीतयोः परस्परं निवर्त्यनिवर्तकभावो दृश्यते। अतो भेदात्मकेन श्रवणादिना भेदात्मकस्य जगत्प्रपञ्चस्य कथं निवृत्तिः सम्भवेत्? श्रवणाद्युपायस्य जगत्प्रपञ्चस्य चोभयोरविद्यात्मकत्वेन परस्परं सजातीयत्वाद् इति चेत्, न, निवर्तकत्वे विजातीयत्वं न प्रयोजकम्, किन्तु प्रतिपक्षत्वं = प्रतियोगित्वं = विरोधित्वमेव निवर्तकत्वे प्रयोजकमिति। तथैव अन्वयव्यतिरेक-दर्शनात्। तस्मात् सजातीयमपि श्रवणादिकं भेदप्रपञ्चस्य निवर्तकं भविष्यति, भेदप्रतिपक्षित्वाद् इति मन्तव्यम्। यथा पूर्वं निदर्शितम्— सजातीयमपि केतकरज उदकवर्तिरजोऽन्तरं निवर्तयति स्वयमपि च निवर्तते, प्रतिपक्षित्वात्। अत एव विजातीययोरपि रूपरसयोर्न निवर्त्यनिवर्तकभावो भवति, तयोः परस्परम-विरोधित्वात्।

**जरयति स्वयं च जीर्यति, यथा च विषं विषान्तरं शमयति स्वयं च शाम्यति। यथोक्तम्—**

**विद्यां चाविद्यां च यस्तद् वेदोभयं सह।**

**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते॥ (ईशा. १/१)**

---

भेदातीतब्रह्मविषयकाः श्रवणमननध्यानाभ्यासाः स्वयमविद्यात्मकाः सन्तोऽपि भेददर्शनस्य प्रतिपक्षिणः सन्ति, इत्यस्ति सर्वेषां पदपदार्थव्युत्पत्तिमतां लोकानां स्फुटानुभवः।

निवर्तकत्वे प्रतिपक्षित्वमात्रस्य प्रयोजकत्वादेव सजातीयमपि पयःपयोऽन्तरं जरयति, स्वयं च जीर्यति। विषं च सजातीयमपि विषान्तरं शमयति, स्वयमपि च शाम्यतीति भूयानस्ति लोके दृष्टान्तः। श्रुतिरपि समर्थयतीमं पक्षम्। यथा –

**विद्यां चाविद्यां च यस्तद् वेदोभयं सह।**

**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते** ॥ इति।

अत्र विद्यापदेन नित्यं विशुद्धविज्ञानं गृह्यते। अविद्यापदेन च श्रवणादिकं गृह्यते। श्रवणादिरूपाऽविद्या उपायोऽस्ति ब्रह्मविद्यायाः। इत्थं च उपायोपेयभावेन अविद्या विद्या च परस्परमभिसम्बद्धे स्तः। यद्यपि नित्यविशुद्धविज्ञानरूपा विद्या अविद्यां प्रति उपेयभावं न भजिष्यते; नित्यसिद्धत्वेन विद्याया असाध्यत्वात्, तथापि नेयं श्रुतिर्विद्याम् अविद्याजन्यां प्रतिपादयति, किन्तु अविद्यया मृत्युं तरतीति ब्रूते। मृत्युरत्र अविद्यैव। तथा च श्रवणाद्यविद्ययाऽपि भेदप्रपञ्चरूपा अविद्यैव निवर्त्यते, न विद्या जन्यते। अविद्यानिवृत्तौ जातायां स्वप्रकाशा विद्या स्वयमेव व्यक्ता भवति साधकस्य। व्यक्तायां च विद्यायां साधकोऽमृतं मोक्षं प्राप्नोत्येवेति श्रुतेस्तात्पर्यम्।

**एतदुक्तं भवति— विद्याविद्ये द्वे अप्युपायोपेयभावात् सहिते, नाविद्यामन्तरेण विद्योदयोऽस्ति। साध्या तर्हि, तथा च कृतकत्वादनित्यत्वम्। अत आह— अविद्यया मृत्युमिति।**

**एषोऽर्थः — नाविद्या विद्यायाः साधनम्, किन्तु अविद्यया श्रवणादिलक्षणयाऽप्यविद्यैव निवर्तते। मृत्युरित्यविद्यैवोच्यते। तस्यां निवृत्तायां विद्यारूपोपलक्षितममृतमश्नुते स्वरूपावस्थानं स्फटिकमणिरिवोपाध्याश्रयनिबन्धनोपरागत्यागात्। अन्तरेण प्रयत्नान्तरं विद्यास्वरूपेऽवतिष्ठत इति।**

---

एतदेव स्फुटीकृतं मूले— **एतदुक्तं भवतीत्यादिना**। परस्परमुपायोपेयभावाद् विद्याऽविद्ये उभे अपि सहिते एव स्तः। यतो हि न श्रवणाद्यविद्यां विना अद्वैतविद्याया अभिव्यक्तिर्भवति, तस्मात्ते सहिते स्त इत्यर्थः। तया अविद्यया विद्याया अभिव्यक्तिरेव भवति, न तूत्पत्तिः। तस्मान्न विद्या जन्या न वा जन्यत्वेनानित्या इत्यापत्तिः प्रसज्यत इति सर्वं साधु।

मन्त्राभिप्रायं ग्रन्थकृत् स्वयमुद्घाटयति— **एषोऽर्थ** इत्यादिना। अविद्या विद्याया जनिका नास्ति, किन्तु अविद्यापि श्रवणादिस्वरूपा अविद्यारूपं मृत्युमेव निवर्तयति। तस्यां चाविद्यायां निवृत्तायां सत्यां विद्यारूपममृतं प्राप्नोति। "विद्यारूपोपलक्षितममृतम्" इति वाक्यस्य विद्यारूपमुपलक्षितं येन तादृशममृतमश्नुत इति विगृह्य बहुव्रीहिणाऽर्थ उन्नेयः। "अमृतम्" इति पदेनापि विद्यास्वरूपावस्थानमुपलक्ष्यते। तथा च "अमृतमश्नुते" इत्यस्य विद्यामधिगच्छति इत्यर्थः=स्वरूपेऽवतिष्ठत इति यावत्। तदुक्तं पातञ्जलसूत्रे— "तदा द्रष्टुः स्वरूपेऽवस्थानम्" इति। तत्र दृष्टान्तः स्फटिकमणिः। यथा स्फटिकमणौ जपाकुसुमरूपाश्रयनिबन्धनो यो रक्तिमोपरागः, तन्निवृत्तौ सत्यां स्फटिकमणिः प्रयत्नान्तरं विनैव स्वयमेव स्वच्छे निजस्वरूपेऽवतिष्ठते, तद्वदेव श्रवणादिनाऽविद्यायां निवृत्तायां प्रयत्नान्तरं विनैव जीवो निजस्वरूपे विशुद्धेऽवतिष्ठत इति भावः।

"कुर्वन्नेवेह कर्माणि" इति मन्त्रानुसारं कर्मप्रकरणे पठितोऽयं मन्त्रः— "विद्यां चाविद्यां च" इति। अतः प्रकरणानुसारेण अविद्याशब्देन तत्सदृशं

**अन्योऽर्थः — नाविद्या विद्यारहिताऽस्ति। तथा हि— भेददर्शनमपि न प्रकाशशून्यम्। तदभावे न भेदः प्रकाशेत। तस्मात् पर एव प्रकाशस्तथा तथा प्रकाशते। यथोक्तम्— "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" (कठ. २/२/१५) इति। किन्तु अविद्यानुबद्धः। यथोक्तम् — सर्वं दर्शनमन्यूनमविकल्पं विकल्पितमिव त्वयमान्तरः पुरुषोऽभिमन्यते"।**

---

कर्म प्रतिपाद्यते। तथा च ज्ञानकर्मसमुच्चयपरोऽयं मन्त्र इति केचिद् वर्णयन्ति। तन्न युक्तम्। अधर्मपदवत् "अविद्या" इति नञ्घटितं पदमिह स्वशक्त्यैव विद्याविरुद्धं भ्रममज्ञानं च बोधयति। प्रकरणापेक्षया श्रुतेर्बलीयस्त्वाद् इति विज्ञेयम्। तस्मान्नायं मन्त्रो ज्ञानकर्मसमुच्चयपरो मन्तुं शक्य इति।

**अस्य मन्त्रस्यान्योऽप्यर्थः** सम्भवति। भेदप्रपञ्चदर्शनरूपाऽविद्या विद्यया सहितैव भवति न तया रहिता। विद्या च प्रकाशः। अयमाशयः— भेदप्रपञ्चदर्शनं कूटस्थात्मप्रकाशशून्यं नैव भवति। यदि तु प्रकाशशून्यं भवेत्, तदा भेदप्रपञ्चो न कदाचित् प्रकाशेत। प्रकाशेन असम्बद्धश्च प्रकाशते चेति विरुद्धम्। तस्मात् परः कूटस्थब्रह्मप्रकाश एव तत्तज्जगद्भेदप्रपञ्चरूपेण प्रकाशते, नान्य इति मन्तव्यम्। तथा च श्रुतिः— "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति।

एवं यथा भेदप्रपञ्चदर्शनरूपाऽविद्या नियमतः परप्रकाशसम्बद्धा तथा परप्रकाशोऽपि अनाद्यविद्यानुबद्धो भाति। उक्तं च— "सर्वं दर्शनमन्यूनमविकल्पं विकल्पितमिव त्वयमान्तरः पुरुषोऽभिमन्यते" इति। अयमर्थः— प्रपञ्चप्रकाशोऽपि यद्यपि परप्रकाशरूपतया अन्यूनः=अखण्डः अविकल्पः= वियदादिनानाविकल्परहितः, एकोऽद्वैतरूपोऽस्ति, तथापि अयमान्तरो देहान्तर्गतः प्रतिबिम्बभूतो जीवस्तं परप्रकाशं सखण्डमिव वियदादिनानाविकल्पोपहितमिव अभिमन्यतेऽविद्यया इति।

**तथा न विद्या ऐकात्म्यश्रवणादिलक्षणा विनाऽविद्यया, श्रोतृश्रवणादिविभागानुबद्धत्वात्। तत्राविद्ययैव विद्याप्रत्यासन्नया विभागदर्शनमविद्यां तीर्त्वा विद्यालक्षणे नित्ये स्वरूपेऽवतिष्ठते। प्रतिबिम्बकलुषितमिवोदकं तन्निवृत्तौ।**

**स्यादेतत्, ऐकात्म्ये विभागस्यासत्यत्वात् तदधिष्ठानश्रवणादयोऽप्यसत्याः कथं कस्मैचित् कार्याय स्युः। असत्याच्च सत्यप्रतिपत्तिर्मिथ्यैव। यथा धूम इति मिथ्यागृहीताद् वाष्पादिति।**

---

**यथा भेदप्रपञ्चरूपा**ऽविद्या नित्यविद्यया सदा सहिता तथैव ऐकात्म्यविषयिणी श्रवणादिविद्याऽपि अविद्यया विना न भवति, किन्तु श्रोतृश्रोतव्यादिविभागरूपयाऽविद्ययानुबद्धैव भवति। इत्थं च विद्याविद्ययोरुभयोरन्योऽन्यसहभाव इति निष्कर्षः।

अत्र अविद्या द्विविधा – श्रवणमननध्यानाभ्यासरूपा एका, तथा वियदादिविभागदर्शनरूपा द्वितीया। तत्र श्रवणादिविभागरूपाऽविद्या नित्यविद्यया प्रत्यासन्नाऽस्ति। यतो हि श्रवणादिविभागरूपाविद्ययैव नित्यविद्याया उदयो भवति। अतो नित्यविद्याप्रत्यासन्नया श्रवणमननध्यानाभ्यासलक्षणाविद्यया वियदादिविभागरूपामविद्यां मृत्युपदप्रतिपादितां तीर्त्वा नित्यविद्यालक्षणे नित्यप्रकाशस्वरूपे इति यावद् अवस्थितो भवति साधकः। यथा प्रतिबिम्बमलकलुषितं जलं प्रतिबिम्बापगमे स्वच्छे निर्मले निजस्वरूपेऽवस्थितं भवतीति।

शङ्कते – **स्यादेतदिति**। ननु अद्वैतवादिदृष्ट्या यदि ऐकात्म्यमर्थाद् एको ब्रह्मात्मैव सत्यः, अपरे निखिला अपि प्रपञ्चभेदा असत्याः सन्ति, तदा श्रोत्रमन आद्यधिष्ठानाश्रिताः श्रवणमननादयोऽपि असत्या एव सन्ति। अस्यां स्थितौ असत्येभ्यः श्रवणादिभ्यः कथङ्कारं निर्मलविद्योदयकार्यं स्यात्? यदि असत्यादपि श्रवणादेः ब्रह्मविद्या उदियादपि तथापि सा ब्रह्मप्रतिपत्तिर्मिथ्यैव स्यात्, न सत्या, असत्याद्

उच्यते, नायं नियमः– असत्यं न कस्मैचित् कार्याय भवतीति। भवति हि माया प्रीतेर्भयस्य च निमित्तम्। असत्यं च सत्यप्रतिपत्तेः, यथा रेखागवयो लिप्यक्षराणि च।

स्यादेतत्– स्वरूपेणेदं सत्यम्, न शून्यम्। ऐकात्म्यवादिनस्तु स्वरूपेणाप्युपायानामसत्यता। उच्यते– सन्तु स्वरूपेण सत्याः, येन तु रूपेण प्रतिपादकाः, तदसत्यम्। कार्योपयोगरहिता स्वरूपसत्यता व्यर्था।

---

जायमानत्वात्। यथा वाष्पे धूमबुद्ध्या मिथ्याभूतया जायमाना वह्निबुद्धिरपि मिथ्यैव भवति, न सत्या, तद्वद् इति। समाधत्ते – उच्यत इति। असत्यं न कस्मैचित् कार्याय प्रभवतीति नास्ति नियमः, मिथ्याभूतापि मायिकनिर्मिता मनोज्ञस्त्र्यादिमाया प्रीतिं जनयति, व्याघ्रादिमाया च भयं जनयतीति सर्वजनानुभवसिद्धत्वात्। एवमसत्यादपि सत्यप्रतिपत्तिर्भवति, यथा असत्यादपि रेखागवयाद् वास्तविकस्यारण्यस्य गवयस्य प्रतिपत्तिर्भवति, असत्येभ्योऽपि लिप्यक्षरेभ्यो वास्तविकानां ककारादिवर्णानां बोधो भवतीति न काचिदनुपपत्तिरैकात्म्ये इति।

ननु गवयाद्याकारा रेखा गवयादिरूपेण काममसत्या भवतु नाम, रेखारूपेण तु सत्यैवास्ति न मिथ्या। ब्रह्मात्मैक्यवादिनां वेदान्तिनां तु श्रवणमननाद्युपायाः स्वरूपतोऽप्यसत्याः सन्ति। एवं सति कथं श्रवणादिमिथ्योपायेभ्यः सत्यविद्योदय इति चेदुच्यते– रेखा यद्यपि रेखारूपेण सत्या तथापि सा न रेखारूपेण गवयप्रतिपत्तिजनिका, तथा सति यया कयाचिद् रेखया गवयप्रतिपत्तिः स्यात्। अतः कार्यानुपयोगिन्या रेखायाः स्वरूपसत्यता व्यर्थैवास्ति। किन्तु इयं रेखा गवय इति कृत्वा गवयरूपेणैव सा गवयप्रतिपत्तिजनिका भवति, तथापि गवयरूपेण तु सा रेखा असत्यैवास्ति। तथैवासत्या अपि श्रवणाद्युपायाः सत्यां विद्यां जनयिष्यन्तीत्यत्र न काचिदनुपपत्तिः।

अपि च अभेददर्शनोपाया अपि न स्वरूपेण मिथ्या, यतो ब्रह्मैवैषां स्वरूपम् । तत्र ब्रह्मैवाविद्यानुबद्धं ब्रह्मप्राप्त्युपायः । यथा रेखादयः "ककारोऽयम्, गवयोऽयम्" इत्यविद्यमानरूपेणैव वर्णादीनां बोधकाः ।

योऽपि मन्यते– न रेखागवयो गवयत्वेन गवयान्तराणां प्रतिपत्तिहेतुः, न रेखावर्णत्वेन, किन्तु सादृश्यात् – "एतत्सदृशो गवयः" इति रेखा च समयात् – ईदृशीं रेखां दृष्ट्वाऽयं वर्णः स्मर्तव्य इति ।

---

एवम्, ऐकात्म्यविद्यात्मकस्य अभेददर्शनस्य उपायभूताः श्रवणादयोऽपि न स्वरूपेणासत्याः सन्ति, यतो ब्रह्मैव तेषां स्वरूपमस्ति, ब्रह्म च सत्यमेवास्ति। अयमत्र निष्कर्षः – ब्रह्मैव श्रवणाद्यविद्यासम्बद्धं सत् सत्यब्रह्मात्मभावप्राप्तेरुपायोऽस्तीति वेदान्तिनामपि क्वासत्यात् सत्यकार्यप्रसङ्गः? यथा द्वैतवादिनां सत्या रेखादयः "ककारोऽयम्, गवयोऽयम्" इत्याकारकाविद्यानुबद्धा एव सत्यानां वर्णादीनां बोधका भवन्ति, तद्वत् ।

अत्र यदि कश्चिन्मन्येत "न असत्यो रेखागवयो सत्यगवयान्तरप्रतीतिं जनयति, किन्तु सत्या रेखैव सादृश्यात् एतत्सदृशो गवयः" इति रूपाद् गवयप्रतिपत्तिं जनयति। एवं, न रेखा वर्णत्वेन रूपेण ककारादिप्रतीतिं जनयति येन असत्यात् सत्यप्रतिपत्तेरुदाहरणत्वेन सोपन्यस्येत, किन्तु रेखात्वेनैव सङ्केतबलात् सा वर्णानां बोधिका भवति "ईदृशीं रेखां दृष्ट्वा ककारः स्मर्तव्यः, ईदृशीं रेखां च दृष्ट्वा खकारः स्मर्तव्यः" इत्येवंरूपाद् इति ।

यद्येवं स्यात् तदा लोकविरोधः प्रसज्येत । यतो हि लोके बालान् रेखासु वर्णत्वेनैव रूपेण ककारादिवर्णान् बोधयन्ति – "ईदृशी रेखा ककारो बोध्यः, ईदृशी च रेखा गकारो बोध्यः" इति । रेखासु च वर्णत्वबोधनं मिथ्यैवास्तीति असत्यादेव सत्यवर्णप्रतीतिर्लोके व्यवह्रियते ।

**तस्य लोकविरोधः। तथा हि – बाला हि रेखासु वर्णत्वेनैव व्युत्पाद्यन्ते लोके अभेदेन च व्यपदेशः – "अयं गवय इत्याख्यातुः प्रतिपत्तुश्च गवयोऽयं मया दृष्टः" इति। तथा असत्यात् प्रतिबिम्बाच्चादृष्टस्य प्रतिबिम्बहेतोर्विशिष्टदेशावस्थस्यानुमानं न मृषा।**

**शब्दाच्च नित्यादसत्यदीर्घादिविभागभाजोऽर्थभेदप्रतिपत्तिर्न मिथ्या। तथा मिथ्याऽहिदंशो मरणहेतुः, ततश्च मरणमूर्च्छाद्यनुमानं न वितथम्, कालादिभेदयुक्तात् सत्याहिदंशादिव।**

---

एवं, रेखागवयस्थलेऽपि लोके आख्याता (वक्ता) जनो रेखाऽभेदेनैव शब्दप्रयोगं करोति – "अयं गवयः" इति, तथा प्रतिपत्ता (बोद्धा) जनोऽपि रेखाऽभिन्नतयैव तदानीं शब्दप्रयोगं करोति – "गवयोऽयं मया दृष्टः" इति। तथा च रेखाऽभेदेनैव ककारादिवर्णबोधस्य गवयादिपदार्थबोधस्य च लोके व्यवहारः, वर्णानां गवयादीनां च रेखाऽभिन्नत्वमसत्यमेव। तस्मादसत्यादेव सत्यप्रतिपत्तेरुदाहरणत्वाभ्युपगमात् स्फुटो लोकविरोध इति।

एवं गृहाद् बहिरादर्शे प्रतिबिम्बमसत्यमालोक्य बिम्बभूतस्य सत्यस्य गृहवर्तिवस्तुनो नेत्राभ्यामदृश्यमानस्यापि यदनुमानं भवति, तन्न मृषा। अतस्तदपि असत्यात् सत्यप्रतिपत्तेरुदाहरणमस्ति।

अन्यच्च, मीमांसकानां मते शब्दो नित्यो भवति, अत एव सर्वदा सदेव भवति न कदाचिदसत्। किन्तु तत्र कदाचिद् ह्रस्वत्वं दीर्घत्वं वा प्रतीयमानमसत्यं भवति। यथा "नग"शब्दे ह्रस्वत्वं प्रतीयते, "नाग"शब्दे च दीर्घत्वं प्रतीयते। तथा चासत्यादपि "नग" "नाग" इति ह्रस्वदीर्घादिविभागवतः शब्दाज्जायमाना वृक्ष-पर्वतादिप्रतीतिः, हस्त्यादिप्रतीतिर्वा सत्यैव भवति नासत्या।

एवं यथा सत्यः कालादिसर्पदंशो मरणहेतुर्भवति तथा मिथ्याऽहिदंशोऽपि मरणकारणं भवतीति लोके दृश्यते। अतः स्वरूपतो मिथ्याभूतादपि सर्पदंशाद् यदि कश्चिदनुमिनुयाद् यत् "अहिदंष्टोऽयं जनोऽवश्यं मरिष्यति मूर्च्छां वा

**यस्यैव क्षणिकविज्ञानमात्मा, तस्यैव तूपनेयापनेयासम्भवान्मोक्ष-शास्त्राणां मुक्त्यर्थानां च प्रवृत्तीनां वैयर्थ्यम्, क्षणिकस्य स्वरसेनैव निर्वाणाद् अनाधेयातिशयत्वाच्च। एकस्मिन् क्षणे विशेषा-विशेषविभागाभावात्, क्षणस्याभेद्यत्वात्।**

**यदि मतम् – सन्ततावुपनेयमपनेयं च समस्तीति, तदसत्, कर्ता भोक्ता च संसारी, न च सन्ततिरवस्तुत्वात् कर्त्री वा भोक्त्री वा। कथं वाऽसतो मुक्तिबन्धौ।**

---

प्राप्स्यति, अहिदंष्टत्वात्, पूर्वानुभूताहिदंष्टजनवत्" इति नेदमनुमानं वितथं (मिथ्या) भवति। तस्मादसत्यादपि सत्यकार्यप्रतिपत्तिर्भवतीति नैकोदाहरणैः सिद्धम्। अतोऽविद्यात्मकादपि श्रवणादेः सदात्मकब्रह्मविद्योदये न काचिद् बाधाऽस्तीति द्रष्टव्यम्।

प्रत्युत यस्य योगाचारबौद्धस्य मते क्षणिकविज्ञानमेवाऽऽत्माऽस्ति, तस्यैव पक्षे क्षणिकस्यात्मनो न किञ्चिद् उपनेयं प्राप्यं भवितुमर्हति, न वा किञ्चिद् अपनेयं हेयं भवितुमर्हति। तथा च हेयोपादेययोरसम्भवात् तस्य पक्ष एव हेयोपादेयप्रति-पादकानां शास्त्राणां वैयर्थ्यमापद्येत। तथा मुक्त्यर्थं लोकप्रवृत्तीनां च वैयर्थ्यमापद्येत। कथमिति चेत्? इत्थम् – निर्वाणमेव तेषां मुक्तिरस्ति, निर्वाणञ्च विनाशः, स विनाशः क्षणिकवादिमते स्वभावत एव प्रतिक्षणं भवतीति किं प्रयोजनं शास्त्राणां मोक्षार्थं प्रवृत्तीनां च स्यात्?

ननु शास्त्राणां प्रवृत्तीनां च प्रयोजनमस्ति – पूर्वंम शुद्धिरहिते ज्ञाने शुद्धिरूपातिशयाधानम् इति चेत्, न, उत्पत्तिक्षणे ज्ञानेऽतिशयाधानासम्भवात्, अग्रिमक्षणे च अतिशयाधानकाले तस्य स्वतो विनाशात् कुत्रातिशय आधीयेत? एतदेवोक्तं मूले – "क्षणिकस्य स्वरसेनैव निर्वाणाद् अनाधेयातिशयत्वाच्च" इति।

यद्युच्येत – एकस्मिन्नेव क्षणे पूर्वभागेऽशुद्धस्य ज्ञानस्य शुद्धिराधास्यते तस्यैव क्षणस्योत्तरार्धभागे इति, तदपि नोपपद्यते, क्षणस्याभेद्यत्वेन एकस्मिन् क्षणे

**अथ मतम्– नात्यन्तमसती सन्ततिः, नापि सती, कल्पनया तु सती, तद्विमोक्षाय शास्त्राणि प्रवृत्तयश्चेति।**

**कल्पितस्तर्हि संसरति विमुच्यते। कल्पितविषयौ च संसारविमोक्षावपि कल्पितावेव। तदेतदस्माभिरुच्यमानं किं न भवतोऽभिमतम्? उक्तमेतत्– कल्पितविषयावेव संसारमोक्षौ न परस्मिन् परमार्थे।**

---

पूर्वापरविभागासम्भवात्। तदुक्तं मूले– "एकस्मिन् क्षणे विशेषाविशेषविभागाभावात्" इति। अयमाशयः– प्रायः सर्व एव क्षणा अविशेषा अर्थात् पूर्वापरविभागशून्या भवन्ति बौद्धनये, किन्तु तत्त्वज्ञानकालीनः कश्चित् क्षणः पूर्वापरविभागवान् भवेदित्यसङ्गतम्, क्षणमात्रस्याभेद्यत्वाद् इति।

यदि मन्यते– नैकस्मिन् क्षणे पूर्वभागे अशुद्धं ज्ञानं परभागेन तज्ज्ञानं शुद्धं भवति, किन्तु क्षणिकज्ञानसन्ततिरेव पूर्वम् अशुद्धिमती भवति ततश्च विशुद्धज्ञानसन्ततिरुदिता भवतीति सन्ततावेव कश्चिदतिशय उपनीयतेऽपनीयते च कश्चिदतिशय इति चेत्, तन्न युक्तम्, यः संसारी भवति, स एव मोक्षेऽधिकारी भवति। संसारी च स एव भवति यः कर्ता भोक्ता च भवति। बौद्धनये च आत्मत्वेन स्वीक्रियमाण आलयविज्ञानरूपा चित्सन्ततिरवस्तुभूतत्वात् कथं सा कर्त्री भोक्त्री च भवितुं शक्नुयात्? ननु कथं चित्सन्ततिरवस्तुभूताऽस्तीति चेत्, सन्तानस्य सन्तानिभ्यो व्यतिरिक्तत्वानभ्युपगमेन सन्ततेरवास्तविकत्वात्। इत्थञ्चावस्तुभूतायाः चित्सन्ततेर्बन्धमोक्षौ कथमुपपद्येयाताम् इति सिद्धान्तिनोऽभिप्रायः।

यद्युच्येत – **चित्सन्ततिर्न** शशशृङ्गवदत्यन्तमसती तुच्छा, प्रतीयमानत्वात्, नापि सन्तानिज्ञानवत् सती, सन्तानिभ्यः सन्तानस्य व्यतिरिक्तत्वेन स्वरूपालाभात्। किन्तु कल्पनयैव सतीव भाति सन्ततिः। अतः कल्पनाप्रसूतायाः सन्ततेर्विमोक्षाय शास्त्राणि सार्थकानि सन्ति मुक्त्यर्थं प्रवृत्तयश्च प्राणिनां सार्थकाः सन्तीति चेत्, न, एवं सति भवन्मतेऽपि कल्पितस्यैव बन्धमोक्षौ भवत इत्यायातम्। तथा कल्पितविषयकौ संसारविमोक्षावपि कल्पितावेव स्त इत्यप्यायातम्। एतदेव त्वस्माभिरप्युच्यते यद् जीवो न परमात्मनो व्यतिरिक्तः, किन्तु ब्रह्मव्यतिरिक्तत्वेन

**अपि च अभ्युपगम्यापि क्षणिकं विज्ञानमनादिनिधनाया एव सन्ततेर्मुक्तिसंसारावभ्युपेतौ। तथा हि— सन्ततेः अनादित्वात् संसारस्य अवस्तुत्वाच्च नोत्पादः, नोच्छेदः अवस्तुत्वात्, अन्त्यक्षणानुपपत्तेश्च।**

**स ह्यन्त्यः क्षणः किञ्चित् कार्यमारभेत वा, न वा। आरम्भे नान्त्य इति तदभावान्नोच्छेदः। अनारम्भे सर्वशक्तिविरहादसल्लक्षणात् तस्यासत्त्वम्। तस्मिन्नसति सर्वेऽप्यनेनैव क्रमेणासन्तः सन्तानिनः स्युः। तदभावे सन्तान एव नास्ति, कस्योच्छेदः ?**

---

अविद्याकल्पितः, तस्यैव च कल्पितजीवस्य बन्धमोक्षौ भवतो न परमार्थब्रह्मणो बन्धमोक्षौ स्त इति। एतदस्माभिरुच्यमानं भवते कथं न रोचत इति न वयं विद्मः। उक्तं पूर्वमेव "तस्मादविद्यया जीवाः संसारिणो विद्यया मुच्यन्ते" इति।

एवं, बौद्धो हि योगाचारो अनादिनिधनस्य नित्यात्मनो बन्धमोक्षौ न सम्भवत इत्यभिमत्य क्षणिकविज्ञानमात्मानं स्वीकरोति। किन्त्वेवमभ्युपगम्यापि क्षणिकविज्ञानस्य मुक्तिसंसारौ नाभ्युपगच्छति, प्रत्युत विज्ञानसन्ततेरेव मुक्तिसंसारौ भवत इत्यभ्युपैति। तां च सन्ततिम् अनादिनिधनामेव स मन्यते। अस्यां स्थितौ सन्ततेरपि बन्धमोक्षौ न सम्भवतः। यतो हि संसारस्यानादित्वात् सन्ततेर्नोत्पादरूपो बन्धः सम्भवति। एवं पूर्वोक्तरीत्या सन्तानिव्यतिरेकेण सन्ततेः (सन्तानस्य) असद्भावेन अवस्तुत्वादपि उत्पादरूपो बन्धो न सम्भवति। सन्ततेर्नोत्पादः, संसारस्य अनादित्वादवस्तुत्वाच्च इत्यन्वयो बोध्यो मूलग्रन्थे। तथा अवस्तुत्वादेव सन्ततेरुच्छेदरूपो मोक्षोऽपि नैव सम्भवति। न हि अवस्तुनो जन्म वा उच्छेदो वा सम्भवी, शशशृङ्गादिवदित्यभिप्रायः।

एवम्, अन्त्यक्षणानुपपत्तेश्च सन्ततेर्नोच्छेदरूपो मोक्षः। यतो हि सन्ततेर्यदि कश्चिदन्त्यः क्षणः सम्भवेत्, तदा तस्मादन्त्यक्षणाद् वियोगरूप उच्छेदस्तस्याः सम्भवेदपि, नान्यथा। किन्तु नास्ति तादृशः कश्चित् क्षणो यः सन्ततेः कृतेऽन्तिमः क्षणो भवेत्। एतदेव स्फुटीकरोति मूलकारः – **स ह्यन्त्य इत्यादिना।**

अयमाशयः – सन्ततेर्विज्ञानधारायाः स अन्तिमः क्षणोऽग्रिमे क्षणे किमपि कार्यमारभते, नारभते वा, यदि आरभत इति पक्षः, तदा कार्यसन्ततेरविरामाद्

**अथारभत एव कार्यमन्त्यः सन्तानान्तरे सार्वज्ञे, सति हेतुफलभावे कथं सन्तानान्तरम्? न हेतुफलभावादन्यदेकसन्ततेर्व्यवस्थापकम्।**

---

नान्तिमक्षणस्यावसरः कदाचित् प्राप्तः स्यादित्यन्त्यक्षणानुपपत्तेः सन्ततेरुच्छेद-रूपो मोक्षो न कदाचिदवसरं लभेत। यदि तु सन्ततेः सोऽन्तिमः क्षणो न किमपि कार्यान्तरमारभते तदा अर्थक्रियाकारित्वशक्तिविरहाद् असल्लक्षणाद् असत्त्वं तस्य क्षणस्यापद्येत। अन्त्यक्षणस्यासत्त्वे तत्सम्बद्धः सन्तानी अपि असन् भवेत्। एवं, तत्पूर्वक्षणोऽपि असन् स्यात्, स्वाव्यवहितोत्तरं सत्क्षणात्मकार्थ-क्रियाकारित्वाभावात्। एवं क्रमेण तत्तत्क्षणसम्बद्धाः सर्वे सन्तानिनोऽसन्त आपद्येरन्। सन्तानिनां च सर्वेषामसत्त्वे सन्तानोऽपि न भवेत्। सन्तानिनामेव सन्तानो भवति, अतः सन्तानिनामभावे सन्तानस्याप्यभाव आपतेत्। अस्यां स्थितौ उच्छेद्याभावात् कस्योच्छेदो मोक्षः स्यादिति विज्ञानसन्ततिवादिनां मोक्ष एव दुर्घटः स्यात्। तथा च तेषां मोक्षोपदेशशास्त्राणां मुक्त्यर्थप्रवृत्तीनां चानर्थक्यमापद्येतेति भावः।

ननु मुक्तो योगी पूर्वमसर्वज्ञ आसीत्, इदानीं मुक्तौ सर्वज्ञो जातः। तथा च मुक्तिमधिगतवतो योगिनः सोऽन्त्यक्षणः सर्वविषयत्वेन सार्वज्ञे सर्वज्ञसम्बन्धिनि सन्तानान्तरे = चित्सन्ततौ सर्वविषयकज्ञानरूपं कार्यान्तरं जनयत्येव। अतोऽन्त्यक्षणस्यापि सर्वज्ञज्ञानरूपार्थक्रियाकारित्वाद् नासत्त्वापत्तिर्न वा तदसत्त्वप्रयुक्ताः पूर्वक्षणानामसत्त्वापत्त्यादिदोषाः। अर्थाद् नान्त्यक्षणासत्त्व-प्रयुक्तं पूर्वक्षणानामसत्त्वम्, न वा एतत्प्रयुक्तः सन्तानाभावः, न वा सन्तानि-रूपोच्छेद्याभावेन सन्तानानुच्छेदः, सर्वज्ञज्ञानसन्ततौ प्रादुर्भूतायां योगिचित्सन्ततेः पूर्वतन्याः समुच्छेदात्। तस्मान्न मोक्षाभावापत्तिर्न वा शास्त्राणां मुक्त्यर्थप्रवृत्तीनां चानर्थक्यमिति चेत्, न, ययोः परस्परं हेतुफलभावो (कार्यकारणभावः) भवति, तयोरेक एव सन्तानो न तु सन्तानान्तरत्वमिति ज्ञानसन्ततिवादिनामेव मतमस्ति। अतो योगिनोऽन्त्यक्षणस्य ततो जायमानसर्वज्ञज्ञानस्य च परस्परं हेतुफलभावे सति कथं तयोर्भिन्नः सन्तानः स्यात्। तस्मादेकस्यैव सन्तानस्य ते उभे अन्त्यक्षणसार्वज्ञज्ञाने सन्तानिभूते

न हेतुफलभावमात्रादेकसन्ततिव्यवस्था, अपि तूपादानहेतुफलभावात्। न च सार्वज्ञस्य ज्ञानस्य चरमक्षण उपादानम्। आलम्बनप्रत्ययो हि सः, समनन्तरप्रत्ययश्चोपादानम्। स्वसन्ततिपतितसमनन्तरप्रत्ययजन्यं च सार्वज्ञं ज्ञानम्। आलम्बनप्रत्ययोऽस्य चरमक्षणः।

यदि तुल्यजातीयमुपादानम्, न मुक्तचित्तसार्वज्ञज्ञानयोस्तुल्यजातीयता नास्ति।

---

स्त इत्यवश्यं मन्तव्यम्। अतः पूर्वोक्ताः सन्तानानुच्छेदादयो दोषास्तदवस्था एव बौद्धनये सन्ति। कार्यकारणभावादन्यस्य एकसन्ततिव्यवस्थापकस्याभावात्।

यद्युच्येत – न केवलात् कार्यकारणभावमात्राद् एकसन्ततेर्व्यवस्था भवति, किन्तु कारणकोटौ उपादानकारणस्य ग्रहणाद् उपादानकारणकार्ययोरेव एकसन्तानव्यवहारः। प्रकृते तु योगिनोऽन्त्यः क्षण उत्तरभाविनः सार्वज्ञज्ञानस्योपादानकारणं न भवति, किन्त्वालम्बनकारणमर्थाद् आलम्बनविधया = विषयविधया निमित्तकारणान्तर्गतः सः। समनन्तरप्रत्ययस्यैवास्मन्मते उपादानत्वस्वीकारात्। सार्वज्ञज्ञानस्य या स्वीया सन्ततिस्तन्मध्यपतितो यः स्वपूर्वभावी पूर्वक्षणः, स एव समनन्तरप्रत्ययः = उपादानकारणं सार्वज्ञज्ञानस्य भवति। योगिचरमक्षणस्तु तस्य सार्वज्ञज्ञानस्य आलम्बनरूपतया = विषयरूपतया निमित्तकारणमेव भवति। तस्माद् अन्त्यक्षणसार्वज्ञज्ञानयोः भिन्नसन्तानत्वमेव नैकसन्तानत्वम्। तत्र सार्वज्ञज्ञानसन्तानस्योदयो योगिनोऽन्त्यक्षणस्योच्छेद एव भवतीति नास्मन्मते मोक्षानुपपत्तिरिति पूर्वपक्षिणोऽभिप्रायः।

तन्न युक्तमिति सिद्धान्ती निराकरोति – **यदीति**। अयमर्थः – योगिनोऽन्त्यः क्षणः कथं न सार्वज्ञज्ञानस्योपादानम्? कथञ्च तयोर्नैकसन्तानान्तर्गतत्वम्? इत्युपपादनीयम्। यद्युच्येत – कार्यस्य तुल्यजातीयमेवोपादानं भवति, यथा घटस्य मृत्तिका पटस्य च तन्तवस्तुल्यजातीया एव उपादानं भवन्ति। अत्र तु योगिज्ञानमसर्वविषयकं सार्वज्ञं ज्ञानञ्च सर्वविषयकं भवतीति विषयभेदान्न तयोस्तुल्यजातीयत्वम्, अत एव तयोर्नोपादानोपादेयभावः,

**योऽपि मन्यते — विलक्षणकार्ये सन्तत्युच्छेद इति, तस्य रूपज्ञानप्रबन्धे (प्रतिबन्धे) विषयान्तरविज्ञानान्निर्वाणप्रसङ्गः। कथञ्चित् तुल्यतायाम-निर्वाणमित्यलमतिप्रसङ्गेन।**

**केचित्तु विज्ञानगुणमविज्ञानस्वभावमात्मतत्त्वमिच्छन्तः समुत्खात-सकलविशेषगुणे स्वरूपे तस्य स्थितिं ब्रह्मप्राप्तिमाहुः। सा हि तस्यावस्था देहेन्द्रियाद्युपाधिभिरकृतावच्छेदा बृहती ब्रह्मेति गीयते।**

---

अत एव च नैकसन्तानत्वं तयोरिति अवश्यमन्त्ये क्षणे योगिज्ञानसन्ततेरुच्छेदे सति सार्वज्ञज्ञानसन्ततेरुदयोऽभ्युपगन्तव्य इति न मोक्षानुपपत्तिर्बौद्धनये इति।

तदपि न युक्तियुक्तम्, मुक्तयोगिनश्चित्तस्य सार्वज्ञज्ञानस्य च तुल्यजातीयत्वाभावे प्रमाणाभावात्। प्रत्युत ज्ञानत्वेन रूपेण तयोस्तुल्य-जातीयत्वस्यैव सिद्धेः।

**यः कश्चिदेवं** मन्यते यत् पूर्वक्षणकार्याद् विलक्षणे कार्ये समुदिते पूर्वतनी सन्ततिरुच्छिद्यत इति, तदपि न चारु, एवं सति रूपज्ञानसन्ततौ विरतायां सत्यां रसज्ञानसन्ततौ जातायामपि मुक्तिः स्यात्। यद्युच्येत — रूपज्ञानसन्तत्यपेक्षया रसज्ञानसन्ततिकार्यस्य विलक्षणत्वेऽपि ज्ञानत्वेन तयोस्तुल्यत्वमेवास्ति, अतो न ततो निर्वाणापत्तिरिति चेत्, तर्हि योगिज्ञानसार्वज्ञज्ञानयोरपि ज्ञानरूपतया तुल्यजातीयत्वसत्त्वात् तयोरुपादानोपादेयभावाद् एकसन्तानत्वमेवेति पूर्वसन्ता-नानुच्छेदाद् मोक्षानुपपत्तिस्तदवस्थैवेति क्षणिकविज्ञानसन्तानवादो न कथमपि युक्तिसह इति निष्कर्षः।

आत्मतत्त्वसम्बन्धे काणादमतमुत्थापयति — **केचित्तु इति।** आत्मतत्त्वस्य प्रथमं विशेषणं ''विज्ञानगुणम्'' इति। आत्ममनःसंयोगाज्जायमानं विज्ञानं गुणो यस्य तद् इत्यर्थः। विज्ञानम् आत्मनो गुणो न स्वभाव इति यावत्। अत एव अविज्ञानस्वभावमिति द्वितीयं विशेषणम्। स्वरूपतो जडमात्मतत्त्वमित्यर्थः। एवंस्वरूपमेवात्मतत्त्वं कामयन्ते काणादाः। एवंरूपस्यात्मतत्त्वस्य समुत्खातसकल-

**ज्ञानस्वभावत्वे च सर्वगतस्य देहेन्द्रियनिरपेक्षस्य नित्यत्वाद् ज्ञानस्वरूपस्य सन्निहितविविधज्ञेयभेदस्य बृहत्तरः संसारः स्यात्।**

**अथ न विजानाति किञ्चित्, न तर्हि ज्ञानस्वरूपः, सकर्मको हि जानात्यर्थो नासति कर्मसम्बन्धे युज्यते। तान् प्रत्याह - विज्ञानमिति।**

---

विशेषगुणे स्वरूपे याऽवस्थितिः, सैव ब्रह्मप्राप्तिर्मोक्षपदाभिधेयाऽस्तीति। समुत्खाताः सम्यगुन्मूलिताः सकला विशेषगुणाः = बुद्धिसुखदुःखेच्छाद्वेषप्रयत्न-धर्माधर्माख्या अष्टौ यस्मिन् स्वरूपे, तादृशे आत्मस्वरूपेऽवस्थानं मुक्तिरित्यर्थः। काणादमते मोक्षदशायां बुद्ध्यादयो विशेषगुणा आत्मनि नावतिष्ठन्ते। सामान्यगुणास्तु संख्यापरिमाणादयस्तद्दशायामपि तिष्ठन्त्येवेति नैतेषां मते आत्मा कदाचिदपि निर्गुणो भवति।

तादृश्या विशेषगुणराहित्यावस्थाया ब्रह्मप्राप्तिसंज्ञाभिधाने उपपत्तिमाह ग्रन्थकारः— **सा हीति**। अयमर्थः— बन्धावस्थायामात्मा देहेन्द्रियादिभिरुपाधिभिः परिच्छिन्नो भवति, यथा घटकरकादिभिरुपाधिभिर्विभुरपि आकाशः परिच्छिन्नो भवति, तद्वत्। तथा च देहाद्युपाधिपरिच्छेदरहित आत्मा मुक्तिकाले अपरिच्छिन्ना-काशवद् बृहन् महान् विभुर्भवतीत्यत एव साऽवस्था ब्रह्मप्राप्तिसंज्ञयाऽभिलप्यते काणादैरिति भावः।

यदि तु **आत्मा ज्ञानस्वभावः** स्यात्, तदा ज्ञानस्वरूपस्य तस्यात्मनः सर्वगतत्वेन = सर्वव्यापकत्वेन नित्यत्वेन च प्रपञ्चगतसमस्तनानाविषयैः सह सर्वदैव सन्निहितत्वात् कालदृष्ट्या देशदृष्ट्या च वर्धेतैव संसारो नोच्छिद्येत कदाचित्। तथा बद्धमुक्तयोरविशेषापत्तिश्च स्यात्। न च विज्ञानस्वभावात्मनः सर्वगतत्वे नित्यत्वे च सत्यपि परिच्छिन्नानित्यदेहेन्द्रियादिसापेक्षतया न सर्वदा समस्तविषय-सन्निधानप्रयुक्तो बृहत्तरः संसारः सर्वज्ञत्वं च प्रसज्येत इति वाच्यम्, आत्मनि देहेन्द्रियादिनिरपेक्षत्वस्यापि वेदान्तिभिः स्वीकारात्। यतो हि ज्ञानोत्पत्त्यर्थमेव देहादेरपेक्षा भवति, आत्मनो ज्ञानस्वभावस्तु नित्यः। अतो न तस्य परिच्छिन्नदेहेन्द्रियाद्यपेक्षा ज्ञानोत्पत्त्यर्थं भविष्यतीति सर्वज्ञत्वं मुक्तस्यापि च विषयदर्शित्वमिति बृहत्तरः संसारश्च तस्य प्रसज्येयातामेव।

**कुतः? श्रूयते हि-"सत्यं ज्ञानमनन्तं ब्रह्म" (तैत्ति. २/१/१) "विज्ञानमानन्दं ब्रह्म" (बृ. ३/९/२८) इत्यादि। न चोक्तदोषः, यथा दाहकोऽपि वह्निरुपनीतं दाह्यं दहति नानुपनीतमदाह्यं च, यथा च स्फटिकदर्पणादयः स्वच्छाः प्रकाशस्वभावा अपि यदेवोपनीयते योग्यं च तच्छायापत्त्या तदेव दर्शयन्ति। एवमयं पुरुषो भोगायतनशरीरस्थो भोगसाधनेन्द्रियोपनीतान् शब्दादीन् भुङ्क्ते तच्छायापत्त्या नित्यचैतन्योऽपि। अतश्च न सर्वस्य सर्वदर्शित्वप्रसङ्गः, न च मुक्तौ बाह्यविषयोपभोगः।**

---

यद्युच्येत – ज्ञानस्वभावोऽप्यात्मा न किञ्चिद् विषयजातं जानातीति, तदा ज्ञानस्वरूपत्वं तस्य व्याहन्येत जडत्वं च प्रसज्येत। एवं ज्ञाधात्वर्थः सकर्मको भवति नाकर्मकः। अतो विषयात्मककर्मसम्बन्धाभावो ज्ञानरूपात्मनो न युज्यत इति काणादानामाशयः। एवंविधं पूर्वपक्षमाशङ्क्यैवाचार्यस्तन्निराचिकीर्षयाऽऽह मङ्गलश्लोके – **विज्ञानमिति**।

ननु ब्रह्म विज्ञानस्वरूपमित्यत्र किं प्रमाणमिति चेत्, उच्यते – ब्रह्मणो विज्ञानस्वरूपत्वे "सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म" इत्याद्याः श्रुतयः प्रमाणं सन्ति। न च सर्वगतस्य ब्रह्मणो विज्ञानस्वभावस्य सन्निहितसर्वविषयतया सर्वदर्शित्वप्रसङ्गः, मुक्तस्यापि विज्ञानात्मकस्य तथैव विषयसन्निधानसत्त्वाद् विषयोपलब्धिप्रसङ्गश्चेति च पूर्वोक्तौ दोषौ कथं समाधेयाविति वाच्यम्, यथा दाहकोऽपि अग्निः स्वसमीपे प्राप्तमेव दाहयोग्यमेव च वस्तु दहति न अप्राप्तं न वा दाहायोग्यं वस्तु दहति। यथा वा स्फटिकमणिदर्पणादयः प्रतिबिम्बग्राहकाः स्वच्छाः प्रकाशस्वभावाः सन्तोऽपि यदेव वस्तु तेषां समीपे उपस्थाप्यते योग्यं च भवति तदेव तत् प्रतिबिम्बग्रहणेन दर्शयन्ति, एवमेवायं पुरुषो ब्रह्मादिभोगायतनशरीरस्थो नित्यचैतन्योऽपि सन् भोगसाधनैरिन्द्रियैः प्रापितानेव शब्दादिविषयान् प्रतिबिम्बग्रहणात्मकेन रूपेण भुङ्क्ते, न सर्वान् इन्द्रियैरनुपस्थापितानपि भुङ्क्ते। अतो न सर्वस्य सर्वज्ञत्वप्रसङ्गो न वा विज्ञानरूपत्वेन बद्धमुक्तयोरविशेषाद् बद्धवद् मुक्तस्यापि बाह्यविषयोपभोगप्रसङ्ग इति मन्तव्यम्। मुक्तौ विषयोपस्थापकसाधनाभावाद् न मुक्तस्य बाह्यविषयोपभोग इति यावत्।

स्यादेतत् — सर्वगतस्य सर्वमेव विषयत्वेन वर्तते, तत्र किमुपनेयम्? उच्यते — यस्याप्यज्ञस्यात्मनो ज्ञानं मनःसंयोगादिजन्यम्, तस्यापि सर्वमनोभिः सर्वात्मनां संयोगात् कथमुपभोगव्यवस्था? मनःसंयोगमुखेन सर्वे हि तद्विषया विषयत्वेऽस्य वर्तन्ते।

अथास्य कर्मनिबन्धनत्वादुपभोगस्य कर्मनिमित्ता व्यवस्था, सा चितिरूपात्मवादिनोऽपि न दण्डवारिता। अपि चास्याभेददर्शनपरिनिष्पत्त्या

---

ननु दाहकस्य वह्निप्रभृतेरसर्वगतत्वेन यद् दाह्यवस्तु नाग्निना सन्निहितम्, दाहार्यं तस्य वस्तुन उपनयोऽपेक्षितो भविष्यति। किन्तु आत्मनस्तु सर्वव्यापकत्वेन सर्वे विषयास्तस्य सन्निहिता एव सदा वर्तन्त इति तत्र काऽपेक्षा विषयोपनयस्य? तथा च सर्वस्य सर्वदर्शित्वप्रसङ्गः, मुक्तस्य विषयोपभोगप्रसङ्गश्च दोषौ तदवस्थावेव स्त इति चेत्, अत्रोच्यते — दोषोऽयं ज्ञानस्यात्मगुणत्ववादिनः काणादस्यापि चेतसि आपतति। तथा हि, तस्य मते आत्मा स्वतोऽज्ञो जडोऽस्ति मनःसंयोगादिना तस्य ज्ञानमुत्पद्यते। आत्मनश्च तन्मतेऽपि सर्वगतत्वेन सर्वमनोभिरेव सह तस्य सदा संयोगोऽस्तीति सर्वस्य सर्वज्ञानं जायेत, भोगव्यवस्थापि विलुप्येत। अर्थाद् बद्धवद् मुक्तस्यापि विषयोपभोगः प्रसज्येत।

यद्युच्येत — सर्वमनोभिरात्मनः संयोगे सत्यपि यो विषयो यस्यात्मनः सम्बद्धस्तस्यैव विषयस्य तेनात्मना ज्ञानं जनिष्यत इति न सर्वस्य सर्वदर्शित्व-प्रसङ्गो दोष इति। तदपि नोचितम्, प्रतिमनःसंयोगमुखेन सर्व एव विषया अस्य विभोरात्मनो विषया भवतोऽपि मते वर्तन्त एवेति तवाप्ययं दोषस्तुल्य एवेति नाहमेवोपालभ्य इति भावः।

ननु काणादमते आत्मनो विषयोपभोगो न विषयसन्निधानमात्राद् अभ्युपगम्यते, किन्तर्हि? कर्मनिबन्धनो भोगो भवति। अतो यस्यात्मनो यादृशं कर्म तस्यैव तत्कर्मानुसारी विषयोपभोगो भविष्यति, न सर्वेषामात्मनामिति कर्मनिमित्ता

**सर्वस्मिन्नात्मभावमापन्ने दृश्याभावादेव न दर्शनं दृक्स्वभावस्यापि, दग्धुरिव वह्नेर्दाह्याभावान्न दाहः प्रकाशस्येव च प्रकाश्याभावान्न प्रकाशकता।**

**तदुक्तम्– ''न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते, अविनाशित्वात् न तु तद् द्वितीयमस्ति ततोऽन्यद् विभक्तं यत्पश्येत्'' (बृ. ४/३/२३), ''यत्र त्वस्य सर्वमात्मैवाभूत्'' (बृ. ४/५/१५) इत्यादि।**

**विज्ञानादिविशेषगुणनिवृत्तिलक्षणा च मुक्तिरुच्छेदपक्षान्न भिद्यते। न हि सतोऽप्यात्यन्तिको दर्शनाभावोऽभावाद् विशिष्यते। कश्च सर्वतः प्रेयस आत्मनोऽभावमभिकाङ्क्षेदित्यपुरुषार्थो मोक्षः स्यात्।**

---

विषयोपभोगव्यवस्था स्यादिति न मुक्तस्य विषयोपभोगप्रसङ्ग इति चेत्, न, एवंविधा व्यवस्था विज्ञानस्वरूपात्मवादिनो वेदान्तिनोऽपि भवितुमर्हत्येव, न तु दण्डेन सा वारयितुं शक्या।

अपि चास्य ब्रह्मात्मैक्यज्ञानिनः सर्वाद्वैतबुद्ध्युदयेन सर्वोऽपि विषयप्रपञ्च आत्मभावमापन्नो भवति। अत आत्मनः पृथग् दृश्याभावादेव दृक्स्वरूपस्यापि तस्यात्मनो न विषयदर्शनं भवति। यथा दग्धृस्वभावोऽप्यग्निर्दाह्यपदार्थाभावे न दहति। प्रकाशस्वभावोऽपि च प्रदीपः प्रकाश्यवस्तुनोऽभावे न प्रकाशको भवति, तद्वदिहापि ज्ञेयम्।

ज्ञानस्य नित्यस्वप्रकाशत्वे श्रुतिं प्रमाणयति–**न हि द्रष्टुरिति, यत्र त्वस्य सर्वमात्मैवाभूदिति** च। श्रुत्यर्थाः स्पष्टाः। अत्र नित्यस्वप्रकाशत्वे अविनाशित्वं हेतुरुक्तः श्रुतौ। तथा सर्वदर्शित्वप्रसङ्गाभावे च दृश्यभूतस्य द्वितीयस्याभावो हेतुः। अत्रैव सर्वस्य आत्मभावोऽपि हेतुरुक्तः।

यो हि विज्ञानादिविशेषगुणवदात्मवादी काणादपक्षीयः, तन्मते विज्ञानादि-विशेषगुणनिवृत्तिरेव मुक्तिरभिप्रेता, सा च मुक्तिरुच्छेदपक्षान्न भिन्नेति तन्मते मुक्तिरुच्छेदात्मिकैव प्रसज्येत। यतो हि सदात्मकानामपि विशेषगुणानां यदि आत्यन्तिकी अननुभूतिस्तदा तादृशी अननुभूतिरात्मनोऽभावरूपैव।

अयमाशयः – काणादमते विशेषगुणानामनुभवमाध्यमेनैव आत्माऽनुभूयते, नान्यथा। तथा च मुक्तिकाले यदि विशेषगुणानामात्यन्तिको दर्शनाभावोऽङ्गीक्रियते, तदा विशेषगुणदर्शनायत्तस्यात्मदर्शनस्याप्यात्यन्तिकोऽभावोऽङ्गीकरिष्यत एव तैः। तथा च कस्यापि वस्तुन आत्यन्तिकदर्शनाभावस्तद्वस्त्वभावान्नातिरिच्यते। एवमात्मनोऽपि मुक्तिकाले आत्यन्तिकदर्शनाभाव आत्मनोऽभाव एवेति काणादमते आत्माभाव एव मुक्तिः प्रसज्यते। स चात्माऽभाव आत्मोच्छेदादनतिरिक्तः कथं पुरुषार्थः स्यात्? तथा च मुक्तिरात्मनोऽभावरूपा प्रसज्येत काणादमते। न चेष्टापत्तिः, वित्तपुत्रादिसर्वापेक्षया प्रियतमस्यात्मनः को नाम पुरुषोऽभावमभि-कामयेत? तथा च काणादमते मोक्षस्यापुरुषार्थत्वप्रसङ्ग इति।

ननु मुक्तिदशायां कथमात्मन आत्यन्तिकदर्शनाभावः? ईश्वरेण योगिभिश्च मुक्तात्मनां प्रत्यक्षीकरणात्। तथा स्वेन च पूर्वं भाविन्या मुक्त्यवस्थायाः प्रमाणतो निर्णीतत्वेन तदानीमात्मोच्छेदस्याप्रामाणिकत्वाद् इति चेत्, न, सर्वत्र वर्तमान-दशायां परोक्षतयाऽपरोक्षतया वा स्वेनानुभूयमानस्यैव पुरुषार्थत्वस्वीकारात्। काणादमते च नवानामपि गुणानामत्यन्तोच्छेदेऽनुभवासम्भवाद् मुक्तावस्था नाभावाद् विशिष्यत इति भावः।

एतत्सम्बन्धे वेदान्तोपयोगी कश्चित् सांख्यपक्षीयो विचारः। तत्र पूर्वपक्षः – यो हि ज्ञानं जन्यं मन्यते, तस्य कर्मनिमित्ता क्वचिज्ज्ञानोत्पत्तिः क्वचिन्नेति व्यवस्था उपपद्येत। किन्तु यस्य नित्यं ज्ञानं तस्य कर्मनिमित्ता ज्ञानोत्पत्तिव्यवस्था न सम्भवति, नित्यत्वादेव। यदि तस्यापि ज्ञानं जन्यं भवेत् तदा ज्ञानस्वभाव आत्माऽपि तन्मते जन्यः स्यात्। तथा चानित्यत्वेन आत्मनाशापत्तिः। आत्मनाशे च सर्वानुपलब्धिरेव प्रसज्येत, न तु व्यवस्था स्यात्। न च व्यवस्थामोहे एकस्यात्मनः विषयभेदेन नाशानाशौ सम्भवतः। न च यथा पटादिभिः किञ्चिद् वस्तु आव्रियते, तद्वदेव कर्मभिः कश्चिद् विषयो व्यापकादात्मनोऽपसार्यत इति सम्भवी, व्यापकत्वादेवात्मनस्तथाऽसम्भवात्।

अपि च यदि क्वचिद् ज्ञानं क्वचिन्नेति व्यवस्था कर्मनिमित्ता स्यात् तदा यस्य मुक्तस्य अशेषकर्माणि क्षीणानि जातानि, तस्य व्यवस्थाहेतुकर्मणोऽभावात् सर्वदर्शित्वं दुर्वारं स्यात् ।

अत्रेदं समाधानम्—ज्ञानरूप आत्मा, न ज्ञाता। ज्ञानात्मकेऽप्यात्मनि ज्ञातृत्वन्तु कर्तृशक्त्यहङ्कारोपरागनिबन्धनमेव न स्वाभाविकम्। स चाहङ्कारो भोगायतनदेहस्थः सन् भोगायतनदेहावच्छेदेनैव आत्मनि ज्ञातृत्वमवभासयति न सर्वत्र। अतो व्यापकस्याप्यात्मनो ज्ञातृत्वं प्रादेशिकमेव न सार्वत्रिकम्। तस्माद् भोगायतनस्थ एवात्मा ज्ञाता भवति नान्यत्र सन्नपि। तथा च यो विषयो भोगसाधनैः भोगायतनं प्रत्युपनीतो भवति, स एव विषयो ज्ञातुः कृते सन्निहितो भवति, नान्यो विषय इति ज्ञानात्मवादिनोऽपि ज्ञानाज्ञानव्यवस्था सिद्ध्यति ।

ननु ज्ञानरूपस्यात्मनो विभुत्वात् सर्वज्ञेयसम्बन्धोऽस्तीति "अहं सर्वं जाने" इति परामर्शः कथं न भवतीति चेत्, न, ज्ञानरूपस्यात्मनो मम मतेऽज्ञातृत्वात् । ज्ञातुरेवायं परामर्शो "जाने" इति। ज्ञाता च भोगायतनदेहावच्छिन्न एव न सार्वत्रिक इति प्रतिपादितपूर्वम् । तस्मान्न "सर्वं जाने" इति परामर्शप्रसङ्गः। अत एव बद्धजनवद् मुक्तस्यापि न बाह्यविषयाणां ज्ञातृत्वं भोगो वा। यतो हि शरीरस्थस्यैव ज्ञातृत्वादिकं भवति नाशरीरस्य मुक्तात्मनः, "सशरीरं वावसन्तं प्रियाप्रिये स्पृशतः", "नाशरीरस्य सतः प्रियाप्रिये स्पृशतः" इति श्रुतेः।

तस्मान्मुक्तौ आत्मा ज्ञानमात्रतयाऽवतिष्ठते, न ज्ञातृतया।अतो विभुनाऽऽत्मना सम्बद्धमपि जगत्तत्त्वं न ज्ञेयरूपतया सम्बद्धम्। ज्ञानकर्म हि ज्ञेयमुच्यते, कर्तुरिव च कर्मणा सम्बन्धः। कर्ता ज्ञाता च भोगायतनस्थ एव भवति, न विभुज्ञानस्वरूप आत्मेति प्रपञ्चितमधस्तादनुपदमेवेति बोध्यम्।

ननु किमपि ज्ञानं ज्ञेयं विना न भवति। यतो हि ज्ञाधातुः सकर्मकः। अतो मुक्तस्य ज्ञानं ज्ञेयं विना कथमवतिष्ठेत? इति चेत्, न, प्रकाश्याभावेऽपि आदित्यप्रकाशवज्ज्ञेयाभावेऽपि मुक्तज्ञानावस्थाने न काचिदनुपपत्तिः ।

ननु ज्ञेयाभावेऽपि ज्ञानावस्थितिस्वीकारे ज्ञाधातोः सकर्मकत्वं व्याहतं स्यादिति चेत्, सत्यम्, यद्धि ज्ञानं सकर्मकं तत्तु बुद्धिव्यापारो बुद्धेः क्रिया।

अतो न मुक्तज्ञानस्य नित्यस्य कर्मव्यपेक्षा। क्रिया हि क्षणिका भवति, नित्यं ज्ञानं तु न क्रिया अक्षणिकत्वात्। अत एव नित्यं ज्ञानं न सकर्मकम्। बुद्धिव्यापारस्तु ज्ञानं क्षणिकतया क्रियारूपम्, अतस्तदेव सकर्मकं भवितुमर्हति।

ननु आत्मा यदि वस्तुतः शुद्धज्ञानस्वरूपस्तदा अहङ्कारोपरागनिबन्धनस्य ज्ञातृत्वस्य तस्मिन्नध्यासे सत्यपि कथं तस्य ज्ञानात्मनो ज्ञेयसम्बन्धः स्यात्? इति चेत्, सत्यम्, ज्ञेयसम्बन्धो हि वृत्तिरूपक्रियागर्भः, क्रिया च सा बुद्धेरेव धर्मः। तस्माद् ज्ञातृत्वाध्यासदशायां बुद्धिक्रियाप्रयुक्त एव ज्ञानात्मनो ज्ञेयस्य च कर्तृकर्मभावसम्बन्धो न स्वतः।

यद्युच्येत – अन्यक्रियाप्रयुक्तोऽन्ययोः कथं कर्मकर्तृभावः स्यात्? इति चेत्, सत्यं न स्यात्, यदि बुद्धिरन्या ज्ञानात्मा चान्य इत्यन्यत्वावगतिः स्यात्। बुद्ध्यात्मनोरविवेके तु अन्यक्रियाकर्मण्यपि ज्ञानात्मनः कर्तृता स्यादेव अविवेकात्। यथा हि गमनक्रिया देहे भवति किन्तु तद्भिन्नस्यास्मदर्थस्य "अहं ग्रामं गच्छामि" इति ग्रामास्मदर्थयोः कर्मकर्तृभावो भवति अविवेकात्, तद्वदिहापि स्यात्।

नन्वेवं द्वे ज्ञाने प्रसज्येते – एकं बुद्धिक्रियागर्भं ज्ञेयसम्बन्धरूपम्, द्वितीयं च ज्ञानमात्मरूपमिति चेत्, न, वस्तुतः स्वप्रकाशा चिदेव ज्ञानमस्ति, तदविवेकात् तु लोको बुद्धिवृत्तौ ज्ञानपदं प्रयुङ्क्ते इति मन्तव्यम्।

ननु लोकप्रयोगादेव शब्दार्थो गम्यते, अतो बुद्धिवृत्तौ यदि ज्ञानपदप्रयोगो लोके भवति, तदा बुद्धिवृत्तिरेव मुख्यो ज्ञानपदार्थः स्यात्, न तु स्वप्रकाशा चिद् इति चेत्, न, स्वयंप्रकाशज्ञानाध्यासेनैव बुद्धिवृत्तौ लोकानां ज्ञानपदप्रयोगात्। यदध्यासेन यः शब्दो यत्र प्रयुज्यते, स एव तस्य मुख्योऽर्थो भवति, यथा रजताध्यासेन रजतशब्दस्य शुक्तौ प्रयुज्यमानस्यापि रजतमेव मुख्योऽर्थो भवति, तद्वत्।

ननु कथमिदमवगम्यते यत् स्वप्रकाशज्ञानाध्यासेनैव बुद्धिवृत्तौ लोके ज्ञानपदप्रयोगो भवतीति चेत्, "घटमहं जानामि" इति ज्ञानावभासात्। न हि जडायां बुद्धिवृत्तौ ज्ञानाध्यासमन्तरा तथाविधः स्वतोऽवभासो भवितुमर्हति जडत्वाभ्युपगमाद् बुद्धिवृत्तेः।

**स्यादेतत् – त्रिविधदुःखोपशमत्वादात्मोच्छेदोऽपि पुरुषेणार्थ्यते। दृश्यन्ते हि तीव्रपापरोगग्रस्ताः स्वोच्छेदाय यतमानाः। सत्यं प्रवृद्धगदोन्मूलित-निखिलसुखा दुःखमयीमिव मूर्तिमुद्वहन्तः। न त्वेवं संसारिणो विविधविचित्रदेवाद्यानन्दभागिनः। तत्र यथा विविधदुःखोपरमत्वात् पुरुषार्थत्वम्, तथा विविधसुखोपरमत्वादपुरुषार्थत्वमपि। यस्य तु विमृष्ट-निखिलदुःखानुषङ्गा परमानन्दसंवेदनावस्था, तस्यैकान्तिकं पुरुषार्थत्व-मित्यलमतिप्रसङ्गेन।**

---

नित्यज्ञानस्य ज्ञानशब्दवाच्यत्वे वेदोऽपि प्रमाणमस्ति, यथा "सत्यं ज्ञानमनन्तम्" इति। न हि क्षणिकाया बुद्धिवृत्तेरनन्तत्वमवकल्पते। तस्मान्नित्यज्ञान एव ज्ञानशब्दप्रयोगोऽत्रेति मन्तव्यम्।

अथवा स्वप्रकाशस्य नित्यज्ञानस्य ज्ञेयेन सह सम्बन्धो योग्यतालक्षण एव स्वीक्रियते "असङ्गो ह्ययं पुरुषः" इति श्रुतेस्तस्यासङ्गत्वबोधनात्। दर्शनयोग्यता च विषयस्य बुद्ध्यारूढस्यैव। अत एव न सर्वस्य सर्वविषयोपलब्धिप्रसङ्गः। तस्मात् स्वप्रकाशं नित्यज्ञानमेव ज्ञानशब्दस्य मुख्योऽर्थः। बुद्धिवृत्तौ तु ज्ञानशब्दप्रयोगोऽध्यासादमुख्य इति। तदेष वेदान्तेऽप्युपयोगितया प्रसङ्गात् शङ्खपाणिकृतस्य सांख्यमताभिधानस्य विशदार्थो बोद्धव्यः।

अत्र केचिदाशङ्कन्ते – **स्यादेतदिति**। यदि आत्मोच्छेदस्त्रिविध आधिभौतिकाधि-दैविकाध्यात्मिकदुःखोपशमाय कल्पते, तर्हि आत्मोच्छेदोऽपि पुरुषार्थोऽस्त्येव, तादृशात्मोच्छेदस्य पुरुषेणार्थ्यमानत्वात्। लोके ह्येवं दृश्यन्ते जना ये तीक्ष्णै-र्वेदनामयैः पापरोगैः कुष्ठादिभिर्ग्रस्ताः सन्त आशु तन्निवृत्तिकामा भृगुपतनादिना स्वोच्छेदाय चेष्टमाना भवन्तीति।

अत्रेदं समाधानम् – सत्यमिदमस्ति यत् प्रवृद्धैः प्रोदृक्तैर्नानाव्याधिभिर्येषां समस्तं संसारसुखमुन्मूलितं ते दुःखबहुलं निजदेहयष्टिं जीवनभारभूतामिवोद्वहन्तः स्वोच्छेदाय यतमाना भवन्तीति। किन्तु ये पुण्यशीलाः संसारिणो विविधान् नवनवान् देवादिभोग्यान् आनन्दान् अनुभवन्तः सन्ति, ते नात्मोच्छेदाय यतन्ते,

**अक्षरमिति शब्दात्मतामाह, विशेषेण सामान्यस्य लक्षणात्। अपरिणामित्वं वा, परिणामे पूर्वधर्मनिवृत्तेः क्षरणस्य भावात्, तद्व्युदासेन।**

**कथं तावच्छब्दात्मता? "परं चापरं च ब्रह्म यदोङ्कारः" (प्रश्नो.५/२) इत्यादिश्रुतिभ्यः। न चेदमभिधेयापेक्षम्, कारप्रत्ययान्तस्य शब्दस्वरूपत्वात्। अवर्णादपि वर्णसमुदायात् परः कारप्रत्ययो दृश्यते— "एवकारः किमर्थः? किमर्थश्चकारः" इति।**

---

प्रत्युत तथाविधानन्दभोगानां नैरन्तर्यमेव वाञ्छन्त उद्योगवन्तो भवन्ति। तस्माद् एकतो त्रिविधदुःखोपशमरूपत्वात् स्वोच्छेदः पुरुषार्थस्तर्हि अन्यतो विविध-सुखोपरमस्वरूपत्वात् स्वोच्छेदोऽपुरुषार्थोऽप्यस्ति। अत आत्मोच्छेदो नैकान्ततः पुरुषार्थत्वेन कल्पयितुं शक्यः। ऐकान्तिकं पुरुषार्थत्वन्तु प्रणष्टसकलदुःखानुषङ्गाया वेदान्ताभिमतायाः परमानन्दसंवेदनावस्थाया एवास्ति। सा चावस्थाऽनिष्टनिवृत्ति-सहकृतेष्टप्राप्तिरूपास्तीत्यलं विस्तरेण।

**"अक्षरम्"** इति यद् ब्रह्मणो विशेषणमुक्तं मङ्गलश्लोके, तस्यार्थः शब्दतन्मात्ररूपं ब्रह्मास्तीति। न तु अकारादिवर्णोपेतो विशेषरूप ओङ्कार इहाक्षरशब्दार्थ इति। अर्थात् केवलमोङ्काररूपं विशेषात्मकं ब्रह्म नेह विवक्षितं किन्तु ओङ्कारात्मकविशेषस्य ब्रह्मविवर्तभूतस्य यत् सामान्यरूपं शब्दतन्मात्रं तदात्मकं ब्रह्म इत्यर्थः। एवं विवक्षायां हेतुमाह— **विशेषेणेति**। अर्थाद् विशेषेण ओङ्कारात्मकेन अक्षरेण सामान्यात्मकं शब्दतन्मात्रं लक्षणयोक्तमित्यर्थः। एकमेव सामान्यात्मकं शब्दब्रह्म, तस्यैव सामान्यशब्दात्मकब्रह्मणोऽनाद्यविद्यावशाद् वर्ण-पद-वाक्य-प्रकरण-काण्ड-शाखादिरूपानेकविधविवर्तभेदोऽस्तीत्यर्थः। यदि हि श्रोत्रगम्यमकाराद्यक्षरात्मकं ब्रह्म स्यात् तदा सर्वात्मकत्वप्रतिपादिन्या श्रुत्या विरोधः प्रसज्येत। तस्माद् इह लक्षणया सामान्यशब्दात्मकं ब्रह्मास्तीति प्रतिपिपादयिषितं मिश्राणामिति तात्पर्यम्।

**नन्विदमन्यथैव व्याचक्षते – सर्वविशेषातिगस्य ब्रह्मण उपासितुमशक्यत्वात् प्रतीकोपदेशोऽयम् – अस्मिन्नालम्बने ब्रह्म उपासितव्यम्। यथा देवतायाः साक्षात् पूजाऽसम्भवात् तल्लाञ्छने दारुणि अश्मनि वा**

---

अथवा "अक्षरम्" इति पदेन अपरिणामित्वं ब्रह्मण उक्तम्। यदि ब्रह्मणि परिणामः स्यात् तदा परिणामे पूर्वधर्माणां निवृत्तौ सत्यां ब्रह्म क्षयशीलं प्रसज्येत। अतोऽत्र "अक्षरम्" इति विशेषणेन ब्रह्मणः परिणामित्वं व्युदस्यते।

ननु ब्रह्म शब्दात्मकं कथं प्रतीयेत, प्रमाणाभावादिति चेत्, न, ब्रह्मणः शब्दात्मकत्वे प्रत्यक्षादिप्रमाणाभावेऽपि "परं चापरं च ब्रह्म यदोङ्कारः" इत्याद्याः श्रुतय एव तत्र प्रमाणानि सन्ति। आदिपदेन "ओमितीदं सर्वम्" इत्यादिश्रुतिर्ग्राह्या।

न चानया श्रुत्या ब्रह्मण ओङ्कारशब्दात्मकत्वं नोच्यते, किन्तु ओङ्कारशब्दस्य योऽभिधेयार्थः स एव ब्रह्म "तस्य वाचक प्रणवः" इति पातञ्जलसूत्रात्। तस्यैव परत्वमपरत्वं चोक्तमिति वाच्यम्, यः कारप्रत्ययान्तो भवति, स शब्द एव भवति, न अभिधेयार्थः। "वर्णात् कारः" इत्यनुशासनेन वर्णादेव कारप्रत्ययस्य विधानात्। ननु "वर्णात् कारः" इत्यत्र वर्ण एकत्वसंख्याया विवक्षितत्वेन एकस्मादेव वर्णात् कारप्रत्ययो भवितुमर्हति, न तु "ओम्" इति नाम्नो वर्णसमूहादिति चेत्, न, "वर्णात्" इत्येकत्वस्याविवक्षितत्वेन अवर्णादपि अर्थाद् एकत्वसंख्याविरहिताद् वर्णसमूहाद् अपि कारप्रत्ययस्य विधानदर्शनात्। यथा – "एवकारः किमर्थः किमर्थश्चकारः" इत्यादि। अत्र एवकार इति वर्णसमुदायोदाहरणम्, चकार इति एकत्वसंख्यावत एकवर्णस्योदाहरणं मूलकारेण दत्तमित्यवधेयम्।

ननु "परं चापरं च ब्रह्म यदोङ्कारः, ओमितीदं सर्वम्" इत्यादिश्रुतिषु ब्रह्मणोऽक्षरत्वं नाभिप्रेतम्, किन्तु प्रतीकोपासनविधानमिदम् – ओङ्कारत्वेन **ब्रह्म उपासितव्यमिति,** ओङ्कारे ब्रह्मबुद्धिः कार्या इति यावत्। यतो हि निर्विशेषं हि ब्रह्म सकलविशेषातिक्रान्तं नोपासितुं शक्यमत उक्तश्रुत्या ब्रह्मोपासनायाः प्रतीकमुपदिश्यते "अस्मिन् ओङ्काराक्षरे आलम्बने ब्रह्म उपदिश्यते" इति।

पूजाविधानं तद्बुद्ध्या, तथा ध्याता देवता सा प्रसीदतीति। अनेन वाऽभिधानेन तद् ध्येयम्, प्रणवस्य तदभिधानत्वात्।

उच्यते – "ओमित्यात्मानं ध्यायथ" (मुण्ड.२/२/६) "ओमिति युञ्जीत" (महानारायण.२४/२) इति यत्र योगाङ्गता श्रूयते तत्रैवम्। यत्र तु युञ्जीतेत्यादेरश्रवणात् तादात्म्य एव पर्यवस्यति वाक्यम्, तत्र नेत्थम्। यथा – "ओमिति ब्रह्म, ओमितीदं सर्वम्" (तैत्ति. १/८/१), "तद्यथा शङ्कुना..." (छा. २/२३/३) इत्यादि, "ओङ्कार एवेदं सर्वम्" (छा. २/२३/३) इति।

---

उक्तश्रुतेरीदृशव्याख्यायां दृष्टान्तमाह – **यथेति**। अयमाशयः – यथा विष्ण्वादिदेवतायाः साक्षात् पूजा न सम्भवतीत्यतः शङ्खचक्रादितच्चिह्नाङ्किते दारुणि प्रस्तरे वा विष्ण्वादिबुद्ध्या पूजाविधानं शास्त्रेषूपलभ्यते। तत्रैष शास्त्रसङ्केतः – तादृशपद्धत्या ओङ्कारात्मना कृतध्याना सा देवता प्रसन्ना भवतीति। प्रसन्ना च सती अभीष्टं फलं ददातीति। अथवा ओङ्कारो नाम ब्रह्मणः संज्ञा "तस्य वाचकः प्रणवः" इति पातञ्जलसूत्रप्रामाण्यात्। तया संज्ञया तद् ब्रह्म ध्येयमिति। नाम्ना स्मरणेनापि ब्रह्मदेवता प्रसीदतीति। लोके देवदत्तादिसंज्ञया देवदत्तः स्मर्यते, रामकृष्णादिनामभी रामादयः स्मर्यन्त इतिवत्।

एवम्, ओङ्कारात्मके अक्षरे आलम्बनविषये ब्रह्मोपासितव्यम्। अथवा ओङ्कारेति नाम्ना ब्रह्म ध्येयमिति उक्तश्रुतेस्तात्पर्यमिति मतद्वयमुपन्यस्य तद्दूषयति – **उच्यत इति**। अयमाशयः – यत्र "ओमित्यात्मानं ध्यायथ, ओमिति युञ्जीत" इति श्रुत्या ओङ्कारस्य ध्यानाङ्गत्वं योगाङ्गत्वं वा स्फुटमुच्यते, तत्र ओङ्कारात्मकप्रतीकरूपेण ब्रह्मोपासनं श्रुतिविहितमित्यवगन्तुं कामं शक्यते। किन्तु यत्र श्रुतौ "ध्यायथ" "युञ्जीत" इति पदं न श्रूयते तत्र ओङ्कारब्रह्मणोस्तादात्म्य एव तद्वाक्यस्य पर्यवसानं भवति, न तु प्रतीकरूपेण ब्रह्मोपासने श्रुतितात्पर्यं भवतीति। यथा – "ओमिति ब्रह्म, ओमितीदं सर्वम्, तद्यथा शङ्कुना एकेन

**अत्र हि सर्ववागनुगमेन तदत्यागाद् ओङ्कारो वाचस्तत्त्वमिति दर्शयित्वा वाग्रूपात्यागाच्च रूपप्रपञ्चस्य "ओङ्कार एवेदं सर्वम्" (छा. २/२३/३) इत्युपसंहरति।**

**यत्रापि "एतेनैव परं पुरुषमभिध्यायीत" (प्रश्न. ५/५) इति श्रवणम्, तदपि सर्वात्मभावप्रतिपादनपूर्वकम्। न च सर्वात्मभाव औपचारिकः स्तुत्यर्थ इति युक्तम्, मुख्यार्थत्वेऽप्यविरोधात्। सर्वस्य हि प्रत्यक्षाद्यनवसेयं शास्त्रगम्यमिदं रूपं न विरुध्यते। न हि प्रमाणान्तरेणानवगमः प्रमाणान्तरस्य**

---

सर्वाणि पर्णानि संतृण्णानि एवमोङ्कारेण सर्वा वाक् संतृण्णा, ओङ्कार एवेदं सर्वम्" इत्यादिश्रुतिषु ओङ्कारस्य ब्रह्मतादात्म्यं तादात्म्येन सर्ववागनुगतत्वं सर्वात्मत्वमेवोच्यते।

अत्र "तद्यथा शङ्कुना..." इति श्रुतिवाक्ये ओङ्कारस्य पूर्वं सर्ववागनुगतत्वं दर्शितम्। तेन ओङ्कारस्य सर्ववाक्षु अत्यागो दर्शितो भवति। तेन च ओङ्कार एव सर्ववाचां तत्त्वमिति दर्शितं भवति। तदनन्तरं चोपसंहारे **"ओङ्कार एवेदं सर्वम्"** इति वाक्येन समस्तस्य रूपप्रपञ्चस्य वाग्रूपात्यागेन हेतुना समस्तवागनुस्यूतौङ्कारात्मकत्वं प्रतिपादितमस्तीति बोध्यम्।

तस्मात् "परं चापरं च ब्रह्म यदोङ्कारः, ओमितीदं सर्वम्" इत्यादिश्रुतिषु ब्रह्मणोऽक्षरत्वमेव दर्शितम्, न तु ओङ्कारबुद्ध्या ब्रह्मोपासितव्यमिति भेदगर्भितं प्रतीकोपासनं विहितमिति स्वीकरणीयम्।

ननु "एतेनैव परं पुरुषमभिध्यायीत" इति श्रुतौ "एतेन" इति भेदगर्भं पुरुषोपासनं विहितं प्रतीयते, तत् कथमोङ्कारब्रह्मणोस्तादात्म्येनाभेदगर्भमुपासनं स्वीक्रियतामिति चेत्, न, तयाऽपि श्रुत्या "एतेन" इति सर्वनामपदस्य बुद्धिस्थपूर्वोक्तपरामर्शित्वेन पूर्वोक्तसर्वात्मकौङ्काराभेदेन पुरुषाभिध्यानं विहितम्। अर्थाद् यत् सर्वात्मकौङ्कारस्तद् ब्रह्मैव, यद् ब्रह्म परापरात्मकं तदोङ्कार एवेति ओङ्कारब्रह्मणोस्तादात्म्यमेव ध्यातव्यमित्येव "एतेनैव परं पुरुषमभिध्यायीत" इति श्रुतेरपि तात्पर्यविषय इति।

**विषयमपहरति। "तस्माद् विद्वान्" (प्रश्न. ५/२) इति च सार्वात्म्यविद एव तेन ध्यानोपदेशः, न च तदन्यतः।**

**तस्मादनन्तरमेव वाक्यं तत्र पर्यवसितम्। ततोऽधिगतसार्वात्म्यस्य सतो ध्यानोपदेशः।**

---

न च ओङ्कारस्य सर्वात्मकत्वप्रतिपादिका श्रुतिरर्थवादत्वाद् औपचारिकी गौणी स्तुतिमात्रप्रयोजना मन्तव्येति वाच्यम्, यत्र मुख्यार्थत्वे प्रमाणान्तरविरोधो भवति, तत्र प्रमाणान्तरविरोधाद्धेतोर्गौणार्थकल्पना युज्यते। यत्र तु प्रमाणान्तरविरोधो नास्ति तत्र श्रुत्या प्रतीयमानस्य अबाधितस्य मुख्यार्थस्य परित्यागं विधाय अश्रुतस्य गौणार्थस्य कल्पनाया अयुक्तत्वमेव।

ननु सर्वस्यौङ्कारात्मकत्वं प्रत्यक्षादिना नोपलभ्यते, अतोऽत्र प्रत्यक्षादि-प्रमाणान्तरविरोधोऽस्त्येवेति चेत्, न, श्रोत्रगम्यो वर्णात्मको य ओङ्कारस्तदात्मकत्वं सर्वस्य प्रत्यक्षविरुद्धं भवतु नाम, किन्तु प्रत्यक्षादिप्रमाणैरनवगम्यमागममात्रगम्यं यदोङ्कारस्य स्वरूपमस्ति, तदात्मकत्वं चेत् सर्वस्य श्रुत्या प्रतिपाद्यते, तदा तत्र न कश्चित् प्रमाणान्तरविरोधप्रसङ्ग इति। न हि प्रमाणान्तरेण नावगम्यत इत्येतावन्मात्रात् प्रमाणान्तरगम्यस्य विषयस्यापलापो भवति। न हि उलूकेन सूर्यो न दृश्यत इति निदाघे त्वगिन्द्रियेणानुभूयमानस्य तत्तापस्यापलापो भवति। तद्वदिहापि प्रत्यक्षादिना सर्वस्यौङ्कारात्मकत्वानुपलब्धिः शास्त्रगम्यं सर्वस्यौङ्कारात्मकत्वमपसारयितुं न शक्नोतीति मन्तव्यम्। न ह्यागमगम्यं धर्मादिकं प्रत्यक्षानुपलब्धितोऽसद् भवति, तद्वदित्याशयः।

एवम्, "तस्माद् विद्वान् एतेनैव परं पुरुषमभिध्यायीत" इत्यत्र "विद्वान्" इति विशेषणवचनाद् ज्ञानिन एवात्रोपासनायामधिकारः श्रूयते, ज्ञानी चात्र स एव, य ओङ्कारस्य सर्वात्मत्वं जानाति। तस्मादत्र सार्वात्म्यविद एव ध्यानोपदेशः कृतो न भेदद्रष्टुः।

ओङ्कारस्य सार्वात्म्यज्ञानं च शास्त्रादन्यतः प्रत्यक्षादितो न भवति, प्रत्यक्षादे-रयोग्यत्वात्। अतः "तस्माद् विद्वान्" इति प्रत्यासत्तेः अर्थवादवाक्यस्यापि

**अथवा– "वागेव विश्वा भुवनानि जज्ञे वागेवेदं बुभुजे वागुवाच" इत्यादौ वाचः सार्वात्म्यं श्रूयते। तथा वाक्सूक्ते वाचः सर्वात्मत्वं सर्वेशित्वं च प्रदर्शितम्– "अहं रुद्रेभिर्वसुभिश्चरामि" (ऋ० सं० १०/१२५/१) इति वाचैव। यथाऽऽत्मनि प्रतिबुद्धेन वामदेवेन– "अहं मनुरभवं सूर्यश्च" (बृ. १/४/१०) इति।**

**अपि च प्रकृतिरूपान्विता विकाराः, वाग्रूपान्वितं च जगत्, अतो वाचो विपरिणामो विवर्तो वाऽवसीयते।**

---

ओङ्कारस्य सर्वात्मत्व एव पर्यवसानं भवति, न तु तदतिक्रम्य गौणार्थत्वे पर्यवसानं भवति। तस्माद् अर्थवादाज्जातौङ्कारसर्वात्मत्वज्ञानस्य पुरुषस्यैवायं ध्यानोपदेश इति सिद्धमोङ्कारस्य सर्वात्मत्वमिति भावः।

प्रकारान्तरेण ब्रह्मणोऽक्षरात्मकत्वमुच्यते– **अथवेति**। तत्र "वागेव विश्वा भुवनानि" इत्याद्याः श्रुतयः प्रमाणं सन्ति। अयं श्रुत्यर्थः– सर्वाणि भुवनानि भोग्यजातानि वागेव जनितवतीत्यतः सर्वोऽपि भोग्यवर्गो वागुपादानत्वेन वागात्मक इति। एवम्, इदं भोग्यजातं सर्वं वागेव भोक्तृभूता सती बुभुजे= भुक्तवतीत्यतः सर्वोऽपि भोक्तृवर्गो वागात्मक इति। तथा च वाचः सर्वात्मकत्वेन सर्वात्मकाद् ब्रह्मणोऽभेदः प्रतिपादितो भवति, वाचोऽक्षरात्मिकाया इति तात्पर्यं श्रुतेः।

एवम् "अहं रुद्रेभिर्वसुभिश्चरामि" इत्यादिवाक्सूक्ते स्वयं वागेवात्मनः सर्वात्मकत्वं सर्वेशित्वं प्रदर्शयति। वसुरूपेण अहमेव चरामि, रुद्ररूपेण चाहमेव चरामि। एवमादित्यादिरूपेणाप्यहमेव व्याप्तास्मीति। वाचो रुद्रादिसर्वात्मकत्वप्रदर्शने दृष्टान्तमाह– **यथाऽऽत्मनि प्रतिबुद्धेन वामदेवेनेति**। आत्मनः सर्वात्मकत्वज्ञानसम्पन्नो वामदेवः स्वयमुवाच– **"अहं मनुरभवं सूर्यश्च"** इति। मन्वादयो न मदतिरिक्ताः, मम ब्रह्मस्वरूपत्वात् सूर्यादीनाञ्च ब्रह्मानतिरिक्तत्वादिति तात्पर्यम्।

**कथं तदनुगमः? तदुपरागविज्ञानवेदनीयत्वात्। तथा हि-न शब्दात् चक्षुरादिवत् प्रतिपत्तिः, तदसंवेदने अर्थे प्रतिपत्त्यभावात्। नापि धूमादिवद् व्यधिकरणतया, तथा हि धूमादत्राग्निरिति प्रतिपत्तेर्व्यधिकरणतया व्यक्तं वैलक्षण्यं शब्दादर्थावगमस्य संवेद्यते सर्वेण।**

---

एवं यथा मृदादिप्रकृत्यन्विता घटादिविकारा मृदादिपरिणामा विवर्ता वा उच्यमाना मृदात्मका एव भवन्ति, तथैव वाग्रूपान्वितं जगद् वाक्परिणामो वा मन्यतां वाग्विवर्तो वा मन्यताम्, सर्वथा वागात्मकमेव सिद्ध्यति, न ततो भिन्नमित्यनुमानबलादपि वाचः सर्वात्मकब्रह्माभेदो निश्चीयत इत्यभिप्रायेणाह– **अपि चेत्यादि**। तदुक्तम्– "अनादिनिधनं ब्रह्म शब्दतत्त्वं यदव्ययम्" इति।

अत्रेत्थमनुमानप्रकारः– जगद्धर्मि वाचः परिणामो विवर्तो वा, तज्जातिभिन्नं सत् तद्गुण(धर्म)भूतं यद्वाग्रूपं तदन्वितत्वात्, यद् यज्जातिभिन्नगुणभूतं यद्रूपान्वितं भवति तत् तत्परिणामस्तद्विवर्तो वा भवति, यथा घटादयो मृद्रूपान्विता मृदः परिणामा भवन्ति, यथा वा प्रतिबिम्बं बिम्बरूपान्वितं बिम्बस्य विवर्तो भवति, तद्वदिति।

ननु अर्थो यदि शब्दानुगतो भवेत् तदा जगद्धर्मिणि वागनुगतत्वं हेतुरवतिष्ठेत, तदेव तु असिद्धम्, अतो न वागनुगतत्वहेतुना जगद् वाचः परिणामो विवर्तो वा सेद्धुमर्हति इति चेत्, न, वागुपरागसहकृतं यद् विज्ञानं, तद्विषयत्वादर्थजातस्य। अयमर्थः– सर्वं हि अर्थविज्ञानं शब्दोपरक्तमेव भवति न शब्दानुपरक्तम्। अत एव "घटोऽयं पटोऽयम्" इति घटपटादिशब्दोपरक्तमेव घटपटादिविज्ञानं प्रतीयते। तदेव विवृणोति– **तथा हीति**।

अयमाशयः– चक्षुरादीन्द्रियेभ्यो जायमानाया अर्थप्रतिपत्तेर्यः प्रकारस्तद-पेक्षया भिन्न एव प्रकारः शब्दाज्जायमानाया अर्थप्रतीतेः। चक्षुरादितो जायमाने घटादिज्ञाने चक्षुरादयो न भासन्ते, शब्दात्तु जायमाने गवादिज्ञाने गोघटादिशब्दोऽपि भासत एव– गौरयं घटोऽयमिति। अतः शब्दज्ञानविरहे अर्थे प्रतीत्यभावात्, शब्दज्ञाने सत्येव च प्रतीतिसद्भावाद् अन्वयव्यतिरेकसिद्धो हि अर्थे शब्दानुगम इति नासिद्धो हेतुः।

**इतश्चैतदेवम्– यस्तु शब्दयोर्विशेषणविशेष्यभावोऽवगम्यते "नील-मुत्पलम्" इति, अर्थगत एवासौ। अन्यथा यथा "ऊर्ध्वत्वे काकनिलयनात् स्थाणुः" इति परस्परव्यवच्छिन्नाभ्यामर्थाभ्यामर्थान्तरप्रतीतिः, तथा स्यात्।**

---

ननु भवतु नाम शब्दज्ञानसहकृतोऽर्थप्रत्ययः, तथापि न तावता भवतोऽभीष्टसिद्धिः। यतो हि यथा धूमादग्निप्रतीतिस्थले धूमज्ञानप्रयुक्ताऽपि वह्निप्रतीतिर्धूमव्यधिकरणा भवति "धूमादत्राग्निरि"ति। तत्र न धूमस्य परिणामो वा विवर्तो वा भवति वह्निः, तद्वदिहापि शब्दज्ञानसहकृतत्वेऽपि अर्थज्ञानस्य न शब्दस्य परिणामो वा विवर्तो वा भविष्यति अर्थ इति चेत्, सत्यमुक्तम्, किन्तु धूमाद् वह्निप्रतीतिर्व्यधिकरणा प्रतीतिरस्ति "धूमादत्राग्निरिति"। शब्दात् प्रतीतिस्तु न व्यधिकरणा भवति, किन्तु समानाधिकरणा एव भवति– "घटोऽयम्" इति। अतो धूमादग्निप्रतीतिर्घटशब्दाद् घटप्रतीतौ न दृष्टान्तो भवितुमर्हति, व्यधिकरणत्वसमानाधिकरणत्वाभ्यामुभयोर्भेदात्। प्रतीतेः समाना-धिकरणत्वमत्र समानविभक्तिकपदार्थविषयकत्वम्, व्यधिकरणत्वं च असमानविभक्तिकपदजन्यज्ञानविषयपदार्थविषयकत्वरूपमिति ध्येयम्। तथा चोभयोः प्रतीत्योर्वैलक्षण्यं स्पष्टमनुभूयते लोकैः। तस्माद् घटोऽयम् इति समानाधिकरणप्रतीतिबलाद् अर्थस्य शब्दानुगतत्वम्, शब्दानुगतत्वाच्चार्थस्य शब्दपरिणामत्वं विवर्तत्वं वेति सिद्धम्।

अर्थस्य शब्दानुगतत्वे युक्त्यन्तरमाह– **इतश्चैतदेवमिति**। तदेव स्फुटयति– **यस्त्विति**। अयमाशयः – नीलमुत्पलमित्यत्र नीलोत्पलशब्दयोरभेदः प्रतीयते, किन्तु नासावभेदो वस्तुगत्या शब्दगतो वर्तते। यतो हि न हि य एव नीलशब्दः स एव उत्पलशब्दोऽस्ति, भिन्नानुपूर्वीकत्वात् तयोः शब्दयोः। किन्तु अर्थगत एवाभेदस्तत्र शब्दगततया भासते। एवन्तदैव भवितुमर्हति यदा शब्दार्थयोरभेदः स्यात्। तथा च य एव नीलशब्दः स एव नीलोऽर्थस्तथा य एवोत्पलशब्दः स एवोत्पलपदार्थ इति।

**अपि च धूम इव शब्दे प्रतिपत्तिहेतौ न ताद्रूप्येण निश्चयः स्यात्। न च धूमात् प्रमाणान्तराद् वाऽग्नौ निश्चयो धूमरूपानुकारी भवति।**

---

यद्येवं न स्यात्, अर्थाद् नीलोत्पलशब्दाभ्यां नीलोत्पलार्थो भिन्नः सन् प्रतीयेत, तदा "नीलमुत्पलम्" इति सामानाधिकरण्येन व्यवहारो न स्यात्। किन्तु यथा "ऊर्ध्वत्वे सति काकवत्त्वात् स्थाणुरयमिति व्यधिकरणत्वेन ऊर्ध्वत्वकाकवत्त्वाभ्यां परस्परव्यवच्छिन्नाभ्यामुपायाभ्यां भिन्नार्थस्य स्थाणोरवगमो भवति, तथैवोपायभूताभ्यां नीलोत्पलाभ्यां शब्दाभ्यां भिन्नार्थस्य बोधो भवेत्, तथा शब्दप्रयोगोऽपि च तथैव व्यधिकरणतया भवेत्, नीलाद् उत्पलाच्च इदं नीलोत्पलं वस्तु इति। किन्तु नैवं भवति, तस्मात् शब्दो न केवलमुपायमात्रमर्थबोधे यथा ऊर्ध्वत्वकाकवत्त्वे स्थाणोर्बोधे उपायमात्रं भवतो न ताभ्यां स्थाण्वर्थस्याभेदोऽपि भवतीति। तथैवेहापि स्यादिति भावः।

**किञ्च** धूमात्मकादुपायाद् हेतुभूताद् योऽग्निनिश्चयो भवति, सोऽग्निनिश्चयो धूमरूपानुगतो न भवति। अग्निशब्दोऽपि यदि धूमवदेव अग्निनिश्चयस्योपायमात्रं भवेत् तदा सोऽग्निरिति निश्चयोऽग्निरूपेणानुगतो न स्यात्। किन्तु अग्निशब्दाज्जायमानोऽग्निनिश्चयोऽग्निशब्दानुगत एव भवति "अग्निरयम्" इति। तत्र कारणं शब्दस्यार्थाभेद एवास्ति, नान्यत्। तस्मात् शब्दो नार्थप्रतिपत्तावुपायमात्रं भवति किन्तु अर्थाभिन्नः सन् अर्थबोधोपायो भवति। धूमादिहेतुस्तु न वह्न्यभिन्नः सन् वह्निबोधको भवतीति। सोऽयं शब्दस्यार्थबोधंजनने उपायान्तरेभ्यो विशेषः। धूमवदेव चक्षुरादिप्रमाणान्तरादपि जायमानो वह्निनिश्चयो न धूमाद्यनुगतो भवति। एतदेव स्फुटीकृतं मूले "न च धूमात् प्रमाणान्तराद् वाऽग्नौ निश्चयो धूमरूपानुकारी भवति" इति।

अयमत्र सारः – प्रमाणान्तरात् चक्षुरादितो जायमानो योऽग्निनिश्चयस्तत्र धूमानुगतत्वं न भवतीति किमाश्चर्यम् ? यदा त्वग्निनिश्चयो धूमोपायाद्धेतुभूताद् भवति सोऽपि हि धूमरूपानुगतो नैव भवतीति।

**भवति तु प्रमाणान्तरादप्यर्थेषु निश्चयः शब्दरूपपरामर्शी। तद्दर्शनात् शब्दादपि प्रतिपत्तौ तथा प्रतिपत्तिः, न त्वानन्तर्यनिमित्ता भ्रान्तिरित्यध्यवस्यामः।**

**बालानामपि च येयमन्यपरिहारेण स्तनादौ प्रवृत्तिः सा न "इदम्" इत्यनिश्चिन्वतां भवितुमर्हति। नानिश्चिते स्थाणौ पुरुषे वाऽन्यतरनिबन्धना**

---

शब्दस्य तु विशिष्टो महिमा इतोऽपि प्रतीयते यद् यस्मात् कस्माच्चित् शब्दातिरिक्तात् प्रमाणान्तरादपि जायमानो अर्थेषु निश्चयः शब्दरूपानुगतः सन् शब्दरूपपरामर्शी एव भवति। अर्थाद् अन्यस्मादप्युपायाज्जायमाने घटादिविज्ञाने शब्दरूपपरामर्शो दृश्यते "घटोऽसौ पटोऽसौ" इति। किमु वक्तव्यम्, शब्दोपायेऽर्थनिश्चये शब्दरूपानुगतत्वमवश्यं भवतीति। एतदेवोक्तम् – "भवति तु प्रमाणान्तरादप्यर्थेषु निश्चयः शब्दरूपपरामर्शी" इति मूलग्रन्थेन।

अत्रेदमाशङ्क्यते – ननु यदि प्रमाणान्तरोपायेऽप्यर्थनिश्चयेऽवश्यं शब्दरूपपरामर्शो भवति चेत् सर्वोऽप्यर्थनिश्चयः शब्दोपाय एव स्वीकर्तव्यः, न कोऽप्यर्थनिश्चयः प्रमाणान्तरोपायः स्यात्। एवं सति सर्वेषामर्थनिश्चयानां शब्दानन्तर्यं शब्दोपायत्वं स्वीकृतं स्यात्। तथा च शब्दानन्तर्यप्रयुक्ता अर्थे शब्दात्मकत्वभ्रान्तिरिति मन्तव्यम्, न तु वस्तुगत्या अर्थः शब्दात्मक इति चेत्, अत्र समाधानमुच्यते मूले – "तद्दर्शनात् शब्दादपि प्रतिपत्तौ तथा प्रतिपत्तिः, न त्वानन्तर्यनिमित्ता भ्रान्तिरिति"।

अयमभिप्रायः – न वयं सर्वमर्थनिश्चयं शब्दोपायं स्वीकुर्मः, किन्तु कश्चिदर्थनिश्चयः प्रत्यक्षप्रमाणोपायो भवति, कश्चित्तु अनुमानप्रमाणोपायो भवति अर्थनिश्चयः, कश्चिच्च शब्दप्रमाणोपायोऽपि भवत्यर्थनिश्चय इति मन्यामहे वयमपि भवन्त इवैव। तत्र विशेषं ब्रूमो यत् प्रमाणान्तरोपायेऽर्थनिश्चये शब्दरूपपरामर्शदर्शनात् तद्रीत्यैव शब्दादपि जायमानायामर्थप्रतिपत्तौ शब्दरूपानुगतत्वं प्रतिपद्यत एव, न तु तद्दण्डेन वारयितुं शक्यम्। अतो न सर्वोऽर्थनिश्चयः शब्दानन्तर्यप्रयुक्तः, न वा शब्दानन्तर्यप्रयुक्तं सर्वस्मिन्नर्थनिश्चये अर्थधर्मिकशब्दात्मकत्वभ्रान्तित्वमित्यभ्युपगच्छामः।

**ननु बालानां** यत् किमपि ज्ञानं निर्विकल्पकमेव भवति। तथा निर्विकल्पकादेव स्तनविषयकज्ञानात् ते अङ्गान्तरं परिहृत्य स्तनादौ प्रवर्तन्ते। एवं सति

**प्रवृत्तिः, न च निश्चयः शब्दानुरागशून्य इति तेषामपि पूर्वजन्मशब्द-भावनाभाजां वाग्रूपोपरक्तमेव ज्ञानं निश्चीयते। तथा च तद्रूपो-पग्राह्यं जगत् तद्विवर्त इति प्रतीमः।**

---

प्रौढानां सविकल्पकं घटादिज्ञानं "घटोऽयम्" इत्याकारकं शब्दानुरक्तं भवतु नाम। किन्तु बालानां तु स्तनज्ञानं निर्विकल्पकत्वादेव न "स्तनोऽयम्" इति शब्दानुरक्तं भवति। तथा च सर्वोऽप्यर्थनिश्चयः शब्दानुरक्त एव भवतीति भवतां नियमो बालानां ज्ञाने व्यभिचरित इति चेत्, न, बालानामपि स्तनादौ प्रवृत्तिः "इदम्" इति निश्चयवतामेव भवितुमर्हति नान्यथा। तथा निश्चयाभावेऽपि तेषां प्रवृत्तिस्वीकारे यत्र कुत्रचिद् अङ्गान्तरेऽपि दुग्धपानार्थं प्रवृत्तिः स्यात्। अत एव स्थाणुर्वा पुरुषो वेति सन्दिग्धार्थस्थलेऽन्यतरनिश्चयादेव स्थाणौ पुरुषे वा जनाः प्रवर्तमाना दृश्यन्ते।

अतो बालानामपि "इदम्" इति निश्चये सत्येव स्तनादौ प्रवृत्तिर्भवतीत्यवश्यं मन्तव्यम्। न च बालानां स्तनार्थनिश्चयो न शब्दानुरक्तः, इह जन्मनि बालानां तदानीं शब्दव्युत्पत्तिरहितत्वादिति वाच्यम्, इहाभिनवजन्मनि तेषां शब्दव्युत्पत्ति-विरहेऽपि पूर्वजन्मव्युत्पन्नशब्दसंस्कारस्येदानीमप्यनुवर्तमानत्वेन हृदयस्थ-शब्दोपरागस्य सम्भवात्। ननु स हृदयस्थः शब्दः कथं नोच्चार्यते? इति चेत्, करणापाटवादिति स्वीकरणीयम्।

अत्रेयमनुमानपद्धतिः – बालानां स्तने प्रवृत्तिः शब्दानुरागोपेता निश्चयपूर्वकत्वात्, अस्मदादिप्रवृत्तिवत्। एवं बालानां स निर्विकल्पको निश्चयः शब्दानुविद्धः, निश्चयत्वात्, अस्मदादिसविकल्पकनिश्चयवत्। न च बालानामुक्तनिश्चयस्य हृदयस्थशब्दानुविद्धत्वे तस्य निर्विकल्पकत्वं व्याहन्येतेति वाच्यम्, निर्विकल्पकत्वेऽनुच्चारणस्यापि प्रयोजकत्वाङ्गीकारादिति भावः।

तस्मात् शब्दरूपोपरक्तं जगदवश्यं शब्दविवर्तः, शब्दविवर्तत्वाच्च शब्दात्मकमिति विभावयामः।

**अपि च सन्त्यर्था व्यावहारिकाः, येषां न शब्दविवर्तादन्यत् तत्त्वम्। तत्सामान्यादितरेऽपि तथाऽवसातव्याः। यथा— "कुर्यात्, न कुर्यात्" इति विधिनिषेधौ, वाक्यार्थः, समूहः, असन्तश्चालातचक्रशशविषाणादयः।**

**तत्र न तावद् विधिनिषेधौ भूते प्रवृत्तिनिवृत्ती, न च वर्तमाने, न भविष्यन्त्यौ, अपाक्षीत् पचति पक्ष्यतीत्यविशेषप्रसङ्गात्।**

**कार्ये इति चेत्, न, कालत्रयातिरेकेण कार्यत्वस्यानिरूपणात्। तस्मात् प्रवृत्तिनिवृत्त्यनुगुणमवस्तुकं प्रतिभामात्रं विधिर्निषेधश्च स्याताम्।**

---

**एवं, लोके** तथाविधा अपि अर्थाः सन्ति, ये व्यवहारमात्रसिद्धाः सन्ति, न तु परमार्थवस्तुभूता उपलभ्यन्ते। यथा "कुर्यात्, न कुर्यात्" इति विधिनिषेधौ, संसर्गरूपो वाक्यार्थः, वनादिः समूहः, असत्त्वेन सर्वप्रसिद्ध्या अलातचक्रशशविषाणादयश्चेति। एतेषां विधिनिषेधाद्यर्थानां शब्दविवर्ताद् अन्यत् तत्त्वं वस्तुत्वं नास्ति। नैते विषयाः स्वरूपतः परमार्थभूताः सन्ति किन्तु शब्दस्यैवैते विवर्तभूताः सन्तीति।

तत्र प्रथमं विधिनिषेधौ न परमार्थवस्तुभूतौ स्तः, किन्तु प्रवृत्तिनिवृत्त्यनुगुणमवस्तुकं (वस्तुशून्यं) प्रतिभामात्रं विधिर्निषेधश्च स्त इति स्वयं विवृणोति मूलकारः—**तत्र न तावदित्यादिना**। अयमाशयः—ननु भूतवर्तमानभविष्यत्कालावच्छिन्ना कार्यभूता प्रवृत्तिरेव विधिः, तथा भूतवर्तमानभविष्यत्कालावच्छिन्ना निवृत्तिरेव निषेधोऽस्तीति। एवं च "कुर्यात्" इति विधिर्नावस्तुकः, प्रवृत्तेरेव तद्वस्तुत्वात्, एवं "न कुर्यात्" इति निषेधोऽपि नावस्तुकः, निवृत्तेरेव तत्कार्यत्वात्। एवञ्च विधिनिषेधौ शब्दविवर्तमात्रं न वस्तुभूताविति सिद्धान्तो न युक्तियुक्त इति चेत्, न, यदि कालावच्छिन्ने प्रवृत्तिनिवृत्ती एव विधिनिषेधौ स्याताम्, तदा "पाकं कुर्यात्" इति प्रयोगस्य "अपाक्षीत् पचति पक्ष्यति" इति प्रयोगैः सहाविशेषः प्रसज्येत, तेषु भूतादिकालावच्छेदस्य विद्यमानत्वात्।

न च प्रवृत्तिनिवृत्त्योः कालावच्छेदो न विवक्षितः, किन्तु कार्यत्वमात्रं विवक्षितम्, विधिनिषेधकार्यत्वस्य प्रवृत्तिनिवृत्त्योरक्षुण्णत्वाद् इति न कालावच्छिन्नैः

**न चानालम्बना ज्ञानस्वभावत्वात् प्रतिभा युक्ता । न च सा शब्दरूपपरामर्शविकला ।**

**तस्मात् प्रवृत्तिनिवृत्त्यानुगुण्येन शब्दतत्त्वमेव तथाऽवभासत इति साम्प्रतम् ।**

**एवं वाक्यार्थः संसर्गो न संसर्गिव्यतिरेकेण कश्चित् । न संसर्गी असंसर्गिरूपातिरिक्तः । न ज्ञेयशून्यं ज्ञानम् । न विकल्प-**

---

अपाक्षीत् पचति पक्ष्यतीत्यादिप्रयोगैरविशेषप्रसङ्गः "कुर्यात्" इति विधेरिति वाच्यम्, कार्यत्वस्य कालत्रयातिरेकेण निरूपयितुमशक्यत्वात् । कस्मिंश्चित् काल एव कार्यभावात् । अतोऽविशेषप्रसङ्गदोषस्तदवस्थ एव ।

तस्मात् प्रवृत्तिनिवृत्त्यनुगुणमवस्तुकं (अविद्यमानबाह्यविधिनिषेधवस्तुकमिति यावत्) प्रतिभामात्रं विधिनिषेधाविति सिद्धान्तः सूपपन्नः ।

ननु प्रतिभाया अवस्तुकत्वस्वीकारे अनालम्बना निर्विषया सा सम्पद्येतेति चेत्, न, प्रतिभाया ज्ञानस्वभावत्वेनाऽनालम्बनत्वस्यायुक्तत्वात् ।

ननु तर्हि प्रतिभायास्तस्याः किमालम्बनमस्तीति चेत्, "कुर्यात्, न कुर्यात्" इति शब्दस्वरूपस्यैव प्रतिभायाः आलम्बनत्वेन स्वीकारात् । न च तादृशी काचिदपि प्रतिभा शब्दस्वरूपपरामर्शरहिताऽनुभूयते ।

तस्मात् प्रवृत्तिनिवृत्त्यनुगुणं शब्दतत्त्वमेव "कुर्यात्, न कुर्यात्" इत्यात्मकं विधिनिषेधात्मकतया प्रतिभायां भासत इति स्वीकर्तव्यम् ।

**एवम्**, एकपदार्थस्यापरपदार्थेन सह संसर्गो (अन्वयो) हि वाक्यार्थ इति मन्यन्तेऽर्थतत्त्ववादिनः । किन्तु सोऽपि पदार्थद्वयात्मकसंसर्गिव्यतिरेकेण नास्ति वस्तुभूतः । यदि संसर्गः संसर्गिभ्यामतिरिक्तः स्यात्, तदा तस्यापि संसर्गान्तरं तस्यापि संसर्गान्तरमित्यनवस्थाऽऽपद्येत ।

यद्युच्येत – मा नाम भूत् संसर्गो वाक्यार्थः, संसर्गविशिष्टः संसर्गी एव वाक्यार्थो वस्तुभूतो भविष्यति, का नाम हानिः? अत्रेदमुच्यते – यदि संसर्ग एव

**प्रत्ययो वाग्रूपोपरागरहित इति वाकूतत्त्वमेव तथा विवर्तत इति न्याय्यम्।**

**एवं समूहे वनादौ, असत्सु चालातचक्रादिषु योजनीयम्।**

**अपि च यद्यपि षड्जादिषु गणादिषु च प्राक्शब्दात् ज्ञानमस्ति, तथापि न तादृक्, यादृक् शब्दनिवेशादुत्तरस्मिन् काले। अविविक्ता हि**

---

नास्ति वस्तुभूतः, तदा संसर्गविशिष्टस्य संसर्गिणः कुतः सत्ता। अतः संसर्गी अपि असंसर्गिरूपात् पदार्थादतिरिक्तो नास्ति वस्तुभूतः। तस्मात् प्रतिभामात्रं वाक्यार्थ इति संसर्गी अपि न वाक्यार्थ इति सिद्धम्। तथा च न संसर्गो नापि संसर्गी वाक्यार्थः।

न च तर्हि वाक्यार्थाभावे पदसमूहरूपाद् वाक्याज्जायमानं ज्ञानं ज्ञेयशून्यमेव निरालम्बनमेव स्यादिति वाच्यम्, तस्य ज्ञानस्य सविकल्पकत्वेन निर्विषयत्वासम्भवात्। कस्तर्हि तत्र विषयो भासत इति चेत्, शब्दतत्त्वस्यैव तत्र विषयत्वेन भासनात्। सर्वस्यापि सविकल्पकप्रत्ययस्य "घटोऽस्ति पटोऽस्ति" इत्याद्याकारकस्य शब्दोपरागसहितस्यैव अनुभूयमानत्वात्। तस्मात् सर्वत्रैव ज्ञाने वाक्तत्त्वमेव तथा भासत इति युक्तम्।

एवं वृक्षसमूहादिप्रतीतिस्थले वनादिशब्दतत्त्वमेव विषयो भवति, न तु समूहरूपः कश्चिदर्थोऽस्ति वस्तुभूतः।

अलातचक्रशशविषाणादिप्रत्ययस्थले तु स्फुटमेव अलातचक्रादीनामसत्त्वम्। अतस्तत्र शब्दमात्रं तथा तथा भासत इत्यवगन्तव्यम्।

ननु ये गानशास्त्रानभिज्ञाः सन्ति, तेषामपि गानश्रवणदशायां षड्जादिगणादिज्ञानं भवत्येव, किन्तु षड्जमिदमिति शब्दानुवेधं विनैव तज्ज्ञानं निर्विकल्पात्मकं भवति। अतः सर्वं ज्ञानं शब्दानुवेधसहितमेव भवतीति नियमस्तत्रैव व्यभिचारीति चेत्, सत्यम्, तथापि षड्जमिदमिति शिक्षणानन्तरं गानश्रवणे यादृशं स्फुटं ज्ञानं भवति षड्जादीनाम्, तादृशं स्फुटं षड्जादिज्ञानं गानशास्त्रानभिज्ञस्य

प्राक् प्रतिपत्तिः, स्फुटतरा विवेकवती पश्चात्। तथा च गोपालाविपालादयो विवेकज्ञानसिद्धये संज्ञां निवेशयन्ति।

एवञ्च शब्दसंस्पर्शेऽर्थे बोधोत्कर्षदर्शनात् तत्प्रतिसंहारे च सञ्चेतितानामप्यसञ्चेतितकल्पत्वात्, पथि गच्छतस्तृणादीनामपकर्षाद् वागूरूपाधीनमेव चितेश्चितित्वम्।

---

न भवति, शिक्षणाभावेन षड्जमिदमिति शब्दानुवेधरहितत्वात्। गानस्थले श्रोतुः प्राक्तनी प्रतिपत्तिः षड्जमिति शब्दानुवेधरहिता सती धैवताद् विविक्ता न भवति। किन्तु षड्जादिस्वरशिक्षानन्तरं षड्जमिदं धैवतमिदमिति स्फुटतरा परस्परं विवेकवती प्रतिपत्तिर्भवति। तत्र शब्दानुवेधोऽस्त्येव। अतः षड्जादिशब्दानुवेध-रहिता प्राक्तनी निर्विकल्पा प्रतिपत्तिरप्रतिपत्तिकल्पैव मन्तव्या। अत एव गोपाला अविपालाश्च विवेकेन ज्ञानार्थं "कपिला इति कृष्णा इति" वा संज्ञां निवेशयन्तीति दृश्यते लोके।

एवं शब्दसंस्पर्शे सति अर्थाद् "घटोऽयम्" इत्यादिशब्दरूपोपरागे सति जायमानेऽर्थबोधे उत्कर्षो दृश्यते। अर्थबोधोत्कर्षे सति अर्थाद् विवेकेनार्थबोधे सति व्यवहारो लौकिक उपपन्नो भवति। शब्दसंस्पर्शरहिते अस्फुटेऽर्थबोधे तु व्यवहारो नोपपद्यत इति भावः। शब्दानुवेधराहित्ये सञ्चेतिता अपि अर्था असञ्चेतितकल्पा एव भवन्तीति व्यवहारो नोपकल्पते। शब्दसंस्पर्शाभावे सञ्चेतितानामपि असञ्चेतितकल्पत्वे प्रमाणत्वेन दृष्टान्तमाह – यथा कश्चिद् मार्गे गच्छन् पद्भ्यां तृणानि स्पृशन्नपि न जानाति "तृणानि स्पृष्टानि सन्तीति"। अत एव तादृशदशायां बोधरूपापकर्ष एव भवति नोत्कर्ष इति। तस्माद् वागूरूपाधीनमेव चितेश्चितित्वमिति निश्चीयते।

अयमत्र सारः – अर्थप्रकाशात्मकत्वं हि चितेश्चितित्वम्, नान्यत्। तच्चार्थ-प्रकाशात्मकत्वं शब्दसंस्पर्शे समुत्कर्षं भजते, शब्दसंस्पर्शाभावे चापकर्षमाप्नोति। तस्मात् चितेश्चितित्वरूपं वाग्रूपाधीनमेवेति मन्तव्यम्।

**वाक्शक्तिरेव वा चितिः। तत्प्रतिसंहारेऽपि सूक्ष्मा वाक्शक्ति-रित्येके। सर्वथा वाग्रूपाधीनो ज्ञेयबोध इति सर्वं ज्ञेयं वाग्रूपान्वितं गम्यत इति तद्विकारस्तद्विवर्तो वा, मृद इव घटादयः चन्द्रमस इव जलतरङ्गचन्द्रमस इति।**

**अन्ये तु—मृदादिदृष्टान्तदर्शनात् परिणामितां ब्रह्मणो मन्यन्ते। तदपाक्रियते—अक्षरमिति। कुतः? "ध्रुवः नित्यः" इति (बृ. ४/४/२०), "नित्यो नित्यानाम्" इति। (श्वेता. ६/१३) तत्र तत्र श्रुतेः।**

---

केचन मन्यन्ते—वाङ्निष्ठा जडस्यार्थस्य प्रकाशशक्तिरेव चितिः। तथा च **वाक्शक्तिरेव चितिरिति** वाक्शक्तित्वमेव चितेश्चितित्वं नान्यत्। एवञ्च वाचोऽभावे कथमर्थो भासेत?

ननु यदि वाक्शक्तिरेव चितिस्तदा वागुपसंहारे जातेऽपि कथमिन्द्रियादिना घटाद्यर्थः प्रकाशत इति चेत्, तत्रापि सूक्ष्मा वागस्त्येवेत्यर्थापत्त्या सिद्ध्यति। वाक्शक्तेरेव चितित्वेन तत्र यदि सूक्ष्मा वाङ् न, तदा तच्छक्तिरूपा चितिरपि नोपलभ्येत। तस्मात् सर्वथा वाग्रूपाधीन एव ज्ञेयबोध इति सर्वं ज्ञेयजातं सदा वाग्रूपान्वितमेव भवतीति निष्पद्यते सिद्धान्तः।

अतो वाग्विकारो वाग्विवर्तो वा सर्वो विषयोऽस्ति, यथा मृदो घटादयः, यथा वा चन्द्रमसो जलतरङ्गस्थाश्चन्द्रमसस्तद्वत्। शब्दं विहायार्थस्य स्वतन्त्रसत्ता नास्तीति तात्पर्यम्।

अक्षरपदस्य व्याख्यानान्तरमुपन्यस्यति मूलकारः—**अन्ये त्वित्यादिना**। अयमत्र पूर्वपक्षः—श्रुतौ ब्रह्मप्रकरणे मृदादिदृष्टान्तदर्शनाद् यथा घटादयो मृद्विकाराः सन्ति, तथैव कृत्स्नं जगदेव ब्रह्मणो विकारस्तस्माद् यथा मृत् परिणामिनी तथा ब्रह्मापि परिणामि मन्तव्यम्। मतमिदमपाकर्तुमुक्तम्— **अक्षरमिति**। यतो ब्रह्म अक्षरमविनाशि अतो न तत् परिणामि भवितुमर्हतीति सिद्धान्तपक्षः। अत्र श्रुतिरेव प्रमाणम्। तत्र "ध्रुवः, नित्यः, विरजः, पर आकाशादज आत्मा महान्

अथ मतम् – परिणामित्वेऽपि तत्त्वाविघातान्न नित्यता व्याहन्यते। यथोक्तम् – ''यस्मिन् विक्रियमाणेऽपि तत्त्वं न विहन्यते तदपि नित्यम्'' (महाभाष्ये १/१/१) इति।

सत्यम्, तथापि तु यद् विशुद्धात्मरूपं तस्याभावात् सर्वात्मना परिणतावनित्यत्वम्, एकदेशपरिणतौ सावयवत्वाद् नित्यत्वमेकत्वं च व्याहन्येत। तदेतद् विशुद्धत्वं नित्यत्वमेकत्वं चाकाशकल्पे ब्रह्मण्यवकल्पते।

---

ध्रुवः'' इति श्रुतिस्वरूपम्। ''नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्'' इति च श्रुतिस्वरूपम्। अतः श्रुतिविरुद्धत्वात् ''ब्रह्म जगद्रूपेण परिणमते प्रकृतित्वाद् घटादिरूपेण परिणमद्मृदादिवत्'' इत्यनुमानं प्रमाणं प्रमाणाभासमेवेति।

ननु ब्रह्मणः परिणामित्वेऽपि न नित्यत्वश्रुत्या विरोधः, ''यस्मिन् विक्रियमाणेऽपि तत्त्वं न विहन्यते, तदपि नित्यम्'' इति प्रामाणिकैरङ्गीकाराद् ब्रह्मणः परिणामित्वेऽपि तत्त्वाविघातात् तस्य नित्यत्वे न कश्चिद् व्याघात इति नास्ति श्रुतिविरोधो नाप्यनुमानबाध इति चेत्, सत्यम्, तथापि ब्रह्म विशुद्धात्मरूपमुक्तं श्रुतिषु। तच्च यदि विक्रियेत, तदा तस्य विशुद्धत्वं व्याहतं स्यात्। एवं परिणामित्वेऽपि ब्रह्म सर्वात्मना परिणमेत एकदेशेन वा। सर्वात्मना परिणामेऽनित्यत्वं प्रसज्येत। एकदेशेन परिणामे सावयवं ब्रह्म प्रसज्येत। सावयवत्वे च नित्यत्वमेकत्वञ्च ब्रह्मणो व्याहन्येत। न हि सावयवं किमपि नित्यमेकं वा भवतीति। इदमेव च ब्रह्मणो विशुद्धत्वं यदनित्यत्वानेकत्वरहितत्वम्।

एवंविधं विशुद्धत्वं ब्रह्मणि कथमस्तीति नाशङ्कनीयम्, आकाशतुल्ये ब्रह्मणि तस्य सम्भवात्। यथा हि आकाशे घटमठाद्युपाधिभिः अवच्छेदे = भेदे कल्पितेऽपि घटाकाशो मठाकाश इत्यादिरीत्या अकल्पितोऽवच्छेदो = भेदो यस्मिन् तादृशमपि निरवच्छिन्नमेकमाकाशं भवत्येव, तथैव देहेन्द्रियाद्युपाधिभिः परिच्छिन्नत्वेनानेकत्वेन साधारणजनैः प्रतीयमानमपि ब्रह्म यथाश्रुति निरुपाधिकं विशुद्धमेकमपरिणामि अस्त्येव।

**कल्पितावच्छेदेऽकल्पितावच्छेदमप्याकाशमनवच्छिन्नमस्त्येव। अथ कल्पितैकदेशपरिणामः, स कल्पनयैवेति सुष्ठूक्तम्— अक्षरमिति।**

**केचित् "सर्वगन्धः सर्वरसः" (छा. ३/१४/२) इत्यादिश्रुतेः सर्वात्मतां ब्रह्मण उपागमन्। एवं च विषयोपभोगोपपत्तेः प्रकाशस्वभावस्यात्मनो विषयाः, युक्तं यत् प्रकाशेरन्। अन्यत्वे तु जडानां प्रकाशनमसम्भावनीयमिति। तान् प्रत्याह—असर्वमिति।**

---

यद्युच्येत निरवयवस्यैकस्यापरिच्छिन्नस्य ब्रह्मण वस्तुत एकदेशाभावेऽपि कल्पितस्यैकदेशस्य परिणामो जगत् स्यात्, तेनैव च कल्पितैकदेशपरिणामेन ब्रह्मणः परिणाम उपपद्येतेति चेत्, तन्न युक्तम्, एकदेशस्य कल्पितत्वे तदीयः परिणामोऽपि तद्वदेव कल्पित एव भविष्यति न सत्यः। अतो न कल्पितैकदेशपरिणामेन ब्रह्मणो वास्तविकः परिणामः स्वीकर्तुमुचितः। एतदभिप्रायेणैव मङ्गलश्लोके "अक्षरम्" इति प्रजापतिविशेषणमुक्तमिति केचन मन्यन्ते।

इदं चाक्षरपदस्य व्याख्यानानन्तरं पूर्वव्याख्यानेऽरुचिं सूचयति, पूर्वव्याख्याने दूषणानभिधानादिति शङ्खपाणिः।

प्रपञ्चसत्यत्ववादिनः **केचिदेवमामनन्ति**—प्रपञ्चः सत्यः, ब्रह्मापि सत्यम्, किन्तु प्रपञ्चब्रह्मणोर्भेदो नास्ति, "सर्वगन्धः सर्वरसः सर्वकामः सर्वकर्मा" इत्यादिश्रुतिप्रमाणात् तद् ब्रह्म सर्वात्मकमर्थात् सप्रपञ्चात्मकमस्ति। उक्तश्रुतिर्ब्रह्मणः सर्वात्मकत्वं ब्रुवाणा ब्रह्मणः सप्रपञ्चात्मकत्वमपि ब्रवीतीत्याशयः।

अस्मिन् पक्षे युक्तिरप्यस्ति इत्याह— **"एवं च विषयोपभोगोपपत्तेः"** इत्यादि। विषयभोगो नाम विषयानुभवः विषयप्रकाश इति यावत्। स च विषयप्रकाशरूपो भोगस्तदैवोपपद्यते यदा प्रकाशात्मकस्य ब्रह्मणः स्वभावभूता विषयाः स्युः। विषयाश्च ब्रह्मणः स्वभावभूतास्तदैव भवितुमर्हन्ति, यदा प्रकाशात्मकब्रह्म इव विषया अपि प्रकाशात्मकाः स्युः। अन्यथा जडात्मका विषयाः कथं प्रकाशेरन्, यतो विषयाः प्रकाशन्त इत्यस्ति सर्वानुभवः, तस्मादर्थापत्त्या

**कुतः? "अस्थूलमनण्वहस्वम्" (बृ.३/८/८) इति सर्वभेदोपराग-प्रतिषेधात्। सर्वभेदावियोगाच्चानिर्मोक्षः, न हि स्वभावाद् वियोजयितुं वस्तु शक्यम्, वह्निरिवौष्ण्यात्।**

---

सिध्यति यद् विषयाः प्रकाशात्मकस्य ब्रह्मणः स्वभावभूततया ब्रह्मात्मकाः सन्ति, ब्रह्मापि सर्वात्मकमस्तीति। एतदभिप्रायेणैवोक्तश्रुतिवचनमस्ति "सर्वगन्धः सर्वरसः" इत्यादि। ब्रह्मणो विषयाणां भिन्नत्वे तु जडानां सतां तेषां प्रकाशनं सर्वथाऽसम्भवमेव प्रसज्येत। अत्रेत्थमनुपपत्तिमूलकार्थापत्तिस्वरूपम् - ब्रह्मणः सर्वविषयात्मकत्वाभावे विषयप्रकाशो नोपपद्यत इति विषयप्रकाशान्यथाऽनुप-पत्तिरेव ब्रह्मणः सर्वात्मकत्वं गमयतीति।

इमं केषाञ्चित् सिद्धान्तं दूषयितुं मङ्गलश्लोके "असर्वम्" इति प्रजापतेर्विशेषणमुक्तम्। अर्थाद् ब्रह्म न सर्वप्रपञ्चात्मकमस्ति। कुत इति चेत्, "**अस्थूलमनण्वहस्वम्**" इत्यादिश्रुत्या ब्रह्मणि सर्वप्रपञ्चभेदानां संसर्गस्य (तादात्म्यस्य) प्रतिषेधप्रतिपादनात्।

न च "अस्थूलम्" इत्यादिश्रुतिरुपासनापरा भवितुमर्हतीति वाच्यम्, उपासनाया अश्रुतत्वेन अप्रकृतत्वात्। न च उपासनाश्रुतेरध्याहारः कर्तव्य इति वाच्यम्, उपासनाप्रकरणाभावेनाध्याहारस्याप्यसम्भवात्। उपनिषदां च सिद्धेऽर्थे प्रामाण्यात् "अस्थूल"मित्यादिश्रुतेः केवलाद्वयब्रह्मरूपसिद्धार्थबोधनात्।

ननु "सर्वगन्धः" इत्यादिश्रुतेस्तर्हि का गतिरिति चेत्, न, उक्तश्रुत्या ब्रह्मणः सर्वगन्धत्वादिकल्पनाया अधिष्ठानत्वबोधनात्। यथा "रजतमिदम्" इत्यत्र इदमर्थस्य रजतकल्पनाधिष्ठानत्वमात्रं प्रतिपादितं भवति, न तु वस्तुगत्या रजतत्वम्, तद्वत्। ब्रह्मणि सर्वे गन्धादयः कल्पिता इत्यर्थः।

न च ब्रह्मणः सर्वगन्धत्वाद्यभावे जडविषयाणां प्रकाशात्मक उपभोगः कथमुपपद्येतेति वाच्यम्, ब्रह्मविवर्तत्वपक्षेऽपि विषयोपभोगस्य सूपपादत्वात्। तस्मात् प्रमाणाभावेन न ब्रह्म सर्वप्रपञ्चस्वभावमिति सुष्ठूक्तम्– "असर्वम्" इति।

**अथापि कथञ्चिद् वियोज्येत, तथापि भेदप्रपञ्चप्रबन्धस्यानुच्छेदाद् वियोगाभावान्नित्यसंसारिता स्यात्। सर्वथाऽशनायापिपासादि-प्रपञ्चोऽस्यात्मा। तत्प्रपञ्चस्य चोच्छेदो नेष्यते। तत्रैकात्म्यवादिनोऽनिर्मोक्षः।**

---

एवं, ब्रह्मणः सर्वभेदप्रपञ्चात्मकत्वे प्रमाणाभावमुक्त्वा दोषान्तरमप्यस्तीत्याह – **सर्वभेदावियोगाच्चेति**। अयमाशयः– ब्रह्म यदि सर्वप्रपञ्चात्मकं स्यात् तदा प्रपञ्चस्य ब्रह्मस्वभावभूतत्वात् प्रपञ्चवियोगो ब्रह्मणि कदापि न स्यात्, तथा च अनिर्मोक्षः प्रसज्येत। यो हि यस्य स्वभावस्तस्मात् तस्य वियोगः सम्पादयितुं नैव शक्यते। यथा स्वभावभूताद् औष्ण्याद् वह्नेर्वियोगो नैव भवति, सति वियोगे वह्निरेव न स्यात्, तद्वत्।

ननु यथा पाकेन घटो निजश्यामतास्वभावाद् वियुज्यते, तथा ब्रह्माऽपि प्रपञ्चस्वभावाद् वियोज्येतेति नानिर्मोक्षप्रसङ्गदोष इति चेत्, न, कतिपयैः प्रपञ्चैर्वियोगेऽपि जाते न सर्वैर्भेदप्रपञ्चैर्वियोगः सम्भवी। ननु प्रलयकाले सर्वोच्छेदो भवतिं, अतः कथमनिर्मोक्षप्रसङ्गदोष इति चेत्, न, तस्मिन् काले एकदा सर्वोच्छेदेऽपि प्रलयावसाने पुनः सृष्टेः प्रादुर्भावाद् न सर्वथोच्छेदः। आत्यन्तिकः सर्वथा सर्वोच्छेदो हि मुक्तौ उपयुज्यते, नैककालिकः। इत्थं च भेदप्रपञ्चप्रवाहस्य सर्वथोच्छेदाभावाद् ब्रह्मणि प्रपञ्चसामान्यवियोगस्याभावाद् ब्रह्मणि नित्यसंसारिता प्रसज्येत, तथा चानिर्मोक्षप्रसङ्गदोषस्तदवस्थ एव। तदेतदभिप्रेत्याह सिद्धान्ती – अथापि कथञ्चिद् इत्यारभ्य नित्यसंसारिता स्यादित्यन्तं यावत्।

एतदेव प्रकारान्तरेण द्रढयति – **सर्वथेत्यादिना**। अयमभिप्रायः– आधिभौतिकात् प्रपञ्चादात्मा कदाचिदवियोज्यमानस्तथा कदाचिद्वियोज्यमानोऽपि दृश्यते; किन्तु अशनायापिपासादित आध्यात्मिकात् प्रपञ्चात्तु न वियोज्यते आत्मा। अतोऽशनायापिपासादिप्रपञ्चोऽस्यात्मन आत्माऽर्थात् सर्वथा स्वभावभूतो मन्तव्यः। तस्य चोच्छेदो नेष्यते। तथा सति एकमुक्तौ सर्वमुक्तिः प्रसज्यते। यतो हि अशनायापिपासादिप्रपञ्चः सर्वजन्तुसाधारणोऽस्ति, तस्य स्वरूपत उच्छेदस्वीकारे

**आत्मभेदवादिनस्तु कस्यचिदुच्छिन्नः कस्यचिन्नेति मुक्तसंसारि-विभागः। तस्मान्न प्रपञ्चात्मकं ब्रह्म, अविद्याक्रीडितमेव प्रपञ्च इति साम्प्रतम्।**

**यदि तर्ह्यविद्याक्रीडितमेव प्रपञ्चः, प्रपञ्चशून्यता तर्हि परमार्थः। सैवास्तु ब्रह्म, परमार्थत्वात्। तथा च प्रपञ्चनिषेधेनैव तद्रूपं श्राव्यते—**

---

एकस्य जन्तोर्यदि स उच्छिन्नस्तदाऽशेषोच्छेदाद् न कोऽपि अशनायापिपासादिमान् भवेदिति सुतरामेकमुक्तौ सर्वमुक्तिप्रसङ्गदोषः, बन्धकस्य तस्याशेषोच्छेदादिति। अतः सर्वथैवाशनायापिपासादिप्रपञ्चस्य ब्रह्मात्मभूतस्य उच्छेदो नेष्टव्यः। तथा चानिर्मोक्षप्रसक्तिः सुतरामापद्यते ब्रह्मणः सर्वप्रपञ्चात्मकैकात्म्यस्वीकर्तृमत इति तात्पर्यम्।

**यस्तु आत्मभेदवादी** अस्ति, तन्मते कस्यचिदात्मनः स अशनायादिप्रपञ्च उच्छिन्नः, कस्यचिन्नेति तन्मते नैकमुक्तौ सर्वमुक्तिः प्रसज्यत इति मुक्तसंसारिभेदो यद्यप्युपपद्यते, तथापि तस्यात्मभेदवादिनो मतेऽपि आत्मनः सर्वात्मकत्वं नेष्टमस्तीति। तस्मादात्मैकत्ववादिदृष्ट्या आत्मभेदवादिदृष्ट्या चोभयथापि ब्रह्मणः सर्वप्रपञ्चात्मकत्वं नोपपन्नम्। अतोऽविद्याविलसितमेव प्रपञ्चो न ब्रह्मस्वभावभूत इति सुष्ठूक्तम् "असर्वम्" इत्यलं विस्तरेण।

अत्रायं निष्कर्षः— वस्तुगत्या ब्रह्म यदि प्रपञ्चात्मकं स्यात्, तदा प्रपञ्चस्य बहुदोषकलुषितत्वेन नित्यदुःखित्वं ब्रह्मण आपद्येत, अकलुषमानन्दैकरसं हि ब्रह्म श्रूयते, तद् व्याहन्येत। न च भेदाभेदमादाय प्रपञ्चात्मकमपि ब्रह्म नित्य-निर्दुःखं भविष्यतीति वाच्यम्, एवं सति भेदाभेदेन दुष्टमदुष्टं च ब्रह्म सम्पद्येत, अत्यन्तविशुद्धं च ब्रह्म श्रूयते। अविद्याक्रीडितत्वपक्षे तु नायं दोषः, न अविद्या-कल्पितेन दोषेण तत्त्वमुपलिप्यते गगनमिव मलिनत्वादिना। तस्मादत्यन्तविशुद्धं ब्रह्म, अविद्याविलासस्तु प्रपञ्च इति सिद्धम्।

अत्रायं पूर्वपक्षः— प्रपञ्चो यदि अविद्याविलासस्तर्हि प्रपञ्चशून्यतैव परमार्थ इति प्राप्नोति। ब्रह्मापि च परमार्थभूतं श्रूयते "तत् सत्यम्" इति श्रुतेः। अस्यां

**"स एष नेति नेति" (बृ.३/९/२६) इति "अस्थूलमनण्वह्रस्वम्" (बृ.३/८/८) इति च। तत्राह – सर्वमिति।**

**एतदुक्तं भवति – ब्रह्मणो न सर्वात्मता, सर्वं तु ब्रह्मात्मकम्, ब्रह्मरूपेण रूपवत्, न तु शून्यमेव, नित्यमुक्तिप्रसङ्गेन तदर्थोपदेश-प्रवृत्तिवैयर्थ्यप्रसङ्गात्।**

**नित्यमुक्तत्वेऽपि अविद्यानिबन्धनः संसार इति चेत्, यदि ग्रहणाभावोऽविद्या, कथं तर्हि तन्निबन्धनः संसारः? मुक्तावपि तस्य तुल्यत्वात् तद्वदेव न किञ्चित् प्रकाशेत।**

---

स्थितौ परमार्थभूतं ब्रह्म परमार्थभूतप्रपञ्चशून्यतारूपं प्राप्नोति। अत एव प्रपञ्चनिषेधात्मकमेव ब्रह्म श्रूयते – "स एष नेति नेति" इति, "अस्थूलमनण्वह्रस्वम्" इति च। तथा च शून्यवादप्रसङ्ग इति।

एतं पूर्वपक्षं निराकर्तुमुक्तं मूले सर्वमिति। अयमत्र समाधानाशयः – ब्रह्मणो न सर्वात्मकत्वमिति पूर्वम् असर्वमिति विशेषणेन निरूपितम्। "सर्वम्" इति प्रकृतेन विशेषणेन च सर्वमेव ब्रह्मात्मकमस्ति, न ब्रह्माति-रिक्तमिति प्रतिपाद्यते। अनेन ब्रह्म न शून्यात्मकं न वा शून्यस्य परमार्थत्वमिति सिद्धं भवति। अर्थात् प्रपञ्चो न शून्यात्मकः किन्तु ब्रह्मरूपेण स्वरूपवानस्ति। यदि प्रपञ्चः सर्वथा नित्यशून्यात्मकः स्यात्, तदा निष्प्रपञ्चलक्षणो मोक्षो नित्यसिद्ध एव भवेदिति मोक्षार्थं शास्त्रोपदेशस्य पुरुषप्रवृत्तेश्च आनर्थक्यमेव प्रसज्येतेति।

ननु ब्रह्मणो नित्यशून्यप्रपञ्चात्मकत्वे निष्प्रपञ्चलक्षणाया मुक्तेर्नित्य-सिद्धत्वेऽपि अविद्यानिबन्धनः संसारो भविष्यतीति न वैयर्थ्यं शास्त्रोपदेश-पुरुषप्रवृत्त्योरिति चेत्, न, अविद्या यदि ग्रहणाभावरूपा, तदा ग्रहणाभावेन कथं संसारः स्यात्? ग्रहणाभावेन संसाराऽभ्युपगमे मुक्तावपि ग्रहणाभावसद्भावेन मुक्तिसंसारयोस्तुल्यता प्रसज्येत। तथा च सति यथा मुक्तौ न किञ्चित् प्रकाशते तथा संसारेऽपि न किञ्चित् प्रकाशेत।

**अथायथार्थग्रहणमविद्या, न तर्हि सर्वशून्यता। "तेनेदं पूर्णं पुरुषेण सर्वम्" (महानारा. १०/४) इति श्रुतेः, "आत्मैवेदं सर्वम्" (छा. ७/२५/२) इति च सर्वस्मिन्नात्मोपदेशः। "कथमसतः सज्जायेत? (छा. ६/२/२) इति च स्वयं शून्यताया निषेधात्।**

**भावो हि यथावदप्रकाशमानोऽध्यस्ताविद्यमानरूपः प्रकाशते। शून्ये तु क्वाध्यासः? किं प्रकाशतामिति निर्बीजतैव स्यात्। "विज्ञानमानन्दम्" (बृ. ३/९/१८) इति रूपोपदेशाच्च न सर्वाभावमात्रं ब्रह्म, अपि तु सर्वस्यात्मेति।**

---

यदि तु **अयथार्थग्रहणमविद्या** स्वीक्रियेत, तदा ग्रहणात्मकस्यैव वस्तुनस्सत्त्वेन भवतः सर्वशून्यता न सिध्यति। एवं "तेनेदं पूर्णं पुरुषेण सर्वम्", "आत्मैवेदं सर्वम्" इति श्रुती सदात्मके सर्वस्मिन् आत्मोपदेशं कुरुतः। तस्मादपि न सर्वशून्यता सिध्यति। एवं, "कथमसतः सज्जायेत?" इति श्रुतिश्च स्वयमेव साक्षादेव सर्वशून्यतां निषेधति। तस्मान्न सर्वशून्यतात्मकः प्रपञ्च इति।

एतदेवोपपादयति – **भावो हीत्यादिना**। अयमभिप्रायः – रज्ज्वादिर्भावपदार्थः अधिष्ठानभूतो यथावत् = निजरूपेण अप्रकाशमानः सन्, आरोपितं यदविद्यमानं रजतादिकं तद्रूपेण प्रकाशते। सर्वशून्यतायां तु क्व किमारोप्यताम्? किञ्च प्रकाशताम्? प्रकाशते च प्रपञ्चः। सर्वशून्यतायां प्रपञ्चप्रकाशो निर्बीज एव = अकारणक एव प्रसज्येत। न हि किमपि कार्यमकारणकं भवति, न च कश्चिद् भ्रमो निरधिष्ठानको भवति।

एवं "विज्ञानमानन्दं ब्रह्म" इति श्रुतिर्ब्रह्मणो विज्ञानानन्दरूपतामुपदिशन्ती ब्रह्म न सर्वशून्यतात्मकं किन्तु अविद्याविलसितस्य सर्वप्रपञ्चस्याधिष्ठानमात्मेति समर्थयति। यद्यपि शून्यवादी बौद्धो न श्रुतिं प्रमाणमभ्युपैति तथापि स्वाभिप्रायेण श्रुतिरुदाहृता सिद्धान्तिनेति बोध्यम्।

**केचित्तु सुखस्यादर्शनाद् दुःखाविनाभावान्नास्त्यवस्था दुःखसंस्पर्शविविक्तेति मन्यन्ते। न हि कश्चिज्जन्तुः सुख्येवोपलभ्यते, दुःख्येव वा। दुःखवत एव तु सुखं सुखत्वेऽवतिष्ठते। तापवत एव चन्दनपङ्कसंस्पर्शः सुखम्। तत्राह – अभयमिति।**

**सर्वभयविनिर्मुक्ता हि ब्रह्मावस्था, न चात्राल्पीयानपि क्लेशः, असकृदभयश्रुतेः – "अभयं वै ब्रह्म" (बृ. ४/४/२५) इत्यादि।**

**तथा हि न स्वाभाविकं भयं ब्रह्मणि, आनन्दरूपेण विरोधात्। नागन्तुकं हेतुमत्, द्वितीयाभावात्। तदुक्तम् – "द्वितीयाद् वै भयं**

---

मङ्गले प्रदत्तम् "अभयपदम्" व्याख्यातुमुपक्रमते – **केचित्त्विति**। अयमर्थः – जीवने सर्वथा सुखमेवास्तीति न कस्यापि दृश्यते। यत्र क्वचन सुखं दृश्यते, तत्रापि दुःखमविनाभावेन तिष्ठत्येव। अतः काप्येवंविधाऽवस्था न भवति, या दुःखसम्पर्करहिता समुपलभ्येत। न हि एवमस्ति – कश्चित् प्राणी एकान्ततः सुखी एव भवतु, एकान्ततो दुःखी एव वा भवतु। यस्यापि सुखमस्ति, तस्य तत्सुखं तदैव सुखभावं भजते, यदा पूर्वं स दुःखमनुभूतवान् भवेत्। तदुक्तम् - "सुखं हि दुःखान्यनुभूय शोभते" इति। अत एव चन्दनपङ्कलेपस्तापयुक्तस्यैव जनस्य कृते सुखकरो भवति। अतो नात्मा नित्यानन्दरूपः किन्तु दुःखभयाक्रान्त एवेति पूर्वपक्षं निराकरोति ग्रन्थकारः – **अभयमिति**।

अयमभिप्रायः – "जीवावस्था कामं दुःखसंस्पर्शरहितकेवलसुखावस्था मा भवतु नाम, ब्रह्मावस्था तु सर्वभयविनिर्मुक्ता भवति। न ह्यस्यामवस्थायाम् अल्पीयानपि क्लेशसंस्पर्शो भवति। सा हि सर्वथाऽभयावस्थाऽस्ति। तदुक्तम् – **"अभयं वै ब्रह्म"** इति।

उपपद्यते च ब्रह्मणोऽभयत्वमित्याह – **तथा हीत्यादिना**। अयमर्थः – ब्रह्मणि स्वाभाविकमागन्तुकं वा उभयमपि भयं नार्हति भवितुम्। यदि स्वाभाविकं भयं स्यात् तदा ब्रह्मण आनन्दरूपेण विरोधः स्यात्। भयं च आनन्दरूपं चेति परस्परविरुद्धम्। "विज्ञानमानन्दम्" इति श्रुतौ ब्रह्म आनन्दरूपमुक्तम्।

**भवति" (बृ.१/४/२)। न च दुःखनिवृत्तिरूपं सुखम्, येन दुःखितस्यैव सुखं सुखत्वेऽवतिष्ठेत - इति। प्रपञ्चितमेतत् पुरस्तात्।**

**अपरः प्रकारः — इह केचिद् मुक्ताभिमतानामपि पुनरावृत्तिभयं मन्यन्ते। इह हि विज्ञानात्मानो ब्रह्मणो विभक्ताः स्युः, अविभक्ता वा, स्वतो ब्रह्मणैव वा विभज्येरन् भोगार्थं क्रीडार्थं विभूतिख्यापनार्थं वा,**

---

यदि ब्रह्मणि भयमागन्तुकमर्थात् केनापि हेतुना कृतं स्यात्, तदपि नोपपन्नम्, ब्रह्मातिरिक्तस्य द्वितीयस्याभावात्, "एकमेवाद्वितीयं ब्रह्म", "द्वितीयाद्वै भयं भवती"त्यादिश्रुतेः।

यदुक्तम् — दुःखवत एव सुखं सुखत्वेऽवतिष्ठतेऽतो ब्रह्मणः सुखात्मकत्वेऽगत्या तस्य दुःखवत्त्वप्रसक्तिरिति, तदपि न युक्तम्, स्यादेवं यदि सुखं दुःखनिवृत्तिरूपं भवेत्। तच्च नास्ति, सुखस्य स्वतन्त्रभावरूपत्वादिति बहु विवेचितं पूर्वमिति तदेवानुसन्धेयम्।

अभयपदस्य प्रकारान्तरेण व्याख्यामुपस्थापयति ग्रन्थकारः — **अपरः प्रकार इत्यादिना**। किं तत् प्रकारान्तरमिति केषाञ्चिन्मतं निर्दिशति — **इह केचिदिति**। अयं हि तन्मतनिष्कर्षः — ये नित्यमुक्तत्वेन अभिमता आत्मानस्तेषामपि पुनरावृत्तिभयं भवति, किन्तु अविद्याकृतत्वाद् वास्तविकं तद्भयं नास्तीति "अभयम्" इति प्रजापतिविशेषणेन प्रकटीकृतं मङ्गलश्लोके इति व्याख्यान्तरकर्तॄणामभिमतमिति भावः।

तच्च भयं संसार इति वक्ष्यते — तेषां कर्माविद्यानिबन्धनः संसारः, द्रष्टृदृश्ययोः परस्परयोग्यतानिबन्धनो वा संसार इति विकल्पद्वयेन।

येषां विज्ञानात्मनामिदं संसारभयं, तान् विवेक्तुं नानाविकल्पैः प्रदर्शयति — **इह हीति**। अयमर्थः — ते विज्ञानात्मानो ब्रह्मणो विभक्ता भवन्तु, अविभक्ता वा भवन्तु, विभक्तत्वपक्षेऽपि स्वत एव ब्रह्मणो विभक्ताः स्युः, अथवा न स्वतः किन्तु ब्रह्मणैव ते विभज्यन्ते। ब्रह्मकृतविभागपक्षेऽपि ब्रह्मणा ते स्वभोगार्थं

**स्वभावाद् वा। अविद्यानिबन्धनो वा तद्विभागः, विज्ञानात्मान एव वा ब्रह्मशब्दाभिधेयाः, नान्यद् ब्रह्म। तेषां कर्माविद्यानिबन्धनः संसारः, द्रष्टृदृश्ययोः परस्परयोग्यतानिबन्धनो वा। तत्र योग्यतानिबन्धनत्वे योग्यताया अनपायात् पुनरावृत्तिभयमप्रच्युतम्।**

**अथ कृतकार्यत्वान्न पुनरावृत्तिः, सकृच्छब्दाद्युपलब्धौ न पुनस्त-दुपलब्धिः स्यात्। अथानन्तविकारा प्रकृतिः सर्वात्मनोपलब्धौ निवर्तते,**

---

विभज्यन्ते, क्रीडार्थं वा स्वविभूतिख्यापनार्थं वा विभज्यन्ते। अथवा विभागे नास्ति ब्रह्मणः किञ्चित् स्वप्रयोजनम्, किन्तु स्वभावादेव विज्ञानात्मानो ब्रह्मणो विभज्यन्त इति।

एष्वपि पक्षेषु स विभागोऽविद्याकृतो भवेत्। अथवा न विज्ञानात्मानो ब्रह्मणो विभक्ताः पृथक् सन्ति, किन्तु विज्ञानात्मान एव ब्रह्मशब्देनाभिधीयन्ते, विज्ञानात्मभ्यो ब्रह्म किमपि अन्यद् वस्तु नास्तीति विभिन्नाः पक्षा भवितुमर्हन्ति।

अत्र भवन्तु नाम यथा तथा विभिन्ना विज्ञानात्मपक्षाः, तथापि तेषां संसाररूपं भयं किं कर्माविद्यानिबन्धनमुत द्रष्टृदृश्ययोः परस्परयोग्यतानिबन्धनमिति विकल्पद्वये प्रथमं योग्यतापक्षे संसारभयमुपपादयति ग्रन्थकारः – **तत्र योग्यतानिबन्धनत्व इति**। अयमाशयः – द्रष्टुरात्मनो या द्रष्टृयोग्यता तथा दृश्यस्य अर्थाद् विषयाकारपरिणतायास्त्रिगुणात्मकप्रकृतेर्या दृश्ययोग्यता, तया योग्यतया द्रष्टाऽऽत्मा दृश्यान् विषयान् पश्यन् बध्यत इति यदि पक्षः स्वीक्रियते, तदा तयोर्द्रष्टृदृश्ययोर्नित्ययोर्योग्यताऽपि नित्या इति तस्याः कदाप्युच्छेदाभावात् पुनरावृत्तिरूपसंसारभयमस्त्येवेति।

यद्युच्येत - प्रकृतेर्द्वे कार्ये पुरुषाय भोगो मोक्षश्चेति। तत्र भोगस्तु संसारावस्थायामेव कृतः, मोक्षोऽपि सत्त्वपुरुषान्यताख्यातौ सत्यां सम्पादित एवेति कृतकार्यत्वात् पुनरावृत्तिभयं नैवास्तीति चेत्, तर्हि पुरुषाय सकृच्छब्दाद्युपलम्भं सम्पाद्य प्रकृतिः पुनस्तस्मै शब्दादिकं नोपलम्भयेत्, सम्पादयति च पुनः पुनः

**अविकृतरूपान्तरोपलब्धये च प्रवर्तत एव, आनन्त्यादेव तर्हि न सर्वात्मनोपलब्धिः सम्भवतीति गुणपुरुषान्यताख्यातिमतोऽपि पुनरावृत्तिः सम्भाव्येत।**

**अविद्यापूर्वकर्मनिबन्धनत्वेऽप्यनादौ संसारेऽनन्तत्वात् कर्मणामनियतविपाककालत्वाच्च प्रतिसर्गावस्थाया इव मुक्त्यवस्थाया अपि प्रत्युदावृत्तिभयं न व्यावर्तते।**

---

शब्दाद्युपलब्धिं संसारावस्थायाम्। तस्मात् संसारावस्थायामिव गुणपुरुषान्यताख्यातिदशायामपि पुनरावृत्तिभयमस्त्येवेति।

पुनः शङ्कते – **अथानन्तविकारा प्रकृतिरिति**। अयमाशयः – अनन्तविकारा हि प्रकृतिरेकविकारोपलब्धौ सत्यामपि अविकृतस्य विकारान्तरस्योपलब्धये प्रवर्तिष्यत एव।अतो न सकृच्छब्दाद्युपलब्धौ सत्यां पुनःशब्दान्तरानुपलब्धिप्रसङ्गो दोषः। तस्माद् अनन्तविकारायाः प्रकृतेः सर्वविकारात्मना तूपलब्धौ जातायां निवर्तिष्यत एव सा, न पुनः प्रवर्तिष्यत इति।

आशङ्कामिमां निराकृत्य पुनरावृत्तिभयं प्रदर्शयति – **आनन्त्यादेव तर्हीत्यादिना।** अयमर्थः – यद्यनन्तविकारा प्रकृतिस्तदा विकाराणामानन्त्यादेव प्रकृतेः सर्वात्मना सर्वविकारात्मना उपलब्धिर्न भवितुमर्हतीति गुणपुरुषान्यताख्यातौ जातायामपि सा पुनः पुनःप्रवर्तिष्यत एव।तथा च मुक्तस्यापि पुरुषस्य पुनर्विषयोपभोगलक्षणसंसारात्मकपुनरावृत्तिभयमस्त्येवेति।

द्रष्टृदृश्ययोर्योग्यतानिबन्धनं संसारभयमिति पक्षे संसारभयमुपपाद्य अविद्याकर्मनिबन्धनसंसारभयपक्षेऽपि तदुपपादयति – **अविद्यापूर्वकर्मेति।** अविद्या च पूर्वकर्म च अविद्यापूर्वकर्मणी ते निबन्धने यस्य संसारस्य स अविद्यापूर्वकर्मनिबन्धनः संसार इति पक्षः।अत्रापि यदि पूर्वकर्मनिबन्धनः संसारस्तदाऽस्य संसारस्यानादित्वाद् अनादिभूतेऽस्मिन् संसारेऽद्यावधिकृतानां कर्मणामनन्तत्वात् तेषां विपाककालस्य अनियतत्वाच्च यथा प्रतिसर्गावस्थायाः = प्रलयावस्थायाः संसारः पुनरावर्तते,

**अविद्यानिबन्धनत्वेऽपि तस्या निर्हेतुत्वान्निष्प्रयोजनत्वाच्च प्रवृत्ते-स्तथैव पुनः पुनः प्रवृत्तिः केन वार्यते? तथा च सुषुप्ते ब्रह्मप्राप्तेः प्रत्युदावृत्तिर्दृश्यते।**

**स्वतन्त्रे तु ब्रह्मणि विभक्तानां जीवानां देहेन्द्रियोपभोगहेतौ (सति) अविभक्तानां वा विभज्य भोगादिभिर्हेतुभिर्न देहादिसम्बन्धो न सम्भाव्यते। स्वतन्त्रो हि क्रीडया स्वातन्त्र्यख्यापनेन वा स्वभावेन वा पुनर्बध्नीयाल्लौकिक इवेश्वरः।**

---

तथैव मुक्त्यवस्थाया अपि पुनः संसारावृत्तिभयं न निवर्तिष्यत इति पूर्वोक्तो दोषस्तदवस्थः।

यदि त्वविद्याप्रयुक्तः संसारस्तदापि तस्या अविद्यायाः कश्चिद्धेतुरस्ति न वा? अस्ति चेत्, तस्यापि हेत्वन्तरं तस्यापि हेत्वन्तरमिति अनवस्थाप्रसङ्गः। यदि त्वविद्याया नास्ति कश्चिद्धेतुस्तदा तस्या निर्हेतुकत्वेन अविद्याप्रवृत्तेः, निष्प्रयोजनत्वेन च पुनः पुनः संसारप्रवृत्तिः कथं वारयितुं शक्येत? न हि अविद्या स्वरूपलाभार्थं कञ्चिद्धेतुं स्वप्रवृत्त्यर्थं च किञ्चित् प्रयोजनमपेक्षते। तथा च पुरुषस्य संसारभयमक्षुण्णम्। अत्र दृष्टान्तमाह – **तथा चेति**। यथा हि प्रत्यहं सुषुप्त्यवस्थायां ब्रह्मप्राप्तोऽपि जीवः पुनः पुनः जागरे प्रत्यावर्तत इति सर्वेषां प्रत्यक्षानुभवस्तद्वद् इति भावः। सुषुप्ते ब्रह्मप्राप्तौ च श्रुतिः प्रमाणम् – "सति सम्पद्य न विदुः सति सम्पद्यामहे" इति।

ब्रह्म हि सर्वथा स्वतन्त्रं न तु विज्ञानात्मान एव ब्रह्मशब्दाभिधेया इति पक्षमालम्ब्य संसारभयमुपपादयति – **स्वतन्त्रे त्विति**। ब्रह्मस्वातन्त्र्यपक्षेऽपि यदि जीवाः स्वत एव ब्रह्मणो विभक्ताः स्वीक्रियन्ते तदा सति देहेन्द्रियभोगानां हेतौ "कारणे सति कार्यावश्यंभावः" इति नियमाद् अवश्यं देहादिसम्बन्धरूप-संसारो जीवानां सम्भावयितुं शक्य इति संसारभयं सुतरां सिध्यति। यदि तु जीवा न स्वतो विभक्तास्तदापि स्वतन्त्रेण ब्रह्मणा तेषां भोगार्थं स्वीयक्रीडार्थं

**अथैष कर्मापेक्षः, न कर्मस्वरूपस्वातन्त्र्यम्। तथापि कर्मणामानन्त्याद् विपाककालनियमाभावाच्च कल्पशतातिक्रमेऽपि प्राप्तविपाककालेभ्यः कर्मभ्यः पुनर्बन्धः सम्भाव्यते। यतो नैकभविकः कर्माशयः।**

---

स्वविभूतिख्यापनार्थं स्वभावाद् वा ते जीवा विभज्यन्ते, विभज्य च ते सति देहेन्द्रियादिभोगहेतौ पूर्ववदेव पुनर्देहादिसम्बद्धाः क्रियन्त इत्यस्ति सम्भावना। यतो हि लौकिक ईश्वर इव स्वतन्त्रं ब्रह्मापि क्रीडया हेतुना स्वातन्त्र्यख्यापनेन वा हेतुना स्वभावेन वा हेतुना जीवान् पुनर्बध्नीयादेवेति सर्वथा सिद्धं जीवानां संसारभयमिति तात्पर्यम्।

यदि तु ब्रह्मापि न सर्वथा स्वतन्त्रं जीवानां देहेन्द्रियादिसम्बन्धरूपं बन्धं जनयति, किन्तु जीवानां पूर्वकृतकर्माण्यपेक्ष्यैव तथा करोति। अतो ज्ञानेन सर्वकर्मसु क्षपितेषु जातेषु नैव निजस्वातन्त्र्यख्यापनाय ब्रह्म मुक्तौ जातायामपि पुनर्जीवान् स्वातन्त्र्येण बध्नीयादिति सम्भावनेत्युच्येत चेत्, तदपि न युक्तम्, यतो ह्यनादौ संसारे कर्मणामानन्त्यात् तेषां विपाककालस्यानियतत्वाच्च व्यतीतेष्वपि कल्पशतेषु येषामदत्तफलानां कर्मणां विपाककालो यदा प्राप्तः स्यात् तदा पुनरपि जीवान् बध्नीयादिति सम्भावनाया अनिवारणात्। यतो नैकभविकः कर्माशय इति।

एको भवो जन्म यस्यास्ति, स एकभविकः कर्माशय इति नास्ति नियमः। तस्माद् अनेकं कर्म संघीभूय एकमेव जन्म निर्वर्तयति स्वफलदानाय न त्वनेकमिति नियमाभावाद् एकस्मिन्नेव जन्मनि सर्वकर्माशयप्रक्षयासम्भवात् पुनर्बन्धसम्भावनाऽस्त्येवेति भावः।

अयमभिप्रायः पूर्वोत्तरपक्षयोः– पूर्वपूर्वजन्मनि कृतः कर्माशयः कर्मसंघातो मरणादभिव्यक्तः सन् जन्मान्तरं सम्पाद्य तत्र स्वफलानि दत्वा कार्त्स्न्येन निवर्तते। एवं च प्रतिजन्म समाप्तत्वात् कर्मणामानन्त्यं नास्ति। अतोऽव्यवहितपूर्वजन्मकृतस्य कर्माशयस्याव्यवहितोत्तरभाविदेह एव कार्त्स्न्येन नाशाद् न पुनर्बन्धसम्भावना जीवस्य, अत एव न पुनः संसारभयमिति पूर्वपक्षः।

**न ह्यस्य प्रायणमेवाभिव्यञ्जकम्, अपि तु देशकालादयोऽपि। तथा हि – एकस्मिन्नपि देहे क्रमेण कर्मफलभोगो दृश्यते, विरुद्धजातिभोग-निमित्तानां च कर्मणां युगपदवापगमनानुपपत्तेः। गर्भमृत्यूनां चा-कर्मणां विमुक्तिप्रसङ्गः।**

---

नास्त्येकभविकः कर्माशयः, कर्मणामानन्त्याद् अनियतविपाककालत्वाच्चेति सिद्धान्तपक्षः। एतच्चानुपदमेवोपपादयिष्यति ग्रन्थकारः– **''न ही''त्यादिग्रन्थेन।**

अस्य कर्माशयस्याभिव्यञ्जकमुद्बोधकं प्रायणं मरणमात्रं न भवति, अपि तु देशकालादयोऽप्युद्बोधका भवन्ति। तस्मादनियतनानादेशकालसापेक्षतया एकभविकत्वं कर्माशयस्य नोपपद्यते। अयमाशयः – पूर्वोक्तरीत्या कर्मसंघातस्यैक-भविकत्वमर्थाद् एकस्मिन्नेव जन्मनि स्वीयं समस्तं फलं प्रदाय आत्यन्तिकी निवृत्तिस्तदा सम्भवेद् यदि मरणमात्रमेकं समस्तस्य कर्मसंघातस्य सहसैव फलदानाय समुद्बोधकं भवेत्, किन्त्वेवं नास्ति, कर्माशयस्याभिव्यक्तौ देशकालादीनामपि कारणत्वात्।

देशकालादयश्चानियता नाना सन्ति। अतो ते नैकदा समवेत्य सर्वं कर्माशयमभिव्यञ्जयितुं शक्नुवन्ति, किन्तु यथायथं क्रमेणैवेति। तस्मादेकभविकत्वं कर्माशयस्य दुरुपपादम्।

एतदेव निरूपयति ग्रन्थकारः– **तथा हीत्यादिना।** अयमर्थः – एकस्यैव जन्मनः प्रयोजको यः कर्माशयस्तस्यापि फलभोगः क्रमेणैव भवन् दृश्यते बाल्ये यौवने स्थाविरे च, न त्वेकदैव सर्वे भोगा भुज्यन्ते। यदीयं स्थितिर्नियतदेशकालस्य एकजन्मप्रयोजकस्य उद्बुद्धस्य कर्माशयस्यास्ति, तदा का कथाऽनियत-देशकालनिमित्तानां कर्माशयानामेकदा युगपदनुद्बुद्धानामनेकजन्मसु क्रमेण भोगजनने इति। अतो न कर्माशयानां मरणमात्रमभिव्यञ्जकं भवति, किन्तु देशकालादयोऽपीति मन्तव्यमेव।

एवं, यदि मरणमात्रं फलभोगाय कर्मणामभिव्यञ्जकं स्वीक्रियेत, तदा पूर्वजन्मनि कृतानां परस्परं विरुद्धदेवनरतिर्यक्स्थावरजातिभोगनिमित्तानां

**तत्रोच्यते— अभयमिति। परा हीयं क्षेमप्राप्तिः श्रूयते। नास्यां पुनः संसारभयमस्ति। न तावत् कर्मनिमित्तः पुनः संसारः, विद्यया प्रायश्चित्तेनेवाकृतभोगानामपि कर्मणां प्रक्षयात्। उक्तं हि—**

---

सर्वेषामेव कर्मणां मरणोत्तरमुद्बुद्धानां युगपदेव विरुद्धफलजनकत्वं प्रसज्येत, तच्चानिष्टम्।

ननु विरुद्धेष्वपि फलजननोन्मुखेषु कर्मसु मध्ये मुख्यमेव किमपि कर्मैकं फलभोगजननाय कर्माशयोद्बोधाय कल्पते, इतराणि नानाविरुद्धानि च कर्माणि तत्रैवावापं गतानि भवन्ति। अर्थाद् विरुद्धानेककर्मवशाद् युगपद् विरुद्धानेकदेहग्रहणासम्भवाद् एकेन कर्मणा एकस्मिन् देहे कृतेऽन्येषां कर्मणां तस्मिन्नेव देहेऽवापगमनम् = तत्रानुप्रविश्य स्वफलजनकत्वं भविष्यतीति कर्माशयस्यैकभविकत्वाङ्गीकारे न काचिदनुपपत्तिरिति चेत्, तदपि नोचितम्, विरुद्धनानाकर्मवशाज्जायमानानां विरुद्धजन्मभोगानामेकत्र जन्मनि समवायाभावेन तदर्थं कर्मणामवापगमनानुपपत्तेः। एतदेवोक्तम्— **विरुद्धजातिभोगेत्यादिग्रन्थेन।**

एवं ये गर्भ एव मृतास्तेषां पुनः कर्मावसरालाभात् पूर्वकर्मणां च पूर्वस्मिन्नेव भवे कात्स्न्येनोपभुक्तफलत्वाच्च सर्वथैव कर्मशून्यानां विमुक्तिः प्रसज्येतेत्यपरो दोषः, अथवा प्रायणाभिव्यक्तपूर्वकर्मभिरारब्धमिदं गर्भशरीरम्। एतद् गर्भशरीरातिरिक्तं नास्ति किमप्यवशिष्टं फलं पूर्वजन्मकृतानां कर्मणाम्, अनेन च गर्भशरीरेण न किमपि कर्मानुष्ठितमिति सर्वथा कर्मशून्यावस्थां प्राप्तो गर्भमृतो जन्तुर्मुक्तः स्यात् कर्माशयस्यैकभविकत्वाङ्गीकारे। तस्मान्नैकभविकः कर्माशय इति सिद्धम्।

अतोऽनादौ संसारे कर्मणामानन्त्यादनियतफलत्वाच्च मुक्तस्यापि आवृत्तिरूपसंसारभयमस्तीत्याशङ्क्य समाधानमाह— **तत्रोच्यते— अभयमिति।**

यद्धि ब्रह्म प्रकृते नमस्कारविषयतया ग्रन्थकृता निर्दिष्टं तद् विगलितसर्वभयमस्ति। यतो हीयं ब्रह्मावस्था सर्वोत्कृष्टा निरतिशयक्षेमप्राप्तिरूपाऽस्ति। अतोऽस्यां परक्षेमप्राप्तिरूपायामवस्थायां नास्ति पुनः संसारभयम्।

**"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" (गी० ४/३७) इति। तथा– "क्षीयन्ते चास्य कर्माणि" (मु० २/२/८) इति।**

**अथवा विद्ययाऽविद्यानिवृत्तौ प्रविलीन एव कर्मकर्तृफलविभागः,**

---

न च कर्मणामानन्त्याद् अनियतकालफलभोगत्वाच्च, यानि कर्माणि असम्पादितभोगानि सन्ति, तेषां विनाशाभावात् पुनः संसारभयमस्त्येव, भोगेनैव कर्मणां प्रक्षयादिति वाच्यम्, भोगेनैव कर्मणां प्रक्षय इति नियमाभावात्। तथा हि, प्रायश्चित्तेन अकृतभोगान्यपि कर्माणि क्षीयन्ते, तथैव विद्ययाऽकृतभोगान्यपि कर्माणि प्रक्षीणानि जायन्ते। न च कर्मणामानन्त्याद् विद्ययापि कथं सर्वकर्मप्रक्षयः स्यादिति वाच्यम्, विद्याया एवेदं माहात्म्यं यत् कर्मणामानन्त्यमपि सा दहतीति।

ननु प्रायश्चित्तमपि नैमित्तिककर्ममात्रमस्ति, तदपि येन निमित्तेन (उद्देश्येन) कृतं तत्सम्पाद्यापि स्वयं भोगेनैव क्षीयते। अतो नास्ति किमपि कर्मजातं यद् भोगमन्तरा प्रक्षीयेत। यथा हि अग्नीषोमीये यागे पशुहिंसात्मकं कर्म यागं निर्वर्तयदपि स्वयं भोगेनैव क्षीयते। अर्थात् तत्र कृताया हिंसायाः फलमप्यवश्यं भुज्यते यजमानेन। तदुक्तमभियुक्तैः – "मृष्यन्ते हि पुण्यसम्भारोपनीतस्वर्ग-सुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्" इति। तद्वद् विद्ययाऽपि न सर्वकर्मप्रक्षय इति चेदत्रोच्यते – प्रायश्चित्तेनापि पापकर्म प्रक्षीयत इत्यत्र "द्वादशाब्देन गोघाती तस्मात् पापात् प्रमुच्यते" इति स्मृतेरेव प्रमाणत्वात्। एवं विद्ययापि सर्वकर्माणि प्रक्षीणानि भवन्तीत्यत्रास्ति स्मृतिः प्रमाणम्। यथा – "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" (गी० ४/३७), इति, "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (मुण्डक० २/२/८) इति च।

"पूर्वप्रघट्टके" प्रायश्चित्तेन उत्पन्नमदृष्टं कृतं पापकर्म विनाशयति। एवमेव विद्यया उत्पन्नमदृष्टं सर्वकर्माणि प्रविलापयति। "ज्ञानाग्निः सर्वकर्माणि" इति गीतावचनस्य च अदृष्टद्वारा ज्ञानाग्नेः सर्वकर्मणां भस्मसात्करणमित्यर्थ इति न्यायमतं मीमांसामतं वा प्रदर्शितम्।

इदानीम् **अथवाकल्पेन** स्वमतमाह ग्रन्थकारः। अयमाशयः – विद्याया अविद्या-निवृत्तिरेव स्वकार्यम्। जातायाञ्चाविद्यानिवृत्तौ कर्मकर्तृफलविभाग स्वयमेव

**तस्य कुतः सम्भवः? नाप्यविद्यानिमित्तः, तत्प्रवृत्तिहेतोरभावात्। अनादिर्ह्यविद्या, अनादित्वादेव न हेतुमपेक्षते। प्रागभावे हि हेतुव्यापारः, असति प्रागभावे कदा हेतुर्व्याप्रियेत? न हि ततो हेतुकृत्यमस्ति।**

**विद्यया तूच्छिन्ना, प्रागसती प्रवर्तमाना नाकस्मात् प्रवर्तितुमर्हति।**

---

प्रविलीयते, कर्मकर्तृफलविभागस्य अविद्यामात्रप्रयुक्तत्वात्। प्रयोजके निवृत्ते प्रयोज्यासम्भवात्। मध्येऽदृष्टाभ्युपगमे विद्यादशायामपि द्वैतसत्ताभ्युपगमप्रसङ्गः। तथा चाद्वैतश्रुतिर्विरुध्येतेति।

एवम्, अविद्यानिबन्धनः पुनः संसारो न भवितुमर्हति, विद्यया अविद्याया निवृत्तत्वात्। न च विद्यया अविद्यायां हतायामपि पुनरविद्यान्तरमुत्पत्स्यते तत एव च मुक्तस्य पुनर्बन्धः प्रसज्येतेति वाच्यम्, अनाद्यविद्याया निर्हेतुकत्वेन हेत्वभावाद् अविद्याप्रवृत्तेरसम्भवात्। अनादिर्ह्यविद्या, अतोऽनादित्वादेव सा स्वप्रवृत्तये हेतुं नापेक्षते। न हि काचिदप्येतादृशी अविद्याऽस्ति, यस्याः प्रागभावः स्यात् कारणव्यापारतश्च घटादिवदुत्पत्तिः स्यादिति। यस्य कार्यस्य प्रागभावो भवति, तस्यैवोत्पत्तये हेतुर्व्याप्रियते। यस्य अनादेः प्रागभाव एव नास्ति, तत्र हेतुव्यापारः कदाऽपेक्ष्येत। असति प्रागभावे हेतुकृत्यं नैव भवति। अत एव सति घटे कुलालव्यापारो नैव भवति।

"**विद्यया तूच्छिन्ना प्रागसती प्रवर्तमाना नाकस्मात् प्रवर्तितुमर्हति**" इति मूलस्यायमाशयः– अनादिर्ह्यविद्या विद्यया उच्छिन्ना जाता। अन्या या काचिद-विद्या उत्पत्स्यमाना मन्यते सापि प्रागसत्येव मन्तव्या। तस्याः प्रागसत्त्वं च हेत्वभावादेव मन्तव्यम्। अत इदानीं यावद् हेत्वभावाद् याऽविद्याऽसती, पश्चादपि सा नाकस्मादुत्पत्तुमर्हति सती च भवितुमर्हति, हेत्वभावादेवेति।

न च सुषुप्तावस्थायामुच्छिन्नापि अविद्या जागरे पुनरुत्पद्यत इति दृश्यते। अतो विद्यया समुच्छिन्नाऽपि साऽविद्या पुनरुत्पत्स्यत इति सम्भावनाऽस्त्येवेति वाच्यम्, सुषुप्तावस्थायामविद्या नोच्छिन्ना भवति किन्तु तस्याः कार्यभूतं विक्षेपमात्रं

**सुषुप्ते तु विक्षेपमात्रं निवृत्तम्, तत्संस्कारोऽग्रहणं च नैव निवृत्ते। अन्यथा न तुरीयाद् भिद्येत। विक्षेपमात्राभावात्तु ब्रह्मप्राप्त्यभिधानम्। तस्मात् सुष्ठूक्तम् – अभयमिति।**

**केन पुनः प्रमाणेनास्यार्थस्य समधिगमः? न तावत् प्रत्यक्षेण, तस्यैतद् विपरीतभेदविषयत्वात्। नाप्यनुमानेन, तत्पूर्वकत्वात्। नोपमानेन,**

---

निवृत्तं जायते। अविद्यायाः संस्कार आत्मतत्त्वाग्रहणञ्च यथापूर्वमेवावस्थितं तिष्ठति। अतो न तत्राविद्या उच्छिद्य जागरे पुनरुत्पन्ना भवतीति ध्येयम्। एवं, यदि तदानीमविद्या सर्वथा उच्छिन्ना स्यात् तदा सुषुप्तावस्थायास्तुरीयावस्थायाश्च को भेदः स्यात्?

ननु यदि सुषुप्तेऽविद्या नोच्छिद्यते तदा "तत्राहरहरिमाः प्रजा ब्रह्मलोकम्" इति श्रुतेस्तदानीं ब्रह्मप्राप्त्यभिधानं कथमुपपद्येतेति चेत्, न, विक्षेपमात्राभावादेव तत्र ब्रह्मप्राप्त्यभिधानं गौणं मन्तव्यम्। तस्मात् सुष्ठूच्यते – **अभयमिति**। ब्रह्म तु स्वरूपतोऽभयमेव वर्तते अविद्याकृतमेव तत्र भयं कल्पितम्। विद्यायां जातायां कल्पितमपि तद् भयं सर्वथा नास्तीति मन्तव्यम्।

**॥ इति ब्रह्मसिद्धौ मङ्गलश्लोकार्थविवेचनं सम्पूर्णम् ॥**

ग्राहकप्रमाणाभावेन न तादृशमद्वयात्मकं ब्रह्मावगन्तुं शक्यमित्याक्षेपं मनसिकृत्य पूर्वपक्षी पृच्छति – **केन पुनः प्रमाणेनेति**। अस्याद्वैतात्मतत्त्वरूपस्य प्रजापतेरवगमः प्रत्यक्षादिषु न केनापि प्रमाणेन भवितुं शक्नुयादिति प्रष्टुराशयः। अवगमासम्भवमेवोपपादयति – **न तावत् प्रत्यक्षेणेत्यादिना**। तत्र प्रत्यक्षप्रमाणस्य अद्वैततत्त्वविपरीतनीलपीतादिभेदविषयत्वेन तथाविधाद्वैतब्रह्मग्राहकत्वासम्भवात्।

**सादृश्यविषयत्वात्, तस्य च भेदाधिष्ठानत्वात्। अर्थापत्तिस्तु विपर्यये, न भेदमन्तरेण कश्चिद् व्यवहार उपपद्यते यतः। अभेदोऽपि हि प्रमात्रादिविभागाद् ऋते दुरवगमः।**

**अभावोऽपि न भावरूपतत्त्वावगमायालम्। नापि प्रपञ्चाभावाव-गमाय, प्रत्यक्षादिषु सत्सु तदसंभवात्।**

---

नाप्यनुमानेन तदवगमः शक्यः कर्तुम्, लिङ्गलिङ्ग्यादिभेदग्रहसापेक्षत्वेन प्रत्यक्षपूर्वकत्वात्। प्रत्यक्षप्रमाणाप्रवृत्तावनुमानप्रमाणस्य सुतरामप्रवृत्तेः। नाप्युपमानेन तदवगमः सम्भवी, उपमानस्य सादृश्यग्रहसापेक्षत्वेन सादृश्यस्य च भेदगर्भत्वाद् अद्वैतविरोधात्। सादृश्यस्य भेदाधिष्ठानत्वं नाम सदृशस्य प्रतियोग्यनुयोगिभेदसापेक्षत्वम्। यद्यपि सर्वाण्येतानि प्रमाणानि भेदसापेक्षाणि तथापि प्रत्यक्षं साक्षाद् भेदं गृह्णाति, अनुमानोपमाने तु न भेदं साक्षाद् गृह्णीत इति विशेषः। प्रत्यक्षमपि परस्परं भिन्नं घटपटादि गृह्णाति वस्तुप्राधान्येन, भेदन्तु तदुपसर्जनत्वेनेति विशेषो बोध्यः।

अर्थापत्तिरप्यभेदविपर्यये भेद एव साक्षात् प्रमाणम्, अतोऽर्थापत्तिस्तु अद्वयब्रह्मबोधप्रतिपक्षभूतैव । यतो हि प्रमातृप्रमेयादिभेदव्यवहारो भेदमन्तरेण नोपपद्यते। अन्यथा अद्वयब्रह्मावगमोऽपि कस्य भवेत् ? यदि प्रमातृप्रमेयविभागो वास्तविको न भवेत्।

अभावोऽपि प्रमाणं न भावरूपब्रह्मतत्त्वावगमाय समर्थो भवितुमर्हति, तस्य वस्त्वभावबोधकत्वात्। यद्युच्येत – अभावप्रमाणं ब्रह्मरूपभावबोधायालं मा नाम भूत्, प्रपञ्चाभावं तु बोधयितुमलं भविष्यति, तावतैवाद्वैतवादिन इष्टसिद्धिरिति चेत्, तदपि न सम्भवि, प्रपञ्चसत्त्वबोधकेषु प्रत्यक्षादिप्रमाणेषु जागरूकेषु सत्सु प्रपञ्चाभावावगमस्यासम्भवादिति भावः।

**आगमोऽपि न तावदाप्तप्रणेतृकोऽत्र क्रमते, प्रमाणान्तराधिगतगोचरत्वात्। नापि स्वतन्त्रः, विधिनिषेधरूपत्वात्, तयोश्च स्थिते तत्त्वेऽसंभवात्।**

**नापि तदनपेक्षं व्यवस्थितवस्तुविषयमेव प्रामाण्यम्, भूतानुवादत्वे प्रमाणान्तरापेक्षत्वात्। लोकाच्च शब्दसामर्थ्याधिगमः। तत्र कार्यपरतयैव कार्यान्वयिष्वर्थेषु पदानि प्रयुज्यन्ते, तथार्थवत्त्वात्। न हि प्रवृत्तिनिवृत्तिशून्यस्य वचसः कश्चिदर्थः।**

---

**अत्र ब्रह्मणि** आगमोऽपि प्रमाणं भवितुं नार्हति। यतो हि स आगमः आप्तप्रणेतृकः प्रमाणं स्यात्, स्वतन्त्रो वा ? प्रथमकल्पे यस्यागमस्य प्रणेता कश्चिदाप्तो यथार्थवक्ता भवेत्, स चेत् प्रमाणं स्वीक्रियेत, तन्नोपपद्यते, तादृश आगमः प्रमाणान्तरेणाधिगतमेवार्थं विषयीकरोति। अर्थात् तस्यागमस्य प्रणेता प्रमाणान्तरेण विषयं विज्ञाय तमागमं प्रणयति। ब्रह्म तु न प्रत्यक्षाद्यन्यतमेन केनापि प्रमाणान्तरेणाधिगन्तुं शक्यमित्यनुपदमेव निवेदितम्। अत आप्तजनप्रणीत आगमो ब्रह्मणि प्रमाणं न भवितुमर्हति।

यद्युच्येत – केनापि आप्तेन अप्रणीतः स्वतन्त्र एवागमः श्रुतिर्यो ब्रह्मणि प्रमाणमस्तीति द्वितीयः कल्प इति, तदपि न सम्भवति, श्रुतेः प्रवृत्तिनिवृत्तिजनकविधिनिषेधरूपतया सिद्धब्रह्मणश्च विधिनिषेधयोरविषयत्वात्, कार्य एव वस्तुनि विधिनिषेधयोः प्रवृत्तेः।

यद्युच्येत – विधिनिषेधावनपेक्ष्य सिद्ध एव वस्तुनि ब्रह्मतत्त्वे श्रुतेः प्रामाण्यं भविष्यतीति, तन्न युक्तम्, यतो ब्रह्मबोधकश्रुतेः सिद्धानुवादमात्रत्वे घटोऽयमितिवत् प्रमाणान्तरापेक्षाया आवश्यकत्वात्। अलौकिके ब्रह्मणि घटादाविव प्रत्यक्षादिप्रमाणान्तरासम्भवेन सिद्धब्रह्मबोधकश्रुतेरप्रामाण्यमेव स्यादित्याशयः।

**अपि च न भूतानुवादाद् वचसः सम्बन्धावगमः, अपि तु प्रवर्तकात्। प्रवृत्त्या ह्यनुमायार्थप्रत्ययं तत्र शब्दस्य सामर्थ्यप्रतीतेः। तथा च न प्रवृत्तिसम्बन्धरहितेष्वर्थेषु शब्दानां शक्तिर्गम्यते। तथा सत्यनवगत-सामर्थ्याः शब्दा भूतेऽर्थे कथं तदवगमयेयुः।**

---

किञ्च, कस्य शब्दस्य कस्मिन्नर्थे सामर्थ्यमिति लोकव्यवहारादेवावगम्यते। लोकव्यवहारे च कार्यपरतयैव (कार्यप्रयोजनेनैव) कार्यान्वितेष्वर्थेषु पदानि प्रयुज्यन्ते, तथा सत्येव तेषां पदानामर्थवत्त्वं भवति। अन्यथा तु निष्प्रयोजनान्येव तानि भवेयुः। कार्या हि क्रिया भवति। अतः प्रवृत्तिनिवृत्तिरूपक्रियाशून्यस्य नास्ति सार्थक्यम्। तस्मात् सर्वथा क्रियाशून्यस्य सिद्धब्रह्मणो बोधिकायाः श्रुतेर्निरर्थकत्वेनाप्रामाण्यमेव स्यात्। अतः सिद्धे ब्रह्मणि नागमः प्रमाणमिति भावः।

**किञ्च, शब्दस्य** वाचकस्य अर्थेन वाच्येन सह वाच्यवाचकभावरूपसम्बन्धा-वगमो न भूतानुवादात् सिद्धानुवादमात्राद् "गौः आनयनम्" इति वचसो भवति, किन्तु 'गामानय अश्वं बधान' इति प्रवर्तकादेव वचनाद् भवति। यतो 'गामानय' इति प्रवर्तकवाक्यश्रवणानन्तर प्रेष्यस्य गवानयने प्रवृत्तिर्भवति, सा च प्रवृत्तिरर्थज्ञानं विना नोपपद्यते, तया प्रवृत्त्या प्रेष्यस्य उक्तवाक्यार्थज्ञानमस्तीति पार्श्वस्थो बालोऽनुमिनोति। उक्तबोधस्योक्तशब्दानन्तरं जातत्वाद् निमित्तान्तरादर्शनाच्च स्वामिप्रयुक्ताभ्यां 'गामानय' इति शब्दाभ्यामेव भृत्यस्यैतदर्थप्रतीतिर्जाता इति निश्चिनोति बालः। निश्चित्य च गवादिपदानां गवाद्यर्थेषु शक्तिमवधारयति। ततश्च प्रवृत्तिद्वारैवार्थेषु शब्दशक्तेर्ग्रहसम्भवात्, सर्वथा प्रवृत्तिशून्ये सिद्धे ब्रह्मणि शब्दसामर्थ्यावगमासम्भवात् न सिद्धे ब्रह्मणि शब्दस्य प्रामाण्यम्। अतो नागमात् प्रमाणात् सिद्धब्रह्माधिगम इत्याशयः।

**अपि च प्रमाणान्तरावसितश्चेत् सोऽर्थः, न शब्दस्य तत्र प्रामाण्यम्। अथानवसितः, नतराम्। अपदार्थत्वे वाक्यविषयत्वासम्भवात्। पदार्थ एव हि विशिष्टतया वाक्यार्थीभवति। अत्यन्तापरिदृष्टस्तु पदादनवगम्यमानः पदार्थसंसर्गात्मके वाक्यार्थे न गुणत्वेन प्रधानत्वेन वाऽनुप्रवेशमर्हति।**

**अपि च प्रलीननिखिलावच्छेदं तत्त्वमगोचर एव प्रतिपत्तेः। सर्वा हि प्रतिपत्तिः "एवम्, नैवम्" इति व्यवच्छेदेन प्रवर्तते। अन्यथा न**

---

यद्युच्येत – **आगमो** न स्वतन्त्रो ब्रह्मणि प्रमाणं किन्तु प्रमाणान्तराधिगतमेवार्थं स बोधयतीति, तथा सति अधिगतार्थगन्तृत्वात् स आगमशब्दो ब्रह्मणि प्रमाणमेव न स्यात्, अनधिगतार्थगन्तृत्वस्यैव प्रमाणलक्षणत्वात्। यदि तु ब्रह्मतत्त्वं न प्रमाणान्तरेणाधिगतं तदा सुतरामेव तत्र शब्दस्य प्रामाण्यमसम्भवि, ब्रह्मतत्त्वेन सह शब्दस्य शक्तिग्रहासम्भवात्। लोके प्रमाणान्तराधिगत एवार्थे शब्दसम्बन्धस्य ग्रहणदर्शनात्। एवं ब्रह्मणि शब्दसम्बन्धग्रहासम्भवाद् ब्रह्म अपदार्थभूतं सत् कथं वाक्यविषयत्वं = वाक्यार्थत्वं भजते। पदार्थ एव हि पदार्थान्तरेण विशिष्टः सन् = अन्वितः सन् वाक्यार्थीभवति। एवं प्रमाणान्तरेण अत्यन्तमेव अपरिदृष्टो ब्रह्मरूपार्थः सम्बन्धग्रहासम्भवेन पदादनवगम्यमानः सन् पदार्थसंसर्गरूपे वाक्यार्थे न गुणत्वेन न वा प्रधानत्वेन प्रवेशमर्हेत्। पदादवगम्यमान एव पदार्थो वाक्यार्थे संसर्गात्मके गुणत्वेन वा प्रधानत्वेन वा प्रवेशं प्राप्नोति विषयीभवतीति यावत्।

अत आगमो न ब्रह्मतत्त्वे प्रमाणं भवितुमर्हतीति नागमाद् ब्रह्मबोधो भवेत्? तथा च ग्राहकप्रमाणाभावाद् ब्रह्मतत्त्वं नास्त्येवेति पूर्वपक्ष्याशयः।

किञ्च, प्रलीनो निखिलोऽवच्छेदो विशेषणं यस्य एवम्भूतं निरस्त-समस्त-विशेषणं निर्विशेषमिति यावत्, ब्रह्मतत्त्व प्रतीतेर्गोचर एव न भवति। यतो हि सर्वाऽपि प्रतीतिः "एवंप्रकारमिदम्, नैवंप्रकारम्" इत्येवं रूपेण व्यवच्छेदपूर्वकं प्रवर्तते। अन्यथा अव्यवच्छेदेन प्रवर्तमाना सा प्रतीतिरेव कस्यापि न स्यात्।

**कश्चित् प्रतिपन्नः स्यात्। सर्वविशेषप्रत्यस्तमये तु कथं प्रतिपत्तिः स्यादित्यत्राह –**

**आम्नायतः प्रसिद्धिं च कवयोऽस्य प्रचक्षते।**
**भेदप्रपञ्चविलयद्वारेण च निरूपणम् ॥ २॥**

**भूतार्थवादित्वेऽपि अपौरुषेयस्य न सापेक्षत्वम् इति वक्ष्यते। न च कार्यनिष्ठान्येव लोके वचांसि। तथा हि – प्रियाख्यानानि "दिष्ट्या वर्धसे", "पुत्रस्ते जातः" इति न प्रवृत्तये निवृत्तये वा, दृश्यन्ते च**

---

निर्विशेषा काचित् प्रतीतिरेव न भवतीति यावत्। यदि तु निरस्तसमस्तविशेषं ब्रह्म, तर्हि तु तस्मिन् ब्रह्मणि प्रतिपत्तिः कथं स्यात् ? इत्येवंप्रकारेण अद्वये ब्रह्मणि प्रमाणमेव नास्तीत्याक्षेपे प्रमाणमाह – **आम्नायत इति।**

अयमत्र समाधानाशयः – भूतार्थस्य ब्रह्मणः श्रुत्या प्रतिपादने श्रुतेः प्रमाणान्तरसापेक्षत्वं स्यात्, सापेक्षत्वे चालौकिकब्रह्मबोधस्य प्रत्यक्षादिप्रमाणान्तरतो अजननात् तत्प्रतिपादने श्रुतेर्न प्रामाण्यमिति यत् पूर्वमाक्षिप्तं तन्न युक्तम्, भूतार्थवादिपौरुषेयं यद्वचनं तस्यैव प्रमाणान्तरसापेक्षत्वं भवति। वेदस्य तु अपौरुषेयत्वेन प्रमाणान्तरनिरपेक्षप्रामाण्यात्।

यच्चोक्तं – लोके कार्यनिष्ठानि = कार्यपराण्येव वचांसि भवन्तीति, तदपि नास्ति, प्रियमाख्यायते यैस्तादृशानि प्रियाख्यानानि वचनानि अकार्यनिष्ठान्यपि भवन्ति दृश्यन्ते। यथा – "दिष्ट्या वर्धसे, पुत्रस्ते जातः" इत्यादीनि वचनानि न प्रवृत्तिनिवृत्तिरूपक्रियापराणि भवन्ति, किन्तु सुतोत्पत्तिसूचनेन श्रोतुः सुखोत्पादनमात्रप्रयोजनानि दृश्यन्ते। न हि तथाविधवाक्यप्रयोक्ता जनः श्रोतारं "सुखी भव" इति प्रवृत्तिमुपदिशति। पुत्रोत्पत्तिरूपवस्तुसामर्थ्यादेव श्रोतुः सुखोत्पत्तिसिद्धेः, सुखोत्पत्तये "सुखी भव" इत्युपदेशस्यानपेक्षणात्। अर्थाद् न हि तादृशानि वचनानि प्रवृत्तिनिवृत्तिरूपक्रियाप्रयोजनादुच्यन्ते, किन्तु सुखोत्पत्तिप्रयोजनादेव उच्यन्त इति। अतोऽकार्यनिष्ठान्यपि प्रियाख्यानादिवचनानि भवन्तीति सिद्धम्। तस्मात् श्रुतेर्भूतार्थवादित्वे न काप्यनुपपत्तिः।

**सुखोत्पादनप्रयोजनानि। न च "सुखी भव" इति तत्र प्रवृत्तिरुपदिश्यते, वस्तुसामर्थ्यादिव तत्सिद्धेरुपदेशस्यानपेक्षणात्।**

**अथ मतम्—अस्ति तावत् तत्र प्रवृत्तिविशेषः, वचसश्च तत्र तात्पर्यम्। सत्यम्, उत्पत्त्या तात्पर्यम्, न प्रतिपत्त्या। प्रतिपत्तिस्तु भूतार्थनिष्ठैव। न च भूतार्थपर्यवसितस्यैव शब्दस्य प्रयोजनवत्त्वे प्रवृत्त्यवधिर्व्यापारः कल्पयितुं शक्यते।**

---

यदि मन्यते— प्रियाख्यानस्थलेऽपि सुखभवनरूपः प्रवृत्तिविशेषः श्रोतुरस्ति, यतस्तादृशवचनं श्रुत्वा स सुखीभवति। प्रयोक्तुश्च तद्वचनस्य तात्पर्यं श्रोतुः सुखभवन एवास्ति। अतस्तादृशवचनमपि क्रियापरमेव न भूतार्थमात्रपरमिति चेत्, सत्यम्, सुखीभवने तद्वचसस्तात्पर्यं न वारयामः, किन्तु सुखोत्पादकतया न तु सुखप्रतिपादकतया। अर्थात् तद्वचनं पुत्रजन्मज्ञापनेन सुखोत्पत्तिं करोति न तु सुखबुद्धिं जनयति। शाब्दबोधस्तु ततः पुत्रजन्मविषयक एव भवति न तु सुखविषयक इति रहस्यम्। तदुक्तं ग्रन्थकारेण— **प्रतिपत्तिस्तु भूतार्थनिष्ठैवेति।**

"उत्पत्त्या तात्पर्यम्" इति ग्रन्थकृदुक्तिरभ्युपगमवाद एव। वस्तुतस्तु प्रियाख्यानवचनं पुत्रजन्ममात्रं ज्ञापयति, न तु श्रोतुः सुखमप्युत्पादयति, पुत्रजन्मश्रवणनान्तरीयकत्वात् सुखोत्पत्तेस्तत्र शब्दव्यापाराभावात्।

ननु यद्यपि तद्वचनं भूतार्थपर्यवसितमेवास्ति, तथापि तस्य प्रयोजनं पितृसुखोत्पादनमेवास्ति। अतो यावत् पितृसुखं नोत्पद्यते तावत्पर्यन्तं शब्दव्यापारः कल्पयितव्यः। अतो भूतार्थपर्यवसितस्यापि वचसः क्रियापरत्वमायातीति चेत्, न, तथाकल्पनायां प्रमाणाभावाद् अनुपपत्त्यभावाच्च। शब्दबुद्धिकर्मणां विरम्य व्यापाराभावनियमात्।

एवं, "पुत्रस्ते जातः" इति वचनं यदि प्रवृत्तिनिष्ठमेव स्वीक्रियेत, तदा सा पुरुषप्रवृत्तिरुपाये मन्यते, उपेये वा ? यदि चाद्यं पक्षमालम्ब्य वाक्यश्रवणात्

अपि च उपाये वाऽप्रवृत्तः पुरुषः प्रवर्त्यते, अज्ञातोपायत्वाद् वा उपेये प्रागप्रवृत्त उपायज्ञापनद्वारेण तत्र। इह न तावदुपाये पुत्रजन्मनि, तस्य निष्पन्नत्वात्। नोपेये सुखे, तदर्थं व्यापारान्तराभावात्।

तथा दुर्जनवचनान्यप्रियाख्यानानि विषादप्रयोजनानि न प्रवृत्तिं निवृत्तिं चोपदिशन्ति पूर्वेणैव न्यायेन। तथा रज्जुवेष्टितस्य सर्पवेष्टित-मात्मानं मन्यमानस्य भयनिवृत्तये तत्त्वाख्यानं दृश्यते, न तु तत्र "मा भैषीः" इति नियोगः। तत्र हि नियोगो भवति, यत्र नियोगार्थं प्रतिबुध्य पुरुषो बुद्धिपूर्वं नियोगसामर्थ्यादिच्छया वा पुनः प्रवर्तते निवर्तते वा। इह तु तत्त्वप्रतिपत्तिमात्रान्नियोगेच्छानपेक्षस्य हेत्वभावादेव तस्य भयनिवृत्तिः।

---

पूर्वमप्रवृत्तः पुरुषोऽनेन वाक्येन सुखोपाये पुत्रजन्मनि प्रवर्त्यत इत्युच्यते, तन्नोचितम्, पुत्रजन्मनः पितृप्रवृत्तेः प्रागेव निष्पन्नत्वेन तदर्थं पुरुषप्रवर्तनाया निरर्थकत्वात्। यदि तु द्वितीयपक्षमालम्ब्य 'उपेयेऽर्थात् पुत्रजन्मरूपोपायसाध्ये सुख एव पुरुषः प्रवर्त्यते। किन्तु उपायमजानतो जनस्य उपायज्ञानात् प्राग् उपेये सुखे प्रवृत्तिर्न भवतीति कृत्वा सिद्धार्थबोधकमप्युक्तवाक्यं सुखोपायभूतपुत्रजन्मनो ज्ञापनद्वारा उपेये सुखे पुरुषं प्रवर्तयतीत्युच्यते, तदपि न समीचीनम्, उपेयस्य सुखस्य सिद्धये वाक्यार्थज्ञानस्यैव हेतुत्वेन तदर्थं तदतिरिक्तस्य व्यापारान्तरस्या-भावात्।

एवं प्रियाख्यानवचनन्यायेन पूर्वप्रदर्शितेन "पुत्रस्ते मृतः कन्या ते गर्भिणी जाता" इत्यादीनि अप्रियाख्यानान्यपि विषादमात्रं चित्त उत्पादयन्ति, न तु काञ्चित् क्रियां प्रवृत्तिरूपां निवृत्तिरूपां वा बोधयन्ति। अर्थाद् विषादोत्पत्तावेव तादृशां वचसां तात्पर्यम्, न तु विषादप्रतिपत्ताविति पूर्ववदेव बोद्धव्यम्।

एवं यो जनो वस्तुतो रज्जुवेष्टितोऽप्यात्मानं सर्पवेष्टितं मन्यमानो भयाक्रान्तो भवति, तं प्रति "रज्जुरियं न सर्पः" इति तत्त्वाख्यानवचनं भयं

**न च भयनिवृत्तौ पुरुषार्थत्वात् स्वयं प्रवृत्तः पुरुषो नियोज्यः, नापि तदुपाये तत्त्वप्रतिपत्तौ, "रज्जुः, न सर्पः" इति शब्दादेव तदुत्पत्तेः। शब्दार्थप्रतिपत्त्युत्तरकालस्य च व्यापारस्य विधिनिबन्धनत्वात्।**

**तथा दूरदेशवृत्तान्ताख्यानानि पृष्टवतां कुतूहलिनामौत्सुक्यनिवृत्त्यर्थानि भूतार्थपर्यवसितानि, न हानायोपादानाय वा।**

---

निवर्तयतिमात्रम्, न तु "मा भैषीः" इति भयक्रियानिवृत्तिं प्रतिपादयति। अर्थाद् उक्ततत्त्वाख्यानवचनस्य भयनिवृत्तौ तात्पर्यम्, न तु भयनिवृत्तिरूपनियोगप्रतिपादन इति बोध्यम्।

कुत्र नियोगः प्रतीयत इति स्फुटीकरोति ग्रन्थकारः— **तत्र हीति**। अयमर्थः— तत्रैव वाक्ये प्रवृत्तिनिवृत्तिरूपो नियोगः प्रतीयते, यत्र नियोगरूपमर्थं बुद्ध्वा तदनन्तरं प्रवर्तनाबलात् तदिच्छया वा क्वचित् क्रियायां प्रवर्तते ततो निवर्तते वा, न सर्वत्र। रज्जुतत्त्वाख्यानस्थले तु वस्तुतत्त्वज्ञानमात्राद् भयकारणाभावादेव स्वतो भयं निवर्तते, न तु भयनिवृत्तये परकीयनियोगमिच्छां वाऽपेक्षत इति।

**एवं "रज्जुरियं न सर्पः"** इति वचनं यदि नियोगपरं स्यात्, तदा क्व पुरुषं नियोजयतीति वक्तव्यम्। यदि भयनिवृत्तौ पुरुषो नियोज्यत इत्युच्येत, तन्न चारु, भयनिवृत्तिस्तु पुरुषार्थ इति स्वयमेव पुरुषस्तत्र स्वर्गादाविव प्रवृत्त इति न नियोज्योऽस्ति। यद्युच्येत भयनिवृत्त्युपायभूतायां तत्त्वार्थप्रतिपत्तौ पुरुषो नियोज्यत इति, तदपि न सम्भवति, रज्जुतत्त्वार्थप्रतिपत्तेस्तु "रज्जुः, न सर्पः" इति शब्दादेव स्वतो जायमानत्वेन तदर्थं पुरुषप्रवर्तनस्य अनावश्यकत्वात्। तस्मात् शब्दार्थप्रतिपत्तौ नियोगस्य = विधेरहेतुत्वेन प्रतिपत्त्युत्तरकालीने व्यापार एव विधेः प्रयोजकत्वेन अत्र च "रज्जुर्न सर्पः" इति शब्दार्थप्रतिपत्त्युत्तरं कस्यचिद् व्यापारस्याभावात् कुत्र पुरुषो नियोज्येत। तस्मात् "रज्जुरियं न सर्पः" इति वचनं सर्वथा सिद्धार्थपरमेवेति मन्तव्यम्।

एवमतिदूरदेशघटनासम्बद्धवचनानि श्रुत्वा कुतूहलवशाज्जिज्ञासुजनानां न कश्चिद् व्यापारो जायते, केवलमौत्सुक्यमात्रं निवर्तते। अतस्तादृशान्यपि वचनानि

**अपि च, यत्रापि भूतार्थप्रतिपत्तौ हानमुपादानं वा सम्भवति, यथा – "एष प्रतिरोधकवानध्वा, निधिमानेष भूभागः" इति, तत्रापि न हानोपादानयोः शब्दो व्याप्रियते, भूतार्थोपक्षयात्। शब्दाद् भूतमर्थं प्रतिपद्य तस्य प्रमाणान्तरादवगतामुपकारहेतुतामपकारहेतुतां वा संस्मृत्य इच्छया प्रवर्तते निवर्तते वा।**

**ननु प्रयोक्ता बुद्धिपूर्वकारी श्रोतुः प्रवृत्त्यर्थं निवृत्त्यर्थं वा वचनं प्रयुङ्क्ते। तथा च प्रवृत्तिनिवृत्तिपर्यवसितमेव। इदं हि तत्र प्रयोक्तव्यं न प्रयुज्यते "न गन्तव्यमनेनाध्वना" तथा "गृहाणेतो निधिम्" इति।**

---

केवलं भूतार्थपर्यवसितानि भवन्ति, न तु तत्र कश्चिद्धानात्मक उपादानात्मको वा व्यापारो भवति। अतिदूरत्वेन तत्र हानोपादानयोरसम्भवात्। न च निरर्थकान्येव तानि वचनानीति वाच्यम्, कुतूहलिनामौत्सुक्यनिवृत्तेरेव प्रयोजनत्वात्।

ननु "एष प्रतिरोधकवानध्वा" इति वाक्यं श्रुत्वा जनस्तस्मान् मार्गान्निवर्तते, तथा "निधिमानेष भूभागः" इति श्रुत्वा च निधिग्रहणाय तस्मिन् भूभागे प्रवर्तते। अत उक्तवाक्ययोः क्रमेण "माऽनेन मार्गेण गच्छ, इतो निधिं गृहाण" इति निवृत्तिप्रवृत्तिरूपव्यापारयोरेव तात्पर्यमिति गम्यते न तद् भूतार्थप्रतिपत्तिमात्रपर्यवसितमिति चेत्, न, तत्रापि उक्तवाक्यद्वयस्य भूतार्थप्रतिपत्तिजननानन्तरं न हानोपादानरूपौ व्यापारावपि विषयौ स्तः, भूतार्थप्रतिपत्तावेवोपक्षीणत्वेन कृतार्थत्वात्। न चैवं सति उक्तवाक्यं श्रुत्वा कथं तन्मार्गगमनान्निवृत्तिः कथं च ततो निधिग्रहणे प्रवृत्तिर्जायत इति वाच्यम्, शब्दाद् भूतार्थमवगत्य प्रमाणान्तरद्वाराऽवगतां तादृशाध्वभूभागयोरपकारहेतुत्वमुपकारहेतुतां वा स्मृत्वा स्वेच्छयैव निवर्तते प्रवर्तते वेति न काचिदनुपपत्तिः। एतत्सर्वमभिप्रेत्याह – **"अपि च इत्यारभ्य निवर्तते वा"** इत्यन्तेन ग्रन्थसन्दर्भेणेति।

पुनः शङ्कते – **ननु प्रयोक्तेति**। अयमाशयः – सर्वोऽपि वाक्यप्रयोक्ता जनः किमपि प्रयोजनमुद्दिश्य बुद्धिपूर्वकमेव वाक्यं प्रयुङ्क्ते नाबुद्धिपूर्वकं निष्प्रयोजनमदृष्टार्थं वा प्रयुङ्क्ते। अतो हेतोः "एष प्रतिरोधकवानध्वा, निधिमानेष

**नैतत् सारम्, भूतार्थपर्यवसितस्यापि वचसो भूतार्थावगममुखेन प्रवृत्तिनिवृत्त्यङ्गभावो यतो न व्याहन्यते प्रत्यक्षादीनामिव। भूतार्थप्रमापरिसमाप्तव्यापृतयः प्रत्यक्षादयो मात्रयाऽप्यगोचरीकृतप्रवृत्तिनिवृत्तयो न प्रवृत्तिनिवृत्त्यङ्गभावं जहति, तथा शब्दोऽपीति न किञ्चित् प्रदुष्यति।**

**प्रयोक्त्रभिसंहिते प्रवृत्तिनिवृत्ती इति चेत्, न, प्रयोक्त्रभिसन्धानाच्छब्दार्थत्वम्, अपि तु सामर्थ्यात्। अन्यथा निधिप्राप्तिद्वारिका नानाविधपुरुषार्थावाप्तिरपि तस्याभिसंहितेति शब्दार्थः स्यात्। यदा च**

---

भूभागः'' इति भूतार्थपरमपि वाक्यं श्रोतुः प्रवृत्त्यर्थं निवृत्त्यर्थमेव वा वक्ता प्रयुङ्क्ते। तथा च तदपि वचनं प्रवृत्तिनिवृत्तिपर्यवसितमेव स्वीकरणीयम्। यद्यपि वक्त्रा तत्र तत्तद्वाक्येन सह ''न गन्तव्यमनेनाध्वना, गृहाणेतो निधिम्'' इति वचनमपि प्रयोक्तव्यमासीत्, तथापि जानताऽपि तेनालस्यादिना तथाविधं वचनं न प्रयुज्यते, ''श्रोता स्वयमेव तथा प्रतिपत्स्यत'' इत्यभिप्रायवता।

समाधत्ते– **नैतत् सारमिति**। अयं भावः– उक्ताशङ्कायां न किमपि सारमस्ति। यतो भूतार्थपर्यवसितमपि वचनं भूतार्थावबोधनद्वाराऽन्ततः प्रवृत्तिनिवृत्त्योरङ्गं भवतीत्यत्र नायाति कश्चिद् व्याघातः। तथा हि प्रत्यक्षादिप्रमाणानि सिद्धवस्तु बोधयन्ति, बुद्ध्वा च जनः प्रवर्तते वा निवर्तते वा स्वेच्छयेति न कश्चिद् व्याघातो भवति प्रत्यक्षादीनां प्रवृत्तिनिवृत्ती प्रत्यङ्गत्वे। तथैव शब्दोऽपि भूतार्थपर्यवसितोऽपि प्रवृत्तिनिवृत्त्यङ्गत्वं न हास्यतीति न काचिदनुपपत्तिः। एतदेव स्फुटीकृतं ''भूतार्थपर्यवसितेत्यादिना न किञ्चित् प्रदुष्यति'' इत्यन्तेन सन्दर्भेण।

पुनः शङ्कते– **प्रयोक्त्रभिसंहिते इति**। अयं भावः– प्रत्यक्षादीनामिव शब्दस्यापि भूतार्थपरत्वेऽपि प्रवृत्तिनिवृत्त्यङ्गत्वे यद्यपि कश्चिद् व्याघातो नायाति, तथाप्यस्ति विशेषः शब्दे प्रत्यक्षाद्यपेक्षया – यत् प्रत्यक्षादौ वस्तुमात्रं बोधितं भवति न तु तत्र प्रवृत्तिनिवृत्ती अभिसन्धीयेते। शब्दस्थले तु प्रवृत्तिनिवृत्ती अभिसन्धाय वक्ता वाक्यं प्रयुङ्क्ते, तेन प्रवृत्तिनिवृत्ती एव शब्दार्थौ इति।

**प्रवृत्तिं निवृत्तिं वाऽभिसन्धाय किञ्चित् प्रत्यक्षादिभिर्जिज्ञास्यते, तदाऽभिसंहिते अपि प्रवृत्तिनिवृत्ती न प्रत्यक्षादिप्रमेये, तथाऽभिसंहितेऽपि प्रवृत्तिनिवृत्ती न शब्दार्थौ।**

**इतश्च तदेवम्— यत् कस्यचिदुपादानबुद्धिः, अन्यस्योपेक्षा। शब्दार्थत्वे हि सर्वेषामुपादानबुद्धिरेव स्यात्।**

---

समाधत्ते— न प्रयोक्त्रभिसन्धानाच्छब्दार्थत्वमिति। अयमर्थः— शब्दस्थले कामं शब्दप्रयोक्तुः प्रवृत्तिनिवृत्ती अभिसंहिते भवेताम्, तथापि न प्रयोक्तुरभिसन्धानमात्रात् प्रवृत्तिनिवृत्ती शब्दार्थौ भवितुमर्हतः। किन्तु यदर्थबोधे शब्दस्य सामर्थ्यं भवति, स एवार्थस्तस्य शब्दस्यार्थो भवति। यदि तु अभिसन्धीयमानोऽर्थः शब्दार्थः स्यात्, तदा "निधिमानेष भूभागः" इति वाक्यप्रयोक्तुर्मनसि न निधिप्राप्तिरेवाभिसंहिता, किन्तु निधिप्राप्तिद्वारिका भवननिर्माणयज्ञतीर्थयात्रादिनानाविधपुरुषार्थावाप्तिरपि वक्तुरभिसंहितेति साऽपि उक्तवाक्यस्य अर्थः, अर्थात् शब्दार्थः स्यात्; किन्तु न स्वीक्रियते तथा। तस्माद् उक्तकार्यमिव प्रवृत्तिनिवृत्ती अपि नात्र शब्दार्थः, अपि तु भूतार्थ एवेति।

यच्चोक्तम्— प्रत्यक्षादिस्थले प्रवृत्तिनिवृत्त्योरनभिसन्धानात् प्रत्यक्षादेर्भूतार्थपरत्वेऽपि शब्दस्थले प्रवृत्तिनिवृत्तिरूपविशेषात् तत्र न भूतार्थमात्रपरत्वं किन्तु प्रवृत्तिनिवृत्तिपरत्वमेव शब्दस्य स्वीकरणीयमिति। तदपि न चारुतरम्, अस्ति तावत् प्रत्यक्षादिकमपि तादृशं यत्र प्रवृत्तिं निवृत्तिं चाभिसन्धाय प्रत्यक्षादिभिः किञ्चिज्जिज्ञास्यते, तथापि तत्राभिसंहिते अपि प्रवृत्तिनिवृत्ती न प्रत्यक्षादिप्रमाणस्य प्रमेये भवतस्तथैव शब्दस्थलेऽपि अभिसंहिते अपि प्रवृत्तिनिवृत्ती न शब्दार्थौ भविष्यत इति मन्तव्यम्।

प्रवृत्तिनिवृत्ती न शब्दार्थाविति पक्षे प्रमाणान्तरमप्यस्तीत्याह— **इतश्च तदेवमिति**। अयं भावः— प्रवृत्तिर्निवृत्तिर्वा यदि शब्दार्थः स्यात्, तदा "निधिमानेष भूभागः" इति वाक्यं श्रुत्वा सर्वोऽपि श्रोता ततः प्रवृत्तिरूपमुपादानमेव प्रतीयात्, निधिग्रहणार्थं प्रवर्तेत च, शब्दशक्तेरेकरूपत्वात्; किन्तु नैवमस्ति। कश्चित्तु

**न च प्रवर्तकवाक्यव्यवहारादेव सम्बन्धावगमः, येन प्रवृत्तिपरतैवाव-गम्येत, अन्यथाऽपि दर्शनात्। "देवदत्तः काष्ठैः स्थाल्यामोदनं पचति" इत्यव्युत्पन्नकाष्ठशब्दार्थो व्युत्पन्नेतरपदार्थो व्युत्पन्नविभक्त्यर्थश्च यत् पचत्यर्थकरणं पश्यति, तस्य काष्ठप्रातिपदिकार्थतां प्रतिपद्यते।**

**तथा हर्षविषादाश्वासप्रयोजनेभ्यस्तत्त्वाख्यानेभ्यो हर्षादिनिमित्तेषु भवति व्युत्पत्तिः। यथैव हि प्रवृत्तिविशेषदर्शनाद् विशिष्टप्रवृत्ति-**

---

तस्माद् वाक्यात् तद्भूभागस्थनिधेरुपादेयतां बुध्यति प्रवर्तते च। अन्यस्तु नोपादेयतां बुध्यति; प्रत्युतोपेक्षते। तस्मान्न शब्दस्य प्रवृत्तिर्वा निवृत्तिर्वा अर्थः, किन्तु भूतार्थमात्रमर्थः, तत्रैव शब्दसामर्थ्यादिति भावः।

**ननु पदपदार्थ**सम्बन्धावगमं विना नैव पदार्थज्ञानं भवति, "कस्य पदस्य कस्मिन्नर्थे सम्बन्धः शक्तिः" इति च ज्ञानं "गामानय, अश्वं बधान" इत्यादि-प्रवर्तकवाक्येभ्य एव बालस्य जायते। अतः सर्वमपि वाक्यं सम्बन्धावगमोपयोगितया प्रवृत्तिपरमेव भवतीत्यवगम्यते। अस्मात् कारणाद् ब्रह्मबोधकवाक्यमपि प्रवृत्तिपरमेव मन्तव्यं न भूतार्थपरमिति चेत्, न, प्रवर्तकवाक्यव्यवहारादेव शब्दार्थसम्बन्धावगम इति नियमाभावात्। अविध्यात्मकाद् अप्रवर्तकाद् वर्तमानोपदेशादपि वाक्यात् शब्दार्थसम्बन्धावगमदर्शनात्। यथा – "देवदत्तः काष्ठैः स्थाल्यामोदनं पचति" इत्युक्ते यो जनः काष्ठशब्दार्थं न जानाति, इतरपदार्थान् स्थाल्योदनादीन् तृतीया-विभक्त्यर्थं करणत्वं च पूर्वतो जानाति, स जनः पाके यत् करणरूपेण पश्यति, तदेव काष्ठशब्दार्थतया प्रतिपद्यते। न हीदं वाक्यं प्रवर्तकं विध्यात्मकमस्ति, पचतीति वर्तमानकालिकक्रियाया एवात्र प्रयोगात्।

तस्मात् सिद्धार्थकादपि वाक्याद् भवति शब्दार्थसम्बन्धावगमः, न तु कार्यवाक्यादेव। अतस्तद्बलेन कार्यैकनिष्ठता सर्वशब्दानामस्तीति न स्वीकारार्हम्, न वा सिद्धेऽप्यर्थे शब्दानां प्रामाण्यव्याघात इति।

"गामानय, अश्वं बधान" इति प्रवर्तकवाक्यप्रयोगस्थले बालस्य यथा गवादिशब्दस्य गवाद्यर्थे सम्बन्धावगमस्तथा हर्षविषादाश्वासप्रयोजनेभ्य-

प्रत्ययस्तन्निमित्तप्रत्ययो वाऽनुमीयते, हेत्वन्तराभावात् शब्दानन्तर्यात् शब्दस्य तत्र सामर्थ्यं कल्प्यते, तथा हर्षाद्युपलब्धेर्हर्षादिनिमित्तं प्रत्ययानुमानम्, शब्दानन्तर्याच्च शब्दस्य तत्र सामर्थ्यकल्पना।

प्रमाणान्तरेण च पुत्रजन्मनो हर्षनिमित्तस्य तस्यानवगतत्वादन्यस्याभावात् "पुत्रस्ते जातः" इतीदं वाक्यमाप्तेन तत्र पुत्रजन्मनि प्रयुक्तमिति प्रतिपद्यते। पुत्रजन्मैव चास्माद् वाक्यादनेन प्रतीतमित्यवधारयति। तदेवं प्रयोगप्रत्ययाभ्यामस्मिन्नर्थे वाक्यस्य सामर्थ्यं प्रतिपद्यते।

---

स्तत्त्वाख्यायकेभ्यः सिद्धार्थेभ्योऽपि "पुत्रस्ते जातः" इत्यादिवाक्येभ्यः पुत्रजन्मादिषु पुत्रजन्मादिशब्दवाच्यत्वावगमो भवतीत्युदाहरणान्तरेण स्पष्टयति – **तथा हर्षेत्यादि**। हर्षादिनिमित्तेषु = पुत्रजन्मादिषु शब्दस्य व्युत्पत्तिः = वाच्यत्वव्युत्पत्तिर्भवतीत्यर्थः। व्युत्पत्तिप्रकारमाह – **यथैवेति**। प्रवृत्तिविशेषदर्शनात् = गवानयनादिव्यवहारविषयकं प्रवृत्तिविशेषं लिङ्गं दृष्ट्वा बालः प्रेष्यस्य भृत्यस्य गवानयनविषयकविशिष्टप्रवृत्ति(क्रिया)ज्ञानमस्तीति अनुमिनोति, अथवा "गामानय" इति वाक्यप्रयोक्तुः स्वामिनो यो नियोगः = प्रवर्तना तज्ज्ञानमस्य भृत्यस्यास्तीत्यनुमिनोति बालः। तादृशं च ज्ञानं भृत्यस्य शब्दानन्तरं भावात् कारणान्तरस्य चादर्शनात्, दृष्टं परित्यज्यादृष्टकल्पनानुपपत्तेश्च गवादिशब्दसामर्थ्यादेव जातमिति पार्श्वस्थो बालः कल्पयति। इत्येवं रीत्या प्रवर्तकवाक्याद् बालः शब्दार्थसम्बन्धं निर्धारयति। एवमेव "पुत्रस्ते जातः" इति सिद्धार्थकं वाक्यं श्रुत्वा पित्रादेर्मुखविकासादिना लिङ्गेन पितृगतं हर्षमनुमिनोति वार्ताहरेण साकमागतो बालः। स च हर्षोऽकारणो न भवितुमर्हति, अकारणकार्यादर्शनात्। अतो हर्षस्य कारणं पितुः स्वपुत्रजन्मज्ञानमेव। तच्च ज्ञानं कुतो जातमिति जिज्ञासमानो बालः शब्दानन्तरभावात्, कारणान्तरस्यादर्शनात् शब्दस्यैव तत्र सामर्थ्यं कल्पयति।

अर्थाद् अनेनागतेन वार्ताहरेण पुत्रजन्मन्येवेदं वाक्यं प्रयुक्तम्, अनेन च पित्रा पुत्रजन्मैवास्माद् वाक्यात् प्रतीतम् इति पार्श्वस्थो बालोऽवधारयति। एवं चोक्तरीत्या वार्ताहरकृतवाक्यप्रयोगपुत्रजन्मविषयकपितृप्रत्ययाभ्यां लिङ्गाभ्यां पुत्रजन्मरूपेऽर्थेऽस्य वाक्यस्य सामर्थ्यमित्यवधारयति बालः।

**भवतु वा लोके सर्ववचसां प्रवर्तकता, ततश्च सम्बन्धावगमः, तथापीदं विचार्यम् – किं विधायकपदव्यतिरेकिणां स्वार्थमात्रपरता, आहोस्वित् कार्यार्थसंसर्गपरता, उत पदार्थमात्रसंसर्गपरतेति ? तत्र स्वार्थमात्रपर्यवसाने वाक्यार्थप्रत्ययाभावः प्रयोगवैयर्थ्यं च स्यात्। तस्मादन्यार्थव्यतिषङ्गपरता। तावता प्रयोगप्रत्यययोरुपपत्तौ न विशेष-व्यतिषङ्गे प्रमाणमस्ति। यो हि विशेषव्यतिषङ्गं कल्पयति, कल्पयत्य-**

---

तस्मादस्ति सिद्धार्थादपि वाक्याद् व्युत्पत्तिः, न केवलं कार्यवाक्यादेव। अतो न व्युत्पत्तिबलेन कार्यैकपरता सर्वशब्दानां स्वीकर्तुमुचिता, न वा सिद्धार्थेऽपि शब्दानां प्रामाण्ये कश्चिद् व्याघात इति सिद्धम्।

यद्यपि पदानामेव व्युत्पत्त्यपेक्षा, न वाक्यस्य। अत एवाभिनवविरचितादपि कविवाक्यादर्थप्रतीतिर्जायते। तथापि वाक्यप्रयोगादेव पदार्थव्युत्पत्तिर्भवति, न पदमात्रप्रयोगादिति पदार्थव्युत्पत्तिमभिप्रेत्यैव "तत्र वाक्यस्य सामर्थ्यं प्रतिपद्यते" इत्युक्तं मूले इति ध्येयम्।

अभ्युपगमवादमाश्रित्य विचारमुपस्थापयति – **भवतु वेति**। अयमाशयः – लोके सर्वाण्येव वचांसि प्रवृत्तिपराणि भवन्तु नाम। भवतु च प्रवर्तकवाक्येभ्य एव शब्दार्थसम्बन्धावगमः, तथापि वाच्यवाचकसम्बन्धावबोधके प्रवर्तकवाक्य एव "आनय, बधान" इत्यादिविधायकपदेभ्यो व्यतिरिक्तानां गवाश्वादिपदानां किं स्वार्थमात्रे पदार्थ एव तात्पर्यमस्ति ? उत क्रियान्वितस्वार्थे, अर्थात् कार्यार्थसंसर्गे तात्पर्यमस्ति ? आहोस्वित् क्रियानन्वितपदार्थान्तरमात्रेण संसर्गे तात्पर्यमस्तीति विचारणीयेषु त्रिषु पक्षेषु यदि स्वार्थमात्रपरत्वमिति प्रथमपक्ष आश्रीयते, तदा अयःशलाकाकल्पाः सर्वेऽपि पदार्थाः परस्परसंसर्गरहिता एव प्रतीयेरन् ततश्च संसर्गरूपवाक्यार्थबोधाभावः स्यात्। भवति च संसर्गरूपवाक्यार्थबोधस्तस्मात् प्रथमपक्षो न क्षोदक्षमः। एवं पदार्थमात्रप्रतिपत्तेर्निष्प्रयोजनत्वात् पदप्रयोगस्य वैयर्थ्यं च स्यात्।

**सावर्थान्तरव्यतिषङ्गम्। तथा च विनापि कार्येण पदार्थानां परस्परसंसर्गाद् विशिष्टभूतार्थप्रत्ययसिद्धिः।**

**अवश्यं चैतदेवं विज्ञेयम्, अन्यथा लोके विवक्षापरत्वात् पदार्थान्वयस्य, तदभावाद् वेदे वेदार्थप्रतीतिर्न स्यात्।**

---

यदि चोक्तदोषद्वयकारणाद् आकाङ्क्षायोग्यतासन्निधिमता पदेन उपस्थापितेन कार्येण (क्रियान्वितेन) अकार्येण (क्रियानन्वितेन) वा पदार्थान्तरेण संसर्गे तात्पर्यं पदानामिति अन्त्यौ पक्षौ आश्रीयेते, तदाऽपि क्रियान्वितत्वांशं परित्यज्य केवल-पदार्थान्तरसंसर्गबोधनेनैव पदप्रयोगस्य निष्प्रयोजनत्वप्रसक्तिर्वारिता भवति, उपपन्नश्च भवति संसर्गरूपवाक्यार्थबोध इति प्रथमपक्षोक्तदोषौ न प्रसरतः। अतः पदानां पदार्थमात्रसंसर्गे तात्पर्यमिति तृतीयपक्षाङ्गीकारेऽपि पदप्रयोग-वाक्यार्थप्रत्यययोरुपपत्तौ सत्यां प्रयोक्तुः प्रतिपत्तुश्चाकाङ्क्षाशान्तेः कार्यान्वित-पदार्थविशेषसंसर्गे पदानां तात्पर्यमित्यस्य न किञ्चित् प्रमाणमस्ति।

अनिवार्यतयाऽपीदं स्वीकरणीयमिति निरूपयति – **यो हीति**। अयमर्थः – यो हि वादी कार्यभूतपदार्थान्तरसंसर्गे तात्पर्यं कल्पयति, सोऽपि पदार्थान्तरसंसर्गे पदानां तात्पर्यं स्वीकरोत्येव। अतः पदार्थान्तरसंसर्गतात्पर्यकल्पनायां न तस्यापि वैमत्यमस्ति। तथा च कार्येण विनाऽपि पदार्थानां परस्परसंसर्गबोधोपपत्तेः शब्दस्य सिद्धेऽप्यर्थे प्रामाण्यं ब्रह्मवाक्यानां च भूतार्थबोधकत्वं निर्बाधं सिध्यतीति। किञ्च कार्यसंसर्गो व्यभिचरति कार्यस्याकार्येण संसर्गात्, अर्थान्तरमात्रसंसर्गस्तु अव्यभिचारी। एवं च कार्याकार्यात्मकार्थान्तरमात्रसंसर्गे पदानां तात्पर्यशक्तिरवधृता। तथा सति यत्र लोके वेदे च व्यवहाराय पदं प्रयुज्यते, तत्र कार्येण संसर्गः, यत्र तु वेदान्ते कार्यं न श्रूयते, तत्र विनापि कार्येण सिद्धार्थप्रत्ययसिद्धिरिति।

तस्माल्लोके व्युत्पत्तिवाक्ये दृष्टोऽपि कार्यार्थसंसर्गो न सर्वत्र कार्यमात्रान्वये शब्दतात्पर्यशक्तिनियामकत्वेन आश्रयणीयः।

पूर्वपक्षिणाऽप्येवमवश्यं स्वीकरणीयमिति सोपपत्तिकमुद्घाटयति – **अवश्यं चेति**। अर्थाद् यद्यल्लोके दृष्टं सर्वस्य तस्य पदशक्तिनियामकत्वेनाश्रीयमाणत्वे,

**अपि च सर्वेषां कार्यान्वयित्वे परस्परं पदार्थानामनभिसम्बन्धः। तत्र न विशिष्टपदार्थविषयो नियोगः प्रतीयेत एकपदार्थसाध्य एव स्यात्।**

**अथ न विनियोगप्रत्यर्थी नियोगः, विशिष्टविषयत्वात्। पूर्वस्तर्हि विनियोगः पश्चान्नियोगः। किमतः ? अस्ति नियोगातिरिक्तार्थान्वयेऽपि**

---

लोके वक्तृविवक्षाऽपि पदार्थान्वयनियामिका दृष्टेति वेदेऽपि साऽपेक्ष्येत। अस्यां स्थितौ वेदे वक्तुरभावेन तद्विवक्षाऽसम्भवाद् वेदार्थप्रतीतिरेव न स्यात्। तस्मान्न सर्वं लोकदृष्टं सर्वत्रानुगमनीयमिति अकार्यभूतपदार्थसंसर्गबोधेऽपि शब्दसामर्थ्यमङ्गी-करणीयमेव।

एवं सर्वेषां पदार्थानां कार्येणैव संसर्गे स्वीक्रियमाणे "अरुणया एकहायन्या गवा सोमं क्रीणाति" इत्यत्र अकार्यभूतस्य अरुणापदार्थस्य एकायनपदार्थस्य गोपदार्थस्य च प्रत्येकं क्रयणसम्बन्धाद् नामपदार्थानामारुण्यादीनां परस्परं सम्बन्धो न स्यात्। अस्यां स्थितौ तत्र वाक्ये विशिष्टपदार्थविषयो नियोगो न प्रतीयेत। अर्थाद् आरुण्यैकहायनत्वगोत्वविशिष्टपदार्थकरणकसोमक्रयविषयको नियोगो न प्रतीयेत। प्रत्युत क्रयरूपैकपदार्थसाध्य एव तत्रत्यो नियोगः स्यात्। अर्थात् क्रियात्मकक्रयरूप एकपदार्थः साध्यो विषयो यस्य एवंरूप एव तत्रत्यो नियोगः स्यात्। अर्थात् अरुणादिकारकविशिष्टक्रयविषयो नियोगो न प्रतीयेत प्रत्युत क्रयमात्रैकपदार्थविषयकनियोग एव प्रतीतः स्यादिति यावत्।

अत्र शङ्कते— **अथेति**। शङ्कितुरयमाशयः—नियोगो हि विशिष्टविषयो भवति, विशिष्टविषयकत्वं च कारकविशिष्टधात्वर्थविषयकत्वम्, कारकाणि च प्रकृते "अरुणया, एकहायन्या, गवा" इति तृतीयान्तपदार्थाः सन्ति। अत एभिः कारकैर्विशिष्टो यो धात्वर्थः क्रयरूपः, तद्विषयक एव तिबर्थो नियोगोऽत्र प्रतीतो भवतीत्यहमपि मन्ये। तथा च मत्पक्षेऽपि नियोगो न विनियोगप्रत्यर्थी वर्तते। विनियोगो नाम कारकक्रियाभावलक्षणः पदार्थानां परस्परं संसर्गः, तस्य च प्रत्यर्थी = प्रतिकूलो नियोगो नास्ति विशिष्टविषयत्वात् = कारकविशिष्टधात्वर्थ–

**पदस्य सामर्थ्यं नियोगानपेक्षं च, परस्परान्वितानां नियोगान्वयात्। न च नियोगाकाङ्क्षानिबन्धनः संसर्ग इति प्रतिपादयिष्यते।**

**अनधिगतमपि प्रमाणान्तरेणानधिगतसम्बन्धं च स्वशब्देन शक्यं शब्देन निरूपयितुं विशेषप्रतिषेधमुखेन, विशेषशब्दानां नञश्च यथायथमर्थैर्विदितसङ्गतित्वात्। तथा चेत्थमेव तदुपदिश्यते "अस्थूलम्"**

---

क्रियाविषयत्वात् तिबर्थनियोगस्येति। तस्माद् नामपदार्थानां परस्परं संसर्गप्रतीत्यभावापत्तिरूपः पूर्वोक्तो दोषो नास्ति शब्दानां कार्यान्विते सामर्थ्यवादिनां मतेऽपीति पूर्वपक्षार्थः।

अत्राह सिद्धान्ती – **पूर्वस्तर्हीति**। एवं सति नियोगापेक्षया विनियोगः पूर्वभावी सिद्धः स्यात्, नियोगस्य विनियोगविषयकत्वादित्यर्थः।

पूर्वपक्षी - भवतु नाम विनियोगः पूर्वभावी, तथापि स पश्चाद्भाविनो नियोगस्य विषयत्वं भजिष्यते, का क्षतिरिति पृच्छति – **किमत इति**।

सिद्धान्ती उत्तरयति – विनियोगस्य पूर्वभावित्वे नियोगातिरिक्तानां पदार्थानां परस्परान्वयेऽपि पदानां सामर्थ्यमिति तेषां परस्परान्वये नियोगनिरपेक्षत्वमिति च मत्पक्ष एव सिद्ध इत्यायाति। तथा च विनियोगस्य नियोगपूर्वभावित्वं नोऽनुकूलमेव न प्रतिकूलमिति भावः। अत्रोपपत्तिं स्मारयति - **परस्परान्वितानां नियोगान्वयादिति**। अस्यार्थः स्पष्टः।

ननु भाविनियोगाकाङ्क्षयैव पदार्थानां परस्परसम्बन्धरूपो विनियोगो न तु तन्निरपेक्षाणाम्, अतो नियोगनिबन्धन एव विनियोगरूपः संसर्ग इति न तेन विना वेदान्तेषु ब्रह्मादिपदानामन्वयसामर्थ्यमिति चेत्, न, नियोगकाण्ड एतस्य निराकरिष्यमाणत्वात्। एतदुक्तम् – **न च नियोगाकाङ्क्षेति** । अयमभिप्रायः – नियोगनिरपेक्षमेव पदानामन्योन्यान्वयसामर्थ्यम्, यतः पूर्वं परस्परान्वितानां सतां पदार्थानां पश्चान्नियोगेनान्वयात्।

ननु ब्रह्म प्रत्यक्षादिप्रमाणान्तरेण नाधिगतमस्ति, अतस्तेन सह शब्दस्य शक्तिरूपसम्बन्धाधिगमोऽपि नास्ति, लोके प्रमाणान्तरावगत एव वस्तुनि शब्द-

**(बृ.उ.३/८/८) इति सर्वविशेषातिगम्। एतत् कथयति भेदप्रपञ्च-विलयद्वारेणेति। एतच्च वक्ष्यत इति।**

**अन्योऽर्थः। यदुक्तम् – प्रत्यस्तमितसकलविशेषं तत्त्वं प्रतिपत्ते-रेवाविषय इति, तत्रोच्यते – विशेषनिवृत्त्यैव तत् स्वशब्देन बुद्धौ निधीयते, सुवर्णतत्त्ववत्। न हि सुवर्णतत्त्वं पिण्डरुचकादिसंस्थान-**

---

सम्बन्धस्याधिगमदर्शनात्। तथा च यस्य ब्रह्मणो ब्रह्मादिशब्देन सह न सम्बन्धग्रहणम्, तस्य ब्रह्मादिशब्देन निरूपणं कथं भवेदिति चेत्, न, ब्रह्मादिशब्देन स्वरूपतः साक्षात् तस्य निरूपणासम्भवेऽपि विशेषप्रतिषेधमुखेन तस्य निरूपयितुं शक्यत्वात्। तदेतदाह – **अनधिगतमपीत्यादिना**। अयमाशयः – ब्रह्म यद्यपि न प्रत्यक्षादिप्रमाणान्तरेण पूर्वमधिगतम्, अत एव तस्मिन् ब्रह्मान्तर्याम्यादिशब्द-वाच्यत्वरूपसम्बन्धोऽपि पूर्वतो नाधिगतोऽस्ति, तथापि अहं स्थूलोऽणुरहम्, ह्रस्वोऽहमित्यविद्याध्यस्ता ये स्थूलत्वादिविशेषास्तेषां प्रतिषेधमुखेन ब्रह्मस्वरूपस्य निरूपयितुं शक्यत्वाद् न काचिदनुपपत्तिः।

न च स्थूलाण्वादिशब्दानामपि तत्तदर्थे नास्ति सङ्गतिग्रह इति वाच्यम्, स्थूलाण्वादिविशेषवाचिशब्दानां नञ्शब्दस्य च सङ्गतिग्रहस्य लोकत एव सिद्धेः। स्थूलादिविशेषाणां पदार्थानां लौकिकत्वेन तेषां प्रमाणान्तरेणाधिगतत्वेन तत्र व्यवहारतः स्थूलादिशब्दानां सङ्गतिग्रहस्य सुसम्पादत्वात्।

इत्थञ्च स्वार्थे गृहीतशब्दसङ्गतिकानां स्थूलादिपदवाच्यविशेषाणां प्रतिषेधमुखेनैव ''नेति नेति'' इति रीत्या निर्विशेषमपि ब्रह्म निरूपयितुं शक्यमेव। अत एव ''अस्थूलमनणु अह्रस्वम्'' इत्यादिश्रुतिः सर्वविशेषातिक्रान्तमेव ब्रह्म उपदिशति। एतदेवाचार्यः ''भेदप्रपञ्चविलयद्वारेण च निरूपणम्'' इति कारिकाभागेन प्रतिपादयति। एतच्चाग्रे चतुर्थकाण्डे प्रपञ्चयिष्यते।

'भेदप्रपञ्चविलयद्वारेण च निरूपणम्' इति कारिकांशं प्रकारान्तरेण व्याचष्टे – **अन्योऽर्थ इति**। यदि नाम ब्रह्मतत्त्वं निरस्तसमस्तविशेषम्, निर्विशेषमिति यावत्, तदा शब्दात् तत् प्रतिपत्तिविषय एव न भवितुमर्हति, कुतस्तस्य मननादिकं

**भेदोपप्लवरहितं दृश्यते। न च त एव सुवर्णतत्त्वम्, तत्परित्यागेऽपि भावात् संस्थानान्तरे।**

**अथ चादृष्टसंस्थानभेदोपप्लवविवेकमपि बुद्ध्या भेदापोहद्वारेण स्वयं प्रतीयते, परस्मै च प्रतिपाद्यते। स एष प्रतिपत्तिक्रमः श्रुत्यैव दर्शितः– "स एष नेति नेति" इति। तथान्यैः "सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते"। (वाक्यपदीयम्– ३/२/११) तथाऽपरैः–"अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति।**

---

सम्भवीति शङ्काग्रन्थाशयः। तामेव शङ्कां निराकर्तुमाह– **भेदप्रपञ्चेति।** अयमर्थः– यद्यपि "इदमित्थम्" इति प्रतिपत्तिविषयो ब्रह्म नास्ति, तथापि सुवर्णतत्त्ववद् विशेषव्यावृत्त्यैव स्वशब्देन ब्रह्मान्तर्याम्यादिशब्देन बुद्धिविषयो भवति। तथा हि, यद्यपि सुवर्णतत्त्वं पिण्डरुचकादिसंस्थानविशेषोपरक्तमेव दृश्यते लोके न तु तद्रहितम्। तथापि पिण्डरुचकाद्याकृतिरेव सुवर्णतत्त्वं न भवति, तादृशाकृतिपरिवर्तनेऽपि स्वस्तिकादौ सुवर्णतत्त्वस्य वर्तमानत्वात्। अतः पिण्डरुचकाद्याकृतिनिरपेक्षमेव किमपि सुवर्णसामान्यस्वरूपं प्रतीयते परस्मै च प्रतिपाद्यत इति मन्यामहे। तथैव ब्रह्मतत्त्वमपि स्थूलादिविशेषोपरागराहित्येन श्रुत्या प्रतिपाद्यते प्रतीयते च तदुपदेशादिति मन्तव्यम्।

अयमत्र सारः– द्विविधं हि प्रतिपादनं दृष्टम्– एकं विशेषमुखेन, यथा "अयं कुण्डली कटकी" इति। एकं च विशेषप्रतिषेधमुखेन "नायं कुण्डली न कटकी" इति। यदि नाम निर्विशेषं ब्रह्मतत्त्वम् "इत्थंभूतम्" इति विशेषमुखेन वक्तुं न शक्यते, तथापि अविद्याध्यस्तस्थूलाण्वादिविशेषप्रतिषेधमुखेन श्रुत्या प्रतिपाद्यते प्रतिपत्तुं च शक्यते मुमुक्षुभिरिति भावः।

एतदुक्तम्– **अथ चादृष्टसंस्थानभेदेति।** न दृष्टः संस्थानभेदोपप्लवाद् विवेको यस्य, तादृशं ब्रह्मेति विग्रहः। विवेकादर्शने स्थूलादिसंस्थानभेदोपरागो हेतुः। भेदापोहद्वारेण = विशेषप्रतिषेधद्वारेणेत्यर्थः। अयमेव ब्रह्मप्रतीतेः क्रमः। स च श्रुत्यैव दर्शितः क्रमः– **"स एष नेति नेति" इति।**

**इदमिदानीं विचार्यते – किं कृत्स्न आम्नायो भेदप्रपञ्चविलयमुखेन ब्रह्म निरूपयति ? आहोस्वित् कश्चिदस्यैकदेशः ? तत्र केचिदाहुः –**

**सर्वत्रैवाम्नाये क्वचित् कस्यचिद्भेदस्य प्रविलयो गम्यते। यथा – "स्वर्गकामो यजेत" इति शरीरात्मभावस्य प्रविलयः। अत्र हि देहव्यतिरिक्तस्वर्गोपभोगसमर्थोऽधिकारी गम्यते। तेन देहात्मभावप्रविलयः। तथा "गोदोहनेन पशुकामस्य प्रणयेत्" इत्यधिकृताधिकारादधिकारि-**

---

अत्रैव प्रामाणिकानामपि वचनद्वयमुदाहरति – "सत्यमाकृतिसंहारे यदन्ते व्यवतिष्ठते" इति, "अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते" इति च। आकृतिसंहारे सति अन्ते यद् व्यवतिष्ठते, तत् सत्यं ब्रह्मतत्त्वमिति प्रथमवचनार्थः। अविद्ययाऽध्यारोपो भेदस्य विद्यया च ब्रह्मणि तस्यापवादः– अपोहः। तथा चाध्यारोपापवादाभ्यां निष्प्रपञ्चस्य = निर्विशेषस्य ब्रह्मणः प्रतिपत्तिरिति द्वितीयवचनार्थः।

विचारान्तरमुपस्थापयति – **इदमिदानीमिति**। तत्रायं संशयः– किं समस्त आम्नायो भेदप्रपञ्चप्रविलयद्वारेण ब्रह्मतत्त्वं प्रतिपादयति ? अथवा आम्नायस्य कश्चिदेकदेश उक्तप्रकारेण ब्रह्म निरूपयति ? अस्यां विचिकित्सायां केचिद् वादिन एवं वदन्ति – यद् आम्नायमात्र एव क्वचिद् कस्यचिद् भेदस्य प्रविलयः प्रतीयते। यथा – "स्वर्गकामो यजेत" इति श्रुतौ देहे आत्मभावस्य निराकरणं प्रतीयते। यतो हि देहस्येहैव भस्मीभूतत्वाद् मरणोत्तरं स्वर्गोपभोगसमर्थो देहातिरिक्तो नित्य आत्मा अग्निहोत्रादियागेऽधिकारीति प्रतीयते। इत्थं देहे यागाधिकारनिराकरणरूपः, देहे आत्मत्वनिराकरणरूपो वा एकः प्रविलय उदाहृतः।

उदाहरणान्तरमाह – **तथा गोदोहनेनेति**। अयं भावः–"गोदोहनेन पशुकामस्य" इत्यत्र पशुसाधनतया गोदोहनपात्रं विहितमस्ति। किन्तु अक्रियात्मकत्वेन गोदोहने साक्षात् पशुसाधनत्वं न सम्भवति, अतस्तत् काञ्चित् क्रियामपेक्षते। सा च क्रिया प्रकरणाद् दार्शपौर्णमासिकी प्रणयनक्रियैवास्ति, यामाश्रित्य गोदोहनं पशुसाधनं भवति। एतावता इदमपि अर्थात् सिध्यति यद् यो जनो दर्शपूर्णमासयागेऽधिकृतः,

**भेदप्रविलयः। तथा विधिनिषेधचोदनास्वपि नैसर्गिकीणां रागादिनिबन्धनानां प्रवृत्तीनां प्रविलयः। निषेधेषु साक्षात्, विधिषु प्रवृत्त्यन्तरनियोगेन। लोकेऽपि अनभिप्रेतात् पथः साक्षाद्वा निवारणम्, पथ्यन्तरोपदेशेन वा।**

---

स एव पशुफलकामनया गोदोहनकरणकेऽप्प्रणयनेऽधिकारीति गम्यते, निषिध्यते च ततो भिन्नोऽधिकारीति अधिकारिभेदप्रविलयरूपोऽपरो भेदप्रविलयोऽत्र श्रुतौ उदाहृतो मूले।

पुनरुदाहरणान्तरमाह– **तथा विधीति**। अयमर्थः– "सन्ध्यामुपासीत" इत्यादिषु विधिचोदनासु, "न कलञ्जं भक्षयेत्" इत्यादिषु निषेधचोदनासु च स्वाभाविकीनां रागद्वेषनिबन्धनानां बाह्यप्रवृत्तीनां निषेधो गम्यते। उभयत्रापि बाह्यप्रवृत्तीनां प्रविलय इति सुष्ठूदाहृतम्।

अत्र विशेषमाह– "निषेधेषु साक्षाद् विधिषु प्रवृत्त्यन्तरनियोगेन" इति। अयमभिप्रायः– निषेधेषु "नेदं कुरु" इति साक्षादेव प्रवृत्त्यन्तरनिषेधोऽवगम्यते। विधिषु तु "सन्ध्यामुपासीत" इत्यादिषु सन्ध्योपासनरूपे प्रवृत्त्यन्तरे नियोगेन तत्काले बाह्यप्रवृत्तिनिषेधोऽप्यर्थादवगम्यते। एतदुक्तं भवति– विधिनिषेधयोरुभयत्रापि बाह्यप्रवृत्तिप्रविलयो भवति। एतावांस्तु विशेषः– यद् निषेधस्थले साक्षात्, विधिस्थले च अर्थात् प्रवृत्त्यन्तरप्रविलय इति। इदं प्रविलयस्य वैदिकमुदाहरणम्।

लोकेऽपि कदाचित् साक्षादेव अनभिप्रेताद् मार्गाद् निवारणं क्रियते "अनेन मार्गेण मा गच्छ" इति। क्वचित्तु मार्गान्तरोपदेशेन अनभिप्रेतमार्गगमनं निषिध्यत इति।

तथा च विधिनिषेधचोदनास्वपि रागादिनिबन्धनप्रवृत्तिप्रविलयो गम्यत इति साधु स्थितम्।

इत्थञ्च प्रायः कृत्स्न एवाम्नायः भेदप्रविलयं प्रतिपादयतीति केषाञ्चिद् वादिनां मतम्।

**एवं च रागादिनिबन्धननैसर्गिकप्रवृत्तिभेदविलयद्वारेण दृष्टेनैव कर्मविधय आत्मज्ञानाधिकारोपयोगिनः। तथा हि – शान्तस्य दान्तस्य समाहितस्य चात्मनि दर्शनमुपदिश्यते, शक्यं च। न हि विषयैराकृष्यमाणस्त-दुपायप्रवृत्तिकृतचेताः शक्नोत्यात्मनि समाधातुम्। नैसर्गिकीभ्यस्तु प्रवृत्तिभ्य उपरतो नियतमानस आत्मदर्शनेनाधिक्रियते, सामर्थ्यात्।**

---

सर्वेषामाम्नायानां भेदप्रविलयपरतास्वीकारे महल्लाघवरूपो गुणोऽपि वर्तत इत्याह – **एवं चेति।**

अयमाशयः– कर्मविधीनां स्वर्गादिसाधनयागप्रतिपादनपरत्वे कर्मणा-**मनुष्ठानेनेहैव** क्षयात् स्वर्गजनकत्वं न स्यादिति स्वर्गजनकीभूतादृष्टरूपस्य **व्यापारस्य** कल्पना करणीया भवतीत्यदृष्टकल्पनागौरवं स्यात्। कर्मविधीनां **भेदप्र**पञ्चप्रविलयपरतायां तु रागादिनिबन्धनस्वाभाविकबाह्यप्रवृत्तिरूपभेद-विलयद्वारेण मुमुक्षोः शान्तताद्यधिकारिविशेषणोपपादनरूपेण दृष्टेनैव उपकारद्वारेण **सर्वे** कर्मविधय आत्मज्ञानाधिकारं सम्पादयन्ति ततो मोक्षरूपनिरतिशयपुरुषार्थ-पर्यवसायिनश्च जायन्ते। इत्येवमदृष्टकल्पनाऽभावेन महल्लाघवं भवति। सहैव सातिशयस्वर्गादिरूपपुरुषार्थपर्यवसायित्वापेक्षया उत्कृष्टनिरतिशयमोक्षरूपपुरुषार्थ-पर्यवसायित्वं च कर्मविधीनां भवतीति महान् गुण उपलब्धो भवति।

तदेवोपपादयति – **तथा हीति।** अयं भावः– यो हि शान्तो मनसा, दान्त इन्द्रियैः, समाहितो निरुद्धचित्तः, स एवात्मदर्शनेऽधिक्रियते श्रुत्या "तस्माच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इत्याद्यया। तत्र "शान्तः" इत्यनेन अन्तःकरणपूर्वकरागादिजन्यप्रवृत्तिनिवृत्तिरधिकारिविशेषणमुक्ता भवति। "दान्तः" इति बहिःकरणपूर्वकरागादिजन्यायाः प्रवृत्तेर्निवृत्तिरात्मज्ञाना-धिकारिविशेषणमुक्ता भवति।

अतो यो हि जनो अशान्तोऽदान्तश्च विषयैराकृष्यमाणस्तत्प्राप्त्युपाय एव प्रवृत्तचेता भवति, स चित्तमात्मनि समाहितं कर्तुं न शक्नोति, अत एव च नात्मानं साक्षात्कर्तुं शक्नोति। अतः कर्मविधिप्रभावात् स्वाभाविकीभ्यो रागादि-

**अन्ये तु मन्यन्ते – अनवाप्तकामः कामोपहतमना न परमाद्वैत-दर्शनयोग्यः। कर्मभिस्तु कृतकामनिबर्हणः सहस्रसंवत्सरपर्यन्तैः प्राजापत्यात् पदात् परम् अद्वैतमात्मानं प्रतिपद्यत इति। उभयोरपि पक्षयोरनयोः कृत्स्न आम्नाय आत्मज्ञानैककार्यपर्यवसायी।**

---

निबन्धनप्रवृत्तिभ्य उपरतो मुमुक्षुः समाहितचित्तः सन् आत्मदर्शनाधिकारी भवति, साक्षात्कृतात्मतत्त्वश्च मुच्यत इति केचिद् योजयन्ति वादिनः। मतमिदं ब्रह्मदत्त-स्येति भावशुद्धिकारा मन्यन्ते।

कामप्रविलयद्वारेण कर्मविधीनामद्वैतात्मदर्शनाधिकारोपयोगित्वमिति मतमुपस्थापयति – **अन्ये तु मन्यन्त इति।**

अयमाशयः – काम्यन्त इति कामाः स्वर्गादयः, न अवाप्ताः कामा येन सोऽनवाप्तकामः। अत एव कामेन विषयसुखाभिलाषेण उपहतमस्वस्थीकृतं मनो यस्य स जनोऽमुमुक्षुतया परमाद्वैततत्त्वदर्शनयोग्यो न भवतीति तस्य ब्रह्मतत्त्व-साक्षात्कारे नाधिकारः। यस्तु आधानादारभ्य सहस्रसंवत्सरनामकयागपर्यन्तैः कर्मभिः कामस्य विषयसुखाभिलाषस्य निबर्हणं विनाशं प्रविलयं कृतवान् सः प्राजापत्याद् ब्राह्मात् पदादपि परमुत्कृष्टमद्वैतमात्मतत्त्वं प्रतिपद्यते साक्षात्करोति। यतः सोऽवाप्तसकलकाम्यफलतया विषयसुखकामनाप्रविलयद्वारेण परमाद्वैतात्म-तत्त्वदर्शनाधिकारितां प्राप्त इति।

इत्थञ्च कामप्रविलयद्वारेण कर्मविधीनामात्मसाक्षात्काराधिकारसम्पादने उपयोगित्वमित्यन्ये मन्यन्ते।

अनन्तरोक्तयोरुभयोः पक्षयोर्यद्यपि निबर्हणीयविषययोर्भेदोऽस्ति, एकस्मिन् देहात्मत्वादेर्नैसर्गिकबाह्यप्रवृत्तीनाञ्च निबर्हणं कर्मविधिभिरुक्तम्, अन्यस्मिंश्च पक्षे कामनिबर्हणं कर्मविधिभिरित्युक्तम्। तथापि अनयोरुभयोरपि पक्षयोः कृत्स्न एवाम्नायो ज्ञानकाण्डीयः कर्मकाण्डीयश्च आत्मज्ञान एवैकस्मिन् कार्ये पर्यवस्यति = तात्पर्यतया वर्तत इति तन्मतनिष्कर्षः।

**अन्येषां दर्शनम् — पृथक्कार्या एव सन्तः कर्मविधय आत्मज्ञानाधिकारमवतारयन्ति पुरुषम्, अनपाकृतर्णत्रयस्य तत्रानधिकारात् "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्" इति (मनु० ६/३५)।**

**अन्ये तु — संयोगपृथक्त्वेन सर्वकर्मणामेवात्मज्ञानाधिकारानुप्रवेशमाहुः — "विविदिषन्ति यज्ञेन" (बृ० ४/४/२२) इति श्रुतेः, "येन केनचन यजेतापि दर्वीहोमेनानुपहतमना एव भवति" (बृ० ४/४/२) इति च।**

---

**अन्येषां** वादिनामयं सिद्धान्तः— कर्मविधीनां कार्यं फलं पृथग् ऋणत्रयापाकरणरूपम्, ज्ञानविधेश्च कार्यं फलं पृथग् मोक्षरूपम् ।अतो ज्ञानविधयः स्वप्रधानाः, कर्मविधयोऽपि स्वप्रधानाः, न तु पूर्वोक्तपद्धत्या ज्ञानविध्यङ्गतां भजन्ते कर्मविधयः। तथा च स्वप्रधानाः सन्त एव कर्मविधयो अपाकृतर्णत्रयं मुमुक्षुं पुरुषं ब्रह्मतत्त्वज्ञानाधिकारयोग्यं कुर्वन्ति। तदुक्तं मनुना— "ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्"।।इति ।ऋणत्रयं च श्रुत्या प्रतिपादितम् — "जातो ह वै त्रिभिर्ऋणैः ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः" इति। एवं रीत्या ऋषि-ऋणं देव-ऋणं पितृ-ऋणं चेति त्रीणि ऋणानि भवन्ति जातमात्रस्य मनुष्यस्य। एतानि ऋणानि अनपाकृत्य कश्चिदपि मोक्षे नाधिक्रियत इति।

सर्वकर्मणामात्मज्ञानाधिकारानुप्रवेशोपयोगित्वमिति मतान्तरमुपस्थापयति मूले— **अन्ये त्विति**। संयोगपृथक्त्वं नाम फलान्तरोद्देशेन विहितस्य कर्मणः पुनः फलान्तरेण सम्बन्धः। पृथक्त्वेन पृथक्फलत्वेन संयोगः संयोगपृथक्त्वमिति व्युत्पादनीयम्। एकस्यैव विहितकर्मण उभयार्थत्वमिति निष्कर्षः। "एकस्य तूभयत्वे संयोगपृथक्त्वम्" इति जैमिनीयो न्यायः।

अयं भावः— "तमेतं विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुतौ स्वर्गादिफलसंयुक्तानामपि यज्ञदानतपोरूपाणां नित्यनैमित्तिककाम्यकर्मणां "विविदिषन्ति" इति विधिना सम्बन्धात् संयोगपृथक्त्वेन न्यायेन ज्ञानेनापि सह

**अन्ये तु— पुरुषसंस्कारतयाऽऽत्मज्ञानाधिकारसंस्पर्शं कर्मणां वर्णयन्ति — "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" (मनु० २/२८),**

---

पृथक् सम्बन्धान्तरं श्रूयते। अतो यानि दर्शपूर्णमासादियज्ञादिकर्माणि स्वर्गादिफलजनकानि भवन्ति, तान्येव ज्ञानप्रयोजकान्यप्युच्यन्त इति सर्वाणि विहितकर्माणि आत्मज्ञानाधिकारानुप्रवेशमर्हन्ति। अत्रायं क्रमः— यज्ञादिकर्मभिः पापक्षपणद्वारा चित्तशुद्धिः, चित्तशुद्ध्या विविदिषा, ततश्च ज्ञानोत्पत्तिरिति। एतदेवोक्तम् "येन केनचन यजेतापि दर्वीहोमेन अनुपहतमना एव भवति" इति। अत्र अनुपहतमनस्त्वं नाम मनोविक्षेपनिवृत्त्या शुद्धचित्तत्वम्। इत्थञ्च कर्मणाम् अनुपहतमनस्त्वसम्पादनद्वारा आत्मज्ञानाधिकारानुप्रवेशित्वमित्यन्ये मन्यन्त इत्यभिप्रायः।

संस्कृतो हि पुरुष आत्मज्ञानाधिकारयोग्यो भवति नासंस्कृतः। स च संस्कारो यज्ञादिकर्मभिरेव भवतीत्यतः कर्मणां संस्कारजननद्वाराऽऽत्मज्ञाने उपयोग **इत्यन्ये केचिन्मन्यन्ते**। अत्र स्मृतिं प्रमाणतया उपस्थापयन्ति। यथा— "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः" इति। महायज्ञपदवाच्या अत्र ब्रह्मयज्ञ-देवयज्ञ-पितृयज्ञ-मनुष्ययज्ञ-भूतयज्ञाभिधानाः पञ्च यज्ञा गृह्यन्ते। तदतिरिक्ता यज्ञा यज्ञपदेन निर्दिश्यन्ते। ब्राह्मी क्रियते = ब्रह्मविद्याधिकारवती क्रियत इयं तनुरित्यभिप्रायः। तनुशब्देनापि शारीर आत्माऽत्राभिप्रेतः।

"यस्यैते चत्वारिंशत् संस्कारा अष्टावात्मगुणाः, स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति" इति स्मृत्यन्तरमपि इममेवार्थमुपोद्बलयति। चत्वारिंशत् संस्कारा हि गर्भाधानादयो वर्णिताः सन्ति। अष्टौ आत्मगुणाश्च दया-क्षान्तिः-अनसूया-शौचम्-अनायासमङ्गलम्-अकार्पण्यम्-अस्पृहाख्या वर्णिताः सन्ति। अयमर्थः— यस्यैते संस्कारा आत्मगुणाश्च भवन्ति, स ब्रह्मणः सायुज्यमर्थाद् ब्रह्मणा हिरण्यगर्भेण सह एकत्वं तथा सालोक्यमर्थात् समानलोकतां च गच्छतीति। तत्र प्रलये परे ब्रह्मणि लीयते-मुक्तो भवतीति बोध्यम्। तथा चोक्तम्— "ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्"॥ इति।

"यस्यैते चत्वारिंशत् संस्कारा अष्टावात्मगुणाः" इति च (गौ० ध० सू० ८/२२)।

अन्ये तु — एतदेव विपरीतं वर्णयन्ति, आत्मज्ञानमेव कर्तृसंस्कारतया कर्माधिकारानुप्रवेशीति।

अन्ये तु — परस्परविरोधिनोः कर्मात्मज्ञानयोर्द्वैताद्वैतविषयत्वेनासम्बन्ध एवेति मन्यन्ते।

तत्र न तावत् प्रथमः कल्पः। न हि कर्मादिविधयः स्ववाक्यसमधि-

---

**अन्ये केचन** मन्यन्ते — न कर्माणि आत्मसंस्कारजननद्वाराऽऽत्मनो ज्ञानाधिकारमापादयन्ति, किन्तु आत्मज्ञानमेवात्मानं संस्कृतं करोति, संस्कृतश्चात्मा कर्मस्वधिकारी भवतीति पूर्वमतविपरीतं वर्णयन्ति। तत्र युक्तिं चोपन्यस्यन्ति — देहव्यतिरिक्तं नित्यं कर्तारं भोक्तारञ्च आत्मानं यो जानाति, तस्यैव यज्ञादिकर्मस्वधिकारो नेतरस्येति। उक्तञ्च — "न ह्यनध्यात्मवित् कश्चित् क्रियाफलमुपाश्नुते" इति। मतमिदं मीमांसकस्य।

**अन्ये तु** केचिन्मन्यन्ते — न कर्माणि आत्मज्ञानाधिकारसम्पादनार्थं न वाऽऽत्मज्ञानं कर्मस्वात्मनोऽधिकारसम्पादनार्थं वा भवितुमर्हति, कर्मात्मज्ञानयोः परस्परं विरोधित्वात्। विरोधश्च कर्मणां साध्यसाधनादिद्वैतविषयत्वेन आत्मज्ञानस्य च "एकमेवाद्वितीयम्" इति श्रुत्यनुसारेण अद्वैतविषयत्वेन च स्फुट एवास्ति। अतः परस्परविरोधान्न कर्मात्मज्ञानयोः परस्परम् उपकार्योपकारकभावः सम्बन्ध इति।

तत्र रागादिनिबन्धननैसर्गिकप्रवृत्तिभेदानां प्रविलयद्वारेण सर्वेऽपि कर्मविधयः आत्मज्ञानाधिकारे उपयुज्यन्त इति यद् विवेचितं ब्रह्मदत्तेन, तन्न सम्यक्, कर्मविधीनामात्मज्ञानविधेश्च एकाधिकारत्वासम्भवात्। न हि य एव पुरुषः कर्मस्वधिक्रियते स एवात्मज्ञानेऽप्यधिक्रियते। तदेवोपपादयति मूलकारः — न हि कर्मादिविधय इत्यादिना कुत एकाधिकारत्वमित्यन्तेन ग्रन्थेन। अयमर्थः — "यजेत

**गतस्वर्गादिकार्याः कार्यान्तरमपेक्षन्ते। नाप्यात्मज्ञानविधिर्यथोदित-ब्रह्मचर्यादिसाधननिराकाङ्क्षः कर्मविधीनपेक्षते। तत्र कुत एकाधिकारत्वम् ?**

**अथ अनवगतकार्या एव कर्मादिविधयः, स्वर्गादीनां गुणत्वेन सम्बन्धादिति, स्वर्गकामाधिकरणमस्मै व्याचक्षीत।**

---

स्वर्गकामः'' इत्याद्यानां कर्मविधीनां कार्यं = फलं स्वर्गादिकमस्ति, तच्च फलमुक्तेन विधिवाक्येनैव समधिगतं भवति। अतः स्ववाक्यसमर्पितेन स्वर्गादिफलेनैव निराकाङ्क्षाः कर्मविधयो न आत्मज्ञानविधेः कार्यभूतम् आत्मज्ञानरूपं कैवल्यरूपं वा फलान्तरमप्यपेक्षन्ते। एवम्, आत्मज्ञानविधिरपि साधनरूपेण ब्रह्मचर्यादिकमेव यथोक्तवाक्यसमर्पितमपेक्षते। अतः साधनविषये तत्रत्यवाक्यसमर्पितैः ब्रह्मचर्यादिभिरेव निराकाङ्क्षः सन् आत्मज्ञानविधिर्न कर्मविधिसमर्पितानि यज्ञादिकर्माणि साधनरूपेण अपेक्षते। अतः पृथक्फलाः कर्मविधयः पृथक्साधन आत्मज्ञानविधिश्च नैकाधिकारे प्रवेशमर्हन्ति। तस्मात् कर्माणि कुर्वन्नेव पुरुष आत्मज्ञानेऽप्यधिक्रियत इति रिक्तं वचः।

अत्र शङ्कते – **अथेति**। अयमाशयः– स्ववाक्येऽनवगतफलाः कर्मविधयः सन्ति, न तु तत्र स्वर्गः फलतयाऽवगन्तुं शक्यते। स्वर्गकाम इत्यत्र स्वर्गस्य पुरुषविशेषणत्वेन तस्य गुणत्वेनैवाभिसम्बन्धात्। न हि गुणः फलं भवति, प्रधानस्यैव फलत्वौचित्यात्। तस्मात् कर्मविधिषु स्वयं फलाश्रवणाद् आत्मज्ञानविधेर्यत् फलं कैवल्यम्, तदेव कर्मविधीनामपि फलमिति स्वीकरणीयम्। अतः फलैक्यात् कर्मविधीनामात्मज्ञानविधेश्च एकाधिकारत्वं सिध्यतीति।

अत्र सिद्धान्ती सोपहासमुत्तरयति – **''स्वर्गकामाधिकरणमस्मै व्याचक्षीत''** इत्यनेन। अयं भावः– स्वर्गकामाधिकरणस्य व्याख्ययैव पूर्वोक्ताशङ्कायाः समाधानं सम्पद्यते। तथा हि, यद्यपि ''यजेत स्वर्गकामः'' इत्यत्र तिबर्थभावनाया भाव्याकाङ्क्षायां प्रकृत्यर्थयाग एव भाव्यतया सम्बध्यते, एकपदोपात्तत्वेन सन्निहितत्वात्, न तु पुरुषविशेषणत्वेनोपसर्जनीभूतः स्वर्गः, पदान्तरोपात्तत्वेन असन्निहितत्वात्। तथापि धूमाद्याकुलत्वादिना यागस्य दुःखरूपतया न स्वतः काम्यत्वम्, किन्तु

**अपि च सर्वविधिनिषेधानां नामरूपप्रविलयकार्यापवर्गित्वे जन्तूनामभ्युदयविनिपाता अकर्मनिमित्ता आकस्मिकाः स्युः, तथाऽपवर्गोऽपि स्यादिति वैयर्थ्यं शास्त्रस्यापि।**

---

समीहितस्वर्गाद्युपायतयैव तस्य पुरुषप्रवृत्तिविषयत्वम्। अतो न यागे प्राधान्यम्। स्वर्गादिकं तु सुखस्वरूपतया स्वतः काम्यमानत्वेन प्रधानम्। अतः पुरुषविशेषणीभूतेऽपि स्वर्गादौ भावनोद्देश्यतालक्षणं मुख्यभाव्यत्वं सूपपन्नम्। तदुपायतयैव च स्वर्गादिसाधने यागादौ पुरुषप्रवृत्तिरिति। तथा च कर्मविधिसाध्यं स्वर्गफलं स्ववाक्येनैव समधिगतमिति न कर्मविधिभिः फलप्रतिपत्त्यर्थम् आत्मज्ञानविधेर्मुखं निरीक्षणीयम्। अतो न कर्मविधिज्ञानविध्योरेकाधिकारत्वं न वाऽऽत्मज्ञानविधेः स्वाधिकारिविशेषणशान्तत्वादेः सम्पत्त्यर्थं कर्मविधिविहितयागाद्यपेक्षेति बोध्यम्।

**एवं, सर्वे विधयः** सर्वे च निषेधा यदि भवदुक्तप्रकारेण नामरूपात्मकप्रपञ्चस्य प्रविलयरूपकार्यपर्यवसायिनः स्युः, तदा प्राणिनामग्निहोत्रादिप्रयुक्ताः स्वर्गाद्यभ्युदया भूतहिंसादिप्रयुक्ता नरकादिविनिपाताश्च न शुभाशुभकर्मनिमित्ताः स्युः, सर्वकर्मणां भवन्मते प्रपञ्चप्रविलयपर्यवसायित्वात्, स्वर्गनरकादीनामपि प्रपञ्चान्तर्गतत्वात्। किन्तु ते आकस्मिका अकारणका एव स्युः। अनयैव रीत्या स्वर्गनरकादिवद् अपवर्गोऽपि मोक्षोऽपि किमिति नाकस्मिक आपद्येत ? तथा च सति स्वर्गनरकापवर्गोपदेशकानि सर्वाण्येव शास्त्राणि निरर्थकानि सम्पद्येरन्।

अथवा मूले "अपवर्गित्व"पदं न पर्यवसायित्वार्थकं किन्तु अपवर्गार्थकम् (मोक्षार्थकम्) एव। अतोऽत्रत्यो मूलग्रन्थ एवं व्याख्येयः— भवदुक्तपद्धत्या सर्वे विधिनिषेधा यदि नामरूपात्मकप्रपञ्चप्रविलयेन आत्मज्ञानस्य यत् कार्यमपवर्गः, तत्परा भवेयुः, तदा स्वर्गनरकादयः कस्य कर्मणः कार्यं फलं स्वीक्रियेरन्। अर्थात् स्वर्गनरकादिफलमाकस्मिकमेव सम्पद्येत। एवं तद्वदेव अपवर्गोऽपि आकस्मिकोऽकारणक एव सम्पद्येत, न तु आत्मज्ञानस्य कार्यं स्यात्। एवं च सति सर्वमेव विधिनिषेधशास्त्रम्, आत्मज्ञानशास्त्रं (अध्यात्मशास्त्रं) च व्यर्थमापद्येतेति भावः।

**अथ स्वर्गादिकार्यद्वारेण कर्मविधीनां ज्ञानाधिकारानुप्रवेशिता मार्गग्रामगमनोपदेशानामिवाभिमतनगरगमनोपदेशानुप्रवेशित्वम् । तदसत् — युक्तं मार्गग्रामप्राप्तेरनभिमतत्वादभिमतदेशप्राप्त्युपदेशानुप्रवेशित्वम्, न हि मार्गग्रामोपदेशेषु पुरुषार्थप्राप्तिः । अतः साकाङ्क्षत्वाद् यत्र पुरुषार्थप्राप्तिः, तमनुप्रविशन्ति । न त्वेवं कर्मविधिषु पुरुषार्थस्यालाभः, स्वर्गादीनां पुरुषेणार्थ्यमानत्वात्, तत्र च नैराकाङ्क्ष्ये कथमन्यानुप्रवेशः ।**

---

पुनः शङ्कते — **अथेति** । अयं भावः — यथा कश्चिदभीष्टनगरगमनमुपदिशति "अमुकनगरं त्वया गन्तव्यम्" इति । तन्नगरप्राप्त्यर्थं मध्येमार्गं पतितानां ग्रामाणामनभिप्रेतानामपि गमनमुपदिशति, "अमुकामुकग्रामास्त्वया गन्तव्याः" इति ।तत्र मार्गपतितग्रामगमनोपदेशा अभिमतनगरगमनोपदेशपर्यवसायिनो भवन्ति, तथैव कर्मविधयोऽपि स्वर्गादिफलप्राप्तिद्वारेण आत्मज्ञानाधिकारपर्यवसायिनो विद्यन्त इति ।

शङ्कामिमां सिद्धान्ती प्रतिक्षिपति — **तदसदिति**। अयमर्थः — दृष्टान्ते मार्गपतितग्रामप्राप्तिर्न गन्तुरभिप्रेता, किन्तु नगरप्राप्तिरेव तस्याभिप्रेता । अतो मार्गपतितग्रामगमनोपदेशानां तदभिमतनगरगमनोपदेशानुप्रविष्टत्वं युक्तमेवास्ति । यतो हि मार्गस्थितग्रामप्राप्त्युपदेशेषु नास्ति काचित् पुरुषार्थप्राप्तिः। अतो मार्गग्रामप्राप्त्युपदेशास्तावत् साकाङ्क्षा एव तिष्ठन्ति यावद् अभिमतनगरप्राप्तिर्न जायते । तस्माद् मार्गग्रामगमनोपदेशा अभिमतनगरप्राप्त्युपदेशमनुप्रविशन्तीति युक्तम्, मार्गस्थग्रामगमनस्यापुरुषार्थत्वात् । कर्मविधिषु तु पुरुषार्थस्य अलाभो नास्ति । स्वर्गादीनां पुरुषेणार्थ्यमानत्वात् । अतः कर्मविधिस्थले स्वर्गरूपपुरुषार्थ-प्राप्त्या कर्मविधौ निराकाङ्क्षत्वसम्पत्तेः कथं कर्मविधीनामात्मज्ञानोपदेशानुप्रवेशित्वं स्वीकरणीयं स्यात् ? "तस्मान्न कर्मविधीनामात्मज्ञानविधेश्चैकाधिकारानुप्रवेश इति सिद्धम् ।

**अथ मतम् – यदोपच्छन्द्य नीयत उत्तरोत्तरग्रामगुणोपदर्शनेनाभिप्रेतं देशम्, तदा पूर्वग्रामोपदेशाः प्राप्ताभिमतकार्या उपदेशान्तरानुप्रवेशिनश्चेति, युक्तम्, तत्रापि प्रमाणान्तरेण वक्तुरभिप्रायाधिगमात्। प्रमाणान्तरेण हि तत्रेदमधिगतम् – एतद्देशप्राप्ताविदमस्य समीहितं वक्तुः सम्पद्यते, तस्मादिदमस्य विवक्षितमिति। न तु शब्दवृत्त(प्रवृत्ति)मात्रानुसारेण।**

---

दृष्टान्तदार्ष्टान्तिकयोः पुनः साम्यं स्पष्टयति – **अथ मतमिति**। यदा कश्चित् कञ्चिद् उपच्छन्दयति = प्रलोभयति यदमुकं ग्रामं त्वं गच्छ, तत्र मधुरान्नं प्राप्स्यसीति। तं ग्रामं गत्वा लब्धफलं पुनः प्रलोभयति यद् अतः परममुकग्रामं गच्छ, तत्र हृद्यं पेयं प्राप्स्यसीति। तत्रापि गत्वाऽभीष्टपेयं सोऽधिगच्छति। एवं प्रतिग्रामं लब्धफलं तं पुनः प्रलोभ्य् स्वाभीष्टनगरगमनमुपदिशति। तत्र पूर्व-पूर्वग्रामगमनोपदेशास्तत्फलप्राप्त्या निराकाङ्क्षाः सन्तोऽपि वक्तृसमीहित-नगरगमनोपदेशेऽनुप्रविशन्ति, तथैव स्वर्गादिफलप्राप्त्या निराकाङ्क्षाः सन्तोऽपि कर्मविधयो मोक्षफलके आत्मज्ञानविधावनुप्रविशन्ति = तत्र पर्यवस्यन्ति। तथा च कर्मविधिज्ञानविध्योरेकाधिकारत्वमव्याहतम् इति पूर्वपक्षयितुराशयः। पूर्वं फलप्रलोभनं विनैव मार्गग्रामगमनान्युपदिष्टानि वक्त्रा, इदानीं तु फलैः प्रलोभ्य ग्रामगमनान्युपदिष्टानीति विशेषः। एतावता कर्मविधिज्ञानविधिभ्यां सह ग्रामगमनोपदेशनगरगमनोपदेशयोर्दृष्टान्तयोः पूर्णं साम्यमिति प्रदर्शितम्।

अभ्युपगम्य दूषयति – **युक्तमिति**। दृष्टान्ते पूर्वग्रामोपदेशाः लब्धफला नगरोपदेशपर्यवसायिनश्चेति युक्तमित्यर्थः। तस्य युक्तत्वे निमित्तमाह – **तत्रापीति**। अयं भावः – प्राप्ताभीष्टफलकग्रामगमनोत्तरं नगरगमनोपदेशोऽनेनाभिप्रायेण वक्त्रा कृत इति श्रोता प्रमाणान्तरेण प्रत्यक्षतः फलप्राप्त्यादिना प्रतिपद्यत इति युक्तं मार्गग्रामगमनोपदेशानां नगरगमनोपदेशानुप्रविष्टत्वम्। एतदेव विशदयति – **प्रमाणान्तरेण हीति**। स्पष्टार्थः। अत्र यद्यपि पूर्वग्रामोपदेशाः फलवत्पूर्वग्रामगमनपराः शब्दवृत्तानुसारेण प्रतीयन्ते, तथापि "नगरगमनेऽस्य वक्तुरिदमभिमतं फलम्, तथाऽनेनैवाभिप्रायेण पूर्वपूर्वग्रामगमनमुपदिष्टवानयं वक्ता" इति न शब्दवृत्तानुसारेण

**इतश्चैतदेवं यत् प्रतिग्रामं वक्तुः श्रोतुश्च सत्यामर्थप्राप्तौ प्रमाणान्तरेणानधिगते परदेशप्राप्त्यभिप्राये पूर्वोपदेशान् पूर्वार्थानिव पार्श्वस्थाः प्रतिपत्तारः प्रतिपद्यन्ते, परोपदेशं च स्वार्थनिष्ठम् ।**

---

श्रोता प्रतिपद्यते, तथाविधशब्दाप्रयोगात् । किन्तु नगरं प्राप्तः फललाभं प्रत्यक्ष-प्रमाणेन दृष्ट्वैव पूर्वग्रामोपदेशानां नगरगमनोपदेशपर्यवसायित्वं प्रतिपद्यते । इदं हि प्रमाणान्तरस्य माहात्म्यं न शब्दवृत्तस्येति ।

दार्ष्टान्तिके तु श्रोता कर्मविधीन् आत्मज्ञानविधिञ्च केवलान् श्रुतितः शृणोति, तेषां फलानि त्वलौकिकानि स्वर्गादिस्वरूपाणि न प्रत्यक्षतः प्रमाणान्तरेण जानाति ज्ञातुं शक्नोति वा, येन श्रुतस्वर्गादिफलानां कर्मविधीनां श्रुतमोक्षफले आत्मज्ञानविधौ प्रमाणान्तरेण अनुप्रवेशाभिप्रायं श्रोता प्रतिपद्येत । शब्दवृत्तञ्चात्र नास्ति, येन कर्मविधीनाम् आत्मज्ञानविध्यनुप्रवेशः प्रतीयेत । तस्मात् कर्मविधिज्ञानविध्योर्नैकाधिकारत्वमिति सिद्धान्तः साधुः ।

यदि प्रमाणान्तरेण वक्तुः परदेशगमनोपदेशाभिप्रायः श्रोता नावबुध्यते, तदा तु पूर्वदेशोपदेशा अपि स्वार्थनिष्ठाः स्वार्थमात्रपर्यवसन्नाः परदेशो-(नगरों) पदेशोऽपि च स्वार्थनिष्ठ एव भविष्यति, न तु पूर्वदेशोपदेशानां परदेशोपदेशानु-प्रविष्टत्वमित्याशयेन स्वपक्षे उपपत्त्यन्तरमाह सिद्धान्ती– **इतश्चैवमित्यादिना स्वार्थनिष्ठमित्यन्तेन** ग्रन्थेन । अयमर्थः– प्रतिग्रामं स्वाभीष्टस्य मधुरभोजनाद्यर्थस्य प्राप्तौ सत्यामपि वक्तुः श्रोतुश्च प्रत्यक्षादिप्रमाणान्तरेण परदेशप्राप्त्यभिप्राये, अर्थात् परदेशप्राप्तिरूपं यत् फलं तद्विषयकेऽभिप्राये अनवधारिते सति पार्श्वस्था उदासीनाः प्रतिपत्तारोऽपि इदमेव प्रतिपद्यन्ते यत् पूर्वपूर्वग्रामोपदेशाः पूर्वार्था एव, अर्थाद् मधुरान्नादिप्रयोजना एव न नगरप्राप्तिप्रयोजनाः, नगरप्राप्त्युपदेशोऽपि च नार्थान्तराभिप्रायकः, किन्तु स्वार्थनिष्ठः = स्ववाक्यश्रुतार्थमात्रनिष्ठ एवेति ।

इयमेव रीतिर्वैदिकालौकिकविधिष्वपि ज्ञेया । अर्थात् कर्मविधयः स्वातन्त्र्येण स्ववाक्यश्रुतस्वर्गादिप्रयोजना एव न आत्मज्ञानपर्यवसन्नाः । आत्मज्ञानविधिरपि यज्ञादिकर्मनिरपेक्ष एव स्वातन्त्र्येण मोक्षफलक एवेति ।

**यद्यपि वस्तुस्थित्या पूर्वोपदेशार्थाः परोपकारिणस्तथापि न शब्दस्य तात्पर्यम्, द्रव्यार्जनादिविधेरिव क्रतुविध्यर्थोपकारेऽपि। शब्दवृत्तानुसारेण चेह तात्पर्यम्, प्रमाणान्तराभावादिति।**

**अपि चाध्वग्रामोपदेशानां तत्परत्वाध्यवसायेनैव तत्र गमनाद् अर्थप्राप्तिश्च। तत्र परदेशपरतायां तु न नियोगतस्तत्र गमनम्,**

---

ननु पूर्वपूर्वग्रामप्राप्तिं विना उत्तरोत्तरग्रामनगरप्राप्त्यभावात् पूर्वपूर्वग्रामप्राप्त्या उत्तरोत्तरग्रामनगरप्राप्तिप्रयोजना अपि स्युरित्याशङ्कामुत्तरयति – **यद्यपीत्यादिना**। अयं भावः – पूर्वपूर्वग्रामप्राप्तिरूपा अर्थाः = विषया यद्यपि उत्तरोत्तरग्रामप्राप्तौ नगरप्राप्तौ चोपकारिणो भवन्ति, तथापि वस्तुस्थितिरियमस्ति, न तु तथाविधोपकारबोधे शब्दस्य तात्पर्यमस्ति । यथा हि –

याजनेनाध्यापनेन प्रतिग्रहेण वा द्रव्यमर्जयेत्, अर्जितं तद् द्रव्यं क्रतुमुपकरोति, द्रव्यं विना क्रतोरसम्भवात्, तथापि तद्द्रव्यार्जनविधिः क्रत्वर्थ एव न भवति, तद्द्रव्यस्य स्वातन्त्र्येण अन्यत्रापि विनियोगात् ।अतः क्रतूपकारकत्वं द्रव्यार्जनविधेर्न शाब्दं किन्तु वस्तुस्थितिमात्रम् ।

एवं ग्रामप्राप्त्युपदेशाः प्रत्यक्षप्रमाणबलेन नगरप्राप्त्यभिप्रायका इति कदाचित् स्यादपि श्रोतुः प्रतिपत्तिः, तथापि कर्मविधिषु आत्मज्ञानविधिषु च शब्दव्यापारानुसारेणैव तात्पर्यमवधारणीयं भवति न प्रमाणान्तरबलेन, वैदिकेषु विधिषु प्रमाणान्तरप्रसरासम्भवात् ।शब्दव्यापारश्च कर्मविधिषु स्वतन्त्रः, स्वतन्त्रश्चात्मज्ञानविधाविति न कर्मविधीनामात्मज्ञानविधावनुप्रवेश इति बोध्यम् ।

किञ्च मार्गग्रामोपदेशा मार्गग्रामगमनपरा इति निश्चयेनैव श्रोतुस्तत्र ग्रामे गमनं भवति, मधुरान्नादिप्राप्तिरूपं प्रयोजनमपि तस्य सिध्यति। यदि तु मार्गग्रामगमनोपदेशा नगरगमनपरतया वक्तुर्विवक्षिताः स्युस्तदा "मार्गस्थममुकामुकग्रामं गच्छ, तत्र मधुरान्नादिप्राप्तिस्ते भविष्यति" इति नियोगतोऽपि श्रोता न मार्गग्रामं गच्छेत् ।यतः स श्रोता जानाति यद् येन केनापि प्रकारेण नगरप्राप्तिरेव वक्तुर्विवक्षिताऽस्तीति मार्गान्तरेणापि स नगरं प्राप्नुयात् ।

**मार्गान्तरेणापि तत्प्राप्तेर्विवक्षितत्वाद् गच्छेत्। न च नियोगतोऽर्थप्राप्तिः, अन्यपरेषु प्रयोजनश्रुतेरप्यर्थवादत्वात्। तदिह यदि विधिनिषेधाः कार्यान्तरपराः, न स्वर्गादिकार्याः, न खलु स्वर्गादिकार्यं प्रयाजादिकार्य-तुल्यम्, येन कार्यान्तरमनुपतेत्।**

---

यदि तु नियोगबलात् श्रोता मार्गग्रामान् गच्छेदपि तथापि तस्य फलप्राप्तिर्न स्यात्। मार्गग्रामगमनोपदेशस्य नगरगमनपरत्वे मार्गग्रामगमनोपदेशे श्रुतमपि मधुरान्नादिप्राप्तिफलमर्थवादमात्रं स्यात्। न ह्यार्थवादिकं फलं वस्तुतो लभ्यते, प्ररोचनामात्रत्वादर्थवादस्येति। तदुक्तं मीमांसान्याये – ''द्रव्यसंस्कारकर्मसु फलश्रुतिरर्थवादः स्यात्'' इति। एतत्सर्वमभिप्रेत्याह – **अपि चेत्यादि।**

एवञ्चेह विधिनिषेधा यदि ज्ञानकार्यमोक्षफलाः स्युर्न स्ववाक्यश्रुतस्वर्गनरकादि-फलाः स्युस्तदा प्राणिनामभ्युदयविनिपाता निर्निमित्ताः सन्त आकस्मिका एव स्युरिति।

ननु प्रयाजो नामाङ्गयागविशेषः, एवमनुयाजोऽप्यङ्गयागविशेषः। प्रयाजादेः कार्यं फलं, प्रधानयागोपकारः। स च प्रयाजादिर्यथा प्रधानोपकारलक्षणं फलं सम्पादयति तथा प्रधानोपकारलक्षणं प्रयाजादिकार्यं प्रधानयागकार्यभूते स्वर्गादिफलेऽ-नुप्रविशति = तत्रैव पर्यवस्यति, तथैव कर्मविधिकार्यं स्वर्गादिकमपि आत्मज्ञान-कार्यमोक्षपरं सदपि विवक्षितं भविष्यतीति न पूर्वोक्तोऽभ्युदयविनिपातयोरा-कस्मिकत्वदोषः प्रसज्यत इत्याशङ्कायामाह – **न खल्विति।** अयमर्थः – प्रधानोपकार-लक्षणं प्रयाजादिकार्यं स्वयमपुरुषार्थत्वात् प्रधानकार्येऽनुप्रवेष्टुमर्हति, कर्मविधिकार्यन्तु स्वर्गादिः स्वयं पुरुषार्थः पुरुषेणार्थ्यमानत्वात्। अतः स कथं पुरुषार्थान्तरे आत्मज्ञानकार्ये मोक्षेऽनुप्रविशेत्? तस्मात् स्ववाक्यश्रुतस्वर्गादितो निराकाङ्क्षाः कर्मविधयो नात्मज्ञानेन सहैकाधिकारतां भजन्त इति सिद्धम्।

एवं यदुक्तम् – शान्तस्य दान्तस्य समाहितस्य च आत्मदर्शनोपदेशाद् दृष्टेनैव रागादिनिबन्धननैसर्गिकप्रवृत्तिविलयद्वारेण कर्मविधय आत्मज्ञाना-

**कथं च दृष्टेनैवात्मज्ञानाधिकारोपकारिण इति वक्तव्यम्। यदि तावद् रागाद्याक्षिप्तदृष्टार्थप्रवृत्तिनिरोधेन, भवतु प्रतिषेधानामेवं भावः, कर्मविधयस्तु कथं निरुन्धन्तीति वाच्यम्। न हि ते परिसंख्यायकाः, न च नियामकाः, अत्यन्तमप्राप्तार्थत्वात्। प्राप्तार्थो हि विधिरन्यनिवृत्तिफलो विज्ञायते।**

**न च तुल्यकार्यत्वेन विरोधेन निवृत्तिः। अनियतकालफला हि नैयोगिक्यः प्रवृत्तयोऽदृष्टार्थाः, दृष्टार्थास्तु रागाद्याक्षिप्ताः स्वाभाविक्यः। न च साङ्ग्रहिण्याः सेवायाश्च ग्रामोपायत्वे कश्चिद् विरोधः, एतावति**

---

धिकारोपयोगिन इति, तत् प्रश्नमुखेन दूषयति – **कथं चेति**। प्रश्नार्थं स्वयमुद्घाटयन् दूषणमुपस्थापयति – **यदि तावदिति**। यदि तावद् रागद्वेषादिप्रयुक्तस्वाभाविक-प्रवृत्तिविलयद्वारेण दृष्टेनैव कर्मविधयः पुरुषं शान्तं दान्तं समाहितं च सम्पादयन्त आत्मज्ञानाधिकारे उपयुज्यन्त इति तन्न युक्तम्, "मा हिंस्यात् सर्वा भूतानि" इत्यादिप्रतिषेधवाक्यानां रागादिप्राप्तप्रवृत्तिनिवर्तकतया दृष्टद्वारा आत्मज्ञानाधिकारोप-कारित्वं भवतु नाम, तथापि "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिविधि-वाक्यानां कथं प्रवृत्तिनिरोधकत्वमिति वक्तव्यं पूर्वपक्षिणा। यतो हि ये परिसंख्याविधयो भवन्ति नियमविधयो वा भवन्ति, त एव प्रवृत्तिं निवारयन्ति, प्राप्तार्थ एव हि परिसंख्याविधेर्नियमविधेर्वा प्रसरसम्भवात्। प्रकृते तु अत्यन्तम-प्राप्तार्थो हि अग्निहोत्रादिः, तस्मान्नात्र परिसंख्यया नियमेन वा स्वाभाविकप्रवृत्ति-विलयो येन कर्मविधय आत्मज्ञानाधिकारोपयोगिनः सम्भवेयुः।

ननु नैसर्गिकप्रवृत्तीनामपि कार्यं सुखं विधिप्रयुक्तानां वैदिककर्मप्रवृत्तीनामपि च कार्यं सुखमेव। तस्मात् तुल्यकार्यतया उभयोः सहानुष्ठाने विरोधाद् विधिप्रयुक्तप्रवृत्त्या रागादिजन्यस्वाभाविकप्रवृत्तेर्निवृत्तिर्भविष्यतीति चेत्, न, तयोः प्रवृत्त्योस्तुल्यकार्यत्वानुपपत्तेः। यतो हि नैयोगिकीनां नियोगप्रयुक्तानां प्रवृत्तीनां फलानि अनियतकालानि भवन्ति, इह जन्मनि वा भवेयुः परलोके वा भवेयुः। अत एव नैयोगिक्यः प्रवृत्तयोऽदृष्टार्था उच्यन्ते। किन्तु रागादिप्रयुक्ताः स्वाभाविक्यः प्रवृत्तयस्तु दृष्टार्था ऐहिकफला भवन्ति, इहैव जन्मनि तासां फलाधिगमात्। अथवा अनियतफलत्वं नाम आमुष्मिकफलत्वम्, अस्मिन् जन्मनि

**प्रमाणत्वाच्छास्त्रस्य। तत्र युगपत् क्रमेण वा फलभूमार्थिनः सेवा-साङ्ग्रहिण्यावनुतिष्ठतः को विरोधः?**

**अपि च सकलदृष्टार्थप्रवृत्तिनिरोधे नियोगनिष्ठा अपि प्रवृत्तयो निरुध्येरन्, अनार्जितधनस्य साधनविकलस्य तासामसम्भवात्।**

---

फलस्य नियमेनाऽभावात्। अतोऽदृष्टफला नैयोगिक्यः प्रवृत्तयस्तद्विपरीतास्तु रागादिप्रयुक्तप्रवृत्तयो नियमेन ऐहिकफला एव। तस्माद् भिन्नकालतया नोभय-प्रवृत्त्योर्विरोधो न वा नैयोगिकप्रवृत्त्या रागाक्षिप्तप्रवृत्तेर्विलय इति न कर्मविधी-नामात्मज्ञानाधिकारेऽनुप्रवेशः।

एवं सुखरूपतुल्यकार्यतया यदि कर्मविधिज्ञानविध्योर्विरोधः स्यात्, तदा "साङ्ग्रहिण्या यजेत ग्रामकामः" इति विधिवाक्योक्ता साङ्ग्रहिणीष्टिरपि ग्राम-प्राप्त्युपायः, स्वामिसेवाऽपि च ग्रामप्राप्त्युपाय इति तुल्यकार्यतया साङ्ग्रहिणीयाग-प्रभुसेवयोरपि विरोधः स्यात्। किन्तु नास्ति विरोधोऽनयोः कश्चित्। न हि साङ्ग्रहिणीयागविधायकमुक्तविधिशास्त्रं सेवां विरुणद्धि, उक्तयागस्य ग्रामोपाय-त्वमात्रबोधने तस्य शास्त्रस्य प्रमाणत्वात्, न तु विरोधबोधनेऽपि। अत एव फल-भूयस्त्वकामः पुरुषो युगपद् वा क्रमेण वा प्रभुसेवां साङ्ग्रहिणीयागं च अनुतिष्ठतीति न कोऽपि विरोधो भवतीति भावः।

दूषणान्तरमाह – **अपि चेति**। अयमभिप्रायः – नियोगनिबन्धनया स्वर्गादिफलकप्रवृत्त्या सकललौकिकसुखजनकप्रवृत्तीनां निरोधे स्वीक्रियमाणे नैयोगिक्योऽपि ज्योतिष्टोमादिविषयिण्यः प्रवृत्तयो निरुद्धाः स्युः। यतो हि लौकिकसुखजनिकायां धनार्जनविषयिण्यां प्रवृत्तौ बाधितायां सत्यां धनाभावेन साधनहीनपुरुषद्वारा ज्योतिष्टोमादिविषयिण्यः प्रवृत्तयोऽसम्भवाः स्युः। तथा चायं पक्षः स्वाभीष्टमेव विघातयेत्।

पक्षेऽस्मिन् अपरमपि दूषणमाह – **अपि च तुल्ये इति**। अयमर्थः – दृष्टसुख-फलिका या लौकिकी प्रवृत्तिर्या चादृष्टस्वर्गादिसुखफलिका वैदिकी प्रवृत्तिः, ते उभेऽपि कामोपायेऽर्थात् सुखरागप्रयुक्ते एव स्तः। अतो यथा लौकिकी प्रवृत्ती रागाक्षिप्ता तथा नैयोगिकी प्रवृत्तिरपि रागाक्षिप्तैवेति नास्ति कश्चिद् विशेषः।

**अपि च तुल्ये कामोपायत्वे दृष्टादृष्टार्थप्रवृत्त्योर्न विशेषो रागाद्याक्षिप्तत्वे। तथा हि – "स्वर्गकामः" इति रागाद्याक्षिप्तप्रवृत्त्यनुवादेन विशेषविधानम्। तथा च प्रपञ्चाभिनिवेशे तुल्ये केन विशेषेण एका आत्मज्ञानानुगुण्यं भजते, तद्विरोधिन्यपरा ? कामाक्षेपो ह्यविशिष्टो मनसः।**

**अथ कामोपायत्वमेव न मन्येत, वर्णितमाकस्मिकत्वम्, उक्तश्च न्यायः प्रत्युद्ध्रियेत। तुल्यकार्यनिबन्धनत्वाच्च विरोधाद् या निरोधाशङ्का सा दूरतो निरस्तावकाशा स्यात्।**

---

अविशेषमेव स्फुटीकरोति – **तथा हीति**। अर्थात् "स्वर्गकामो ज्योतिष्टोमेन यजेत" इति वाक्येन स्वर्गकाममुद्दिश्य ज्योतिष्टोमयागो विधीयते। स्वर्गस्य सुखरूपतया रागतः प्राप्ता या स्वर्गे पुरुषप्रवृत्तिस्तामेवानूद्य ज्योतिष्टोमयागरूपः साधनविशेषो विधीयते। सुखरागात् स्वर्गे प्रवर्तमानमुद्दिश्य ज्योतिष्टोमादिसाधन-विशेषस्य विधानमिति यावत्। तथा च दृष्टादृष्टार्थयोरुभयोः प्रवृत्त्योस्तुल्यं रागप्रयुक्तत्वम्। अतो लौकिकसुखसाधनीभूते धनार्जनादिप्रपञ्चे यादृशोऽभिनिवेशः पुरुषस्य तादृश एवाभिनिवेशोऽलौकिकस्वर्गसुखसाधनीभूते ज्योतिष्टोमादिप्रपञ्चेऽपि। धनोपार्जनादिवज्ज्योतिष्टोमादियागस्यापि प्रपञ्चान्तर्गतत्वात्। एवं हि उभयोरपि दृष्टादृष्टार्थप्रवृत्त्योर्यदि समानं रागाक्षिप्तत्वं समानश्च प्रपञ्चाभिनिवेशः, तदा कोऽसौ विशेषो येन एका प्रवृत्तिरात्मज्ञानानुकूला भवति, अपरा च प्रवृत्ति-रात्मज्ञानविरोधिनी भवतीति वक्तव्यम्। न च स वक्तुं शक्यत इति। विशेषाभावे हेतुमाह – **कामाक्षेप इति**। कामो नाम सुखरागः, तेन आक्षेप आक्षिप्तत्वं मनस उभयत्रापि प्रवृत्त्योरविशिष्टं तुल्यमेव भवति। लौकिकसुखसाधने प्रवृत्तिवद् अलौकिकसुखसाधने प्रवृत्तावपि तुल्यं कामाकृष्टं मनोऽसमाहितं सद् नात्मज्ञानसमर्थं स्यादिति भावः।

शङ्कते – ननु ज्योतिष्टोमादियागे प्रवृत्तिर्न कामोपाया = कामः सुखरागः उपायः प्रयोजको यस्यास्तादृशी न मंस्यते, काम्यस्वर्गसुखसाधनतया, ज्योतिष्टोमयागविधानं न मंस्यते, "स्वर्गकामः" इति पदे स्वर्गपदेन पुरुषगुणत्वेन स्वर्गस्य प्रतिपादनात्। न हि गुणीभूतपदार्थः फलतया अन्वयमासादयति। अतो न

**अथ कामप्राप्त्या कर्मविधयः कामान् प्रविलापयन्तो ज्ञानाधिकारानुगुणाः। यथोक्तम् –**

**"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।**

**अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते॥" (कठ.२/३/१४) इति।**

---

ज्योतिष्टोमादियागप्रवृत्तौ मनसः कामाक्षेपः=कामाक्षिप्तत्वमिति। धनार्जनादिलौकिकप्रवृत्तयस्तु नियमेन मनसः कामाक्षिप्तत्वादेव भवन्तीति अस्ति विशेषो दृष्टादृष्टार्थकप्रवृत्त्योरिति। अनेनैव च विशेषेण दृष्टार्थकप्रवृत्तयो निरुद्धाः सत्य आत्मज्ञानानुगुण्यं भजिष्यन्त इति।

समाधत्ते – **वर्णितमिति**। यदि ज्योतिष्टोमादिप्रवृत्तेः फलं स्वर्गादि न भवेत् तदा स्वर्गाद्यभ्युदया नरकादिविनिपाताश्च आकस्मिका निर्निमित्ताः स्युः। एवं, स्वर्गादेर्ज्योतिष्टोमादियागाकार्यत्वे षष्ठाद्ये जैमिन्युक्तो न्यायः प्रत्युद्ध्रियेत = तिरस्क्रियेतेत्यर्थः।

एवं, भवतैव पूर्वमाशङ्कितं यत् "दृष्टार्थप्रवृत्तेरपि कार्यं सुखं तथाऽदृष्टार्थकप्रवृत्तेरपि कार्यं सुखमेव। अतः कार्यत्वप्रयुक्ताद् विरोधाद् अदृष्टार्थकज्योतिष्टोमादिप्रवृत्त्या दृष्टार्थधनार्जनादिप्रवृत्तयो निरुद्धा भविष्यन्ति आत्मज्ञानविधौ चानुंप्रविष्टा भविष्यन्तीति", सा भवदीयैवाशङ्का निरस्तावकाशा स्यात्। अर्थात् तस्या आशङ्काया अवसर एव दूरनिरस्तः स्यात्। यतो हि ज्योतिष्टोमादेः स्वर्गादिः कार्यमेव न मन्यते चेत् कुतो लौकिकालौकिकप्रवृत्त्योस्तुल्यकार्यत्वम्, कुतस्तरां च तुल्यकार्यत्वनिबन्धनोऽनयोर्विरोधः, कुतस्तमाञ्चादृष्टार्थकप्रवृत्त्या दृष्टार्थकप्रवृत्तीनां निरोधः ? अर्थात् सर्वमेवानुपदं भवदुक्तं विखण्डितं भवेदिति रहस्यम्।

यद्युच्येत – अप्राप्ताः कामा एव बन्धहेतवः, तत्प्राप्तावेव मनसः सदा संलग्नतया अशान्तस्य तस्य आत्मज्ञानाधिकारयोग्यताया अलाभात्। कर्मविधयस्तु कामान् प्रापय्य तान् प्रविलापयन्ति, ततश्च पुरुषस्यात्मज्ञानाधिकारे उपयोगिनो भवन्ति। तदुक्तं कठे –

**तदप्यसत् – यतो न कामप्राप्त्या कामप्रविलयः, अपि तु दोषपरिभावनाभुवा प्रसंख्यानेन। कलयापि चेत् कामैर्मनः संस्पृश्यते ह्रियत एव हारिभिः। उक्तं हि –**

**"न जातु कामः कामानामुपभोगेन शाम्यति" (मनु.२/९४) इति, "भोगाभ्यासमनुविवर्धन्ते रागाः कौशलानि चेन्द्रियाणाम्" (यो.सू. भा.२/१५) इति च।**

**अनुपायत्वादपि तावदयं कामेभ्यो विनिवर्तेत, निखिलक्लेशोपशमरूपं चात्मज्ञानं संश्रयेत। कर्मविधिनिदर्शितविविधोपायस्तु तानेव प्रकृतिहारिणो भोगानभिनिविशेत्, तत्प्रविलयरूपाच्चात्मज्ञानाद् उद्विजेत।**

---

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।

अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ।। इति। (२।३।१४)

**तदपि न युक्तम् –** यतो न कामप्राप्तिः कामनाप्रविलयहेतुः, किन्तु काम्यवस्तुषु अनित्यत्वादिदोषभावनया उत्पन्नं प्रसंख्यानं विवेक एव कामनाविलयहेतुः। प्रत्युत कलयापि = मात्रयापि यदि पुरुषमनः काम्यविषयसंस्पर्शमश्नुते, तदा मनोहारिणस्ते विषयाः पुरुषमनो हरन्त्येव विक्षिपन्त्येव दूरत आत्मज्ञानाधिकारात्। उक्तं हि मनुना – "न जातु कामः कामानामुपभोगेन शाम्यति" इति। (मनु० २।९४)

योगसूत्रभाष्येऽप्युक्तम् – "भोगाभ्यासमनुविवर्धन्ते रागाः कौशलानि चेन्द्रियाणाम्" इति। (२।१५)

कर्मविधयो न कामान् प्रविलापयन्ति, प्रत्युत हविरग्निमिव कामान् वर्धयन्त्येवेति समर्थितम् "न जातु कामः", "भोगाभ्यासमनुविवर्धन्ते" इत्याद्यभियुक्तवचनाभ्याम्। इदानीमुच्यते यद् अनुपायत्वादपि= स्वर्गादिकामोपायाज्ञानादपि अयं पुरुषः काम्येभ्यः स्वर्गादिभ्यो विमुखो भवेत्, निखिलक्लेशोपशान्तिसाधनभूतमात्मज्ञानं च समाश्रयेत्। अयमाशयः – स्वर्गादिसुखोपायबोधकाः कर्मविधयो

**श्रुतोऽपि ह्यात्मन्यानन्दोऽननुभूतो नानुभूतविषयनिबन्धनानन्दाभिलाषं मन्दीकर्तुमप्युत्सहते, प्रागेवोच्छेत्तुम्। तस्मात् प्रसंख्यानमेवैकः कामनिबर्हणोपायः, कर्मविधयस्तु विपर्ययहेतवः।**

**यद्यपि सर्वत्रैवाम्नाये क्वचित् कस्यचिद् भेदस्य विलयः, यथा—**

---

यदि जगति नाभविष्यन् तदा स्वर्गादिकाम्यानामुपायस्यापि ज्ञानं नाभविष्यत्, तथा च सुतरामेव पुरुषो यागादौ प्रवृत्तो नाभविष्यत्, कर्मविध्यधीनयागज्ञानस्याभावात्। प्रत्युत निखिलक्लेशोपशान्तिहेतुमात्मज्ञानमेव समाश्रयेत्।

किन्तु एतद्विपर्ययेण कर्मविधिषु जागरूकेषु तु तैः कर्मविधिभिर्दर्शितविविधसुखोपायः पुरुषः (कर्मविधिभिर्दर्शितो विविधो यागदानादिरूपः सुखोपायो यस्य स इति बहुव्रीहिः) विविधसुखोपायान् ज्ञात्वा प्रकृत्या मनोहारिणस्तानेव भोगान् प्रति अभिनिविशेत् = तेष्वेव बद्धादरः स्यात्। तथा तद्विपर्ययेण स्वर्गादिसुखविलोपकारणाद् आत्मज्ञानाद् उद्विजेत विमुखश्च स्यात् पुरुष इति। तस्मात् कर्मविधयो नात्मज्ञानविध्यनुगुणा किन्तु तद्विपर्ययकारिण एवेति सिद्धम्।

विविधभोगबोधककर्मविधिषु सत्सु आत्मज्ञानादुद्वेगमेव द्रढयति— **श्रुतोऽपीत्यादिना**। अयमर्थः— ''परमो ह्येष आनन्दः'' इत्यादिश्रुत्या आत्मज्ञाने आनन्दरूपत्वं यद्यपि प्रतिपादितम्, तथापि तस्यात्मज्ञानानन्दस्य नाद्यावध्यनुभव इति सर्वथा अननुभूत आत्मज्ञानानन्दो न अनुभूतविषयानन्दाभिलाषं मात्रयापि मन्दीकर्तुं क्षमः, समूलमुच्छेत्स्यतीति तु दूरकथा।

तस्मात् प्रसंख्यानम् = आत्मज्ञानमेवैकः कामनिबर्हणोपायः, कर्मविधयस्तु विपर्ययकारिण एव = विषयभोगप्रवर्धका एवेति स्थितम्। अतो न कामप्रविलयरूपेण दृष्टद्वारेण कर्मविधीनां ज्ञानविध्यधिकारानुप्रवेश इति सिद्धम्।

सर्वत्रैवाम्नाये क्वचिद् भेदस्य विलय इति पूर्वं यदुक्तं तदनूद्य दूषयति— **यद्यपीति**। उदाहृतं च पूर्वम्, यथा— ''स्वर्गकामो यजेत'' इत्यत्र शरीरात्मत्वप्रविलय इति। यदि हि शरीरमेवात्मा स्यात् तदा भस्मीभूतं शरीरं यागफलं स्वर्गं कथं भुञ्जीत ? अतः स्वर्गफलभोक्ता देहातिरिक्तो नित्यश्चेतन आत्मेत्यर्थात् सिध्यत् शरीरस्यात्मत्वं प्रविलापयति।

**"स्वर्गकामो यजेत" इति शरीरात्मत्वप्रविलय इति। तदप्यसत्– अनिदंपरत्वात्। न हीदं वचनं देहव्यतिरिक्तात्मतत्त्वावबोधपरम्।**

**अथान्यपरादप्यर्थदिवमवसीयत इति, तदपि हस्तिनि दृष्टे तत्पदेन तस्यानुमानमिव। साक्षाद्धि "अस्थूलम्" (बृ० ३।८।८) इत्युपक्रम्य देहेन्द्रियविलयो दर्शितः, अर्थाच्च कामादिग्रन्थेः काठिन्यं वैदिकं स्यादिति।**

---

एतदुक्तमपि न शोभनम्– उक्तविधिवाक्यस्य यागनियोगपरत्वेन देहव्यतिरिक्तात्मतत्त्वावबोधपरत्वाभावात्। इदम् = देहव्यतिरिक्तात्मावबोधः परं = मुख्योऽर्थो यस्य वाक्यस्य, तद् इदंपरम्, न इदंपरम् अनिदंपरम्, तस्य भावः अनिदंपरत्वम्, तस्माद् अनिदंपरत्वादिति विवेकः।

यद्युच्येत – यद्यप्युक्तविधिवचनं यागनियोगपरम्, न देहव्यतिरिक्तात्माव-बोधपरं तथापि यतः कामादिः प्रबल इत्यपि अर्थात् सिध्यति वेदादेव। कारणम्, कामादिप्राबल्य एव अग्निहोत्रादिचोदनोपपत्तेः। अतोऽर्थादेवावगम्यते यद् देहव्यतिरिक्तो नित्यश्चेतन आत्मास्तीति, तदपि उपहासास्पदम्, हस्तिनि प्रत्यक्षतो दृष्टे तत्पदचिह्नेन तदनुमानमिवेति।

ननु लोके हस्ती तु प्रत्यक्षसिद्धोऽतस्तत्र पदचिह्नेन तदनुमानं व्यर्थं भवेन्नाम, तथापीह वैदिकविधिस्थले देहात्मत्वप्रविलयो न प्रत्यक्षसिद्धः। अतः स अर्थाद् गम्यो भवेदेव ज्योतिष्टोमादिश्रुत्यैवेति चेत्, न, अत्रापि "अस्थूलम्" इत्युपक्रम्य साक्षादेव देहेन्द्रियत्वादिविलयः श्रुत्यैव दर्शितः। अतः कर्मविधयो न देहात्मत्व-प्रविलयपरा इति मन्तव्यम्। अर्थात्सिद्धस्यापि वेदार्थत्वे दोषमाह – **अर्थाच्चेति**। साक्षात् शब्दानुक्तम् अर्थात्सिद्धमपि देहात्मत्वप्रविलयादिकं यदि वैदिकम् = वेदार्थः स्यात्, तदा कामादिग्रन्थेः काठिन्यमपि वेदार्थः स्यात्। यतः कामादिः प्रबल इत्यपि अर्थात् सिध्यति वेदादेव। कारणम्, कामादिप्राबल्य एव अग्निहोत्रादिचोदनोपपत्तेः। "कामादि" इति आदिपदेन द्वेषग्रन्थिरपि बोध्या। काठिन्यमत्र प्राबल्यम्। अयं भावः– स्वर्गादिकामनां विना ज्योतिष्टोमादिचोदना वेदस्य नोपपद्यते। एवं द्वेषप्राबल्यं विना श्येनादिचोदनापि वेदस्य नोपपद्यत इति

**द्वितीयोऽपि कल्पो वर्णितादेव कामानां कामनिबर्हणसामर्थ्याभावात् स्वकार्यनिराकाङ्क्षाणां चान्यानुप्रवेशे प्रमाणाभावादसमञ्जसः। एकाधिकारत्वे तु समुच्चयः सर्वकर्मणां स्यात्, स चाशक्य इति।**

---

शत्रुद्वेष आर्थिको वेदार्थः स्यात् । ननु कामद्वेषादिरूपाया आत्मज्ञानप्रतिपक्षिभूताया ग्रन्थेर्वेदार्थत्वेऽपि तस्या ग्रन्थेः प्राबल्यं कुतो वेदार्थ इति चेत्, इदमत्र रहस्यम्– देहात्मत्वपक्षेऽनित्यदेहस्य जन्मान्तरीयफलभोक्तृत्वासम्भवाद् देहात्मवादिनो नास्तिकस्य फलकामनारूपा तत्फलभोक्तृत्वाभिमानरूपा च या मनसो ग्रन्थिः सा शिथिलीभवेदपि भोक्तुर्विनाशनिश्चयात् । किन्तु य आत्मज्ञानाधिकारी, तस्य देहव्यतिरिक्तं नित्यमात्मानं जानानस्य पुरुषस्य सा स्वर्गादिकामनारूपा तद्भोक्तृत्वाभिमानरूपा च ग्रन्थिः कठिना दृढैव भवेत्, समुच्छेदस्तु तस्या ग्रन्थेः सुदूरः । अत एतन्मते यथा शब्दानुक्तो देहव्यतिरिक्तो नित्य आत्मा अर्थसिद्धो वेदार्थस्तथा कामादिरूपाया ग्रन्थेः शब्दानुक्तमपि प्राबल्यम् अर्थसिद्धो वेदार्थो भविष्यति । एतदभिप्रेत्य मूले उक्तम्– "अर्थाच्च कामादिग्रन्थेः काठिन्यं वैदिकं स्यात्" इति ।

कामनिबर्हणद्वारा कर्मविधय आत्मज्ञानेऽनुप्रविशन्तीति द्वितीयकल्पं दूषयति– **द्वितीयोऽपीति**। न हि कांमाः कामोपशमहेतव इति पूर्वं वर्णितम् "न जातु कामः कामानामुपभोगेन शाम्यति" इत्यादिना। अर्थात् कामानां कामनिबर्हणे सामर्थ्यं नास्ति, प्रत्युत वर्धयन्त्येव उत्तरोत्तरम् । एवं स्ववाक्यश्रुतस्वर्गफलप्रदानेन शान्ताकाङ्क्षाणां कर्मविधीनां पुनरात्मज्ञानकार्ये मोक्षेऽनुप्रवेशो न भविष्यति, प्रमाणाभावात्। तस्मादयं द्वितीयोऽपि पक्षो न सामञ्जस्यमञ्चति ।

एवं कर्मविधयो यदि आत्मज्ञानविधिशेषाः स्युस्तदाऽङ्गानां कर्मणामङ्गिनो ज्ञानस्य च एकाधिकारत्वं स्यात्। अर्थाद् य एव मुमुक्षुरात्मज्ञानेऽधिकृतः स एव ज्योतिष्टोमादिकर्मस्वपि अधिकृतः स्यात्। एवं सति ज्ञानाधिकृतेन एकेनैव मुमुक्षुणा सर्वाणि विहितकर्माणि कर्तव्यानि स्युस्तच्चाशक्यम्। एवं विविधानां सर्वकर्मणां ज्ञानेन सह समुच्चयोऽप्यशक्य एव। एकाधिकारत्वपदमत्र व्यधिकरणबहुव्रीहिणा व्युत्पादनीयम्– एकस्य मुमुक्षोः अधिकारो येषु कर्मसु तानि एकाधिकाराणि, तेषां

**येऽपि विपर्ययेण ज्ञानकर्मणोरेकाधिकारत्वमाहुः, तैरपि ज्ञानस्य कर्मसम्बन्धे प्रमाणं वक्तव्यम्। न तावत् "व्रीहीन् प्रोक्षति" इति यथा।**

---

भाव एकाधिकारत्वम्। तस्मिन् एकाधिकारत्वे स्वीक्रियमाणे तु सर्वकर्मणां समुच्चयो ज्ञानेन सह प्रसज्यते, स चासम्भव इत्याशयः।

आत्मज्ञानं कर्तृसंस्कारतया कर्माङ्गमिति पञ्चमं कल्पं दूषयितुमुपन्यस्यति – **येऽपीति**। अत्र बहुविचारगर्भिततया उद्देशक्रममुपेक्ष्यैव पञ्चमः पक्ष उपन्यस्यते दूषणाय ग्रन्थकारेण। पूर्वोपन्यस्तकल्पादयं कल्पो विपरीतः, पूर्वकल्पे कर्म ज्ञानाङ्गमिति पक्षो निराकृतः, अस्मिन् कल्पे च ज्ञानमेव कर्माङ्गमिति विपर्ययेण पक्षमालम्ब्य निराक्रियते। एतदाशयेन "विपर्ययेण ज्ञानकर्मणोरेकाधिकारत्वम्" इत्युक्तम्। एक एव पुरुषो ज्ञाने कर्मणि च पूर्ववदेवाधिकृत इत्यभिप्रायेण ज्ञान-कर्मणोरेकाधिकारत्वमित्युक्तम्। इयांस्तु विशेषः – पूर्वकल्पे कर्मणाम् आत्म-ज्ञानैकाधिकारत्वम्, अत्र तु विपर्ययेण ज्ञानस्यैव कर्मैकाधिकारत्वमिति।एकाधिकारत्वं नाम अभिन्नाधिकारिविषयत्वम्, य एव यागादिकर्मसु अधिकृतः स एव तदङ्गभूते आत्मज्ञानेऽप्यधिकृत इति यावत्।

पक्षमिमं निराकरोति – **तैरपीत्यादिना**। तैरपि ज्ञानस्य कर्मभिः सह सम्बन्धे श्रुत्यादिरूपं विनियोजकं प्रमाणं वक्तव्यम्, तदभावे सम्बन्धानिर्णयात्। ननु यथा "व्रीहीन् प्रोक्षति" इति श्रुत्यनुसारेण प्रोक्षणेन संस्कृता व्रीहयो यागेन सम्बध्यन्ते, तथैव "आत्मा वाऽरे द्रष्टव्यः" इति श्रुत्यनुसारेण आत्मज्ञानसंस्कृतः कर्ता ज्योतिष्टोमादिकर्मणा सम्बध्यत इति चेत्, न, वैषम्यात्।

अयमाशयः – "व्रीहीन् प्रोक्षति" इति वाक्याद् व्रीहिकर्मकं प्रोक्षणं विधीयमानं प्रतीयते। तत्र विचारः – किमत्र सामान्यव्रीहीणां प्रोक्षणं विधीयते, व्रीहिविशेषाणां वा। नाद्यः, यागासाधनीभूतानां येषां केषाञ्चन व्रीहीणां प्रोक्षणस्य प्रकृतयागे प्रयोजनाभावात्। अतो "व्रीहिभिर्यजेत" इति श्रुत्या ये व्रीहयो यागे उपयोक्ष्यमाणा यागापूर्वसाधनीभूतास्तेषामेव व्रीहिविशेषाणां प्रोक्षणं विधीयते "व्रीहीन् प्रोक्षति" इति वाक्येन। ननु कथं तेषामेव व्रीहिविशेषाणां प्रोक्षणं

**तत्र हि प्रकरणात् प्रकृतकर्मापूर्वलक्षणपरो व्रीहिशब्दः स्वस्वरूप आनर्थक्यात् प्रकृतापूर्वसम्बन्धं बोधयति।**

**नापि यथा ''यस्य पर्णमयी जुहूर्भवति'' (तैत्ति. सं. ३/५/७/२) इति। तत्र हि जुह्वादि अव्यभिचरितकर्मसम्बन्धमसत्यपि प्रकरणे**

---

विहितमिति चेत्, प्रकरणबलादिति बोध्यम्। व्रीहियागप्रकरणे हि ''व्रीहीन् प्रोक्षति'' इति पठितम्। अतः प्रकरणबाधो मा भूद् इति कृत्वा प्रकृतकर्म(याग)जन्यं यदपूर्वम्, तत्साधनीभूता ये व्रीहयः, तेषामेवात्र प्रोक्षणं विहितम्, न त्वन्येषाम्।

एवञ्च, ''व्रीहीन् प्रोक्षति'' इति वाक्ये व्रीहिशब्दस्य प्रकृतकर्मापूर्वसाधने लक्षणया 'व्रीहि'शब्द एवायं प्रोक्षणरूपसंस्कारस्य प्रकृतकर्मजन्येन अपूर्वेण सम्बन्धं बोधयति – व्रीहिसंस्कारेणैव कर्मजन्यापूर्वमुत्पत्स्यत इति। एवं रीत्यैव व्रीहिसंस्कारः कर्माङ्गं भवतीति।एतदभिप्रायेणोक्तं मूले – ''तत्र हि प्रकरणात् प्रकृतकर्मापूर्वलक्षण-परो व्रीहिशब्दः, स्वस्वस्वरूपे (सामान्यव्रीहिबोधे) आनर्थक्यात् प्रकृतकर्मापूर्वसम्बन्धं (प्रोक्षणस्य) बोधयति'' इति।

नैतद्दृष्टान्तेन आत्मज्ञानं संस्कारतया कर्माङ्गं भवितुं शक्नुयात्, प्रोक्षणविधेरिव यागप्रकरणे आत्मज्ञानविधेः कर्मविधिप्रकरणेऽपठितत्वादिति नायं कल्पो युज्यत इति बोध्यम्।

ननु मा भूत्, ''व्रीहीन् प्रोक्षति'' इति दृष्टान्त आत्मज्ञानस्य कर्माङ्गत्वे, प्रकरणाप्रकरणकृतवैषम्यात्, तथापि यथा असत्यपि प्रकरणे ''यस्य पर्णमयी जुहूर्भवति'' इति वाक्यविहितं पर्णमयीत्वं कर्मणा सम्बध्यते, तथैव प्रकरणाभावेऽपि आत्मज्ञानं कर्मणा कथं न सम्बध्यत इति शङ्कायामाह – **नापीति**। पर्णमयीत्व-दृष्टान्तोऽपि आत्मज्ञानस्य कर्माङ्गत्वे प्रमाणं भवितुं नार्हतीत्यर्थः।एतदेवोपपादयति – **तत्र हीत्यादिना**। अयं भावः – तत्र जुह्वादिद्रव्यं कर्मण्येव समवेतं नान्यत्र कुत्रापि। अतो जुह्वादि अव्यभिचरितकर्मसम्बन्धमस्ति, न व्यभिचरितः कर्मसम्बन्धो यस्य तादृशमस्तीत्यर्थः। अतोऽसत्यपि प्रकरणे जुह्वादिपदं कर्म उपस्थापयति एक-सम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयतीति नियमानुसारेण। अतस्तत्र जुहूपदघटितं

**कर्मोपस्थापयति। तत्र वाक्येनैव सम्बन्धः। आत्मज्ञानं तु न प्रकरणे श्रुतम्, नाप्यात्मा अव्यभिचरितकर्मसम्बन्धः, तेनास्य कर्मसम्बन्धो दुर्वचः।**

**तथा चाज्ञाते पारार्थ्ये या नाम फलश्रुतिर्न सा अर्थवादिनी भवतीति पृथगधिकारत्वम्।**

---

"यस्य पर्णमयी जुहूर्भवति" इति वाक्यमेव कर्मणा सह नियमतः सम्बद्धाया जुह्वाया अनुवादेन विहितं पर्णमयीत्वं क्रतुना सम्बध्नाति। इत्थञ्च तत्र पर्णमयीत्वस्य कर्मसम्बन्धे वाक्यमेव प्रमाणं भवति। आत्मज्ञानविधौ तु नास्ति तथाविधं वाक्यमिति, अयमपि विषमो दृष्टान्तः।

तथा चोक्तदृष्टान्तद्वये प्रकरणरूपस्य वाक्यरूपस्य च प्रमाणस्य सद्भावात् प्रोक्षणपर्णमयीत्वयोः कर्मसम्बन्धः समुचितः, अत्र तु आत्मज्ञानं न कर्मप्रकरणे श्रुतम्, कर्मकाण्डाद् बहिरेव ज्ञानकाण्डस्य सद्भावात्। नाप्यात्मज्ञानं यागादि-कर्मणा सह अव्यभिचरितसम्बन्धमर्थाद् यागादिकर्मणैव सह नियमतः सम्बद्धम्, लौकिकेऽपि कर्मणि कर्तृत्वेन आत्मनो ज्ञानस्यापेक्षितत्वाद् इति भावः। तस्मात् प्रमाणाभावाद् आत्मज्ञानस्य कर्तृसंस्कारविधया कर्मसम्बन्धो न वक्तुं शक्यत इति निष्कर्षः।

आत्मज्ञानस्य कर्मसम्बन्धाभावादेव तस्य फलश्रुतिर्नार्थवाद इति निर्धारयन्नाह – **तथा चेति**। अयं भावः – आत्मज्ञानं यदि कर्मविध्यनुप्रविष्टं सत् कर्मसम्बद्धं स्यात्, तदा तस्य परार्थत्वात्, "न स पुनरावर्तते" इति तदीया या फलश्रुतिः, सा अर्थवाद-मात्रं स्यात्। तथा च न्यायः – "द्रव्यसंस्कारकर्मसु फलश्रुतिरर्थवादः स्यात्" इति।

"विज्ञाते चास्य पारार्थ्ये याऽपि नाम फलश्रुतिः। साऽर्थवादो भवेदेव न स्वर्गादेः फलान्तरम्"॥ इति च वचनान्तरम्। किन्तूपपादितमुपपत्तिभिर्यन्नात्म-ज्ञानं कर्मविध्यनुप्रविष्टमत एव न परार्थम्, अत एव च न तदीया फलश्रुति-रर्थवादः। तथा च पृथक्फलत्वात् पृथगधिकारत्वमात्मज्ञानस्य। अतो "ज्ञान-कर्मणोर्विपर्ययेणैकाधिकारत्वम्" इति यदुक्तः पञ्चमः कल्पः, स निरस्तो भवतीति।

**अथ मतम् – वर्तमानापदेशात् ''न च पुनरावर्तते'' (छा.८/१५/१) इति कामसम्बन्धाभावात् फलं विपरिणमय्य कल्पयितव्यम्। तच्च तदाकाङ्क्षायां सत्याम्, न तु दृष्टे सति तदाकाङ्क्षा। अस्ति चात्मज्ञानविधेर्दृष्टफलं देहान्तरोपभोग्यफलेषु कर्मसु प्रवृत्तिः।**

**तस्मात् स्वाध्यायाध्ययनविधिवदात्मज्ञानविधिः। स्वाध्यायाध्ययनविधिर्हि दृष्टकर्मावबोधनिराकाङ्क्षो नार्थवादतः फलं प्रार्थयते, तथाऽऽत्मज्ञानविधिरपीति नाधिकारान्तरम्।**

---

शङ्कते – ननु ''न च पुनरावर्तते'' इति आत्मज्ञानस्य फलश्रुतिर्नास्ति, वर्तमानकालिकक्रियाप्रयोगात् स्वर्गकामादिवत् कामसम्बन्धाभावाच्च। यदि सा फलश्रुतिः स्यात् तदा ''न च पुनरावर्तेत'' इति कालविपरिणामेन अपुनरावृत्तेः फलत्वं कल्पयितव्यम्। अपुनरावृत्तिरूपं तत्फलमपि आकाङ्क्षायां सत्यामेव कल्पयितव्यम्, नान्यथा। अनावृत्तिरूपे अदृष्टे फले च तदैवाकाङ्क्षा स्यात्, यदि आत्मज्ञानस्य किमपि दृष्टं फलं न सम्भवेत्। सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वात्। अस्ति हि आत्मविधेर्दृष्टमेव फलम्, तच्च देहान्तरोपभोग्यस्वर्गादि-जनकेषु अग्निहोत्रादिकर्मसु वर्तमानकालिकी प्रवृत्तिरेव दृष्टफलमिति मन्तव्यम्।

तस्माद् यथा ''स्वाध्यायोऽध्येतव्यः'' इत्यध्ययनविधिः कर्मावबोधरूपं दृष्टफलं प्राप्य तेनैव निराकाङ्क्षो भवति, किमप्यार्थवादिकं फलान्तरं नाकाङ्क्षति, तथैवात्मज्ञानविधिरपि यागादिकर्तृत्वेन स्वर्गादिफलभोक्तृत्वेन च पुरुषस्यात्मज्ञानं सम्पादयन् देहान्तरोपभोग्यस्वर्गादिफलजनकेषु यागादिकर्मसु पुरुषप्रवृत्तिरूप-दृष्टफलज्ञापनेन निराकाङ्क्षो भवति, न तु आर्थवादिकमपुनरावृत्तिरूपमदृष्टं फलान्तरमाकाङ्क्षति।

अत आत्मज्ञानविधिरपि अन्ततः स्वर्गादिफल एव पर्यवस्यति। तस्मात् कर्मविधिफलातिरिक्तफलाभावान्न कर्माधिकाराद् आत्मज्ञानविधावन्योऽधिकार इति सिद्धं ज्ञानकर्मणोरेकाधिकारत्वमिति शङ्कितुरभिप्रायः।

**तदप्यसत् – यतोऽयमन्य एवौपनिषदः पुरुषो वेदान्तेषु जिज्ञास्यते। न च तज्ज्ञानं कर्मप्रवृत्तिहेतुः। न हि तस्य कर्तृत्वभोक्तृत्वे। एवं ह्याह – "न तदश्नाति किञ्चन" (बृ.उ. ३/८/८), "अनश्नन्नन्योऽभिचाकशीति" (मुण्डक. ३/१/१) इति। यस्तु कर्मणां कर्ता भोक्ता च, स एव सर्वप्रत्यक्षसिद्धः, न शब्दप्रमेयः।**

**ननु जीवपरमात्मनोरेकत्वमेव। एवं ह्याह – "अनेन जीवेनात्मना" (छा. ६/३/२) इति। सत्यम्, तस्यैव तु जीवस्यैवमविद्यानुबन्धं प्रत्यक्षावसेयं रूपम्, तच्च कर्मप्रवृत्तिहेतुः। न च तत् शब्दमपेक्षते। यत्तु स्वयंप्रकाशं**

---

अनुपदमुक्तामाशङ्कां प्रतिक्षिपति – **तदप्यसदिति**। विशदयति – **यत इति**। औपनिषद आत्मज्ञानविषयो यः पुरुषः, स अन्य एव भिन्न एव कर्मविध्यपेक्षितात् कर्तृभोक्तृभूतात् पुरुषाद् वेदान्तेषु=उपनिषत्सु मुमुक्षुभिर्जिज्ञास्यते। तस्योपनिषत्प्रतिपाद्यस्यात्मनो ज्ञानं कर्मसु पुरुषप्रवृत्तेर्हेतुर्नास्ति। यतः कर्ता भोक्ता एव पुरुषः स्वर्गादिकामनया यागादिकर्मसु प्रवर्तते। औपनिषदे आत्मनि तु कर्तृत्वभोक्तृत्वे नैव स्तो येन स कर्मसु प्रवर्तेत। अत्र श्रुती प्रमाणयति – "न तदश्नाति किञ्चन, अनश्नन्नन्योऽभिचाकशीति" इति। "नाश्नाति"=न भुङ्क्ते, "अनश्नन्"=अभुञ्जान इत्यर्थः, तथा च भोक्तृत्वनिषेधः। "निष्कलं निष्क्रियं शान्तम्", "नायं हन्ति न हन्यते" इति च कर्तृत्वनिषेधो बोध्यः।

तस्माद् वेदान्तवेद्य आत्मा न कर्ता न भोक्ता, यस्तु कर्ता भोक्ता जीवात्मा, सः "अहम् अहम्" इति रीत्या सर्वजनप्रत्ययसिद्ध एव। स न शब्दप्रमाणाद् वेदान्ताद् वेद्यः स्वतोऽपरोक्षतयाऽधिगतत्वात्। अनधिगतस्यैव आत्मनो वेदान्तशब्दवेद्यत्वादिति भावः।

पुनः शङ्कते – **नन्विति**। "अनेन जीवेनात्मना अनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतौ "जीवेनात्मना" इति सामानाधिकरण्याद् "व्याकरवाणि" इत्युत्तमपुरुषप्रयोगाच्च यो नामरूपयोर्व्याकर्ता परमात्मा, तस्य जीवोऽप्यात्मैव

**सर्वविभागशून्यं तत् शब्दाज् ज्ञातुमिष्यते; तच्च कर्मप्रवृत्तिविरोधि। तज्ज्ञानस्य कथं कर्मप्रवृत्तिर्दृष्टं प्रयोजनं स्यात्? तथा हि ब्रह्मानन्दमेकमद्वयमात्मानं विजानतः किमर्थं कथं वा प्रवृत्तिः स्यात्, आप्तकामत्वात् साधनाद्युपायाभावाच्च?**

**स्यादेतत् – औपनिषदपुरुषज्ञानमेव कर्माङ्गत्वेन चोदितम् "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" (छा.१/१/१०)**

---

स्वरूपमेवेत्यर्थः। एतावता जीवपरमात्मनोरेकत्वमेव सिध्यति। सिद्धान्ती अभ्युपगम्य व्यवस्थापयति – **सत्यमिति**। अयं भावः – यद्यपि तात्त्विकदृष्ट्या जीवपरमात्मनोर्नास्ति भेदः "तत्त्वमसि" इति श्रुतेः "जीवो ब्रह्मैव नापरः" इत्यभियुक्तोक्तेश्च। तथापि परमात्मैवाविद्यासम्बन्धहेतुना जीवरूपतामापन्नः प्रत्यक्षगम्यस्वरूपो भवति। एवं तस्य परमात्मनो जीवात्मकं यद्रूपं तदेव यागादिकर्मसु प्रवृत्तिहेतुः। न हि तज्जीवात्मकं स्वरूपं स्वज्ञानाय श्रुत्यात्मकशब्दप्रमाणमपेक्षते, तस्य "अहम्" इति रूपेण आपामरजनेभ्यः प्रत्यक्षसिद्धेः।

यत्त्वविद्याननुबद्धं परमात्मनो रूपं तत् स्वयंप्रकाशं सर्वकर्तृत्वादिविभागशून्यं प्रत्यक्षागम्यत्वात् शब्दादेव ज्ञातुमिष्यते पार्यते च। एवञ्च तादृशं कर्तृत्वादिविभागशून्यं ब्रह्म कर्मसु प्रवृत्तेर्विरोध्येवेति कथं तादृशात्मनो ज्ञानस्य दृष्टं प्रयोजनं कर्मप्रवृत्तिः स्यात्। न हि यद् यद्विरुणद्धि, तस्य तदेव प्रयोजनं भवति। यतो हि यो हि पुरुषधौरेयो ब्रह्म आनन्दस्वरूपमेकमद्वितीयमात्मानं जानाति, तस्य किमर्थं कथं च कर्मसु प्रवृत्तिः स्यात्? अत्र "किमर्थम्" इत्यनेन प्रयोजननिषेधः, कथमित्यनेन च सामर्थ्यनिषेधः सूच्यते। निष्प्रयोजनत्वं चाप्तकामत्वात्, सामर्थ्याभावश्च साधनाद्युपायाभावादिति। आप्तकामत्वमपि तस्य आनन्दस्वरूपत्वाद् बोध्यम्। साधनाद्युपायाभावश्चापि अद्वयत्वाद् बोध्य इति विवेकः। अतो न तस्य ज्ञानं कर्माङ्गमिति स्थितम्।

युक्त्यन्तरेण औपनिषदात्मज्ञानस्य कर्माङ्गत्वमाशङ्कते – **स्यादेतदिति**। अयमर्थः – "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति"

**इति। यथा "यो वा तदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति" (बृ.३/८/१०) इत्युपक्रम्य यागादिफलस्यान्तवत्तादर्शनेन ब्रह्मविद्याया-स्तादर्थ्यं दर्शितम्। "तं विद्याकर्मणी समन्वारभेते" (बृ.४/४/२) इति च विद्याकर्मणोः साहित्यं दर्शितम्। पूर्वं तावत् प्रकृतोद्गीथविषयम्,**

---

(छा. १/१/१०) इति श्रुतिः औपनिषदात्मज्ञानस्य कर्माङ्गत्वं प्रतिपादयति। यद्यपि औपनिषदात्मज्ञानं कर्तृसमर्पणादिना दृष्टद्वारेण कर्माङ्गं नास्ति तथापि सप्रयोजना-दृष्टद्वारेण कर्माङ्गं भवितुमर्हतीति। एवं "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिंल्लोके जुहोति ददाति तपस्तप्यति बहूनि वर्षसहस्राणि, अन्तवानेवास्य स लोको भवति" इति श्रुत्या ब्रह्मविद्यारहिततया यागादिकर्मफलानामन्तवत्त्वं प्रदर्शितम्, तेन च विद्यारहितस्य = केवलकर्मणो निन्दया विद्यासहितस्य कर्मणः प्रशंसा कृता। "न हि निन्दा निन्द्यं निन्दितुं प्रवर्तते, अपि तु निन्दितादितरत् प्रशंसितुम्" इति न्यायात्। प्रशंसापि निष्प्रयोजना न भवति, किन्तु विधानाय सा भवतीति प्रशंसिताया आत्मविद्याया यागाङ्गत्वं विहितं भवति। मूले विद्यायास्तादर्थ्यं च तस्याः कर्माङ्गत्वरूपं बोध्यम्।

एवं "तं विद्याकर्मणी समन्वारभेते" (४।४।२) इति च श्रुतिर्ब्रह्मविद्याकर्मणोः कार्यारम्भे सहभावं दर्शयति। तस्मिंश्च ब्रह्मविद्याकर्मणोः सहभावे यागादिकर्मैव प्रधानम्, यागादेः फलश्रुतेः। ब्रह्मविद्या त्वङ्गम्, तत्र फलाश्रवणात्, "फलवत्सन्निधौ अफलं तदङ्गम्" इति न्यायात्। तस्माद् ज्ञानकर्मणोरङ्गाङ्गिभावाद् एकाधिकारत्वमिति पूर्वपक्षाशयः।

अत्र सिद्धान्ती समाधानमाह – **पूर्वं तावदित्यादिना**। अयमाशयः – पूर्वं यद् वचनम् "यदेव विद्यया करोति" इत्यादि, तत् प्रकृता प्रक्रान्ता या उद्गीथविद्या, तद्विषयकम्, न तु ब्रह्मविद्याविषयकम्। तस्मात् तद्वचनानुसारेण उद्गीथविद्याकर्माङ्गं भवतु नाम ब्रह्मविद्यायास्तु कर्माङ्गत्वं कुत आयाति। उद्गीथो सामभक्तिः सामविशेषः, तस्मिन् या अक्षरोपासना सा उद्गीथविद्यापदेनोच्यते। "यदेव विद्यया" इति श्रुतौ पठितः सामान्यवचनोऽपि

**"ओमित्येतदक्षरमुद्गीथम्" (छा.१/१/१) इत्युपक्रमात्। परेणापि कर्मनिन्दयाऽक्षरज्ञानस्तुतिः। विद्याकर्मणोश्च समन्वारम्भो भेदेन—विद्यावन्तं विद्यान्वारभते कर्मवन्तं कर्मेति। तस्मादेवमपि न कर्मज्ञानयोरेकाधिकारत्वमिति।**

---

विद्याशब्द उपक्रमवशाद् विशेषे उद्गीथविद्यायां वर्तत इति भावः। उपक्रमश्च "ओमित्येतदक्षरमुद्गीथम्" इति वचनात् कृतो विद्यते।

यच्च "यो वा एतदक्षरं गार्गि" इति परं वचनम्, तेनापि ब्रह्मज्ञानस्य कर्माङ्गत्वं न ज्ञाप्यते, किन्तु "अन्तवानेवास्य स लोको भवति" इति कर्मफलस्य क्षयित्वं प्रतिपाद्य कर्मनिन्दा कृता, कर्मनिन्दया च अक्षरविद्यायाः स्तुतिः क्रियत इति ब्रह्मविद्यायाः कर्माङ्गत्वे न तद्वचनस्य तात्पर्यम्।

ननु उक्तवचनेन केवलकर्मणो निन्दा कृता, अतो विद्यासहितकर्मणो विधाने तस्य तात्पर्यं सम्भवतीति चेत्, न, साहित्यविवक्षायां परस्ताद् विद्यासहितस्य कर्मणः स्तुतिः कृता स्यात्, न तु तथा कृतम्। प्रत्युत "यदेतदक्षरं गार्गि विदित्वा अस्माल्लोकात् प्रैति स ब्रह्मणः" इत्यादिना केवलाक्षरज्ञानमेव स्तूयते। तस्मादक्षरज्ञानस्तुतावस्य वचनस्य तात्पर्यं न विद्याकर्मणोः साहित्यविधानेऽपीति।

एवं, "तं विद्याकर्मणी समन्वारभेते" इति वचनेऽपि भेदेन विवेकेन समन्वारम्भो ज्ञापितो न साहित्येन। अर्थाद् विद्यावन्तं प्रति विद्याऽन्वारभते कर्मवन्तं च प्रति कर्मान्वारभत इति विवेकः कृतः। ननु "समन्वारभेते" इत्यत्र सहार्थे 'सं'-शब्दस्य प्रयोगात् साहित्य एव तात्पर्यं नोक्तविवेक इति चेत्, न, विद्याकर्मणोरेकत्वस्य साहित्यस्य वा सर्वथाऽसम्भवात्। साहित्यासम्भवश्च पृथक् फलश्रुतेः परस्परं निरपेक्षत्वात्। एकफलत्वे हि कार्यारम्भे साहित्यं दृष्टं यथा दर्शपूर्णमासयोः। विद्या तु कर्मविरोधिनी सती कथं कर्मणा सह समुच्चीयेत। नापि सा जन्मान्तरारम्भिका, अपवर्गफलत्वात्। तस्माद् विवेकेनैव विद्याकर्मणोरन्वारम्भ इति। अतः सिद्धम्—न दृष्टद्वारा नाप्युक्तप्रकारेण अदृष्टद्वाराऽपि आत्मज्ञानस्य कर्मणा सहैकाधिकारत्वमिति।

**येऽपि विरोधादसम्बन्ध एव कर्मज्ञानयोः, द्वैतविषयं कर्म, अद्वैतविषयं ज्ञानम् इति मन्यन्ते। तेषामनुत्पाद एवाद्वैतज्ञानस्य प्रसज्यते, प्रमाणादिविभागाद्वैतप्रतिपत्त्योर्विरोधात्।**

**अथोपायोपेययोरयौगपद्यादविरोधः, प्रलीयत एव अद्वैतप्रतिपत्तौ सर्वो विभागः। न च विरोधोऽनुपायत्वं वा, उपायस्य पूर्वकालत्वात्, तदा**

---

ज्ञानकर्मणोः सम्बन्धविषये सप्तमकल्पमुद्धृत्य निरसितुमाह – **येऽपीति**। अयमत्र पूर्वपक्षाशयः– साध्यसाधनेतिकर्तव्यतादिद्वैतविषयकं कर्म भवति, अद्वितीयात्मविषयकं तु आत्मज्ञानं भवति। अतो द्वैताद्वैतरूपविरुद्धविषयकत्वात् कर्मज्ञानयोर्विरोधः, विरोधाच्चानयोः सर्वथा सम्बन्धाभावः। नात्मज्ञानं कर्मणोऽङ्गम्, नापि कर्म आत्मज्ञानस्याङ्गम्, उभयमपि स्वतन्त्रमिति यावत्। सिद्धान्ती निरस्यति – **तेषामिति**। एवं मन्यमानानां पक्षे द्वैतसाम्राज्ये संसारे अद्वैतनिरपेक्षाणि कर्माणि कथञ्चिदुपपद्येरन्नाम, अद्वैतज्ञानं तु सर्वथैव नोत्पत्स्यते, प्रमाणादिविभागरूपद्वैतस्य अद्वैतप्रतिपत्तेश्च परस्परं विरोधेन ज्ञानसाधनोपयोगाभावेनाद्वैतज्ञानोत्पत्त्यसम्भवात्। सोऽयं पक्षः स्वहस्तमुच्छिद्य वृक्षात् फलग्रहणलीलामनुहरति।

ननु प्रमाणादिविभाग उपायोऽद्वैतज्ञानस्य, अद्वैतज्ञानञ्चोपेयं प्रमाणादिविभागस्य। उपायः पूर्वकालवर्ती, उपेयश्च परकालभावीति उभयोः पौर्वापर्याद् नास्ति विरोधः। समानकालत्वे हि विरोधो भवति। अतः कालभेदेन प्रमाणादिविभागाद्वैतप्रतिपत्त्योरविरोधान्नाद्वैतज्ञानस्यानुत्पादप्रसङ्गः। न चैवमप्यनिर्मोक्षप्रसङ्गः, प्रमाणादिविभागाद्वैतज्ञानयोरविरोधे अद्वैतज्ञाने जातेऽपि प्रमाणादिविभागरूपद्वैतानुवृत्तेरपरिहार्यत्वाद् इति वाच्यम्, अद्वैतप्रतिपत्तौ सत्यां प्रलीयत एव सर्वोऽपि प्रमाणादिविभाग इति कुतोऽनुवृत्तिर्द्वैतस्य कुतश्चानिर्मोक्षप्रसङ्ग इति।

नन्वद्वैतज्ञाने जाते प्रमाणादिविभागस्य प्रविलीयमानत्वस्वीकारे विरोध एव तयोर्गले पतितः। तथा चाविरोधोपपादनमसङ्गतम्। एवं तयोर्विरोधस्यैव गले पातात्, कथमुपायः प्रमाणादिविभागो अद्वैतज्ञानस्य? विरोधिनोऽनुपायत्वादिति अवान्तर-

**च तस्याप्रलीनत्वात्। भेद एव चाभेदप्रतिपत्तावुपायः। न तर्हि कर्मभिरपि विरोधः, उपायत्वादेव।**

**स्यादेतत् - असाध्यत्वाद् ब्रह्मणो न कर्मणामुपयोगो विद्यते। श्रूयते च "नास्त्यकृतः कृतेन" (मुण्ड. १/२/१२) इति। न च ज्ञानोत्पत्तावुपयोगः, ज्ञानस्य प्रमाणाधीनत्वात्।**

---

शङ्कायामुत्तरमाह – **न च विरोधोऽनुपायत्वं वेत्यादिना**। कालभेदाद् नास्ति विरोधः, उपायभूतस्य प्रमाणादिविभागस्य पूर्वकालत्वात्, आत्मज्ञानस्य च परकालत्वात्। न च पूर्वकाले प्रमाणादिविभागः प्रलीनः, तथा च पूर्वकालेऽप्रलीनत्वात् प्रमाणादिविभाग आत्मज्ञानस्योपायोऽपि भवितुमर्हत्येव। सर्वत्र उपायस्य पूर्वकालसत्ताया एवापेक्षितत्वात्। भेद एव हि अभेदज्ञाने उपायः। तस्मान्नास्मिन् कल्पे आत्मज्ञानस्यानुत्पाददोषप्रसङ्ग इति चेत्?

अत्रोच्यते सिद्धान्तिना – "न तर्हि कर्मभिरपि विरोध उपायत्वादेव" इति। अयमाशयः – उपायोपेयभावात् कालभेदाच्च यदि प्रमाणादिविभागात्मज्ञानयोर्नास्ति विरोधस्तदा उपायोपेयभावादेव कालभेदादेव च कर्मज्ञानयोरपि नास्ति विरोध इति किमिति नेष्यते? ततश्च नात्मज्ञानस्य कर्मभिरसम्बन्धः, किन्तु सम्बन्ध एवेति स्थितम्।

उपायोपेयभावाद् ब्रह्मात्मज्ञानस्य कर्मभिः सम्बन्धोऽस्तीति पूर्वं स्थापितम्, तत्राक्षिपति – **स्यादेतदिति**। अयमाशयः – ब्रह्म यदि साध्यं वस्तु स्यात् तदा तत् प्रति कर्मणामुपायत्वेन उपयोगो भवेत्, तदेव तु नास्ति, नित्यसिद्धस्य ब्रह्मणोऽसाध्यत्वात्। तथा च श्रुतिः – "नास्त्यकृतः कृतेन" इति। अकृतः = अकार्यभूतो मोक्षो ब्रह्मस्वरूपं कृतेन = कर्मणा नास्ति = न सिध्यतीति श्रुत्यर्थः। न च नित्यसिद्धे ब्रह्मणि कर्मणामुपयोगाभावेऽपि तज्ज्ञानोत्पत्तौ कर्मणामुपयोगोऽस्तीति वाच्यम्, ज्ञानस्य प्रमाणाधीनत्वेन तत्र कर्मणामुपयोगाभावात्। तस्मात् कर्मब्रह्मात्मज्ञानयोरपि नास्त्युपायोपेयभाव इत्यर्थः।

**न च ज्ञानसहकारीणि कर्माणि, ज्ञानस्य साध्यान्तराभावात्। न तस्य मोक्षः साध्यः, अनित्यत्वप्रसङ्गात्। अथ बन्धहेतुविच्छेदः साध्य इति तस्मिन् विच्छिन्ने तदभावान् मुच्यते। कः पुनर्बन्धहेतुः? अनाद्यविद्या। न तर्हि पृथक् तद्विच्छेदः साध्यः, यतो विद्योदय एवाविद्याव्यावृत्तिः।**

**स्यादेतत् - भवत्वग्रहणलक्षणाविद्याव्यावृत्तिर्विद्योत्पादः, यतो भाव एवाभावव्यावृत्तिः। न च विद्योत्पाद एव विपर्यासज्ञानव्यावृत्तिः।**

---

**ननु ज्ञानोत्पत्तौ** साक्षात् कर्मणामुपयोगाभावेऽपि ज्ञानस्य यत् कार्यं तदुत्पत्तौ सहकारित्वेन कर्मणामुपयोगो भविष्यतीति चेत्, न, ज्ञानस्य कार्यान्तराभावात्। न हि विषयपरिच्छेदादन्यज्ज्ञानस्य किमपि कार्यमस्ति यदुत्पत्तौ कर्माण्युपयुज्येरन्। ननु मोक्ष एव ज्ञानस्य कार्यमस्तीति चेत्, न, तथा सति ज्ञानकार्यत्वेन मोक्षेऽनित्यत्वं प्रसज्येत।

यद्युच्येत बन्धहेतोरुच्छेद एव ज्ञानस्य कार्यमिति बन्धहेतौ विच्छिन्ने जाते हेत्वभावात् पुरुषो मुक्तो जायत इति, तदपि न समीचीनकथनम्। बन्धहेतोरेव अनिर्णयात्। यद्युच्येत अनाद्यविद्यैव बन्धहेतुर्यदुच्छेदो ज्ञानकार्यमिति चेत्, तदपि कथनं नोपपन्नम्, अविद्याविच्छेदस्य विद्योदयात् पृथक् स्वरूपालाभात्। विद्योदय एव हि अविद्याविच्छेदो नातिरिक्तः, स च विद्योदयः प्रमाणाधीनो न कर्माधीन इति पूर्वमेवोक्तम्।

प्रकारान्तरेण विद्याकार्योत्पत्तौ कर्मणां सहकारित्वमाशङ्कते – **स्यादित्यादिना।** अयं भावः – अविद्या द्विविधा – अग्रहणलक्षणा विपर्यासज्ञानलक्षणा च। तत्र अग्रहणलक्षणाया अविद्याया निवृत्तिर्भवतु नाम विद्योदयरूपा, अभावव्यावृत्तेर्भावस्वरूपत्वात्। तस्याश्च प्रमाणाधीनत्वात् तत्र कर्मणां सहकारितयाऽपेक्षा च मा भवतु, तथापि विपर्ययज्ञानलक्षणा या अविद्या, तन्निवृत्तिस्तु न विद्योत्पादरूपा। यतो हि विपर्ययज्ञानं भावरूपम्, विद्योत्पादोऽपि च भावरूपः, अतो विपर्ययज्ञानस्य भावान्तरस्य

**न खलु भावान्तरं भावान्तरव्यावृत्तिः। न हि परस्पराभावात्मानो भावाः, अभावत्वप्रसङ्गात्।**

**यदि मन्येत – तत्त्वाग्रहणनिमित्तो विपर्यासो निमित्तनिवृत्तौ स्वयमेव निवर्तिष्यते, तच्च न, न खल्वग्रहणाभावः कस्यचिन्निमित्तम्, मूर्च्छादिषु प्रसङ्गात्। किं तर्हि निमित्तम् ? "अनादिरप्रयोजना चाविद्या" इत्युक्तम्। तत्र च हेत्वनुयोगो निरवकाशः। विपर्यासतत्संस्कारयोश्च परस्परहेतुफलभावेन व्यवस्थानान्न दोषः। अतो विपर्ययज्ञानस्य निवृत्तिर्विद्यया साध्येति तत्र ज्ञानस्य सहकार्यपेक्षा स्यात्।**

---

निवृत्तिर्विद्योत्पादरूपभावान्तरस्वरूपा न भवति। यतो न हि भावाः परस्पराभावस्वरूपा भवन्ति, तथा सति सर्वेषां भावानामभावत्वमेव प्रसज्येत। तस्माद् विपर्ययज्ञानरूपाया अविद्याया निवृत्तिर्विद्योदयात् पृथगेव विद्याकार्यम्, तस्मिन् विद्याकार्ये कर्मणां विद्यासहकारितयाऽनुप्रवेशो भवितुमर्हति।

पूर्वपक्षी एव मध्ये आशङ्कामुत्थाप्य निरस्यति – **"यदि मन्येत"** इत्यादिना **"तत्र ज्ञानस्य सहकार्यपेक्षा स्यात्"** इत्यन्तेन ग्रन्थेन। अत्रेदमाशङ्कास्वरूपम् – भवतु नाम विपर्यासो भावरूपः, तथापि तस्य निमित्तं तत्त्वाग्रहणम्, तत्त्वग्रहणे विपर्ययानुत्पत्तेः। तथा च तत्त्वाग्रहणरूपस्य निमित्तस्य निवृत्तौ सत्यां विपर्ययज्ञानं स्वत एव निवर्तिष्यते, न तु तन्निवृत्तिर्विद्याकार्यं येन तस्मिन् कार्ये कर्माणि सहकारीणि भवेयुरिति शङ्कामिमां समाधत्ते – **तच्च नेति**। अयमाशयः – तत्त्वाग्रहणं हि तत्त्वग्रहणस्य अभावः, न ह्यभावः कस्यचिन्निमित्तं (अर्थक्रियाकारि) भवति। अभावो यदि निमित्तं स्यात्, तदा मूर्च्छाद्यवस्थासु तत्त्वग्रहणस्याभावोऽस्तीति तदवस्थायामपि विपर्ययज्ञानं जायेत, परन्तु नैव जायते। अतो न तत्त्वाग्रहणं विपर्यासनिमित्तं येन तन्निवृत्तौ सत्यां विपर्ययः स्वयमेव निवर्तिष्यत इति शक्यते वक्तुम्।

**एतच्च वार्तम्। न खलु शुक्तिकादिषु विपर्यासपुरःसरं समुपजात-सम्यग्ज्ञानास्तन्निवृत्तये पृथक् प्रयतन्ते, सहकारि वाऽन्यदपेक्षन्ते। यतो विरोधिभावान्तरोत्पाद एव पूर्वप्रध्वंसः, न शून्यम् । अन्यथा न प्रध्वंसो**

---

तर्हि विपर्यासस्यं किं निमित्तमिति चेत् "अनादिरप्रयोजना चाविद्या निमित्तमि"ति पूर्वमुक्तम् "अमृतमजम्" इत्यंशस्य व्याख्यावसरे। ननु अविद्यायाः को हेतुरिति चेत्, न, अविद्याया अनादित्वादेव तत्र हेतुप्रश्नस्यावसराभावात्। यदि त्वनाद्यविद्यां विपर्ययनिमित्तं न स्वीकरोषि चेत्, तदा विपर्यासतत्संस्कारयोः परस्परं कार्यकारणभावेन व्यवस्था क्रियताम्। अर्थात् प्रपञ्चग्राहिविपर्ययस्य पूर्वतनः प्रपञ्चविषयकः संस्कारो निमित्तं तत्संस्कारस्य च तत्पूर्वतनं प्रपञ्चविषयकं विपर्ययज्ञानमेव निमित्तमिति। एवमुभयोरनादित्वेन बीजाङ्कुरादिवत् कार्यकारण-भावेन व्यवस्थासत्त्वान्न निर्निमित्तत्वदोषः।

अतो विपर्ययज्ञानस्य न पूर्वरीत्या स्वयं निवृत्तिः, किन्तु विद्ययैव सा निवृत्तिः साध्येति तत्र ज्ञानस्य = विद्यायाः सहकारितया कर्मणामपेक्षा स्यादेवेति पूर्वपक्षाभिप्रायः।

उक्ताशङ्कां सिद्धान्ती समाधत्ते – **एतच्च वार्तमिति** । वार्तम् = वार्तामात्रमसारमित्यर्थः। असारत्वमुपपादयति – **न खल्विति**। शुक्तिकादिषु पूर्वं रजतमिदमिति विपर्ययज्ञानं जायते, तदनन्तरं समुत्पन्नं सम्यग् ज्ञानं "शुक्तिरियम्" इति येषां पुरुषाणां ते समुत्पन्नसम्यग्ज्ञानाः पुरुषाः, ते तद्भ्रान्तिनिवृत्तये पृथक् प्रयत्नं न कुर्वन्ति, न वाऽन्यत् किमपि तदर्थं सहकारिकारणमपेक्षन्ते। किन्तु स्वत एव रजतविषया भ्रान्तिर्निवृत्ता भवति। यतो हि विरोधिभावान्तरस्योत्पत्तिरेव पूर्वस्य प्रध्वंसः। अर्थाद् अविद्याविरोधिन्या भावभूताया विद्याया उत्पाद एव पूर्वस्य विपर्ययज्ञानस्य प्रध्वंसः, न तत्त्वान्तरं न वा किञ्चित् शून्यं = शून्यात्मक इत्यर्थः। अन्यथा = प्रध्वंसस्य "शून्यात्मकत्वे शशविषाणवद् अकार्यत्वान्न तदर्थं हेतुरपेक्षितः स्यात्। एवं हि घटादिप्रध्वंसाय मुद्गरादिरपि नापेक्षितो भवेत्। प्रकृते विपर्ययज्ञानस्य विरोधिनी विद्या, अतो विरोधिन्यास्तस्या विद्याया उत्पत्तौ सत्यां

**हेतुमान् स्यात्, विरोधिनी च विद्या विपर्ययज्ञानस्य तदुत्पत्तौ विपर्यासो नष्ट एव भवति।**

**अथोच्येत — कर्माणि बन्धहेतवः, तत्क्षयो ज्ञानात् सहकारिसव्यपेक्षा-दिति, तच्च न, यावदविद्यं कर्मफलविभागव्यवहारमात्रम्, तस्य प्रमृष्टाशेष-विशेषविशुद्धज्ञानोदये कुतः सम्भवः? तथा च विपर्याससंशयाभ्यां तुल्यवत् प्रसंख्यातानि कर्माणि —**

---

विपर्ययज्ञानं नष्टमेव भवति, न क्षणमप्यवतिष्ठते, सूर्योदये तम इवेति भावः। तस्माद् विपर्ययज्ञाननिवृत्त्यर्थमात्मज्ञानं न सहकारिविधया कर्माण्यपेक्षत इति स्थितमेव।

ननु भवेदेवं यदि अविद्या बन्धहेतुः स्यात्, न त्वेवमस्ति। किन्तु कर्माण्येव बन्धहेतवः, तेषां नाशः सहकारिसापेक्षाद् ज्ञानाद् भविष्यति, यथा दुःखहेतूनां व्याधीनां नाश औषधसेवनाद् भवति, तद्वत्। न ह्यविद्याया इव कर्मणां विरोधिनी विद्या, येन विद्योदये तानि कर्माणि अविद्यावदेव स्वयं प्रविलीयेरन्। किन्तु कर्मध्वंसो विद्यायाः पृथगेव कार्यम्, यदर्थं विद्या स्वसहकारितया अग्निहोत्रादिकर्माण्यपेक्षत इति शङ्कायामुत्तरमाह — **तच्च नेति**।

अयमत्र समाधानाशयः — कर्माणि तत्फलं बन्धश्चेति विभागव्यवहारोऽ-विद्याकृत एव न तु वास्तविकः। अतो विद्यया अविद्यायां निवृत्तायां तद्विजृम्भितानां कर्मणां स्वयमेव निवृत्तिर्भविष्यति, निमित्तनिवृत्तौ नैमित्तिकनिवृत्तेरयत्नसिद्धत्वात्। अतः कर्मनिवृत्तिरपि न पृथक् कार्यं ज्ञानस्येति न तदर्थं ज्ञानस्य सहकारितया कर्मणामपेक्षा। एतदेवोक्तम्— **यावदविद्यं कर्मफलविभागव्यवहारमात्रमिति**। तस्य = कर्मफलविभागव्यवहारस्य, प्रमृष्टा निरस्ता अशेषा विशेषाः प्रपञ्चभेदा यस्मिन्, एवंविधस्य विशुद्धज्ञानस्योदये सति कुतः सम्भावना? अर्थाद् विशुद्धज्ञानोदये जाते अविद्यायां स्वतो विलीनायां सत्यां तन्निमित्तकस्य कर्मफलविभागव्यवहारस्यापि स्वयमेव निरस्ततया नास्ति कर्मनिवृत्तये कर्मणां ज्ञानसहकारित्वमिति भावः।

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**

**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ (मुण्ड० २/२/८) इति।**

**अथ विज्ञानवैमल्यायान्यापेक्षा, साऽपि मुधा, संशयविपर्यासयोर्ज्ञानमलयोः प्रमाणोत्थविज्ञानेऽसम्भवात्।**

**अथ मतम्—शाब्दज्ञानादन्यदपि प्रत्यक्षं ज्ञानमिष्यते विगलितविभागोद्ग्राहं सर्वविकल्पातीतम्। तस्य हि ब्रह्म गोचरः, न शाब्दस्य विभक्तपदार्थसंसर्गोद्ग्राहिणः, तदुत्पत्तौ कर्मोपासनाद्यपेक्षेति।**

---

विपर्याससंशयवत् कर्मणामपि विद्ययैव निवृत्तिरिति श्रुत्या प्रमाणयितुमाह—**तथा चेति**। यथाऽविद्याकृतौ विपर्याससंशयौ विद्ययैव निवर्तेते तथा कर्माण्यपि आविद्यकानि विद्ययैव निवर्तिष्यन्त इति तन्निवृत्तये विद्याया न कर्मापेक्षा। तथा च मुण्डकश्रुतिः—**भिद्यते हृदयग्रन्थिरित्यादि**। हृदयग्रन्थिः= विपर्यासः। अयं च श्रुत्यर्थः— तस्मिन् परावरे ब्रह्मणि दृष्टे = ज्ञाते सति विपर्यासो भिद्यते = नश्यति, संशयाः सर्वे छिद्यन्ते, तथाऽस्य पुरुषस्य कर्माणि अपि क्षीयन्ते = विलीयन्ते। यतः सर्व एते अविद्याकृताः सन्ति। आविद्यकाश्च विषया विद्यायां जातायां स्वत एव विलीयन्ते, न तेषां विलयाय कर्मापेक्षेति भावः। परावरमत्र ब्रह्म, परा हिरण्यगर्भादयोऽवरा यस्माद् ब्रह्मणस्तद् ब्रह्म परावरमिति व्युत्पत्तिलभ्योऽर्थः।

यद्युच्येत विज्ञानवैमल्याय = विशुद्धज्ञानोदयाय अन्यस्य कर्मादिरपेक्षा ज्ञानस्य स्यात्, अग्निहोत्रादिविहितकर्मानुष्ठानं विना ज्ञाननैर्मल्यासम्भवादिति चेत्, तत् कथनमपि मुधा = व्यर्थम्, यतः संशयविपर्ययावेव ज्ञानमले, शब्दप्रमाणबलाद् ज्ञाने जाते सति तयोरपि कथं सम्भव इति। तस्माद् ज्ञानवैमल्यार्थमपि न कर्मापेक्षेति भावः।

पुनः शङ्कते—**अथ मतमिति**। अयमर्थः—शब्दप्रमाणबलादपि आत्मज्ञानं भवतु नाम, तथापि तज्ज्ञानं न मोक्षफलाय पर्याप्तमतः शब्दजन्याद् ज्ञानादन्यदपि प्रत्यक्षं साक्षात्कारात्मकं ज्ञानमिहाभीष्टम्, यतो हि प्रत्यक्षज्ञानमेव विगलितो

**कः पुनरस्य विशेषः, येन तदर्थ्यते ? स्पष्टाभत्वम्, न तस्योपयोगः। ज्ञानं हि ज्ञेयाभिव्याप्तये, शाब्दज्ञाने चोत्पन्ने आप्तमेव ज्ञेयम्। प्रमितेः प्रत्यक्षपरत्वात् तत्र च नैराकाङ्क्ष्यात् तदर्थ्यत इति चेत्, न, एतदधिगते प्रमेये किमन्यदाकाङ्क्षयेत ?**

---

विभागोद्ग्राहः = द्वैतोद्भासो यस्मिंस्तादृशमस्ति। अत एव तज्ज्ञानं सर्वविकल्पातीतमखण्डब्रह्मविषयमस्ति। तस्यैव ज्ञानस्य विषयो ब्रह्म, न शाब्दज्ञानस्य विषयः। यतः शाब्दज्ञानं हि नानापदार्थसंसर्गरूपवाक्यार्थावभासकत्वेन द्वैतविषयत्वान्नाद्वैतं ब्रह्म बोधयितुमलमस्ति। अतस्तादृशस्याद्वैतब्रह्मसाक्षात्कारात्मकज्ञानस्योत्पत्त्यर्थं कर्मोपासनादीनामपेक्षाऽस्त्येवेति शङ्काग्रन्थाशयः।

आशङ्कामिमामपाकर्तुं पृच्छति – **कः पुनरस्येति**। शाब्दज्ञानाद् अस्य प्रत्यक्षज्ञानस्य को विशेषो येन शब्दादद्वैतात्मज्ञानेऽपि ब्रह्मणः प्रत्यक्षज्ञानं प्रार्थयेत् कश्चित्? तदर्थं च कर्माण्यपेक्षेत? यद्युच्येत प्रत्यक्षज्ञानस्य स्फुटाभत्वं विशेषः, शाब्दज्ञानमस्फुटाभं भवतीति, तन्नातिरुचिरम्, शाब्दज्ञानापेक्षया प्रत्यक्षज्ञानस्य स्फुटाभत्वेऽपि प्रकृते न तत्प्रार्थनीयं स्फुटाभत्वस्योपयोगाभावात्। उपयोगाभावमुपपादयति – **ज्ञानं हीति**। अयमर्थः – ज्ञानं हि ज्ञेयवस्तुनो अभिव्याप्तये = विषयीकरणायापेक्षितं भवति, शाब्दज्ञाने जाते विषयीभूतमेव ज्ञेयं वस्तु, अतो न पुनः स्पष्टाभस्यापि प्रत्यक्षज्ञानस्यावश्यकता, पिष्टपेषणत्वात्।

ननु शब्दजाऽनुमानजा वा सर्वापि प्रमितिः प्रत्यक्षपरा (प्रत्यक्षपर्यन्ता) भवति, प्रत्यक्षे जात एव च सा निराकाङ्क्षा भवतीत्यतः शाब्दज्ञानेऽपि सति प्रत्यक्षज्ञानमाकाङ्क्षितं भवतीति चेत्, न, प्रमाणस्य प्रयोजनं प्रमेयाधिगतिरेव। तथा च शब्देनैव प्रमेयेऽधिगते किमर्थं पुनरन्यत् प्रत्यक्षं प्रमाणमाकाङ्क्षितं भवेत्? अनावश्यकत्वादिति शेषः।

ननु प्रमेयाधिगतये यदि प्रमाणमात्रमाकाङ्क्षितं भवेत्, तदा शब्दप्रमाणेनैव तस्याः सम्पादितत्वात् शान्ताकाङ्क्षतया पुनः प्रमाणान्तरं प्रत्यक्षं नाकाङ्क्ष्येत। किन्तु अधिगतेऽपि प्रमेये प्रमाणान्तरमप्याकाङ्क्ष्यते। तदा प्रमाणाकाङ्क्षायाः

**प्रमाणान्तरमिति चेत्, न, प्रमेयसिद्ध्यर्थत्वात् तदाऽऽकाङ्क्षायाः। पुनः सिद्ध्यर्थमिति चेत्, न, पूर्वस्मादप्यसकृत् तत्सिद्धेः। सिद्धस्य च सिद्ध्यपेक्षायां न हेतुरस्ति। उपायान्तरसद्भावश्चेत्, उपायान्तरं तर्ह्यपेक्ष्येत, प्रमेये तु नैराकाङ्क्ष्यमेव। प्रीतिविशेषश्चेत्, स पूर्वप्रमाणजादपि**

---

शान्तत्वेऽपि प्रमाणान्तराकाङ्क्षाया अशान्तत्वात् प्रत्यक्षं प्रमाणान्तरमुपयोक्ष्यत इति आशयवानाशङ्कते – **प्रमाणान्तरमितीति।**

उत्तरयति – **नेति।** प्रमेयसिद्ध्यर्थमेव प्रमाणान्तराकाङ्क्षा भवेत्, प्रमेयं यदि पूर्वप्रमाणेन शब्देनैव सिद्धं तदा प्रमाणान्तराकाङ्क्षा कथं भवेत्? यद्युच्येत – पुनः सिद्ध्यर्थं प्रमाणान्तरमाकाङ्क्ष्येत, तदपि नावश्यकम्, पूर्वस्मात् शब्दप्रमाणादेवानेकशः प्रमेयसिद्धेर्जातत्वात्, पूर्वप्रमाणे निराकाङ्क्षत्वस्य यथावद् जागरूकत्वात्। अतो न पुनः सिद्ध्यर्थमपि प्रमाणान्तराकाङ्क्षा। एवं, नात्र किञ्चिन्निमित्तं पश्यामः, येन एकवारं सिद्धस्य प्रमेयस्य पुनः प्रमाणान्तरात् सिद्धिरपेक्षिता स्यात्, पिष्टपेषणतुल्यत्वात्।

ननूपायान्तरसद्भाव एव निमित्तं पुनः सिद्ध्यपेक्षायाः। अयं भावः – प्रमेयसिद्धेरेक उपाय आगमः, उपायान्तरं च प्रत्यक्षमस्ति। अत आगमेन प्रमेयसिद्धौ जातायामपि उपायान्तरस्यापि सद्भावात् तेनापि प्रमेयसिद्धिरपेक्षिता भवितुमर्हतीति तदप्युपयोजनीयमेवेति चेत्, न, एवं सति आगमेन प्रमाणेन उपायान्तरं प्रत्यक्षमनुग्राह्यतयाऽपेक्षितं भवतु नाम, किन्तु स्वप्रमेयसिद्ध्यर्थमागमो नोपायान्तरमाकाङ्क्षति, प्रमेयसिद्धिदृष्ट्याऽऽगमस्य निराकाङ्क्षत्वात्। अत आगमः प्रमेयसिद्धौ स्वानुग्राहकतया प्रमाणान्तरं नाकाङ्क्षिष्यत इति।

ननु प्रीतिविशेष एवोत्पन्न उत्पत्स्यमानो वा प्रमाणान्तराकाङ्क्षायां निमित्तं भवितुमर्हतीति चेत्, न, पूर्वप्रमाणादागमादपि जातादात्मदर्शनात् स प्रीतिविशेषः सिध्यत्येवेति न प्रीतिविशेषसिद्ध्यर्थमपि आगपस्य प्रमाणान्तरमाकाङ्क्षितं स्यात्।

**दर्शनात् सिद्ध्यति, न तत्सिद्ध्यर्थं प्रमाणान्तरम् । प्रत्यक्षदृष्टमपीतरैस्तत्सम्भवात् जिज्ञास्येत, विशेषाभावात् । निश्चायकत्वमितरेषामपि, प्रमाणभावात् ।**

**हानादियोग्यविषयं प्रत्यक्षम्, सन्निकृष्टार्थत्वात्, नेतराणीति चेत् सन्निकर्षहेतुस्तर्ह्यपेक्ष्यताम्, न प्रमाणम्, सिद्धत्वात् प्रमायाः । प्रकृते च प्रमेये नैव विशेषोऽस्ति ।**

---

एवम्, आगमज्ञातमपि प्रमेयं यदि प्रीतिविशेषसिद्ध्यर्थं प्रमाणान्तरेण जिज्ञास्येत, तदा विशेषाभावात् प्रत्यक्षज्ञातमपि वस्तु इतरैः प्रमाणैः प्रीतिविशेषसम्भावनया जिज्ञास्येत, परन्तु नैव जिज्ञास्यते। तस्मान्न प्रीतिविशेषोऽपि प्रमाणान्तराकाङ्क्षायां निमित्तम् । न च इतरप्रमाणानामनिश्चायकत्वेन तैः प्रत्यक्षज्ञातं वस्तु न जिज्ञास्यत इति वाच्यम्, प्रमाणभावात् तेषामपि निश्चायकत्वात्, अन्यथा प्रमाणत्वमेव तेषां व्याहतं स्यादिति भावः ।

शङ्कते – ननु प्रत्यक्षं प्रमाणं हानोपादानयोग्यो विषयो यस्य एवंविधं भवति, सन्निकृष्टार्थत्वाद् इन्द्रियसन्निकृष्टोऽर्थो विषयो यस्य तादृशत्वादित्यर्थः। तदितराणि अनुमानागमादिप्रमाणानि तु विप्रकृष्टविषयकाणि भवन्ति, अत एव तेषां विषया हानोपादानयोग्या न भवन्ति। अस्मादेव विशेषाद् इतरप्रमाणैर्ज्ञातमपि वस्तु प्रत्यक्षप्रमाणेन जिज्ञास्यते, न तु प्रत्यक्षेण ज्ञातं वस्तु इतरप्रमाणैर्जिज्ञास्यते। अतो हानोपादानव्यवहारस्य प्रत्यक्षप्रमाणत एव सम्पादयितुं शक्यत्वेन आगमप्रमाणं प्रत्यक्षमपेक्षिष्यत इति चेत्, न, एवं तर्हि हानोपादानव्यवहारनिर्वाहाय सन्निकर्षहेतुरेवापेक्षणीय आगमप्रमाणेन न तु प्रमाणान्तरम्, प्रमाणकार्यस्य ज्ञानस्यागमप्रमाणेनैव सम्पादितत्वादिति । प्रकृते आत्मनि प्रमेये तु सन्निकर्षार्थमपि प्रत्यक्षप्रमाणापेक्षा नास्तीत्याह – **प्रकृते च प्रमेये नैव विशेषोऽस्तीति** ।

अयमर्थः – अग्न्यादिरूपं प्रमेयवस्तु सन्निकृष्टमपि भवति, असन्निकृष्टमपि भवति । तथाऽसन्निकृष्टस्य ज्ञानमनुमानागमादिप्रमाणैर्भवति । प्रत्यक्षप्रमाणेन तु

**सामान्यविषयाः शब्दादयः, विशेषविषयं प्रत्यक्षमिति चेत्, अनधिगत एव तर्हि शब्देन प्रत्यक्षस्य विषयः। बाढम्, उक्तमेतत्— न शाब्दस्य ज्ञानस्य विषयो ब्रह्मेति।**

**यदि तर्हि न शब्देनाधिगतं ब्रह्म, कथं तस्मिन्नुपासना प्रवर्तताम्? न चान्यस्मिन्नुपास्यमानेऽन्यत् साक्षाद् भवति। कस्य च रूपस्य साक्षात्करणाय यज्ञादिविधानम्?**

---

सन्निकृष्टो वह्न्यादिर्ज्ञायत इत्यस्ति विशेषः। आत्मा तु सदा सन्निकृष्ट एवेति न सन्निकर्षार्थं प्रत्यक्षापेक्षेति।

प्रमाणेषु विशेषान्तरं शङ्कते – **सामान्येति**। अयं भावः – गवादिपदानां सामान्यतो गोत्वादिजातिमत्सु सङ्केतग्रहो भवति – "गौः गोपदवाच्यः" इति, न तु विशेषतः शक्तिग्रहः "अयं गौः गोपदवाच्यः" इति शक्त्यानन्त्यप्रसङ्गाद् व्यभिचाराच्च। अत एव गोपदात् सामान्यत एव गोपदार्थबोधो न तु विशेषतो बोधः। प्रत्यक्षेण तु गोविशेषेणेन्द्रियसन्निकर्षाद् विशेषत एव गोःप्रत्यक्षं भवति "अयं गौः" इति। तदुक्तम् – सामान्यविषयाः शब्दादयो विशेषविषयं प्रत्यक्षमिति। तस्मात् सामान्यविषयकत्वविशेषविषयकत्वाभ्यां विशेषात् शब्दात् सामान्यतो विज्ञाय विशेषतो ज्ञानार्थं प्रत्यक्षमपेक्षिष्यते, सर्वव्यवहाराणां विशेषनिष्ठत्वादिति शङ्काग्रन्थाशयः।

अत्रोत्तरमाह – **अनधिगत एवेति**। अयमाशयः – भवदुक्तरीत्या आगमप्रत्यक्षप्रमाणयोर्भिन्नविषयकतया प्रत्यक्षविषयो विशेषः सामान्यविषयकेनागमेनागृहीत एवेति। शङ्कापक्षत आह – **बाढमिति**। बाढमुक्तम्, ममाभीष्टमेवोक्तमित्यर्थः। अर्थात् शब्दप्रमाणेनानधिगतविषयं प्रत्यक्षं विषयीकरोतीति ममाप्यभिप्रेतम्। अतः शब्दानधिगतविषयस्य प्रत्यक्षतो ज्ञानार्थं सहकारितया कर्मोपासनाद्यपेक्षाऽस्त्येव। पूर्वमुक्तम् – "तस्य च ब्रह्म गोचरः, न शब्दस्य" इति। अस्यैव स्फुटार्थः – न शाब्दस्य ज्ञानस्य विषयो ब्रह्मेति।

उक्ताशङ्कां निराकरोति – **यदि तर्हीति**। यदि तु शब्दप्रमाणेन ब्रह्म नैवाधिगतमिति स्वीकरोषि तदाऽनधिगते ब्रह्मणि विशेषरूपेणोपासना कथं क्रियेत?

**शब्दोपदर्शितनिरतिशयानन्दापहतपाप्मादिरूपब्रह्मस्वभावस्य आत्मनः साक्षात्करणाय यज्ञादिविधिरुपपद्यते। अविदितपुरुषार्थरूपे तद्विपरीतरूपे वा तस्मिंस्तद्विधिरसदर्थः। तस्मादपहतपाप्मत्वादिगुणस्वभाव आत्मनि निर्विचिकित्सात् प्रमाणात् प्रकटतां प्राप्ते नापरमपेक्ष्यमस्ति।**

---

न च शब्देनाधिगतं ब्रह्मणः सामान्यरूपमेवोपासिष्यते, ततश्च तत्परिणामस्वरूपं तस्य विशेषरूपेण साक्षात्कारात्मकं फलं प्राप्तं भविष्यतीति वाच्यम्, अन्यस्योपासनयाऽन्यस्य साक्षात्काराभावात्। एवं, यदि शब्दाद् ब्रह्मणो विशेषरूपं नाधिगतं तदा कस्य रूपस्य साक्षात्काराय यज्ञादिविधानं स्यात्? यतो लौकिकात्मसाक्षात्काराय यज्ञादिविध्यनुपपत्तेः, पूर्वमेव देहाद्यतिरिक्तनित्यात्मानं जानतां पुंसां कृत एव यज्ञादिविधानात्। अतो लौकिकात्मसाक्षात्कारो न यज्ञादिविधेरुद्देश्यम्। तस्माद् ब्रह्मणस्तद्रूपं वक्तव्यम्, यस्य साक्षात्काराय यज्ञादिविधानं भवान् मन्यते।

साक्षात्कारविषयस्य ब्रह्मस्वरूपस्य प्रतिपत्तौ सत्यामेव यज्ञादिविधानमुपपद्यते, अन्यथा तु नोपपद्यत इति स्वाभिप्रायम् उद्घाटयति – **शब्दोपदर्शितेत्यादि**। शब्देन उपदर्शितो निरतिशयानन्दत्व-अपहतपाप्मत्वादिरूपो ब्रह्मस्वभावो यस्य, एवंविधस्यात्मनः साक्षात्कारार्थं साधनापेक्षायां यज्ञादिविधानं युज्यते। आत्मन आनन्दादिपुरुषार्थस्वरूपेऽविदिते, अथवा एतद्विपरीते दुःखित्वादिस्वरूपे विदिते सति तु यज्ञादिविधिरसदर्थो निरर्थक एव स्यात्। शब्दात् प्रमाणाद् आनन्दादिपुरुषार्थेऽविदिते पुरुषार्थविपरीते वा विदिते तत्साक्षात्कारार्थं यज्ञादौ प्रवृत्तिरेवानुपपन्नेति भावः। मूले निरतिशयानन्द इत्यनेन इष्टप्राप्तिरूपपुरुषार्थ उक्तः, अपहतपाप्मेत्यनेन च अनिष्टनिवृत्तिरूपपुरुषार्थ उक्त इति विवेकः। तस्मादानन्दादिकं ब्रह्मणो विशेषरूपमपि शब्दादेवावगम्यत इति न शब्दप्रमाणमात्मनो विशेषरूपसाक्षात्कारार्थं प्रत्यक्षप्रमाणं तत्सहकारितया च यज्ञादिकर्मानुष्ठानमपेक्षते। एतदेवोक्तं मूले – **तस्मादित्यादिना नापरमपेक्ष्यमस्तीत्यन्तेन** सन्दर्भेण। अतः शाब्दमेव, ज्ञानमेव चापवर्गकारणं न प्रत्यक्षज्ञानमपि न वा कर्मापीति निष्कर्षः।

**नन्ववगतेऽपि ''तत् त्वमसि'' (छा.६/८/७) इति शब्दाद् ब्रह्मात्मभावे प्रागिव सांसारिकधर्मदर्शनात् तन्निवृत्तये भवत्यन्यापेक्षा।**

**नैतत् सारम् – कथं खल्ववगतब्रह्मात्मभावो विदितात्मयाथातथ्यो मिथ्यादर्शननिमित्तैर्धर्मैर्युज्यते? श्रूयते च- ''ब्रह्म वेद ब्रह्मैव भवति'' इति (मुण्डक-उ. ३/२/९) न च ब्रह्मण्यपहतपाप्मनि तेषामवकाशः। यथा –**

**आत्मानं चेद् विजानीयादयमस्मीति पूरुषः।**
**किमिच्छन् कस्य कामाय शरीरमनुसञ्ज्वरेत्॥ (बृ. ४/४/१२)**

---

ज्ञानकर्मणोः सम्बन्धवादी पुनराशङ्कते – **नन्विति**। अयं भावः – ''तत्त्वमसि'' इति शब्दात् प्रमाणाद् ''ब्रह्मैवाहम्'', ''अहं ब्रह्मास्मि'' इति ब्रह्मात्मभावे ज्ञातेऽपि पुंसि सांसारिकाः क्षुत्पिपासादयो धर्मास्तथैव दृश्यन्ते यथा ज्ञानात् प्राक् तस्मिन् दृश्यन्ते स्म। अतो ज्ञानिनि तेषां धर्माणां निवृत्तये शाब्दज्ञानातिरिक्तं साक्षात्कारिज्ञानमावश्यकम्, तस्यैव च सहकारितया यज्ञादिकर्माण्यपेक्षिष्यन्त इति शङ्काग्रन्थाशयः।

शङ्कामिमां निराकरोति – **नैतत् सारमिति**। एतदपि कथनं सारशून्यमित्यर्थः। तथा हि, योऽवगतब्रह्मात्मभावः= अवगतो ज्ञातो ब्रह्मात्मभावो येन सः, अत एव विदितात्मयाथातथ्यः= विदितमात्मनो याथातथ्यं परमार्थरूपं येन सः पुरुषो मिथ्यादर्शननिमित्तैः = अविद्याकल्पितैर्धर्मैः कथं युक्तः स्यात्? न कथमपीति यावत्। अत्र श्रुतिरस्ति प्रमाणम् – ''ब्रह्म वेद ब्रह्मैव भवति'' इति। यो जन आत्मानं ''ब्रह्मैवाहम्'' इति वेद जानाति स ब्रह्मैव भवतीति श्रुत्यर्थः। अत एव अपहताः पाप्मानः संसारदोषा यस्य तस्मिन् ब्रह्मस्वरूपे तेषां क्षुत्पिपासादीनां सांसारिकधर्माणां नास्त्यवसरः। अत्रैव श्रुत्यन्तरमप्यस्ति प्रमाणम् –

**''आत्मानं चेद् विजानीयादयमस्मीति पूरुषः।**
**किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्''॥** इति।

**तथा "अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः" इति (छा. ८/१२/१) मिथ्याभिमाननिमित्तः शरीरसम्बन्धः, तस्मिन् याथातथ्यदर्शनान्निवृत्तेऽशरीरत्वम्। तत्र प्रियाप्रिययोरसम्बन्ध आख्यायते।**

**तस्मान्नावगतब्रह्मात्मभावः प्रागिव सांसारिकधर्मभाक्। यस्तु तथा, नासाववगतब्रह्मात्मभाव इति।**

---

अयमस्मि = ब्रह्मैवाहमस्मीति ब्रह्मरूपतयाऽऽत्मानं जानन् पुरुषः स्वयं किमिच्छेत् किमिति च पुत्रादेः कामाय सुखाय प्रयोजनाय वा शरीरोपाधिकेन दुःखेन शरीरमनुसंज्चरेत् सन्तप्येत। ज्ञानिनः शरीरधर्मैरसंस्पृष्टत्वादित्यर्थः। अत्र श्रुत्यन्तरमपि प्रमाणान्तरमस्ति – **"अशरीरं वावसन्तं न प्रियाप्रिये स्पृशतः"** इति। वाशब्दस्य एवार्थतया अशरीरमेव सन्तं प्रियाप्रिययोः संस्पर्शो नास्तीति श्रुत्यर्थः। अशरीरत्वं च शरीरसम्बन्धाभावः।

ननु श्रुतिरियं मरणोत्तरमेव शरीरसम्बन्धाभावे सति प्रियाप्रिययोः स्पर्शाभावमाह न जीवितावस्थायाम्। तस्माद् जीवितावस्थायां ज्ञानिनोऽपि सांसारिका धर्मा अनुवर्तिष्यन्त एवेति तन्निवृत्तये साक्षात्कारिज्ञानोत्पत्त्यर्थं यागादिकर्माण्यपेक्षितानि सन्तीति शङ्कायां समाधानमाह – **मिथ्याभिमाननिमित्त इति।** अयं भावः – आत्मभिन्ने जडे देहे "अहम्" इति यो मिथ्याभिमानः, तन्निमित्त एव अशरीरेऽप्यात्मनि शरीरसम्बन्धः प्रतीयते। अतो नात्मनः परमार्थतः शरीरसम्बन्धः, किन्तु शरीरसम्बन्धाभासमात्रं तत्। आत्मनो याथातथ्यदर्शनाद् देहातिरिक्तस्य तदीयपरमार्थस्वरूपस्य श्रुतितो ज्ञानात् तस्मिन् मिथ्याशरीरसम्बन्धे निवृत्ते सति आत्मनोऽशरीरत्वं समुपपद्यते। समुपपन्ने चात्मनि अशरीरत्वे तत्र तस्मिन्नात्मनि प्रियाप्रिययोरिष्टानिष्टयोः संस्पर्शाभावः सम्बन्धाभाव उक्तश्रुत्याऽऽख्यायत इति।

तस्माद् अवगतो ब्रह्मात्मभावो येन स पुरुष आत्मज्ञानात् प्रागिव ज्ञानोत्तरं सांसारिकैर्धर्मैर्न युज्यते। यस्तु सांसारिकधर्मवान् दृश्यते लोके, स नावगतब्रह्मात्मभाव इति बोध्यम्। अतो मुक्तिसिद्धये शाब्दज्ञानं नान्यद् अपेक्षत इति भावः।

**अत्रोच्यते — निश्चितेऽपि प्रमाणात् तत्त्वे सर्वत्र मिथ्यावभासा निवर्तन्ते, हेतुविशेषादनुवर्तन्तेऽपि। यथा, द्विचन्द्रदिग्विपर्यासादय आप्तवचनविनिश्चितदिक्चन्द्राणाम्, तथा निर्विचिकित्सादाम्नायादवगतात्मतत्त्वस्यानादिमिथ्यादर्शनाभ्यासोपचितबलवत् संस्कारसामर्थ्यान् मिथ्यावभासानुवृत्तिः, तन्निवृत्तयेऽस्त्यन्यदपेक्ष्यम्, तच्च तत्त्वदर्शनाभ्यासो लोकसिद्धः, यज्ञादयश्च शब्दप्रमाणकाः।**

**अभ्यासो हि संस्कारं द्रढयन् पूर्वसंस्कारं प्रतिबध्य स्वकार्यं सन्तनोति, यज्ञादयश्च केनाप्यदृष्टेन प्रकारेण। श्रेयःपरिपन्थिकलुषनिबर्हणद्वारेणेत्यन्ये, नित्यानां कर्मणां दुरितक्षयार्थत्वात्।**

---

ज्ञानकर्मणोः सम्बन्धवादी स्वपक्षं निगमयन्नाह — **अत्रोच्यत इति**। अयमर्थः — प्रमाणात् तत्त्वनिश्चये जाते प्रायः सर्वत्रैव मिथ्यावभासा निवृत्ता भवन्ति, यथा ज्ञाते रज्जुत्वे सर्पावभासो निवृत्तो भवति। क्वचित्तु प्रमाणात् तत्त्वनिश्चये जातेऽपि हेतुविशेषाद् दृढतराविद्यासंस्काराद् अनुवर्तन्त एव मिथ्यावभासाः, न निवृत्ता भवन्तीत्युभयं दृश्यते। मिथ्यावभासानुवृत्तिमुदाहरति — **यथा द्विचन्द्रेति**। यथा "इयं पूर्वा दिगस्ति, एक एवायमाकाशे चन्द्रोऽस्ति" इत्येवमाकारेण प्रवचनेन तत्त्वतो विनिश्चितौ दिक्चन्द्रौ यैः पुरुषैस्तेषामपि दिग्विपर्ययज्ञानं द्विचन्द्रविपर्ययज्ञानं च भवत एव दोषविशेषाद्धेतोः, तथैव निरस्तसमस्तपुंदोषाद् अत एव निःसन्दिग्धप्रमाणाद् आम्नायाद् वेदाद् अवगतमात्मतत्त्वं येन तस्यापि पुरुषस्य अनादिमिथ्यादर्शनस्याभ्यासेन = पुनः पुनरावृत्त्या उपचिताः = वृद्धिं गता अत एव बलवन्तो ये मिथ्याज्ञानसंस्कारास्तेषां सामर्थ्याद् मिथ्यावभासा अनुवर्तन्ते। अतः श्रुतिजन्यतत्त्वज्ञानोत्तरमप्यनुवर्तमानानां तेषां मिथ्यावभासानां निवृत्तयेऽन्यदपेक्षणीयमस्त्येव। तच्चापेक्षणीयं द्वयमस्ति — तत्त्वदर्शनस्याभ्यासो लोकप्रसिद्ध उपासनारूपः, तथा श्रुतिप्रमाणाद् ज्ञाता यज्ञादयश्चेति।

तत्राभ्यासस्य यज्ञादीनां च कीदृश उपयोगो मिथ्यावभासनिवृत्ताविति स्फुटीकरोति — **अभ्यासो हीति**। अस्यार्थः — तत्त्वदर्शनाभ्यासः = पौनःपुन्येनावृत्तिः

**स्यादेतत्— अनुवर्तन्तां मिथ्यावभासाः, प्रमाणात्तु निश्चयः, यथातत्त्वं यथानिश्चयं च व्यवहारः। तस्मान्नावगतात्मतत्त्वस्य काचन शुभाऽशुभा वा प्रवृत्तिरुपपद्यते।**

**उच्चते— जातेऽपि तत्त्वदर्शने, अनाहिते च पटौ संस्कारे, द्रढीयसि च मिथ्यादर्शनजे संस्कारे निश्चया अपि मिथ्यार्था भवन्ति, यथा दिङ्मूढस्याननुसंहिताप्तवचसः, प्रागिव प्रवृत्तिदर्शनात्। तथा प्रमितरज्जुभावाया अपि रज्ज्वाः प्रमाणाननुसन्धाने सर्पभ्रान्त्या भयदर्शनम्।**

---

तत्त्वदर्शनजन्यसंस्कारं द्रढयति मिथ्यादर्शनजातं पूर्वसंस्कारं च प्रतिबध्नाति = श्लथयति, एवं क्रमेण तत्त्वसाक्षात्काररूपं स्वकार्यं सन्तनोति क्रमेण प्रापयति। यज्ञादयोऽपि च तदेव कार्यं केनाप्यदृष्टेन प्रकारेण सम्पादयन्तीति भावः।

अन्येषां मतेन यज्ञादीनामुपयोगप्रकारमाह— **श्रेय इति**। श्रेयः परिपन्थीनि यानि कलुषाणि दुरितानि, तेषामुन्मूलनद्वारेण यज्ञादयो मिथ्यावभासान् निवर्तयन्ति। यतो नित्यानि कर्माणि दुरितक्षयायैव श्रुत्या विहितानि सन्तीति।

शाब्दज्ञानं स्वकार्ये प्रमाणान्तरं नापेक्षत इति वादी पुनः प्रत्यवतिष्ठते-- **स्यादेतदिति**। अनादिमिथ्यादर्शनाभ्यासोपचितबलवत्संस्कारसामर्थ्याद् मिथ्यावभासाः काममनुवर्तन्ताम्, न तावता काऽपि क्षतिः। यतो हि प्रमाणादेव हि तत्त्वनिश्चयो भवति। ततो यथातत्त्वं यथानिश्चयं च व्यवहारः प्रवर्तिष्यते। अत एव सूर्योदयादवगतप्राचीदिक्तत्त्वो जनो दिङ्मूढोऽपि न प्राचीदिशमुदीचीं व्यवहरति। तस्माद् येन पुंसा श्रुतिप्रमाणाद् "ब्रह्माहम्" इत्याकारमकर्तृ-अभोक्तृरूपमात्मतत्त्वं सुनिश्चितं तस्य पुंसः शुभा (ज्योतिष्टोमादिलक्षणा) अशुभा वा (ब्रह्महत्यादिलक्षणा) प्रवृत्तिरेव नोपपद्यत इति कुतस्तस्य बन्धानुवृत्तिरिति पूर्वपक्षे समाधानमाह— **उच्यत इति**।

अयमत्र समाधानाशयः— प्रमाणात् तत्त्वदर्शने जातेऽपि अभ्यासं विना तस्मिन् पुंसि पटुः पटुतरः पटुतमस्तत्त्वदर्शनजसंस्कारो नाहितो भविष्यति, प्रत्युत अनादिमिथ्यादर्शनजन्यसंस्कार एव द्रढीयान् सम्पत्स्यते। अस्यां स्थितौ प्रमाणाज्जाता

**तस्माज्जातेऽपि प्रमाणात् तत्त्वदर्शने अनादिमिथ्यादर्शनाभ्यास-परिनिष्पन्नस्य द्रढीयसः संस्कारस्याभिभवायोच्छेदाय वा तत्त्वदर्शनाभ्यासं मन्यन्ते। तथा च "मन्तव्यो निदिध्यासितव्यः" (बृ०२।४।५) इत्युच्यते, शमदमब्रह्मचर्ययज्ञादिसाधनविधानं च, अन्यथा कस्तदुपदेशार्थः ?**

**स्यादेतत् – ब्रह्मचर्यादिसाधनोपकरणादेवाम्नायात् तत्त्वविज्ञानम्, तदसत्, शब्दभावात् प्रतिपत्तेरुपपत्तेः। न हि प्राक् साधनविशेषेभ्य-**

---

अपि तत्त्वनिश्चया **मिथ्यार्थाः**= मिथ्या-विषयका इव निष्प्रभावा भविष्यन्ति। अतस्तदानीमपि शुभाऽशुभव्यवहारा अपि यथापूर्वं प्रवर्तिष्यन्त एवात्मतत्त्व-ज्ञानिनोऽपि। अत एव येन दिङ्मूढेन पुंसा आप्तजनवचनं पूर्णतया नानुसंहितं नापि सूर्योदयादिनिर्णायकचिह्नमन्वीक्षितम्, तस्य पुंसो यथापूर्वमेव व्यवहारो दृश्यते। एवमेव सर्पभ्रान्तिमान् जनस्तावत्कालपर्यन्तं भीतो दृश्यते, यावद् रज्ज्वा रज्जुतां प्रमाणतो ज्ञात्वाऽपि प्रमाणान्तरेण रज्जुत्वं नानुसन्धत्ते, तद्वदात्मतत्त्व-ज्ञानिनोऽपि विषये ज्ञातव्यम्।

तस्मात् शब्दप्रमाणात् तत्त्वज्ञाने जातेऽपि अनादिमिथ्यादर्शनाभ्यासोप-चितस्यातिदृढस्य तत्संस्कारस्याभिभवाय समुच्छेदाय वा मनननिदिध्यासनरूप-स्तत्त्वदर्शनाभ्यासोऽपेक्षित एव। अत एव श्रुतिः "मन्तव्यो निदिध्यासितव्यः" इति वदति। अत एव च तदर्थं शमदमब्रह्मचर्ययज्ञादिसाधनानां विधानं श्रुतिभि-रुपदिष्टम्। अन्यथा तदुपदेशा निरर्थका एव सम्पद्येरन्निति।

पुनः शङ्कते – **स्यादेतदिति**। अयमर्थः – शाब्दज्ञानादेव तत्त्वविज्ञानं भवतीति पक्षेऽपि शमदमब्रह्मचर्याद्युपदेशा न निरर्थकाः, ब्रह्मचर्यादिसाधनानाम् आम्नायस्योप-करणरूपेण उपयोगात्। ब्रह्मचर्यादिसाधनानि उपकरणानि यस्य तस्मादाम्नाया-दिति विग्रहः।

आशङ्कामिमां निरस्यति – **तदसदिति**। अयमाशयः – शाब्दी हि प्रतिपत्तिः शब्दमात्रादेव भवति, न तु तत् शमादिकमपेक्ष्यैव शाब्दबोधं जनयति। यद्येवं स्यात्, तदा शमादिसाधनविशेषेभ्यः प्राक् तत्त्वबोधनपर आम्नायोऽवाचकः स्यात्, अनिश्चायकश्च स्यात्। न त्वेवमस्ति – शमादिसाधनविशेषेभ्यः प्रागपि आम्नायस्य

स्तत्त्वप्रतिपत्तिपर आम्नायोऽवाचकः, नाप्यनिश्चायकः, अशेषाशङ्का-निर्मोक्षात्। अन्यथा तदुपदिष्टेषु साधनेष्वपि दुर्लभा प्रतिपत्तिः।

अपि च अन्यथानिश्चयेऽपि रङ्गगता भरतादयो मिथ्यावभासेन शोकभयादिहेतवः, निश्चितेऽपि गुडस्य माधुर्ये तत्र मिथ्यातिक्ताव-भासोऽवितथ इव दुःखयति, अवितथस्येव तस्यापि थूत्कृत्य त्यागात्। तस्मात् तन्निवृत्तये विनिश्चितब्रह्मात्मभावेनापि साधनान्यपेक्ष्याणि।

यथैव प्रमाणात् तत्त्वाभिव्यक्तौ न मुक्तेः कार्यता, तथाऽभि-व्यक्तिविशेषेऽपि साधनेभ्यः। श्रुतयस्त्वभ्यासपरिनिष्पत्त्यवस्थाविषयाः शब्दसाधनज्ञानापेक्षा वा भवन्तु, तद्धेतुत्वादुत्तरस्येत्यलमतिविस्तरेण।

---

सर्वैरपि वाचकत्वस्वीकारात्। शब्दार्थसम्बन्धस्यौत्पत्तिकत्वात्। तथा निरस्त-समस्तदूषणतया सकलशङ्काविनिर्मुक्तत्वाद् निश्चायकत्वमपि निर्विवादम्। अन्यथा शमादिपरिग्रहात् पूर्वमाम्नायोपदिष्टेषु शमादिष्वपि प्रतिपत्तिर्दुर्लभैवापद्येत। तथा च ध्रुवोऽन्योन्याश्रयदोषः, शमादिपरिग्रहे सति तदुपदेशकादागमात् तत्प्रतिपत्तिः, आगमात् शमादिप्रतिपत्तौ च सत्यां शमादिपरिग्रह इति भावः।

किञ्च, नाट्ये व्यापृतान् भरतान् = नटान्, ''नेमे रामादयः किन्तु नटाः'' इति निश्चिन्वन्तोऽपि प्रेक्षका मिथ्यारामाद्यवभासेनानुवर्तमानेन शोकभयादिमन्तो भवन्तीति दृश्यते। एवं गुडस्य माधुर्यं निश्चिन्वाना अपि पित्तदूषितरसना जना मिथ्यातिक्तावभासेन दुःखिता भवन्ति, यथा वास्तविकतिक्तावभासेन भवन्ति, तद्वदित्यर्थः। अत एव वास्तविकतिक्तस्येव अवास्तविकतिक्तस्यापि तस्य गुडस्य थूत्कृत्य त्यागः क्रियते। तस्माद् ब्रह्मात्मभावनिश्चयवताऽपि पुंसा तस्यानुवर्तमानस्य मिथ्यावभासस्य निवृत्तये साधनान्यपेक्षणीयान्येव।

नन्वेवं यज्ञादिसाधनापेक्षणान्मुक्तेः कार्यत्वापत्त्या तस्या नित्यत्वं भज्येतेति शङ्कायामाह – **यथेति**। अर्थाद् यथा शब्दप्रमाणादात्मतत्त्वाभिव्यक्तौ = अभिव्यज्यमाने

**यदपि – पृथक्कार्या एव कर्मविधयो ज्ञानाधिकारमवतारयन्ति, अपाकृतर्णत्रयस्य तत्राधिकारात् – तदपि न नियोगतः, आश्रमविकल्पस्य**

---

अवस्थाविशेषे स्वीक्रियमाणेऽपि न मुक्तेः कार्यता प्रसज्यते, तथैव यज्ञादिसाधनेभ्य आत्मतत्त्वस्य साक्षात्कारात्मके आनन्दावस्थाभिव्यक्तिविशेषे स्वीक्रियमाणेऽपि मुक्तेः कार्यत्वप्रसङ्गो नैव भविष्यतीति बोध्यम्। उभयथाऽपि अवस्थाविशेषात्मिका मुक्तिरभिव्यज्यत एव न तु क्रियत इति रहस्यम्।

ननु शाब्दज्ञानमात्राद् यदि न मुक्तिस्तर्हि ज्ञानान्मुक्तिमुपदिशन्तीनां "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतीनां का गतिरिति चेदाह – **श्रुतयस्त्विति**। अर्थाद् अभ्यासेनोपासनादिना या परिनिष्पत्तिर्ज्ञानप्राकट्यम् = साक्षात्कारात्मक आत्मतत्त्वप्रकाश इति यावत् – तद्रूपा याऽवस्था तद्विषयिण्यो भविष्यन्ति। अथवा शब्दः साधनं यस्य साक्षात्कारिज्ञानस्य, तदपेक्षा उक्तश्रुतयो भविष्यन्ति। अतो न शाब्दज्ञानस्य निरर्थकत्वप्रसक्तिरिति। अयमभिप्रायः – "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतिः शाब्दज्ञानोत्तरमभ्यासाज्जायमानसाक्षात्कारिज्ञानाभिप्रायिकाऽस्ति। एतावता शाब्दज्ञानस्य परोक्षस्य यज्ञोपासनादिप्रयुक्तस्य साक्षात्कारिज्ञानस्य चोभयोरेव मिलित्वा अवस्थाविशेषस्वरूपाया मुक्तेरभिव्यञ्जकत्वं सिध्यतीति ज्ञानकर्मणोर्नैकतरस्यापि निरर्थकत्वम्। तयोरपि मध्ये शाब्दज्ञानं हेतुरुत्तरस्य साक्षात्कारिज्ञानस्य। एतदेवाभिप्रेत्योक्तम् – **तद्धेतुत्वादुत्तरस्येति**। उत्तरस्य साक्षात्कारिज्ञानस्य तद्धेतुत्वात् = शाब्दज्ञानहेतुकत्वादित्यर्थः। तथा च शाब्दज्ञानं परम्परया मुक्तिहेतुः साक्षात्कारिज्ञानं च साक्षान्मुक्तिहेतुरिति विवेकः। अत उक्तश्रुतौ विद्धातुना उभयमपि ज्ञानमुच्यत इति न काप्यसङ्गतिरिति बोध्यम्।

यदपि पूर्वोद्दिष्टे "अन्येषां दर्शनम्" इति तृतीयकल्पे पृथक्कार्याः पृथक्फला एव कर्मविधयो मुमुक्षूणां कृते ज्ञानाधिकारमवतारयन्ति, तेषां ज्ञानाधिकारप्रदाने प्रयोजका भवन्ति। अर्थात् कर्मविधीन् उपेक्षमाणानां पुंसां ज्ञानेऽधिकार एव न भवतीति उक्तम्।

अयं भावः – यद्यपि सर्वेषां कर्मविधीनां स्वतन्त्रं फलमस्ति स्वर्गादिरूपम्, तथापि स्वर्गादिफलकामनारहितैर्मुमुक्षुभिरपि अग्निहोत्रादिविहितकर्माणि अनुष्ठे-

स्मरणात्।''तस्याश्रमविकल्पमेके''(गौ०ध० सू० १।३।१),''यमिच्छेत् तमावसेत्'' इति श्रवणात्। ''एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुह्वाञ्चक्रिरे'' (कौषीत० २।४) तथा ''किं प्रजया करिष्यामः'' (बृ०४।४।२२) तथा ''किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे'' इति कर्मत्यागदर्शनात्।

प्रतिपन्नगार्हस्थ्यस्यात्मविद्ययैव कृतकृत्यतां मन्वानस्य ऋणापाकरणं प्रत्यनादृतस्य विहिताकरणनिमित्तस्य पाप्मनो विद्योदयप्रतिबन्धृत्वं दर्शयति – ''ऋणानि त्रीण्यपाकृत्य'' (मनु० ६।३५) इति।

---

यान्येव। अन्यथा ऋणापाकरणाभावाद् आत्मज्ञानप्राप्तावधिकार एव तेषां सुदूरं हीयते। तदुक्तम्– ''ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्''(मनु० ६।३५) इति। कल्पमिमं दूषयति – **तदपीत्यादिना**। सर्वो हि मुमुक्षुः ऋणत्रयमपाकृत्यैव मोक्षाधिकारमर्हतीति नास्ति नियोगः, नियम इत्यर्थः। यो हि गार्हस्थ्यमाश्रितस्तस्यैव कृते उक्तो नियमः। यदि आश्रम एवानियतस्तदा तत्प्रयुक्तस्य ऋणत्रयापाकरणनियमोऽपि नास्ति। आश्रमस्यानियतत्वे चापि श्रुतिरस्ति प्रमाणम् – ''यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्'' इति (जाबाल० ४।२)। स्मर्यते चाश्रमविकल्पो यथा – ''तस्याश्रमविकल्पमेके (गौ० ध० सू० १।३।१) यमिच्छेत् तमावसेत्'' इति।''एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुह्वाञ्चक्रिरे''(कौषीत० २।४) तथा ''किं प्रजया करिष्यामः'' (बृहदा० ४।४।२२), ''किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे''(बृहदारण्य०) इति च कर्मत्यागो दृश्यते। मूले कर्मत्यागपदेन प्रजोत्पादनस्वाध्यायानुष्ठानत्यागावप्युपलक्षितौ स्तः।

तस्माद् यो मुमुक्षुजनो गार्हस्थ्यमाश्रितोऽपि ब्रह्मात्मविद्ययैव कृतकृत्यतां मन्यमान ऋणापाकरणं प्रति अनादरभावेन तदुपेक्षते, तस्य जनस्य श्रुतिस्मृतिविहितस्याप्यकरणनिमित्तः पाप्मा समुदियात्, स च पाप्मा तस्य मुमुक्षोर्जनस्य विद्योदयं प्रति प्रतिबन्धको भविष्यतीत्ययमेवाभिप्रायः''ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्'' इति मनुवचनस्येति बोध्यम्।

**इदं तु युक्तम् – कार्यान्तरनिराकाङ्क्षाणामपि कर्मणां संयोगपृथक्त्वात् ''तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन'' (बृ० ४।४।२२) इति विद्याङ्गभावः। सोऽप्युत्पत्त्यर्थतया, न प्रयाजादिवत् कार्योपयोगेन, विद्यायाः कार्यान्तराभावात्।**

---

अतो नायं नियमो यद् अपाकृत-ऋणस्यैव मोक्षेऽधिकारः, आश्रमान्तरे स्थितस्यापि श्रुतौ मोक्षाधिकारस्य प्रतिपादितत्वात् ''यदि वेतरथा'' इत्यादिना। एवं, यद्यपाकृत-ऋणत्रयस्यैव मोक्षेऽधिकारः स्यात् तदा ''एतद्ध स्म वै'' इत्यादि-श्रुतिभिर्दैवऋणापाकरणहेतोरग्निहोत्रादिकर्मणाम्, पैत्र-ऋणापाकरणहेतोः प्रजोत्पादनकर्मणः, तथाऽऽर्ष-ऋणापाकरणहेतोः स्वाध्यायस्य च त्यागो न विधीयेतेति आशयः।

''अन्ये तु'' इति चतुर्थकल्पे संयोगपृथक्त्वेन सर्वेषामेव कर्मणामात्मज्ञानाधिकारानुप्रवेश इति पूर्वमुद्दिष्टम्। तदेव दूषयितुमवतारयति – **इदं तु युक्तमिति**। अयमर्थः – अग्निहोत्रादिकर्माणि यद्यपि विधिवाक्योक्तस्वर्गादि-कार्यैरेव निराकाङ्क्षाणि सन्ति न कार्यान्तरमपेक्षन्ते, तथापि ''तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन'' इति श्रुत्यनुसारं संयोगपृथक्त्वाद् ब्रह्मात्मविद्यां प्रत्यपि अङ्गत्वं भजन्ते। इत्येवं रीत्या कर्मात्मज्ञानयोः सम्बन्धः सिद्ध्यति। पृथक्त्वेन संयोगः संयोगपृथक्त्वम्। कर्माणि स्वफलस्वर्गादिभिरपि संयुज्यन्ते, आत्मज्ञानेनापि च संयुज्यन्त इति संयोगपृथक्त्वम्।

ननु प्रकृते कर्मणां ब्रह्मात्मविद्यां प्रति कीदृशोऽङ्गभाव इति जिज्ञासायामाह – **सोऽपीति**। द्विविधो ह्यङ्गभावो भवति उत्पत्तिप्रयोजनेन तदीयकार्योपयोगेन चेति। यथा, द्रव्याणां प्रयाजादीनां च यागोत्पत्तावपि उपयोगः, यागकार्ये स्वर्गे चोपकार इत्युभयथा अङ्गभावो भवति। किन्तु प्रकृते अग्निहोत्रादिकर्मणां ब्रह्मात्मविद्यां प्रति तदुत्पत्तिप्रयोजनेनैवाङ्गत्वं न तु विद्याकार्योपयोगेन, दर्शपौर्णमासादियागस्य स्वर्गादिकार्यवद् विद्यायाः कार्यान्तराभावात्। न हि ब्रह्मात्मविद्यायां प्रादुर्भूतायामन्यत् किमपि कार्यान्तरमपेक्षितमवशिष्यते वा। मोक्षः कार्यमिति चेत्, न, विद्याया एव मोक्षत्वात्। यदि मोक्षो विद्याकार्यं स्यात्, अनित्यत्वं मोक्षस्य प्रसज्येत।

**संस्कारपक्षो वा, स्मृतेः, संस्कृतस्य हि विद्योत्पत्तेः। तदुक्तम् — "विहितत्वाच्चाश्रमकर्मापि" इति। (ब्र०सू० ३।४।३२)**

**ननु दृष्टोपाय एव विद्योत्पादः, तत्र दृष्टैवेतिकर्तव्यतापेक्ष्यतां शमदमादिसाधनविशेषश्चित्तविक्षेपस्य विहन्त्री, समाहितचित्तस्याभ्यस्यतो ज्ञानप्रसादोत्पत्तेः, न तु यज्ञादयः, तैर्विनाप्यभ्यासेन तत्सम्भवात्।**

---

अथवा पुरुषसंस्कारतया कर्मणामुपयोगः। कर्मभिः संस्कृतो हि पुरुष आत्मज्ञानाधिकारी भवतीति पञ्चमः कल्प एव युक्तः। तथा च मनुस्मृतिः — "महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः"। इयं तनुः, ब्राह्मी क्रियते ब्रह्मविद्याया योग्या सम्पाद्यत इत्यर्थः। "यस्यैते चत्वारिंशत् संस्काराः" इति गौतमधर्मस्मृतिरपि चात्र प्रमाणम्। अत्रैव ब्रह्मसूत्रमपि (३।४।३२) प्रमाणयति — **"विहितत्वाच्चाश्रमकर्मापि"** इति। अयं सूत्रार्थः— विद्या हि न केवलं स्वोत्पत्तये शमदमादिकमेवापेक्षते, किन्तु ब्रह्मचर्याद्याश्रमचतुष्टयसम्बद्धानि यथाक्रमम् अग्निसमिन्धनाग्निहोत्र-तपश्चरण-ध्यानादिकर्माण्यपि विद्याऽपेक्षते, आश्रमकर्मत्वेन एषां विहितत्वादिति। तथा च सिद्धः कर्मात्मज्ञानयोः सम्बन्ध इति।

विद्योत्पत्तौ यज्ञादेर्नाङ्गभाव इत्याशङ्कते — **नन्विति**। दृष्ट उपायो यस्य स दृष्टोपायो विद्योत्पादः। अर्थाद् विद्योत्पत्तेरुपायभूतोऽभ्यासः, स च दृष्टरूपः। अतो दृष्टस्योपायस्येतिकर्तव्यताऽपि दृष्टरूपैव भवेत्। यथा पाकस्य उपायभूतोऽग्निर्दृष्टरूपः, अतस्तस्येतिकर्तव्यता (कर्तव्यस्य प्रकार इतिकर्तव्यता) कर्तव्यस्याग्निकार्यस्य पाकस्य यः प्रकारः सोऽग्नेरितिकर्तव्यता = अग्निसमिन्धनादिका, साऽपि दृष्टैव भवति। तद्वद् विद्योत्पादस्योपायो अभ्यासोऽपि दृष्टरूप एवेति तस्येतिकर्तव्यतापि दृष्टरूपैवापेक्षिता भवति शमदमादिरूपा, न तु यज्ञादयोऽदृष्टस्यैव जननात्। यतः शमदमादिस्वरूपा इतिकर्तव्यतैव दृष्टरूपा समाधिविरोधिनश्चित्तविक्षेपस्यापहन्त्री भवति। अतोऽभ्यासरूपाद् दृष्टोपायाद् विद्योत्पादे दृष्ट एव शमदमादिः प्रकार आश्रयितव्यो न यज्ञादयः। यतो हि यज्ञादिभिर्विनापि शमदमादिना समाहितचित्तस्यैव अभ्यासमाचरतो विशुद्धज्ञानरूपस्य

**सत्यम्, तथा चोर्ध्वरेतसां चाश्रमिणां विनापि तैर्विशुद्धविद्योदय इष्यते, किन्तु कालकृतो विशेषः। साधनविशेषाद्धि सा क्षिप्रं क्षिप्रतरं च व्यज्यते, तदभावे चिरेण चिरतरेण च । तदुक्तम्– "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" (ब्र० सू० ३।४।२६)। एषोऽर्थः– "यज्ञेन दानेन" (बृ० उ० ४।४।२२) इति श्रवणात् कर्माण्यपेक्ष्यन्ते विद्यायामभ्यास-लभ्यायामपि, यथाऽन्तरेणाप्यश्वं ग्रामप्राप्तौ सिद्ध्यन्त्यां शैघ्र्यायाक्लेशाय वाऽश्वोऽपेक्ष्यते।**

**ननु विद्यारूपं ब्रह्मैव, न विद्या ब्रह्मणोऽन्या, तच्च नित्यमकार्यम्, तत्र कथं किञ्चिदपेक्ष्येत ?**

---

ज्ञानप्रसादस्योत्पत्तिः। तस्माद् ज्ञानोत्पादे यज्ञादिर्नेतिकर्तव्यतारूपः, तेन विनाऽपि अभ्यासं कुर्वतो ज्ञानोत्पत्तिसम्भवादिति।

अभ्युपेत्योत्तरयति – **सत्यमित्यादिना**। एतत् स्फुटीकरोति – **तथा चेति**। अयं भावः– आश्रमिणोऽपि ये ऊर्ध्वरेतसो भवन्ति, तेषां यद्यपि यज्ञादिभिर्विनापि विशुद्धज्ञानोदयो भवतीतीष्यते "धर्मं सुखं च ज्ञानं च" इत्याद्यागमैः, तथापि केवलाभ्यासापेक्षया कर्मादिसाहित्येऽस्ति कालकृतो विशेषः। साधनविशेषो-पचयापचयाभ्यां फलेऽपि शीघ्रविलम्बादिरूपौ कालकृतावुपचयापचयौ भवतः। अतोऽभ्यासेन सह यज्ञादिसाधनप्रकर्षमनुरुध्य विद्योदयः शीघ्रं शीघ्रतरं च भवति, तदभावमनुसृत्य च चिरेण चिरतरेण च विद्योदयो भवति। केवलाभ्यासाच्चिरेण विद्याया अभिव्यक्तिर्भवति, यज्ञादिष्वेकद्व्यादिसाधनसाहित्यवृद्ध्या शीघ्रं शीघ्रतरं च विद्योदयो भवतीति हृदयम्।

अत्रैव बादरायणसूत्रमुदाहरति – "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" इति। सूत्रार्थं स्वयमुपन्यस्यति ग्रन्थकारः – **एषोऽर्थ इति**। स्फुटोऽयमर्थः।

कर्मात्मज्ञानयोः सम्बन्धे पुनराक्षिपति – **नन्विति**। अयं शङ्कार्थः – "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेर्ब्रह्म ज्ञानस्वरूपमुक्तम्, विद्या ज्ञानमित्यनर्थान्तरम्।

**उच्यते – यथोपधानतिरोहितरूपस्फटिकमणिरुपधानावकर्षणं स्वरूपाभिव्यक्तयेऽपेक्षते, तथेहापि द्रष्टव्यम्। न हि स्फटिकमणेः पूर्वरूपं विनष्टमुपधानसन्निधेः, तदपगमे चान्यदुत्पन्नम्। न ह्यकस्मादनेकविस-**

---

तथा च विद्या ब्रह्मणो न भिन्ना, ब्रह्म च नित्यत्वादकार्यम्। अतोऽकार्यब्रह्मणोऽभिन्ना विद्यापि न कस्यापि कार्यम्। अतोऽकार्यभूता विद्या कथं स्वोत्पत्त्यर्थं यज्ञादिसाधनमपेक्षेत ?

समाधानमाह – **उच्यत इति**। उपधानेन = जपाकुसुमाद्युपाधिना तिरोहितं निजशुक्लस्वरूपं यस्य, स स्फटिकमणिः स्वशुक्लस्वरूपाभिव्यक्तये जपाकुसुमाद्युपाधेरपसारणमपेक्षते, तथेहापि अकार्यमपि ब्रह्म अविद्यावृतं निजं विद्यास्वरूपमभिव्यञ्जयितुं यज्ञादिकर्माण्यपेक्षत इति न किञ्चिदसामञ्जस्यम्। न हि दृष्टान्ते स्फटिकमणावुपाधिसान्निध्यात् तदीयं पूर्वरूपं शुक्लं विनष्टं भवति, उपाध्यपसारणे च पुनरन्यत् शुक्लरूपमुत्पद्यत इत्यस्ति सर्वजनसाधारणोऽनुभवः।

ननु स्फटिकदृष्टान्तो न प्रकृते घटते, ब्रह्मस्वरूपस्य ज्ञानादेर्नित्यत्वात्, स्फटिकस्वरूपस्य च शुक्लादेरनित्यत्वात्। तथा च दृष्टान्तवैषम्यम् इति चेत्, न, स्फटिकस्य यद्रूपं जपाकुसुमोपाधिसन्निधानात् पूर्वं शुक्लमभूत्, तन्न कुसुमोपाधिसन्निधानेन विनष्टं भवति, न वा कुसुमापसारेण नवीनं शुक्लरूपं स्फटिके उत्पद्यते। एतदेवाह – न हि स्फटिकमणेरित्यादिना अन्यदुत्पन्नमित्यन्तेन ग्रन्थेन। तत्रोपपत्तिमाह – **न ह्यकस्मादित्यादिना**। अयं भावः – **स्फटिकस्य** जपाकुसुमोपधानात् पूर्वे शुक्लक्षणास्तथा जपाकुसुमोपधानात् परेऽपि शुक्लक्षणाः, ते च परस्परं सभागाः = सदृशक्षणाः, तथा मध्ये कुसुमसन्निधानावस्थायां लोहितक्षणाः पूर्वोत्तरशुक्लक्षणेभ्यो विसभागाः विसदृशाः सन्ति। अत्र नैतत् स्वीकर्तुं शक्यते यद् मध्यवर्त्यनेकविसदृशैर्लोहितक्षणैर्व्यवहितस्य पूर्ववर्तिशुक्लक्षणसदृशस्याभिनवस्य शुक्लक्षणस्योत्पत्तिरेकस्मादेव भवतीति। न चैवं सम्भवत्यपि। तस्माल्लोहितक्षणेभ्यः पूर्वो यः शुक्लः क्षणः, स एव क्षणो लोहितोत्तरमप्यनुवर्तते। स्फटिके पूर्ववर्त्येव शुक्लरूपं कुसुमापसारणेऽभिव्यज्यतेमात्रम्, नोत्पद्यते। तद्वद्

**भागक्षणव्यवहितस्य पूर्वसभागक्षणस्योत्पत्तिः सम्भवति। न ह्यग्नि-विगमेऽङ्गारेभ्यः पुनः काष्टसन्ततिप्रवृत्तिः।**

**तस्माद् यथैवाकार्यं स्फटिकरूपमुपधानापकर्षणमपेक्षते, तथाऽऽत्म-रूपमपि।**

---

अविद्योपाधेर्निवृत्तौ सत्यामपि पूर्वतो वर्तमानमेव सत्यज्ञानादिरूपं ब्रह्मणो यथा-वदनुवर्तते अभिव्यज्यते चेति न विषमो दृष्टान्तः।

ननु लोहितक्षण एवोत्तरस्य नवस्य शुक्लक्षणस्य हेतुर्भविष्यतीति नाकस्मि-कत्वमिति चेत्, न, लोहितक्षणः शुक्लक्षणविसदृशत्वेन न शुक्लक्षणस्य हेतु-र्भवितुमर्हति। अन्यथा घटक्षणोऽपि पटस्यारम्भको भवेत्। भवति तु घटक्षणो घटस्यैवारम्भको न पटस्येति। ननु विसदृशमपि काष्ठं विसदृशस्याङ्गारकस्यारम्भकं भवतीति चेत्, न, तत्र विसदृशस्याग्नेरुपनिपाते जात एव काष्ठं विसदृशाङ्गारोत्पत्ते-र्हेतुर्भवति। अतो नानेन दृष्टान्तेन विसदृशो लोहितक्षणः स्फटिके शुक्लक्षण-मुत्पादयितुमर्हति, तथाविधहेतूपनिपाताभावात्। तस्मात् कुसुमापायेऽभिव्यज्यत एव स्फटिके शुक्लत्वं नोत्पद्यत इति।

ननु मा भूद् विसदृशात् शुक्लरूपोत्पत्तिः स्फटिके लोहितक्षणेभ्यः पूर्ववर्ती यः सदृशः शुक्लक्षणः स एव कुसुमापसारणे कृते पश्चात् सदृशं शुक्लक्षणान्तर-मुत्पादयिष्यतीति चेत्, न, मध्येऽनेकैर्लोहितक्षणैर्व्यवहितस्य अत एव बहुपूर्वं विनष्टस्य पूर्वशुक्लक्षणस्य पश्चात्तनशुक्लक्षणोत्पादने हेतुत्वासम्भवात्। अत एव अग्निविगमे सति अङ्गारकानन्तरं व्यवहितमपि पूर्वतमं काष्ठमुपादानीकृत्य न पुनः काष्ठपरम्परा प्रवर्तते। अत्र "अग्निविगमे" इति पदोल्लेखस्य इदं प्रयोजनमस्ति यद् येन अग्निना काष्ठाद् अङ्गारकं कृतम्, स त्वग्निर्विगतो जात इति निष्प्रतिबद्धं पूर्वतनं काष्ठम् अग्रे पुनः काष्ठपरम्परां प्रवर्तयेत्। किन्तु नेदं युक्तम्, अङ्गारक-क्षणव्यवहितस्य पूर्वतनकाष्ठस्य पश्चात् काष्ठपरम्पराप्रवर्तकत्वासम्भवात्। अत एव जपाकुसुमापाये पूर्वतनः शुक्लक्षणो नोत्तरं प्रतीयमानस्य शुक्लक्षणस्योत्पत्तिहेतुः। अतः स्फटिके कुसुमापाये पूर्वसिद्ध एव शुक्लक्षणोऽभिव्यज्यतेमात्रम्, नोत्पद्यते।

**स्यादेतत् – ज्ञानं तत्र सापेक्षम्, तच्च स्फटिकाद् भिन्नं कार्यम्, पुरुषप्रयत्नो हि तत्र ज्ञानार्थः। किं पुनर्ज्ञानं स्वरूपेणैवार्थितम्। आहोस्विदर्थस्वभावसिद्धये ? न तावत् स्वरूपेण, अर्थेन व्यवहारात्। न विज्ञानमात्रनिबन्धनो व्यवहारः, मिथ्याज्ञानेनापि प्रसङ्गात्।**

---

एवमेव पूर्वसिद्धैव ब्रह्माभिन्ना विद्याऽभ्यासेन अभिव्यज्यत एव, न क्रियत इति न आत्मस्वरूपस्य मोक्षस्य कार्यत्वप्रसङ्ग इति बोध्यम्। दृष्टान्तमुपपाद्य तामेव गतिमात्मस्वरूपेऽपि योजयति – **तस्मादिति**।

ननु पूर्वमुक्तम् – ब्रह्माभिन्ना विद्या ब्रह्मवदेव अकार्यभूता, अतो अकार्यभूताया विद्याया अभिव्यक्तये यज्ञादिसाधनापेक्षा भवतीति । किन्तु स्फटिकविषये तु भिन्ना स्थितिः। स्फटिकस्वरूपं तु स्थितमेव, अतो न स्फटिकं निजस्वरूपलाभाय कुसुमापनयनमपेक्षते । तस्मात् स्फटिकस्वरूपं निरपेक्षम्, ज्ञानमेव तदीयं सापेक्षम्। अर्थाद् ज्ञानमेव स्वस्वरूपलाभाय कुसुमापकर्षणमपेक्षत इत्यतो ज्ञानं तत्र सापेक्षम्, सापेक्षत्वाच्च तद् निरपेक्षात् स्फटिकाद् भिन्नं कार्यभूतञ्च। अत एव हि तत्र स्फटिकज्ञानार्थः पुरुषप्रयत्नः कुसुमापकर्षणरूपः, न स्फटिकार्थः। तथा सति च विद्याविषये स्फटिकदृष्टान्तो न घटते, वैषम्यात्। यतस्तत्र विद्या ब्रह्मणो न भिन्ना न वा कार्यभूता। अतोऽकार्यभूता विद्या कथं यज्ञादिसाधनमपेक्षेतेति शङ्कायां समाधानमाह – **किं पुनर्ज्ञानमिति**। अयमभिप्रायः – मन्ये, ज्ञानार्थः पुरुषप्रयत्नो भवतीति। किन्तु तज्ज्ञानं स्वत एवार्थितं भवति अथवा अर्थस्वभावाय (अर्थस्वरूपाय) अर्थितं भवति ? न तावत् स्वरूपेणेति प्रथमपक्षो युक्तः, अर्थेनैव हि लोके आनयनादिव्यवहारसाधनात्। लोके व्यवहारो यदि ज्ञानमात्रनिबन्धनः (ज्ञानमात्रहेतुकः) स्यात्, तदा मिथ्याज्ञानमपि ज्ञानमेवेति कृत्वा ततोऽपि व्यवहारः प्रसज्येत । न हि शुक्तौ मिथ्यारजतज्ञानादाभूषणनिर्माणादिव्यवहारो भवति लोके।

यदि मन्यते अर्थस्वरूपाय = अर्थस्वरूपसिद्धये ज्ञानमर्थितं भवतीति चेत्, एवं सति यो हि पुरुषव्यापारो जपाकुसुमापकर्षणरूपो ज्ञानार्थोऽस्ति, सोऽर्थेनैव स्फटिकेन स्वतःस्थितेन अर्थितोऽपेक्षितो भवतीति ।अर्थात् स्वरूपतः

**अथार्थस्वभावाय ज्ञानमर्थ्येत, तदर्थो व्यापारस्तेनार्थितो भवति। न च ज्ञानादर्थे कश्चिद् विकारः, तयोरसम्बन्धात्, योग्यदेशतायाः सर्वत्र भावात्। सर्वप्रतिपत्तॄणां च विदितत्वप्रसङ्गात्, ध्वस्तानागतेषु च तदसम्भवात्।**

**तस्माद् यथाऽतिरोहितमपि तिरोहितमिवाभिव्यज्यत इव प्रयत्नापेक्षम्, तथाऽऽत्मतत्त्वमप्यतिरोहितं तिरोहितमिव प्रयत्नादभिव्यज्यत इवेति पुष्कलम्।**

---

स्थित एव स्फटिको व्यवहाराय ज्ञानार्थमपि व्यापारमपेक्षत इति। तथा च सति यथा पूर्वस्थित एव स्फटिको व्यवहाराय ज्ञानमपेक्षते, ज्ञानार्थं च पुरुषप्रगल्भमपेक्षते, तथैव नित्यसिद्धमपि अकार्यमपि ब्रह्म स्वाभिन्नविद्याभिव्यक्तये यज्ञादिसाधनमपेक्षिष्यत इति न काचिदनुपपत्तिः।

ननु यदि सव्यापारं ज्ञानम् अर्थार्थमस्ति, तदा तेन ज्ञानेन नूनमर्थे कश्चिद् विकारो जननीयः, तथा च ज्ञानेन अर्थो विकारवान् भवेत्। एवं रीत्या ब्रह्मणोऽभिव्यक्तिस्वीकारे तस्यापि विकारापत्तेरनित्यत्वं प्रसज्येत इत्याशङ्कायामाह – **न चेति**। अयमर्थः – न हि ज्ञानेन अर्थे कश्चिद् विकार आयाति, अतोऽभिव्यक्तिमात्रेण ब्रह्मणि नैव विकारप्रसक्तिः स्यात्। अत्रोपपत्तिमाह – **तयोरसम्बन्धादिति**। ज्ञानार्थयोरान्तरबाह्यतया विकारजनकसम्बन्धाभावात्। अर्थाद् बाह्योऽग्निर्बाह्यमिन्धनं विकुर्यादिति सम्भवति, किन्तु आन्तरं ज्ञानं बाह्यमर्थं कथं विकुर्यात्? तयोः संयोगसमवायतादात्म्याभावादिति दृष्टान्तेऽपि यदि नास्ति विकारस्तदा का कथा ब्रह्मणीति समाधातुराशयः।

यद्युच्येत – संयोगसमवायाद्यभावेऽपि योग्यदेशतैव ज्ञानार्थयोः परस्परं सम्बन्धो भवेदिति, तदपि न युक्तम्, ज्ञानस्य योग्यो देशो सर्वोऽपि विषय इति ज्ञानद्वारा रूपे ज्ञातताजननदशायां रसेऽपि ज्ञातता जनिता स्यात्। आम्रादौ रूपेणेव रसेनापि ज्ञानस्य योग्यदेशतासत्त्वात्। एवं ज्ञानार्थयोर्योग्यदेशतासम्बन्धाभ्युपगमे स सम्बन्धो यथा एकस्य कृनेऽस्ति, तथा सर्वस्यापि कृते सम्भवतीत्येकस्य ज्ञातृ रूपे विदिते सर्वेषां प्रतिपत्तॄणां रूपं विदितं स्यात्। एवं योग्यदेशता-

**संहृताखिलभेदोऽतः सामान्यात्मा स वर्णितः ।**

**हेमेव पारिहार्यादिभेदसंहारसूचितम् ॥ ३ ॥**

**यतश्च विशेषप्रत्यस्तमयमुखेन तन्निरूपणम्, अतोऽन्यैर्ब्रह्मविद्याभियुक्तैः सामान्यरूपं ब्रह्म निरूपितम् – "स एष महानज आत्मा सत्तालक्षणः" (बृ० ४।४।२४) तथा "सत्तैव सर्वभेदयोनिः प्रकृतिः परा" (बृ० ४।४।२४) इति ।**

---

सम्बन्धपक्षे वर्तमानेऽर्थे ज्ञातता सम्भवेऽपि अतीतानागतविषययोः कथं ज्ञातता सम्भवेत् ? भवति च तयोरपि ज्ञातता लिङ्गादिनेति । तस्मान्न ज्ञानार्थयोर्योग्यदेशतासम्बन्धः ।

तस्माद् यथा स्फटिकद्रव्यं जपाकुसुमेनातिरोहितमपि तिरोहितमिव भवति, अतिरोहितत्वादेव वस्तुगत्या न तदभिव्यज्यते, तथापि अभिव्यज्यमानमिव कुसुमापकर्षणरूपं पुरुषप्रयत्नमपेक्षते निजवास्तविकशुक्लस्वरूपसाक्षात्काराय, तथैव आत्मतत्त्वमपि स्वरूपानवभासात् तिरोहितमिव यज्ञादिसाधनेभ्योऽभिव्यज्यत इवेति सिद्धं ब्रह्मात्मतत्त्वसाक्षात्काराय शाब्दज्ञानस्य यज्ञोपासनादिसाधनापेक्षत्वमिति सर्वं समञ्जसम् ।

**आम्नायतः प्रसिद्धिं च कवयोऽस्य प्रचक्षते ।**

**भेदप्रपञ्चविलयद्वारेण च निरूपणम् ॥**

इति कारिकया पूर्वं ब्रह्मसिद्धौ प्रमाणमुक्तं सविस्तरं व्याख्याता च **सा,** इदानीम् आम्नायगम्यस्य तद्ब्रह्मणः स्वरूपमाह – **"संहृताखिलभेदोऽतः" इति** कारिकया । व्याचष्टे च तां स्वयं ग्रन्थकृत् – **यतश्चेत्यादिना काण्डान्तभागेन।** अयमर्थः – यतः "भेदप्रपञ्चविलयद्वारेण च निरूपणम्" इति कारिकांशानुसारम् अशेषविशेषप्रत्यस्तमयद्वारा तस्य ब्रह्मणो निरूपणं भवति, अतोऽन्ये ब्रह्मविदो जनास्तद् ब्रह्म सामान्यस्वरूपं वर्णयन्ति । तथा चोक्तम् – "स एष महानज आत्मा सत्तालक्षणः" तथा "सत्तैव सर्वभेदयोनिः प्रकृतिः परा" इति श्रुतिभ्याम् । निर्विशेषं तद् ब्रह्म सामान्यतः सद्रूपं चिद्रूपमानन्दरूपमस्तीति । तत्र दृष्टान्तमाह कारिकायाम् –

**यथा सुवर्णतत्त्वं कटकाङ्गुलीयादिविशेषोपसंहारेण निरूप्यमाणं तत् सामान्यमिति।**

**ये वा – "निर्विशेषं न सामान्यं भवेच्छशविषाणवत्" (श्लो० वा०, पृ० ५४८) इत्यभावमाहुः, तान् प्रत्युच्यते – संहताखिलभेद इति।**

---

**हेमेवेति**। अर्थाद् यथा सुवर्णतत्त्वस्य अग्नौ सन्तापनेन स्वीयाः कटकाङ्गुलीयकादि-विशेषा विलीना भवन्ति, तदानीं च निरूप्यमाणं सत् सुवर्णसामान्यमात्रं तद् भवति। तदेव च तस्य वास्तविकं स्वरूपम्, तद्वदेव ब्रह्मापि सत्सामान्यं चित्-सामान्यमानन्दसामान्यं चास्तीति विज्ञेयम्। सामान्यरूपत्वे उपपत्तिरुक्ता – **"संहताखिलभेदोऽतः" इति।**

अयमर्थः – मीमांसका आहुः – "निर्विशेषं न सामान्यं भवेच्छशविषाणवत्"। अर्थात् सामान्यं यदि निर्विशेषं स्यात् तदा शशशृङ्गवद् अभावमात्रं शून्यं तुच्छं वा स्यात्। तस्मान्न किमपि सामान्यं विशेषरहितं भवतीति ब्रह्मापि यदि सामान्यमात्रं भवेत् तदाऽभावमात्रं स्यात्, भावरूपत्वं तस्य विलीयेत। अतः सविशेषमेवात्म-तत्त्वमङ्गीकरणीयमिति तेषामाशयः।

एषामेव निराकरणम् – **संहताखिलभेद इति**। अयमाशयः – निर्विशेषत्वेन हेतुना ब्रह्मणोऽसामान्यत्वं साध्यते मीमांसकैः, आहोस्विद् ब्रह्मणोऽभावः साध्यते ? यदि प्रथमः पक्षस्तदा सिद्धसाधनम्। यतो वयमप्येतदेव ब्रूमः। विशेषाणामेव तु सामान्यं भवति, सामान्यस्यैव च विशेषा भवन्ति। यदाऽस्माकं ब्रह्मवादिनां विशेषा एव न सन्ति तदा केषां सामान्यमपि भवेत् ? वस्तुगत्या नास्माकं मते ब्रह्मणो विशेषाः सन्ति सामान्यं वाऽस्तीति।

ननु यदि ब्रह्म न सामान्यात्मा तदा कथमुक्तम् – "सामान्यात्मा स वर्णितः" इति चेत्, सत्यं ब्रह्म न सामान्यात्मा विशेषप्रत्यस्तमयद्वारा तस्य निरूपणात् तु ब्रह्म सामान्यात्मा इत्युक्तम्। तस्मादौपचारिकस्तस्य सामान्यत्वप्रयोगो न मुख्य इति बोध्यम्।

**यदि तावदसामान्यत्वं साध्यते, सिद्धसाधनम्, विशेषाणामभावे केषां तत्सामान्यम्, सामान्यं तूक्तं ब्रह्मवादिभिः— विशेषप्रत्यस्तमयमुखेन निरूपणादुपचारतः। अथाभाव एव साध्यः, विशेषैरेवास्य निर्विशेषैर्व्यभिचार इति।**

**॥ इति श्रीमन्मण्डनमिश्रविरचितायां ब्रह्मसिद्धौ ब्रह्मकाण्डः पूर्णः॥**

---

द्वितीयोऽभावपक्षोऽपि न सम्यक्, व्यभिचारदोषग्रस्तत्वात्। अयमाशयः – ब्रह्म अभावरूपं निर्विशेषत्वात् शशशृङ्गवद् इत्यनुमानेन ब्रह्मणोऽभावरूपत्वं साध्यते चेत्, निर्विशेषत्वहेतुघटकीभूता ये विशेषाः, तेषु विशेषाः सन्ति न वा ? सन्ति चेदात्माश्रयोऽनवस्था वा स्यात्। अथ तेषु न सन्ति विशेषास्तदा तेऽपि निर्विशेषा जाताः, इति निर्विशेषत्वं हेतुस्तेषु विशेषेषु गतं किन्तु ते न अभावरूपाः, विशेषरूपत्वात्। अतो निर्विशेषत्वहेतुसत्त्वेऽपि अभावत्वसाध्याभावाद् भवति व्यभिचार इति सर्वमुपपन्नम्।

**॥ इति श्रीमन्मण्डनमिश्रकृतौ ब्रह्मसिद्धौ श्रीमदाचार्यकेदारनाथत्रिपाठिकृतं ब्रह्मकाण्डस्याद्यस्य विवेचनं सम्पूर्णम्॥**

■

# अथ तर्ककाण्डः

**ननु प्रत्यक्षादिभिर्व्यावृत्तानां भावस्वभावानामवगमान्नैकस्मिन्नद्वये शब्दः प्रमाणम्, प्रत्यक्षादिविरोधात्, ग्रावप्लवनाद्यर्थवचोवत्। उच्यते –**

**आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः।**
**नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते॥**

---

अद्वयं ब्रह्म शब्दप्रमाणगम्यमतो न तदवगमे प्रमाणान्तरापेक्षेति पूर्वं प्रत्यपादि, तन्नोपपद्यते, प्रत्यक्षादिविरोधात्। यथा हि "ग्रावाणः प्लवन्ते" इति वचनं न प्रमाणं प्रत्यक्षादिभिर्ग्राव्णामप्लवनदर्शनात्। तद्वदिहापि प्रत्यक्षादिभिः प्रमाणैः परस्परं व्यावृत्ता भिन्ना एव भावस्वभावा दृश्यन्ते। तस्माद् ब्रह्मात्मैक्यबोधकानि "ब्रह्मैवाहम्" इत्यादीन्यद्वैतश्रुतिवचांसि नाद्वयब्रह्मावगमे प्रमाणानीति शङ्कते – **नन्विति**।

अत्रोत्तरमाह – **उच्यत इति**।"आहुर्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चितः। नैकत्व आगमस्तेन प्रत्यक्षेण विरुध्यते"॥ इति समाधानकारिकाया अयमर्थः – विपश्चितो श्रुत्यर्थमीमांसकाः प्रत्यक्षं प्रमाणं सर्वथा विधायकमेव भवति न तु श्रुतिप्रमाणसिद्धस्य निषेधकं भवतीति ब्रुवन्ति। अतः प्रत्यक्षप्रमाणं ब्रह्मात्मैकत्वबोधकमागमं न विरुणद्धीति कारिकार्थः। तथा च प्रत्यक्षादिविरोधाद् इति हेतुरसिद्ध इति समाधातुराशयः।

नन्वत्र काण्डेऽद्वैतश्रुतीनां प्रामाण्योपपत्तये प्रत्यक्षादिप्रमाणान्तरविरोधपरिहारस्य प्रयासो निरर्थकः, प्रमाणान्तरविरोधस्यैव प्रकृतेऽकिञ्चित्करत्वात्। तथा हि – पुरुषवचनानि हि प्रमाणान्तरपरतन्त्राणि भवन्ति, यतः प्रमाणान्तरादर्थमवगत्यैव तानि प्रवर्तन्ते। अतः प्रमाणान्तरविरोधे सति पुरुषवचसाम-

**ननु प्रमाणान्तरपरतन्त्राणां पुरुषवचसां तद्विरोधाद् युक्तमप्रमाणत्वम्, स्वतन्त्रस्य त्वाम्नायस्यानपेक्षितप्रमाणान्तरप्रवृत्तेस्तद्विरोधेऽपि कस्मादप्रमाणत्वम्? आम्नायविरोधादेव तु प्रत्यक्षादीनि प्रमाणतायाः किमिति न च्यवन्ते? तुल्येऽनपेक्षत्वे न विशेषहेतुरस्ति। तत्र वृथा प्रमाणान्तरविरोधपरिहारपरिश्रम इति।**

**तत्र केचिदाहुः — प्रत्यक्षादिविरोधे आम्नायस्य दौर्बल्यम्, सापेक्षत्वात्। तथा हि — स्वरूपसिद्ध्यर्थमेव तावत् प्रत्यक्षादीन्याम्नायोऽपेक्षते। तथा च**

---

प्रमाणत्वमिति युक्तं भवतु नाम; किन्त्वाम्नायस्तु स्वतन्त्रो न स्वरूपलाभाय प्रमाणान्तरमपेक्षते। अतः स्वतन्त्रे आम्नायप्रमाणे प्रमाणान्तरविरोधोऽकिञ्चित्करः। तस्मात् प्रमाणान्तरविरोधे सत्यपि न आम्नायस्याप्रमाणत्वम्।

एवं प्रमाणान्तरनिरपेक्षोऽप्याम्नायो यदि प्रत्यक्षादिविरोधान्न प्रमाणं स्यात् तदाऽऽम्नायविरोधात् प्रत्यक्षादीनामेव प्रामाण्यं कुतो न च्युतं भवेत्? अनपेक्षतायास्तुल्यतया एकतरपक्षपातिनो विनिगमकस्य विशेषहेतोरभावात्। तस्मात् प्रमाणान्तरविरोधे सत्यपि आम्नायस्य प्रामाण्ये क्षत्यभावात् तद्विरोधपरिहारप्रयत्नोऽनावश्यक इति शङ्कते — **नन्वित्यादिना वृथा प्रमाणान्तरविरोधपरिहारपरिश्रम** इत्यन्तेन ग्रन्थेन।

अस्यामाशङ्कायां केषाञ्चिदेकदेशिनां समाधानमुपस्थापयति ग्रन्थकारः — **तत्र केचिदित्यादिना**। अयं समाधानाशयः — आम्नायो हि प्रत्यक्षादिसापेक्षो भवति। अतः प्रत्यक्षादिभिर्विरोधे सति दुर्बलो भवत्याम्नायः प्रत्यक्षाद्यपेक्षया। सति चाम्नायदौर्बल्येऽद्वयब्रह्मावबोधे प्रत्यक्षादिविरोधाद् आम्नायस्याप्रामाण्यं प्रसज्यते। तच्चाप्रामाण्यमाम्नायस्य मा प्रसक्तं भवेदित्येतदर्थं प्रत्यक्षादिप्रमाणान्तरविरोधपरिहार आवश्यक एव न निरर्थकः। आम्नायस्य प्रत्यक्षादिसापेक्षत्वमुपपादयति -

**तथा हीति**। यदि प्रत्यक्षादीनि नापेक्ष्येरन् तदाऽऽम्नायस्य स्वरूपमेव न प्रसिध्येत्। स्वरूपस्यैवासिद्धौ तु कथं तत्राम्नाये प्रामाण्यमनुमन्तव्यं भवेत्? प्रामाण्याभावे चाम्नायैकगम्यं ब्रह्मात्मैक्यं कथन्तरां सिध्येत्? तस्मादाम्नायः स्वरूप-

**तेषां प्रामाण्यमनुमन्तव्यम्, तदपबाधने स्वरूपस्यैव तावदसिद्धेः। न त्वेवमाम्नाये प्रत्यक्षादीनां काचिदपेक्षा। दृष्टव्यभिचारत्वाच्च शब्दस्य, प्रत्यक्षस्य चादृष्टव्यभिचारत्वात्।**

**अपि च सावकाशानवकाशयोरनवकाशं बलवत्, अनवकाशाश्च प्रत्यक्षादयः, सावकाशस्तु शब्दो गौणेनार्थेन। तथा हि – शक्यमेकत्वम-भेदश्रुतीनामुपचरितमवकाशो वर्णयितुम्, अविवक्षितार्थानां वा वेदान्तानां जपोपयोगोऽवकाशः। उपनिषदो वेदान्ता इति वर्णितम्।**

---

लाभार्थं प्रत्यक्षादीनि प्रमाणान्यपेक्षते। प्रत्यक्षादिसापेक्षत्वाच्च प्रत्यक्षाद्यपेक्षया स दुर्बलः। दुर्बलत्वाच्च यत्र प्रत्यक्षादिविरोधो भवति तत्र तद्बाधित आम्नायः स्वरूपमेव न लभते, प्रामाण्यन्तु तस्य दूरापास्तम्।

नेयं स्थितिः प्रत्यक्षादीनामस्ति। अर्थात् प्रत्यक्षादीनि प्रमाणानि न स्वरूपलाभाय आम्नायमपेक्षन्ते। अत आम्नायनिरपेक्षतया प्रत्यक्षादिप्रमाणानि आम्नायापेक्षया प्रबलानि। अत एवाम्नायविरोधे सत्यपि प्रत्यक्षादीनां प्रामाण्य-मक्षतमेव तिष्ठति। तस्माद् दुर्बलस्याम्नायस्य विषयसिद्ध्यर्थं प्रबलानां प्रत्यक्षादीनां विरोधपरिहारो नितरामावश्यक इति भावः।

प्रत्यक्षादीनां प्राबल्ये आम्नायस्य च दौर्बल्ये युक्त्यन्तरमाह – **दृष्टव्यभि-चारत्वादिति**। क्वचित् शब्दं श्रुत्वाऽपि अर्थं न लभते, यथा नद्यास्तीरे पञ्च फलानि सन्तीति मिथ्यावादिशब्दस्थले। अतः शब्दप्रमाणे क्वचिद् व्यभिचारो दृश्यते। प्रत्यक्षे तु निर्दोषेन्द्रियजन्ये न व्यभिचारो दृश्यते। तस्मादपि प्रत्यक्षापेक्षयाऽऽम्नायो दुर्बल इत्यायाति।

युक्त्यन्तरमाह – **अपि चेति**। अयमर्थः – सावकाशानवकाशयोर्मध्ये सावकाशं दुर्बलं भवति निरवकाशं च प्रबलं भवति। अत एव स्मर्यते शब्दशास्त्रे "निरवकाशो विधिरपवादः" इति। प्रत्यक्षादीनि प्रमाणानि निरवकाशानि भवन्ति तेषामचरितार्थतायाम्। अर्थात् प्रपञ्चभेद एव प्रत्यक्षादीनां विषयः, सोऽपि चेत्

**किञ्च व्याकुलत्वादाम्नायस्य अव्याकुलत्वात् प्रत्यक्षादीनाम्। कर्म-विधयो हि भेदाश्रया अभेदाश्रयाश्च वेदान्ताः परस्परपराहता असत्यपि**

---

श्रुतिविरोधान्न स्यात्, तदा प्रत्यक्षादयः सर्वथैव निर्विषयाः स्युरिति तेषां निरवकाशत्वं सिध्यति। शब्दस्तु स्वार्थे अचरितार्थोऽपि गौणार्थम् = उपचरितार्थ-मादाय सावकाशो भवति। अर्थात् प्रपञ्चे आत्मसु च मुख्यैकत्वाभावेऽपि सत्ता-द्यात्मना एकत्वमुपचरितमादाय "एकमेवाद्वितीयम्" इत्यादिश्रुतीनां सावकाश-त्वमस्तीति। अतस्तथाविध आम्नायः सावकाशतया दुर्बलो निरवकाश-प्रत्यक्षाद्यपेक्षया।

नियममिमं प्रकृते सङ्गमयति – **तथा हीति**। "एकमेवाद्वितीयम्" इत्यादी-नामभेदप्रतिपादिकानां श्रुतीनां मुख्यैकत्वे चरितार्थत्वाभावेऽपि सत्तादिना एकत्वरूपे उपचरितार्थे (गौणार्थे) चरितार्थतया सावकाशत्वमुपपादयितुं शक्यत इति वाक्यार्थः।

आम्नायस्य सावकाशत्वेन दुर्बलत्वे युक्त्यन्तरमाह – **अविवक्षितेति**। न विवक्षितोऽर्थो येषां वेदान्तानां तेऽविवक्षितार्था वेदान्ताः। अर्थात् "एकमेवाद्वितीयम्, ब्रह्मैवात्मा, ब्रह्मैवाहम्" इत्यादीनां वेदान्तानां योऽर्थो ब्रह्मात्मैक्यमिति स नोक्तश्रुतिभिर्विवक्षित इति। नन्वेवं तर्हि सर्वथाऽनुपयुक्ता एव वेदान्ता इति चेत्, न, जप एव तेषामुपयोग इति न अविवक्षितार्थवेदान्तानां निरुपयोगित्वम्। तथा च जपाद्युपयोगादेव वेदान्तानां सावकाशत्वम्, सावकाशत्वाच्च दुर्बलत्वं प्रत्यक्षाद्यपेक्षयेति। अतः प्रत्यक्षादिविरोधे उपस्थिते आम्नायप्रामाण्यसुरक्षणाय प्रत्यक्षादिप्रमाणान्तरविरोधपरिहार आवश्यक एवेति युज्यते प्रकृते तर्ककाण्डारम्भ इति भावः।

नन्वेवं वेदान्तानां सावकाशत्वेऽपि अद्वयब्रह्मप्रतिपादिकानामुपनिषदां किमायातमिति चेत्, न, उपनिषद एव वेदान्ता इति वर्णितं पूर्वम्।

प्रत्यक्षादिविरोधपरिहारस्य सार्थक्यं प्रकारान्तरेणाह – **किञ्चेति**। आम्नायो व्याकुलत्वाद् दुर्बलप्रामाण्यः प्रत्यक्षादयश्चाव्याकुलत्वात् प्रबलप्रामाण्याः सन्ति।

**प्रमाणान्तरविरोधे दुर्बलप्रामाण्याः, किं पुनरव्याहतप्रतिष्ठितप्रामाण्य-प्रत्यक्षादिविरोधे। तस्मादिदमविरोधाय प्रयत्यत इति।**

**मुख्यत्वाच्च। मुख्या हि प्रत्यक्षादयः। जातस्य जन्तोरपरकाल आम्नायः। स तैः प्रतिष्ठितार्थैरपहृतविषयः कल्पनीयार्थो बाध्यते, तदनुसारेण वार्थकल्पनामर्हति। अर्थतोऽपि च मुख्यता प्रत्यक्षादीनाम्। पदपदार्थविभागाधीन आम्नायार्थपरिच्छेदः, स च प्रत्यक्षादिष्वायतते। अतोऽविरोधाय प्रयत्यत इति।**

---

व्याकुलत्वञ्चेह परस्परव्याहतत्वम्। आम्नाया हि परस्परपराहताः। यतो हि कर्मविधयः साध्यसाधनेतिकर्तव्यतादिभेदानाश्रित्य प्रवर्तन्ते, वेदान्ताश्च सर्वाभेदमाश्रित्य प्रवृत्ता भवन्ति। तथा च भेदाभेदरूपविरुद्धविषयकत्वेन सर्वेऽप्याम्नायाः परस्परं व्याहताः सन्ति। अतः प्रमाणान्तरविरोधेऽसत्यपि कर्मविधिपराहतत्वादेव वेदान्तास्तावद् दुर्बलप्रामाण्याः सन्दिग्धप्रामाण्या वा जायन्ते। तत्रापि कर्मविधयो भेदाश्रिताः सन्तो भेदाश्रितैः प्रत्यक्षादिभिरविरुद्धत्वात् प्रत्यक्षादय इव कथञ्चित् प्रामाण्यमश्नुवीरन्। किन्तु वेदान्तास्तु कर्मविधिभिरिव प्रत्यक्षादिभिरपि विरुद्धाः सर्वथा दुर्बलतरप्रामाण्याः कथं ब्रह्मात्मैक्यबोधे प्रामाण्यमश्नुवीरन्? प्रत्यक्षादयो हि प्रबलतरविरोधिनो वेदान्तानाम्। यतः प्रत्यक्षादयो न परस्पर-व्याहतप्रामाण्याः। अतोऽव्याहतम्, आम्नायस्वरूपसिद्ध्यर्थत्वेन तथा सर्ववादि-सिद्धार्थत्वेन प्रतिष्ठितं च प्रामाण्यं येषां तैः प्रत्यक्षादिभिर्विरोधे सति तु वेदान्तानां सर्वथैवाप्रामाण्यमेव प्रसज्यत इति तेषामप्रामाण्यप्रसङ्गनिवारणाय प्रामाण्योप-पादनाय च प्रत्यक्षादिविरोधपरिहारे प्रयासः करणीय एवेति न निरर्थक-स्तर्ककाण्डारम्भ इति भावः।

प्रत्यक्षादिभिर्विरोधे सत्याम्नाय एव प्रत्यक्षादिभिर्बाधितो भवति, न त्वाम्नायेन प्रत्यक्षादयो बाध्यन्त इत्यत्र युक्त्यन्तरमाह - **मुख्यत्वाच्चेति**। मुख्या हि प्रत्यक्षादयः, जातस्य प्राणिमात्रस्य कृते पूर्वभावित्वाद् आम्नायस्य चोत्तरकालभावित्वेन अमुख्यत्वात्। पूर्वभावित्वेन प्रत्यक्षादीनामजातविरोधित्वात्। आम्नायस्य तु

**अन्ये मन्यन्ते – तुल्यबलत्वेऽपि प्रत्यक्षादीनामाम्नायस्य च वस्तुनि विकल्पानुपपत्तेर्विरोधे संशयः स्यात्, तेनाविरोध उपपाद्यत इति।**

---

प्रत्यक्षादिगृहीतपदार्थविषयकत्वेन पश्चात्कालभावित्वादमुख्यत्वम्। अद्वैतग्राहिण आम्नायास्तु पूर्वजाततया प्रतिष्ठितविषयैः प्रत्यक्षादिभिर्बाधिता भवन्ति। अतस्तेषामाम्नायानां श्रुतार्थाः प्रत्यक्षाद्यनुसारेण कल्पिता गृह्यन्ते। अतः पूर्वभावित्वेन अबाधितविषयकत्वात्प्रत्यक्षादीनां मुख्यत्वम्, अपरकालत्वेन बाधितविषयकत्वेन कल्पितार्थतया चाम्नायानाममुख्यत्वमिति।

अर्थदृष्ट्यापि प्रत्यक्षादीनां मुख्यत्वममुख्यत्वं चाम्नायस्येत्याह – **अर्थतोऽपीति।** अयं भावः – न ह्याहत्यैव आम्नायार्थस्य बोधो भवति। किन्तर्हि ? प्रत्यक्षाद्यवगतपदपदार्थविभागाधीन एव भवति। अत आम्नायार्थबोधः प्रत्यक्षाद्यधीन इति कृत्वापि आम्नायस्यामुख्यत्वम्, प्रत्यक्षादीनां च मुख्यत्वम्। मुख्येन विरोधेऽमुख्यस्यैव बाधात् प्रकृते आम्नायार्थबाधो मा भूदिति आम्नाये प्रत्यक्षादिविरोधपरिहार आवश्यक इति भावः।

आम्नाये प्रत्ययादिषु च तुल्यबलत्वं नास्तीति पूर्वमुपपादितम्। इदानीमभ्युपगम्यापि तुल्यबलत्वमन्याभिमतं पक्षमुपस्थापयति – **तुल्यबलत्वेऽपीति।** अयं भावः – अस्तु नाम प्रत्यक्षादीनामाम्नायस्य च तुल्यबलत्वम्, तथापि तेषां परस्परं विरोधो दुष्परिहरः, प्रत्यक्षादीनां भेदविषयकत्वात्, आम्नायस्य च वेदान्तस्याभेदविषयकत्वात्।

ननु तुल्यबलयोर्विरोधे विकल्पः स्यात्, यथा "अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति" वचनयोर्विरोधे विकल्पेनोभयमाश्रीयते षोडशिग्रहणं तदग्रहणञ्चेति। तद्वदिहापि भेदाभेदयोर्विकल्पो भविष्यतीति चेत्, न, वस्तुनि विकल्पानुपपत्तेः। क्रियायामेव विकल्पस्य सम्भवो ग्रहणाग्रहणयोः। न हि घटवस्तु विकल्पेन अघटोऽपि भवतीति। तस्मात् प्रकृते प्रत्यक्षादीनामाम्नायस्य च परस्पर विरोधस्य जागरूकत्वात् संशयो भवति – प्रपञ्चभेदो वा वस्तुभूतः ? आत्मैक्यं वा वस्तुभूतमिति। तथा च विरोधात् तत्त्वानिर्णयः प्रसज्येत पुरुषार्थालाभश्च

**अन्यद् दर्शनम् – आम्नाय एव बलवांस्तद्विरोधे "पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्" (मीमां. सू. ६/५/५४) "पूर्वाबाधेन नोत्पत्तिरुत्तरस्य हि सिध्यति" (श्लो. वा., पृ. ६२) इति। तथा हि – सर्वस्य हि निसर्गजः प्रत्यक्षादिनिबन्धनः किल विभक्तवस्तुपरिच्छेदः। तदपेक्षस्तु तत्पूर्वकोऽनिसर्गजः कस्यचिदेवागन्तुरद्वैतावगमः। स पूर्वमनुपमृद्योदेतुमशक्नुवंस्तदपबाधात्मा उदयते।**

---

प्रसज्येत। अतोऽनेन तर्ककाण्डभागेन तेषामविरोधाय प्रयत्नः क्रियत इति युक्तम्।

पूर्वोक्ताभ्यां मताभ्यां भिन्नं स्वमतमाह – **अन्यद् दर्शनमिति**। परस्परविरोधे सति द्वैतबोधकप्रत्यक्षापेक्षयाऽद्वैतावबोधक आम्नाय एव प्रबलः, पूर्वसिद्धत्वात् प्रत्यक्षस्य परसिद्धत्वाच्चाम्नायस्य। तत्र न्यायं प्रमाणयति – **पौर्वापर्य इति**। अर्थात् पूर्वापरयोर्विरोधे सति पूर्वस्य दौर्बल्यं भवति, परस्य च प्राबल्यं भवति। तत्र दृष्टान्तमाह – **प्रकृतिवदिति**। "प्रकृतिवद् विकृतिः कर्तव्या" इति अतिदेशवाक्यानुसारेण प्रकृतियागविहितानां कुशानां विकृतियागेऽपि प्राप्तौ सत्यां "शरमयं बर्हिः" इति प्रत्यक्षश्रुत्या बाधे सति शरा एव विधीयन्ते न कुशाः। तद्वत् प्रत्यक्षप्रमाणप्राप्तस्य द्वैतबोधस्य पूर्वतनस्य आम्नायबोध्येन पश्चात्तनाद्वैतेन बाधो भवति, पूर्वस्य दौर्बल्यात्। अत्रैव भट्टवचनमपि प्रमाणयति – **पूर्वाबाधेनेति**। तदेवोपपादयति – **तथा हीति**। अयमर्थः – सर्वस्य हि जनस्य द्वैतबोधो निसर्गजत्वाद् जन्मजातत्वात् पूर्वः, अद्वैतबोधस्तु न निसर्गसिद्धः, किन्तु विभक्तपदपदार्थरूपवस्तुप्रत्यक्षपरिच्छेदापेक्षतया परः। अतोऽनयोर्विरोधे पर एव प्रबलः, पूर्वमनुपमृद्य उत्तरस्य तद्विरुद्धस्य जननासम्भवात्। अतो द्वैतबोधापेक्षया अद्वैतबोध आगन्तुकः पूर्वभवं द्वैतबोधमुपमृद्यैव उत्पत्तुमर्हतीति सिद्धमाम्नायस्य परस्यापि प्राबल्यमिति। इत्येवंरीत्या विरोधपरिहाराभिप्रायेण तर्ककाण्डारम्भ इति।

अक्षरार्थस्तु – सर्वस्य प्राणिनः निसर्गजः = जन्ममात्रसिद्धः प्रत्यक्षादिप्रमाणजन्यः विभक्तवस्तुपरिच्छेदः = द्वैतावबोधः। तदपेक्षः = पदपदार्थप्रत्यक्ष-

**इतश्च, सम्भवद्विचित्रविभ्रमहेतुत्वात् प्रत्यक्षादीनाम्, विगलित-निखिलदोषाशङ्कत्वाच्चाम्नायस्य। पुरुषाश्रयाणां हि दोषाणां शब्दे पुरुषाभावेऽसम्भवात्। शक्यो ह्याम्नायादेवानादिरविद्यासंस्कारो विभ्रमहेतुः प्रत्यक्षादिषु सम्भावयितुं निश्चेतुं च देहात्माभिमान इव। न त्वपौरुषेये शब्दे काचिद् दोषाशङ्का। सत्यां वा प्रमाणमेव न स्यात्। प्रत्यक्षादीनां**

---

सापेक्षतया प्रत्यक्षपूर्वकः, अत एव अनिसर्गजः = न जन्ममात्रसिद्धः, किन्त्वागन्तुकः = पश्चात्कालभावी आम्नायजन्याद्वैतावबोधः। स चाम्नायनिमित्तकाद्वैतबोधः प्रत्यक्षनिमित्तकं पूर्ववर्तिनं द्वैतबोधं बाधित्वैवोत्पत्स्यत इति पूर्वस्य द्वैतबोधस्य दौर्बल्यं सिद्धम्। तथा च पूर्वबाधेन विरोधपरिहार इति भावः।

प्रत्यक्षाद्यपेक्षयाऽऽम्नायो बलवानित्यत्र कारणान्तरमाह मूलकारः – **इतश्चेति।** सम्भवन्तो विचित्रा विभ्रमहेतवो येषु, तादृशानि हि प्रत्यक्षादिप्रमाणानि भवन्तीत्यस्ति सर्वलोकानुभवः। यत्कारणात् स्थाणौ पुरुषविभ्रमः, शुक्तिकायां रजतविभ्रमः, रज्ज्वां चोरगविभ्रम इति। आम्नायस्तु अपौरुषेयत्वेन विगलिता निखिल-दोषाणामाशङ्का यस्मिन् तादृशोऽस्ति। अतोऽपि प्रत्यक्षाद्यपेक्षयाऽऽम्नायो बलवानिति निर्धारणीयम्। एतदुपपादयति – **पुरुषाश्रयाणां हीति।** दोषा हि पुरुषमेवाश्रयन्तीति पुरुषाश्रितास्ते सम्भवन्ति। शब्दात्मके आम्नाये तु पुरुषाभावाद् नास्ति दोषाणां सम्भावनापीति सर्वथैवाम्नायो दोषाशङ्कारहित इति सर्वथैव प्रमाणमाम्नायः।

ननु प्रत्यक्षादिष्वपि येषु दोषा न दृश्यन्ते, तानि तु सर्वथा प्रमाणान्येव सन्ति, येषु तु दोषा दृश्यन्ते तानि तु न प्रमाणानि मन्यन्ते, प्रमाणाभासास्तानि इति वयं मन्यामहे। तथा च प्रमाणभूतेषु प्रत्यक्षादिषु आम्नायवदेव दोषाशङ्कारहितत्वमिति चेत्, न, आम्नाय एव हि प्रमाणं प्रत्यक्षादिषु अविद्या-संस्काररूपदोषसद्भावे। अत एव "अहं गौरोऽहं स्थूलः" इत्याकारो देहात्माभिमानो भवति लोके विदुषोऽपि जनस्य। तस्मादाम्नायबलादेव प्रत्यक्षादिषु अविद्या-संस्काररूपोऽनादिर्विभ्रमहेतुः सम्भावयितुं निर्धारयितुं च शक्यत इति

**तु व्यावहारिकं प्रामाण्यम्, अविद्यासंस्कारस्य स्थेम्ना व्यवहारविपर्ययाभावात्। यत्र च व्यवहारविपर्ययो न तत्र प्रामाण्यम्।**

**शब्दे तु सम्भावितदोषे न तत्त्वावेदनेन प्रामाण्यम्, न व्यवहाराविपर्ययेण, अदृष्टार्थत्वाद् दोषेभ्यो व्यवहारविसंवादिज्ञानदर्शनाच्च।**

---

दुर्बलानि प्रत्यक्षादीनि प्रमाणानि बलवांश्चाम्नाय इति सिद्धम्। तदेवाह – **न त्वपौरुषेये शब्दे काचिद् दोषाशङ्केति**। अयमाशयः – यदि नाम दोषसम्भावनामात्रात् प्रत्यक्षादिकं दोषाशङ्कालेशादपि रहितादाम्नायाद् दुर्बलं तदा का कथा निश्चिताविद्यासंस्कारदोषस्य प्रत्यक्षादेर्दुर्बलत्वे इति।

ननु प्रत्यक्षादिवद् आम्नायेऽपि स्यात् काचिद् दोषाशङ्केति चेत्, न, आम्नाये दोषलेशाशङ्कायामपि सत्यां प्रमाणमेव न स्यादाम्नायः। तस्मादाम्नाये काचिद् दोषाशङ्कापि नास्तीत्यतः सर्वथा प्रमाणमेवाम्नाय इति मन्यते। प्रत्यक्षादीनां तु भिन्ना गतिरस्ति। यतो हि अविद्यासंस्कारो यावत्कालपर्यन्तं स्थिरो भवति तावत्पर्यन्तं व्यवहारे न कोऽपि विपर्ययो भवति। अत एव तावत्कालपर्यन्तं प्रत्यक्षादिषु पारमार्थिकप्रामाण्याभावेऽपि व्यावहारिकं प्रामाण्यं भवतीति मन्यते। यत्र तु प्रत्यक्षादौ व्यवहारोऽपि बाधितो भवति, तत्र शुक्तिरजतादिप्रत्यक्षे व्यावहारिकमपि प्रामाण्यं न भवतीति। एतदेवोक्तम् **"सत्यां वा"** इत्यादिना **"न तत्र प्रामाण्यम्"** इत्यन्तेन ग्रन्थेनेति भावः।

प्रत्यक्षापेक्षयाऽपौरुषेये शब्दे आम्नाये विशेषमाह – **शब्दे त्विति**। अयं भावः – शब्दे एकविधमेव प्रामाण्यं तत्त्वावेदनं नाम। तत्र यदि दोषसम्भावनाऽपि स्यात् तदा तत्त्वावेदकत्वरूप प्रामाण्यं नैवोपपद्यते, किमु वक्तव्यं तत्र दोषनिश्चयदशायां सर्वथैव प्रामाण्याभावे।

यद्युच्येत शब्दे दोषसम्भावनादशायां तत्त्वावेदनरूपप्रामाण्यासम्भवेऽपि व्यवहाराविपर्ययरूपं व्यावहारिकं प्रामाण्यं भविष्यति प्रत्यक्षादिवदिति, तन्नोपपद्यते,

**प्रत्यक्षादीनां तु व्यवहारे संवादान्न शक्यते व्यवहारविसंवादिज्ञान-हेतुर्दोषः कल्पयितुम्। व्यवहारविपर्ययाद्धि स कल्प्येत। तत्त्वदर्शनस्य तु वेदान्तजन्मनः प्रतिपक्षत्वात् तत्त्वप्रतिहतिमात्रहेतुरेवाविद्यानुबन्धः कल्प्यते। ततो दोषानुबन्धः प्रामाण्यं चेति न विरोधः।**

---

अपौरुषेयशब्दस्यादृष्टविषयकत्वात्। प्रत्यक्षादिकं तु दृष्टविषयकं भवति, अतस्तत्र व्यवहार उपपद्यते व्यावहारिकं प्रामाण्यं च सम्भवतीति भावः।

सम्भावितदोषे शब्दे व्यवहाराविपर्ययलक्षणं व्यावहारिकं प्रामाण्यं नैव सम्भवतीत्याह – **दोषेष्व इति**। अयमाशयः – चाकचिक्यादिदोषवति शुक्तिरजतादि-प्रत्यक्षविभ्रमे यथा व्यवहारविसंवादि (व्यवहारविपर्यासकं) ज्ञानं दृश्यते, तथैव शब्देऽपि दोषे सति तद्दोषवशात् ततो व्यवहारविसंवाद्येव ज्ञानमुत्पत्स्यते न व्यवहारसंवादिज्ञानं जनिष्यत इति कुतो व्यवहाराविपर्यलक्षणं व्यावहारिकं प्रामाण्यं दोषवति शब्दे सम्भविष्यतीति भावः। तस्मादपौरुषेयेऽदृष्टार्थके शब्दे आम्नाये सर्वथैव पुंदोषाशङ्काशून्ये एकविधमेव प्रामाण्यं तत्त्वावेदनलक्षणमिति, प्रामाण्यमेव नाप्रामाण्यमिति चेति सिद्धं प्रत्यक्षाद्यपेक्षयाऽऽम्नायप्रमाणस्य प्राबल्यमिति।

सर्वथा दृष्टार्थकेषु प्रत्यक्षादिषु यो विशेषस्तमाह – **प्रत्यक्षादीनां त्विति**। अयं भावः – व्यावहारिकेषु प्रत्यक्षादिषु प्रमाणेषु व्यवहारे संवाददशायां व्यवहारविसंवादि-ज्ञानहेतुभूता दोषा नैव सन्तीति स्वीकरणीयम्। अन्यथा व्यवहारे संवाद एवानुपपन्नो भवेत्। व्यवहारे संवादो नाम पुरुषप्रवृत्तेः साफल्यमिति ध्येयम्। एवञ्च प्रत्यक्षादिस्थलेषु यदि व्यवहारे संवादस्तदा तेषु व्यवहारविसंवादिज्ञानहेतु-भूतानां दोषाणां कल्पना नैव शक्यते कर्तुम्। यतो हि व्यवहारविसंवादाद् = व्यवहारविपर्ययादेव तेषु दोषाः कल्प्येरन् नान्यथा। तस्माद् निर्दोषेषु प्रत्यक्षादिषु व्यावहारिकं प्रामाण्यमस्त्येवेति, तथा व्यावहारिकमेव प्रामाण्यमिति च सिद्धम्।

नन्वेवं प्रत्यक्षादिषु तत्त्वावेदनलक्षणं प्रामाण्यमपि कथं न स्वीक्रियते ? इत्या-शङ्कायामाह – **तत्त्वदर्शनस्य त्विति**। अयमभिप्रायः – तत्त्वदर्शनं नाम परमार्था-

**शब्दस्तु सम्भावितदोषो दुर्लभप्रामाण्य एव स्यात्। दृश्यते हि दोषेभ्यो व्यवहारविसंवादिज्ञानोत्पत्तिः। तत्र दोषाशङ्कया व्यवहार-विसंवादस्य शङ्कितत्वात् तत्त्वप्रतिघातस्य च, न तत्त्वावेदनलक्षणं प्रामाण्यम्, न व्यवहाराविसंवादलक्षणमिति।**

---

द्वैतदर्शनम्, तच्च वेदान्ताभ्यासाज्जायते, तदेव हि व्यावहारिकद्वैतस्य प्रतिपक्षभूतं नान्यत्। अतो यावत् "एकमेवाद्वितीयम्, तत्त्वमसि, अहं ब्रह्मास्मि" इत्यादिवेदान्तो नाभ्यस्यते तावत् तत्त्वप्रतिहतिमात्रस्य = परमार्थाद्वैतप्रतिघातमात्रस्य= परमार्था-द्वैतदर्शनप्रतिबन्धमात्रस्येति यावत्, यो हेतुः अनाद्यविद्यानुबन्धः स एव दोषः कल्प्यते, यद्वशात् प्रत्यक्षादीनि प्रमाणानि तत्त्वं नावेदयन्ति। तत एव च तेषु तत्त्वावेदनलक्षणप्रामाण्यं न स्वीक्रियते। स चानाद्यविद्यानुबन्धरूपो दोषो व्यवहार-प्रतिबन्धको न भवति, प्रत्युत व्यवहारानुगुण एव भवतीति तेषु व्यवहारा-बाधलक्षणं व्यावहारिकं प्रामाण्यमक्षुण्णमेव भवति। तस्मात् प्रत्यक्षादिप्रमाणेषु तत्त्वदर्शनमात्रप्रतिबन्धकोऽनाद्यविद्यानुबन्धरूपो दोषोऽपि स्थास्यति व्यावहारिकं प्रामाण्यमपि च स्थास्यतीति न कश्चिदस्ति विरोध इति भावः।

**शब्दस्य तु** प्रत्यक्षाद्यपेक्षया भिन्ना गतिर्यत् किल शब्दो यदि सदोषः सम्भावितदोषतया वा निश्चितदोषतया वा स्यात् तदा तस्मिन् सर्वथैव दुर्लभं प्रामाण्यं स्यात्। लोके दृश्यते यद् रागद्वेषादिदोषवत् पुरुषप्रयुक्तात् शब्दाद् उत्पद्यमानं श्रोतुर्ज्ञानं व्यवहारविसंवादि भवति। अर्थात् तथाविधाज्ज्ञानात् क्रियमाणा प्रवृत्तिर्निरर्थिका भवति। तत्र यदि प्रवृत्तेः पूर्वमेव दोषनिश्चयस्तदा प्रवर्तत एव न श्रोता व्यवहारविसंवादनिश्चयात्। यदि च दोषाशङ्का तदापि न प्रवर्तते व्यदहारविसंवादस्य शङ्कितत्वात्। तत्त्वज्ञानव्याघातस्तूभयथा भवति दोषनिश्चये दोषाशङ्कायाञ्च। तस्माद् दोषे सति शब्दे न तत्त्वावेदनलक्षणं प्रामाण्यं न वा व्यवहाराविसंवाद-(व्यवहाराविपर्यय)लक्षणं च प्रामाण्यं भवतीति।

इत्थञ्च यो हि नास्तिकः प्रत्यक्षादिविरोधे सति आम्नायस्याप्रामाण्यं ब्रूते, स नियतं प्रत्यक्षाद्यविरोधे सति अगत्या तमाम्नायमदोषं **स्वीकरोति, स्वीकरोति**

**तस्मात् शब्दस्य प्रामाण्याभ्युपगमे प्रमाणान्तरविरोधेऽपि तस्यैव बलवत्त्वमिति साम्प्रतम्।**

**यत्तु प्रत्यक्षाद्यपेक्षणादिति, तत्रोच्यते– न प्रमितावपेक्षायत्ता शब्दस्य प्रत्यक्षादिषु, किन्तु स्वरूपसिद्धौ, अन्यथा प्रमाणमेव न स्यात्।**

---

च तस्य प्रामाण्यमपि। यस्त्वास्तिकोऽपौरुषेयतया ईश्वरप्रणीततया वाऽऽम्नायं सर्वथा निर्दोषमभ्युपगच्छति, स नूनं देहात्माभिमानदृष्टान्तेन बहूनां संवादि-व्यवहाराणां प्रयोजकेभ्योऽपि तत्त्वदर्शनप्रतिपक्षिभ्योऽनाद्यविद्यादोषवत् पुरुषगतप्रत्यक्षादिभ्यः प्रमाणेभ्यो विरोधे सति आम्नायस्यैव प्रमाणस्य बलवत्त्वं स्वीकुर्यादेवेति युक्तम्। एतत्सर्वमभिप्रेत्याह मूले – **'शब्दस्तु'** इत्यादिना **'साम्प्रतम्'** इत्यन्तेन ग्रन्थेनेति ध्येयम्।

अयमत्र सारः– नास्तिक आम्नायस्याप्रामाण्यकारणं प्रत्यक्षादिविरोधमेव मन्यते, प्रत्यक्षाद्यविरोधावस्थायां तु तेनापि शब्दस्य प्रामाण्यं स्वीकरणीयमेव। आस्तिकस्तु पुंदोषरहिततया सर्वथैवाम्नायस्य प्रामाण्यं मन्यते। प्रत्यक्षादिकन्तु व्यवहारसंवाद्यपि व्यावहारिकप्रमाणभूतमपि कामं भवेत्, तथापि देहात्माभिमानवत् सदैव अविद्यादोषग्रस्ततया तत्त्वावेदनलक्षणं प्रामाण्यं तस्मिन् न स्वीकरोति। तथा च तत्त्वावेदनक्रियायां प्रत्यक्षादिकं सर्वथा सदोषं शब्दस्तु आम्नायात्मकोऽ-पौरुषेयतया सर्वथैव पुंदोषरहितत्वेन तत्त्वावेदने प्रत्यक्षादिभ्यो विरोधे सति प्रत्यक्षादिभ्यो बलवानेवेति निर्णयः। अतः सिद्धं तत्त्वावेदनलक्षणे प्रामाण्ये शब्द एव बलवान् विरोधिप्रत्यक्षापेक्षयेति।

पूर्वमुक्तं केषाञ्चिन्मतम्– आम्नायस्य प्रत्यक्षादितो विरोधे सति आम्नायो दुर्बलः प्रबलं च प्रत्यक्षादि, आम्नायस्य प्रत्यक्षाद्यपेक्षणादिति। तदेव मतं **'यत्तु'** इत्यनेनानूद्य **'तत्रोच्यते'** इत्यादिना ग्रन्थेन दूषयत्याचार्यः। अयं भावः– सत्यं शब्दः प्रत्यक्षादिकमपेक्षते, किन्तु शब्दस्य सा प्रत्यक्षाद्यपेक्षा शब्दस्वरूपज्ञान एव भवति। यतः श्रावणप्रत्यक्षेण शब्दो ज्ञायते, ज्ञातश्च स शब्दोऽर्थप्रमां जनयति। तत्रार्थप्रमाजनने शब्दो प्रत्यक्षादि नापेक्षते। यदि तु

**तथा च स्वकार्येऽनपेक्षत्वाद् न प्रत्यक्षादिभ्यो हीयते। प्रत्यक्षादयोऽपि स्वरूपसिद्धौ नान्यानपेक्षाः। कार्ये हि सापेक्षत्वं सामर्थ्यमपकर्षतीति।**

**यत्त्वेतेषां प्रामाण्यमनुमन्तव्यमिति – को वाऽन्यथाह ? व्यवहाराविसंवादिलक्षणं तु तत्, न तत्त्वावेदनलक्षणम्। व्यावहारिक-**

---

शब्दोऽर्थप्रमितौ जननीयायां प्रत्यक्षादिकमपेक्षेत तदा प्रमितिं प्रति निरपेक्षकारणत्वाभावात् शब्दः प्रमाणमेव न भवेत्। अत एव प्रत्यक्षादिसापेक्षा स्मृतिर्न प्रमाणकोटौ गण्यते, तद्वत् शब्दोऽपि स्यात्। अतः प्रत्यक्षादिकं यथा स्वजन्यप्रमितौ परानपेक्षं तथा शब्दोऽपि स्वजन्यप्रमितौ परानपेक्षमेवेति शब्दो न प्रत्यक्षादितो न्यून इति मन्तव्यम्।

यदि तु स्वकार्ये प्रमितिलक्षणे शब्दस्य प्रत्यक्षाद्यनपेक्षत्वेऽपि स्वरूपसिद्धौ प्रत्यक्षाद्यपेक्षासत्त्वात् प्रत्यक्षाद्यपेक्षया शब्दः प्रमाणभावे हीन इति भवेत्, तदा प्रत्यक्षादिकमपि स्वस्वरूपसिद्धौ इन्द्रियाद्यपेक्षणात् प्रामाण्याद् हीयेत न प्रमाणं स्यादिति। अत्रैव लोकवृत्तमनुवदति – **कार्ये हि सापेक्षत्वं सामर्थ्यमपकर्षतीति**। अयं भावः– लोके दृश्यते यद् यदि कश्चित् स्वकार्यजनने स्वयमसमर्थः परमपेक्षते तदा स परापेक्षयाऽपकृष्टो भवति, हीनशक्तिरुच्यते। इह तु शब्दः स्वस्वरूपसिद्धौ प्रत्यक्षादिकमपेक्षमाणोऽपि स्वकार्ये प्रमितिलक्षणे जननीये न प्रत्यक्षादिकमपेक्षत इति कथं स प्रत्यक्षाद्यपेक्षयाऽपकृष्टो हीनः स्यात्। तथा च तुल्यन्यायात् प्रत्यक्षादितुल्य एव शब्दो न ततो दुर्बल इति सिद्धम्।

ननु शब्दप्रमाणस्य स्वस्वरूपसिद्धौ यथा प्रत्यक्षादिप्रमाणापेक्षा भवति तथा प्रत्यक्षादीनां स्वरूपसिद्धौ शब्दप्रमाणापेक्षा नैव भवति। अतः प्रत्यक्षादीनां स्वरूपसिद्धये शब्दस्याम्नायस्य प्रामाण्यं स्वीकर्तव्यं भवतु मा वा भवतु, आम्नायस्य शब्दात्मकस्य तु स्वरूपसिद्धये तेषां प्रत्यक्षादीनां प्रामाण्यमनुमन्तव्यमेव। न प्रामाण्यमात्रं किन्तर्हि आम्नायविरोधे शब्दनिरपेक्षतया प्रत्यक्षादीनाम् आम्नाया-

**प्रामाण्योपेतेभ्यः प्रत्यक्षादिभ्यः सिद्धादाम्नायात् तत्त्वदर्शनम्। तद्-विरोधात् तेषु तत्त्वदर्शनांशमेवापबाधते, न व्यवहाराविसंवादांशम्।**

**दृष्टं च हेतुत्वेनापेक्षिताया अपि पूर्वस्याः प्रतिपत्तेः परस्याः प्रतिपत्तेर्बलीयस्त्वम्। यथा दूरस्थेषु वनस्पतिषु हस्तिप्रतिपत्तिभ्यो**

---

पेक्षया बलवत्त्वमपि स्वीकरणीयमित्याशङ्कते –**यत्त्वेतेषामिति** । समाधत्ते –**को वेति** । अयमभिप्रायः– इयमाशङ्का तदोपपद्येत यदि कश्चित् प्रत्यक्षादीनां प्रामाण्यं नास्तीति ब्रूयात् । किन्तु न कोऽप्येवं ब्रूते । व्यवहाराविसंवादि –(व्यवहाराविपर्यय) लक्षणं व्यावहारिकं प्रामाण्यं तु प्रत्यक्षादीनां वयमपि स्वीकुर्म एव । तेषां तत्त्वावेदनलक्षणं पारमार्थिकं प्रामाण्यमेव वयं निषेधामः ।

अतो व्यावहारिकप्रमाणभूतेभ्यः प्रत्यक्षादिभ्य आम्नायस्य स्वरूपं सिध्यति, अर्थात् तस्य श्रावणं ज्ञानं भवति । अतः श्रुतादाम्नायाद् मननादिक्रमेण तत्त्वदर्शनं भवति अद्वैततत्त्वसाक्षात्कारो जायते । तस्मादाम्नायविरोधदशायामाम्नायस्तेषु प्रत्यक्षादिषु तत्त्वावेदनक्षणप्रामाण्यांशमेव बाधते न तु व्यवहाराविसंवादलक्षणं प्रामाण्यांशमपि बाधते, स्वरूपसिद्धौ स्वानुगुणत्वाद् इत्याशयः । अतस्तत्त्वावबोधे विरोधे आम्नायस्यैव प्रत्यक्षादिभ्यः प्राबल्यमिति सिद्धम् ।

तत्त्वावबोधेऽपि प्रत्यक्षादीनामेवाम्नायापेक्षया प्राबल्यमिति प्रकारान्तरेणाशङ्क्य समाधत्ते – **दृष्टं चेति** । अयमत्र शङ्कितुरभिप्रायः– नन्वाम्नायस्वरूपसिद्धिर्यथा प्रत्यक्षादिप्रमाणाधीना तथाऽऽम्नायजन्या तत्त्वप्रतिपत्तिरपि प्रत्यक्षादिप्रमाणजन्य-प्रतिपत्त्यधीना, प्रत्यक्षादिप्रमाणेभ्यो गुरुशास्त्रादिद्वैतमप्रतिपद्य आम्नायार्थग्रहणा-नुपपत्त्या आम्नायजन्याद्वैतप्रतिपत्त्यनुपपत्तेः । तस्मात् प्रत्यक्षादिप्रमाणजन्या प्रतिपत्तिरुपाय आम्नायजन्यायाः प्रतिपत्तेरिति उपायभूता प्रत्यक्षादिप्रमाणजन्या प्रतिपत्तिः कथं दुर्बला उपेयभूताम्नायजन्यप्रतिपत्त्यपेक्षया । अतो नाम्नायात् प्रत्यक्षादिबाध इति चेत्, न, दृष्टान्तविरोधात् । अत्रायमाशयः समाधातुः– दृश्यते हि लोके हेतुत्वेनापेक्षिता उपायभूता पूर्वतनी अपि प्रतिपत्तिर्दुर्बला उपेयभूता च परतनी प्रतिपत्तिः प्रबलेति । अत एव दूरस्थेषु वनस्पतिषु विषयेषु पूर्वोत्पन्ना

**वनस्पतिप्रतिपत्तेः। अपेक्षिता हि हस्तिप्रतिपत्तयो व्यक्तवनस्पतिप्रतिपत्त्या हेतुत्वेन। न तस्या इन्द्रियार्थसन्निकर्षमात्राज्जन्म, आपातेऽभावात्। न च देशविशेषात्, तद्देशस्थस्यैवोत्पत्तेः।**

**तस्मात् पुरोवर्तिषु वनस्पतिषु प्रणिहितमनसः प्राच्यविपर्यासानुगतमतिसन्ततिसंस्कारसचिवेन्द्रियादिसंयोगकारिता सेति मन्तव्यम्।**

---

हस्तिप्रतीतीः परकालोत्पन्ना वनस्पतिप्रतीतिर्बाधते। यद्यपि तत्र स्फुटवनस्पतिप्रतिपत्तये हस्तिप्रतिपत्तय उपायत्वेन अपेक्षिता भवन्ति।

न च वाच्यम्— वनस्पतिप्रतिपत्तिः स्वोत्पत्तये हस्तिप्रतिपत्तीर्नापेक्षते, किन्तु सा इन्द्रियार्थसन्निकर्षमात्राज्जायत इति, आपाते = इन्द्रियसन्निकर्षकाले प्रथममेव वनस्पतिबुद्ध्यनुत्पत्तेः। तस्मान्नेन्द्रियसन्निकर्षमात्राद् वनस्पतिप्रतीतिर्जायते किन्तु हस्तिबुद्धयोऽपि हेतुत्वेन अपेक्षिता भवन्तीति।

न च दूरवर्तिनः पुरुषस्य वनस्पतिबुद्ध्यनुत्पत्तावपि समीपस्थस्य तस्य हस्तिप्रतीतिं विनैव स्फुटवनस्पतिप्रतीतिर्जायत इति देशविशेषसहितमिन्द्रियसन्निकर्षमात्रमेव वनस्पतिप्रतीतिहेतुर्न हस्तिबुद्धय इति वाच्यम्, समीपं गतस्य पुंसो वनस्पतिप्रतीतौ तथा स्वीकारेऽपि दूरप्रदेशस्थस्य यत्र हस्तिप्रतीत्यनन्तरमेव वनस्पतिप्रतीतिर्जायते, तत्र हस्तिप्रतीतीनामेव वनस्पतिप्रतीतिहेतुत्वं स्वीकरणीयम्। तत्रोपायभूतां हस्तिप्रतीतिं बाधित्वैव वनस्पतिप्रतिपत्तिर्जायते। तद्वदेव उपायभूतामपि प्रत्यक्षादिप्रमाणजन्यां द्वैतप्रतीतिं बाधित्वैवाम्नायजन्याऽद्वैततत्त्वप्रतीतिर्जनिष्यत इति न काचिदनुपपत्तिः।

उक्तं निगमयति - **तस्मादिति**। मनःप्रणिधानं विना न वनस्पतिज्ञानमिति प्रणिहितमनस इत्युक्तम्। प्राच्यः = पूर्वभावी यो विपर्यासो हस्तिभ्रान्तिज्ञानम्, तत्रानुगता या हस्तिविषयिणी मतिसन्ततिः, ततो जायमानो यः संस्कारः, तत्सचिवेन = तत्सहितेन इन्द्रियसंयोगेन कारितैव सा पुरोवर्तिवनस्पतिविषयिणी प्रतीतिरित्यर्थः। अर्थाद् हस्तिप्रतीतिसन्ततिरेव संस्कारद्वारा 'कथमत्र हस्ती सम्भवेदि'त्यालोचनहेतुत्वेन दूरस्थस्य वनस्पतिप्रतीतेरुपाय इति मन्तव्यम्।

**एवमेकादिसंख्याबुद्ध्युपाया विंशत्यादिबुद्धयोऽप्युदाहार्याः।**

**एवञ्च यदेके वर्णयन्ति– स्वयमेव व्याहता वेदान्तार्थप्रतिपत्तिः। नाभेदो भेदमन्तरेण शक्योऽवसातुम्। भेदोपाया हि तस्य प्रतिपत्तिः। तत्राभेदः समाक्षिप्तभेद एव प्रतीयत इति व्याघातः।**

---

उपायस्योपेयापेक्षया दुर्बलत्वे उदाहरणान्तरमाह – **एवमिति**।एकत्वादिसंख्या-बुद्धय उपाया यासां ता इति बहुव्रीहिणा व्युत्पादनीयम्। एवंविधा विंशत्यादि-बुद्धयोऽप्युदाहरणीया इति संक्षिप्तार्थः।अयमत्र विशदार्थः– ''अनेकैकत्वबुद्धिर्या साऽपेक्षाबुद्धिरिष्यते'' इति न्यायानुसारेण अयमेकोऽयमेक इत्याकारा या अनेका एकत्वबुद्धयस्ताभिरेव विंशत्यादिसंख्या उत्पद्यन्ते बुध्यन्ते च। जातायां विंश-त्यादिबुद्धावेकत्वादिबुद्धयो बाधिता भवन्तीति प्रत्यक्षं नः। इयमेकत्वादि-बुद्धिर्यद्यपि विंशत्यादिबुद्धीनामुपायभूता तथापि बाधिता भवतीति निदर्शनेन उपायस्याप्युपेयेन बाधो भवतीति स्पष्टं सिध्यति।

दार्ष्टान्तिके प्रत्यक्षादिप्रमाणजन्याया द्वैतबुद्धेर्व्यावहारिकप्रामाण्यमनुमतं तात्त्विकाद्वैतवादिभिरपि। अतो दृष्टान्तेऽपि तथैव भाव्यम्। पूर्वमुदाहृताया हस्तिबुद्धेर्न कश्चिदपि व्यावहारिकं प्रामाण्यमनुमन्यत इति दृष्टान्तदार्ष्टान्तिकयो-र्वैषम्यमित्यरुच्या आचार्य एकत्वादिसंख्याबुद्धिरूपमुदाहरणान्तरं **प्रादर्शयत्**। यावद्विंशत्यादिबुद्धिर्नोत्पन्ना तावदेकत्वादिबुद्धेर्व्यावहारिकं प्रामाण्यं भवत्येवेति अनुरूपमुदाहृतमाचार्येणेति भावः।

अत्रैवाभेदवादे केषांश्चित् शङ्कान्तरमुपस्थाप्य प्रतिक्षिपति **'एवञ्च'** इत्यादिना **'इष्टमेवेति'** इत्यन्तेन ग्रन्थेन। ''एवञ्च'' इत्यस्यार्थो हस्तिवनस्पत्यादिषु एकत्वादिविंशत्यादिषु च पूर्वोक्तोदाहरणेषु जागरूकेषु सत्सु इति। कैश्चिद् वर्णिताऽभेदवादविरोधिनी युक्तिरपि निरस्ता बोध्येति संक्षिप्तार्थः।

अत्रायं शङ्कितुः पक्षः – अभावज्ञानस्य प्रतियोगिज्ञानाधीनतया भेद-ज्ञानमन्तरा अभेदः = भेदाभावःअवसातुं = ज्ञातुं नैव शक्यः। यतो हि अभेदस्य प्रतिपत्तिर्ज्ञानं भेदज्ञानेनैवोपायेन भवितुमर्हति नान्यथा। **अतोऽभेदः**– समाक्षि-

**तदपास्तम् -- यत उपायमाक्षिपति प्रतिपत्तिर्नोपायस्य परमार्थताम्, मिथ्याज्ञानादपि तत्त्वप्रतिपत्तेः। व्यावहारिकं च भेदस्य सत्यत्वमिष्टमेवेति।**

**व्यभिचारदर्शनं च दुष्टहेतुजन्मनोः शब्दप्रत्यक्षयोः समानम्, इतरयोरपि तुल्यमव्यभिचारित्वम्। तथाऽनवकाशत्वमपि; यदि खल्वेकमद्वयं वेदान्तार्थः, कस्तेषामन्योऽवकाशः?**

---

प्तोऽध्याहृतो भेदो येन – तादृशः सन्नेव प्रतीयते बुद्धिमारोहति। भेदमध्याहृत्यैवाभेदः प्रथत इति यावत्। अस्यां स्थितौ स्फुटो व्याघातः। तथा च वेदान्तार्थस्याभेदस्य प्रतिपत्तिः स्वयमेव अनायासेनैव बाधितेत्याम्नायदौर्बल्यं सुतरां सिद्धमिति।

पूर्वपक्षं प्रतिक्षिपति - **तदपास्तमिति**। तत्र हेतुमाह - **यत इति**। अयमर्थः – कापि प्रतिपत्तिः स्वस्वरूपलाभाय उपायमाक्षिपति – अस्ति कश्चिदुपायोऽस्या इति, न तु तस्य परमार्थतामपि साधयति। यतो हि मिथ्याज्ञानादपि तत्त्वप्रतिपत्तिर्भवतीति दृश्यते लोके। अत एव मिथ्याहस्तिज्ञानादपि तात्त्विकवनस्पतिज्ञानमुत्पद्यत इत्यनुपदमुदाहृतम्। अतोऽभेदप्रतीतेराम्नायजन्याया प्रतियोगिविधया भेदस्योपायत्वेऽपि तस्य व्यावहारिकसत्यत्वमस्माकमिष्टमेवेति न काप्यनुपपत्तिः। एवञ्च प्रत्यक्षप्रमाणविरोधे शब्दस्य प्रबलत्वं दुर्बलत्वं च प्रत्यक्षादीनामिति स्थितम्।

ननु शब्दस्य यथार्थज्ञानजनने व्यभिचारोऽपि दृश्यते। यथा "नद्यास्तीरे पञ्च फलानि सन्ति" इत्यनाप्तवाक्यादर्थमवगत्य नदीतीरं गतो न तत्र फलानि लभत इति। वाक्यमिदं न प्रमाणं यथार्थज्ञानजनने। इत्थञ्च व्यभिचारदर्शनेन शब्दस्य प्रामाण्यमनिश्चितम्। प्रत्यक्षादिकेन तु यथार्थज्ञानजनने न क्वचिद् व्यभिचारो दृश्यत इति तस्य प्रामाण्यं निश्चितम्। अत एव प्रत्यक्षादिक प्रमाणं प्रबलमपि शब्दापेक्षयेति शङ्कायां समानन्यायेन समाधत्ते – **व्यभिचारदर्शनं चेति**। अयमर्थः –न हि सर्वेषु शब्देषु व्यभिचारो दृश्यते किन्तु दुष्टहेतुजन्य एव व्यभिचारो दृश्यते। तद्वत् प्रत्यक्षमपि यदि दुष्टहेतुजन्यं तदा तदपि यथार्थज्ञानजनने

**अथौपचारिकमेकत्वं तदर्थः, अविवक्षितार्थता वा जपोपयोगिनाम्, तत्र विरोध एव नास्तीति बलाबलचिन्ता नावतरति। तत् कुतः सावकाशत्वेन दौर्बल्यम्? कथं च मुख्यमर्थमतिलङ्घ्योपचरितोऽवकाशः?**

---

व्यभिचार्येव भवति, यथा चाकचिक्यदोषकाले जायमानं शुक्तिरजतज्ञानं व्यभिचारि भवति। यदि तु शब्दः प्रत्यक्षादिकञ्चोभे अपि न दुष्टहेतुजन्ये तदा समानरूपेण उभे अव्यभिचारितया प्रमाणे एव भवतः। एतदेवोक्तं मूले—**इतरयोरपि तुल्यमव्यभिचारित्वमिति**। इतरयोः = अदुष्टहेतुजन्ययोः शब्दप्रत्यक्षयोरित्यर्थः। इदम् "तुल्यमव्यभिचारित्वम्" इति पश्चात्तने सम्बध्यते। यथाऽदुष्टेन्द्रियजन्यतया प्रत्यक्षं प्रमाणं तथाऽदुष्टपुरुषोच्चरिततया शब्दोऽपि प्रमाणमित्यर्थः।

एवं यदुक्तम्—अनवकाशाः प्रत्यक्षादयः, सावकाशस्तु शब्दो गौणेनार्थेन, अतोऽनवकाशत्वात् प्रत्यक्षादीनां प्राबल्यं दौर्बल्यञ्च सावकाशस्य शब्दस्येति। तत्रोत्तरमुच्यते—**तथाऽनवकाशत्वमपीति**। अयं भावः—यथाऽदुष्टहेतूत्पन्नयोः शब्दप्रत्यक्षयोस्तुल्यमव्यभिचारित्वम्, तथा अनवकाशत्वमप्युभयोस्तुल्यमेव। तुल्यत्वमेवोपपादयति—**यदि खल्विति**। यदि हि एकमद्वितीयं ब्रह्म मुख्यो वेदान्तानामर्थस्तदा तद् विहाय कुत्र तेषां सावकाशता प्रदर्शयितुं शक्यते? न कुत्रापीति भावः।

तथा हि "श्येनेनाभिचरन् यजेत" इति श्रुत्या यज्ञीया हिंसा विधीयते। सा च तस्याः श्रुतेर्मुख्योऽर्थः, विहाय तस्या नास्ति कुत्राप्यवकाश इति अनवकाशत्वात् प्रबला सा "मा हिंस्यात् सर्वा भूतानि" इति श्रुतिं बाधते। दुर्बला हीयं श्रुतिस्तदपेक्षया यज्ञीयातिरिक्ततायां बाह्यहिंसायामस्याः सावकाशत्वात्। प्रकृते तु यथा प्रत्यक्षादिप्रमाणं निरवकाशं तथाऽद्वैतश्रुतिरपि निरवकाशैव, एकाद्वितीयब्रह्मरूपं मुख्यमर्थं विहाय अन्यत्र कुत्रापि वेदान्तानामवकाशाभावाद् इत्यभिप्रायः।

पूर्वपक्षमुत्थापयति—**अथेति**। प्रत्यक्षादिप्रमाणावगतं द्वैतमेव वास्तविकम्। "एकमेवाद्वितीयम्" इत्यादिवेदान्तानान्तु एकाद्वयत्वादिरूपोऽर्थो न मुख्यार्थः, **किन्तु औपचारिको गौणो जात्याद्यात्मना बोद्धव्यः**। **अथवा वेदान्तानामेकत्वादिकोऽर्थो**

**कथं वा औत्पत्तिके शब्दस्यार्थं प्रति शेषभावे– "दृष्टो हि तस्यार्थः कर्मावबोधनम्" (शाबरभाष्यम् – १/१/१) इति, "अविशिष्टस्तु वाक्यार्थः" (मी० सू० १/२/४०) इति च अविवक्षितार्थता ?**

---

नैव विवक्षितः। तर्हि वेदान्तानां क उपयोग इति चेत् "हुं फट्" इत्यादिमन्त्रवत् प्रणवादिवच्च जपाद्युपयोगिन एव त इति मन्तव्यम्।

उत्तरयति– **तत्रेति**। अयमर्थः – यदि वेदान्तानामेकत्वादिकमर्थो न मुख्यः किन्तु गौणः। अथवा गौणोऽपि नास्ति, प्रयोजनाभावात् प्रयोजनवती हि लक्षणा भवति । प्रत्युत सर्वथांऽविवक्षितार्थ एव स्यात्, तदा प्रत्यक्षादिप्रमाणाम्नाय-प्रमाणयोर्विरोध एव नास्तीति प्राबल्यदौर्बल्यचिन्तैव नावतरति = नावसरं लभते। अस्यां स्थितौ गौणैकत्वार्थे वेदान्तानां सावकाशत्वमुपपाद्य तेषां निरवकाश-प्रत्यक्षाद्यपेक्षया दौर्बल्यनिरूपणं कुतः सङ्गच्छते? एवमुपक्रमादिषड्विधलिङ्गै-र्वेदान्तानामद्वैतपरत्वावधारणान्नोपचरितार्थत्वं सम्भवतीत्याह – **कथं चेति**।

एवं मुख्यार्थपरित्यागे किं कारणं येन उपचरितार्थे वेदान्तानां सावकाश-त्वमाश्रीयेत। प्रत्यक्षादिप्रमाणविरोधात् कारणादिति चेत्, विरोधस्य प्रकारान्तरेण परिहृतत्वात्। अथवा तुल्यकक्ष्यो ह्यर्थोऽवकाशो भवति, न च मुख्येन गौणस्य तुल्यकक्ष्यत्वमस्ति, तुल्यकक्ष्यत्वे गौणमुख्येति व्यवस्था भज्येत।

एवं वेदान्तानामविवक्षितार्थत्वमपि न सम्भवतीत्याह– **कथं वेति**। अर्थं प्रति शब्दस्य शेषभावः (अङ्गत्वं) यदि औत्पत्तिको न प्रमाणान्तरसापेक्षस्तदाऽविव-क्षितार्थता कथमित्यर्थः? अयमभिप्रायः– शब्दस्य अर्थधीजननसामर्थ्यमौत्पत्तिकं स्वाभाविकं भवति। तथा च जैमनीयं सूत्रम्– "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इति। तथोक्तं शाबरभाष्येऽपि– "दृष्टो हि तस्यार्थः कर्मावबोधनम्" तस्य आम्नायस्य शब्दस्य अर्थः = फलं कर्मावबोधनं = कर्मज्ञानं दृष्टमेवास्ति। तस्माद् अविवक्षितार्थत्वेनादृष्टार्थ आम्नाय इति कल्पयितुं नैव शक्यते। "अविशिष्टस्तु वाक्यार्थः" इति जैमिनीयं सूत्रान्तरमपि अमुमभिप्रायमुपोद्वलयति

**प्रमाणान्तरविरोधादिति चेत्, वार्तमेतत्। न प्रमाणस्य प्रमाणान्तरापेक्षं प्रामाण्यम्, येन तद्विरोधे स्वरसं जह्यात्। तदपेक्षत्वे हि तदनुगुणतया वर्तेत। निरपेक्षस्य कः प्रमाणान्तरानुसरणे हेतुः। लौकिकास्तु शब्दाः प्रमाणान्तरापेक्षं स्वार्थमभिदधतीति युक्ता तेषां तदनुसारिणी वृत्तिः।**

---

यत् लोके वेदे च अविशिष्ट एव=समान एव वाक्यार्थो भवति न तु लोके विवक्षितार्थो भवति वेदे चाविवक्षितार्थो भवतीति ।तस्माद् वेदान्तानामविवक्षितार्थता न कल्पयितुमर्हेति ।

प्रकारान्तरेण अविवक्षितार्थत्वं परिहर्तुमाशङ्कते – **प्रमाणान्तरेति**। प्रत्यक्षादि-प्रमाणान्तरैर्भेदबोधकैरद्वैतबोधकस्य आम्नायस्य विरोधाद् आम्नायस्योपचरितार्थत्वं; (गौणार्थत्वं) प्रणवादिवदविवक्षितार्थत्वं वाऽङ्गीकरणीयमिति शङ्काशयः ।उत्तरमाह – **वार्तमेतदिति**। वार्तामात्रमेतत्, न वस्तुगतिरित्यर्थः ।असारमिति यावत् ।असारत्वमुप-पादयति – **न प्रमाणस्येति**। अयमर्थः – आम्नायप्रमाणस्य प्रामाण्यं यदि प्रमाणान्तर-सापेक्षं स्यात्, स्वतो न स्यात्, तदा प्रत्यक्षादिप्रमाणान्तरेण विरोधे सति तस्य स्वारसिकं प्रामाण्यं हीयेत। तथात्वे चाम्नायस्य गौणार्थत्वमविवक्षितार्थत्वं वा परिकल्प्येत प्रत्यक्षाद्यनुगामित्वं च तस्य भवेत्, न त्वेवमस्ति ।तस्मात् स्वप्रामाण्ये प्रमाणान्तरनिरपेक्षस्याम्नायस्य प्रमाणान्तरानुगामित्वे स्वमुख्यार्थपरित्यागे च नास्ति किमपि कारणमिति मन्तव्यम् ।

ननु लोके "सिंहो माणवकः" इत्यादौ माणवकस्य सिंहत्वं प्रत्यक्ष-प्रमाणविरुद्धमिति तत्रत्यः शब्दो निजं मुख्यार्थमपहाय प्रत्यक्षानुगुणतां भजमानः सिंहसादृश्यरूपं गौणार्थं लक्षयति। तद्वदिहापि अद्वैतवाक्यं द्वैतबोधकप्रत्यक्ष-प्रमाणविरोधात् स्वार्थं परित्यज्य प्रत्यक्षादनुकूलतां भजते गौणार्थं च प्रतिपादयति, अविवक्षितार्थो वा भवतीति चेत्, न, लौकिकशब्दाम्नायशब्दयोर्वैषम्यात्। लोके हि प्रत्यक्षादिप्रमाणार्थमवगत्य परप्रतिपत्तये लौकिकाः शब्दाः प्रयुज्यन्ते, अतस्ते प्रमाणान्तरापेक्षाः सन्तः स्वार्थमभिदधतीत्यतो विरोधे सति तेषां युक्तं प्रमाणान्तरा-नुसरणम्। वैदिकास्तु शब्दा अपौरुषेयतया स्वार्थाभिधाने न प्रमाणान्तरसापेक्षा भवन्तीति न तेषां प्रत्यक्षादिप्रमाणान्तरानुगामित्वं युक्तमिति भावः। एतत्सर्वम-भिप्रेत्याह – **लौकिकास्तु शब्दा इत्यादि** ।

**तुल्ये त्वनपेक्षत्वे किमिति न विपर्ययः? उभयोर्वा व्याघातादप्रामाण्यम्? "पौर्वापर्ये पूर्वदौर्बल्यम्" (मी० सू० ६/५/५४) इति वा रजतज्ञानस्येव पूर्वस्य बाधः? न खलु रजतज्ञानविरोधात् शुक्तिज्ञानमन्यविषयमविषयं वा।**

**कथं तर्हि वेदे गुणवादः? यत्र श्रौतैरर्थैः प्रमाणार्थनिष्पत्तेरसम्भवः, तत्र द्वितीयस्या अपि वृत्तेः शब्दानां प्रवृत्तिदर्शनात् तया प्रमाणविषयलाभः।**

---

एवं, प्रत्यक्षादिप्रमाणं यथा स्वार्थबोधने प्रमाणान्तरानपेक्षं तथाऽऽम्नायशब्दोऽपि प्रमाणान्तरानपेक्ष एव। इत्थञ्चोभयोर्यदि तुल्यं प्रमाणान्तरानपेक्षत्वं तदा वैपरीत्यमेव किं न स्यात्। अर्थात् प्रत्यक्षादिकमेवाम्नायानुसारितया किमिति न नीयते? अतश्च आम्नायप्रतिपाद्यमद्वैतमेव मुख्यं प्रत्यक्षादिगम्यं द्वैतन्तु औपाधिकमित्येव किमिति नाङ्गीक्रियते? एतदेवोक्तं **तुल्ये त्विति** मूलेन।

अथवा तुल्येऽपि उभयोर्निरपेक्षत्वे नाम्नायः प्रत्यक्षमनुसरति न वा प्रत्यक्षमाम्नायमनुसरति तदा द्वैताद्वैतरूपविरुद्धविषयकतया परस्परं व्याहतत्वादुभयोरपि अप्रामाण्यं प्रसज्येत। अथवा "पौर्वापर्ये पूर्वदौर्बल्यम्" (मी० सू० ६/५/५४) इति जैमिनीयोक्तन्यायानुसारेण परस्परविरुद्धयोः प्रत्यक्षाम्नाययोः पूर्वकालवर्तिनः प्रत्यक्षस्यैव बाधः, आम्नायस्यैव च प्राबल्यं कथं न स्यात्? यथा रजतज्ञानशुक्तिज्ञानयोर्मध्ये पूर्वस्य रजतज्ञानस्यैव बाधो भवति, नोत्तरस्य शुक्तिज्ञानस्य। न हि भवति तत्र नेदं रजतज्ञानविरोधाद् जायमानं शुक्तिज्ञानं शुक्तिं विहायान्यत् किमपि विषयीकुर्यात् सर्वथा निर्विषयं वा भवेदिति। एतदुक्तम् – **"उभयोर्वा"** इत्यारभ्य **"अविषयं वा"** इत्यन्तेन ग्रन्थेन।

ननु प्रमाणान्तरविरोधेऽपि यद्याम्नायो मुख्यार्थं न जहाति तदा "यजमानः प्रस्तरः, आदित्यो यूपः" इत्यादि श्रुतौ कथं गुणवादः=गौणार्थस्वीकारः? न ह्यत्र प्रमाणान्तरविरोधमन्तराऽन्यत् किमपि कारणमस्ति गौणार्थस्वीकारे इत्याशङ्क्ते– **कथमिति**। उत्तरयति – **यत्रेति**। यत्र श्रुतैरभिधेयार्थैराम्नायप्रमाणस्य योऽर्थो विषयः, तस्य निष्पत्तेः = प्रमितेः असम्भवस्तत्र शब्दानां द्वितीयस्या गौण्या वृत्तेः प्रवृत्तिर्दृश्यते, अर्थात् तादृशस्थले मुख्यां विहाय गौणीं वृत्तिमाश्रित्य

**यत्र तु शब्दाः स्वरसेन लभन्ते विषयम्, तत्र न प्रमाणान्तरविरोधादपावर्तन्ते। न ह्येषां प्रमाणान्तरनिबन्धनोऽर्थः, येन तद्वशादपावर्तेरन्।**

---

शब्दैर्वाक्यार्थबोधो जन्यत इति दृश्यते लोके। अतस्तत्र द्वितीयवृत्त्यैव प्रमाणविषयो लभ्यत इति। इत्थं च तादृशस्थले शब्दाद् गौणीं वृत्तिमाश्रित्य वाक्यार्थबोधजनने हेतुरभिधेयार्थप्रमित्यसम्भव एव, न प्रमाणान्तरविरोधः। अतः ''यजमानः प्रस्तरः, आदित्यो यूपः'' इत्यादौ वेदेऽपि वाक्यार्थानिष्पत्तिरेव गुणवादे = गौणार्थस्वीकारे हेतुः, यूपस्यादित्यतायाः ''यूपे पशुं नियुञ्ज्यात्'' इति श्रुतेः पशुनियोजनरूपवाक्यार्थेऽन्वयासम्भवात् प्रमाणार्थानिष्पत्तिरस्त्येव। एवं यजमानस्य प्रस्तरत्वाभावात् ''प्रस्तरे जुहूं सादयति' इति श्रुतौ जुहूदनरूपवाक्यार्थानिष्पत्तिकारणादेव गुणवादाश्रयणमिति न तत्र मानान्तरविरोधो हेतुः। मानान्तरविरोधस्तु तत्र वाक्यार्थानिष्पत्तावेव हेतुः, वाक्यार्थानिष्पत्तिरेव च गुणवादाश्रयणे हेतुरिति तात्पर्यम्।

अभ्युपगमसिद्धान्तमाश्रित्य वेदान्ते व्यतिरेकमाह – **यत्र त्विति**। अयं भावः – वाक्यं हि द्विविधं भवति– तत्परमतत्परञ्चेति। यद्धि अतत्परं वाक्यं यथा ''आदित्यो यूपः, यजमानः प्रस्तर'' इत्यादि तत्र श्रौतवाक्यार्थनिष्पत्तये गुणवादाश्रयणे कामं मानान्तरविरोधौ हेतुतया स्वीकृतः स्यात्, किन्तु तत्पराणां वेदान्तवाक्यानां ''तत्त्वमसि, एकमेवाद्वितीयम्'' इत्यादीनां वाक्यार्थानिष्पत्तिरेव गुणवादाश्रयणे हेतुर्न तु मानान्तरविरोधो हेतुरिति विज्ञेयम्। उक्तवेदान्तवाक्यानि अद्वैतपराण्येव सन्तीति वेदान्ताभ्युपगमः। अतस्तत्र तथाविधाद्वैतरूपवाक्यार्थनिष्पत्तय एव गुणवाद आश्रयणीयो भवतीति रहस्यम्।

मूलशब्दार्थस्तु– यत्र वेदान्तेषु शब्दाः स्वरसेन = वाक्यार्थानिष्पत्तिहेतुकेन गुणवादमात्रेणाद्वैतात्मकं विषयं लभन्ते बोधयन्ति, तत्र मानान्तरविरोधाद् हेतोः तात्पर्यार्थाद् अद्वैताद् न निवर्तन्ते, प्रत्युताद्वैतमेव तात्पर्यविषयभूतं बोधयन्ति। अत्र पूर्वोक्तमेव हेतुं स्मारयन्नाह – **न ह्येषामिति**। यदि प्रमाणान्तराधीनो वेदान्तवाक्यार्थबोधो भवेत्, तदा तद्विरोधे सति वेदान्तवाक्यानि तात्पर्यविषयभूताद् अद्वैतरूपात् प्रतिपाद्याद् अपावर्तेरन्, किन्तु नास्त्येवमिति भावः।

**अथ मतम् – उभयानुग्रहादेवं कल्प्यते । एवं हि शब्दः प्रत्यक्षादयश्चानुगृहीता भवन्ति, अन्यथा प्रत्यक्षादयोऽत्यन्तमेव बाधिताः स्युः। नैतत् सारम्– प्रमाणसामर्थ्यानुसारेण प्रमेये काचित् कल्पना स्यात्। प्रमाणे तु स्वरससिद्धं परित्यज्य कल्पनायां न निबन्धनमस्ति। तस्मात् प्रमाणानुसारेण विकल्पसमुच्चयव्यवस्थाः कल्प्यन्ते, नोभयानुग्रहात्। नोभयमनुग्रहीतव्यमिति प्रमाणमस्ति।**

---

प्रकारान्तरेण शङ्कते – **अथ मतमिति**। उभयोराम्नायप्रत्यक्षाद्योरनुग्रहात्= उपपन्नतामभिप्रेत्य एवम्= आम्नायस्य गौणत्वं कल्प्यते भेदवादिभिः। आम्नायस्य गौणत्व एव शब्दः प्रत्यक्षादयश्च अनुगृहीताः = उपपन्ना भवन्ति। अर्थाद् आम्नायस्य गौणार्थत्वस्वीकारे भावानां जात्याद्यात्मनाऽभेदः स्वतो व्यक्त्यात्मना च भेद इत्येवंरूपेण जातिव्यक्तिरूपभिन्नविषयत्वेन उभयोरप्यविरोधाद् उभावप्यनुगृहीतौ भवतः, नाम्नायेन प्रत्यक्षादिर्बाध्यते, नापि प्रत्यक्षादिनाऽऽम्नायो बाध्यत इति। अन्यथाऽऽम्नायस्य मुख्यार्थत्वे प्रत्यक्षादयोऽत्यन्तमेव बाधिताः स्युरिति शङ्काग्रन्थाशयः। शङ्कामिमां समाधत्ते – **नैतत् सारमिति**।

अयं भावः – प्रमाणस्य यादृशं सामर्थ्यं भवति, तदनुसोरेणैव प्रमेयविषयिणी काचित् कल्पना भवति, यथा "भावानां भेदो वाऽस्ति अभेदो वाऽस्तीति विकल्पस्य, उभावपि स्त इति समुच्चयस्य वा कल्पनाऽस्ति" इति। यतो हि प्रमाणगतं स्वरससिद्धं स्वाभाविकं सामर्थ्यमुपेक्ष्य प्रमाणमनुग्रहीतव्यमिति कृत्वा कस्यामपि कल्पनायां नास्ति प्रयोजकम्। आम्नायप्रमाणस्य प्रत्यक्षादिप्रमाणस्य च सामर्थ्यं परीक्ष्य तदनुसारेणैव भेदाभेदान्यतरव्यवस्था तदुभयसमुच्चयव्यवस्था वा कल्पनीया, न तूभयानुग्रहमभिप्रेत्य कापि कल्पना युक्ता। यतः प्रमाणद्वयमपि अनुग्रहीतव्यमेवेत्यत्र नास्ति किमपि प्रमाणम्। अत एव "व्रीहिभिर्यजेत यवैर्वा यजेत" इति प्रबलश्रुतिद्वयमनुसृत्य विकल्पः स्वीक्रियते। अत एव च "उदिते जुहोति अनुदिते जुहोति" इत्यत्र शास्त्रान्तरसामर्थ्यानुसारेण चरणभेदेन व्यवस्था कल्प्यत इति।

अतोऽत्र द्वैताद्वैतनिर्णयप्रसङ्गे आम्नायप्रमाणसामर्थ्यं प्रत्यक्षादिप्रमाणसामर्थ्यं च परीक्षणीये, तदनुसारेणैव च निर्णयः कर्तव्यः। परीक्षितं

**त एव प्रमाण इति चेत् – यदि मतम्, न प्रमाणस्य प्रमाणान्तरादनुग्राह्यत्वम्, अपि तु स्वत एव, प्रमाणत्वादेव हि तस्य तेनार्थव्यवस्थापना(त्)। यथा तर्हि ततोऽर्थोऽवगम्यते तथा व्यवस्थापनीयः। एवं तदनुगृहीतं भवति, अन्यथा बाधितं स्यात्।**

---

चानुपदमेव– प्रत्यक्षाद्याम्नाययोर्विरोधे सति आम्नायस्यैव प्राबल्यं दौर्बल्यञ्च प्रत्यक्षादेरिति भावः।

पूर्वपक्षी आह – यदुक्तं सिद्धान्तिना ''आम्नायः प्रत्यक्षादि चोभयमप्यनुग्रहीतव्यमित्यत्र किमपि प्रमाणं नास्तीति'', तन्न युक्तम्, परस्परविरुद्धे ये प्रत्यक्षाद्याम्नायरूपे प्रमाणे स्तः, स्वयमेव तयोस्तत्रानुग्रहे प्रमाणत्वेन प्रमाणान्तरापेक्षाऽभावात्।एतदेव विशदयति मूले – **यदि मतमिति**।अयं भावः– प्रत्यक्षाद्याम्नायौ स्वतः प्रंमाणभूतौ ।अतः स्वतः प्रमाणयोस्तयोः स्वयमनुग्राह्यत्वं न प्रमाणान्तरात्। यदि प्रमाणान्तरं तयोरनुग्राहकं स्यात् तदा प्रमाणत्वमेव तयोरनुपपन्नं स्यात्। अतः प्रमाणभूतत्वादेव ते उभे स्वं स्वमर्थं व्यवस्थापयतः। एतदनुसारं प्रत्यक्षादेर्द्वैतमर्थः, आम्नायस्य च गौणोऽद्वैतार्थ इति व्यवस्था स्वीकरणीया।एतावता द्वयोः प्रमाणत्वं सूपपन्नं तिष्ठति, अनुग्राह्यत्वं च सिध्यति। अन्यथा एतयोः कस्याप्येकतरस्य प्रमाणत्वं बाधितं स्यात्, सुन्दोपसुन्दन्यायेन द्वयोरपि वा प्रमाणत्वं बाधितं भवेदिति ।अतः प्रमाणभूतत्वात् प्रमाणान्तरानपेक्षं स्वत एव ताभ्यां तयोरनुग्राह्यत्वसिद्ध्या प्रत्यक्षाद्याम्नायौ स्वतोऽनुगृहीतौ भवत इति पूर्वपक्षाशयः।

अत्र सिद्धान्ती आह – **यथा तर्हीति**। अयं भावः – प्रत्यक्षाद्याम्नायौ न प्रमाणान्तरबलात् स्वविषयव्यवस्थापनेनानुगृहीतौ भवतः किन्तु स्वत एव, प्रमाणभूतत्वादिति भवतां पक्षः। तत्रोच्यते – एवन्तर्हि तेन प्रमाणेन यथाभूतो विषयः प्रतीयते तथैव तेन स विषयो व्यवस्थापनीयः। यथाप्रतीति व्यवस्थापन एव तत्प्रमाणमनुगृहीतं भवति, अन्यथा व्यवस्थापने तथाभूतार्थत्यागे तत् प्रमाणं बाधितं स्यान्नानुगृहीतं स्यादिति ।एवञ्च ''एकमेवाद्वितीयम्'' इत्याम्नायप्रमाणस्या-

**अप्रमाणिका चार्थव्यवस्था, ततः स्वरसेनाप्रतीतेः अन्यस्य चाभावात्। इतरेतराश्रयप्रसङ्गाच्च; प्रामाण्यात् सिद्धाद् अर्थान्तरे प्रतीतिः प्रामाण्यान्यथानुपपत्त्या कल्पनीया, तत्प्रतीतेश्च प्रामाण्यम्। स्वरसलभ्ये त्वर्थे प्रतीतित एव प्रामाण्यमिति नेतरेतराश्रयता।**

---

द्वैतरूपव्यवस्थापने सति प्रत्यक्षादिप्रमाणविषयस्य द्वैतस्यासम्भवाद् द्वैतव्यवस्थापनाभावे द्वैतबोधकप्रत्यक्षादिप्रमाणं क्वानुगृहीतं भवति? तस्माद् भवतामुभयप्रमाणानुग्रहपक्षो नैव सम्भवतीति बोध्यम्।

यथाप्रतीति अर्थव्यवस्थाया अस्वीकारे साऽर्थव्यवस्था अप्रामाणिकी स्यात्। यतो हि सोऽर्थो न स्वरसतस्तस्मात् शब्दात् प्रतीयते। योऽर्थः शब्दात् स्वसरतः प्रतीयेत स एवार्थः प्रामाणिकः, तद्भिन्नस्त्वप्रामाणिक एवेति भावः। न च स्वरसतोऽप्रतीयमानोऽप्यर्थः प्रमाणान्तरबलेन प्रामाणिको भविष्यतीति वाच्यम्, प्रमाणान्तरस्याभावात्। एतदेवोक्तम् – **अन्यस्य चाभावादिति**। अन्यस्य प्रमाणस्य प्रत्यायकस्याभावादित्यर्थः। अतः साऽर्थव्यवस्था अप्रामाणिक्येव स्यादिति रहस्यम्।

एवम्, प्रत्यक्षादिविरोधे आगमस्य प्रमाणस्य प्रामाण्यरक्षायै ततः स्वरसतोऽप्रतीयमानस्यापि गौणार्थस्य व्यवस्थास्वीकारे अन्योन्याश्रयदोषप्रसङ्गोऽपि स्यादित्याह – **इतरेतराश्रयप्रसङ्गाच्चेति**। अन्योन्याश्रयमेवोपपादयति – **प्रामाण्यात् सिद्धादिति**। अद्वैतार्थं परित्यज्य आगमस्य प्रामाण्ये सिद्धे सति तत्प्रामाण्यान्यथाऽनुपपत्त्या गौणमर्थान्तरं व्यवस्थापनीयम्, प्रतीयमाने च गौणार्थे तत्प्रतीत्यन्यथानुपपत्त्याऽऽगमस्य प्रामाण्यं सिद्धं स्यादिति स्फुटोऽत्रान्योन्याश्रयो दोष इति भावः। "एकमेवाद्वितीयम्" इत्याद्यागमस्य मुख्यार्थपरतायां तु नान्योन्याश्रयः, अद्वैतार्थस्य स्वरसत एवागमात् प्रतीतेः। अद्वैतार्थप्रत्यायकत्वाच्चागमस्य तस्मिन्नर्थे प्रामाण्यं ज्ञातं भवति। यत् स्वरसतो यदर्थप्रत्यायकं भवति तत् तस्मिन्नर्थे प्रमाणं भवतीति नियमात्। तथा च प्रकृते प्रामाण्यसिद्ध्यर्थं प्रतीतेरपेक्षायामपि तत्प्रतीत्यर्थं पूर्वं न प्रामाण्यसिद्धेरपेक्षा, प्रतीतेः स्वरसतो निष्पत्तेः। अतो नास्मिन् **पक्षे इतरेतराश्रयो दोष इति भावः।**

**तस्माद् विरोधे बाध एव पूर्वस्य प्रमाणानुसारी, तथा प्रतीतेः, नोत्तरस्य विषयान्तरकल्पना। न खलु रजतज्ञानानुग्रहाय शुक्तिशकलज्ञानस्य गोचरोऽपरः कल्प्यते।**

**न च प्रत्यक्षादीनामनन्यगतित्वादनवकाशत्वम्। या खलु रजतादिविभ्रमाणां गतिः, सा तेषामपि। यदि तेषामुपचरितः कल्पितो वा विषयः, प्रत्यक्षादीनामपि तथा।**

---

निष्कर्षमुद्घाटयति – **तस्मादिति**। यस्मात् स्वारसिकार्थप्रत्यायकतयाऽऽगमस्य प्रामाण्यं सुस्थिरम्, तस्मात् प्रत्यक्षादिप्रमाणविरोधे सति पारमार्थिकप्रामाण्यरहितस्य व्यावहारिकप्रामाण्यस्यापि पूर्वतनस्य प्रत्यक्षादेर्बाध एव प्रमाणानुसारी = आम्नायप्रमाणानुगुणः प्रामाणिक इति यावत्। बाधे हेतुमाह – **तथा प्रतीतेरिति**। पूर्वोपमर्देनैवोत्पत्तेरित्यर्थः। अत एवोत्तरस्य प्रमाणस्याम्नायस्य गौणार्थरूपविषयान्तरकल्पना नोचिता, तस्य पूर्वप्रत्यक्षाद्यपेक्षया प्राबल्यात्। अत एव च नोभयोः प्रत्यक्षाद्याम्नाययोस्तुल्यमनुग्राह्यत्वम्। तेनाम्नाय एवानुग्राह्यो बाध्यश्च प्रत्यक्षादिरिति सिद्धम्।

अत्रैव दृष्टान्तमाह – **न खल्विति**। पूर्वमपि भ्रान्तस्य रजतज्ञानं बाध्यत एव नानुगृह्यते। तथा रजतज्ञानानुग्रहाय शुक्तिशकलज्ञानस्य न गौणार्थो विषयान्तरं कल्प्यत इति।

न च वाच्यं प्रत्यक्षादीनामनन्यगतित्वादनवकाशत्वम्, आगमस्य तु उपचरितार्थत्वेन अविवक्षितार्थत्वेनापि वा सावकाशत्वं सम्भवतीति, प्रत्यक्षादीनां व्यावहारिकत्वेन सावकाशत्वस्य प्रतिपादितत्वात्। रजतादिभ्रमाणां या गतिरस्ति सैव गतिः प्रत्यक्षादीनामपि भवितुमर्हति। रजतादिविभ्रमवत् प्रत्यक्षादीनामपि भ्रान्तित्वमेव गतिरित्यभिप्रायः।

रजतादिविभ्रमेषु प्रत्यक्षादिभ्यो वैषम्यमाशङ्क्य निराकरोति – **यदि तेषामित्यादिना तथेत्यन्तेन** ग्रन्थेन। अयमर्थः – यथा रजतादिभ्रमाणां विषयो

**अथासत्त्वात् तस्याऽविषयाः[1] = अविद्यमानार्थाः, प्रत्यक्षादयोऽप्येवम् । तस्मादविवक्षितार्थत्वमुचरितार्थत्वं वा गतिरुभयोरविशिष्टा ।**

**एतेनेदमपि पराकृतम् – यदाहुः – शब्दस्य प्रमाणान्तरविरोधे दृष्टमुपचरितार्थत्वमविवक्षितार्थत्वं वा लोके । तस्मात् प्रत्यक्षादिविरोधे वेदान्तानां तथाभाव इति – प्रत्यक्षादिष्वपि तथा, दर्शनादिति ।**

---

रजतादिरुपचरितो भवति कल्पितो वा भवति, तथैव प्रत्यक्षादीनां प्रमाणानामपि विषय उपचरितः कल्पित एव वा भवतीति मन्तव्यम् । ''अग्निर्माणवकः'' इत्यादिस्थले माणवकः स्वरूपेण सन्नेव भवति तेजस्वितागुणयोगेन च बुद्धिपूर्वकम् अग्निशब्दस्य उपचरितार्थो व्यवह्रियते, ''रजतमिदम्'' इति स्थले तु न बुद्धिपूर्वकम् इदमर्थे रजतशब्द उपचर्यते किन्तु भ्रमादिति अवान्तरविशेषमात्र-प्रदर्शनार्थं ''कल्पितो वा'' इति पक्षान्तरमुक्तमिति ध्येयम् ।

प्रत्यक्षादिभ्यो रजतादिविभ्रमाणां विलक्षणत्वमाशङ्कते – **अथेति** । ननु विभ्रमेषु तस्य = रजतादेरसत्त्वात् ते विभ्रमाः, नास्ति विषयो येषां ते अविषयास्तादृशाः सन्ति । अस्यैव शब्दान्तरेण व्याख्यानम् – **अविद्यमानार्था इति** । उत्तरमाह – **प्रत्यक्षादयोऽप्येवमिति** । अयमर्थः – यथा रजतादिविभ्रमा असद्विषयास्तथा प्रत्यक्षादयोऽपि परमार्थतोऽसद्विषया एवेति नास्ति किञ्चिद् वैषम्यमिति । प्रकृतमुपसंहरति– **तस्मादिति** । यथाऽऽम्नायस्य उपचरितार्थत्वमविवक्षितार्थत्वं वा गतिरिति तस्य सावकाशत्वं भवान् साधयति, तद्वत् प्रत्यक्षादीनामपि रजतादिविभ्रमवद् असद्विषयत्वमेव गतिरिति तेऽपि सावकाशा एवेति न निरवकाशत्वेन तैराम्नायस्य बाध इति मन्तव्यम् ।

अनैनेव प्रकारेण मतान्तरमपि निरसनीयमित्यतिदिशन्नाह – **एतेनेति** । परोक्तिं स्पष्टयति– **शब्दस्येति** । यथा लोके दृष्टम्, तथैवाम्नायेऽपि कल्पना युक्ता । लोके च ''अग्निर्माणवकः'' इत्यग्निशब्दस्योपचरितार्थत्वमविवक्षितार्थत्वं वा क्वचिद् दृष्टमस्ति, अतो दृष्टानुसारिण्याः कल्पनाया युक्तत्वेन ''एकमेवाद्वितीयम्'' इति

---

१. 'तस्य, तेऽविषयाः' इत्यभिप्रायप्रकाशिकानुसारी पाठः ।

यत्तु मुख्यत्वात् प्रतिष्ठितार्थैरपहृतविषय आम्नाय इति, अत एव बाधकः, शुक्तिज्ञानवत्। न च तदनुसारेणार्थकल्पनामर्हति, अनपेक्षत्वात्। न तदधीनमस्य प्रमाणत्वम्। न तैः सम्भूयकारित्वम्। नाम्नायस्य प्रत्यक्षादीनां चैकवाक्यभावः। परस्परानपेक्षौ ह्युभयत्र बुद्ध्युत्पादः। तत्र परबलीयस्त्वं न्याय्यम्। यथोक्तम्—

"पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्"॥

(तन्त्रवार्तिके, पृ० ८१९ )

---

वेदान्तेऽपि प्रत्यक्षादिभिर्विरोधे सति तथाभावः = उपचरितार्थत्वमविवक्षितार्थत्वं वा भविष्यतीति। परमतमिदं निरस्यति— **प्रत्यक्षादिष्वपि तथा दर्शनादिति**। अयं भावः — रजतादिविभ्रमदृष्टान्तेन पूर्वप्रदर्शितेन सद्विषयत्वेन प्रतीयमानानां प्रत्यक्षादीनामपि उपचरितार्थत्वं कल्पितार्थत्वं च स्वीकार्यम्। अतः समकोटिकतया प्रत्यक्षाद्याम्नाययोरुभयोरपि समानैव स्थितिरिति अनया युक्त्या नाम्नायस्यैव प्रत्यक्षादिबाध्यत्वमिति तात्पर्यम्।

पुनः प्रत्यक्षादेराम्नायबाधकत्वमाशङ्कते— **यत्त्विति**। अयं शङ्काग्रन्थाशयः — मुख्यत्वात् = प्रथमभावित्वात् प्रत्यक्षादय आम्नायस्य बाधकाः सन्ति। यतो हि प्रथमभावितया अनुपजातविरोधिनः, अत एव प्रतिष्ठितः सुव्यवस्थितः अर्थो विषयो येषां, तादृशाः सन्ति प्रत्यक्षादयः, आम्नायस्तु प्रत्यक्षापेक्षया पश्चाद्भावितया प्रतिष्ठितार्थैः प्रत्यक्षादिभिरपहृतविषयः, अर्थाद् बाधितविषयो भवति। तस्माद् बाधकत्वेन मुख्याः प्रत्यक्षादयो द्वैतबोधने प्रमाणम्, पश्चाद्भावी आम्नायस्तु बाध्यत्वेन अद्वैतबोधने न प्रमाणं भवितुमर्हतीति।

समाधत्ते — **अत एवेति**। अयं भावः — पूर्वभावित्वं न प्रत्यक्षादेर्बाधकत्वे प्रयोजकम्, प्रत्युत तस्य बाध्यत्व एव प्रयोजकम्। एवमेव पश्चाद्भावित्वं नाम्नायस्य बाध्यत्वे प्रयोजकं किन्तु बाधकत्व एव प्रयोजकम्। यथा च पूर्वभाव्यपि

रजतज्ञानं बाध्यं भवति, पश्चाद्भाव्यपि च शुक्तिज्ञानं रजतज्ञानस्य बाधकं भवति, तद्वद् द्वैतबोधकाः प्रत्यक्षादयः पूर्वभाविनोऽपि बाध्या भविष्यन्ति, अद्वैतबोधक आम्नायः पश्चाद्भाव्यपि प्रत्यक्षादिबाधको भविष्यतीति।

ननु यः पश्चाद्भावी स पूर्वभाविनमनुसरतीति नियमात् पश्चाद्भावी आम्नायः प्रत्यक्षादिप्रमाणमनुसरिष्यति। अतः प्रत्यक्षानुसारेणैव आम्नायार्थः कल्पनीय इति शङ्कते – **न चेति**। उत्तरयति – **अनपेक्षत्वादिति**। अनपेक्षत्वमेव स्फुटीकरोति – **न तदधीनमस्य प्रमाणत्वमिति**। आम्नायस्तदा प्रत्यक्षादिकमपेक्षेत, यदि प्रत्यक्षाद्यधीनमाम्नायस्य प्रामाण्यं स्यात्, न त्वेवमस्ति, अपौरुषेयत्वेन निरस्त-समस्तपुन्दूषणतयाऽऽम्नायस्य स्वतः प्रमाणत्वात्। अतोऽन्यप्रमाणनिरपेक्षतया न प्रत्यक्षाद्यनुसारेणाम्नायार्थकल्पना युक्तेति भावः।

ननु प्रत्यक्षादिभिः सम्भूय (सम्मिल्य) बोधरूपैककार्यकारित्वमाम्नायस्या-स्तीत्यत एव प्रत्यक्षादिसापेक्षत्वमाम्नाये आयाति। परस्परविरुद्धयोः प्रमाणयोः सम्भूयैककारित्वं तदैवोपपद्यते यदा पूर्वानुरोधेन आम्नायो मुख्यार्थं हित्वोपचरितार्थः स्वीक्रियेतेत्याशङ्कां निराकरोति – **न तैरिति**। तैः प्रत्यक्षादिप्रमाणैरित्यर्थः। प्रत्यक्षादिकं पृथगेव द्वैतप्रमितिं जनयति, आम्नायश्च पृथगेवाद्वैतबोधं जनयतीति नास्ति सम्भूयैककार्यकारित्वमत एव च नास्ति आम्नायस्य प्रत्यक्षादिसापक्षेत्वं येन प्रत्यक्षाद्यनुसारेणाम्नायो नीयेतेत्यर्थः।

प्रकारान्तरेणाशङ्क्य निराकरोति – **नाम्नायस्येति**। नन्वेकवाक्यत्वादेव प्रत्यक्षाद्याम्नाययोः सम्भूयकारित्वमस्त्विति चेत्, इदमपि नास्तीत्यर्थः। यद्यप्येक-वाक्यत्वं शब्दप्रमाणयोरेव सम्भवति, आम्नायस्य शब्दात्मकत्वेऽपि प्रत्यक्षादेः शब्दात्मकत्वाभावात् तदसम्भवः, तथाप्येकवाक्यत्वमत्र एकतात्पर्यकत्वरूपं ग्राह्यमिति न काचिदनुपपत्तिरिति चेन्न, प्रत्यक्षादिकं द्वैततात्पर्यकमस्ति, आम्ना-यश्चाद्वैततात्पर्यकोऽस्तीति नैकतात्पर्यकत्वरूपमेकवाक्यत्वमप्यनयोरस्तीति समाधानग्रन्थाशयः।

प्रत्यक्षादिप्रमाणाम्नाययोस्तु एकवाक्यताया असम्भवमेवोपपादयति – **परस्परानपेक्ष इति**। अर्थात् प्रत्यक्षादिप्रमाणमाम्नायश्चोभावपि परस्परानपेक्षावेव सन्तौ बुद्धिमुत्पादयतः स्वातन्त्र्येण, अतो नैकवाक्यता तयोरस्ति। तस्मात्

**यत्र त्वेकवाक्यतया सम्भूयकारित्वं तत्रानुपजातविरोधितया स्वरसवृत्त्या मुख्ये स्थिते, प्रथमया वृत्त्या तदेकवाक्यत्वं प्रतिपत्तुमशक्नुवन्ति तदपेक्षितार्थसमर्पणानुपपत्तेः परपदानि द्वितीयया वृत्त्या पूर्वापेक्षितमर्थं समर्थयन्त्येकवाक्यतासामर्थ्यादिति मुख्यबलीयस्त्वम्।**

---

परस्परानपेक्षयोः पूर्वापरयोस्तयोर्विरोधे सति परबलीयस्त्वमेव न्यायसङ्गतमिति आम्नायस्यैव परत्वात् प्राबल्यं न पूर्वस्य प्रत्यक्षादेरिति मन्तव्यम्। अत्र तन्त्रवार्तिकोक्तं मीमांसान्यायमुद्धरति –

**"पूर्वात् परबलीयत्वं तत्र नाम प्रतीयताम्।**

**अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेत्"**॥ (त० वा०, पृ० ८१९)

निगदव्याख्यातमेतद् वार्तिकम्। विशेषस्तु शङ्खपाणिव्याख्यायां द्रष्टव्यः।

तर्हि कुत्र मुख्य(पूर्व)बलीयस्त्वमिति प्रदर्शयति – **यत्र त्वित्यादिना**। यत्र तु वाक्यविशेषे बहूनां पदानामेकवाक्यताबलात् सम्भूयकारित्वमर्थात् सम्भूय एकवाक्यार्थज्ञानकारित्वमस्ति, तत्र पूर्वं कस्यचिद् विरुद्धज्ञानजनक-पदस्यानुच्चरितत्वेन प्रथमपदमसञ्जातविरोधि भवति, अत एव मुख्यं तद् निर्विरोधतया स्वरसवृत्त्याऽभिधया स्वमुख्यार्थे प्रतिष्ठितं भवति। प्रतिष्ठितार्थे च तस्मिन् उत्तरवर्तीनि पदानि यदि स्वरसवृत्त्या प्रथमोच्चरितेन मुख्यपदेन सहैकवाक्यतां प्राप्तुं न शक्नुवन्ति, तदा द्वितीयया गौण्या वृत्त्या एव पूर्वपदाभि-प्रेतमर्थं समर्पयन्ति = स्वमुख्यार्थं हित्वापि बोधयन्ति, एकवाक्यतासामर्थ्यात्। अन्यथा अन्योन्यमनन्वितार्थानां पदानामेकवाक्यतैव न स्यात्। अर्थात् तादृशस्थले पूर्वपदस्यैव बलीयस्त्वं भवति नोत्तरपदानामिति भावः। एतदेवोक्तम् **'यत्र तु'** इत्यारभ्य **'मुख्यबलीयस्त्वम्'** इत्यन्तेन ग्रन्थेनेति ज्ञेयम्।

अत्रायं दृष्टान्तः – ज्योतिष्टोमे श्रूयते – "उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना" इति (ऐ० ब्रा० ५/५/६)। अत्र विधिवाक्यगता ऋगादिशब्दा मन्त्रवाचिनः सन्ति, अत उच्चैस्त्वादयो मन्त्रधर्माः स्युः। तथा सति यजुर्वेदोत्पन्ना अध्वर्युणा प्रयुज्यमाना अपि ऋच उच्चैरेव पठितव्या इति पूर्वपक्षः।

अत्र सिद्धान्तः – उक्तविधिवाक्यानामुपक्रमे वेदशब्दः श्रुतः – वेदा असृज्यन्त, अग्नेर्ऋग्वेदः, वायोर्यजुर्वेदः, आदित्यात् सामवेद इति। अतः

**यत्तु व्याकुलत्वादिति, तत्रोच्यते – स्याद् व्याकुलत्वम्, यदि कर्मविधयो भेदप्रतिपादनपराः स्युः। ते तु सिद्धभेदमुपाश्रित्य ''इदमनेनेत्थं साधयेत्'' इति पुरुषहितानुशासनप्रधानाः।**

---

असञ्जातविरोधित्वेन प्रबलमुपक्रममनुसृत्य तद्वशेन ''उच्चैर्ऋचा क्रियते'' इत्याद्युपसंहारो नेयः, एकवाक्यतासामर्थ्यादिति कृत्वा उपक्रमगतवेदानुसारेण उक्तविध्युद्देशगतानामपि ऋगादिशब्दानां वेदपरत्वमेवास्ति, न तु मन्त्रपरत्वम्। तस्माद् ऋचोऽपि यजुर्वेदोत्पन्नास्तदा उपांश्वेव पठनीयाः ''उपांशु यजुषा'' इति विधेरिति निर्णयः। अनेन दृष्टान्तेनेदमायाति यद् एकवाक्यतासामर्थ्यात् पूर्वपदस्यैव बलीयस्त्वं भवति नोत्तरपदानामिति। किन्तु यत्र नास्ति एकवाक्यता किन्तु अन्योन्यनिरपेक्षाणि पदानि सन्ति तत्र पूर्वात् परस्यैव बलीयस्त्वं भवतीति पूर्वभूतप्रत्यक्षाद्यपेक्षया उत्तरस्याम्नायप्रमाणस्यैव प्राबल्यमिति अद्वैतरूपमुख्यार्थ एवाम्नायस्य न तु द्वैतरूपो गौणार्थ इत्यभिप्रायः।

पुनः पूर्वपक्षमुत्थापयति – **यत्त्विति**। व्याकुलत्वात्= परस्परव्याहतत्वादाम्नायस्येत्यर्थः। अयमाशयः – आम्नायस्य कर्मकाण्डीयाः कर्मविधयः साध्यसाधनेतिकर्त्तव्यतारूपांशत्रयभेदपराः सन्ति, भेदमन्तरा कर्मविधीनां चरितार्थत्वासम्भवात्। ज्ञानकाण्डीया वेदान्ताश्च सर्वाभेदपराः। इत्थञ्चाम्नायस्य स्वयमेव भेदाभेदरूपपरस्परव्याहतार्थतया प्रामाण्यं दुर्लभम्। प्रत्यक्षादिविरोधे तु सुतरां तस्याप्रामाण्यमिति कथं तत्प्रतिपादितमद्वैतं प्रामाणिकं स्यात्? कथं च तत्साधनाय प्रत्यक्षादिप्रमाणविरोधपरिहारप्रयासः सार्थकः स्यात्? इति। समाधत्ते – **स्यादिति**।

अयमर्थः – आम्नायस्य स्वयं व्याकुलत्वं तदा स्यात्, यदि कर्मविधीनां साध्यसाधनादिभेदसद्भावप्रतिपादने तात्पर्यं स्यात्, न त्वेवमस्ति। यतो हि कर्मविधयस्तु व्यवहारप्राप्तं भेदमाश्रित्य स्वर्गरूपं साध्यं यागरूपं साधनं तत्प्रकाररूपामितिकर्तव्यतां च प्रतिपादयन्ति ''इदमनेन साधनेन इत्थंप्रकारेण साधयेत्'' इति। आम्नायस्य तात्पर्यन्तु अभेदप्रतिपादन एवास्ति। तथा च व्यावहारिकभेदस्य पारमार्थिकाभेदस्य च आम्नायार्थत्वे क्वास्ति परस्परव्याहतत्वरूपं व्याकुलत्वमिति। अत आम्नायस्य प्रामाण्यं सर्वथा निराकुलमेवास्तीति मन्तव्यम्।

**स्यादेतत्, असति भेदेंऽशत्रयप्रत्यस्तमयात् कुतो हितानुशासनम्? उच्यते– यथा खलु श्येनादिषु ''न हिंस्यात् सर्वा भूतानि'' इति प्रतिषेधात् साध्यांशप्रत्यस्तमयेऽप्यनुशासनम्, एवं सर्वत्र सर्वांशप्रत्यस्तमयेऽपि।**

**तथा हि – निषिद्धानर्थोदया कथं हिंसा साध्या स्यात्?**

---

पूर्वपक्षी पुनः शङ्कते– **स्यादेतदिति**। ननु यदि भेदो नास्ति तदा साध्यसाधनेतिकर्तव्यतारूपांशत्रयमपि न स्यात्, तदभावे चांशत्रयविशिष्टस्य यागस्य विधिरपि कथमुपपद्येत? तस्माद् अभिलषितफलबोधकः श्रौतो विधिरेवानुपपद्यमानो भेदमर्थादाक्षिपतीति शङ्काग्रन्थार्थः। समाधानमाह – **उच्यत इति**। अयं भावः – ''श्येनेनाभिचरन् यजेत'' इति श्येनयागविधिः शत्रुनाशरूपं साध्यमनुशास्ति। ''न हिंस्यात् सर्वा भूतानि'' इति प्रतिषेधशास्त्रं च साध्यांशं निषेधति। तथा चैकेन शास्त्रेण प्रतिषिद्धेऽपि साध्यांशे यथा शास्त्रान्तरं तद्विधानं करोति, तथैवाद्वैतश्रुत्या सर्वभेदप्रत्यस्तमयेऽपि कर्मविधयः फलकामस्य पुंसो हितानुशासनं विधास्यन्तीति न काचिदनुपपत्तिरिति।

ननु श्येनादिविधिषु कथं साध्यांशाभावः, हिंसाया एव साध्यत्वात्। न हि ''न हिंस्यात्'' इति प्रतिषेधमात्रेण तदभावो भवितुमर्हति, न हि शशशृङ्गवत् सा निषिध्यते। शशशृङ्गं हि सदैव नास्ति, हिंसा तु पूर्वमसती अपि कृता सती सत्तां लभते। अतो यदुक्तम्– श्येनादिविधिषु साध्यांशाभाव इति, तदयुक्तमिति शङ्कायामाह – **तथा हीति**। **निषिद्धेति**। निषिद्धः अनर्थस्य उदयो यस्याः, सा निषिद्धा हिंसा कथं साध्या स्यादिति समाधानवाक्यार्थः। अयं भावः – अनर्थ- कारणत्वेन हिंसा शास्त्रनिषिद्धा। अतो यो जनोऽनर्थकारणत्वेन हिंसां मन्यते, तस्य कृते हिंसा नास्ति साध्या इत्यभिप्रायेणोक्तं पूर्वम् – **साध्यांशाभाव इति**।

एवं सत्यम्, तादृश्यां स्थितौ साध्यांशाभावस्तथापि यो जनोऽनर्थभूतामपि तां हिंसामर्थत्वेन पश्यति = विजानाति, तस्य कृते तु हिंसा साध्यैवास्तीति तज्जनाभिप्रायेणैव श्येनादियागविधानं करोति श्रुतिरिति स्फुटीकरोति

**अथ भवति कस्यचित् तीव्रक्रोधाक्रान्तस्वान्ततया समुद्धतध्वान्ततिर-स्कृतविवेकविज्ञानस्यानर्थमप्यर्थत्वेन पश्यतः शास्त्रोपदेशमतिक्रामतः। तथा ज्योतिष्टोमादिषु निसर्गजाविद्योपप्रदर्शिता अप्रतिबुद्धानां त्रयोऽप्यंशाः, तानुपाश्रित्य तेषामनुशासनम्। प्रतिबुद्धास्तु कर्मविधिभिर्नानुशिष्यन्ते, यथा श्येनादिविधिभिरपजितक्रोधारातयः।**

---

ग्रन्थकारः– **'अथ भवति'** इत्यादिना **'अतिक्रामतः'** इत्यन्तेन वाक्येन।'अथ' शब्दो यद्यर्थः। यदि तीव्रक्रोधाक्रान्तस्वान्ततया समुद्धतध्वान्ततिरस्कृतविवेकविज्ञानस्य अनर्थमप्यर्थत्वेन पश्यतः (अत एव) शास्त्रोपदेशमतिक्रामतः कस्यचिद् जनस्य (हिंसा साध्या) भवतीति वाक्ययोजना। 'तदा' इति वाक्यशेषः। तीव्रेण क्रोधेन आक्रान्तं स्वान्तं हृदयं यस्य स तीव्रक्रोधाक्रान्तस्वान्तः, तस्य भावस्तीव्रक्रोधा-क्रान्तस्वान्तता, तया = तन्निमित्तेनेत्यर्थः। समुद्धतेन = घोरेण ध्वान्तेन = अज्ञानान्धकारेण तिरस्कृतं = तिरोहितमर्थानर्थयोर्विवेकविज्ञानं यस्य, तस्येत्यर्थः। अत एव अनर्थमपि अनिष्टमपि हिंसादिकम् अर्थत्वेन = इष्टत्वेन बुध्यतः। अत एव च शास्त्रस्याहिंसोपदेशमतिक्रामतः = उल्लङ्घयतो जनस्य कृते हिंसा साध्या भवति, अनुशास्ति च तां विधिशास्त्रम्, अनुतिष्ठति च जनो हिंसात्मकं श्येनयागमिति दृष्टान्तवाक्यार्थः।

दृष्टान्तगतां साध्यतां दार्ष्टान्तिके योजयति– **तथेत्यादिना**। अर्थाद् यथा श्येनयागविधौ तथैव ज्योतिष्टोमादिविधिष्वपि अनाद्यविद्यया उपदर्शिताः कल्पिताः साध्यसाधनेतिकर्तव्यतारूपास्त्रयोंऽशा अप्रतिबुद्धानामज्ञानिनां जनानां सम्भवन्ति। तानेव चाविद्याकल्पितान् त्रीनंशानुपाश्रित्य तेषामविद्यावत्पुरुषाणां कृते हितानुशासनं विदधति कर्मविधयः। ये तु प्रतिबुद्धा अर्थात् साक्षात्कृता-द्वैतात्मतत्त्वाः सन्ति, तेषां कृतेंऽशत्रयमसदेवास्तीति कर्मविधयो न यागमनुशासति, यथा निर्जितक्रोधानां कृते श्येनादिविधयो न हिंसोपेतान् श्येनादियागाननुशासतीति भावः।

**तदेवं व्यवहारतः सिद्धभेदाश्रयेषु कर्मविधिषु यद्यपि भेदप्रतीतिरस्ति, तथापि तेषामतत्परत्वान्न तत्र प्रामाण्यं वृत्तान्तेष्विवार्थवादानाम्। तथा च कुतस्तैर्वेदान्तानां पराहतिः, वेदान्तैर्वा तेषाम्?**

**अपि च प्रत्यक्षादिष्वेव पराहतिरुपलभ्यते, बाध्यबाधकभावदर्शनाद् रजतशुक्तिशकलादिज्ञानेषु, भेदाभेदप्रतीतेश्च सर्वत्र ।**

---

पूर्वोक्तमुपसंहरति– **तदेवमिति**। तत् = तस्माद् एवं प्रतिबुद्धाप्रतिबुद्धदृष्ट्या आम्नायेभ्यो यागाद्यनुशासनाननुशासनव्यवस्थासम्भवेन व्यवहारतः = व्यावहारिक-प्रमाणेभ्यः सिद्धो योंऽशत्रयभेदस्तदाश्रितेषु, यद्यपि साध्यसाधनेतिकर्तव्यता-भेदप्रतीतिरस्ति, तथापि तेषां कर्मविधीनां न भेदे तात्पर्यमस्ति, साध्यादीनां यागेन सम्बन्धमात्रपरत्वात्। अतः कर्मविधयो यागे प्रमाणम्, न भेदे।

ननु अंशभेदः प्रतीयते चेत्, तत्र कथं न कर्मविधयः प्रमाणमिति चेत्, न, प्रतीतिमात्रेण प्रमाणत्वाभावात्, तात्पर्यत एव कुत्रचित् कस्यचित् प्रमाणत्वाङ्गीकाराद् इति दृष्टान्तेन प्रदर्शयति – **वृत्तान्तेष्विवेति**। ''प्रजापतिर्वपामुदखिदत्'' इत्याद्यर्थ-वादेभ्यो वपोत्खननवृत्तान्ताः प्रतीयन्ते, किन्तु प्रतीतिमात्रेण तेषामर्थवादानां तेषु वृत्तान्तेषु प्रामाण्यं न भवति, तेषु तात्पर्याभावात्। अतः कर्मविधयो नांशत्रयभेदे प्रमाणमित्यर्थः। तथा च वेदान्तानामभेदे कर्मविधीनां च कर्मस्वरूपे प्रमाणत्वेन विषयभेदाद् न परस्परं व्याहतत्वं न वा दुर्बलत्वमिति भावः।

एवं कर्मकाण्डीयज्ञानकाण्डीयाम्नाययोः परस्परव्याहतत्वमपवार्य प्रत्यक्षादीना-मेव प्रत्युत परस्परव्याहतत्वं बाध्यबाधकभावश्चेति दृष्टान्तेन प्रदर्शयति – **'अपि च'** इत्यादिना **'सर्वत्र'** इत्यन्तेन ग्रन्थेन । प्रत्यक्षप्रमाणेन पूर्वमुत्पन्नं रजतज्ञानं दुर्बलत्वाद् बाध्यं भवति, पश्चादुत्पन्नं शुक्तिशकलज्ञानं च प्रबलत्वात् तद्बाधकं भवतीति सर्वजनानुभवः।

एवं भेदोभेदयोः सह प्रतीत्या प्रत्यक्षादिष्वेव व्याहतत्वम्। यथा सर्वत्र जातिगुणादिषु भेदाभेदौ प्रत्यक्षौ भेदवादिनां स्त इति तौ परस्परं व्याहतौ ।अतो मिथो विरुद्धभेदाभेदविषयत्वेन प्रत्यक्षादेरेव व्याहतत्वं व्याहतत्वाच्च दुर्बलत्वमिति बोध्यम्।

**तदेवं बलवत्त्वेऽप्याम्नायस्य यो नाम मन्दधीर्लौकिकवचसां प्रत्यक्षादिविरोध उपचरितार्थत्वदर्शनाल्लोकवद् वेदेऽपि शब्दवृत्तमिति मन्यते, यो वा निरूढनिबिडतया भेददर्शनान्धकारस्य प्रत्यक्षादीनामेव बलवत्त्वं मन्यते, लोकवचसां च तैर्बाधदर्शनात्, तत्प्रतिबोधनाय विरोधो निरस्यते। न हि यो नाम मन्दविषेण वृश्चिकेन दंष्टो म्रियते, नासौ न चिकित्स्यत इति।**

---

ननु पूर्वोक्तरीत्याऽऽम्नायस्य प्रत्यक्षादिप्रमाणापेक्षया बलवत्त्वे सिद्धे प्रत्यक्षादिविरोधे सति आम्नाय एव प्रमाणमिति सुस्थितम्। एवं सति प्रत्यक्षादि-विरोधपरिहारात्मको तर्काभिधानो द्वितीयकाण्डो नारम्भणीय इति पूर्वपक्षं निराकर्तुमाह – **तदेवमित्यादि**। अयं भावः – सत्यं प्रत्यक्षादिविरोधे आम्नायस्यैव बलवत्त्वात् स विरोधोऽकिञ्चित्करस्तथापि यः कश्चित् लोकव्यवहारमनुसृत्य भ्रान्तो मन्दप्रज्ञो जनः "अग्निर्माणवकः" इत्यादिलौकिकपदानां प्रत्यक्षादिविरोधादुप-चरितार्थत्वं दृष्ट्वा वेदेऽपि लोकवदेव शब्दव्यापार इत्यभिमन्यते, तथा मन्यमानश्च प्रत्यक्षादिविरोधे आम्नायस्योपचरितार्थत्वं प्रतिपादयति, तं प्रतिबोधयितुमेष प्रत्यक्षादिविरोधपरिहारप्रयास इति मन्तव्यम्।

अथवा यो जनोऽनादेर्घनीभूतस्य च भेदबुद्ध्यन्धकारस्य प्रभावात् सति विरोधे आम्नायापेक्षया प्रत्यक्षादीनामेव बलवत्त्वं मन्येत, तमपि जनं प्रतिबोधयितुमेष विरोधपरिहारप्रयासोऽस्मिन् काण्डे आवश्यक इति मन्तव्यम्।

प्रस्तुतविरोधपरिहारस्य करणीयत्वे दृष्टान्तमाह– **न हीति**। चिकित्साऽभावे तीव्रं सर्पविषं हि मृत्योरव्यभिचारिकारणं भवति, किन्तु क्वचिद् मन्दविषेण वृश्चिकेनापि दंष्टो म्रियत इत्यपि दृश्यते। अतो मन्दविषेण वृश्चिकेन दंष्ट इति कृत्वा तच्चिकित्सायामुपेक्षा न क्रियते। तथैव प्रत्यक्षविरोधस्तुच्छ आम्नायस्य किं

तत्र प्रत्यक्षे त्रयः कल्पाः — वस्तुस्वरूपविधिः, वस्त्वन्तरस्य व्यवच्छेदः, उभयं वेति। उभयस्मिन्नपि त्रैविध्यम्— यौगपद्यम्, व्यवच्छेदपूर्वको विधिः, विधिपूर्वको व्यवच्छेद इति।

तत्र वस्त्वन्तरव्यवच्छेदे उभयस्मिन् वा भेदः प्रत्यक्षगोचर इति भवति विरोधः। स्वरूपविधिमात्रे तु कस्यचिद् व्यवच्छेदेन शून्ये न भेदः प्रमाणार्थः। न हि व्यवच्छेदादृते भेदसिद्धिः। विधिमात्रव्यापारं च प्रत्यक्षम्, अतो न विरोधः। कथमित्युच्यते—

लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते।
विधानमन्तरेणातो न निषेधस्य सम्भवः॥

---

करिष्यतीति मत्वा तत्परिहाररूपचिकित्सायामुपेक्षा न वर्तनीया इत्यभिप्रेत्य ग्रन्थकारेण प्रत्यक्षादिविरोधपरिहारात्मकस्तर्ककाण्डोऽन्वारम्भीति मन्तव्यम्। यतो हि क्षीणोऽपि प्रत्यक्षादिविरोधः कदाचिदाम्नायमप्रामाण्यशङ्काग्रस्तं कुर्यादेवेति ध्येयम्।

एतावता प्रसङ्गेन प्रमाणान्तरविरोधपरिहारप्रयासात्मकस्य तर्ककाण्डस्यारम्भणीयत्वं निरूपितम्। सम्प्रति "आहुर्विधातृ" इति कारिकार्थं विशदयितुमुपक्रमते— **तत्रेति**। तत्र = प्रत्यक्षादिप्रमाणेषु मध्ये इत्यर्थः। प्रत्यक्षे प्रमाणे त्रयो विकल्पाः सम्भवन्ति — वस्तुस्वरूपस्य विधानं वा, वस्त्वन्तरस्य व्यवच्छेदो = व्यावृत्तिर्वा, उभयम् = वस्तुस्वरूपविधानं वस्त्वन्तरव्यावृत्तिश्चेत्युभयं वेत्यर्थः। अर्थात् प्रत्यक्षं किं "घटोऽयम्" इति वस्तुस्वरूपमात्रं ग्राहयति? अथवा "नायं पटः" इति वस्त्वन्तरं व्यावर्तयति = निषेधति? अथवा घटस्वरूपमपि ग्राहयति पटादिवस्वत्वन्तरमपि व्यावर्तयति च? इति। उभयमिति तृतीये कल्पेऽपि त्रयः पक्षाः सम्भवन्ति— वस्तुस्वरूपविधिः, वस्त्वन्तरव्यावृत्तिश्चेत्युभयमपि युगपदेव भवतीति प्रथमः, न युगपत् किन्तु वस्त्वन्तरव्यवच्छेदपूर्वको विधिरिति द्वितीयः, वस्तुस्वरूपविधिपूर्वको वस्त्वन्तरस्य व्यवच्छेद इति तृतीयः पक्षः।

**तत्रेति**। प्रत्यक्षप्रमाणस्य पूर्वोक्तेषु त्रिषु कल्पेषु मध्ये वस्त्वन्तरव्यवच्छेदे उभयस्मिन् वेति द्वितीयतृतीयकल्पयोर्व्यवच्छेदो घटकीभूत इति भेदोऽवश्यं

**न तावद् व्यवच्छेदमात्रं प्रत्यक्षव्यापारः, न युगपदुभयम्, न व्यवच्छेदपूर्वकं विधानम्, यतः सिद्धे विषये सिद्धरूपमेव निषिध्यते—**

---

प्रत्यक्षप्रमाणस्य विषयो भवेत्। तथात्वे चाभेदबोधकाम्नायस्य भेदबोधकेन प्रत्यक्षप्रमाणेनावश्यं विरोधः स्यात्, किन्तु स्वरूपविधिमात्रं यदि प्रत्यक्षव्यापारस्तदा कस्यचिद् व्यवच्छेदेन रहितेऽस्मिन् प्रथमे कल्पे भेदो न प्रत्यक्षप्रमाणस्यार्थः = विषयो भवेत्। यतो भेदो व्यवच्छेदाविनाभूतो भवत्यतो व्यवच्छेदं विना न भेदः सेद्धुमर्हति। तथा च वस्तुस्वरूपविधिमात्रव्यापारं प्रत्यक्षप्रमाणं न वस्त्वन्तरव्यवच्छेदं नापि ततो भेदं ग्राहयिष्यतीति नाभेदग्राहकस्याम्नायस्य प्रत्यक्षप्रमाणेन विरोधः। अतो निर्विरोधम् आम्नायोऽद्वैतात्मतत्त्वं बोधयिष्यतीति भावः।

शङ्कते – ननु कथं विधातृमात्रं प्रत्यक्षप्रमाणं न व्यवच्छेदबोधकम्? अत्रोत्तरयति – **उच्यत इति**। किमुच्यत इति जिज्ञासायामाह –

**"लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते।**

**विधानमन्तरेणातो न निषेधस्य सम्भवः"** ॥ इति।

क्वचित् = भूतलादिधर्मिणि, लब्धरूपे = लब्धं प्रतीतं रूपं यस्य तस्मिन्, प्रतीते भूतलादिधर्मिणीत्यर्थः। किञ्चित् = घटादिकं, तादृगेव= लब्धरूपमेव प्रतीतमेवेति यावत्, नास्तीति निषिध्यते, निषेधज्ञानं प्रति धर्मिज्ञानप्रतियोगिज्ञानयोः कारणत्वात्। अतो विधानं विना निषेधोऽसम्भव इति कारिकासंक्षिप्तार्थः।

प्रत्यक्षे पूर्वोक्तकल्पत्रयस्य निराकरणपरत्वेन कारिकार्थं विशदयति– **न तावदिति**। विधिपूर्वकव्यवच्छेदपक्षः पश्चान्निराकरिष्यते, इदानीं तावद् व्यवच्छेदमात्रं प्रत्यक्षप्रमाणव्यापारः, युगपदुभयम्, व्यवच्छेदपूर्वकं विधानम् इति पक्षा निराक्रियन्त इति 'तावत्' इति पदेन सूच्यते। एषु सर्वेषु नञ्पदं योजितं मूले "न व्यवच्छेदमात्रम्, न युगपदुभयम्, न व्यवच्छेदपूर्वकं विधानम्"इति। तत्र

"नेदमिह, नायमयम्" इति सिद्धे भूतले सिद्धो घटः, गवि वा अश्वः। न प्रतिषेध्यात् प्रतिषेधविषयाच्च विना प्रतिषेधोऽवकल्पते।

कथं तर्ह्यत्यन्तासतां प्रधानखपुष्पादीनां प्रतिषेधः? न हि तत्र क्वचिद् देशे काले वा निषेधः, आत्यन्तिकत्वात्। नापि कुतश्चित् सिद्धिः, अत्यन्तासत्त्वात्।

---

हेतुमाह– **यतः सिद्धे विषय इति**। अयमर्थः – प्रमाणसिद्धे धर्मिणि अनुयोगिनि प्रमाणसिद्धमेव प्रतियोगिभूतं वस्तु निषिध्यते "नेदमिह, नायमयम्" इति। प्रथमे संसर्गो निषिध्यते, द्वितीये च तादात्म्यं निषिध्यते। यथा, सिद्धे भूतले घटसंसर्गो निषिध्यते "इह घटो नास्ति" इति। सिद्धे गवि अश्वतादात्म्यं निषिध्यते "गौर्नाश्वः" इति।

ननु कथं निषेधेऽनुयोगिप्रतियोगिनोः प्रसिद्धिरपेक्षितेति? अत्रोपपत्तिमाह– **न प्रतिषेध्यादिति**। प्रतिषेध्यः प्रतियोगी प्रतिषेधविषयश्चानुयोगी। एताभ्यां विना प्रतिषेधो नैवोपपद्यत इत्यर्थः।

अत्र शङ्कते – **कथमिति**। अयमर्थः – अत्यन्तासताम् = सर्वत्रैवासतां प्रधानखपुष्पादीनां देशविशेषं धर्मिकृत्यं कथं निषेधः स्यात्, "अत्र प्रधानं नास्ति अत्र खपुष्पं नास्तीति"। आत्यन्तिकत्वात्, सार्वत्रिकत्वात् सार्वकालिकत्वात् च तयोर्निषेधस्येति। अत्र प्रतिषेधविषयौ देशकालविशेषौ न सम्भवतो यत्र प्रधानं खपुष्पादयश्च निषिध्येरन्, अत्यन्तासत्त्वात्तेषाम् इति भावः। प्रतिषेध-विषयासम्भवमुपपाद्य प्रतिषेध्यासम्भवमुपपादयति – **नापीति**। प्रतिषेध्यभूतं प्रधानं खपुष्पमपि वा न कस्मादपि प्रमाणात् सिद्धमस्ति यन्निषिध्येत। अत्रापि हेतुमाह – **अत्यन्तासत्त्वादिति**। अयमाशयः – यत्सर्वथैवासदस्ति, तस्य सर्वथैवा-प्रसिद्धत्वात् तन्निषेधो न सम्भवतीति। तस्मात् सुष्ठूक्तम् – सिद्ध एवाधिकरणे सिद्धस्यैव प्रतियोगिनो निषेध इति। अतो व्यवच्छेदमात्रं प्रत्यक्षप्रमाणस्य व्यापार इति पक्षो न क्षोदक्षमः।

**तत्र केचिदाहुः – खपुष्पादिषु तावत् सिद्धेषु खादिषु तद्विधाः पुष्पादयो निषिध्यन्ते। "प्रधानं नास्ति" इति जगत्कारणे सुखदुःखमोहात्मताविभक्तकार्यत्वादीनि निवार्यन्ते ।**

**अन्ये तु – कुतश्चिन् निमित्ताद् बुद्धौ लब्धरूपाणां बहिर्निषेधः क्रियत इति वर्णयन्ति। अन्यथा दैवनिषिद्धे कः प्रतिषेधोऽप्राप्तरूपे? प्राप्तरूपे वा कथमत्यन्ताय प्रतिषेधः?**

---

अत्रैकदेशिनां परिहारमाह– **तत्र केचिदाहुरिति** । ते वदन्ति– सिद्धेष्वेव धर्मिषु सिद्धान् प्रतियोगिनो वयं निषेधाम इति । यतः सिद्धेष्वाकाशादिषु सिद्धा एवोद्यानपुष्पादयो निषिध्यन्ते "खे पुष्पं नास्ति, शशे शृङ्गं नास्ति, कूर्मे रोमाणि न सन्ति" इत्याकारैः । अत्रापि मूले "तावत्" इति पदं प्रधानगतपरिहारापेक्षयोक्त-मिति बोध्यम् । तद्विधाः = सिद्धा एवेत्यर्थः । एवं "प्रधानं नास्ति" इत्यस्या-प्ययमर्थः – जगत्कारणे सुखदुःखमोहात्मता नास्ति, अविभक्तकार्यत्वं नास्ति इत्यादि । अयमभिप्रायः – उत्पत्तिमत्त्वाज्जगतः किमपि कारणमवश्यमस्ति । तच्च कारणं चेतनं ब्रह्मेति अद्वैतवेदान्तिनो मन्यन्ते । अचेतनं कारणं प्रधानं सत्त्वरजस्तम-आत्मकत्वात् सुखदुःखमोहात्मकमिति सांख्यानां मतम् । ततः "प्रधानं नास्ति" इत्युक्ते सिद्धे यत्किञ्चिज्जगत्कारणे सत्त्वरजस्तम आत्मकत्वं सुखदुःखमोहात्मकत्वं नास्तीत्यर्थो बोध्यः । तथा कार्यकारणयोरभेदाद् मृद्घटादौ प्रमाणसिद्धम् अविभक्तकार्यत्वं सत्कार्यत्वं वा जगत्कारणे निषिध्यत इति बोध्यमिति । तस्मात् "प्रधानं नास्ति" इति प्रतिषेधोऽपि नाप्रसिद्धधर्मिको नाप्यप्रसिद्धप्रतियोगिक इति केषाञ्चनैकदेशिनां परिहारः ।

मतान्तरमाह– **अन्ये त्विति** । सादृश्यादिभ्यः कुतश्चिद् निमित्तेभ्यो बुद्धि-विषयतां गतानां बुद्ध्याकाराणामिति यावत् शुक्तिरजतादीनां बहिर्निषेधः क्रियते "नेदं रजतम्" इति । "यदन्तर्ज्ञेयतत्त्वं तद् बहिर्वदवभासते" इत्युक्तेः । तथा च नायं नियमो यद् वस्तुतो बहिःसतामेव निषेधो भवतीति । यदि बुद्धिस्थत्वमपि विषयाणां न स्यात् तदा सर्वथा अलब्धस्वरूपाणां तेषां दैवादेव स्वभावादेव शाश्वतिको निषेधोऽस्तीति स्वतो निषिद्धानां को निषेधार्थः । न हि स्वतो मृतो मार्यते कुत्रापि ।

**अपि च अनपेक्षितविषयनिषेध्ये व्यवच्छेदे शून्यता प्रमाणार्थः स्यात्, न भेदः, सर्वस्य सर्वत्राविशेषेण निषेधात्। यस्तु भेदाय व्यवच्छेदः, स भेद्ययोः सिद्धिमपेक्षते। न च सा विधानाद् ऋते इति प्राग् विधान-मेषितव्यम्। विधिपूर्वक एव च निषेधोऽङ्गीक्रियत इति।**

**नापि विधिपूर्वको व्यवच्छेदः। यतः –**

**क्रमः सङ्गच्छते युक्त्या नैकविज्ञानकर्मणोः।**
**न सन्निहितजं तच्च तदन्यामर्शि जायते॥ ३॥**

---

यद्युच्येत – बहिरपि कदाचिद् विषयो लब्धस्वरूपो भवतीति, तदा क्षणमपि चेद् विषयो बहिर्लब्धरूपस्तदा कोऽयं तस्यात्यन्तिको निषेधः क्रियते ? तस्माद् बुद्धिगतो विषयो बहिर्निषिध्यत इत्यन्येषां मतम्।

विषयश्च निषेध्यश्च विषयनिषेध्यौ (अनुयोगिप्रतियोगिनौ), न अपेक्षितौ विषयनिषेध्यौ येन स अनपेक्षितविषयनिषेध्यः, तस्मिन्नेवंविधे व्यवच्छेदे न कश्चिद् वस्तुभूतो भेदः प्रमाणविषयः स्यात्, किन्तु शून्यतैव प्रमाणार्थः स्यात्। तथा च शून्यवादः प्रसज्येत। तत्र हेतुमाह – **सर्वस्येति**। सर्वस्य सर्वदेशकालयोरविशेषेण सामान्यतो निषेधादित्यर्थः। यो व्यवच्छेदोऽनुयोगिप्रतियोगिनोर्भेदाय भवति, सोऽवश्यं भेदद्वयस्य प्रसिद्धिमपेक्षते, तयोः प्रसिद्धिमन्तरा व्यवच्छेदानुपपत्तेरित्यर्थः। ननु भवति भेद्ययोः सिद्धिस्ततः प्रकृते किमायातमित्याह– **न च सेति**। सा च भेदसिद्धिः प्रत्यक्षादिप्रमाणादेव भवतीति सिद्धं – प्रत्यक्षादिप्रमाणाद् भेदबोधनं पूर्वं स्वीकर्तव्यं यदायत्तो निषेधः क्रियेतेति भावः।

ननु विधिपूर्वको निषेधोऽङ्गीक्रियत इत्यनुपदं समर्थितम्। अस्तु तर्हि अयमेव पक्ष इति चेत्, सोऽपि पक्षो न क्षोदक्षम इत्याह – **नापीति**। तत्र हेतुमाह कारिकया। यथा –

**क्रमः सङ्गच्छते युक्त्या नैकविज्ञानकर्मणोः।**
**न सन्निहितजं तच्च तदन्यामर्शि जायते॥** इति।

**न खल्वेकप्रमाणज्ञानव्यापारौ सन्तौ विधिव्यवच्छेदौ क्रमवन्तौ युज्येते, क्षणिकत्वात्। क्रमवतोर्हि व्यापारयोः पश्चात्तनो न तद्व्यापारः स्यात्, व्यवधानात्।**

**अपि च जन्मैव बुद्धेर्व्यापारोऽर्थावग्रहरूपायाः। सा चेदर्थविधानरूपोदया, विधिरेवास्या व्यापारः, यौगपद्यस्य निषेधात्, उत्पन्नायाश्च पुनरनुत्पत्तेः।**

---

एकविज्ञानस्य = प्रत्यक्षप्रमाणजन्यज्ञानस्य ये द्वे कर्मणी = व्यापारौ विधिव्यवच्छेदौ भवता उच्येते, तयोः क्रमः पौर्वापर्यं युक्त्या न सङ्गच्छते–= युक्तिसङ्गतो नास्तीत्यर्थः। अतः सन्निहितविषय एव जातं तद् विज्ञानं सन्निहितान्यविषयं स्पृशन् न जायते नोत्पत्तुमर्हतीति श्लोकार्थः।

मूलकारः श्लोकार्थं विशदयति – **न खल्विति** । अयमर्थः – एकस्य प्रत्यक्षप्रमाणजन्यज्ञानस्य व्यापारभूतौ यदि विधिव्यवच्छेदौ, तदा तौ क्रमवन्तौ न भवितुमर्हतः पौर्वापर्येण नोत्पत्तुमर्हत इति यावत्। कुत इति चेत्, तद्विज्ञानस्य क्षणिकत्वात्। क्षणिकं हि विज्ञानं विधिमवबोध्य द्वितीयक्षणे नंक्ष्यति। अतस्तृतीयक्षणे व्यवच्छेदं न बोधयितुं शक्ष्यति, पूर्वकाल एव विनष्टत्वादिति भावः। विनष्टमपि विज्ञानं तृतीयक्षणे व्यवच्छेदं कथं न बोधयेद् इति चेत्, आह – **क्रमवतोरिति**। क्रमिकयोर्व्यापारयोर्विधिव्यवच्छेदयोर्मध्ये पूर्वतनो विधिस्तस्य प्रत्यक्षविज्ञानस्य व्यापारो भवितुमर्हति, अव्यवहितत्वात्, पश्चात्तनस्तु व्यवच्छेदो न तद्विज्ञानस्य व्यापारो भवेत्, मध्यवर्तिना विधिना व्यवधानादिति भावः।

व्यवच्छेदस्य व्यापारत्वासम्भवे युक्त्यन्तरमाह – **अपि चेति**। अयं भावः – प्रत्यक्षविज्ञानात्मिकाया बुद्धेर्यज्जन्म, तदेव तस्या व्यापारः, न तु कुलालादेश्चक्रभ्रामणादिरिव पृथक् तस्या व्यापारोऽर्थावबोधः, अर्थावबोधरूपतयैव तस्या उत्पन्नत्वात्। इत्थञ्च सा बुद्धिर्यदा अर्थविधानोदया तदा विधिमात्रमस्या व्यापारो न व्यवच्छेदः।

**अपि च सन्निहितार्थावलम्बनं प्रत्यक्षं नासन्निहितमर्थमवभासयितु-मर्हति। न चानवभासमानरूपं व्यवच्छेत्तुं पर्याप्नोति। अनवभासमाने हि तत्र व्यवच्छेद्ये व्यवच्छेदमात्रं स्यात्, न व्यवच्छेदः कस्यचित्, सर्वस्य वा स्यात्। तस्मान्नानवभासमाने व्यवच्छेद्ये व्यवच्छेदः। न च सन्निहितार्था-वलम्बने प्रत्यक्षेऽसन्निहितावभासो युक्तः।**

---

ननु विधिरपि व्यापारः स्यात् व्यवच्छेदोऽपि व्यापारः स्यांद् युगपदिति चेत्, न, यौगपद्यस्य निषेधात्। ननु यौगपद्यं न स्यात्, तदा तस्या बुद्धेरर्थावबोधरूपेण व्यवच्छेदरूपेण च क्रमेण द्वे उत्पत्ती स्यातां का हानिरिति शङ्कायामाह– **उत्पन्नायाश्चेति**। एकवारमुत्पन्नायास्तस्याः पुनरुत्पत्त्यसम्भवाद् इति।

कारिकाया उत्तरार्धाभिप्रायं विशदयति – **अपि चेति**। अयमाशयः – "सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना" इति न्यायेन सन्निहितमेवार्थमवलम्बते = विषयीकरोति प्रत्यक्षप्रमाणम्। अतोऽसन्निहितमर्थमवबोधयितुं तन्न समर्थमस्ति। एवं यद्वस्तु असन्निहितत्वात् प्रत्यक्षेण अवभासमानं न भवति, तद्वस्तु सन्निहिताद् वस्त्वन्तराद् व्यवच्छेत्तुं प्रत्यक्षं न पर्याप्नोति = पारयति। ननु असन्निहितमपि विषयं व्यवच्छिनत्तु प्रत्यक्षम्, का नाम हानिः? इति चेत्, न, व्यवच्छेद्यं वस्तु यदि नावभासते, तथापि व्यवच्छेदक्रियास्वीकारे निर्विषयं व्यवच्छेदमात्रं स्वीकृतं स्यात्, न तु किञ्चिद् वस्तु कुतश्चिद् व्यवच्छिद्येत। यदि तु अवभासमानत्वाभावेऽपि वस्तुनो वस्त्वन्तरे व्यवच्छेदः स्वीक्रियेत, तदा सर्वस्यैव व्यवच्छेदस्वीकारः प्रसज्येत, अनवभासमानत्वाविशेषात्। एतदभिप्रेत्योक्तम्– **सर्वस्य वा स्यादिति**। उपसंहरति– **तस्मादिति**। व्यवच्छेद्ये धर्मिणि अनवभासमाने सति व्यवच्छेदक्रिया सर्वथैवासम्भवि-नीति। नन्वसन्निहितोऽप्यर्थः प्रत्यक्षेणावभासताम्, अवभासमानश्च सन् वस्त्वन्तराद् व्यवच्छिद्यतामिति आशङ्क्य दूषयति – **न चेति**। सन्निहितविषयावलम्बिनि प्रत्यक्षे असन्निहितविषयावभास एव न युज्यत इति कुतस्तस्य व्यवच्छेदसम्भव इति भावः।

पुनः शङ्कते – **कथमिति**। इदानीम् एकज्ञाने निषेधपूर्वको विधिर्नास्ति, यदि वा प्रत्यक्षप्रमाणमसन्निहितं निषेध्यविषयं नावभासयति, तदा "शुक्तिरियम्"

**कथमिदानीं बाधकं प्रत्यक्षम् ? तत्र हि पूर्वार्थनिषेधपुरःसरोऽन्यविधिरेकज्ञानेऽभ्युपेयते, असन्निहितनिषेध्यावभासश्च। तस्मान्नैष नियमः, यतः पूर्वो निषेधः, एकज्ञानव्यापारे च क्रमः, प्रत्यक्षेण चासन्निहितार्थावभासः।**

**नैतत् सारम्, तत्रापि पूर्वविज्ञानविहिते रजतादौ "इदम्" इति च सन्निहितार्थसामान्ये निषेधो विधिपूर्व एव, शुक्तिकाविधिस्तु विरोधिनिषेधपूर्व उच्यते। विधिपूर्वता च नियमेन निषेधस्योच्यते, न विधेर्निषेधपूर्वकता निषिध्यते।**

---

इति रजतस्य असन्निहितस्य बाधकं प्रत्यक्षं कथमुपपद्यते ? तत्र "शुक्तिरियम्" इति बाधकप्रत्यक्षात्मके एकज्ञाने "इदं रजतम्" इति पूर्वज्ञानविषयस्य रजतस्य निषेधपुरःसरमेव अन्यस्याः शुक्तिकाया विधानं स्वीक्रियते । तथा शुक्तिकाविधानकाले असन्निहितस्य निषेध्यभूतरजतस्यावभासोऽप्यभ्युपगम्यते, निषेधं प्रति प्रतियोगिज्ञानस्य हेतुत्वात् । एतद् द्वयमपि बाधके शुक्तिकाज्ञाने कथमुपपद्यते ? इति शङ्काभिप्रायः। शङ्कापक्षीयं निष्कर्षमाह– **तस्मादिति**। अनुपदमुक्त एष नियमो नास्ति यद् न पूर्वो निषेधः , न चैकज्ञानस्य व्यापारे क्रमः, न चाऽसन्निहितार्थावभासः प्रत्यक्षे ज्ञानेऽस्तीति । कथमेष नियमो नास्तीत्युपपदयति– **यत इति**। यतः पूर्वो रजतनिषेधो भवत्येव, तदनन्तरमेव शुक्तिकाविधानात् । एवमेकज्ञानस्यैव व्यापारे रजतनिषेधे शुक्तिकाविधाने च क्रमोऽप्यस्ति । एवं शुक्तिकाप्रत्यक्षेणैव प्रतियोगिविधयाऽसन्निहितस्य रजतार्थस्यावभासोऽपि भवत्येव। तस्मात् साधूक्तम्– **एष नियमो नास्तीति**।

कथमित्याशङ्कां निराकरोति – **नैतत् सारमिति**। "विधेः पूर्वो न निषेधः" इति मदुक्तौ "नियमेन" इति योजनीयम्। तथा च क्वचिद् विधेर्निषेधपूर्वकत्वेऽपि, यथा शुक्तिकेयमिति विधी रजतनिषेधपूर्वको भवतीति, न नियमतः सर्वो विधिर्निषेधपूर्वकः, घटोऽयं पटोऽयमित्यादिविधीनां सामान्यतो निषेधपूर्वकत्वाभावोपलब्धेः। न हि घटपटादिविधीनां पूर्ववर्ती नियमेन

**न च तत्रैकज्ञानस्य क्रमवद्व्यापारता, उभयरूपस्योत्पत्तेः, पूर्वज्ञान-भावितत्वाच्च विषयव्यच्छेद्ययोर्नासम्भवः। पूर्वज्ञानावभासिते च व्यवच्छेद्ये व्यवच्छेदस्य वृत्तेर्नासन्निहितार्थावभासप्रसङ्गः, पूर्वापेक्षस्य तस्योत्पत्तेः। पूर्वापेक्षयैव च तद् द्विरूपमुदेति, अन्यथा एकरूपमेवोदियात्।**

---

कस्यचिन्निषेधोऽनुभूयते। किन्तु सर्वो निषेधो नियमेन विधिपूर्वको भवतीत्यत्र नास्ति व्यभिचारः, विषयनिषेध्यवस्तुनोरनुयोगिप्रतियोगिनोर्ज्ञानस्याभावज्ञानं प्रति हेतुत्वस्य सार्वत्रिकत्वात्।

अत एव "नेदं रजतम्" इति निषेधात् पूर्वं प्रतियोगिविधया रजतज्ञानस्य तथा विषयविधया (अनुयोगिविधया) इदमर्थज्ञानस्य चावश्यकत्वं सर्वैरभ्युपेयत इत्याशयेन समाधत्ते – **'तत्रापि'** इत्यादिना **'निषिध्यते'** इत्यन्तेन ग्रन्थेन। तत्रापि= "नेदं रजतं शुक्तिकेयम्" इत्यत्रापीत्यर्थः। इदं रजतमिति पूर्वज्ञानविहितो रजतादिः 'इदम्' इति च सन्निहितं विषयसामान्यं चास्तीति विधिपूर्वक एव नेदं रजतमिति निषेधो भवति। शुक्तिकाविधेस्तु पूर्वं रजतरूपविरोधिनिषेधमपि भवन्तं न वारयामः। तथा चास्माभिरुच्यते– सर्वोऽपि निषेधो नियमेन विधिपूर्वक एव भवति। क्वाचित्कं तु शुक्तिकादिविधिं रजतादिनिषेधपूर्वकमपि भवन्तं न वयं निषेधाम इति मूलार्थो बोध्यः। यद्यपि शुक्तिविधेर्निषेधपूर्वताऽस्ति, तथापि रजतनिषेधस्य सामान्यविधिपूर्वकत्वादव्यभिचार इति भावः।

यदि विधिनिषेधयोः क्रमो भवेत्, तदा विधिपूर्वक एव निषेध इति अभ्युपगमवादेन प्रतिपादितम्। वस्तुतस्तु सिद्धान्ते क्रम एव नास्ति एकविज्ञानव्यापारे इत्याह – **न च तत्रैकेति**। अथवा विधिपूर्वक एव निषेध इत्यस्याव्यभिचारं प्रदर्श्य अधुना "क्रमः सङ्गच्छते युक्त्या नैकविज्ञानकर्मणोः" इत्यत्र बाधकप्रत्यक्षेण शुक्तिज्ञानेन यो व्यभिचारः पूर्वम् उक्तः प्रतिवादिना, तं परिहरति – **न च तत्रैकेति**।

तत्र= बाधकज्ञानेऽपि एकज्ञानस्य क्रमिकं व्यापारद्वयं नास्ति, सिद्धान्ते विधिनिषेधात्मकोभयरूपस्यैव चित्रात्मकस्य तस्यैकस्य बाधकज्ञानस्योत्पत्तिस्वीकारात्।

तदुक्तम्– "जन्मैव बुद्धेर्व्यापार" इति, "उत्पन्नायाश्च पुनरनुत्पत्तेः" इति च। अनेकत्र क्रमो भवति, नैकत्र। तेन युगपदेव विधिनिषेधौ तज्ज्ञानं करोति। अतो नैकस्मिन् ज्ञाने क्रमवद्व्यापारतेत्यर्थः।

ननु उभयरूपात्मकमेकं विज्ञानं नोत्पत्तुमर्हति, पूर्वसिद्धविषयव्यवच्छेद्ययोरसम्भवादित्याशङ्क्य समाधत्ते – **पूर्वज्ञानभावितत्वादिति**। "इदं रजतम्" इति पूर्वभ्रान्तिकाल एव विषयस्येदमर्थस्य व्यवच्छेद्यस्य रजतार्थस्य च भावितत्वादिति। पूर्वभावितस्येदानीं बाधकज्ञानकाले स्मृतत्वादिति न विषयव्यच्छेद्ययोरसम्भवः।

एवं, "न सन्निहितजं तच्च तदन्यामर्शि जायते" इति कारिकांशेन सिद्धान्तिना यदुक्तम्, तत्र पूर्वपक्षिणा "कथमिदानीं बाधकं प्रत्यक्षम्? "तत्र प्रत्यक्षेण चासन्निहितार्थावभासः" इत्युक्त्वा व्यभिचारः प्रदर्शितः। तं व्यभिचारं परिहरति सिद्धान्ती – **पूर्वज्ञानावभासिते** चेत्यादिना ग्रन्थेन। अयं भावः– "शुक्तिकेयम्" इति बाधकप्रत्यक्षकालेऽसन्निहितावभासो नास्ति, यतो व्यवच्छेद्यं = निषेध्यं रजतं पूर्वज्ञानेन ="रजतमिदमिति" भ्रान्तिज्ञानेन अवभासितमेवास्ति। अतः पूर्वज्ञानावभासित एव व्यवच्छेद्ये रजते "नेदं रजतम्, शुक्तिकेयम्" इति व्यवच्छेदः प्रवर्तते। अत्र हेतुमाह – **पूर्वापेक्षस्येत्यादि**। पूर्वज्ञानमपेक्ष्यैवोक्तबाधकप्रत्यक्षमुत्पद्यते।बाध्यमपेक्ष्यैव बाधकमुत्पद्यत इति नियमात्,बाध्याभावे शुक्तिकाज्ञानस्य बाधकत्वानुपपत्तेः। पूर्वापेक्षयैव च बाधकज्ञानं द्विरूपमुत्पद्यते विधिनिषेधात्मकम्– "नेदं रजतं शुक्तिकेयमिति"। यदि पूर्वज्ञानापेक्षा न स्यात् तदा सामान्यतो घटपटादिज्ञानवत् "शुक्तिकेयम्" इत्येकरूपमेवोत्पन्नं स्यादिति भावः।

ननु "शुक्तिकेयम्" इति बाधकं प्रत्यक्षं स्वप्रसञ्जितं रजतं बाधते, किं वा "रजतमिदमिति" भ्रमप्रसञ्जितम्। नाद्यः– "शुक्तिकेयम्" इति ज्ञानस्य रजतागोचरत्वात्। नापि द्वितीयः, भ्रमप्रसञ्जितस्य रजतस्य शुक्तिकाज्ञानेन बाधितुमशक्यत्वात्, पूर्वोत्तरज्ञानयोःपरस्परवार्तानभिज्ञत्वात्। यदि तूभयविषयकं

**अपि च सर्वव्यवच्छेदानपाकुर्वतः को व्यवच्छेदोऽभिमतः, येन प्रत्यवस्थीयेत? सिद्धः स लोक इति चेत्, अयं वा किं न लोकसिद्धः? – "नाश्वो गौर्न गौरश्वः" इति**

**यत्तु मतम् – एकविधिरेवान्यव्यवच्छेदः। तथा हि – दर्शनं यथैव तदाकारतया तद्रूपं विदधाति, तथा तदेकाकारप्रतिनियमात् "तदेव,**

---

ज्ञानान्तरं बाधकमिष्यते तदाऽसन्निहितार्थावभासकत्वं निषेधकत्वेन क्रमकारित्वं चैकस्य प्रसज्यत इत्याशङ्कायामाह – **अपि चेति**। अयमाशयः – सिद्धान्ती **हि** परमार्थाभेदवादितया सर्वानिव व्यवच्छेदान् (भेदान्) निराकरोति। अस्यां **स्थितौ** न कोऽपि व्यवच्छेदोऽभिमतोऽस्ति, रजतभेदोऽपि न कश्चिद् वस्तुभूतोऽस्ति, येन रजतबाधप्रसङ्गमुत्थाप्य "असन्निहितार्थावभासकत्वं क्रमकारित्वं च" **इति** प्रत्यवस्थीयेत।

अथ "नेदं रजतम्" इति लोकसिद्धं व्यवच्छेदमाश्रित्य उक्तरीत्या **प्रत्यवस्थीयते** चेत्, "नाश्वो गौः, न गौरश्वः" इत्यादयोऽपि व्यवच्छेदाः (भेदाः) लोकसिद्धा **एव** सन्ति न परमार्थसन्त इति कथं न मन्यते? अर्थात् सर्वे प्रतीयमाना भेदा व्यावहारिका एव सन्ति न परमार्थभूता इति वेदान्तमतमप्रत्यूहम्। "शुक्तिकेयम्" **इति** प्रत्यक्षमपि शुक्तिकाविधिमात्रपरं न वस्तुतः किञ्चिद्व्यवच्छेदकमिति तात्पर्यम्।

मतान्तरमाह – **यत्तु** इति। किं तन्मतम्? इति जिज्ञासायामाह – **एकविधिरेवान्यव्यवच्छेद इति**। अर्थाद् एकस्य नीलादेर्विधिरेवान्यस्य पीतादेर्व्यवच्छेदो नान्यः। तेन न प्रत्यक्षे व्यापारद्वयकल्पना, न वा क्रमयौगपद्यविकल्पापत्तिः। **अतः** क्रमयौगपद्ययोरसम्भवेऽपि प्रत्यक्षस्य विधायकत्वं निषेधकत्वं च सिद्धम्। **तेन** "न निषेद्धृ कथञ्चन" इति कारिका कथमुपपद्यते? इति पूर्वपक्षः। **इमं** पक्षमेवोपपादयति– **तथा हीति**। अयं भावः – नीलादिप्रत्यक्षदर्शनं **यथा** नीलाकारमुत्पन्नं सत् नीलरूपविधानं करोति, तथैव नीलैकाकारप्रतिनियतत्वात् पीताकारतां प्रतिषेधत्यपि – **नीलमेवेदमिदं न पीतमिति**। एवंविधं यत् प्रत्यक्षदर्शनस्य सामार्थ्यमस्ति, तत्प्रभावादेव "शुक्तिकेयं न रजतमिति विकल्पौ = प्रत्ययौ शुक्तिकाया भावं रजतस्याभावं च प्रवर्तयतः। तस्माद् नीलविधिरेव अनीलव्यवच्छेदो न **तत्र** व्यापारद्वयमिति भावो मतान्तरवादिनः।

**नान्यत्'' इत्यन्यद् व्यवच्छिनत्ति। तत्सामर्थ्यप्रभावितौ च ''इदम्, नेदम्'' इति विकल्पौ भावाभावव्यवहारं प्रवर्तयतः। न ह्येकाकारप्रतिनियतादनन्यसंसर्गिणो ज्ञानादन्योऽन्यव्यवच्छेदः। तत्रोच्यते—**

**विधानमेव नैकस्य व्यवच्छेदोऽन्यगोचरः।**
**मा स्म भूदविशेषेण मा न भूदेकधीजुषाम् ॥४॥**

---

इदमत्र रहस्यम्— सत्यमिदं यद् नीलमिदं न पीतमिति ज्ञानद्वयम्, किन्तु इदं सविकल्पकम्। यत्तु निर्विकल्पकं प्रत्यक्षं तदेव तयोर्मूलभूतम्। तच्च विधिनिषेधात्मकमेकमेव ज्ञानमस्तीति।

कथमेवं कल्प्यत इति चेदाह — **न हीति**। अयं भावः— नीलैकाकारप्रतिनियतं यद् ज्ञानं ''नीलमेवेदम्'' इति, तद् अनन्यसंसर्गिज्ञानम्, अन्यविषयसंसर्गो न तत्रास्तीति यावत्। अतस्तस्मादनन्यसंसर्गिणो नीलैकाकारप्रतिनियतात् ''नीलमेवेदम्'' इत्याकाराद् ज्ञानाद् अन्यो भिन्नो नास्ति अन्यव्यवच्छेदः, अनीलव्यवच्छेदोऽपि त्वभिन्न एव। तथा च वक्ष्यत्युपरिष्टात्—''तत्प्रतिनियमो हि ततोऽन्यस्यासंसर्ग'' इति। तस्मान्नीलविधिरेवानीलव्यवच्छेद इति सिद्धमिति मतान्तरवादिनो बौद्धस्याभिप्रायः। मतमिदं निराकरोति— तत्रोच्यते—

**विधानमेव नैकस्य व्यवच्छेदोऽन्यगोचरः।**
**मा स्म भूदविशेषेण मा न भूदेकधीजुषाम्॥** इति।

एकस्य विधिरेव अन्यविषयको व्यवच्छेदो नास्ति। तथा सति एकस्य विधाने सति अन्येषां योग्यानामयोग्यानां च सर्वविषयाणां व्यवच्छेद आपद्येत, अविशेषात्, इत्यतिव्याप्तिदोषः। यतः प्रत्यक्षयोग्यस्यैव निषेधो भवति नायोग्यस्येत्यस्ति नियमः। एवम्, एकधीजुषाम्= एकचित्रबुद्धिविषयाणां नीलपीतादीनामपि परस्परं व्यवच्छेदो न भवेदित्यव्याप्तिदोषः। तत्र चित्रप्रतीतौ नीलपीतादीनां परस्परं व्यवच्छेदो न भवतीति नास्ति। एतदुक्तम्— ''मा न भूत्'' इति। चित्रज्ञानविषयाणां परस्परव्यवच्छेदो न भवतीति नेत्यर्थः। सोऽयं कारिकायाः सरलार्थः।

**नैकप्रतिनियमोऽन्याभावनिश्चयनिमित्तम्, उपलब्धिलक्षणप्राप्तस्येतरस्य चाविशेषेण व्यवच्छेदप्रसङ्गात्। तत्प्रतिनियमो हि ततोऽन्यस्यासंसर्गः। तथा चासंसर्गाद् व्यवच्छेदे तस्य दृश्यादृश्ययोरविशेषादुभयोर्व्यवच्छेदः स्यात्।**

**अथ मतम्— भवत्येव। तथा हि यावन्तोऽस्यानात्मानस्तानविशेषेण तदात्मनियमाद् दर्शनमपाकरोति। तथा च नास्यान्य आत्मानः,**

---

कारिकां स्वयं व्याचष्टे मूलकारः – **नैकेति**। अयमर्थः – एकस्य प्रतिनियमः = विधानम् अन्यस्याभावनिश्चये= व्यवच्छेदनिश्चये निमित्तं न भवति। यद्येकस्य विधानं स्वातिरिक्तमात्रस्य व्यवच्छेदनिश्चये हेतुः स्यात् तदा येषामुपलब्धिर्भवति अर्थाद् उपलब्धियोग्यताऽस्ति तेषां तु व्यवच्छेदः स्यादेव, तदितरेषामपि अन्यत्वाविशेषाद् व्यवच्छेदः प्रसज्येत। अर्थाद् येषामुपलब्धिलक्षणा प्राप्तिरस्ति तेषाम्, तथा उपलब्धियोग्यतारहितानामपि परमाण्वाद्यतीन्द्रियविषयाणां व्यवच्छेदप्रसङ्गः स्यात्, अन्यत्वस्योभयेषु समानत्वादिति।

उक्तप्रसङ्गमेवोपपादयति – **तत्प्रतिनियमो हीति**। अयं भावः – तत्प्रतिनियमो नाम तद्भिन्नस्य असंसर्गः = संसर्गाभावः। तथा च संसर्गाभावमात्राद् व्यवच्छेदेऽभ्युपगम्यमाने नीलस्य असंसर्गो यथा दृश्येन पीतेनास्ति, तथैव अदृश्येन परमाण्वादिनाऽप्यस्तीति दृश्यादृश्ययोः = उपलब्धियोग्यस्य उपलब्ध्ययोग्यस्य चोभयोर्व्यवच्छेदः स्यात्। किन्तु तथा न भवति। तस्माद् एकस्य प्रतिनियमः= विधिः अन्यस्य व्यवच्छेदनिश्चये हेतुर्भवतीति बौद्धोक्तिरनुपपन्नेति मन्तव्यम्।

नन्विष्टमेवेदं यदेकस्य विधाने तद्भिन्नयोर्दृश्यादृश्ययोरुभयोर्व्यवच्छेदः प्रसक्तो भवतीति मतमुत्थापयति – **अथ मतमिति। भवत्येवेति**। ''तदेवेदम्'' इत्येकप्रतिनियमे तदन्ययोरविशेषेण दृश्यादृश्ययोरुभयोर्व्यवच्छेद इष्ट एवेति नेयमनिष्टापत्तिरिति भावः। एतदेवोपपादयति – **तथा हीत्यादिना**। अयमर्थः – ''नीलमेवेदम्'' इति प्रत्यक्षदर्शनम्, तदात्मनियमात् = नीलैकाकारनियतत्वाद् अस्य नीलस्य यावन्तोऽनात्मानोऽस्वरूपभूताः पीतादयो दृश्या अदृश्या वा परमाण्वादयस्तान् सर्वानेव

**तद्देशकालास्तु भवेयुः, रूपादिवदविरोधात्। तत्रोपलब्धिलक्षण-प्राप्तिर्विशेषस्तद्देशकालव्यवच्छेदावधारणाय। सम्भवति ह्यनुपलभ्य-स्तद्देशकालोऽनात्माऽनुपलभ्यमानोऽप्यन्योपलब्धौ, रूपोपलब्धाविव रसः, न तु तुल्योपलम्भयोग्यतः, नियमेनोपलम्भात्, इतरवत्। अन्यथा न तुल्योपलम्भयोग्यतः स्यात्।**

---

अविशेषेण अपाकरोति व्यवच्छिनत्तीति यावत्। तेषां सर्वेषां व्यवच्छेदे हेतुमाह– **तथा चेति**। यस्माद् अन्ये पीतादयः परमाण्वादयश्च अस्य नीलस्य आत्मानो न सन्ति, अत एव अनात्मभूतान् तान् पीतादीन् परमाण्वादींश्च नीलदर्शनं व्यवच्छिनत्तीति मन्तव्यम्।

ननु पीतादयो यदि न नीलस्यात्मानस्तदा कीदृशास्ते सन्तीति जिज्ञासायामाह– **तद्देशकालास्तु भवेयुरिति**। नीलस्य यो देशः कालश्च, स एव देशः कालश्च येषां, तादृशास्ते सन्तीति बुध्यताम्। तद्देशकालाः सन्तोऽपि अन्ये तदात्मानो न भवन्तीत्याशयः। अत्र दृष्टान्तं प्रदर्शयति– **रूपादिवदिति**। रूपस्य यो देशः, स एव रसस्यापि भवितुमर्हति, विरोधाभावात्। यथा, एकस्मिन्नाम्रफले रूपमपि भवति रसोऽपि भवति, नास्ति विरोधः, तथापि न रूपं रसात्मा न वा रसो रूपात्मा, तद्वदित्यर्थः।

ननु नीलादिविधिर्यदि दृश्यानदृश्यांश्च सर्वानिव स्वभिन्नान् अविशेषेणापा-करोति, तदा उपलब्धियोग्यतारूपदृश्यत्वस्यापेक्षा व्यवच्छेदज्ञानं प्रति निरर्थिकैव स्याद् इत्याशङ्कायामाह– **तत्रोपलब्धीति**। अयं भावः– सत्यमेतद् यद् तद्व्यवच्छेदावधारणं प्रति अर्थात् तदभावज्ञानं प्रति प्रतियोगिभूतस्य तस्य उपलब्धिलक्षणा या प्राप्तिरर्थाद् उपलब्धियोग्यतारूपं यद् दृश्यत्वम्, स एव विशेषोऽस्ति, येन विशेषेण उपलब्धियोग्यानां पीतादीनां व्यवच्छेदो नीलस्य देशकालयोरवधार्यते। यदभावेन च नीलस्य देशे काले च सन्नपि परमाणूनां व्यवच्छेदो नावधार्यते। दृश्यस्य व्यवच्छेदावधारणं भवति – "अत्र पीतो नास्तीति", तथा अदृश्यस्य व्यवच्छेदावधारणं नैव भवति – "अत्र परमाणुर्नास्तीति"। अतो दृश्यत्वविशेषणं सार्थकं भवति व्यवच्छेदावधारणाय। अत एव प्रत्यक्षयोग्यस्य व्यवच्छेदोऽवधारयितुं शक्यते पीतादेः, न तु परमाण्वादेरिति व्यवच्छेदावधारणाय दृश्यत्वरूपो विशेषोऽपेक्षणीय एवेति निष्कर्षः।

**सत्यमस्त्ययं विभागः, न त्विदानीं दर्शनप्रतिनियमस्य सामर्थ्यम्। तथा हि— प्रतिनियतमपि तत्र देशे काले च रूपे दर्शनं तयोर्यथा रूपविधि-**

---

यो भाव उपलब्धिलक्षणप्राप्तिमान् अर्थाद् उपलब्धियोग्यतावान् **भवति**, तस्यैव पीतादेर्नीलादिदेशकालयोर्व्यवच्छेदोऽवधार्यते, न परमाण्वादेरदृश्यस्य इत्यत्र हेतुमाह – **सम्भवति हीति**। तद्देशकालः = नीलदेशकालयोर्वर्तमानो यो अनीलात्मा परमाण्वादिरनुपलभ्यो भवति, अर्थाद् अतीन्द्रियतया उपलब्धियोग्यो नास्ति, स परमाण्वादिः अन्योपलब्धौ अर्थात् स्वभिन्ननीलाद्युपलब्धौ सत्यामपि अनुपलभ्यमानः सम्भवति, सन्नपि नोपलभ्यत इति सम्भवतीत्यर्थः, अदृश्यत्वेन उपलब्धियोग्यतारहितत्वादिति शेषः। अत एव रूपोपलब्धौ रसो नोपलभ्यमानो भवति, रसस्य चाक्षुषोपलब्धियोग्यतारहितत्वात्। यस्तु रूपेण तुल्य उपलम्भयोग्यो भवति, तथा रूपदेशकाल एकत्वादिसंख्यादिः, स तु नानुपलभ्यमानो भवति, नियमेन रूपेण सहोपलम्भात्। इतरवद् रूपवदेवेत्यर्थः। यथा रूपमुपलभ्यमानं तथा संख्यादिरप्युपलभ्यमान एव भवतीति। वैपरीत्ये बाधकमाह – **अन्यथेति।** अर्थाद् रूपेण सह नियमेन यदि संख्यादिर्नोपलभ्यमानः स्यात् तदा स **रूपेण** तुल्योपलम्भयोग्यतावान् न स्यादिति मूलार्थः। इत्थं च पीतादेर्दृश्यस्वभाव-त्वेन स यदि क्वचन देशे काले च स्यात् तदा उपलभ्येतैव न त्वनुपलभ्यमानः स्यात्। अतो "नीलमेवेदम्" इति विधिः "न पीतम्" इति पीतव्यवच्छेदात्मक एव जायते। यतो हि नीलदेशकालयोर्यदि पीतः सन् स्यात् तदाऽवश्यमुपलभ्यमानः स्यात्, दृश्यत्वेनोपलब्धियोग्यत्वात्। अतो नीलविधिरेव पीतव्यवच्छेद इति सिद्धम्। एवं, नीलविधौ परमाण्वादिव्यवच्छेदावधारणवारणार्थम् उपलब्धियोग्यता-रूपस्य विशेषस्याश्रयणमावश्यकमित्यपि सिद्धं बोध्यम्। तथा च व्यवच्छेदाव-धारणार्थम् उक्तविशेषाश्रयणाद् न दृश्यादृश्ययोरुभयोर्व्यवच्छेदप्रसङ्गो दोष इति पूर्वपक्षिणोऽभिप्रायः।

बौद्धस्योक्तव्यवस्थायां सिद्धान्तवादी आह– **सत्यमस्त्वयं विभाग इति।** भवदीयोऽयं विभागो भवतु नाम यत् तद्देशकालयोस्तदन्यस्य व्यवच्छेदे = संसर्ग-

**मात्रोपक्षयान्न रसं व्यवच्छिनत्ति, तथा भूभागदर्शननियमोऽपि भूभागविधिमात्रव्यापारत्वान्न घटं दृश्यमपि व्यवच्छिन्द्यात्, व्यवच्छेदे वा सर्वस्य व्यवच्छेदः स्यात्। तस्माद् दृश्यव्यवच्छेदेऽपि हेत्वन्तरमुपास्यम्, न दर्शनप्रतिनियममात्रम् ।**

---

व्यवच्छेद इति यावद् उपलब्धियोग्यतारूपदृश्यत्वं विशेषो व्यवच्छेद्यस्य अपेक्षितो भवति। किन्तु तादात्म्यव्यवच्छेदे तु दृश्यत्वं विशेषो नैवापेक्षितो भवति, दृश्यं वा अदृश्यं वा तदन्यमात्रं व्यवच्छिद्यते। अतो "घट एवायम्" इति विधौ दृश्यः पटादिरदृश्यः परमाण्वादिः सर्वोऽपि घटेतरो व्यवच्छिद्यत इति। तथापि इदानीं प्रत्यक्षदर्शनस्य य एकाकारप्रतिनियमोऽस्ति, तस्य अन्यव्यवच्छेदे सामर्थ्यं नास्तीति मन्तव्यम्। कथं तथा सामर्थ्यं नास्तीत्याशङ्कायां तदुपपादयति– **तथा हीति**। तत्र देशे काले च रूपविषयकं यद्दर्शनम् "शुक्लः पटः" इत्यादि, तद्दर्शनं रूपविषये प्रतिनियतमपि (प्रतिबद्धमपि) यथा रसं न व्यवच्छिनत्ति, रूपविधिमात्रे उपक्षीणत्वात् = पर्यवसितत्वात्, तथैव "भूतलमिदम्" इति भूभागविषयेऽपि प्रतिनियतं प्रत्यक्षदर्शनं दृश्यमपि घटं न व्यवच्छेत्स्यति। कुतः? भूभागविधिमात्रे भूतलदर्शनस्य व्यापृतत्वादिति स्वीकरणीयम्। एतदेवोक्तम् – **'प्रतिनियतमपि'** इत्यारभ्य **'व्यवच्छिन्द्यात्'** इत्यन्तेन ग्रन्थेन।

एकविषये व्यापृतमपि दर्शनं यदि विषयान्तरव्यवच्छेदेऽप्यव्याहतं समर्थं स्यात्, तदा तदतिरिक्तस्य सर्वस्यापि वस्तुजातस्य व्यवच्छेदोऽवधार्येत, न तु तथाऽवधार्यते। अतो दर्शनप्रतिनियममात्रं नान्यव्यवच्छेदे हेतुः। तस्माददृश्यस्य दृश्यस्य च व्यवच्छेदे किमपि हेत्वन्तरमेवाश्रयणीयं न दर्शनप्रतिनियमे निर्भरो भवेत्। एतदेवाह – व्यवच्छेदेऽपीत्यादिना प्रतिनियममात्रम् इत्यन्तेन वाक्यजातेन।

तद्विषयकदर्शनप्रतिनियमस्य तद्देशकालयोस्तदन्यस्य संसर्गव्यवच्छेदे असामर्थ्यमुपपाद्य तस्मिन् तदन्यतादात्म्यस्यापि व्यवच्छेदे सामर्थ्याभावं प्रतिपादयति–

**तथा चात्मान्तरव्यवच्छेदोऽपि न ततः सिद्धिमुपाश्नुते। कामं विधेर्विधेयासत्त्वव्यवच्छेदरूपत्वात् तदभावो व्यवच्छिद्येत, नात्मान्तरसत्ता, तद्देशकालयोरिवानुपलभ्यमानसत्ता।**

**नैकस्य बहव आत्मान इति चेत्, अन्यतस्तर्हि विरोधाद् व्यवच्छेदः, न दर्शननियमात्। असति एव व्यवच्छेदे कुतो बहुत्वम्, कुतो वा विरोधः,**

---

**तथा चात्मान्तरेति**। दर्शनप्रतिनियमस्य यथा तदन्यसंसर्गव्यवच्छेदे हेतुत्वं नास्ति तथैव आत्मान्तरव्यवच्छेदो अर्थात् तदन्यतादात्म्यव्यवच्छेदोऽपि ततः = दर्शनप्रतिनियमाद् न सेद्धुमर्हति। अर्थाद् 'घट एवायम्' इति विधौ सति 'घटः पटो न भवति' पटतादात्म्यव्यवच्छेदस्तस्मिन् घटे तेन विधिना न प्रत्येतुं शक्यते। यद्येकस्य विधानं किमप्यन्यद् व्यवच्छिन्द्यादपि तदा स्वाभावमेव व्यवच्छिन्द्यात् नीलस्य असत्त्वं नास्तीति, न तु वस्त्वन्तरसत्तां व्यवच्छिनत्तीति। स्वसत्त्वाभावव्यवच्छेदे उपपत्तिमाह – कामं विधिर्हि विधेयासत्त्वव्यवच्छेदकः, अतः स विधेयस्य सत्तां प्रतिपादयन् तस्य सत्त्वाभावं व्यवच्छेत्स्यति, न तु आत्मान्तरस्य स्वरूपान्तरस्य सत्तां व्यवच्छेत्स्यतीत्यर्थः। तत्र दृष्टान्तं स्मारयति – **तद्देशकालयोरिति**। यथा नीलविधिः स्वदेशकालयोर्दृश्यस्य अनुपलभ्यमानस्य संसर्गं व्यवच्छिनत्ति, किन्तु दर्शनायोग्यस्य अदृश्यपरमाण्वादेरनुपलभ्यमानस्यापि सत्तां न व्यवच्छिनत्ति, तद्वदिति भावः। अत्र विशेषः शङ्खपाणिकृतव्याख्यायां द्रष्टव्यः।

शङ्कते – **नैकस्येति**। एकस्य बहव आत्मानो न सम्भवन्ति, अतो 'नीलमेवेदम्' इत्येकाकारनियतं दर्शनमनेकात्मानं व्यवच्छिनत्तीति शङ्कितुराशयः।

उत्तरयति – **अन्यत इति**। एवन्तर्हि एकस्यानात्मभ्यो विरोध एवानात्मनां व्यवच्छेदे हेतुरित्यायातम्, नैकाकारदर्शनप्रतिनयम इत्यर्थः।

**इतरेतराश्रयं वा। तस्मान्नैकविधिरन्यव्यवच्छेदः। अपि च एकनियमादन्यव्यवच्छेदे चित्रादिषु नीलादीनामेकदर्शनभाजां भेदो न सिध्येत्, एकज्ञानसंसर्गादिकत्र ज्ञानस्यानियमात्।**

---

ननु भवतु नाम विरोधादेव व्यवच्छेदः, तावतापि ममाभीष्टसिद्धिरेव, व्यवच्छेदादेव भेदसिद्धेर्नाद्वैतसिद्धिरिति चेदाह – **असति च व्यवच्छेदे इति।** व्यवच्छेद एव तावन्न सिध्यतीति कुतो बहुत्वस्य = भेदस्य सिद्धिः सम्भवेत्। विरोधादेव व्यवच्छेदः सेत्स्यतीत्यपि न सम्भवति, विरोधस्याप्यसिद्धेः। अयं भावः– व्यवच्छेदाधीना भेदसिद्धिः, व्यवच्छेद एव यदाऽसन् तदा भेदासिद्ध्या विरोधोऽपि कुतः सिध्येत्? यत्र भेदो भवति तत्रैव विरोधो भवति, अभेदे कस्य केन विरोधः स्यादिति।

यद्युच्येत – व्यवच्छेदाद् विरोधो भविष्यतीति तदा स्फुट इतरेतराश्रयदोषः, व्यवच्छेदाद् विरोधो विरोधाच्च व्यवच्छेद इति। अतो विरोधादपि न व्यवच्छेद इति। व्यवच्छेदाभावात् कुतो बहुत्वम् (भेदः), बहुत्वाभावाच्च कुतो विरोध इति वा ग्रन्थयोजनेति शङ्खपाणिः। तस्मादेकविधिरेवान्यव्यवच्छेद इति मतं सर्वथाऽनुपपन्नमिति मन्तव्यम्।

इदानीमुक्तकारिकायाः "मा न भूदेकधीजुषाम्" इति चतुर्थपादं व्याचष्टे – **अपि चेति।** एकनियमात् = ज्ञानस्यैकविषयकत्वप्रतिनियमाद् अन्यविषयव्यवच्छेदे स्वीक्रियमाणे चित्रत्वेन रूपेणैकविषयके किन्तु वस्तुगत्या नीलपीताद्यनेकविषयके एकस्मिन् ज्ञाने भासमानानां नीलपीतरक्तादिरूपाणामपि परस्परं सन्नपि भेदो= व्यवच्छेदो न सिध्येत्। तेषु भेदासिद्धौ हेतुमाह – **एकज्ञानसंसर्गादिति।** अयं भावः – एकस्मिन् चित्रज्ञाने हि संसृष्टा नीलपीतादयः सर्वे, अतः कस्मिंश्चिदेकस्मिन्

**ननु प्रकृत्यैव भिन्ना भावाः। तांस्तथाविधान् विदधदेव दर्शनं परस्परतो व्यावर्तयति, न हि व्यावृत्तिरन्या व्यावृत्तिमतः। तत्र व्यावृत्तिमद्विधौ साऽपि विधीयत एव। यत्प्रकृतिः खलु यः पदार्थः स तथैव प्रकृत्या विधेयः। अन्यथा न तस्य विधिः स्यात्। व्यावृत्त-स्वभावाश्च भावा यथायथं दर्शनेषु निर्भासन्ते। तस्मात् तथैव विधीयन्त**

---

नीले वा पीते वा रक्ते वा चित्रज्ञानं नास्ति नियतम्। यदि तच्चित्रज्ञान-मेकस्मिन् नीले नियतं स्यात् तदा पीतादिकं स्वतो विच्छिन्द्यात्, आत्मानं वा पीतादितो व्यवच्छिन्द्यात्। अतश्चित्रात्मके विषये तस्य ज्ञानस्य नियतत्वात् तत्र भासमानानां नीलादीनां परस्परं भेदो न सिध्येदिति भावः। तत्र चेदन्यद् भेदे प्रमाणम्, तदेव सर्वत्र स्यादित्यकारणं दर्शनप्रतिनियम इति शङ्कपाणिः।

एकविधिरेवान्यव्यवच्छेद इति मतं निराकृतम्। इदानीं भावातिरिक्तो भेदो न भवति, किन्तु सर्वे भावा भेदात्मका इति वादिनां मतं दूषयितुमुपक्रमते – **नन्विति**। अयमभिप्रायः – सर्वे भावाः स्वभावेनैवं भिन्ना भवन्ति परस्परम्। अतो भावानां प्रत्यक्षदर्शनं तान् भावान् तथाविधानेव = परस्परं भिन्नानेव विधत्ते, परस्परं व्यावर्तयति च तान्। यतो हि व्यावृत्तिर्नाम व्यावृत्तिमद्वस्तुनोऽन्या न भवति, प्रकृत्यैव स्वेतरस्माद् व्यावृत्तः पदार्थ एव व्यावृत्तिरिति यावत्। अतो ज्ञानेन व्यावृत्तिमद्वस्तुनि विधीयमाने व्यावृत्तिरपि (भेदोऽपि) विहितैव भवति। तज्ज्ञानाय हेत्वन्तरमपेक्षणीयं भवतीति।

एतदेवोपपादयति – **यत्प्रकृतिरिति**। यः पदार्थो यादृशस्वभाववान् भवति, स तथाविध एव स्वभावतो ज्ञायते नान्यथा। यथा उष्णप्रकृतिरग्निर्न कदाचिद-नुष्णो ज्ञायते, तद्वत्। यदि पदार्थः स्वभावं विहाय ज्ञायेत, तदा ज्ञायेतैव नेत्यर्थः। यतो यथायथं दर्शनेषु = तत्तज्ज्ञानेषु भावाः स्वभावतः परव्यावृत्ता एव भासन्ते, अतस्तथैव ते निरूप्यन्ते, नान्यथा।

**इति। अत्राप्यसंस्पृष्टनिर्भासनादसंस्पृष्टस्वभावत्वे दृश्यादृश्ययोरविशेषेण व्यवच्छेदस्तदवस्थः।**

**अपि च,**

**न भेदो वस्तुनो रूपं तदभावप्रसङ्गतः।**
**अरूपेण च भिन्नत्वं वस्तुनो नावकल्पते॥५॥**

**न व्यावृत्तिर्वस्तुस्वभावः, सा खल्वेकाऽनेकाधिष्ठाना प्रतिज्ञायते प्रज्ञायते च। तथा च तस्या एकस्या अनेकवृत्तेर्वस्तुस्वभावत्वे वस्तूनामपि भेदो न स्यात्। नैकस्मादभिन्नमभिन्नस्वभावं भिन्नं युज्यते तद्वदेव।**

**अथ मा भूदेष दोष इत्यर्थान्तरमेव व्यावृत्तिरास्थीयते, तथापि व्यावृत्तेररूपत्वात् स्वरूपेण न भावा व्यावृत्ताः स्युः।**

---

इत्येवं पूर्वपक्षिणा भेदे साधिते सिद्धान्ती तन्निराकरोति– **अत्रापीति**। अयमभिप्रायः – घटादिभाववस्तु भावान्तरात् पटादितोऽसंस्पृष्टं सदेव भासते। अत एव यदि तत् पटादिव्यावृत्तस्वभावं स्वीक्रियते, तदा घटवस्तु यथा दृश्येन पटादिनाऽसंस्पृष्टं भासते तथा अदृश्येन परमाण्वादिनाऽपि असंस्पृष्टमेव भासत इति दृश्यपटादेरिव अदृश्यपरमाण्वादेरपि व्यवच्छेदो घटे प्रतीयेतेति सर्वव्यवच्छेदरूपः पूर्वोक्तो दोषस्तदवस्थ एव प्रसज्यत इति बोध्यम्।

वस्तुभेदे दूषणान्तरमाह – **अपि चेति**। भेदो हि वस्तूनां स्वरूपं नास्ति। अर्थाद् वस्तुभ्योऽव्यतिरिक्तो नास्ति। यदि हि भेदो वस्त्वव्यतिरिक्तः स्यात् तदा भेदस्य कापि निजा सत्ता न स्यादिति सुतरां भेदस्याभावः प्रसज्यते। तदुक्तम्– **तदभावप्रसङ्गत इति**। भेदाभावप्रसङ्गत इत्यर्थः। किञ्च, यदा भेदो वस्तुनः स्वरूपं नास्ति तदाऽस्वरूपभूतेन भेदेन वस्तुनो भिन्नत्वं नैव सेद्धुमर्हतीति श्लोकार्थः। श्लोकस्य पूर्वार्धार्थमेव स्फुटीकरोति – **न व्यावृत्तिर्वस्तु-स्वभाव इति**। एतदेवोपपादयति – **सा खल्विति**। सा व्यावृत्तिरेका भवति, एकैव

**अपरः कल्पः—भेदः परस्परानात्मस्वभावः, स चेद् वस्तुनः स्वभावो वस्तूनामभावप्रसङ्गः, अभावात्मकत्वप्रतिज्ञानात्। अपरः प्रकारः—भेदश्चेद्वस्तुनः स्वभावः, नैकं किञ्चन वस्तु स्यात्, भेदेनैकत्वस्य विरोधात्। परमाणुरपि भेदादनेकात्मक इति नैकः। तथा च**

---

च सा द्वयोरधिष्ठानयोराश्रिता भवतीति भेदवादी प्रतिजानाति, तथैव सर्वेषामनुभवोऽप्यस्ति "अयमनयोर्भेदः" इति। तथा चानेकवर्तिनी एकैव व्यावृत्तिर्यदि वस्तुनः स्वभावभूताऽस्ति, तदा स्वस्वभावभूताया व्यावृत्तेरभिन्नं वस्त्वपि एकमेव स्यात्, न भिन्नं स्यात्, व्यावृत्तिवदेवेति भावः। अतो न वस्तूनामपि भेदः सिध्येत्। **अत्रोपोद्घलकं** सामान्यनियममुपन्यस्य भेदस्यायुक्तत्वं समर्थयति – **नैकस्मादिति**। एकस्मादभिन्नम् अत एव तदभिन्नस्वभावं भवद् भिन्नं न युज्यते, किन्तु तद्वदेव एकमेव भवेदिति सामान्यनियमार्थः।

उपर्युक्तो दोषो मा भूदिति हेतोर्यदि व्यावृत्तिर्न वस्तुनः स्वरूपभूतम्, किन्त्वर्थान्तरमेव स्वीक्रियते, तदा व्यावृत्तेर्वस्तुस्वरूपत्वाभावाद् भावपदार्था न स्वरूपतो व्यावृत्तिमन्तो (भिन्ना) भवितुं शक्नुवन्तीति भावः।

श्लोकपूर्वार्धस्य व्याख्यान्तरमाह – **अपरः कल्प इति**। अयमभिप्रायः—घटपटयोः परस्परं भेदो नाम तयोः परस्परानात्मत्वम् "घटः पटानात्मा पटश्च घटानात्मा" इति। इत्थञ्च भेदस्य परस्परानात्मकत्वकथनेन अभावापरपर्याय-निषेधरूपत्वं प्रतिज्ञातं भवति, तथा वस्तूनां भेदात्मकत्वमनुपदमेव प्रतिज्ञातं भेदवादिना। एवं स्थितौ वस्तूनां भेदात्मकत्वम्, भेदस्य चाभावस्वभावत्वमिति पर्यवसानाद् वस्तूनाम् अभावः प्रसज्यत इति। एतदेवाभिप्रेत्योक्तम्—"न भेदो वस्तुनो रूपं तदभावप्रसङ्गतः" इति। तदभावप्रसङ्गतः = वस्त्वभावप्रसङ्गादित्यर्थः। पूर्वार्धस्यैव व्याख्यान्तरमप्याह—**अपरः प्रकार इति**।

**तत्समुच्चयरूपोऽनेकोऽप्यस्यात्मा नावकल्पते। तत्रैकत्वानेकत्वयोरनुपपत्ते-स्तृतीयप्रकारासम्भवाच्च वस्तुनो निःस्वभावत्वप्रसङ्गः।**

**अन्या व्याख्या द्वितीयार्धस्य— व्यतिरेकाव्यतिरेकविकल्पे प्रत्यव-तिष्ठते, वस्तुगत एव विभागः — तत्स्वभावत्वमन्यत्वं वेति, नावस्तुनि**

---

**अयमाशयः** – भेदशब्दस्य "भिदिर् द्वैधीकरणे" इति धातुना व्युत्पादनाद् **भेदो** नाम द्विधाभावोऽनेकत्वमिति यावत्। तथा चायं श्लोकांशार्थः – अनेकत्वं **वस्तुनः** स्वभाव इति योऽयं पूर्वपक्षः, स न भवितुमर्हति। यतो हि वस्तूनाम-**नेकस्व**भावत्वे कस्यापि वस्तुन एकत्वं न स्यात्। एतदेवोक्तम् – **तदभावप्रसङ्गत इति**। तदभावप्रसङ्गतः = एकत्वाभावप्रसङ्गादित्यर्थः। जगति किमप्येकं वस्तु न स्यात्।

ननु बौद्धस्य वस्तूनामनेकत्वमिष्टमेव, एकस्मिन् अवयविवस्तुनि मानाभावात्, परमाणुपुञ्जैरेव प्रत्यक्षाद्युपपत्तेरित्याशङ्क्य निराकरोति— **परमाणुरपीति**। अयं भावः – परमाणुरपि भवन्मते नैकः, वस्तुमात्रस्य भवन्नये **भेदा**त्मकत्वात्। तथा च यदा नास्ति परमाणुरप्येकः, तदा तत्पुञ्जात्मको **अने**कोऽपि कश्चिन्न सम्भवति। अस्यां स्थितावेकत्वमपि नास्ति **अने**कत्वमपि नास्ति, एकत्वानेकत्वाभ्यामन्यः कश्चित् तृतीयः प्रकारोऽपि न **सम्भ**वतीति। तथा च वस्तुनो निःस्वभावत्वं स्यात्, निःस्वभावत्वाच्च **वस्तुनः** सर्वथाऽभाव एव प्रसज्येत, यथा निःस्वभावस्य गगनकुसुमादेः **सर्वथा**ऽभाव एव भवति, तद्वत्। एतदभिप्रायेणोक्तम्— " न भेदो वस्तुनो **रूपं** तदभावप्रसङ्गतः" इति।

अत्र पक्षे भेदपदार्थ एकत्वम्। 'तदभावप्रसङ्गतः' इत्यस्य वस्त्व-**भाव**प्रसङ्गादित्यर्थः।

**विकल्पविरचितशरीरे भेदेऽवतारमर्हति। तथा हि, तत्त्वान्यत्वाभ्यामनिर्वचनीयोऽनादिविकल्पवासनोपादानविकल्पपरिदर्शितशरीरः "अयमस्माद् भिन्नः, अयमनयोर्भेदः" इति व्यवहारं प्रवर्तयति। न भेदो नाम किञ्चिद् वस्तु, यस्य तत्त्वमन्यत्वं वा किञ्चिद् विचार्येत। तत्रेदं पुनरुपतिष्ठते–**

**"अरूपेण च भिन्नत्वं वस्तुनो नावकल्पते"॥**

---

"अरूपेणेति" श्लोकोत्तरार्धस्यान्यां व्याख्यामुपन्यस्यति – **अन्येति**। तामाह **व्यतिरेकेति**। योऽयं विकल्पः पूर्वमुत्थापितो यद् भेदो वस्तुनो व्यतिरिक्तोऽव्यतिरिक्तो वेति, अथवा व्यावृत्तिर्व्यावृत्तिमतोऽन्याऽनन्या वेति, **तत्र** कश्चित् प्रत्यवतिष्ठते = आक्षिपति। प्रत्यवस्थानस्वरूपमाह – **वस्तुगत एवेति**। भेदो वस्तुनः स्वभावो रूपम् इत्येको विभागः, भेदो वस्तुनो न स्वभावो रूपं किन्तु वस्तुनोऽन्य इति द्वितीयो विभागः। सोऽयमीदृशो विभागो वस्तुनि एव अवतारमर्हति = अवसरं लभते। भेदस्तु अवस्तुभूतोऽवास्तविकः, यतो हि विकल्पेन वस्तुशून्यप्रत्ययेन विरचितं शरीरं यस्य तथाविध एवास्ति भेदः। विकल्पलक्षणमुक्तं योगदर्शने– **"शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः"** इति। अतो भेदसम्बन्धे विभागप्रश्न एवायं नोपस्थातुमर्हति यत् स वस्तुनो रूपमरूपं वेति।

इदमेव विशदयति – **तथा हीति**। अयमाशयः – भेदो नाम न किञ्चिद् वस्तु = वास्तविकः, यमधिकृत्य विचारो भवेद् यत् "स वस्तुनः स्वरूपमन्यद् वा" इति। किन्तु तत्त्वान्यत्वाभ्याम् = सदसद्भ्यामनिर्वचनीयो भेदः, यतोऽनादिविकल्पवासनाभिरुपादानकारणभूताभिरुत्पन्नेन विकल्पप्रत्ययेन परिदर्शितं शरीरं यस्य तादृश इत्यर्थः। इत्थञ्च वस्तुशून्यविकल्पप्रत्ययोपनीतोऽनिर्वचनीय एव भेदः

**यदि तर्ह्यरूपो निःस्वभावो भेदः – न हि वस्तुस्थित्यास्ति, विकल्पैरेव केवलमुपदर्श्यते – न तर्हि वस्तुनो भिन्नत्वम्, परमार्थतो भेदाभावात्। न हि कल्पितेन स्वभावेन पारमार्थिकी तद्वत्ता युज्यते, कल्पितैव स्यात्।**

**तदेतदस्माभिरुच्यमानं किमिति भवान्नानुमन्यते ? वयमप्येतदेव ब्रूमः – न भेदो भावतोऽस्ति, अनाद्यविद्यावासितमेतदिति।**

---

"अयमस्माद् भिन्नः, अयमनयोर्भेदः" इत्यादेर्भिन्नत्वव्यवहारस्य प्रयोजको भवतीति।

अत्र सिद्धान्तिकथनमुपस्थापयति – **तत्रेदं पुनरुपतिष्ठत इति**। अयमर्थः – यदि भवान् मन्यते यद् भेदोऽनिर्वचनीयो न वास्तविक इति, तदा अरूपेण= अवास्तविकेन भेदेन वस्तुनि भिन्नत्वं कथं सेत्स्यति? तथा च भेदासिद्ध्याऽ-द्वैतात्मसिद्धिः सुतरामुपपन्नेति भावः।

"अरूपेण च भिन्नत्वम्" इति श्लोकांशस्यार्थमेव विशदयति – **यदि तर्हीति**। अयमाशयः – यदि तु भेदोऽरूपः अर्थाद् निःस्वभावः, अत एव शशविषाणवद् नास्त्येव वस्तुतः, किन्तु विकल्पैरेव केवलमुपदर्श्यते, अर्थात् कल्पित एवास्ति, तदा वस्तुनो भिन्नत्वेन तस्य स्थितिः कथं स्यात्? परमार्थतो भेदस्य अभावात्। अतो यथा कल्पितेन शृङ्गेण शशः शृङ्गवान् न भवति वस्तुतः, तथैव कल्पितेन भेदेन पारमार्थिकं वस्तुषु भिन्नत्वं न सेत्स्यति, किन्तु कल्पितमेव स्यादिति भावः।

भवानपि तु भेदं निःस्वभावं कल्पितमेवेदानीं स्वीकृतवान्। एतदेव तु वयमपि, यद् भेदो भावतः = वस्तुतो नास्ति किन्त्वविद्याविलसितमात्रमस्ति। तथा च यद् भवता स्वीक्रियते, तदेवास्माभिरुच्यमानं भवतो गले कथं नावतरतीति न वयं विद्मः।

**यदुक्तम् – भेदात्मत्वे वस्तुन एकवस्त्वभावः, तदभावादितर-स्यापीति वस्त्वभावः। तत्राहुः – परापेक्षं वस्तुनो भेदस्वभावं ब्रूमः, नात्मापेक्षम्, येन विरोधादेकवस्त्वभावः स्यात्। स्वरूपेण त्वेकं वस्तु परापेक्षया भिन्नमिति। तत्रोच्यते–**

**पौरुषेयीमपेक्षां च न हि वस्त्वनुवर्तते॥५-१/२॥**

---

"न भेदो वस्तुनो रूपं तदभावप्रसङ्गतः" इति श्लोकार्धस्य व्याख्याया अपरः प्रकारः पूर्वमुक्तः – "भेदश्चेद् वस्तुनः स्वभावः, नैकं किञ्चन वस्तु स्यात्,भेदेन एकत्वस्य विरोधात्" इति, तदुत्थाप्य पूर्वपक्षी आशङ्कते– **यदुक्तमिति, तत्राहुरिति चेति**। अयं भावः – वस्तुनो भेदात्मत्वे भेदस्वभावत्वे भेदेन सह एकत्वस्य विरोधाद् एकवस्त्वभावःप्रसज्यते। एकवस्त्वभावे च एकैकसमुच्चय-रूपस्य इतरस्य अर्थाद् अनेकस्यापि अभावः प्राप्तो भवति। अस्यां स्थितौ एकत्वानेकत्वयोरभावे ताभ्यामतिरिक्तस्य तृतीयप्रकारस्याभावाद् वस्तुमात्राभावः प्रसज्यत इति यदुक्तमद्वैतवादिना, तत्रायं परिहारः– भेदो वस्तुनो रूपमिति यदुक्तं मया तत्परापेक्षया न स्वात्मापेक्षया। अतः पटो घटापेक्षया भिन्नः सन्नपि स्वात्मापेक्षयाऽभिन्न एवेति तदाशयः। तथा च भेदेन सह नैकत्वस्य विरोधो येन एकस्याभावेऽनेकोऽपि न स्यादिति वस्तुमात्राभावः प्रसज्येत। तस्मात् स्वरूपेण एकं वस्तु पररूपेण भिन्नं भविष्यतीति पूर्वपक्षिणोऽभिप्रायः।

इदमपि पूर्वपक्ष्यभिप्रेतं निराकरोति सिद्धान्ती – **तत्रोच्यत इति**। **पौरुषेयीमपेक्षामिति**। पुरुषस्येयं पोरुषेयी। तथा च पुरुषगतामपेक्षां वस्तु नानुसरति। न हि पुरुषः परस्माद् भेदमपेक्षत इति कृत्वा वस्तु भिन्नं भवति, न वा पुरुषः स्वस्मादेकत्वमपेक्षत इति कृत्वा तद्वस्तु स्वस्मादभिन्नं भवति, वस्तुस्वभावस्य स्वतन्त्रत्वात्। तस्माद् भेदो यदि वस्तुनः स्वरूपं तदा एकत्वाभावः, यदा तु एकत्वं वस्तुस्वभावस्तदा भेदाभावः, भिन्नत्वैकत्वयोर्विरोधादिति पूर्वोक्तो वस्त्वभावप्रसङ्गदोषस्तदवस्थ एवेति कारिकार्थः।

**नापेक्षा नाम कश्चिद् वस्तुधर्मः, येन वस्तूनि व्यवस्थाप्येरन्। न खलु स्वहेतुप्रापितोदयेषु स्वभावव्यवस्थितेषु वस्तुषु स्वभावस्थितये वस्त्वन्तरापेक्षा युज्यते। तत्र पुरुषप्रत्ययधर्मोऽयम्। न च पुरुषप्रत्ययानुविधायीनि वस्तूनि, स्वहेतुभ्यः स्वस्वभावव्यवस्थितेः। अतो न तदनुसारेण वस्तुरूपं व्यवतिष्ठते। व्यवस्थितवस्तुस्वरूपानुसारेणैव तस्य व्यवस्था न्याय्या, तत्पूर्वकत्वात्। परापेक्षायां च वस्तुस्वभावस्थिताावितरेतराश्रयप्रसङ्गात्।**

---

"पौरुषेयीम्" इति कारिकांशार्थं विशदयति– **नापेक्षेति**। अपेक्षा यदि वस्तुनः कश्चिद् धर्मो भवेत् तदाऽपेक्षानुसारेण भिन्नतयाऽभिन्नतया वा वस्तूनि व्यवस्थापितानि भवेयुः, न त्वेवमस्ति। स्वहेतुना प्रापितः = सम्पादित उदयः स्वरूपलाभो येषां तादृशेषु तथा स्वभावतो व्यवस्थितेषु अर्थाद् व्यवस्थितस्वरूपेषु वस्तुषु स्वरूपव्यवस्थितये वस्त्वन्तरस्यापेक्षा न युक्तेत्यर्थः। अयमपेक्षारूपो धर्मः पुरुषप्रत्ययस्यान्तःकरणस्य धर्मः, न वस्तूनां धर्मः। अत एव वस्तूनि स्वरूपव्यवस्थित्यर्थं पुरुषप्रत्ययं पुरुषान्तःकरणं नानुविदधति नापेक्षन्त इति यावत्। यतस्तेभ्यः स्वहेतुभ्य एव वस्तूनां स्वभावः = स्वरूपं व्यवस्थितं भवति, यैर्हेतुभिर्वस्तूनि उत्पद्यन्त इति। प्रत्युत पुरुषस्यैवायमपेक्षारूपो धर्मः। तस्मात् पुरुषप्रत्ययानुसारेण वस्तुस्वरूपं न व्यवस्थितं भवतीति मन्तव्यम्। अथवा पुरुषप्रत्यक्ष इति पाठे प्रत्यक्षशब्दोऽत्र प्रतीतिपरः, तथा च वस्तुस्वरूपव्यवस्था यदि पुरुषप्रतीत्यनुविधायिनी स्यात् तदा यथा यथा वस्तूनि पुरुषः प्रत्येति तथा तथा वस्तूनि स्वरूपं लभेरन्। तथात्वे च पुरुषेण रजततया प्रतीता शुक्तिस्तदानीं रजतमपि भूयात्। अतो न कदाचिद् वस्तुस्वरूपं व्यवतिष्ठेत। किन्तु न चैतदस्ति, शुक्तिः स्वशुक्तिरूपेणैव सदा व्यवस्थिता तिष्ठति। अतो न पुरुषप्रत्ययानुसारेण वस्तुस्वरूपव्यवस्थेति। एतदेवोक्तं मूले – **"अतो न तदनुसारेण वस्तुरूपं व्यवतिष्ठते"** इति। प्रत्युत तत्पूर्वकत्वात् = स्वहेतुव्यवस्थितवस्तुपूर्वकत्वात्। पुरुषप्रत्यय एव वस्तुस्वरूपानुसारी भवतीति व्यवस्था समुचिता, वस्तुपूर्वकत्वात् तस्य पुरुषप्रत्ययस्येति स्वीकरणीयम्।

**अथवा यदुक्तम्– एकस्माद् भेदादव्यतिरेकाद् वस्तुनो भेदाभावप्रसङ्ग इति, तत्राहुः – न भेद एकः, रूपविरोधात् । एकत्वे च तन्निमित्तं वस्तूनामेकत्वं स्यात्। तस्मात् प्रतिभावं भेदो भिद्यते ।**

---

वस्तुस्वरूपव्यवस्थायाः परापेक्षित्वेऽन्योन्याश्रयदोषोऽपि प्रसज्येतेत्याह– **परापेक्षायां चेति**। अयमाशयः – यदि घटभेदः पटापेक्षो भवेत् तदा पटभेदोऽपि घटापेक्षः स्यादिति स्फुटोऽत्रान्योन्याश्रयदोष इति भावः।

पूर्वं "न भेदो वस्तुनो रूपम्" इति पूर्वार्धव्याख्यायां सिद्धान्तिनाऽभेदवादिना स्वपक्षसमर्थने उक्तम्– "न व्यावृत्तिर्वस्तुस्वभावः, तस्या एकस्या अनेकवृत्तेर्वस्तुस्वभावत्वे वस्तूनामपि भेदो न स्यात्" इति। तदेवेदानीम् **"अथवा यदुक्तम्"** इत्यादिनानूद्य तत्र पूर्वपक्षिणां भेदवादिनां समाधानमुपस्थापयति ग्रन्थकारः – **तत्राहुरिति**। भेदवादिनामयमभिप्रायः– एक एव भेदोऽनेकाश्रित इति नास्माकमभ्युपगमः। अर्थात् पटप्रतियोगिको घटानुयोगिकोऽन्यो भेदः पटभिन्नो घट इत्यत्र, तथा घटप्रतियोगिकः पटानुयोगिकोऽन्यो भेदो घटभिन्नो पट इत्यत्र। यदि तु एक एव भेद उभयत्र स्यात् तदा भेदस्य यत् स्वरूपं भेदकत्वं तदेव विरुध्येत = हीयेतेति यावत्। अर्थाद् भेदो हि स्वयं भिन्न एव सन् घटपटात्मकं वस्तुद्वयं **परस्परस्माद्** विविनक्ति। यदि तु स भेदः स्वयमेकः स्यात् तदा स वस्तुद्वयं विवेक्तुं भिन्नतया बोधयितुं कथं शक्नुयात्? तथा च तस्य विवेचकत्वस्वरूपमेव विरुध्येत – एतदेव विशदयति – **एकत्वे चेति**। भेदस्यैकत्वे तन्निमित्तेन वस्तूनामपि अनुयोगिप्रतियोगिभूतानामेकत्वं प्रसज्येत। अर्थाद् भेदादव्यतिरिक्तौ घटपटौ परस्परमप्यव्यतिरिक्तावेक एव भवेताम् । तस्मात् प्रतिवस्तु भेदो भिन्न इति मन्तव्यम् । अर्थाद् अन्यो हि पटस्य घटे भेदो अन्यश्च घटस्य पटे भेद इति।

अत्र सिद्धान्ती पृच्छति– **कथमिति**। यदि एकैकस्मिन् वस्तुनि अन्योऽन्यो भेदस्तिष्ठति, तदा भेदस्यानेकाश्रयत्वं कथं व्यवह्रियत इति। उत्तरयति पूर्वपक्षी – **अपेक्षात इति** । अयमाशयः – एकैकनिष्ठोऽपि भेदः स्वव्यवस्थितये प्रतियोगिनमपेक्षते। न हि प्रतियोगिनं घटमुपेक्ष्य भेदः पटे वर्तितुमर्हति। तथा

**कथं तर्ह्यनेकाश्रयत्वम् ? अपेक्षातः। तथा हि – प्रतियोग्यपेक्षं तस्य स्वरूपं व्यवस्थितम्। तथा च यथायथं भेदैः प्रतियोग्यपेक्षैरात्मभूतैर्भिन्नाः सर्वे भावा इति।**

**तत्रोच्यते– पौरुषेयीमिति। पुरुषो ह्येकमर्थं गृहीत्वा परमपेक्षते कार्यार्थम्। स्वहेतुभ्यस्तु प्रतिलब्धाविकलस्वभावानां भावानां भावान्तरेषु किमर्थाऽपेक्षा ?**

**ननु स्वभावस्थितये नानाविधा हि भावस्वभावाः । तत्र कश्चित् प्रतियोग्यपेक्षयैव व्यवतिष्ठते वस्तुतत्त्वे, यथा अयमेव भेदः। न तर्हि हेतुभ्यो भावस्याविकलात्मलाभः, भेदाख्यस्य रूपस्य प्रतियोग्यपेक्षत्वात्। हेत्वन्तराच्च प्रतियोगिनः सम्पद्यमानः पश्चाद् भेदो न स्वभावः स्यात्।**

---

च स्वव्यवस्थितयेऽन्यापेक्षणादेव भेदस्यानेकाश्रयत्वं व्यवह्रियते, न त्वेकस्यैव सतोऽनेकत्र वर्तमानत्वादिति बोध्यम्। निष्कर्षमाह भेदवादी – **तथा चेति**। तथा च प्रतिवस्तु – भिन्ना भिन्ना एव भेदाः स्वप्रतियोगिनमपेक्ष्यानेकाश्रिता इति व्यवह्रियमाणास्तत्तद्वस्तूनामात्मभूताः = स्वरूपभूताः सन्तस्तानि सर्वाणि वस्तून्यपि परस्परं भेदयन्तीति सुतरां सिद्धो भेदवाद इति पूर्वपक्षाशयः।

इत्थमुपस्थापितां पूर्वपक्षाशङ्कां समाधातुमाह सिद्धान्ती– **तत्रोच्यत इति**। ''पौरुषेयीमपेक्षां च न हि वस्त्वनुवर्तते'' **इति**। अयमभिप्रायः – अपेक्षा हि पुरुषधर्मः। पुरुष एव हि एकमर्थं मृत्पिण्डादिकं गृहीत्वा घटादिकार्यार्थं परं साधनं दण्डचक्रादिकमपेक्षते, जडास्तु भावाः किं प्रयोजनमपेक्ष्य परमपेक्षेरन्? ते तु स्वहेतुभ्य एव लब्धनिजपूर्णस्वरूपा भवन्ति। तथा च प्रकृतो भेदोऽपि स्वहेतुनैव प्रतिवस्तु लब्धस्थितिर्न स्वव्यवस्थितये परमपेक्षत इति नानेकाश्रयत्वं भेदस्येति सिद्धम्।

'' किमर्थाऽपेक्षा ? '' इति प्रश्नस्योत्तरं प्रस्तौति पूर्वपक्षी – **ननु स्वभावस्थितये इति**। स्वोत्तरमेव विशदयति – **नानेति**। भावानां स्वभावा नानाविधा भवन्ति। तेषु केचन भावाः स्वस्थितये भावान्तरं नापेक्षन्ते, यथा स्वहेतुभ्यो

**स्यादेतत् —अविकलरूप एव भावो हेतुभ्यो जायते। तत्र भेदाख्यं रूपं प्रतियोग्यपेक्षम्, नानपेक्षं कदाचिदिति तस्य तद्विधत्वात् तेन तद्विधेनैव सह जायत इति न विकलरूपप्रादुर्भावः।**

---

जायमानः शुक्लो घटः स्वशुक्लस्वभावार्थं पटादिभावान्तरं नापेक्षते। किन्तु कश्चित्तु भावः स्वस्वरूपव्यवस्थितये भावान्तरपेक्षत एव, यथाऽयमेव भेदात्मको भावः वस्तुतत्त्वे स्वस्वरूपे व्यवस्थितये प्रतियोगिनमपेक्षत एव, प्रतियोगिनं विना भेदस्वरूपस्यैव अव्यवस्थानादिति भावः।

भेदे प्रतिपक्षिणा उपपादितां प्रतियोग्यपेक्षां निराकरोति सिद्धान्ती – **न तर्हि हेतुभ्य इति**। एवन्तर्हि स्वहेतुभ्यो भावस्य अविकलात्मलाभः = सम्पूर्णनिजस्वरूपलाभो नियमेन न भवतीत्यायातम्। यथाऽयं भेद एव स्वस्वरूपलाभाय प्रतियोगिनमपेक्षते। अतः पूर्वं स्वहेतुभ्यो जाते घटे पश्चाद् हेत्वन्तरं प्रतियोगिनमपेक्ष्य सम्पद्यमानो= जायमानो भेदो न तस्य घटस्य स्वभावः स्यात्। स्वभावस्तु भावेन सहैव जायते सहैव नश्यति। न हि अग्नेरौष्ण्यम् अग्न्युत्पत्तेः पश्चादुत्पद्यते। एतदेवोक्तम्– "हेत्वन्तराच्च" इत्यदिना। तस्माद् "भेदो वस्तुनो रूपम्" इति मतं निःसारमिति मन्तव्यम्।

ननु भावाः सर्वे विचित्रस्वभावा भवन्ति। अतः कोऽपि भावः स्वीयैः सर्वैः स्वभावैरविकल एव परिपूर्ण एव स्वहेतुभ्यो जायते, न तु केनापि स्वभावेन हीनो जायते। तेष्वेव स्वभावेषु मध्ये भेदाख्यः स्वभावो = भेदाख्यं रूपं प्रतियोगिसापेक्षमेव भवति न तन्निरपेक्षं कदाचिदपि। अतो भेदाख्यस्वभावस्य तद्विधत्वात्= प्रतियोगिसापेक्षरूपत्वात् कोऽपि भावो जायमानस्तेन स्वीयेन भेदाख्येन रूपेण प्रतियोगिसापेक्षेणैव सहितो जायते न तद्रहितः। किमत्र कुर्मः? स्वभावस्य दुरतिक्रमत्वात्। तस्मान्न कश्चिद् भावः स्वीयेन केनापि स्वभावेन विकलः प्रादुर्भवति। अतो यदुक्तं सिद्धान्तिना – भावोत्पत्तेः पश्चात् सम्पद्यमानो भेदो न भावस्य स्वरूपं स्यादिति, तन्निमूर्लम्। एतदेवाशङ्कितम्– **स्यादित्यादिना न विकलरूपप्रादुर्भावः** इत्यन्तेन ग्रन्थेन पूर्वपक्षिणा।

**अन्या व्याख्या – न भेदो वस्तुनो रूपम्, आपेक्षिको हि स प्रतीयते। न चापेक्षां पुरुषप्रत्ययं वस्त्वनुवर्तते, व्यवस्थितवस्तुपूर्वकत्वादिति।**

**कथं तर्हि पित्रादयः? न हि तेऽपेक्षया विना। न च खपुष्पगन्धर्वनगरादितुल्याः, अविसंवादिव्यवहाराङ्गतया लोकसिद्धत्वात्। उच्यते– भेदोऽप्येवं किं न लोकसिद्धः?**

---

प्रतियोगिप्रतीतिश्च भेदप्रतीत्यधीना इति स्फुटोऽन्योन्याश्रयदोषः। इदमत्र रहस्यम्– भेदस्यैव कश्चित् प्रतियोगी भवति कश्चिदनुयोगी वा भवति। यस्याभावः स प्रतियोगी यस्मिन्नभावः सोऽनुयोगीति नियमात्। तथा च भेदे प्रतीते सत्येव तस्य प्रतियोगी प्रत्येतुं शक्य इति प्रतियोगिप्रतीतिर्भेदप्रतीत्यधीना, भेदप्रतीतिश्च प्रतियोगिप्रतीत्यायत्ता इति भवानेवाह। एवञ्च भेदप्रतीतिप्रतियोगिप्रतीत्योः परस्पराश्रयत्वदोषः स्फुट एव। एतदेवोपपादयति – **न च वस्तुमात्रादिति**। यस्मिन् पटादिवस्तुनि प्रतियोगिनि सम्बद्धतया भेदो नावगृहीतस्तस्माद् वस्तुमात्रात् पटाद् भेदो न सेत्स्यति, तथा सति अगृहीतभेदे तस्मिन्नेव तदभेदसिद्धिः प्रसज्येत, तस्मात् सुष्ठूक्तम्– **"पौरुषेयीमपेक्षां च न हि वस्त्वनुवर्तते"** इति। अतो भेदो न वस्तुस्वभाव इत्यव्याहतः सिद्धान्तः।

पौरुषेयीमपेक्षां चेति श्लोकार्धस्यान्यां व्याख्यामुपस्थापयति– **अन्येति**। व्याख्यामेवाह– **न भेद इति**। अयमर्थः– भेदो वस्तुनो रूपं नास्ति। यतो हि सर्वत्र वस्तुमात्रमेव निरपेक्षं भासते। भेदस्तु प्रतीयमान आपेक्षिकः = प्रतियोगिवस्त्वपेक्षयैव प्रतीयते न निरपेक्षम्। आपेक्षिकत्वेन किमायातमित्याह – **न चापेक्षामिति**। अयं भावः – अपेक्षा हि पुरुषप्रत्ययः, न हि वस्तुव्यवस्था पुरुषप्रतीतिमनुसरति यथा पुरुषप्रतीतिस्तथा वस्तु भवेदिति। प्रत्युत पुरुषप्रतीत्यैव व्यवस्थितवस्त्वनुसारिण्या भवितव्यम्। अन्यथाप्रतीतिस्तु निर्विषया भ्रान्तिरेव स्यात्।

शङ्कते– **कथमिति**। अयमत्र शङ्कितुराशयः– ननु यदि वस्तुनः स्वरूपं वस्त्वन्तरसापेक्षं न भवति, तदा पितृत्वमातृत्वादयः कथं वस्तुनो रूपं भवन्ति? न हि पितृत्वादयः पुत्राद्यपेक्षां विना भवन्ति। अतो यथा पितृत्वादयः पुत्रादि-

**अपि च— पित्रादिविषयेऽपेक्षा जननादिप्रभाविता ॥ ६ ॥**
**एकक्रियाविशेषेण व्यपेक्षा ह्रस्वदीर्घयोः ।**
**व्यवस्थिते एव जन्यजनकशक्ती पितृपुत्रशब्दयोरभिधेये । ते तु**

---

सापेक्षाः सन्तोऽपि वस्तुनो रूपं भवन्ति, तथा प्रतियोगिसापेक्षोऽपि भेदो वस्तुनो रूपं भवितुमर्हति । न च पितृत्वमातृत्वादयो धर्मा न वस्तुनः स्वरूपं किन्तु गगनकुसुमगन्धर्वनगरशशशृङ्गादितुल्यास्तुच्छा एवेति वाच्यम्, अविसंवादिनः सफल-व्यवहारस्याङ्गभूततया लोके प्रसिद्धत्वात् । अत्रोत्तरमाह — **उच्यत इति**। तर्हि अविसंवादिव्यवहाराङ्गतया पितृत्वादयो यथा लोकसिद्धा मन्यन्ते , तथा भेदोऽपि लोकसिद्ध एवेति किमिति न मन्यते? अर्थात् पुत्राद्यापेक्षिकपितृत्वादिवत् प्रतियोग्यापेक्षिकभेदोऽपि लोकसिद्धो लौकिक एव मन्तव्यो न तु वस्तुनः पारमार्थिकं स्वरूपमित्येवं स्वीकारे न सिद्धान्तिनो वैमत्यमित्यभिप्रायः ।

पूर्वं पितृत्वादौ भेदे च समानरूपेणापेक्षिकत्वं लोकसिद्धत्वं चाभ्युपगतं पारमार्थिकत्वन्तूभयत्रापि अस्वीकृतम् । इदानीमापेक्षिकत्वमपि नास्ति उभयत्र समानमित्याह सिद्धान्ती — **अपि चेति** । अयमत्र श्लोकार्थः — इमौ पितरौ इत्यादि — लौकिके व्यवहारे या पुत्राद्यपेक्षा, सा जननादिनिमित्तेन भवति । तथा "अयं ह्रस्व" इति व्यवहारे यां दीर्घपेक्षा, या च "अयं दीर्घ" इति व्यवहारे ह्रस्वापेक्षा भवति, साऽपि एकक्रियाविशेषेण निमित्तेन भवति ।एकश्चासौ एकक्रियाविशेषः । स चैकः क्रियाविशेषो देशव्याप्तिरूपो यस्य न्यूनो भवति, स "ह्रस्व" इति व्यवह्रियते , यस्य चाधिको भवति देशव्याप्तिरूपः क्रियाविशेषः स "दीर्घ" इति व्यवह्रियते । भेदे तु नास्ति किञ्चित् **तादृशमपेक्षानिमित्तमिति** । अतो न पितृत्वादिना समानमापेक्षिकत्वं भेदस्येति न पितृत्वादिदृष्टान्तेन वस्तुनो रूपं भवितुं युक्तमित्यर्थः ।

पितृत्वपुत्रत्वादौ मिथो अनपेक्षामुपपादयति — **व्यवस्थित एवेति** । जन्यशक्तिः पुत्रशब्दस्य वाच्यत्वेन व्यवस्थिता, जनकशक्तिश्च पितृशब्दस्य वाच्यत्वेन व्यवस्थिता । जन्यशक्तिः पुत्रशब्दार्थः, जनकशक्तिः पितृशब्दार्थ इति यावत् ।

**समानजननव्यापारविषये तावास्कन्दतः, स्वभावभेदात्। अतो येन समानत्वम्, तत्रापेक्षा।**

**एतदुक्तं भवति– शब्दार्थस्तत्र सापेक्षः, न वस्तु। अपेक्षाहेतुश्च**

---

इमे हि पितृपुत्रशब्दयोर्वाच्यभूते जन्यजनकशक्ती स्वभावतो व्यवस्थिते = औत्पत्तिके अर्थाद् अन्योन्यनैरपेक्ष्येण स्थिते भवतः । न तु पितुर्जनकशक्तिः पुत्रोत्पत्त्यनन्तरं पुत्रापेक्षमाविर्भवति, न वा पुत्रात्मकजीवे जन्यशक्तिः पितृरूपजीवस्य स्थित्युत्तरमेव पितृसापेक्षमाविर्भवति ।भूतसूक्ष्मसहिता लिङ्गशरीरोपेतस्य शुक्रशोणितानुयायिनो जीवस्य जन्यशक्तिः, तथा षोडशवर्षीयस्थूलशरीरोपेतस्य जीवस्य जनकशक्तिः स्वाभाविकी[1] । न तु परस्परसापेक्षे ते शक्ती इति रहस्यम् ।

ननु जन्यजनकशक्ती स्वाभाविकतया यदि परस्परनिरपेक्षे स्तस्तदा कथं तद्वाचकौ पितृपुत्रशब्दौ परस्परापेक्षितया लोके व्यवह्रियेते ? लोके हि पितृशब्दवाच्यं पितरमपेक्ष्य पुत्रशब्दो व्यवह्रियते पुत्रशब्दवाच्यमपेक्ष्य च पितृशब्दो व्यवह्रियते इति शङ्कायाम् आह – **ते त्विति**। अयं भावः – ते जन्यजनकशक्ती यदा समानजननक्रियाविषयिण्यौ भवतः, तदा ते पितृपुत्रशब्दौ स्वस्ववाचकत्वेन आस्कन्दतः = विषयीकुरुतः । अर्थाद् जन्यशक्तिः पुत्रशब्देन व्यवह्रियते जनकशक्तिश्च पितृशब्देन व्यवह्रियत इति। अत एव भिन्नजनिक्रियासम्बद्धयोः रामवसुदेवयोर्न मिथः पुत्रपितृशब्दव्यवहारः ।

कथमिति जिज्ञासायामाह – **स्वभावभेदादिति**। पितृपुत्रशब्दयोरीदृश एव स्वभावो यत् समानजनिक्रियायां सत्यामेव प्रवर्तेते नान्यथेत्यर्थः । फलितार्थमाह– **अत इति**। अर्थाद् यस्य व्यापारो येन समानो भवति, तस्य समानव्यापारवति तस्मिन् अपेक्षाऽस्तीति । जननरूपसमानक्रियावशात् पितृशब्दार्थः पुत्रे सापेक्षो भवति, पुत्रशब्दार्थश्च पितरि सापेक्षो भवति ।जन्यजनकशक्ती तु वस्तुनी परस्परं निरपेक्षे स्वतन्त्र एवेति विवेचितमधस्तात् ।

एतदेव निष्कर्षेण स्फुटीकरोति – **एतदुक्तं भवतीत्यादिना**।पितृपुत्रशब्दार्थयोः परस्परं सापेक्षत्वे तु हेतुरस्ति साधारणी जनिक्रिया, जन्यजनकशक्ती वस्तुनी

---

१. द्रष्टव्या - अभिप्रायप्रकाशिका व्याख्या ।

**तत्र साधारणी क्रिया विद्यते व्यवस्थितयोरपि वस्तुनोः। भावभेदे त्वयं वस्तुतत्त्वगतो विचारः, न चापेक्षाहेतुः कश्चिदुपलभ्यते। ह्रस्वदीर्घयोरप्येकजातीयायां क्रियायां देशव्याप्तौ न्यूनाधिकभावादेवं द्रष्टव्यम्।**

**यदि तर्हि कार्यभेदादप्यपेक्षा, हन्त? अर्थक्रियाभेदादेव भावानां परस्परापेक्षो भेदः सेत्स्यति। किञ्च असत्यामपि दर्शनाद् भेदसिद्धौ विधि-**

---

तु व्यवस्थिते एव नितराम् , अतो न तयोः परस्परापेक्षेति भावः।

पितृपुत्राभ्यां भावभेदे वैषम्यमाह – **भावभेदे त्विति**। अयमर्थः – भावानां परस्परं भेदो वस्तुभूतो (वास्तविकः) अवास्तिको वा? वस्तुभूतोऽपि स भावानां स्वरूपमतिरिक्तो वेति वस्तुतत्त्वगत एव विचारः प्रवृत्तोऽस्ति, न तु पित्रादिशब्दवत् भेदशब्दस्य को वाच्यार्थ इति शब्दगतो विचारः प्रवृत्तोऽस्ति । तत्र भेदवस्तुवादी भेदं प्रतियोगिसापेक्षं मन्यते। किन्तु भेदस्य प्रतियोगिसापेक्षत्वे न कश्चिद्धेतुरुपलभ्यते, यथा पितृशब्दार्थस्य पुत्रशब्दार्थापेक्षित्वे जननरूपसमानव्यापारो हेतुर्भवति। तथा चोक्तमनुपदमेव – **येन समानत्वं तत्रापेक्षेति**।

ह्रस्वदीर्घयोरपि परस्परापेक्षित्वे देशव्यापितारूपा एकजातीया क्रियाऽस्ति साधारणी, यस्या न्यूनत्वे ह्रस्वव्यवहारोऽधिकत्वे च दीर्घव्यवहारो भवति। अर्थाद् यद्वस्तु न्यूनदेशव्याप्तं भवति तद् ह्रस्वमित्युच्यते, यच्चाधिकदेशव्याप्तं भवति तद् दीर्घमिति व्यवह्रियते लोके। अतस्तयोः पितृपुत्रवत् परस्परापेक्षित्वं युक्तमिति भावः ।

भेदवादी शङ्कते – **यदि तर्हीति**। यदि जननरूपैककार्यविशेषात् पितृत्वादेः पुत्राद्यपेक्षित्वं तदा कार्यभेदोऽपेक्षाहेतुरित्यायातम् । एवं सति जलाहरणादिकार्यभेदादेव घटपटादेः परस्परं भेदोऽपि सेत्स्यति, भेदश्च सिध्यन् नूनं प्रतियोगितया पटम् अनुयोगितया च घटमपेक्षिष्यते, प्रतियोग्यनुयोगिनौ विना भेदानुपपत्तेः। तथा प्रतियोगित्वानुयोगित्वे अपि स्वनिरूपकतया भेदमपेक्षिष्येते। तस्मादर्थक्रियाभेदादेव भावानां परस्परापेक्षो भेदः सिद्ध इति पूर्वपक्षिणोऽभिप्रायः ।

**मात्रव्यापारत्वात् कार्यभेदादेव कारणभेदमनुमिमीहे, नैकत्वे कार्यभेदः कल्पते, कारणस्वभावापेक्षत्वात् कार्यभेदस्य। तज्जननं चेदस्य स्वभावः, नान्यजननः। तस्मात् कार्यान्तरस्यान्यतो जन्मेति। तददिं भेदेनैव भेदप्रसाधनं नातिचतुरस्रम्।**

---

यद्यपि अर्थक्रियाभेदाद् घटपटयोः सिध्यन् भेदो न दर्शनात् = प्रत्यक्षप्रमाणात् सिध्यति, यतो हि प्रत्यक्षप्रमाणं वस्तुबोधनरूपं विधिमात्रव्यापारो यस्य तादृशत्वाद् भेदबोधकं न भवितुमर्हति। तथापि कार्यभेदहेतुना कारणभेदस्यानुमानं कर्तुं शक्यत एव अर्थाद् भेदसिद्धौ प्रत्यक्षप्रमाणासम्भवेऽपि कार्यभेदहेतुकमनुमानमेव प्रमाणं भविष्यतीति। एतभिप्रायेणोक्तम् – **किञ्चेत्यादि**। "विधिमात्रव्यापारत्वाद् दर्शनाद् (प्रत्यक्षप्रमाणाद्) भेदसिद्धावसत्यामपि" इत्यन्वयः।

विपक्षे बाधकमाह पूर्वपक्षी – **नैकत्वे इति**। यत्र कार्यभेदस्तत्रावश्यं कारणभेदः, कारणैकत्वे तु नैव कार्यभेदः सम्भवीत्यर्थः। अत्रोपपत्तिमाह – **कारणस्वभावेति**। सर्वो हि कार्यभेदः कार्यविशेषः कारणविशेषस्वभावमपेक्षते। अर्थात् कारणस्य यादृशः स्वभावस्तदनुसारेणैव कार्यविशेषो जायते न तत्स्वभावविपरीतः। तस्यैव कार्यविशेषस्य जननं यदि कारणस्य स्वभावस्तदाऽन्यकार्यं जनयितुं न क्षमं तत्कारणम्। न हि दधिजननस्वभावात् क्षीरात् तैलं जायते, तैलजननस्वभावात्तिलाद् वा दधि जायते। अत एव क्षीरतिलौ परस्परं भिन्नौ भवतः। तस्मात् कार्यान्तरस्य जननं कस्माच्चिदन्यस्मादेव कारणाद् भविष्यतीति कार्यभेदात् कारणभेदोऽनुमानात् सिद्ध इति पूर्वपक्षाशयः।

पूर्वपक्षममुं सिद्धान्ती दूषयति – **तददिमिति**। एवं वदता पूर्वपक्षिणा भेदेनैव भेदप्रसाधनं क्रियते। अयं भावः – कारणभेदं प्रसाधयता पूर्वपक्षिणा पूर्वमसिद्धः कारणभेद इदानीं कार्यभेदेन हेतुना प्रसाध्यते, तच्चायुक्तम्। अभेदवादिनः कृते यथा कारणभेदोऽसिद्धस्तथा तद्गमको हेतुः कार्यभेदोऽप्यसिद्ध एवास्ति। तथा चासिद्धेन हेतुना असिद्धस्य साध्यस्य साधनं कथङ्कारं भवेत्? तथा च नेयं युक्तिः शोभना भेदसाधने इति सिद्धान्तिनोऽभिप्रायः।

**अपि च— अर्थक्रियाकृते भेदे रूपभेदो न लभ्यते।**

**दाहपाकविभागेन कृशानुर्न हि भेदवान् ॥७॥**

**नार्थक्रियाभेदाद् भावानां परस्परापेक्षो रूपभेदः प्रतीयते। नाप्यनुमातुं शक्यते, व्यपदेशभेदमात्रं तु स्यात्, एकस्मिन्नपि वह्नौ दाहपाकादिकार्यभेददृष्टेः।**

**अथ मतम्— रूपादिसमूहो वह्निः। तत्र रूपात् प्रकाशः, स्पर्शाद्**

---

"नैकत्वे कार्यभेदः कल्पते" इति यदुक्तं पूर्वपक्षिणा तदपि नोपपद्यते, कारणैकत्वेऽपि कार्यभेदस्य दर्शनादित्याह— **अपि चेति**। अयमर्थः कारिकायाः— जलाहरणदेहप्रावरणरूपार्थक्रियाभेदाद् घटपटस्वरूपयोर्भेदेऽनुभूयमानेऽपि नायं नियमः सार्वत्रिकः, व्यभिचारदर्शनात्। एतदेवोक्तम् "अर्थक्रियाकृते भेदे रूपभेदो न लभ्यते" इति श्लोकार्धेन। व्यभिचारमेव दर्शयति— **दाहपाकविभागेनेति**। अर्थाद् अभिन्नेन एकेनैवाग्निना कारणेन दाहपाकरूपकार्यभेदो दृश्यते। तस्माद् एकत्वे = कारणैकत्वे कार्यभेदो नावकल्पत इत्यनुपपन्नमिति।

उक्तमेव पुनः स्पष्टीकरोति— **नार्थक्रियेति**। अर्थाद् अर्थक्रियाभेदाद् भावानां परस्परापेक्षो रूपभेदो न प्रत्यक्षेण प्रमाणेन प्रतीयते, दाहपाकरूपक्रिया-भेदवत्यपि वह्नौ स्वरूपभेदादर्शनात्। ननु यद्यस्ति कार्यभेदस्तदा कार्यभेदहेतुनैव वाह्निभेदोऽनुमास्यत इति शङ्कां परिहरति— **नाप्यनुमातुमिति**। यद्यपि कार्यभेदा-नुसारेण 'दाहकोऽग्निः, पाचकोऽग्निः' इति भेदवानिव वह्निर्व्यवह्रियते, तथापि न वस्तुतो वह्निर्भिद्यते, व्यपदेशमात्रस्य भेदो दाहकः पाचक इति। यतो ह्येकोऽपि वह्निः काष्ठं दहति तण्डुलं च पचतीति कार्यभेदो दृश्यते लोके।

पूर्वपक्षी शङ्कते— **अथेति**। अयं भावः— वह्निरिति नैकं तत्त्वम्, किन्तर्हि? रूपस्पर्शादिसमूहो वह्निः। तथा च वह्निघटकाद् रूपात् प्रकाशः, तद्घटकात्

**दाह इति। कामम्, दाहपाकौ तु स्पर्शादेव। तौ च लोके प्रतीतभेदौ सत्यपि संयोगिद्रव्यविक्रियासामान्ये। कर्म चैकं संयोगविभागसंस्काराणां हेतुः,**

---

स्पर्शाद् दाह इति कारणभेदादेव कार्यभेदः। तथा च कार्यभेदात् कारणभेदानुमानं निष्प्रत्यूहमिति पूर्वपक्षाशयः।

सिद्धान्ती उत्तरयति– **काममिति**। कामं प्रकाशकार्यं प्रति रूपं कारणं दाहकार्यं च प्रति स्पर्शः कारणमिति कार्यभेदः कारणभेदमनुगच्छति, तथापि दाहपाककार्यद्वयं तु एकस्मादेव स्पर्शरूपकारणाद् भवतीति तत्रैव कार्यभेदलिङ्गकं कारणभेदानुमानं व्यभिचरितमिति भावः।

ननु दाहपाकौ न कार्यद्वयं किन्तु एकमेव कार्यम् अग्निसंयोगिद्रव्यविक्रियासामान्यात्मकम्। दाहो नामाग्निसंयुक्तकाष्ठद्रव्यविक्रियारूपः, पाकोऽपि चाग्निसंयुक्ततण्डुलादिद्रव्यविक्रियारूपः। तथा च विक्रियात्वसामान्यस्य उभयत्र एकत्वात् तत्र कार्यभेदो नास्तीति स्पर्शरूपकारणैकत्वेऽपि नोक्तानुमाने व्यभिचार इति शङ्कायामाह– **तौ चेति**। अयमत्र समाधानाशयः– यद्यपि दाहपाकयोरग्निसंयोगिद्रव्यविक्रियात्वसामान्यमेकमेवास्ति तथापि तयोर्लोके प्रसिद्धोऽवान्तरभेदो नापलपितुं शक्यः, एकत्र काष्ठादौ अग्निसंयोगाद् भस्मीभावरूपकार्यविशेषस्य अन्यत्र च तण्डुलादौ विक्लित्तिरूपविशेषकार्यस्य च दर्शनेनावान्तरभेदस्य स्फुटोपलम्भात्। अत उक्तानुमाने व्यभिचारदोषस्तदवस्थ एवेति भावः।

कार्यभेदेऽपि कारणैकत्वे उदाहरणान्तराण्याह– **कर्म चेत्यादि**। एकयैव इषोर्गतिक्रिययाऽसमवायिकारणभूतया इषोः पूर्वदेशाद् विभाग उत्तरदेशेन सह संयोगः, तथा बाणे वेगाख्यसंस्कारोत्पत्तिश्चेति कार्यत्रयं निष्पद्यते। एक एवात्मा इच्छादिविशेषगुणानां समवायिकारणं भवतीति काणादाभ्युपगमः। एवं सांख्ये सत्त्वरजस्तमोगुणाः प्रत्येकमभिन्ना एव क्रमशो लाघवप्रकाशसुखानां चलनोपष्टम्भन-(उत्तेजन)दुःखानां तथा गौरवावरणमोहानां कारणानि भवन्ति। अर्थात् लाघवादिकार्याणि भिद्यन्ते, सत्त्वन्तु कारणं न भिद्यते, चलनादिकार्याणि भिद्यन्ते,

**आत्मा चेच्छादीनाम्, सत्त्वादयश्च प्रत्येकमभेदाल्लाघवप्रकाशादीनाम्, रूपादयो ज्ञानविशेषाणां सजातीयक्षणानां चेत्युत्प्रेक्षितव्यम् ।**

**ननु नार्थक्रियाभेदमात्राद् भेदं ब्रूमः, अपि तु तत्रासम्भाविन्या अदृष्टायाः । यथा चक्षुषि सत्यप्यदृष्टायाश्च बधिरे तत्रासम्भाविन्याः शब्दबुद्धेरिन्द्रियभेदः । परस्परासम्भविकार्याश्च प्रायेण भावाः, अन्यकार्यस्यान्यत्रादर्शनात् ।**

---

रजस्तु कारणं न भिद्यते, तथा गौरवादिकार्याणि भिद्यन्ते, तमस्तु कारणं न भिद्यत इति ।

बौद्धसम्मतमपि कारणैकत्वेऽपि कार्यभेदोदाहरणमाह – **रूपादय इति** । अर्थाद् बौद्धमते रूपरसादयः प्रत्येकं स्वस्वगोचराणां ज्ञानानां स्वस्वसजातीयोत्तरक्षणानां च कारणानि भवन्ति । तद्यथा रूपमेकमेव स्वविषयकज्ञानस्यालम्बनप्रत्ययः (निमित्तकारणम्) तथा स्वोत्तरक्षणस्योपादानकारणं भवति, एक एव रसः स्वविषयकज्ञानस्यालम्बनकारणं सजातीयस्य स्वोत्तरक्षणस्य चोपादानकारणं भवति ।

इत्थं हि सर्वदार्शनिकदृष्ट्या कार्यभेदलिङ्गकं कारणभेदानुमानं व्यभिचारदोषग्रस्तम् इति बोद्धव्यम् । एवमन्यान्यपि व्यभिचारस्थलोदाहरणानि स्वयमूहनीयानीति प्रकृतमूलग्रन्थाशयः ।

पुनरत्र परः शङ्कते – **नन्विति** । अयमभिप्रायः – सामान्यतोऽर्थक्रियाभेदमात्राद् भावानां भेद इति न वयं ब्रूमः, किन्तु यस्माद् यस्य भेदस्तत्रासम्भवा या काचिददृष्टाऽर्थक्रिया, तस्या अर्थक्रियाया भेदादेव तस्माद् अन्यत्र भेदं ब्रूमः । असम्भवित्वं चादृष्टत्वादेव गम्यते । यदि साऽर्थक्रिया तत्र सम्भवेत् तदा दृश्येत, न दृश्यतेऽत एवासम्भवा साऽर्थक्रिया । तस्या एवादृष्टाया अर्थक्रियाया भेदात् तद्वस्तुनोर्भेदः ।

**अथ कार्यासम्भवः कथं प्रत्येतव्यः ? ननूक्तं तत्रादर्शनात्, न तर्ह्यसम्भवः। यस्य खल्वद्वयं जगत्, तस्य कार्यजातमेकत्रैव दृश्यत इति कथमदर्शनम् ? तत्र सिद्धे भेदे तत्रादर्शनम्, तत्रादर्शनाच्च भेदसिद्धिरितीतरेतराश्रयान्न भेदानुमानम्।**

**अथ मतम् – अदृष्टस्य दर्शनादिति, तदसत्, एकस्मादपि क्रमवतां कार्याणां दर्शनात्।**

---

अत्रैव दृष्टान्तमुपन्यस्यति – **यथा चक्षुषीति**। यथा बधिरे चक्षुरिन्द्रिये सत्यपि शब्दज्ञानं न कदाचिद् दृश्यते, अतो बधिरे शब्दबुद्धिः सर्वथाऽसम्भविनी। अतः कल्प्यते चक्षुषः श्रोत्रं भिन्नमिन्द्रियमित्यर्थः।

अन्येष्वपि भावेषु एतन्निमित्तक एव भेदः सिध्यतीत्याह – **परस्परेति**। प्रायः सर्वेषामेव भावानां परस्परासम्भवीनि कार्याणि भवन्ति, यतो नान्यस्य कार्यमन्यत्र दृश्यते कदाचित्। यद्यपि शरस्य कार्यं विशरणं शृङ्गेऽपि दृश्यते तथापि तयोरपि परस्परासम्भवीनि बहूनि कार्यान्तराणि सन्ति, यद्वशात्तयोर्भेदः सिध्यति। एतदभिप्रेत्य मूले "प्रायेण" इत्युक्तम्।

मध्ये सिद्धान्ती पृच्छति – **अथेति**। अन्यकार्यमन्यत्र न सम्भवतीति कथं प्रतीयताम्? परः कथयति – **नन्विति**। पूर्वमेव मयोक्तम्, तत्रादर्शनादिति। अन्यकार्यमन्यत्र न दृश्यतेऽत एव तथा प्रतीयत इति। परकृतामिमामाशङ्कां सिद्धान्ती निराकरोति – **नेति**। अन्यकार्यस्यान्यत्रासम्भव इति नास्ति। यतो हि यस्याद्वैतवादिनः सर्वमेव जगद् अद्वयब्रह्मात्मकं तस्याद्वैतिनः कार्यमात्रमेकस्मिन्नेव ब्रह्मणि दृश्यत इति नान्यकार्यस्यान्यत्रादर्शनमस्ति। तत्र यदि भेदो जगति सिद्धो भवेत् तदाऽन्यकार्यमन्यत्र न दृश्यत इति वक्तुं युज्येत, स एव त्वद्याप्यसिद्धः। यद्युच्येत – अन्यकार्यादर्शनाद् भेद इति, तदा स्फुटोऽत्रान्योन्याश्रयो दोषः, भेदे सति अन्यकार्यादर्शनम् अन्यकार्यादर्शने च सति भेद इति। तस्माद् दृष्टकार्यभेदादिव अदृष्टकार्यभेदादपि न भावभेदानुमानं सम्भवतीत्यर्थः।

**स्यादेतत्— एकान्ततोऽभेदे कार्यदर्शनादर्शने न युक्ते, विशेषाभावात्। न तर्हि कार्यभेदोऽभेदमपबाधते, तदनुपमर्देन विशेषमात्रानुमानं स्यात्। तच्च कल्पनाविषयं नैवावजानीमहे, वस्तुसतस्तस्यायोगात्, तत्त्वान्यत्वयोरसम्भवात्।**

---

शङ्कते – **अथ मतमिति। अदृष्टस्य दर्शनादिति।** अयमर्थः – पटे यथावद् विद्यमानेऽपि पटकाल एव पूर्वं घटकार्यं न दृश्यते , पश्चात्तु दृश्यते । पटकार्यं तु पटे सततमेव दृश्यते पूर्वमपि पश्चादपि । इत्थञ्च पूर्वमदृष्टस्य घटकार्यस्य पश्चाद् दर्शनात् प्रतीयते यत् पटाद् घटो भिन्न इति । यदि भिन्नो न स्यात् तदा पटकार्यमिव पश्चादिव पूर्वमपि घटकार्यं दृश्येतेति । अथवा चक्षुषि सत्यपि शब्दज्ञानरूपं कार्यं पूर्वमभवदपि पश्चाद् भवद् दृश्यते, तस्मात् शब्दज्ञानकारणं श्रोत्रं रूपज्ञानकारणात् चक्षुषो भिन्नं भवति । अतः कार्यदर्शनादर्शनाभ्यां वस्तुनो भेदः सेत्स्यतीति पूर्वपक्षाशयः।

शङ्कामिमां दूषयति – **तदसदिति।** उक्तः पूर्वपक्षो न सत् , एकस्मादपि कारणात् क्रमेण भाविनां नैककार्याणां दर्शनात्। यथा एकोऽपि पुरुषः क्रमेण स्नानपूजनभोजनाद्यनेककार्याणि सम्पादयति ।अथवा एकस्मिन्नपि वृक्षे कुसुमकाले फलं न दृश्यते पश्चात्तु दृश्यते, तावता तरुर्न भिद्यते ।तद्वद् एकस्मादपि पटात् पूर्वमदृष्टापि घटक्रिया पश्चाद् द्रक्ष्यते, न काप्यनुपपत्तिरिति नानया युक्त्या पट एव पटभेदो घटेऽपि वा घटभेदः साधयितुं शक्यत इति समाधातुराशयः।

शङ्कते – **स्यादेतदिति।** अयं भावः – ननु कालावस्थादिविशेषाद् उक्तस्थलेषु कार्यदर्शनादर्शने उपपत्स्येते । कालावस्थादिविशेषाभाव एकान्ततोऽभिन्ने वस्तुनि कार्यदर्शनादर्शनयोरनुपपत्तेः। अतोऽवस्थादिविशेषाद् वस्तुभेदः सेत्स्यतीति ।

शङ्कामिमां सिद्धान्ती निरस्यति – **न तर्हीति।** अयमभिप्रायः – यदि उक्तकार्य-दर्शनादर्शने प्रति कालावस्थादिविशेषः प्रयोजकोऽपेक्षितस्तदा लोकेऽनुभूयमानः कार्यभेदः स्वप्रयोजकत्वेन विशेषमात्रमनुमापयिष्यति न तु कारणवस्त्वभेदं बाधिष्यते ।अर्थात् कार्यभेदाद् वस्त्वभेदमनुपमर्द्य कालावस्थादिविशेषमात्रानुमानं भवेत् ।ननु अवस्थादिविशेषमात्रभेदाद् यदि कार्यभेदस्तदापि भेद एव सिद्धो नाभेदः।

**यस्तु क्षणिकवादी तत्त्वमेव विशेषस्य न मन्यते, तस्यासति कारणस्वभावाभेदे कथं तुल्यस्वभावकार्योत्पादः? अथ निरन्वयविनाशानामपि कल्पनाविषयादभेदात् कार्यस्य तुल्यता, हन्त! तर्हि भेदादेव कल्पनाविषयात् कार्यभेदसिद्धेर्मुधा कारणभेदकल्पना।**

---

तथापि चाद्वैतं न सिध्यतीति शङ्कायामाह – **तच्चेति**। विशेषभेदोऽपि स काल्पनिक एवास्माभिरभ्युपगम्यते न वास्तविकः। वस्तुभूतस्य विशेषभेदस्य अयोगाद् अनुपपन्नत्वादिति यावत्। कथमनुपपन्नत्वमिति प्रश्ने आह- **तत्त्वान्यत्वयोरसम्भवादिति**। तत्त्वं वस्तुस्वरूपाभिन्नत्वम्, अन्यत्वं वस्तुभिन्नत्वं तयोरसम्भवादित्यर्थः। अयं भावः – विशेषा यदि वस्तुभ्यो भिन्नास्तदा विशेषेभ्य एव कार्यभेदोपपत्तेर्वस्तूनि अर्थक्रियाकारित्वाभावेन अकिञ्चित्कराणि भवेयुस्तथा च तेषां वस्तुत्वमेव हीयेत। यदि तु विशेषा वस्तुभ्योऽभिन्नास्तदा विशेषाणां पृथग् अस्तित्वाभावेन काल्पनिकत्वमेवेत्यायातम्। तदुक्तं मूले– "तच्च कल्पनाविषयं नावजानीमहे" इति, प्रत्युत आद्रियामह एव, यतः कल्पना-विषयत्वं तेषां भूषणमेव न दूषणमिति यावत्।

अनुपदं स्थिरवस्तुवादिमतमाशङ्क्य परिहारो दर्शितः सिद्धान्तिना, अधुना क्षणिकवादिबौद्धमतमाशङ्क्य परिहर्तुमुद्यतते – **यस्त्विति**। अयमत्र बौद्धाभिप्रायः– विशेषो वस्तुनो भिन्नोऽभिन्नो वेति विचारे ते विशेषाणां तत्त्वमर्थात् सत्त्वद्रव्य-त्वाद्यात्मना भाववस्त्वभेदं भावसाजात्यमिति यावद् न मन्यन्ते, किन्तु विशेषा एवात्यन्तविलक्षणाः क्षणिकवस्तुपदेन व्यपदिश्यन्त इति मन्यन्ते। अतो विशेषा भाववस्त्वभिन्ना भिन्ना वेति प्रश्न एव तद्विषये नोदेतीति।

मतमिदं दूषयति – **तस्येति**। अयं भावः– सन्तु नाम विशेषा अत्यन्तविलक्षणा एव क्षणिकं वस्तु तथापि कारणानां यः स्वभावः स्वोत्तरक्षणेष्वनुवर्तते, यद्वशात् कारणसजातीयं कार्यमुत्पद्यते, तादृशस्वभावाभेदस्तु विशेषाणां स्वीकरणीय एव। अन्यथा तन्तुसन्ततेर्घट उत्पद्यताम्, मृत्सन्ततेश्च पट उत्पद्यताम्। तस्य विशेषस्य कारणस्वभावाभेदेऽसति कारणतुल्यस्वभावकार्योत्पादः कथं स्यादिति मूलार्थः।

**अथ न कार्याभेदेन कारणस्वभावाभेदोऽपेक्ष्येत, भिन्नस्वभावेभ्यः सहकारिभ्य एककार्योत्पत्तेः, यथा – चक्षुरादिभ्यो रूपादिज्ञानस्य। यथा तर्हि कार्यस्वभावाभेदाय न कारणस्वभावाभेदोऽपेक्ष्यते, तथा तद्भेदाय कारणभेदोऽपि नापेक्षितव्यः।**

---

पूर्वपक्षी शङ्कते – **अथेति**। निरन्वयो विनाशो येषां वादिनां ते निरन्वयविनाशा बौद्धा उच्यन्ते। बौद्धानां नये सर्वोऽपि ध्वंसो निरन्वयो भवति। क्षणिकवादिनां तेषां मते घटनाशे जाते घटगतो घटत्वधर्मो न घटान्तरेऽन्वेति, घटान्विता मृत्तिका च न तत्कपालादावन्विता भवति। अयमेव तेषां निरन्वयो विनाश इत्युच्यते।

तथा च निरन्वयविनाशवादिपक्षे न कारणगतः कश्चित् स्वभावः कार्यक्षणेष्वनुवर्तते। अस्यां स्थितौ कारणसजातीयकार्योत्पत्तये काल्पनिकात् स्वभावाभेदात् कार्यस्य कारणतुल्यता उपपादनीयेति। अत्र सिद्धान्ती उत्तरयति – **हन्त ! तर्हीति**। अयमभिप्रायः – काल्पनिकात् कारणस्वभावभेदात् कार्येषु कारण-सजातीयत्वं यद्युपपाद्यते तदा काल्पनिकाद् भेदादेव कारणगतात् कार्यभेद उपपादयितुं शक्यते। अतः कार्यभेदसिद्धये कारणगतस्य वास्तविकभेदस्य कल्पना मुधैव क्रियते भेदवादिभिरिति भावः।

पूर्वपक्षयति – **अथ नेति**। ननु कार्याभेदाय = सजातीयकार्योत्पादाय कारणतुल्य-स्वभावकार्योत्पादायेति यावत्, कारणस्वभावाभेदो नापेक्षितः, भिन्नस्वभावेभ्योऽपि सहकारिभ्य एककार्योत्पत्तिदर्शनात्। यथा, चक्षुः - विषय - समनन्तरप्रत्ययरूपेभ्यो विभिन्नकारणेभ्यो मिलित्वा रूपज्ञानस्यैककार्यस्योत्पत्तिर्दृश्यते। अतः कार्याभेदो न करणाभेदस्य गमक इति। अत्र पूर्वपक्षे सिद्धान्ती आह– **यथा तर्हीति**। एवन्तर्हि यथा कार्यस्वभावाभेदार्थं न कारणस्वभावाभेदोऽपेक्षितो भवति, तथैव कार्यभेदार्थं कारणभेदोऽपि नापेक्षितः स्यात्। तथा च निष्प्रत्यूहोऽभेदवाद इति भावः।

**अपि चानेककारणजन्येऽप्येकस्मिन् कार्ये कारणव्यापारविषयभेदस्तेनैव वर्णितः, यथा रूपज्ञानस्य – चक्षुषो रूपग्रहणनियमः, समनन्तरज्ञानादुपलम्भात्मता, विषयात् तदाकारतेति। यदि च कार्यतुल्यत्वं न हेतुसाम्यकृतम्, न कार्याद्धेत्वनुमानं स्यात्, भिन्नजातीयादपि तुल्यजातीयोत्पत्तिसम्भवात्।**

**हेत्वभेदश्चेन्न कार्याभेद उपयुज्यते, कस्तुल्यजातीयाद् विजातीयस्य जन्म निवारयेत्? तत्र यथा व्यावहारिकादभेदात् कार्याभेदः, तथा**

---

यच्चोक्तमव्यवहितपूर्वम् – चक्षुः – विषय = समनन्तरप्रत्ययरूपेभ्योऽनेककारणेभ्यो रूपज्ञानमेकमेव कार्यमुत्पद्यत इति, तदपि तस्यैव दृष्ट्याऽसिद्धम्। यतो हि चक्षुराद्यनेककारणजन्ये तस्मिन्नेव रूपज्ञानात्मके कार्येऽस्ति तावत् चक्षुरादिकारणव्यापारस्य विषयभेदः। यथा चक्षुषो रूपग्रहणनियमः चक्षू रूपमेव गृह्णातीति, समनन्तरज्ञानाज्जायमानतया रूपज्ञानस्योपलम्भात्मकत्वम्, विषयाद् रूपात् तज्ज्ञानस्य रूपाकारतेति एकस्मिन्नपि रूपज्ञानात्मककार्ये चक्षुरादिकारणानां त्रिविधो व्यापारविषय इति तत्रापि न कार्याभेदो बौद्धस्यैव मतेनेति भावः।

एवम्, यदि भिन्नेभ्योऽपि चक्षुर्विषयसमनन्तरप्रत्ययेभ्य एकस्य रूपज्ञानस्योत्पत्तेः कार्यतुल्यत्वं न हेतुसाम्यकृतम्, अर्थात् कार्याभेदो न कारणाभेदमपेक्षते, तदा न सजातीयात् कार्यात् सजातीयस्य कारणस्यानुमानं स्यात्, अर्थाद् बहिरुद्गतं ब्रीह्यङ्कुरं दृष्ट्वा भूम्यन्तर्हितस्य ब्रीहेरनुमानं धूमं दृष्ट्वा वह्निजातीयानुमानं वा न भवेत्। यतो हि भवद्रीत्या भिन्नजातीयाद् यवादपि ब्रीहितुल्यजातीयस्य ब्रीह्यङ्कुरस्योत्पत्तिसम्भवात्। वह्निविजातीयादपि धूमस्योत्पत्तिसम्भवाच्चेति। एतदभिप्रायेणोक्तम् – **यदि चेति**।

एतदेवोपपादयति – **हेत्वभेदश्चेति**। अर्थात् कार्याभेदाय हेत्वभेदो नापेक्षितश्चेत्, तदा तुल्यजातीयात् कारणात् तत्तुल्यजातीयस्योत्पत्तिस्थाने विजातीयस्योत्पत्तिं को निवारयिष्यति? तुल्यकारणाद् विजातीयस्याप्युत्पत्तिः सम्भवेदिति यावत्।

एतद्दोषपरिहारार्थं कार्याभेदाय यदि कारणस्य काल्पनिकाभेदोऽभ्युपगम्येत, तदा कार्यभेदाय कारणभेदोऽपि काल्पनिक एव भवताऽभ्युपगन्तव्य इति निष्कर्षमाह सिद्धान्ती – **तत्र यथेति**।

**व्यावहारिकाद् भेदात् कार्यभेद इति न विशेषः।**

**स्यादेतत् – कल्पितश्चेद् भेदः कार्यभेदाय प्रभुः, न तर्हि कल्पितः। न ह्यन्यत् परमार्थसतो लक्षणमर्थक्रियासामर्थ्यात्। तुल्यमिदमभेदेऽपि।**

**योऽपि मन्यते – युगपद् विरुद्धार्थक्रियादर्शनाद् भेदावगतिः। तथा हि – जननमरणवृद्धिक्षयस्थानगमनशोकहर्षादिविविधविरुद्धधर्मसमु-**

---

पूर्वपक्षी शङ्कते – **स्यादेतदिति**। अत्रेत्थं पूर्वपक्षे वाक्यार्थयोजना – कल्पितो भेदो यदि कार्यभेदाय प्रभुः(समर्थः) तदा न स कल्पितः स्यात्, अर्थक्रियासमर्थत्वात्। यो ह्यर्थक्रियासमर्थः स परमार्थसन्नेव भवति। न ह्यर्थक्रियासामर्थ्याद् अन्यत् किमपि परमार्थसतो लक्षणमस्ति । अर्थक्रियासामर्थ्यमेव सत्त्वमिति यावत्। कार्यभेदरूपार्थक्रियासमर्थश्चायं भेदः, तस्मात् परमार्थसन्नेव न कल्पित इति पूर्वपक्षाभिप्रायः।

सिद्धान्ती परिहरति – **तुल्यमिति**। अयं भावः – तुल्यजातीयाद् ब्रीह्यादेस्तुल्यजातीयस्याङ्कुरकार्यस्योत्पत्तेरुपपत्त्यर्थं विजातीयाङ्कुरोत्पत्तिनिवारणार्थं च कारणाभेदोऽपि परमार्थसन्नेवाभ्युपगन्तव्यो न तु कल्पितः, तुल्यजातीयकार्यरूपार्थक्रियाकारित्वादिति । "यत्रोभयोः समो दोषः परिहारोऽपि तादृशः। नैकः पर्यनुयोज्यः स्यात् तुल्यकार्यविचारणे"॥ इति न्यायाद् यदि तव भेदः परमार्थसन् तदा ममाभेदोऽपि परमार्थसन्नेव भविष्यति। किन्तु परस्परविरुद्धयोरेकत्रासम्भवात् पूर्वप्रदर्शितयुक्तिभिरभेदपक्ष एव ज्यायानिति सिद्धान्तिनो हृदयम्।

"अर्थक्रियाकृते भेदे रूपभेदो न लभ्यते" इति श्लोकार्थमेव योजयितुं पुनः शङ्कान्तरमुपन्यस्यति – **योऽपीति**।

अत्रायमाशङ्काभिप्रायः – कश्चिन्मन्यते यत् कामं नार्थक्रियाया भेदमात्राद् वस्तुषु भेदः सिध्येत्, किन्तु विरुद्धार्थक्रियाया भेदाद् भेदः सेत्स्यति । न ह्येकस्मिन्

**पेतमेकदा विश्वमुपलभ्यते, तद्भेदवदिति गम्यते। तस्यापीदमेवोत्तरमावृत्त्या– दाहपाकविभागेनेति। कथम्? इदं तावदयं प्रष्टव्यः – को विरोधार्थः? यद्येकत्रासम्भवः, सोऽसिद्धः।**

**अथ परस्परव्यवच्छिन्नात्मता, जननादयश्च परस्पररूपनिवृत्त्यात्मान इति। न तर्ह्यतो भेदसिद्धिः, एकस्मिन्नपि वह्नौ दग्धृत्वपक्तृत्वदर्शनात्।**

**न हि परस्परव्यवच्छेदमन्तरेण नानात्वं धर्माणाम्, ततश्चेद्भेदः, नानेकधर्मकमेकं किञ्चित् स्यात्।**

---

वस्तुनि विरुद्धे अर्थक्रिये सम्भवतः। तदेवोपपादयति – **तथा हीत्यादिना**। अयं भावः– अस्मिन् संसारे जननमरणे वृद्धिक्षयौ स्थानगमने– शोकहर्षौ इत्येवमादिभिर्नानाविरुद्धधर्मैर्युक्ता एकस्मिन्नेव काले विविधाः प्राणिनो दृश्यन्ते। तस्मात् समस्तमेव विश्वं परस्परभेदवदस्ति न त्वभिन्नमिति गम्यत इति। अस्या अपि **शङ्कायाः** समाधानार्थम् ''दाहपाकविभागेन कृशानुर्न हि भेदवान्'' इति श्लोकांश एव आवर्त्य पठनीय इत्याह– **तस्यापीति**।

उक्ताशङ्कायाः समाधानं कथङ्कारं भवतीत्युपपादयति – **इदं तावदिति**। अयं भावः – विरुद्धार्थक्रियादर्शनाद् भेदावगत्तिरित्यत्र विरोधपदार्थः क इति वक्तव्यम्। यद्युच्येत, जननमरणादिकार्याणामेकत्रासम्भवो विरोध इति चेत्, न, अद्वैतवादिनां तादृशविरोधस्यासिद्धत्वात्। सर्वेषामेव विरुद्धाविरुद्धधर्माणामेकस्मिन्नेवात्मनि कल्पितत्वेन स्वीकारात्।

अथोच्येत– परस्परं विच्छिन्नतैव विरोधो जननमरणादीनामिति। यतो हि जननं हि मरणनिवृत्तिरूपं मरणं च जनननिवृत्तिरूपम्। इत्थं च सर्वेषां जागतिकवस्तूनां विच्छिन्नतैव विरोधः, विरोधाच्च भेद इति चेत्, न, न ह्येवंविधविच्छिन्नताबलाद् भेदसिद्धिः, दग्धृत्वपक्तृत्वयोः परस्परं विच्छिन्नत्वेऽपि एकस्मिन् वह्नौ भेदाभावात्।

न च दग्धृत्वपक्तृत्वयोर्मिथो विच्छिन्नत्वमेव नास्तीति वाच्यम्, विच्छिन्नत्वमन्तरा दग्धृत्वपक्तृत्वादिधर्माणां नानात्वासम्भवात्। एवं नानाधर्मत्वहेतो-

**अथ परस्पराभावात्मतैव विरोधः— नैकस्मिन् स एव भवति, न च भवतीति। ततो भेदावसायः। तदसत् , न ह्येवं धर्माविव, कुतस्तयोर्विरोधाद्भेदावगतिः? खपुष्पादिषु चोभयाभावादुभयप्रसङ्गः।**

**अथ वध्यघातुकभावो विरोधः — हर्षः शोकं हन्ति, शोकश्च तम्। एवमितरेष्वपि। तत्रापि नाजात एकोऽन्यं नाशयति,नान्याधिकरणम्। तस्मादेकाधिकरणो भूत्वा नाशयतीति वाच्यम्। एवं च तयोरेकाधिकरणत्वदर्शनान्न तद्दर्शनेनाधिकरणभेदानुमानमव्यभिचारम्।**

---

रेकत्वाभावे जगति एकं किमपि वस्तु नावलोक्येत। दृश्यते हि लोके रूपरसगन्धाद्यनेकधर्मकमेकं वस्तु पुष्पादिकमिति। तदेवोक्तम्— ततश्चेद् भेदः, नानेकधर्मकमेकं किञ्चित् स्यादिति। ततश्चेद् भेदः= नानाधर्मत्ववशाद् भेदत्व इत्यर्थः।

प्रकारान्तरेणाशङ्कते — **अथेति**। ननु अन्योन्याभावात्मकत्वमेव जननमरणादीनां विरोधोऽस्तु, तावतैव जातमृतयोर्भेदः सेत्स्यति। विरोधमुपपादयति— **नैकस्मिन् इति**। न ह्येकः पुमान् एकदैव जायते म्रियत इति। अतो जननमरणे परस्पराभावात्मके भिन्नयोरेव स्तः। एवं हर्षशोकावपि परस्पराभावात्मकौ भिन्नयोरेव स्त इति सुतरां भेदसिद्धिरिति बोध्यम्। ननु तयोर्विरोध एव नास्ति, तेन विरोधाभावादेव भेदो न सिध्येद् इत्याशङ्कायामाह — **न च भवतीति**। पूर्वोक्तं नञ्पदमिहाप्यनुसज्य "न च नैव भवतीति" वाक्ययोजना करणीया। तस्माद् विरुद्धयोरेकस्मिन्नभावाद् विरोधस्य अवश्यं सद्भावेन असत्त्वाभावाच्च जातमृतादिषु भेदावसायो= भेदनिश्चयो भवतीति शङ्कितुराशयः।

शङ्कां परिहरति — **तदसदिति**। न ह्येवं धर्माविवेति । अयं भावः— यदि जन्ममृत्यू यदि वा शोकहर्षौ परस्पराभावात्मकौ स्वीक्रियेताम् तदा परस्पराभावस्वरूपतया वस्तुनो भावरूपौ धर्माविव तौ न भवेताम्। तथा च सति भावयोः शोकहर्षयोर्जननमरणयोर्वा भेदावगतिः कुतः स्यात्? तयोर्धर्मयोर्भेदानवबोधे तु तयोर्विरोधाद् भावभेदावगतिरिति न सम्भवेत्? तदसम्भवे च धर्मिणोरपि भेदावगतिः कुतः स्यादित्यर्थः। खपुष्पशशशृङ्गादिषु च हर्षशोकयोरभावादन्योन्याभावात्मकयोस्तयोः प्रसङ्गः स्यादिति।

**अथ भावरूपतद्व्यवच्छेदात्मानो धर्मा विरोधिनः, नित्यत्वा-नित्यत्वमूर्तत्वामूर्तत्वादयः। तत्सम्बन्धाद् भेदगतिः। तदपि न, यतो नावश्यं यो यत्र भवति, स तं व्याप्नोति। न हि रथादयस्तत्संयोगादयो वा नभो व्यश्नुवते, अन्यान् वा संयोगिनः पृथिव्यादीन्, अवच्छिन्नत्वात्।**

---

विरोधशब्दस्यार्थान्तरमाशङ्कते – **अथेति**। अर्थात् शोकहर्षयोर्वध्य-घातकभाव एव **विरोधार्थः**। अत एव हर्षः शोकं हन्ति, शोकश्च हर्षं हन्ति। ईदृश एव विरोध इतरेषु जननमरणादिष्वपि बोध्यः। तस्मात् हृष्टशोकाकुलयो-र्जातमृतयोश्च भेदः सिध्यतीति।

इममपि पक्षं दूषयति – **तत्रापीति**। अयमाशयो दूषणस्य – अस्मिन्नपि पक्षे नाजातः (अनुत्पन्नः) एकतरः शोकोऽन्यतरं हर्षं नाशयति, न वाऽधिकरणान्तरे उत्पन्नः शोकोऽधिकरणान्तरे हर्षं नाशयति, किन्तु एकाधिकरणो भवन्नेव एकोऽन्यं नाशयति। तस्माद् विरुद्धाभ्यामपि शोकहर्षाभ्यामधिकरणस्य भेदानुमानमत्रैव व्यभिचरितम्, परस्परं विरुद्धयोरपि तयोरेकस्मिन्नेवाधिकरणे सहास्तित्वदर्शनादिति न वध्यघातकभावादपि अधिकरणभेदावगतिरिति भावः।

प्रकारान्तरेण धर्मिभेदं शङ्कते पूर्वपक्षी – **अथेति**। अयमर्थः– ये धर्मा भावरूपा भवन्ति, यथा– नित्यत्वमूर्तत्वादयः, तथा ये धर्मास्तद्व्यवच्छेदात्मानः, अर्थात् तदभावरूपा भवन्ति, यथाऽनित्यत्वामूर्तत्वादयः, ते परस्परं विरोधिनः सन्ति। यथा नित्यत्वधर्मः, अनित्यत्वधर्मश्च परस्परं विरोधिनौ स्तः, तथैव मूर्तत्वधर्मः, अमूर्तत्वधर्मश्च परस्परं विरोधिनौ स्तः। अस्माद् विरोधकारणाद् नित्यत्वसम्बन्धी धर्मी अनित्यत्वसम्बन्धिनो धर्मिणोऽवश्यं भिन्नो भविष्यतीति विरुद्धधर्मसम्बन्धाद् वस्तूनां परस्परं भेदोऽवगम्यत इति।

पूर्वपक्षिशङ्कामिमां निराकरोति – **तदपि नेत्यादिना**। निराकरण-मेवोपपादयति – **यत इति**। अयमाशयः – विरोधिधर्मसम्बन्धाद् भेदावगतिरित्यत्र सम्बन्धो यदि व्याप्तिस्तदा व्याप्तिरेवासिद्धा। यतो हि यो यत्र भवति, सोऽवश्यं तद्व्याप्नुयादिति नास्ति नियमः, परिच्छिन्नत्वात्। यथा परिच्छिन्ना रथादयस्तत्सं-

**एवमवच्छिन्ना धर्मा अनवच्छिन्नमनन्तमर्थमाश्रयन्तोऽपि न व्यश्नुवते। अतो नैकस्मिन्नपि भावाभावविरोधः।**

**यस्तु मन्यते — अर्थक्रियाभेदोऽर्थक्रियाव्यवस्था, अतो भेदाधिगमः। एकत्वे हि न व्यवस्था युज्यते। तथा च पयसोऽपि तैलं तिलेभ्यश्च**

---

योगादयो वा नभसि भवन्तोऽपि ते न नभो व्याप्नुवन्ति, तथैव ते पृथिव्यादिषु संयुक्ता अपि न स्वसंयोगिनः पृथिव्यादीन् व्याप्नुवन्ति। तद्वदेव नित्यत्वं यदि अधिकरणे व्याप्तं स्यात् तदा तत्रैवानित्यत्वमपि न तद् व्याप्नोति। यदि कश्चिदेको धर्मस्तद्वस्तु व्याप्य वर्तेत तदा तद्विरोधिधर्मान्तरं तत्र न वर्तेत, विरोधात्। अतो नित्यत्वादिपरिच्छिन्नधर्मस्यात्मनि व्याप्तत्वाभावेन न तेन साकम् अनित्यत्वस्य सत्त्वे विरोधः स्यात्। तथा च विरोधाभावाद् न धर्मिणां ततो भेदसिद्धिरिति। एतदेव निगदितम् — **एवमिति**। अवच्छिन्ना नित्यत्वादिधर्मा अनवच्छिन्नं विभुमनन्तमर्थमात्मानमाश्रयन्तोऽपि न व्यश्नुवते = व्याप्य वर्तन्ते। यदि व्याप्य वर्तेरन् तर्हि विरुद्धयोरेकत्राधिकरणे भावाभावौ न वर्तेयाताम्, उभयोरधिकरणे च भिन्ने सिध्येताम्। यतो व्याप्य न वर्तेते, अतो नैकस्मिन्नपि भावाभावयोः सत्त्वे विरोधः, विरोधाभावाच्च न धर्मिणि भेदावगतिरिति तात्पर्यम्। ननु संयोगादेरव्यापित्वाद् एकत्र व्योम्नि भावाभावौ युक्तौ, नित्यत्वं तु आत्मनो व्यापि, ततश्च तदभावस्यानित्यत्वस्य तदेकाश्रयत्वासम्भवाद् आत्मनो भिन्नं क्षित्याद्याश्रयः प्रतीयत एव। अत्र ब्रूमः — स्यादेव यद्यनित्यत्वं नाम धर्मस्तत्रास्ति, मायामात्रं तु तत् क्षित्यादिरूपेणात्मनि कल्पितम्। न च मायायां विरोधोऽस्ति (इति शंखपाणिः)।

उक्तश्लोकस्य व्याख्यान्तरचिकीर्षया भेदसिद्धये मतान्तरमाशङ्कते — **यस्त्विति**। "अर्थक्रियाकृते भेदे" इत्यत्र अर्थक्रियाभेदो नाम अर्थक्रियाया व्यवस्था। अत एव पयसो दध्येव जायते तिलेभ्यश्च तैलमेव जायते। अनया व्यवस्थया पयस्तिलयोर्दधितैलयोश्च भेदोऽवगम्यते। यदि दुग्धतिलयोरेकत्वमभेदः स्यात् तदा दुग्धादपि तैलं तिलेभ्यश्च दधि निष्पद्येत। एवमेव जननमरणरूपार्थक्रिययो — र्व्यवस्थाया अभाव एकस्मिन् जायमाने = उत्पन्ने सर्वे जायेरन् मृते चैकस्मिन्

**दधि स्यात्। तथैकस्मिन् जायमाने सर्वं जायेत, नश्यति च नश्येत्। अन्यथा भेद एव शब्दान्तेरण उक्तः स्यात्। तदुक्तम् – "सहोत्पत्तिविनाशौ सर्वं च सर्वत्रोपयुज्येत" इति।**

**तस्यापीदमेवोत्तरम् – दाहपाकविभागेनेति । यदि कार्यनानात्वं व्यवस्था, न तया तिलानां पयसश्च भेदं प्रतिपद्यते। अथ पयसो दध्नो जन्म, नान्यत इति व्यवस्था, नान्यत्वं सिद्धया व्यवस्थया प्रमित्सितं तल्लक्षण-मनुप्रवेष्टुमर्हति, तस्या असिद्धिप्रसङ्गात् । तस्माद् दधिजननशक्तिस्तद-**

---

सर्वे म्रियेरन्नित्यापत्तिः स्यात् । किन्तु व्यवस्थादर्शनात् पयस्तिलादयः परस्परं भिन्ना इत्यर्थात् सिध्यति। तदेवोक्तम्– **अन्यथेति**। अव्यवस्थावैपरीत्येन जननमरणादीनां व्यवस्थादर्शनाद् इत्यन्यथाशब्दार्थः। इत्थञ्च व्यवस्थास्वीकारेण भेद एव प्रकारान्तेरण स्वीकृतः स्यादित्याशयः। अर्थाद् यावदुक्तं भवति "अर्थक्रियाव्यवस्था" इति, तावदुक्तं भवति "भेद" इति व्यवस्थाप्रतीतिरेव भेदसिद्धिरिति यावत् ।

इममेवाभिप्रायमभियुक्तवचनमुद्धृत्योपोद्बलयति – **तदुक्तमिति**। सर्वेषामुत्पत्ति-विनाशौ सहैव व्यवह्रियेताम्, तथा सर्वं पयस्तिलादि सर्वत्रैव तैलदध्यादिषु हेतुत्वेनोपयुज्येत यदि व्यवस्थाहेतुर्भेदो नाङ्गीक्रियेतेत्यर्थः।

मतान्तरमपीदं निरस्यति– **तस्यापीति**। उक्ताशङ्काया अप्युत्तरम्– "दाहपाकविभागेन कृशानुर्न हि भिद्यते" इति पूर्वोक्तं वचनमेवोत्तरमस्तीति ज्ञेयम्। अयमभिप्रायः– अर्थक्रियाव्यवस्था यदि कार्यनानात्वम्, तदा तादृशी व्यवस्था तिलानां पयसश्च भेदं साधयितुं न समर्थम्, दाहपाकरूपकार्यनानात्वेऽपि वह्नौ भेदादर्शनाद् अस्यानुमानस्यापि व्यभिचारित्वात्।

पुनः शङ्कते – **अथेति**। अयं भावः– ननु ममापि कार्यनानात्वं न व्यवस्था किन्तु कार्यजन्मैव व्यवस्था विवक्षिता।तथा चानयैव व्यवस्थया तिलानां पयसश्च भेदः सेत्स्यति । यतो हि पयसो दध्नो जन्म नान्यतः, एवं तिलेभ्यस्तैलानां जन्म नान्यत इति।एतदेव विशदयति – **नान्यत्वमिति**। अयमर्थः – नान्यत्वम् =

**भावश्च व्यवस्था, ततो भेदः। न ह्येकविषय एकस्य शक्त्यशक्ती युज्येते — इति।**

**स चायं विरोधिधर्मयोगो भेदहेतुरनन्तरमेव निरासि।**

**यथा खलु दीर्घकालाः पदार्था मितकालैर्धर्मैः सम्बध्यमानास्तद्धर्माणोऽतद्धर्माणश्च न विरोधपदभाजः, तथा परिमितदेशैर्विपुलदेशा**

---

न कार्यनानात्वं तल्लक्षणम्, भेदलक्षणतया भेदसाधकतयेति यावद् इहानुमानेऽनुप्रवेष्टुमुचितम्, यतो हि नानात्वं व्यवस्थया सिषाधयिषितं भवेत् तच्च नोपपद्यते, इतरेतराश्रयप्रसङ्गात्। सिद्धायां व्यवस्थायां नानात्वसिद्धिः, सिद्धे च नानात्वे व्यवस्थासिद्धिरिति स्फुटोऽत्रान्योन्याश्रयदोषप्रसङ्गः। एतदेवोक्तम्— **तस्या असिद्धिप्रसङ्गादिति**। नानात्वसिद्धिं विना व्यवस्थाया असिद्धत्वादित्यर्थः।

ननु कार्यनानात्वं यदि न व्यवस्था, तर्हि का व्यवस्था तवाभिप्रेता? इति जिज्ञासायां पूर्वपक्षी स्वमतनिष्कर्षमाह— **तस्मादिति**। कार्यानानात्वस्य व्यवस्थास्वरूपत्वासम्भवाद् दधिजननशक्तिर्दुग्धे तदभावश्च तिले इति व्यवस्था भविष्यति, तत एव च दुग्धतिलयोर्भेदः सेत्स्यति। यतो हि न ह्येकस्मिन् एव दध्यादिविषय एकस्यैव शक्तिरशक्तिश्च सम्भवतः। अतो दधिविषये दुग्धस्य शक्तिस्तिलानाञ्चाशक्तिरिति हेतोर्दुग्धतिलयोर्भेदोऽगत्या स्वीकरणीय इति पूर्वपक्षनिष्कर्षः। अमुं निष्कर्षमप्यनुपदं दूषितं स्मारयति सिद्धान्ती— **स चायमिति**। अयं भावः— यथैकस्मिन्नेव नभसि रथसंयोगो भवत्यपि नापि भवति, संयोगस्य सावच्छिन्नत्वात्, नभसश्च अनवच्छिन्नानन्तत्वात्, तथा नैकस्मिन्नपि भावाभावविरोध इति ग्रन्थेन पूर्वमेव निरस्तोऽयं पक्ष इति।

एकत्र भावाभावयोरविरोधे दृष्टान्तमुपन्यस्यति — **यथा खल्विति**। केचित् पदार्था दीर्घकालाश्चिरकाला भवन्ति देवदत्तादयः पूर्णायुषः, किन्तु तेषां धर्मा बाल्य-कौमार-यौवन-वार्धक्यादयः परिमितकाला अल्पतरकालस्थायिन एव भवन्ति। तथा च दीर्घजीविनां देवदत्तादीनां बाल्यादिभावैः सम्बन्धोऽपि भवति कालान्तरे बाल्यादिभावानामभावोऽपि भवतीति एकत्र भावाभावयोस्सत्त्वे न कश्चिद् विरोध आयाति, तथैव विपुलप्रदेशाः पृथिव्यादयः किञ्चिदंशावच्छेदेन रथादिसंयोगिनस्तथा किञ्चिदंशावच्छेदेन रथादिसंयोगाभाववन्तोऽपि भवन्ति, न तत्र कश्चिद् विरोधः, तथाऽनन्तप्रदेशा आत्मादयोऽपि परिमितप्रदेशैः सुखादिभिर्युक्ता

**अनन्ताश्च। कथमनन्तस्यान्तवान् धर्म इति चेत्, व्यतिरेकेऽनिर्वचनीयत्वे वा नास्त्यसम्भावनावकाशः। अव्यतिरेकेऽपि दीर्घकालस्येव मितकालः।**

**योऽपि दीर्घकालमर्थं न प्रतिपद्यते, तं प्रतीदं पुनः पठितव्यम्—दाहपाकविभागेनेति। एकोऽपि वह्निः किञ्चिदेव दहति पचति च। तथा च दाहकश्चादाहकश्च न भिद्यते। तथा न दाहान्तराणि**

---

अपि भवन्ति तथा सुखादिभिरसंयुक्ताश्च कदाचिद् भवन्ति, न तथा सति कश्चिद् विरोधावसर इति।

पुनः शङ्कते – **कथमिति**। अनन्तस्यात्माकाशादेरन्तवान् सुखदुःखादिः, शब्दतदभावश्च मितप्रदेशाः कथं धर्माः स्युरिति। उत्तरयति – **व्यतिरेके इति**। अयमर्थः – शब्दादिधर्मा अनन्ताकाशादेर्यदि व्यतिरिक्ता अनिर्वचनीया (मिथ्या) वा भवन्ति, तदा व्यतिरिक्तानां धर्माणामन्तवत्त्वेऽपि न कश्चिद् दोषः। अनन्तव्यतिरिक्तोऽन्तवान् भवेदिति भूषणमेव न दूषणम्। एवमनिर्वचनीयत्वेऽपि अन्तवद् वस्तु अनन्तस्य धर्मो भवेदित्यपि भूषणमेव न दूषणम्, अनिर्वचनीयत्वादेवेत्याशयः।

धर्माणां धर्मिणोऽव्यतिरिक्तत्वपक्षेऽपि न दोष इत्याह – **अव्यतिरेकेऽपीति**। अयमर्थः – धर्मधर्मिणोरभेदपक्षे यथा दीर्घजीविनो देवदत्तादेः बाल्ययौवनादयो मितकाला अपि धर्मा भवन्ति, तद्वदेव अनन्तस्याप्याकाशात्मादेः शब्दतदभावौ नित्यत्वनित्यत्वाभावौ अविरुद्धाविति न काचिदनुपपत्तिरिति। एकस्मिन्नपि भावाभावयोरविरोधाद् न ततो भेदसिद्धिरिति निष्कर्षः।

यस्तु क्षणिकवादी दीर्घकालं स्थिरमर्थं नाभ्युपगच्छति, तं प्रति तेन दृष्टान्तेन नैकत्र विरुद्धभावाभावयोः समावेशः साधयितुं शक्यत इति तं प्रत्यपि उक्तसमावेशं साधयितुं दाहपाकविभागेनेति पूर्वोक्तमेव श्लोकं योजयति ग्रन्थकारः – **योऽपीति**। तद्दृष्ट्या श्लोकार्थं निरूपयति – **एकोऽपीति**। क्षणिकवादानुसारेण क्षणिकत्वेनाभिमत एकोऽपि वह्निः स्वक्षणे किञ्चिदेव दहति न तदतिरिक्तम्,

**पाकान्तराणि वा करोति तस्मिन्नेव दाह्ये पाक्ये च। तथा बीजादयः प्रत्येकं समर्था अपि नाङ्कुरान्तराणि जनयन्ति, नापि सामग्री। तथा च जनकत्वमजनकत्वमिति।**

---

तथा किञ्चिदेव पचति न तदतिरिक्तम्। तथा च क्षणिकवादेऽप्येकस्मिन्नेव वह्नौ दाहजनकत्वदाहाजनकत्वे पाकजनकत्वपाकाजनकत्वे चेति विरोधिभावाभावौ सहैवोपलभ्येते, वह्निभेदस्तत्र नास्ति। तस्माद् विरोधिनौ भावाभावौ न वस्तुभेदे प्रमाणमिति भावः। एतदेवोक्तम् – "तथा च दाहकश्चादाहकश्च न भिद्यते" इति। अत्र "पाचकश्चापाचकश्च न भिद्यते" इत्यपि बोध्यम्।

कर्मभेदेन-दाहकत्वादाहकत्वे उदाहृत्य कर्मभेदेऽपि क्रियाभेदेन-दाहादाहौ उदाहर्तुमाह – **तथा न दाहान्तराणीति**। अयमभिप्रायः – एकस्मिन्नेव दाह्ये पाक्ये च वस्तुनि स एवैकोऽग्निरेकैकां दाहपाकक्रियां कृत्वा न तदेव वस्तु पुनः पुनर्दहति पुनः पुनः पचति वा। अतो यां दाहक्रियां वह्निः करोति, तदभिप्रायेण सोऽग्निर्दहतीत्युच्यते, यच्च दाहक्रियान्तरं न करोति, तदभिप्रायेण न दहतीत्युच्यते। तथा चैक एव वह्निस्तदेव वस्तु दहत्यपि न दहत्यपीति दाहपाकक्रियाभेदेऽपि दाहकोऽग्निरभिन्नः, दाह्यं वस्तु चैकमेवेति सिद्धम्। अत एतदभिप्रायेणापि सुष्ठूक्तम् – **दाहपाकविभागेनेति**।

एवं क्षणिका बीजादयोऽपि प्रत्येकमङ्कुरजनका अपि अङ्कुरान्तराणि न जनयन्ति। अतस्तत्रैकस्मिन्नपि बीजेऽङ्कुरजनकत्वतदभावौ परस्पर-विरोधिनावपि वर्तेते इति बीजादिषु प्रत्येकं भावाभावविरोधेऽपि भेदादर्शनाद् अन्यत्रापि अर्थक्रियाभावाभावविरोधेऽपि न वस्तुनि भेदसिद्धिरिति दृष्टान्तान्तरेण समर्थयति – **तथा बीजादय इति**।

नापि सामग्रीति मूलस्यायमर्थः – यस्यापि मते केवलं बीजमात्र-मङ्कुरजनकं नास्ति किन्तु धरणीसलिलसंयोगाद्युपेतबीजरूपा सामग्री अङ्कुर-जनिकाऽस्ति, तन्मतेऽपि सैका सामग्री एकमेवाङ्कुरं जनयति नाङ्कुरान्तराणि। तथा च तस्याः सामग्र्या अङ्कुरजनकत्वाङ्कुरजनकत्वाभावरूपविरोधिभावाभावयोः सत्त्वेऽपि सा सामग्री न भिद्यत इति सिद्धोऽभेदवाद इति।

**अथैकस्मिन्नेव जनकशक्तिः — अन्यं प्रध्वस्तमागामिनं वैकं किं न जनयति ? अथ तत्रैवैषां सामर्थ्यम्, नान्यत्र तुल्यजातीयेऽपि। कुतः ?**

---

नन्वेकस्मिन्नेव कार्य एकस्य जनकत्वं स्वीक्रियते नान्यत्रापि। अत एव तिलास्तैलमेव कुर्वन्ति न दधि। एवञ्च तिलपयसोर्भेदः, अङ्कुरजनने बीजानां परस्परं भेदः सिध्यति। अर्थात् तिलपयसी यद्यभिन्ने स्तः, तदा कथं न तिलकार्यं पयोऽपि कुर्यात्? पयःकार्यं वा तिलमपि न कुर्यात्? तस्मात् तैलजननशक्तिमत् कारणं दधिजननशक्तिकारणाद् भिन्नमिति गम्यत इत्याशयेन आशङ्कते— **अथैकस्मिन्नेव जनकशक्तिरिति**। तैल एवैकस्मिन् तिलस्य जनकशक्तिर्न दध्न्यपीत्यतस्तिलपयसोर्भेद इति पूर्वपक्षयितुराशयः।

अत्रोत्तरमाह सिद्धान्ती — **अन्यं प्रध्वस्तमिति**। अयं भावः — एकस्मिन्नेव जनकशक्तिरिति यदि मन्यते, तथापि भूतं यदेकं किमपि, भविष्यद् वा यदेकं किमपि, तत् प्रति तु अजनकत्वमस्त्येव वर्तमानस्यैवैकस्य जनकत्वात्। किन्तु एकत्वसामान्यात् प्रध्वस्तमनागतमपि च एकमस्त्येवेति ध्वस्तमनागतं वा यत् किञ्चिदेकं तैलम्, तदपि कथं न जनयेत्? तस्याप्येकत्वादिति प्रश्नमुखेन सिद्धान्तिन उत्तरं ज्ञेयम्। अत्रायं सारः — भवत्वेकत्र शक्तिः, अशक्तिस्तु विषयान्तरे, तथाप्यतीतमप्येकमस्ति, अनागतं चाप्येकमस्ति। अतश्चैकत्रैव शक्तिरस्ति वर्तमाने, एकत्रैवाशक्तिरप्यस्ति अतीतानागतान्यतरस्मिन् इति तादृशरीत्या शक्त्यशक्त्योः समानविषये सत्त्वात् परस्परविरोधाच्च एकस्मिन्नपि भेदबोधोदयप्रसङ्ग इति। तैलादिष्वशक्तिस्तु भिन्नविषयत्वान्न विरुद्धाऽतस्तिलेषु शक्त्यशक्तिभ्यां भेदसाधने व्यभिचारोद्भावनं नौचित्यमावहतीति सिद्धान्तिना प्रकृतव्यभिचारोद्भावनं कृतमिति रहस्यम्।

एकस्मिन्नेव जनकशक्तिरित्यस्य ''वर्तमानकालिक एव तैले'' इत्यभिप्रायेण पूर्वपक्षी पुनः शङ्कते — **अथ तत्रैवेति**। अयमाशङ्कितुराशयः — तत्रैव = वर्तमान-कालिके तैल एव एषां तिलानां सामर्थ्यं न तु ध्वस्तेऽनागते वा तैल-जातीयेऽपि। कथमिति चेत्, आह — तस्यैव वर्तमानस्यैव तैलस्य तिलेभ्य उत्पत्तेरिति।

**तस्यैवोत्पत्तेः, कार्यगम्यत्वाच्च सामर्थ्यस्य, तथा च न शक्तिरशक्तिश्चेति विरोधः। अभेदेऽपि तर्हि पयसस्तिलानां दध्नोऽनुत्पत्तौ न विरोधः।**

**तथा हि – यस्य तावद् दध्नः पयसो जन्म न तस्य तिलेभ्योऽनुत्पत्तिः, येन शक्त्यशक्तिविरोधाद् भेदः स्यात्। कुतः ? तिलानां पयसोऽभेदात्।**

---

ननु वर्तमानतैलोत्पत्तावेव तिलानां सामर्थ्यमिति कथमवगम्यत इति शङ्कायामाह – **कार्यगम्यत्वाच्चेति**। सामर्थ्यं ह्यतीन्द्रियं वस्तु कार्योत्पत्त्या वर्तमानकालिकयाऽवगम्यते। एवञ्च वर्तमानकालिके तैले तिलानां शक्तिः, अशक्तिस्तु ध्वस्तानागततैले इति शक्त्यशक्त्योर्भिन्नविषयत्वेन न विरोधः। विरोधाभावाच्च न वर्तमानतैलोत्पादकेषु तिलेषु भेदप्रसङ्ग इति।

एवं भेदवादिना स्वपक्षे विरोधे परिहृते अभेदवादी सिद्धान्त्यपि स्वपक्षे विरोधं परिहरति–**अभेदेऽपि तर्हीति**।अयमाशयः – यद्यपि अभेदवादिमते पयसस्तिलानां च नास्ति भेदः, तथापि पयसो दध्युत्पत्तिस्तिलेभ्यश्च तदभिन्नेभ्यो नोत्पत्तिरिति कारणाभेदेऽपि कार्यजन्माजन्मकृतो यो विरोधः प्रतीयते, स विरोधो अभेदपक्षेऽपि वस्तुगत्या नास्ति। यथा भेदपक्षे शक्त्यशक्तिविरोधः परिहृतस्तथाऽद्वैतपक्षेऽपि विरोधः शक्यते परिहर्तुमिति।

सिद्धान्ती स्वपक्षे विरोधपरिहारं स्फुटीकरोति– **तथा हीति**। अयं भावः– निर्दिष्टात् पयसो न सर्वाणि दधीन्युत्पद्यन्ते किन्तु निर्दिष्टं दध्येव जायते, तद् दधि तु निर्दिष्टतिलेभ्योऽपि जायत एवेति सिद्धान्ती मन्यते, तन्मते तिलानां पयसश्चाभेदाङ्गीकारात्। यच्च दध्यन्तरं निर्दिष्टात् पयसो न जायते, तत्तु भिन्नो विषयः। निर्दिष्टपयस इव निर्दिष्टतिलेभ्योऽपि तद् यदि न जायेत तर्हि भूषणमेवैतत् निर्दिष्टपयस्तिलानामभेदवादिनः सिद्धान्ते। तस्मात् पूर्वपक्षिण इव सिद्धान्तिनोऽपि भिन्नविषयत्वेन शक्त्यशक्तिकृतो विरोधो नास्तीति तिलानां पयसोऽभेदे न काचिदनुपपत्तिरिति बोध्यम्।

**अथ दध्यन्तरस्यानुत्पत्तेर्विरोधः, तच्च न, अन्यत्राशक्तेस्तत्रैव शक्तेर्बीजादीनामिव। न हि समर्थमित्येव कारणं सर्वं तुल्यजातीयं जनयति, एकस्मादेव सर्वतुल्यजातीयकार्योत्पत्तिप्रसङ्गात्।**

**अथ मतम् – अर्थक्रियासु भेदेन विनियोगाद् भेदमध्यवस्यामः। दध्ने हि पयो विनियुज्यते, न सिकतेति। तदप्यनैकान्तिकम्, एकत्वेऽपि**

---

पुनः शङ्कते – **अथेति**। अयमाशयः – मन्ये, यद् दधि पयसो जातम्, तत् तिलेभ्योऽपि जातमेव, पयस्तिलानामभेदात्, किन्तु यद् दध्यन्तरं तत्तु तेभ्यस्तिलेभ्यो न जायते। निर्दिष्टपयोजन्ये दध्नि तिलानां शक्तिः, दध्यन्तरे चाशक्तिरिति कृत्वा शक्त्यशक्तिकृताद्विरोधाद् भेदः सेत्स्यतीति शङ्कितुरभिप्रायः।

अत्रोत्तरमाह - **तच्च नेति**। अयमर्थः – यथा बीजानां वर्तमान एवाङ्कुरे शक्तिर्नातीते नानागते, तथैव तस्मिन्नेव दध्नि शक्तिरन्यत्र दध्यन्तरे चाशक्तिरस्ति। अतः शक्त्यशक्त्योर्विषयभेदाद् न विरोधः। यस्मिन् दध्नि शक्तिस्तस्मिन्नेव दध्नि अशक्तिश्चेत्तदा समानविषयमादाय विरोधः स्यात्, नान्यथा इत्यभिप्रायः। ननु एकत्र चेद् दध्नि तिलानां शक्तिस्तदा तुल्यजातीये दध्यन्तरेऽपि शक्तिः स्यादिति चेत्, न, न हि दधिजातीये एकस्मिन् दध्नि तिलाः समर्था इत्येतावतैव तज्जातीयं दध्यन्तरमपि जनयितुमर्हन्ति, तथा सति एकस्मादेव कारणात् सर्वेषां तुल्यजातीयकार्याणामुत्पत्तिः प्रसज्येतेति समाधातुराशयः।

प्रकारान्तरेणाशङ्कते – **अथ मतमिति**। विभिन्नार्थक्रियासु भेदेन वस्तूनां विनियोगो भवति। यथा दध्युत्पादाय पयो विनियुज्यते, न सिकतास्तिला वा विनियुज्यन्ते। न वा इष्टकाबन्धादिभवननिर्माणकार्याय दधि विनियोज्यत इति। अतो निश्चीयते पयसः सिकताः तिला वा भिन्ना न त्वभिन्ना इति।

मतमिदं निराकरोति – **तदप्यनैकान्तिकमिति**। विनियोगभेदाद् वस्तुभेद इत्युक्तनियमोऽपि व्यभिचारीति समाधत्ते – तदप्यनैकान्तिकमिति। व्यभिचार-

भेदेन विनियोगदर्शनात् । तदेवार्थवस्तु सहकारिसमेतं विनियुज्यते, न केवलम् ।

अथ मतम् – भिन्नमेव तत् सहकारिसन्निधानोपाधिभेदात्, औपाधिकस्तर्हि प्रत्ययमात्रनिवेशी भेदः, न परमार्थतः। तथाभूतश्च भावभेदो ह्यनुज्ञायत एव।

योऽपि क्षणिकत्वेन भेदमाह, तस्यापि भेदस्य तुल्यत्वात् सर्वं सर्वत्र विनियुज्येत, न वा किञ्चित् क्वचित्, अदृष्टसामर्थ्यात्। अथ कल्पना-विषयादभेदात् तत्सिद्धिः, परस्यापि तादृशाद् भेदादिति न विशेष इत्युक्तम्।

---

मुपपादयति – **एकत्वेऽपीति**। एकमपि वस्तु भेदेन विनियुज्यत इति दृश्यते। यथा तदेव वस्तु विनियुज्यते नापि विनियुज्यते, प्रयोजननिष्पत्तये सहकारिसहितमेव विनियुज्यते सहकारिविरहे न विनियुज्यत इति। तथा च विनियोगाविनियोगाभ्यां पयःसिकतयोर्भेदेऽपि क्वचिदेकस्यैवाभिन्नस्य वस्तुनः सहकारिसाहित्यासाहित्याभ्यां विनियोगाविनियोगयोः सत्त्वेऽपि तद्वस्तु नैव भिद्यत इति स्फुटो व्यभिचार इति भावः।

यद्युच्येत, एकमपि तद्वस्तु भिन्नमेव भवति, सहकारिसहितमन्यत् सहकारिविरहितं चान्यदिति चेत्, न, उपाधिगतः स भेदो न परमार्थतो वस्तुगत इति मन्तव्यम्, तदेवोक्तम्– **प्रत्ययमात्रनिवेशी भेदो न परमार्थत इति**। प्रत्ययमात्रनिवेशी = प्रतीतिमात्रविषयो भेदः प्रतीयतेमात्रं न वस्तुतोऽस्तीति। अद्वैतवादी हि जगदेव प्रतीयमानमात्रं मन्यमान औपाधिकभेदमपि प्रतीयमानमात्रं स्वीकरोत्येवेति न काचिदनुपपत्तिरित्यभिप्रायः। भावानामपारमार्थिकभेदे नाद्वैतवादिनामपि वैमत्यमिति रहस्यम्।

क्षणिकवादिमतेन पयोभेदमाशङ्क्य दूषयति – **योऽपीत्यादिना**। क्षणिक-वादिमते सहकारिसन्निधानोपहितो यः पयःक्षणो दध्ने विनियुज्यते, स भिन्नः केवलात् सहकारिरहितात् पयःक्षणात्। अतः पयोऽन्तरात् सिकतातश्च

**योऽप्येकस्योभयं प्रतिजानीते — भेदमभेदं च, तेनैकत्रापि विरुद्ध-धर्मविशमभ्युपयता दुर्लभ एव दध्नो जनकत्वाजनकत्वाभ्यां तिलपयसो-र्विभाग इति।**

---

भिन्नस्यैव पयःक्षणस्य दध्ने विनियोगो न **ताभ्यामभिन्नस्य** । अतः सिद्धान्तिना यदुक्तमनुपदम् – "एकत्वेऽपि भेदेन विनियोगादनैकान्तिकम्" इति, तदनुपपन्नम् । तस्मात् स्वस्वार्थक्रियासु विनियुज्यमानाः सर्वे क्षणिकभावा भिन्ना एवेति शङ्कितुरभिप्रायः ।

शङ्कामिमां निरस्यति – **तस्यापीति** । एवंविधस्य भेदस्य सर्वत्र तुल्यत्वेन सर्वं सर्वत्र विनियुज्येत । अर्थात् केवलात् पयःक्षणाद् यथा सहकारिसहितः पयःक्षणोऽत्यन्तभिन्नो दध्ने विनियुज्यते, तथा सिकताऽपि तस्मात् केवलात् पयःक्षणादत्यन्तभिन्नैवेति साऽपि दध्ने विनियुज्येत । एतदेवोक्तं मूले – "सर्वं सर्वत्र विनियुज्येत" इति । वैकल्पिकीमापत्तिमाह – "न वा किञ्चित् क्वचित्" विनियुज्येत इति शेषः ।"अदृष्टसामर्थ्यात्" इति ।अयमाशयः – यदि सिकतायां दधिजननशक्तिर्न कदाचिद् दृष्टा इति सा न दध्ने विनियुज्यते, तदा प्रस्तुतस्या-भिनवदुग्धस्य क्षणिकस्य पूर्वमसत्त्वेन न तत्रापि कदाचिद् दधिजननशक्तिर्दृष्टा, इत्यतस्तत् प्रस्तुतदुग्धमपि दध्ने सिकतावदेव न विनियुज्येत ।न च एकजातिद्वारा प्रस्तुतः पयःक्षणो दृष्टशक्तिरिति वाच्यम्, क्षणिकवादिभिर्जातेरनभ्युपगमात् ।

यद्युच्येत – अनादिवासनाकल्पितैकजातितया अभेदात् प्रकृतदुग्धेऽपि दधिजननशक्तिर्दृष्टैवेत्यतो तद्दुग्धं दध्ने विनियुज्यते न विजातीया सिकता इति, तदा अभेदवादिनः सिद्धान्तिनोऽपि अनादिवासनाकल्पिताद् पयःसिकतयो-र्भेदादेव एकस्य पयसो दध्ने विनियोगः, अन्यस्याः सिकताया न विनियोग इति पयःसिकतयोर्विनियोगाविनियोगौ सुष्ठूपपद्येते, तस्मात् पयःसिकतयोर्भेदः कल्पित एवेति सिद्धान्तपक्षाभिप्रायः ।

इदानीं भेदाभेदवादिनं लक्ष्यीकृत्यापि भेदं निराकुर्वन् अभेदपक्षं समर्थयति– **योऽपीति** । एतन्मते सहकारिविकलात् केवलाद् बीजात् सहकारिसहितं बीजं

तदेवम्—

एकस्यैवैष महिमा भेदसम्पादनासहः॥ ८॥

वह्नेरिव यदा भावभेदकल्पस्तदा मुधा॥८-१/२॥

एकत्र क्रियाभेदोपलब्धेः असम्भवस्य चासिद्धेः,अदृष्टदर्शनस्य चाभेदापबाधने सामर्थ्याभावात्, विशेषमात्रहेतुत्वात् तस्य च तत्त्वान्यत्वाभ्याम-

---

भिन्नम् एकजातितया चाभिन्नमित्यभ्युपगतम्। अत्रापि मते यथा विरुद्धावपि भेदाभेदावेकस्मिन्नेव बीजे भवतस्तथा विरुद्धे अपि जनकत्वाजनकत्वे शक्त्यशक्ती वा एकत्रैव भविष्यतः। तथा च दधिजननशक्त्यशक्तिभ्यां न तिलानां पयसो भेदसिद्धिरिति मन्तव्यम् ।

इदानीं पूर्वोक्तान् हेतून् संक्षेपेणानूद्य स्वपक्षमुपसंहरति सिद्धान्ती— **तदेवमिति**। "अर्थक्रियाकृते भेदे" इत्यारभ्य यावान् विचारः कृतः स सर्वोऽपि "एवम्" इत्यनेन निर्दिष्टः।

**एकस्यैव महिमा भेदसम्पादनासहः॥ ८॥**

**वह्नेरिव यदा भावभेदकल्पस्तदा मुधा॥८-१/२॥**

एकस्यैव एष कोऽपि अचिन्त्यो महिमा सामर्थ्यातिशयः = सामर्थ्य-विशेषोऽस्ति, योऽखिलस्य भेदप्रपञ्चस्य सम्पादने सहः प्रभुरस्ति क्षमत इति यावत्। अतो यथा एकस्यैव पावकस्य सामर्थ्यविशेषाद् निमित्तात् पाकदाहादिनानार्थक्रिया उपपद्यते, तथैव भावानामेकत्वेऽपि विभिन्ना अर्थक्रिया उपपद्यन्ते। तस्माद् भावानां भेदकल्पनमकारणं निष्प्रमाणकम्, अत एव मुधा व्यर्थमित्यर्थः। एकस्यापि तत्सिद्धेर्विभिन्नार्थक्रियाया उपपत्तेरिति श्लोकार्थः ।

एकस्यैव कोऽप्यचिन्त्यः सामर्थ्यातिशयः समस्तभेदप्रपञ्चसम्पादने क्षम इति स्वपक्षसिद्धौ पूर्वोक्तान् हेतून् एकैकशः संक्षेपेणेह पुनरनुवदति ग्रन्थकारः —

**निर्वाच्यस्य कल्पनास्पदत्वात्, अभेदादिव च तादृशात् कार्याभेदस्य भेदादपि तद्विधाद् भेदस्योपपत्तेः, विरोधस्य चानैकान्तिकत्वादसिद्धत्वाद् वा व्यवस्थायाश्च, विनियोगभेदस्य चानैकान्तिकत्वात्, अभेदादिव च कल्पिताद् भेदात्तत्सिद्धेः, भेदाभेदयोश्चैकत्र समवाये शक्त्यशक्त्योर्विनियोगाविनियोगयोश्चैकसमवायसम्भवाद् एकस्यैवैष कोऽप्यचिन्त्यः**

---

**एकत्रेत्यादिना।** अर्थक्रियाभेदान्न वस्तुभेदः, एकत्रापि वह्नौ दाहपाकादिरूपाद्यर्थक्रियाभेदोपलम्भादिति प्रथमहेतुवाक्यार्थः।

अन्यकार्यस्यान्यत्रासंभवाद् भेद इति चेत्, न, अद्वयवादिमते कार्यजातस्यैकत्रैव दर्शनम्, असम्भवस्यैवासिद्धेरिति द्वितीयहेतुवाक्यार्थः।

कुतश्चिद् वस्तुनः सकाशाद् उत्पत्तेः पूर्वमदृष्टस्य कार्यस्योत्पत्त्यनन्तरं दर्शनात् प्रतीयते पूर्वकालिकं वस्तु भिन्नं भिन्नं च परकालिकमिति चेत्, न, अदृष्टदर्शनस्याभेदापबाधने सामर्थ्याभावात्। एकस्मादपि कारणात् क्रमवतां कार्याणां दर्शनात्।

ननु पूर्वापरकालिकवस्तुनि यदि नास्ति कश्चिद् विशेषस्तर्हि पूर्वकालेऽपि तत्र कार्यं कथं न दृष्टमिति चेत्, न, एवं तर्हि परकाले कार्यदर्शनहेतुर्विशेष एवानुमीयतां न तु तत्र पूर्वापरकालिकवस्तुनि अभेदो बाधनीय इति। न चानुमीयमानाद् विशेषादेव भेदः सिद्ध इति वाच्यम्, तस्य तत्त्वान्यत्वाभ्यामनिर्वचनीयत्वस्वीकारेण काल्पनिकत्वेन भेदाप्रयोजकत्वात्।

ननु काल्पनिकविशेषाद् यदि कार्यभेदस्तदा काल्पनिकात् कारणाभेदादेव कार्यभेदः = सदृशकार्योत्पादः क्षणिकवादे स्यादिति चेत्, न, एवं तर्हि काल्पनिककारणभेदादेव कार्यभेदोऽप्युपपत्स्यत इति न भेदः परमार्थ इति तृतीयहेतोर्वि[illegible]दार्थः।

ननु जननमरणशोकहर्षादिविविधविरुद्धकार्याणां युगपद् दर्शनात् सम्पूर्णं विश्वमेव भेदवदिति चेत्, न, दाहपाकादिविविधाविरुद्धकार्याणामेकस्मिन् वह्नौ दर्शनेन विरोधस्य अनैकान्तिकत्वाद् व्यभिचारित्वादित्यर्थः। इत्ययं चतुर्थहेतुवाक्यार्थः।

**सामर्थ्यातिशयो निखिलभेदप्रपञ्चसम्पादनायै प्रभुः पावकस्येव पाकप्लोषादि-विभागनिमित्तं यदोपपद्यते तदा भेदकल्पनमकारणम्, एकस्यापि तत्सिद्धेः – इति पूर्वोपसंहारः।**

**तदेतद् ऋचाऽभ्यनूक्तम् – "एतावानस्य महिमा" (पुरुष-सू० ३) इति। एतत् परिमाणमस्य सामर्थ्यम् – यदेकोऽपि "सहस्रशीर्षा" (पु० सू० १) इति "यद्भूतं यच्च भाव्यम्" (पु०सू०२) इति । पूर्वर्ग्द्वयनिर्दिष्ट-**

---

नन्वर्थक्रियाव्यवस्थातो भेदोऽवगम्यते, अन्यथा पयसोऽपि तैलं तिलेभ्यश्च दधि जायेतेति चेत, न, कीदृशी सा व्यवस्थेति व्यवस्थास्वरूपस्यैवासिद्धेरिति पञ्चमहेतुवाक्यार्थः। विशदीकृतञ्चैतदधस्तात्।

ननु दध्ने पयो विनियुज्यते, न सिकता इति विनियोगाविनियोगकृतो विषयभेद इति चेत्, न, विनियोगस्याप्यनैकान्तिकत्वात्। यतो ह्येकस्यापि सहकारिसहितस्य विनियोगो भवति, अविनियोगश्च सहकारिरहितस्य केवलस्य। अतो विनियोगाविनियोगाभ्यां भेदसाधनमपि व्यभिचारदोषग्रस्तम्। अयं हि षष्ठहेतुवाक्यार्थः। ननु सहकारिसन्निधानोपहितं भिन्नमेव तद् दधिजनकं पय इति चेत्, न, एवन्तर्हि औपाधिकत्वेन भेदस्य कल्पितत्वसिद्धेरिति सप्तमहेतु-वाक्यार्थः।

योऽपि एकस्योभयं प्रतिजानते – **भेदमभेदं चेति**। तदपि नोचितम्, एकत्रैव विरुद्धधर्मानुप्रवेशमभ्युपगच्छतः पयस्तिलयोर्दधिजनकत्वाजनकत्वाभ्यां विभागस्य दुर्लभत्वप्रसङ्गात् शक्त्यशक्त्योर्विनियोगाविनियोगयोश्चैकस्मिन्नपि समवाय-सम्भवादित्यष्टमहेतुवाक्यार्थ इत्यभिप्रायः। इति श्लोकार्थसङ्ग्रहः।

एकस्यापि विभिन्ना अर्थक्रिया उपपद्यन्त इति स्वपक्षं श्रुतिप्रमाणेन द्रढयत्याचार्यः – **तदेतद् ऋचाऽभ्यनूक्तमिति**। तथा च श्रुतिः – "एतावानस्य महिमा" इति। महिमाशब्दस्य सामर्थ्यमर्थः। कीदृशं तत्सामर्थ्यमिति श्रुतिरेवाह – "सहस्रशीर्षा

**विविधविरुद्धाभिमतधर्मकार्यव्यवहाराश्रयः कथमिति? "अतः" प्रत्यक्षाभिमतात्, "पुरुष एवेदं सर्वम्" (पु० सू० २) इति वा दृष्ट-निर्दिष्टात्, "उतामृतत्वस्य" (पु०सू०२) इति वा देवमनुष्यलोकभेदेन प्रपञ्चादेकैकस्मात् समस्ताच्च वृद्धतरः पुरुषः। तेनास्मिन् परिमितानां विरुद्धाभिमतानामप्यनन्ते न समावेशो न युज्यते।**

**तदेव ज्यायस्त्वं दर्शयति– "पादोऽस्य विश्वा" इति। कृत्स्नोऽपि तावद्भूतप्रपञ्चोऽस्य कनीयान् भाग इति, किं पुनः प्रत्येकम्। तथा हि**

---

पुरुषः", "यद्भूतं यच्च भाव्यम्" इत्यादिः। एकोऽपि पुरुषः सहस्रशीर्षात्मको भूतभव्यात्मकश्चेति एतावत्परिमाणमस्य पुरुषस्य सामर्थ्यमिति श्रुत्यभिप्रायः।

अत्राशङ्कते – **पूर्वर्ग्द्वयेति**। पूर्वोक्ते द्वे ऋचौ स्तः– "सहस्रशीर्षा पुरुषः" इति, "पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्" इति चेति। तस्मिन् ऋग्द्वये निर्दिष्टा ये विरुद्धा अप्यभिमता धर्मव्यवहाराः कार्यव्यवहाराश्च, तेषामाश्रयः स एकः पुरुषः कथं भवेत्? अर्थाद् एकस्य पुरुषस्य विरुद्धानेकप्रपञ्चास्पदत्वं कथं सम्भवेत्? यतो ह्येकस्य सहस्रशीर्षत्वं प्रत्यक्षविरुद्धम्, दशाङ्गुलपरिमाणस्य च तस्य सर्वभूमिव्यापित्वमनुपपन्नमिति शङ्कितुराशयः।

अत्रोत्तरमाह श्रुतिरेव– "अतो ज्यायांश्च पूरुष" इत्यत्र 'अतः' इति 'इदम्' सर्वनाम्ना प्रत्यक्षतः सन्निहितं जगदुच्यते, "पुरुष एवेदं सर्वम्" इति श्रुतिवचनोपस्थापितं वा सर्वं विश्वमुच्यते, "उतामृतत्वस्येशानः" इति श्रुतिशब्दतो वा देवादिलोकप्रपञ्चजातमुच्यते। तथा चायं श्रुत्यर्थः – अतः = दृश्यमानजगतः, श्रुतिनिर्दिष्टाद् विश्वात्, देवमनुष्यादिलोकप्रपञ्चाच्च एकैकस्मात् समुदिताच्च ज्यायान् = वृद्धतरो बृहत्तरो वाऽयं पुरुषः। अत एव सर्वस्माज्ज्यायसि अनन्ते तस्मिन् पुरुषे एकस्मिन्नपि विरुद्धानां विविधानां धर्मव्यवहाराणां कार्यव्यवहाराणां च समावेशो नासम्भवी। यतः सर्वे ते धर्मकर्मव्यवहाराः परिमिताः, अनन्तोऽपरिमितश्च पुरुषः। एतदेवोक्तम् – **"तेनास्मिन्"** इत्यारभ्य **"न समावेशो न युज्यते"** इत्यन्तेन ग्रन्थेन।

**''त्रिपात्'' इत्यपरिमितमनन्तं मरणादिभूतप्रपञ्चधर्मशून्यं रूपं ''दिवि'' प्रद्योतावस्थायां वर्तते, प्रमोदावस्थायां वा, सूर्यमण्डले, द्युस्थाने वा। तत्र हि तदुपास्यम्, तद्धि तस्योपलब्धिस्थानमिति तत्रेत्युच्यते ।**

**अपरः कल्पः – कल्पितेऽपि कार्यभेदाद्व्यवस्थाया(स्थया) वा कारणभेदे किमिति न कार्यान्तरम् ? किमिति वा न सङ्करः? विपरीता वा व्यवस्था? भेदेऽपि पयसः, तिलेभ्य एव तैलं न सिकताभ्यः? भिन्ना**

---

''एतावानस्य'' इत्यस्या ऋचस्तृतीयचतुर्थपादस्थवचनाभ्यां ''पादोऽस्य विश्वा भूतानि, त्रिपादस्यामृतं दिवि'' इत्येताभ्यां पुरुषस्यास्य ज्यायस्त्वमेव प्रदर्शितमित्याह – **तदेवेति** । सम्पूर्णोऽपि भूतप्रपञ्चोऽस्य पुरुषस्य कनीयान् भागोऽल्पीयानंश इति यावत्। तदेव उपपादयति– **तथा हीति** । ''त्रिपात्'' इत्यनेनापरिमितं मरणादिधर्मरहितमनन्तं पुरुषस्य रूपमिति दर्शितम्। तच्च रूपं ''दिवि'' प्रद्योतमानायामवस्थायां वर्तते ''दिव'' धातोः प्रद्योतनार्थत्वात्। तथा प्रमोदावस्थायां वा ''दिव'' धातोः प्रमोदार्थत्वात् ।अथवा सूर्यमण्डले द्युस्थाने वा अस्य त्रिपाद् वर्तत इत्याशयः। तेष्वेवान्यतमस्थाने स पुरुष उपासनीयः। यतो हि तदेव स्थानं तस्य पुरुषस्योपलब्धिस्थानमस्तीति मन्त्रवर्णार्थो बोध्योऽस्ति ।

''एकस्यैवैष महिमा'' इत्यादिश्लोकस्यार्थान्तरमाह – **अपरः कल्प इति**। कल्प्यत इति कल्पः अर्थ इत्यर्थ इति शङ्खपाणिः। कल्पितेऽपीत्यस्य अनुमितेऽपीत्यर्थः ।अयं भावः – कार्यभेदात् पूर्वोक्तव्यवस्थादर्शनाद् वा कारणयो-स्तिलपयसोः परस्परं भेदेऽनुमितेऽपि पयसः कार्यान्तरं तैलं कथं न भवति? इति प्रथमः प्रश्नः। परस्परं मिलित्वा तिलपयसी कथं न किमपि एकमेव कार्यं (एकजातीयं वा कार्यं) कुरुतः? अथवा किमिति तिलपयोभ्यामुभाभ्यां प्रत्येकं तैलं दधि चेत्युभयं नोत्पद्यत इति त्रिविधसङ्करविषयो द्वितीयः प्रश्नः। अथवा पयसस्तैलं तिलेभ्यश्च दधि जायताम् इति विपरीता व्यवस्था वा कथं न भवति? इति तृतीयः प्रश्नः। एवं यथा पयसो भिन्नेभ्यस्तिलेभ्यस्तैलं जायते तथैव पयोभिन्नाभ्यः सिकताभ्योऽपि तैलं कुतो न जायते? पयसः **सकाशात् तिलानां सिकतानाञ्च भेदे विशेषाभावादिति चतुर्थः प्रश्नः।**

**अपि चैककार्याश्चक्षुरालोकादयः, शरशृङ्गादयश्च। भेदेऽपि च तिलेभ्यस्तैलं पयसो दधि, न तु पयसस्तैलं तिलेभ्यो दधि?**

**यदि मतम्– अचिन्त्येभ्यो भावसामर्थ्येभ्यः – अचिन्त्यान्युपपत्तितो भावसामर्थ्यानि "कस्मात्? कथम्?" इति, कार्यदर्शनोन्नेयव्यवस्थानि– तेभ्यः कार्यस्य भेदः, व्यवस्था, न विपर्ययश्चेति। यद्येवम्, एकस्यैव सोऽस्तु सामर्थ्यातिशयः – यदनेकं व्यवस्थितमविपरीतं च कार्यम्। तन्मात्रेण तत्सिद्धेरप्रामाणिकी भावानां भेदकल्पनेति।**

---

प्रश्नार्थमेव विवृणोति – **भिन्ना अपीति** ।भिन्नानामपि चक्षुरालोकादीनामेकं कार्यं दर्शनलक्षणं दृश्यते। एवं भिन्नेभ्योऽपि शरशृङ्गेभ्य एकं कार्यं शरलक्षणं तथा भिन्नेभ्योऽपि गोमयवृश्चिकेभ्य एकं कार्यं वृश्चिकलक्षणं दृश्यत इति स्पष्ट एव कार्यसङ्करः।

अव्यवस्थामपि निगमयति – **भेदेऽपीति**। अत्रत्यमूले "इति कथं भवति?" इति शेषभागः पूरणीयः । तथा चोक्तनिदर्शनैः "कारणभेदात् कार्यभेदः, कारणाभेदात् कार्याभेदः" इति व्यवस्थायां व्यभिचारात् तिलपयसोर्भेदेऽपि तिलेभ्यस्तैलं पयसो दधि, न तु पयसस्तैलं तिलेभ्यो दधि इति कथं भवेदिति सिद्धान्तिप्रश्नाशयः।

उक्तप्रश्नानामवान्तरसमाधानमाह – **यदि मतमिति**। अचिन्त्येभ्यो भावसामर्थ्येभ्यः कार्यभेदो वा कार्यव्यवस्था वा भविष्यति। एतदेव विशदयति– **अचिन्त्यानीति**। अचिन्त्यानि उपपत्तितो भावसामर्थ्यानि भवन्ति। शक्त्य-परपर्यायेभ्योऽचिन्त्यसामर्थ्येभ्य एव कार्यभेदः, कार्यव्यवस्था,अविपरीतता चेति सर्वमुपपत्स्यत इति।

तदेतत् समाधानं सिद्धान्ती प्रत्याचष्टे – **यद्येवमिति**। अयमर्थः – भावसामर्थ्यस्याचिन्त्यत्वाद् यदि कार्यभेदादिकमुपपत्स्यत इति मन्यते तर्हि एकस्यैव सोऽचिन्त्यः कश्चित् सामर्थ्यातिशयो भविष्यति, यद्वशाद् एकस्मादपि

**स्यादेतत् – वह्नेरपि शक्तिभेदनिबन्धनः कार्यभेदः। तन्नैकस्मादनेकं कार्यम्। तत्र यदि वह्निरपि कारणम्, कथं नैकस्मादनेकं कार्यम्? अथ शक्तीनामेव कारणत्वमभिप्रैति, तत्रोच्यते–**

**यथैव भिन्नशक्तीनामभिन्नं रूपमाश्रयः॥ ९॥**

**तथा नानाक्रियाहेतुरूपं किं नाभ्युपेयते?॥ ९–१/२॥**

**एकस्यानेककार्ययोगविरोधाच्छक्तिभेदः कल्प्यते। यदि चैकस्यानेक-**

---

अनेकं व्यवस्थितमविपरीतं कार्यं भविष्यतीति तावन्मात्रेण एकस्मादनेककार्यसिद्धेः कार्यभेदोपपत्तये भावानां भेदकल्पना अप्रामाणिकीति निष्प्रत्यूहोऽद्वैतवादः ।

एकस्मादप्यनेकं कार्यं जायते, एकस्माद् वह्नेर्दाहपाकाविति पूर्वोक्तं दृष्टान्तं स्वपक्षे उपपादयितुं शङ्कते पूर्वपक्षी – **स्यादेतदिति**। **वह्नेरपीति**। नैकस्माद् वह्नेर्दाहपाकौ भवतः, तत्रापि नैकस्मादनेकं कार्यं सिध्यतीति शङ्कार्थः।

शङ्कां निराकरोति सिद्धान्ती – **तत्रेति**। अयं भावः – मन्ये, दाहपाकौ प्रति शक्तिभेदौ प्रयोजकौ भवतः, तथापि तत्र वह्निरपि कारणं भवति न वा? भवति चेत्, स वह्निरेक एवास्तीति सिद्ध एकस्मात् कारणात् कार्यभेदः । यदि मन्यसे, दाहपाकौ प्रति विभिन्नशक्तीनामेव कारणत्वं न तु वह्नेरपीति चेत्, तदपि निराकरोति– **तत्रोच्यत इति**। अत्रायं समाधानश्लोकः –

**यथैव भिन्नशक्तीनामभिन्नं रूपमाश्रयः॥ ९॥**

**तथा नानाक्रियाहेतुरूपं किं नाभ्युपेयते? ॥ ९-१/२ ॥ इति।**

अस्यार्थः – यथा स्वगतविभिन्नानां शक्तीनामेकं वह्निस्वरूपमाश्रयो भवति, तथैव दाहपाकयोर्नानाक्रिययोरेकमेव वह्निस्वरूपं कारणत्वेन कथं न स्वीक्रियते? इति ।

श्लोकार्थमेव विशदयति– **एकस्येति**। इदं वाक्यं पूर्वपक्षाभिप्रायकम्। अयमर्थः–एकस्य वह्न्यादेर्दाहपाकादिरूपानेककार्यैः सम्बन्धविरोधात् तदुपपत्त्यर्थ-

**सम्बन्धविरोधः, कथं नानाभूताभिः शक्तिभिरेकः सम्बध्यते? तत्र यथैकस्य नानाशक्तियोगः, तथा नानाकार्ययोगोऽपि किं नानुज्ञायते?**

**अथ नानाकार्ययोगे विरोधो न नानाशक्तियोगे, (तदा) विशेषहेतुर्वाच्यः। अपि च शक्तीनामव्यतिरेकादेकमनेकात्मकमिष्टम्।**

---

मेकस्मिन् वह्नौ नानाशक्तिभेदः कल्प्यत इति। अत्र समाधानमाह – **यदि चैकस्येत्यादिना।** अयमाशयः– यद्येकस्य वह्न्यादेरनेकैर्दाहपाकादिभिः सम्बन्धो न भवितुमर्हति, विरोधात्, तदा एको वह्निः, स एव नानाशक्तिभिः कथं सम्बद्धो भवितुमर्हति? विरोधादेव।तस्माद् यथा भवान् एकस्य वह्नेर्नानाशक्तिभिः सम्बन्धं स्वीकरोति, तथैकस्यैव तस्य दाहपाकादिरूपनानाकार्यसम्बन्धं कथं नाङ्गीकरोतीति न वयं विद्मः।

पूर्वपक्षी शङ्कते – **अथेति**। अयं भावः – एकस्य नानाकार्यसम्बन्ध एव विरोधो भवति, एकस्य नानाशक्तिसम्बन्धे तु नास्ति विरोधः। अत एव एकस्मिन्नेव वह्नौ प्रतिबन्धकमणिसंयोगे पूर्वतनी दाहकताशक्तिर्नश्यति, उत्तेजकमणिसमवधाने प्रतिबन्धकमण्यपसारणे वा पुनस्तत्रैव शक्त्यन्तरमुत्पद्यते। पुनस्तथैव पूर्वशक्तिनाशः शक्त्यन्तरोत्पत्तिश्चेति एकस्यैव वह्नेर्नानाशक्तिसम्बन्धे विरोधाभावः स्पष्टः। नानाकार्ययोगे तु विरोधोऽस्त्येवेति।

सिद्धान्ती शङ्कां निराकरोति – **विशेषहेतुर्वाच्य इति**। विनिगमकहेतोरभावेन "**एकस्य नानाकार्ययोग एव विरोधो न नानाशक्तियोगे**" इति वक्तुं न शक्यत इत्यभिप्रायः।

पुनः सोपहासं प्रकारान्तरेणोक्तपूर्वपक्षं दूषयति– **अपि चेति**। अयमभिप्रायः– शक्तिशक्तिमतोर्भेदमङ्गीकृत्य एकस्य वह्नेर्या नानाशक्तयस्ता यदि तस्माद् वह्नेरभिन्नास्तदा एकोऽपि वह्निः शक्त्यात्मना नाना स्वीकर्तव्यः। तथा सति वह्निगतमेकत्वं यदि स्वगतेनैवानेकत्वेन न विरुध्यते, तदा कार्यगतेनानेकत्वेन वह्निगतैकत्वस्य को विरोधः? अर्थादेकस्यापि वह्नेरनेकानि कार्याणि भविष्यन्तीत्यत्र नास्ति कश्चिद् विरोधः। तथा च न कार्यभेदेन कारणभेदसिद्धिरिति रहस्यम्।

**तत्रैकत्वं स्वाश्रयसमवायिनाऽनेकत्वेन न विरुध्यते, कार्यगतेन स्वाश्रयान्तर-समवायिना विरुध्यत इति सुभाषितम्।**

**अथार्थान्तरत्वमेव शक्तीनाम् आश्रयार्थो वाच्यः । संश्लेषश्चेत्, न भिन्नत्वे रूपाविभागलक्षणः संश्लेषः, भेद एव न स्यात्।**

**न नैरन्तर्यम्, तच्छक्तिद्रव्यसंयुक्तस्य द्रव्यान्तरस्यापि तच्छक्तित्व-प्रसङ्गात् । न हि द्रव्यंस्यानन्तरं तच्छक्तेर्व्यवहितं भवति, न हि चक्षु-**

---

एतदेवोक्तं मूले – तत्रैकत्वमित्यादिना सुभाषितमित्यन्तेन ग्रन्थेन । एकत्वम् = वह्निगतैकत्वम्, स्वाश्रये = एकत्वाश्रये वह्नौ समवायिना = समवेतेन शक्त्यात्मना अनेकत्वेन न विरुध्यते, अथ च स्वाश्रयाद् वह्नेर्भिन्नं यत् कार्यद्वयं दाहपाकरूपम्, तद्गतेन अनेकत्वेन विरुध्यत इति साधु भाषितं पूर्वपक्षिणा । वह्निस्त्वेमेकोऽ-नेकश्चेत्यत्र न विरोधोऽनुभूयते पूर्वपक्षिणा वह्निगतैकत्वेऽन्यगतानेकत्वे च विरोधोऽनुभूयत इति श्लाघनीयप्रज्ञो देवानां प्रियः पूर्वपक्षीति मन्ये ।

ननु शक्तयो न वह्नेरभिन्नाः किन्तु वह्नेर्व्यतिरिक्ता एव ताः । तथा च शक्तीनामर्थान्तरत्वाद् न तद्गतानेकत्वेन वह्निगतैकत्वस्य विरोधो दर्शयितुं शक्यते, एकत्वानेकत्वयोर्भिन्नाधिकरणत्वात् । एकाधिकरण एव तथाविधधर्मयो-र्विरोधः सम्भवतीति पूर्वपक्षे तदपि दूषयति सिद्धान्ती – **आश्रयार्थो वाच्य इति।** अयमभिप्रायः – यदि वह्निर्भिन्नस्तदाश्रिताः शक्तयश्च भिन्ना इति मन्यते तदा "शक्तीनामाश्रयो वह्निः" इत्यत्र आश्रयपदेन कोऽर्थोऽभिप्रेयते ? संश्लेषो वा ? नैरन्तर्यं वा इति । यदि आश्रयपदेन संश्लेषरूपोऽर्थोऽभिप्रेतस्तदा स संश्लेषो यदि रूपाविभागलक्षणः, अर्थात् तादात्म्यलक्षणो भवेत् तर्हि तादात्म्यरूपः संश्लेषोऽभिन्न एव भवति न भिन्नयोराश्रयाश्रयिणोरिति न तावता वह्निना सह शक्तीनां भेदः सिध्येत् । तस्मात् संश्लेषो नाश्रयपदार्थ इति ।

यद्युच्येत, आश्रयपदार्थो नैरन्तर्यम् इति, तदपि निराकरोति – **न नैरन्तर्यमिति** । अयमर्थः – नैरन्तर्यं नाम अव्यवहितत्वम्, तादृशं च नैरन्तर्यं **तच्छक्तिमता द्रव्येण संयुक्तं यद्द्रव्यान्तरं तस्याप्यस्तीति द्रव्यान्तरस्यापि**

**द्रव्यस्यानन्तरं रूपस्य नानन्तरम् । विभुत्वाच्चाकाशादीनां सर्वार्थ-शक्तिव्यवधानाभावात् सर्वशक्तित्वप्रसङ्गात् ।**

**तस्मादुपकारविशेषात् कुतश्चिदाश्रयः । तत्र यथा भिन्नासु शक्तिषु तद्भेदादुपकारान् भिन्नानेकोऽर्थस्वभावः करोति, तथा कार्याण्यपीति कस्मान्नेष्यते ? एवं तावन्नानुमानेनापि भेदाधिगमः । नार्थापत्त्या च ।**

---

तच्छक्तित्वप्रसङ्गः = तच्छक्तिमत्त्वप्रसङ्गः = तच्छक्त्याश्रयत्वप्रसङ्ग इति यावत् । सा चासौ शक्तिश्च इति व्युत्पत्त्या सा शक्तिर्यस्य द्रव्यस्य, तद् द्रव्यं तच्छक्ति-रित्युक्तं भवति । एवं हि तच्छक्तिद्रव्यसंयुक्तं द्रव्यान्तरमपि तच्छक्ति स्यात् । अत्रापि "तच्छक्ति" इत्यत्र पूर्ववद् बहुव्रीहिसमासो बोध्यः । तच्छक्त्याश्रयः स्यादित्यर्थः । नैरन्तर्यरूपस्य आश्रयत्वस्य द्रव्यान्तरेऽपि सत्त्वात् । तथा च दाहकताशक्तिमता वह्निद्रव्येण संयुक्तस्य काष्ठस्यापि दाहकताशक्तिमत्त्वं प्रसज्येत । न ह्यग्निसंयुक्तं काष्ठं वह्निगतया शक्त्या व्यवधानभागिति शक्ति-नैरन्तर्यरूपस्य आश्रयत्वस्य काष्ठेऽपि सुतरां सत्त्वात् काष्ठमपि दाहशक्त्याश्रयो भवेत्, न तु भवति, तस्मात् शक्तिनैरन्तर्यरूप आश्रयार्थो वह्नौ स्वीकर्तुमशक्यः काष्ठेऽप्यतिप्रसक्तत्वादित्यभिप्रायः । एतदेव व्यतिरेकेणोक्तम्– **न हि द्रव्यस्येति** । स्वोक्तं दृष्टान्तेन समर्थयति– **न हि चक्षुरिति** । अर्थाद् द्रव्यनिरन्तरं = द्रव्याव्यवहितं चक्षुस्तद्रूपेण अनन्तरं निरन्तरम् अव्यवहितं न भवतीति नास्ति, किन्तु द्रव्यरूपमपि द्रव्येण सहैव चक्षुषा अव्यवहितं भवति, अन्यथा चक्षुषा द्रव्यस्य प्रत्यक्षत्वेऽपि तद्रूपस्य प्रत्यक्षं न भवेदिति निर्गलितोऽर्थः ।

नैरन्तर्यस्याश्रयार्थत्वेऽतिप्रसङ्गान्तरमाह – **विभुत्वादिति** । अयमर्थः – आकाशादीनां विभुत्वात् ते सर्वैरेव शक्तिमत्पदार्थैः सह निरन्तरा अव्यवहिताः सन्ति, तथा पदार्थैरव्यवहितास्तच्छक्तिभिरप्यव्यवहिता एव सन्ति चक्षुरिव द्रव्यरूपेणेति आकाशादीनां सर्वशक्तिमत्त्वं प्रसज्येतेति ।

अत्र स्वदृष्ट्याऽऽश्रयार्थमुद्घाटयति सिद्धान्ती–**तस्मादिति** । संश्लेषस्य नैरन्तर्यस्य वा आश्रयार्थत्वादोषात् कुतश्चिद् उपकारविशेषादेव वह्निर्दाहशक्त्याश्रयो

**ये तु मन्यन्ते– सत्यमेतत्, न प्रत्यक्षं भेदाधिगमायालम्। इतरेतराभावांशो हि भावानां भेदः, न सोऽक्षगोचरः, "भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि" (श्लो०वा०, पृ० ४७९)। तथा च न लिङ्गगम्योऽपि, अदृष्टसङ्गतित्वात्। अर्थापत्तिरपि कार्यव्यवस्थाहेतुका स्यात्, साऽसिद्धे भेदे कार्यव्यवस्थाया एवानुपपत्तेस्तत्रायुक्ता।**

---

भवति नान्यथेति स्वीकरणीयं पूर्वपक्षिणा। अर्थाद् यस्या यस्या शक्तेर्दाहजनने वह्निरुपकारविशेषं करोति, तस्यास्तस्या एव शक्तेराश्रयो भवति स वह्निर्नान्यस्याः। स चोपकारः शक्तिभेदात् प्रतिशक्ति भिन्नो भिन्नो भवति। तदेवं यथा एकस्माद् वह्नेर्विभिन्नशक्तीनां विभिन्ना उपकाराः सिध्यन्ति, तथैकस्माद् वह्नेरनेककार्याण्यपि सिध्येयुः, काऽनुपपत्तिरिति कार्यभेदात् कारणभेदसाधनं पूर्वपक्षिणां निर्युक्तिकमिति मन्तव्यम्। एतदेवोक्तं मूले– "तत्र यथेत्यारभ्य कथं नेष्यते" इत्यन्तेन ग्रन्थेन।

उपसंहरति– **एवमिति**। अर्थात् पूर्वोक्तदोषेभ्यो नानुमानेनापि भेदसिद्धिरिति। तथा यथा नानुमानेन तथाऽर्थापत्त्यापि न भेदसिद्धिरिति बोध्यम्। अत्र कार्यभेदाद् यत् कारणभेदानुमानं बौद्धानाम्, तदेव कार्यभेदाऽन्यथानुपपत्त्या कारणभेदसाधनमर्थापत्तिरन्येषामिति अनुमाननिरासेनैवार्थापत्तिनिरासोऽपि गतार्थ इत्याशयः।

अनुपलब्धिप्रमाणेन भेदज्ञानं भविष्यतीति केषांश्चिन्मतं दूषयितुमुपक्रमते– **ये तु मन्यन्त इति**। तत्र तावद् भेदसाधने पूवोक्तं प्रत्यक्षादिप्रमाणसामर्थ्यं प्रति स्वाभ्युपगमं सूचयति– **सत्यमेतदिति**। तदेव विवृणोति– न प्रत्यक्षमित्यादिना 'तत्रायुक्ता' इत्यन्तेन ग्रन्थेन।

अयमभिप्रायः – प्रत्यक्षं प्रमाणं हि भावानां परस्परं भेदमवगमयितुं नास्ति समर्थम्। यतो हि भावानां भेदोऽन्योन्याभावरूपः, स चाभावोऽक्षाणाम्=इन्द्रियाणां गोचरो विषयो भवितुं नार्हति। तदुक्तं भट्टैः श्लोकवार्तिके – "भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि" इति (श्लोकवा०, पृ० ४७९), अर्थात् प्रत्यक्षं हि इन्द्रिय-

**तस्मात् सदुपलम्भहेतुभ्यः प्रमाणान्तरमेवाभावायोपासनीयम्। विधायकाद् वा प्रमाणान्तरमेव व्यवच्छेदकमभावाख्यम्। तन्निबन्धना हि भावानामसङ्कीर्णस्वभावता। यदवोचन्–**

**"वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यसमाश्रया"** (श्लो० वा०, पृ० ४७३)

**इति। तान् प्रत्युच्यते–**

**अन्योन्यसंश्रयाद्भेदो न प्रमान्तरसाधनः॥ १०॥**

**नास्मिन्नयं नायमयमिति भेदाद् विना न धीः॥ १०-१/२॥**

---

संयोगाद् भवति, स चेन्द्रियसंयोगो भावांशेनैव साकं भवितुमर्हति नाभावांशेन अन्योन्याभावेन। भावांशस्यैव इन्द्रियसंयोगयोग्यत्वादिति भावः।

न चेतरेतराभावात्मको भेदो लिङ्गेनानुमेय इति वाच्यम्, अभावस्य साध्यस्य प्रत्यक्षादिप्रमाणान्तरागोचरतया पूर्वमदृष्टत्वेन तेन सह लिङ्गस्य व्याप्तिग्रहासम्भवाद् गृहीतव्याप्तिसम्बन्धेनैव हेतुना साध्यस्यानुमानात्।

पयस एव दधि जायते न तिलेभ्य इति या व्यवस्था साऽन्यथानुपपन्ना सती तिलेभ्यः पयसो भेदमर्थापत्त्या गमयतीत्यपि न चारु, अन्योन्याश्रयदोषग्रस्तत्वात्, यतो भेदे सति तादृशी व्यवस्था व्यवस्थायां च सत्यां भेद इति स्फुटोऽन्योन्याश्रयदोषः। तथा च नार्थापत्तिरपि नान्योन्याभावरूपे भेदे प्रमाणमिति बोध्यम्। एतदभिप्रायेणोक्तम्– **अर्थापत्तिरपीत्यादि**।

भाट्टमतमुपसंहरन् निष्कर्षमाह – **तस्मादिति**। यस्मात् सदुपलम्भहेतवोऽर्थाद् भावबोधकप्रमाणानि प्रत्यक्षानुमानार्थापत्तयो नान्योन्याभावरूपं भेदमवगमयितुमलम्, तस्मात् तेभ्यो व्यतिरिक्तमेव प्रमाणमनुपलब्धिर्नाम अभाव (भेद) बोधाय उपासनीयं=स्वीकरणीयम् इति तात्पर्यम्। अस्मिन् पक्षे भावोपलम्भसामग्र्यभाव एवाभावप्रमितौ कारणमिति अभिप्रायप्रकाशिकाकाराश्चित्सुखमुनयः। सदुपलम्भहेतुभ्यः प्रमाणान्तरं प्रमाणानुत्पादलक्षणमिति शङ्खपाणिः। तच्च प्रत्यक्षादिसामग्र्यभावपर्यवसितम्। एवं विधायकात् = भावज्ञानात्, प्रमाणान्तरं ज्ञानान्तरं नास्तीति ज्ञानमिति च शङ्खपाणिः।

**न खलु यद्व्यवच्छिद्यते यतश्च व्यवच्छिद्यते तयोरप्रतिपत्तौ व्यवच्छेदगतिः, नानपेक्षितविषयनिषेध्यो निषेधोऽस्ति, सन् वा शून्यता- मापादयेत्, न भेदमित्युक्तम्। तेषामपि वचः-**

---

अथवा विधायकात् प्रत्यक्षादिप्रमाणाद् भिन्नमेव व्यवच्छेदकं प्रमाण- मभावाभिधानम् । एतत्प्रमाणबलादेव भावानामसङ्कीर्णस्वभावता = परस्परभिन्न- स्वभावताव्यवहारो भवति । इदमेव हि अभावप्रमाणस्य व्यच्छेदकत्वं यद् भावानां परस्परमसङ्कीर्णस्वभावताव्यवहारसम्पादकत्वमिति बोध्यम् । यदाहुर्भट्टपादाः - "वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यसमाश्रया" इति । तत्प्रामाण्यसमाश्रया = व्यवच्छेदकीभूताभावाख्यप्रमाणनिबन्धनेत्यर्थः । तान् प्रति कारिकेयं पठ्यते-

**अन्योन्यसंश्रयाद् भेदो न प्रमान्तरसाधनः॥ १०॥**

**नास्मिन्नयं नायमयमिति भेदाद् विना न धीः ॥ १०-१/२॥**

अयं श्लोकार्थः - प्रतियोग्यनुयोगिनोः संश्रयात् प्रतीयमानो भेदः प्रत्यक्षाद्य- तिरिक्तप्रमाणसाधनो नास्ति, प्रत्यक्षाद्यतिरिक्तेन अनुपलब्ध्याख्यप्रमाणेन न प्रत्याय्यत इत्यर्थः । यतः "नास्मिन् अयं तथा नायमयम्" इति धीः प्रतियोग्यनुयोगिनो- र्भेदाद् विशेषाद् विना नैव भवतीति । न भावातिरिक्तभेदबोधाय अनुपलब्धि- नामकप्रमाणान्तरापेक्षेत्यर्थः । यद्यपि भेद इह विचारविषयः, स तादात्म्याभावरूपो न आधाराधेयभावः, अतः श्लोके "नायमयम्" इत्येव वाच्यम्, न तु "नास्मिन्नयम्" इति, तथापि दृष्टान्तार्थं तदुक्तमतो न तदुक्तिर्व्यर्थेति ध्येयम् ।

मूलकारः स्वयं श्लोकं व्याचष्टे- **न खल्विति** । प्रसिद्धमेतद् यत् "नास्मिन् इदम्", "नायमयम्" इत्यादौ यद् व्यवच्छिद्यते यतश्च व्यवच्छिद्यते तयोरप्रतीतौ व्यवच्छेदो (भेदो) नावगन्तुं शक्यते ।एवं विषयमनुयोगिनं निषेध्यं प्रतियोगिनमनपेक्ष्य = उपेक्ष्य "नेदमिह", "नायमयम्" इति निषेधो नैव भवति । यदि भवेत् तदा "न" इत्येतावन्मात्रं भवन् शून्यतामेव बोधयेत्, न भावविशेषयोः परस्परं भेदं बोधयेदिति भावः । एतच्च "अपि चानपेक्षितविषयनिषेध्ये व्यवच्छेदे शून्यता प्रमाणार्थः" इति तर्ककाण्डस्य द्वितीयश्लोकव्याख्यायां प्रतिपादितमिति ज्ञेयम् ।

**"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।**

**मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया"[१] ॥(श्लो०वा०पृ०४८२)**

**तयोश्च प्रतिपत्तिर्यदि नासङ्कीर्णस्वभावयोः, अपि तु वस्तुमात्रत्वेन, व्यवच्छेद्य-व्यवच्छेदावधिविभागाभावात्। न निषेधसम्भवोऽर्थमात्रे ह्यविभागे। विषयत्वेनापेक्षिते न निषेध्यम्, निषेध्यत्वेनापेक्षिते न विषयविशेषः। तत्रात्यन्ताय निषेधः स्यात्। स च न सिद्धत्वेन असिद्धत्वेन वा युज्यत इत्युक्तम्।**

---

विषयनिषेध्यसापेक्षे व्यवच्छेदे भेदवादिनामपि वचनं प्रमाणयति—

**"गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्।**

**मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया"**॥ इति।

"वस्तुसद्भावं गृहीत्वा" इत्यनेन विषयापेक्षा दर्शिता, अर्थाद् अनुयोगिनं विषयं प्रत्यक्षतो ज्ञात्वा प्रतियोगिनं च स्मृत्वा अक्षाणि इन्द्रियाण्यनपेक्ष्यैवाभावज्ञानं जायते। तत्र नेन्द्रियं प्रत्यक्षं प्रमाणं कारणमिति।

ननु नास्तिताज्ञाने भवतु नाम विषयव्यवच्छेद्ययोः प्रतीत्यपेक्षा, तावता अभेदवादिनां क उपकारः? ततोऽपि भेदप्रतीतेरेव फलीभूतत्वात् इति प्रश्ने ततोऽपि अभेदपक्ष एव पर्यवस्यतीति तदीयरीत्यैवोपपादयति— **तयोश्चेत्यादिना**। अयं भावः — नास्मिन्नयम् इत्यत्र विषयव्यच्छेद्ययोः प्रतीतिः किं परस्परसङ्कीर्णस्वभावयोरसङ्कीर्णस्वभावयोर्वा भवतीति विकल्पे सङ्कीर्णस्वभावत्वेऽभेदे पर्यवसानम्। नाप्यसङ्कीर्णस्वभावयोरिति सम्भवति, इतरेतराश्रयत्वप्रसङ्गात्, भेदे सिद्धे असङ्कीर्णस्वभावताधिगमः, असङ्कीर्णस्वभावतासिद्धौ च भेदसिद्धिरिति। अतः सङ्कीर्णत्वासङ्कीर्णत्वनिरपेक्षवस्तुमात्रत्वेनैव विषयव्यवच्छेद्ययोः प्रतीतिरेष्टव्या, अयं

---

१. पश्यतः श्वेतिमारूपं ह्रेषाशब्दं च शृण्वतः। खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः॥ (श्लो० वा०) शब्दापेक्षया पदार्थकरणकशाब्दबोधोदाहरणमिदम्।

**कस्यचित् कुतश्चिच्च भेदप्रतिपत्तौ सर्वस्य सर्वतो भेदगतिः स्यात्, अविशेषात्। तस्मादनेनासंकीर्णस्वभावेन भिन्नावेव प्रतिपद्य विषय-**

---

व्यवच्छेद्यः, अयं व्यवच्छेदावधिर्विषय इति विभागस्याभावादिति। वस्तुमात्रत्वेन प्रतीतिपक्षे च निषेध एव न सम्भवति अविभक्तस्य वस्तुमात्रस्य प्रतीतत्वात्। तदेवोक्तम् मूले – **"न निषेधसम्भवः, अर्थमात्रे ह्यविभागे"** इति।

निषेधासम्भवमेवोपपादयति– **विषयत्वेनापेक्षित इत्यादिना**। तत्रार्थमात्रं यदि विषयत्वेनाभिप्रेतं तदा निषेध्यवस्त्वभावाद् न निषेधसम्भवः। यदि तदर्थमात्रं निषेध्यत्वेनाभिप्रेतं तदापि न निषेधः सम्भवति निषेधावधेर्विषयविशेषस्याभावात्। निषेधावधिभूतस्य विषयस्य अनुयोगिनोऽभावेऽपि भवन् 'घटो नास्तीति' घटस्य निषेध आत्यन्तिक आपद्येत। न चेष्टापत्तिरिति वाच्यम्, सिद्ध्यसिद्धिभ्यामात्यन्तिक-निषेधस्यायुक्तत्वात्। एतदेवोक्तं मूले – **स च न सिद्धत्वेन असिद्धत्वेन वा युज्यत इति।**

अयमाशयः – यदि निषेध्यवस्तु अन्यत्र सिद्धं तदा देशसामान्ये तस्य निषेधो नार्हति भवितुम्। एवं यो निषध्यो न क्वचिदपि सिद्धस्तस्य नात्यन्तिको निषेधो भवितुमर्हति, अतिप्रसक्ते, प्रसक्तस्यैव निषेधात्। एतच्च "अन्यथा दैवनिषिद्धे कः प्रतिषेधोऽप्राप्तरूपे ?" **इत्यादिनोक्तम्**। तथा चाभावाप्रतीतिरेवेति न कथञ्चिद् भेदसिद्धिस्तन्मतेऽपीति तात्पर्यम्।

ननु न वस्तुमात्रत्वेन विषयं निषेध्यं (अनुयोगिनं प्रतियोगिनं) वा प्रतिपद्यामहे किन्तु वस्तुविशेषत्वेनैव। तेन कस्यचित् कुतश्चिद् भेदप्रतिपत्तिः। अतो न विषयव्यवच्छेद्ययोरविभागापत्त्या तयोरेकतरस्य विषयस्य व्यवच्छेद्यस्य वा पूर्वोक्तोऽसम्भवः प्रसक्तो भविष्यतीति शङ्कायामुत्तरमाह– **कस्यचिदिति**।

अयं भावः – अनिर्धारितविशेषस्य यस्य कस्यचिद् यतः कुतश्चिद् भेदप्रतीतौ स्वीक्रियमाणायां विशेषावधारणाभावात् सर्वस्य सर्वस्माद् भेदावगमः स्यादिति रामाधातुराशयः। स्वाभिप्रायं निष्कर्षयति सिद्धान्तवादी – **तस्मादिति**। तस्मात् सर्वस्य सर्वस्माद् भेदप्रतीतिर्न प्रसज्येतेति प्रयोजनाद् असङ्कीर्णस्वभावेन = भिन्नस्वभावेन विशिष्टौ भिन्नावेव विषयनिषेध्यौ प्रतिपद्य "नेदमिह"

**निषेध्यौ "नेदमिह" नायमयम् इति व्यवच्छेदः प्रतिपत्तव्यः, सम्भवाद् नियमाच्च। न चान्यथा प्रतियोगित्वम्, सामान्योपलब्धौ च स्थाणौ पुरुषाभावप्रतिपत्त्यभावात्।**

**तथा च सिद्धविषयनिषेध्याङ्गीकरणेन व्यवच्छेदमात्रविधायिन्य-भावप्रतिपत्तिः प्रत्यात्ममुपलक्ष्यते। तथा च इतरेतराश्रयत्वम् असङ्कर-पूर्वमभावज्ञानम्, ततश्चासङ्करसिद्धिरिति।**

---

"नायमयम्" इति **व्यवच्छेदो = निषेधः** प्रतिपत्तव्यो भेदवादिना । एवं सत्येव स व्यवच्छेदः सम्भवेत् , नान्यथा । अर्थाद् विषयनिषेध्ययोर्विभागाप्रतीतौ (भेदा-प्रतीतौ) व्यवच्छेद एव न सम्भवेत् । एतदेवोक्तं मूले – **सम्भवादिति** । एवं भिन्नस्वभावेन विशिष्टयोरेव विषयनिषेध्ययोः प्रतीतिपुरस्सरं निषेधप्रतिपत्तौ स्वीक्रियमाणायां क्वचिदेव घटादिर्निषिध्यते न सर्वत्रेति नियमोऽप्युपपद्यते, अन्यथा सर्वत्रैव घटादिर्निषिध्येतेत्याशयः। एतदेवोक्तं मूले – **नियमाच्चेति**।

किञ्च प्रतियोग्येव क्वचिद् निषेध्यो भवति नाप्रतियोगी । प्रतियोगित्वं च भिन्नस्वभावावगतिं विना नोपपद्यते, यस्याभावो भेदो वा स प्रतियोगीति तल्लक्षणात् । भिन्नस्वभावावगतिं विनैव प्रतियोगित्वे तु स्वयं स्वं प्रति प्रतियोगी स्यात् ।

एवं विषयनिषेध्ययोर्भिन्नस्वभावावगतिं विनापि यदि निषेधः प्रतीयेत, तदा विशेषेण अप्रतीते ऊर्ध्वत्वसामान्यमात्रेण प्रतीते स्थाणौ "नायं पुरुषः" इति पुरुषाभावप्रतिपत्तिः स्यात्, न चैवं भवति । भवति तु स्थाणौ करचरणादि-रहितत्वेन प्रतीते करचरणादिसहितस्य पुरुषस्याभावप्रतिपत्तिः ।अतो विषयनिषेध्यौ भिन्नस्वभावाववगत्यैव निषेधः प्रत्येतव्यो नान्यथेति स्वीकरणीयमेव पूर्णपक्षिणा ।

तथा चैतत् सिद्धं यद् विषयनिषेध्यौ पूर्वमेव भिन्नौ सिद्धौ अभावप्रति-पत्तिस्तु व्यवच्छेदमात्रविधायिनी पश्चादिति । एवं सति **स्फुटोऽन्योन्याश्रयत्वदोषः**, विषयनिषेध्ययोरसङ्कीर्णत्वज्ञाने (भेदज्ञाने) सति अभावज्ञानम्, सति चाभावज्ञाने (व्यवच्छेदज्ञाने) तयोरन्योन्याभावात्मकासङ्कीर्णत्वज्ञानमिति भावः ।

**अपि च न प्रमाणानुत्पादमात्रादभावज्ञानम्, सुषुप्तादावनुत्पत्तेः। तस्मात् सत्सु प्रमाणकारणेषु प्रमाणानुत्पादोऽभावज्ञानहेतुरिष्टः। न च तस्य स्वरूपभेदः कश्चित्, येन सामर्थ्यातिशयाच्चक्षुरादिवद् बोधकः, किन्तु नान्तरीयकत्वात्। नान्तरेण प्रमेयाभावं सत्सु प्रमाणहेतुषु प्रमाणानुत्पादः, असत्सु तु सत्यपि प्रमेये तदभावात् स्यादिति। तथा च लिङ्गवद् ज्ञानापेक्षः**

---

अभावज्ञानं प्रति भिन्नत्वेन विषयनिषेध्यप्रतिपत्तेरपेक्षितत्वेऽन्योन्याश्रयत्वं पूर्वमुक्तम्, इदानीं योग्यानुपलब्धेरपेक्षितत्वेऽप्यन्योन्याश्रयत्वमापादयति – **अपि चेत्यादिना स्यादितीत्यन्तेन** ग्रन्थेन। अयं भावः – न प्रमाणानुत्पादमात्रात् = अनुपलब्धिमात्राद् अभावज्ञानं भवति, किन्तु योग्यानुपलब्धितः। अत्र हेतुमाह – **सुषुप्तादावनुत्पत्तेरिति**। आदिपदेन मूर्च्छादिर्गृह्यते। अर्थाद् यदि अनुपलब्धिमात्राद् वस्त्वभावो ज्ञायते तदा सुषुप्तादावपि वस्त्वभावज्ञानं जायेत, न तु जायते। तस्मात् प्रमाणकारणेषु = उपलब्धिकारणेषु सत्सु यः प्रमाणानुत्पादः = या अनुपलब्धिः, सैव वस्त्वभावज्ञानं प्रति हेतुरिति स्वीकरणीयम्। एतादृशी अनुपलब्धिरेव योग्यानुपलब्धिः, सैव हि अभावज्ञाने हेतुरिति। अत्रत्यमूले प्रमाणपदमुपलब्ध्यर्थकमिति ज्ञेयम्।

इदमत्र रहस्यम् – सुषुप्ते या वस्त्वनुपलब्धिः, सा प्रमाण(ज्ञान)सामग्रीवैकल्यप्रयुक्ता। तत्र च नास्ति कश्चित् स्वरूपभेदः = सामर्थ्यातिशयो यत्प्रभावात् स्वरूपसत्यपि सा चक्षुरादिरिव रूपादिज्ञानं वस्त्वभावज्ञानं जनयेत्। अतः सुषुप्तमूर्च्छाद्यवस्थापन्नाऽनुपलब्धिर्न वस्त्वभावं गमयिष्यति, तस्या वस्त्वभावनान्तरीयकत्वाभावात्। तस्या वस्त्वभावाव्याप्तत्वाद् इत्यर्थः। व्याप्त एव (नान्तरीयक एव) हि हेतुः साध्यगमको भवति नाव्याप्त इति सुप्रसिद्धमेतत्। एतदभिप्रेत्योक्तं मूले "**किन्तु नान्तरीयकत्वात्**" इति।

यत्र तु सत्स्वपि ज्ञानहेतुषु प्रमाणानुत्पादः = ज्ञानानुत्पादः, वस्त्वनुपलब्धिरिति यावत्, तत्रत्याऽनुपलब्धिः प्रमेयाभावमन्तरेण न भवितुमर्हतीति वस्त्वभावनान्तरीयका (वस्त्वभावव्याप्ता) सा अनुपलब्धिः, तस्माद् ज्ञानसामग्रीसत्त्वे या वस्त्वनुपलब्धिः सा वस्त्वभावं गमयिष्यति, वस्त्वभावव्याप्तत्वात्। व्याप्तश्च धूमो ज्ञातः सन्नेव

**प्रतिपत्तेर्जनकः। स च यदि वस्त्वन्तरज्ञानम्, नासिद्धेवस्तुभेदे सिध्यति। ज्ञेयभेदानुमेयो हि ज्ञेयानुमेयानां ज्ञानानां भेदः। तथा च वस्तुभेदसिद्धिपूर्विकैवाभावाद् भेदावगतिरितीतरेतराश्रयत्वम्।**

---

वह्निबोधको भवतीत्यनुपलब्धिरपि ज्ञाता सत्येव वस्त्वभावज्ञानं कारयिष्यति। अयमेवाभिप्रायो व्यञ्जितो मूले – "**नान्तरेण प्रमेयाभावं सत्सु प्रमाणहेतुषु प्रमाणानुत्पादः**" इति।

ज्ञानसामग्रीसत्त्वे प्रमेयाभावाद् वस्त्वनुपलब्धिरिति निरूप्य ज्ञानसामग्र्या असत्त्वे तु प्रमेयवस्तुनि विद्यमानेऽपि सामग्र्यभावादेव वस्त्वनुपलब्धिः, यथा स्वप्नमूर्च्छादाविति निष्कृष्टार्थ उक्तः "**असत्सु तु**" इत्यनेन मूलेन।

अत्र प्रकृतानुसारिनिष्कर्षमाह – वह्न्यनुमितौ ज्ञातधूमवद् अभावज्ञानेऽपि तन्नान्तरीयका वस्त्वनुपलब्धिरपि ज्ञातैव हेतुर्भविष्यति, नाज्ञाता, नान्तरीयकतया हेतुत्वात्। एतदुक्तं मूले – तथा च लिङ्गवद् ज्ञानापेक्षः प्रतिपत्तेर्जनक इति। तथा च स्फुटोऽयान्योन्याश्रय दोषः – अनुपलब्धिज्ञाने सति वस्त्वभावज्ञानम्, अभावज्ञाने च सत्यनुपलब्धिज्ञानमिति।

कथमिति चेत्, इत्थमत्र शङ्खपाणिसरणिरवधारणीया – सा च (अनुपलब्धिः) द्विविधेष्टा – प्रतियोग्युपलब्धिरूपेणात्मनोऽपरिमाणो वा ततोऽन्यस्य वा विषयस्य ज्ञानम्। तदुक्तम् – "**सात्मनोऽपरिणामो वा विज्ञानं वान्यवस्तुनि**" इति। तत्र यद्यन्यवस्तुंज्ञानमनुपलब्धिस्ततो नासिद्धे वस्तुभेदे सा सिध्यति, अतस्तज्ज्ञानाय वस्तुभेदो ज्ञातव्यः। अत्र 'स च' इत्यनेन पूर्वप्रक्रान्तः 'प्रमाणानुत्पादो' ग्राह्यः, तस्य च 'वस्त्वंनुपलब्धिः' इत्यर्थः। ततस्तु भेदं विनाऽन्यत्वासिद्धेर्भेदे ज्ञातेऽनुप-लब्धिज्ञानम्, तस्यां च ज्ञातायामन्योन्याभावात्मकभेदज्ञानमितीतरेतराश्रयत्वं स्यात्। तथा चानुपलब्धिरेव यदा ज्ञातुमशक्या तदा का कथा तदधीनाभावज्ञानस्येति। एतदेवोक्तं मूले – **स च यदीत्यादिना।**

ननु निषेध्यस्य प्रतियोगिनो ज्ञानाद् अन्यद् यद् ज्ञानं वस्त्वन्तरस्य, तज्ज्ञानमेवानुपलब्धिः। अतो "विज्ञानं वान्यस्तुनि" इति पक्षे ज्ञानभेदो गम्यते, न वस्तुभेदः, तत्कथमुच्यते – "नासिद्धे वस्तुभेदे सिध्यति"

**अथात्मनोऽपरिणामः, न स स्तिमितावस्था, सर्वाप्रतिपत्तौ कस्यचिद-भावस्यानवगतेः। तस्मात् सत्यपि वस्त्वन्तरज्ञानरूपपरिणामे तज्ज्ञान-रूपपरिणामाभावोऽभावज्ञानहेतुः। न चैष विशेषः प्राग् वस्तुभेदसिद्धेः सिध्यतीति तदेवेतरेतराश्रयत्वम्।**

**ये त्वाहुः— दर्शनादेव भावानां भेदः सिध्यति, तथा हि— निर्विकल्पकस्य प्रत्यक्षस्य सामान्यविषयत्वमपाकुर्वतोक्तम्— "तदयुक्तं**

---

अनुपलब्धिरिति शेषः। इत्येवमाशङ्कायामाह— **ज्ञेयभेदानुमेयो हीति**। अयं भावः— 'अनुपलब्धिशब्दस्य द्वितीयार्थपक्षे ज्ञानभेदो गम्यते' इति मन्ये, तथापि ज्ञेयानुमेयं तज्ज्ञानम्, अतस्तस्य भेदोऽपि ज्ञेयभेदानुमेयः। तथा च तदर्थं ज्ञेयवस्तुभेदो हेतुतया विज्ञातव्य एव। ततस्तु भेदं विनाऽन्यत्वासिद्धे-र्भेदे ज्ञातेऽनुपलब्धिज्ञानम्, तस्यां च ज्ञातायामन्योन्याभावात्मकभेदज्ञान-मितीतरेतराश्रयत्वं स्यात्। तथा चानुपलब्धिरेव यदा ज्ञातुमशक्या तदा का कथा तदधीनाभावज्ञानस्येति।

अथात्मनोऽपरिणामोऽनुपलब्धिः, साऽपि नात्मनः सर्वविज्ञानशून्यतारूपा स्तिमितावस्था, सर्वाप्रतिपत्तौ कस्यचिन्नियतस्य पटादेरभावान्न पटाद्युपलब्धिरूपेण आत्मनःपरिणामो येन तत्प्रयुक्ता घटोपलब्धिरूपेणात्मनोऽपरिमाणरूपा घटानुप-लब्धिर्भवेत्। तस्माद् घटादिभ्यो भिन्ने पटादौ ज्ञानपरिणामे सत्येव तद्भिन्ने घटादौ ज्ञानापरिणामोऽभावज्ञानहेतुरिति वाच्यम्। न चैषोऽनुपलब्धेर्विशेषो घटपटयो-र्भेदज्ञानात् प्राक् सिध्यति। ततश्च पूर्ववदितरेतराश्रयत्वम्। घटपटयोर्भेदज्ञानेऽनुप-लब्धिज्ञानम्, तस्मिंश्च सति भेदरूपेणाभावज्ञानसम्भवादिति भावः। एतदाशये-नोक्तं मूले— **तस्मादित्यादिना तदेवेतरेतराश्रयत्वमित्यन्तेन** ग्रन्थेन।

ननु प्रत्यक्षेणैव भेदो गृह्यते। तथा हि— निर्विकल्पकप्रत्यक्षस्य सामान्य-मात्रविषयतामपाकुर्वता श्लोकवार्तिककृता—"तदयुक्तम्, प्रतिद्रव्यं भिन्न-रूपेणोपलम्भात्" इत्याद्युक्तमिति ये त्वाहुः भट्टानुसारिणः, ते प्रागेव "आहुर्विधातृ-प्रत्यक्षम्" इत्यत्र निरस्ताः, प्रत्यक्षस्य विधायकत्वेन भेदाग्राहकत्वादितिभावः।

**प्रतिद्रव्यं भिन्नरूपेणोपलम्भात्'' (८ श्लो० वा० पृ०१७०) इति। यस्तु संयोगात् समवायाद् वा सङ्करः, सोऽभावाख्येन प्रमाणेनापनीयत इति, ते प्रागेव प्रत्युक्ताः।**

**येऽपि — विधायकप्रत्यक्षपुरस्सरं प्रत्यक्षान्तरमेव वस्तुग्रहणप्रतियोगिस्मरणेतिकर्तव्यतानुगृहीताक्षप्रतिलब्धजन्म व्यवच्छेदकं मन्यन्ते। यथैव सविकल्पस्य वस्तुग्रहणस्य पश्चाज्जन्म, शब्दस्मरणव्यवधिश्च, न चानैन्द्रियकत्वम्, इतिकर्तव्यताविशेषानुगृहीतादिन्द्रियात् तदुत्पत्तेः, एवं नास्तीत्यपि ज्ञानस्येति ब्रुवन्तस्तान् प्रतीदमेव वक्तव्यम् —**

---

अत्रत्यो विशेष उच्यते — **'यस्तु संयोगात्'** इत्यादिना।

अयमर्थः — ननु ''वस्त्वसङ्करसिद्धिश्च तत्प्रामाण्यमुपाश्रिता'' इत्यपि भट्टेन वार्तिककृतैवोक्तम्। तत्प्रामाण्यमभावप्रामाण्यमाश्रितेत्यर्थः। तथा च भेदग्राहकत्वं प्रत्यक्षस्यैवेति तदुक्तिर्व्याहतेति चेत्, न, तत्र संयोगात्मकस्य समवायात्मकस्यैव साङ्कर्यस्याभावस्य वार्तिककृदभिप्रेतत्वात्। तथा च पूर्वं तादात्म्याख्यं समवायाख्यं च साङ्कर्यं प्रत्यक्षप्रमाणेन निराकृतम्, इदानीं तु संयोगाख्यं समवायाख्यं च 'वस्त्वसङ्करसिद्धिश्च' इति वचनेन निराक्रियत इति नास्ति वचोव्याघातदोषः। एवं हि प्रत्यक्षानुपलब्धिभ्यां प्रमाणाभ्यां साङ्कर्यवारणं भट्टाभिप्रेतं मन्तव्यम्। एतदेवोक्तं मूले — **यस्तु संयोगात् समवायाद्वेति**। इदमत्र रहस्यम् — क्षीरनीरयोः संयोगात् सङ्करः, रूपरूपिणोः समवायात् सङ्करः। तत्रान्यतरोपलम्भेऽपि अन्यतरानुपलब्धिलक्षणाभावाख्यप्रमाणेन स निराक्रियत इति नाभावप्रमाणस्य निर्विषयत्वप्रसङ्ग इति।

उपर्युक्तभट्टमतानुसारिणः ''आहुर्विधातृप्रत्यक्षम्'' इति श्लोकेन पूर्वमेव निरस्ता इति समाधानं स्मार्यते — **ते प्रागेव प्रत्युक्ता** इति। प्रत्यक्षस्य विधायकत्वेन भेदाग्राहकत्वादिति तात्पर्यम्। ''न भेदो वस्तुनो रूपम्'' इत्यपि प्रागुक्तं समाधानं बोध्यमिति।

**"अन्योन्यसंश्रयाद्भेदो न प्रमान्तरसाधनः" । प्रत्यक्षान्तरसाधन इत्यर्थः । 'अयमसौ न भवति' इति ज्ञानं प्रत्यक्षं वा प्रमाणान्तरं वा, सर्वथा विषयनिषेध्यविभागादृते न निषेधसम्भव इति ।**

**किञ्च,**

**मीयमानैकरूपेषु न निषेधोऽवकाशवान् ॥ ११ ॥**

---

येऽपि काणादा एवमाहुः – भूतलादिवस्तुग्रहणप्रतियोगिस्मरणरूपयेतिकर्तव्यतयाऽनुगृहीतादक्षात् संयुक्तविशेषणसन्निकर्षेण लब्धं जन्म येन तत्प्रत्यक्षान्तरम् अभावग्राहकम् । न च वाच्यम्– अक्षजं तच्चेत्, विषयज्ञानवत् प्रथममेव स्यात्, न पश्चात् । प्रतियोगिस्मरणव्यवहिते चाक्षव्यापारे जातं कथं तदक्षजम् इति ? यतो यथा शब्दस्मरणापेक्षितत्वात् सविकल्पकं निर्विकल्पकात् पश्चाद्भावि, यथा च शब्दस्मरणव्यवधानेऽपि तदनुगृहीतादक्षादुत्पत्तेर्नानक्षजम्, तथा "नास्ति" इत्यपि ज्ञानं प्रतियोगिस्मरणापेक्षित्वात् पश्चाद्भावि, प्रतियोगिस्मृतिव्यवधानेऽपि च तदनुगृहीतादक्षादुत्पत्तेश्चाक्षजमिति । तान् प्रतीदमेवोत्तरं वक्तव्यम् – **"अन्योन्यसंश्रयात्"** इति । "प्रमाणान्तरम्" प्रत्यक्षान्तरमित्यर्थः । भावविषयप्रत्यक्षाद् विलक्षणमभावप्रत्यक्षमिति यावत् । प्रत्यक्षेणापि विषयनिषेध्यौ भेदेन गृहीत्वा तयोरन्योन्याभावो ग्रहीतव्यः, ततश्चाभाव(अनुपलब्धि)गम्य इव प्रत्यक्षगम्येऽप्यभावे तुल्यमितरेतराश्रयत्वमित्यर्थ इति । शङ्कपाणेर्व्याख्यानमिदं बुद्धिवैशद्यार्थमिहोद्धृतमिति ध्येयम् ।

एवं तावत् प्रत्यक्षादीनां भेदाविषयकत्वादद्वैताम्नायस्य न तेभ्यो विरोध इत्युक्तम् । इदानीं प्रत्यक्षं न केवलं भेदे प्रवर्तते प्रत्युताभेदमेव विषयीकरोतीति साधयितुमुपक्रमते – **किञ्चेति । मीयमानैकेत्यादि** । अयमर्थः – मीयमानं सद् आत्मा

**अपि च सन्मात्ररूपे सर्वत्र प्रतीयमाने तत्स्वभावेषु वस्तुषु नेतराभिमत इतराभिमतप्रमाणानुत्पादः, सत्स्वभावत्वात् तयोः। 'सत्' इति च सर्वत्र प्रमाणसद्भावात्। [१]प्रमाणाभावाच्चेतरेतराभावज्ञानमिति।**

---

एवैकं स्वरूपं येषां तथाविधेषु विषयेषु निषेधो भेदो विषयतयाऽवकाशमवसरं न लभत इति श्लोकार्थः।

पूर्वं, घटादिप्रत्यक्षकाले पटाद्यनुपलब्धिं स्वीकृत्यापि न साऽनुपलब्धिर्घटात् पटस्य भेदे प्रमाणम्, इतरेतराश्रयदोषादित्युक्तम्। इदानीमनुपलब्धिरेव न सम्भवतीत्याह– **अपि चेत्यादि**।

अयं भावः– सर्वत्र प्रत्यक्षे 'सत्' इति सन्मात्रं प्रतीयते, न तु घटपटादयः सद्विशेषाः प्रतीयन्ते, न वा सत्स्वभावेषु तेषु वस्तुषु मध्ये पटेतरत्वेनाभिमते घटादौ प्रतीयमाने घटेतरत्वेनाभिमतस्य पटस्य प्रमाणानुत्पादः = अनुपलब्धिरपि प्रतीयते। तत्र हेतुमाह – **सत्स्वभावत्वात्तयोरिति**। तयोर्घटपटयोरुभयोरपि सन्मात्रस्वभावत्वात्। घटप्रतीतिर्हि सन्मात्रविषयिणी न तु विशेषविषयिणी, अतो न तस्यां सत्यां पटात्मकविशेषस्यानुपलब्धिरपि प्रतीयते। अतः स्वयमप्रतीयमानमनुलब्धिप्रमाणमपि नाभावगमकं भवितुमर्हतीति नानुपलब्धिर्भेदसिद्धौ प्रमाणमिति तात्पर्यम्। सन्मात्रप्रतीतावुपपत्तिमाह– **'सत्' इति च सर्वत्र प्रमाणसद्भावादिति**। 'सत्' इत्येव सर्वत्र ज्ञानसद्भावादित्यर्थः। नीलपीतयोर्घटपटयोरपि च सदेकरूपत्वात्। एकोपलब्धौ चेतरस्यापि तेन रूपेणोपलब्धत्वात्। अन्यथा तयोर्निः = स्वभावत्वप्रसङ्गात्। अतो नेतरेतराभावज्ञानं सम्भवतीत्यर्थः।

प्रकृतमुपसंहरति– **प्रमाणाभावाच्चेति**। प्रमाणाभावात् = पराभिमतानुपलब्धिरूपप्रमाणाभावादपि नेतरेतराभावज्ञानम् = न वस्तूनां परस्परभेदग्रह इत्यर्थः।

---

१. प्रमाणाभावाच्च नेतरेतराभावज्ञानमिति पाठ उचितः।

**ननु नार्थानां किञ्चिदभिन्नं रूपम्, प्रत्यभिज्ञानाद्धि तद् गम्येत। न चार्थमात्रं दृष्टवतोऽर्थान्तरे स एवायमिति प्रत्यभिज्ञाऽस्ति यथा एकां गां दृष्टवतो गवान्तरे। सच्छब्दप्रत्ययानुवृत्तिस्तु पाचकादिवद् योगनिबन्धना। प्रमाणविषयो हि "सन्" इत्युच्यते।**

**नैतत् सारम्, न चेदभिन्नरूपप्रतिपत्तिः, निर्विषयत्वमेव प्रमाणस्यापद्येत, यतो न व्यवच्छेदमन्तरेण भेदप्रतीतिः, न व्यवच्छेदः केवलः,**

---

सत्ताजातिमनङ्गीकुर्वाणो भेदवादी शङ्कते – **नन्विति**। अयं भावः – अर्थानां भावानां सत्तात्मकं किञ्चिदभिन्नं रूपं नास्ति। यदि किञ्चिदभिन्नं रूपं भवेत् तदा तत्साधिका तादृशी प्रत्यभिज्ञा स्यात्, न तु भवति। न हि वस्तुमात्रं प्रत्यक्षीकृतवतो जनस्य कालान्तरे तज्जातीये वस्त्वन्तरे "तदेवेदम्" इति प्रत्यभिज्ञा भवति। यदि भवेत् तदा एकां गां दृष्ट्वा कालान्तरे गवान्तरेऽपि "सैवेयम्" इति प्रत्यभिज्ञा जायेत, किन्तु नैवं जायते। तस्माद् भावानां नास्ति सत्तात्मकं किञ्चिदभिन्नं रूपमिति।

ननु "सन् घटः सन् पटः" इत्यादौ सच्छब्दस्य सदिति प्रत्ययस्य चानुवृत्तिदर्शनात् सत्तानाम्नी अनुगता जातिरस्त्येवेति चेत्, न, पाचकादिवद् योगनिबन्धना हि सच्छब्दप्रत्ययानुवृत्तिरिति स्वीकारात्। ननु पाचकादौ पाकक्रियारूपोपाधियोगाद् यः कोऽपि पाकं कुर्वाणः पाचक इत्युच्यते, इह कस्योपाधेर्योगात् सच्छब्दप्रत्यययोरनुवृत्तिर्भवतीति शङ्कायामाह -- **प्रमाणविषयो हीति**। अर्थाद् इह प्रमाणविषयत्वमेवोपाधिर्यस्य योगात् "सत् सत्" इति शब्दप्रत्यययोरनुवृत्तिर्भवतीति बोद्धव्यम्। अतोऽभेदसाधिकायाः सत्तायाः कस्याश्चिदभावाद् भेद एव परस्परं भावानामिति पूर्वपक्षाशयः।

एतत् सिद्धान्ती निराकरोति– **नैतत् सारमित्यादिना**। **न चेदभिन्नरूपेति**। अयं भावः – प्रत्यक्षेण यदि सत्ताद्यात्मना अभिन्नरूपेण वस्तुप्रतीतिर्न स्यात्, तदा निर्विषयमेव ज्ञानं प्रसज्येत। कथमिति चेत्, तदुपपादयति – **यतो नेति**। यतो घटपटयोर्नीलपीतयोर्वा परस्परं व्यवच्छेदम् = प्रतिषेधं विना तयोर्भेदप्रतीतिर्न स्यात्। स च व्यवच्छेदोऽनुयोगिप्रतियोगिनिरपेक्षः केवलः प्रतीयेत, विधिसहितः =

**न विधिसहितः, न विधेः पश्चात् प्रमाणस्य व्यापारः, न विधिरेव व्यवच्छेद इति वर्णितम्। तत्र यद्येकमपि न गम्यते निर्विषयतैव स्यात्।**

**अप्रत्यभिज्ञानं च यदि गोवैलक्षण्यादुच्येत सत्यपि सन्मात्ररूपानुगमे, गवान्तरेऽपि तन्न स्यात्, देवदत्तवैलक्षण्यात्। न हि यादृशो देवदत्तस्य पुनर्दर्शन एकत्वप्रत्ययस्तादृशो गवान्तरे।**

---

विषयप्रतीतिसमकालो वा प्रतीयेत, विषयप्रतीतेः पश्चाद् वा प्रतीयेत, अथवा विधिरेव व्यवच्छेदः, अर्थाद् विषयप्रतीतिरेव व्यवच्छेदः = प्रतियोगिप्रतिषेधः स्यादित्येषु विकल्पेषु यः कोऽपि पक्ष आश्रीयते स सर्वोऽपि न सम्भवीति पूर्वं "लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिध्यते" इत्यत्र वर्णितमिति नात्र पुनरुच्यत इति तत एवानुसन्धेयम्। अतो न भेदः प्रमाणस्य विषय इति सिद्धम्। अस्यां दशायां यद्येकमपि = अभिन्नमपि प्रमाणगम्यं न स्यात् तदा सर्वथा निर्विषयत्वमेव प्रमाणस्य प्रसज्येतेत्यभिप्रायः। एतदेव निष्कर्षयन्नाह मूले – **तत्र यद्येकमपि न गम्यते निर्विषयतैव स्यादिति**। अतः समस्तवस्तुगतमभिन्नमेकं रूपं स्वीकरणीयम्। तदेवास्माकं सत्ता, सैव च प्रमाणस्य विषयो न भेद इति सिद्धम्। मेरुसर्षपयोरत्यन्तविसदृशयोरपि सद्रूपतया प्रत्यभिज्ञानमस्त्येव।

ननु एकां गां कालाक्षीं दृष्टवतः पश्चाद् गवान्तरे स्वस्तिमत्यां प्रत्यभिज्ञानाभावस्य कारणं कालाक्ष्यपेक्षया स्वस्तिमत्यां वैलक्षण्यमेवास्ति, कामं कालाक्षीगतसद्रूपताया अनुगमो स्वस्तिमत्यां गवान्तरेऽपि वर्तत इत्युच्यते चेत्, तर्हि कालाक्षीं दृष्टवतः-कालाक्ष्यामपि प्रत्यभिज्ञानं न स्यात्, सद्रूपानुगमवतो देवदत्तात् तत्रापि वैलक्षण्यात्। देवदत्तवैलक्षण्यं स्फुटीकरोति – **न हीति**। देवदत्तं पुनर्दृष्ट्वा "स एवायं देवदत्तः" इति यादृश एकत्वप्रत्ययो भवति, न हि तादृश एवैकत्वप्रत्ययः कालाक्ष्याः पुनर्दर्शनेऽपि भवति, तस्यां भिन्नरूपाया एव प्रत्यभिज्ञाया: "सैवेयं कालाक्षी गौः" इत्याकारिकाया जायमानत्वादित्याशयः। अतो गोव्यक्तिवैलक्षण्यात् स्वस्तिमत्यां गवान्तरे प्रत्यभिज्ञानाभावोपपादनं न चारु।

**अथास्ति तत्र तावत् पूर्वापरानुसन्धानम्, न तु सतः सदन्तरे। किं च भोः! अनुसन्धानादेकत्वम्, नाभिन्नरूपसंविदः। नेदानीमभिन्न-देशकालोऽर्थ एकः स्यात्। देशकालभेदे हि 'सोऽयम्' इति पूर्वापरानुसन्धानम्।**

**गोमण्डले च महिषमण्डलविलक्षणे देशभेदेऽप्यभिन्नरूपानुगमात्**

---

शङ्कते – **अथास्तीति**। अयमभिप्रायः – ननु क्वचिदपि अभिन्नरूपानुगमात् प्रत्यभिज्ञानं न भवति, किन्तु पूर्वापरानुसन्धानादेकत्वं भवति। अत एव सर्षपं दृष्ट्वा सद्रूपतानुगमेऽपि मेरौ "स एवायम्" इत्यनुसन्धानं न जायते। कालाक्ष्यास्तु पूर्वं दृष्टायाः पुनर्दर्शनेऽनुसन्धानं जायते "सैवेयं कालाक्षी" इति। अतोऽनुसन्धानादेकत्वं कालाक्ष्यां न तु सत्ताद्यभिन्नरूपानुगमादनुसन्धानम्। अत एव च सत्यपि सत्तानुगमे मेरुसर्षपयोरनुसन्धानाभावाद् नैकत्वं सत्तावादिनोऽपीति।

उत्तरयति – **किञ्चेति**। अयमाशयः समाधातुः – यद्यनुसन्धानात् = प्रत्यभि-ज्ञानादेकत्वं भवान् मन्यते नाभिन्नरूपावगमात्, तदा प्रथमदर्शनकाले अभिन्नदेश-कालायां कालाक्ष्यामेकत्वं न प्रतीयेत, तत्र 'सैवेयम्' इत्यनुसन्धानस्याभावात्। तत्रैव हि "सोऽयम्" इति पूर्वापरानुसन्धानं भवति, यत्र देशकालभेदो भवति। यतो हि भिन्ने देशे भिन्ने काले च पूर्वं दृष्टायाः कालाक्ष्या यदा पुनर्दर्शनं देशान्तरे कालान्तरे च भवति, तदैव "सैवेयम्" इति पूर्वापरानुसन्धानं भवति। यदि तु अनुसन्धानादेवैकत्वमिति स्यात् तदाऽभिन्नदेशकालायां प्रथमदृष्टकालाक्ष्यामेकत्वं नानुभूयेतेति।

तस्मादभिन्नरूपानुगमादेवैकत्वमेष्टव्यमिति सिद्धोऽभेदवादः। मेरुसर्षप-योरपि सत्त्वेनानुसन्धानमस्त्येवेति पूर्वमुक्तम्।

अभिन्नरूपसंवित्तित एव एकार्थप्रतिपत्तिर्न प्रत्यभिज्ञानाद् इत्यत्र दृष्टान्तान्तरमाह सिद्धान्ती– **गोमण्डले चेति**। अयमर्थः– कालभेदपरामर्शात्मकप्रत्यभिज्ञानाभावेऽपि गोव्यक्तीनां देशभेदेऽपि महिषमण्डलविलक्षणे गोमण्डले "गौः" इत्यभिन्नरूपानुगमात् प्रथमादेव निर्विकल्पकप्रत्ययाद् एकगोत्वनिश्चयस्य सविकल्पकस्योत्पत्तिः सर्वैरिष्टा।

**प्रथमादेव निर्विकल्पात् प्रत्ययादेकार्थप्रतिपत्तिरिष्यते। न च तत्र कालभेदाभावात् "सोऽयम्" इत्यवमर्शः। यथोक्तम्—**

**निर्विकल्पकबोधेऽपि द्व्यात्मकस्यापि वस्तुनः।**

**ग्रहणं लक्षणाख्येयं ज्ञात्रा शुद्धं तु गृह्यते॥ (श्लो०वा०, पृ० १७१)**

---

तत्र मण्डलान्तर्गतगोव्यक्तीनां देशभेदेऽपि कालभेदाभावात् "सोऽयम्" इति प्रत्यभिज्ञानं नास्ति, तथापि तस्मिन् गोमण्डल एकगोत्वनिश्चयो भवति। अर्थाद् अत्राप्यभिन्नरूपसंवित्तित एवाभेदाध्यवसायो नानुसन्धानादिति। अतः प्रत्यभिज्ञानादेवैकत्वप्रतिपत्तिर्नाभिन्नरूपानुगमादिति पूर्वपक्षिणः सिद्धान्तस्तत्रैव व्यभिचरितः, सिद्धञ्च "अभिन्नरूपानुगमादेकत्वप्रतिपत्तिः" इति सिद्धान्तिनोऽभेदवादिनो मतमिति भावः। उक्तार्थे भाट्टवार्तिकमुदाहरति— **निर्विकल्पक-बोधेऽपि** इत्यादि।

अयं श्लोकार्थः – निर्विकल्पकबोधेऽपि द्व्यात्मकस्य सामान्यविशेषात्मकस्यापि वस्तुनो ग्रहणं भवति। द्व्यात्मकस्य वस्तुनो ग्रहणं भवतीति तु लक्षणस्य निर्विकल्पकप्रमाणस्येयमाख्या = स्वरूपकथनमात्रम्। अर्थाद् निर्विकल्पके कामं सामान्यविशेषात्मकस्य द्व्यात्मकस्य स्वरूपतो ग्रहणं भवति, किन्तु द्व्यात्मकत्वेन रूपेण ग्रहणं तु नैव भवति। तर्हि केन रूपेण ग्रहणं भवतीति जिज्ञासायामाह— **ज्ञात्रा शुद्धं तु गृह्यत इति।** अर्थात् सामान्यविशेषभावज्ञानशून्यं शुद्धं वस्तुमात्रं निर्विकल्पके गृह्यते। यथा बालमूकादीनां ज्ञानं सामान्यविशेषभावज्ञान-शून्यं शुद्धवस्तुविषयकं सम्मुग्धं ज्ञानं भवति, तद्वदित्याशयः। तदुक्तं वार्तिक एव—

**"अस्ति ह्यालोचनं ज्ञानं प्रथमं निर्विकल्पकम्।**

**बालमूकादिविज्ञानसदृशं मुग्धवस्तुजम्"॥ इति॥**

इदमपि प्रत्यक्षप्रमाणेनाभेदावगमस्योदाहरणमस्तीति पूर्वोक्तभाट्टवार्तिको-द्धरणस्य प्रयोजनं मन्तव्यम्।

**न च यथा मणिकं दृष्टवतो मणिकान्तरेऽनुसन्धिः, तथा शरावं दृष्ट्वा; तत्र मृज्जातिरपह्नूयेत । अथास्ति तत्रापि, न तु यथा मणिकान्तरे सामान्यरूपाणां भूयस्त्वादुत्कटः, अल्पसामान्यानुगमात् । सदन्तरेऽपि तथैव स्यात् । विस्तरेण चैतदुपरिष्टादभिधास्यत इत्यलमतिप्रसङ्गेन ।**

---

पूर्वमनुसन्धानाभावमङ्गीकृत्य एकत्वावगमः साधितो विभिन्नोदाहरणैरिदानीन्तु अस्ति मेरुसर्षपयोरपि अभिन्नसद्रूपानुसन्धानमिति साधयति– **न चेत्यादिना**। अयं भावः – अनुसन्धानादेकत्वमिति स्वीकारे यथा एकं मणिकं दृष्ट्वा पश्चान्मणिकान्तरदर्शने तज्जातीयमिदमिति प्रत्यभिज्ञानं जायते, तथा मणिकदर्शनानन्तरं शरावदर्शने न तथा प्रत्यभिज्ञानं जायते "तज्जातीयमिदमिति"। अतोऽत्रानुसन्धानाभावात् शरावे मृज्जातिरप्यपह्नुता स्यात् । किन्तु तथा न भवति, प्रत्युत यथा मणिकं मृज्जाति तथा शरावोऽपि मृज्जातिरेवेति सर्वैरनुभूयते । तस्माद् एकत्वबोधायानुसन्धानं नापेक्षितमिति ।

ननु मणिकं दृष्ट्वा पश्चात् शरावदर्शने भवत्येवानुसन्धानं मणिकजातीयोऽयं शराव इति ।इयांस्तु विशेषः – पूर्वदृष्टे मणिके यावन्ति सामान्यरूपाणि मणिकत्व-द्रव्यत्व-मृज्जातीयत्वादीनि भूयांसि तानि सर्वाण्युत्कटानि सन्ति मणिकान्तरे, अतो झटिति तान्यनुसन्धीयन्ते इमानि मणिकजातीयानीति । शरावे तु पश्चाद् दृश्यमाने सदपि मृज्जातीयत्वादिकं झटिति नानुसन्धीयते, अल्पसामान्यानुगतत्वेन अनुत्कटत्वात् । अतस्तत्राप्यस्त्येवानुसन्धानमिति तस्मादेवैकत्वप्रतिपत्तिरिति शङ्कते – **अथास्ति तत्रापीति** । उत्तरयति– **सदन्तरेऽपि तथैव स्यादिति** । अयं समाधातुराशयः – एवन्तर्हि सर्षपं दृष्ट्वा मेरुदर्शनेऽप्यस्त्येवानुत्कटाया अल्पीयस्याः सत्तादिजातेरनुसन्धानमिति तत्राप्यनुसन्धानबलादेव मेरुसर्षपयोरेकत्वप्रतिपत्तिर्भविष्यतीति मेरुसर्षपदृष्टान्तोऽपि अभेदमेव साधयति न भेदमित्यभिप्रायः । प्रसङ्गमिममिहैव स्थगयति मूलकारः, उपरिष्टादभिधास्यमानत्वप्रतिज्ञानादिति संक्षेपः ।

**भेदाभेदावभासे द्वे विज्ञाने चेत् परीक्ष्यताम् ॥११-१/२॥**

**यदि मतम्– विद्येते तावदनुवृत्तव्यावृत्ताभे द्वे विज्ञाने। न हि तयोरभावेऽनुवृत्तव्यावृत्तव्यवहारसम्भवः। न च विज्ञानरूपादन्योऽर्थव्यवस्थाहेतुः, तस्याहेतुत्वेऽभेदोऽपि न स्यात्।**

**नैतत् सारम्, नं हि विज्ञानमित्येवार्थतत्त्वं व्यवस्थापयति। तदपि हि परीक्ष्यम्– युक्त्या विरुध्यते नेति, प्रमाणोत्थं नेति। न खल्वलातचक्रादिज्ञानेभ्योऽर्थतत्त्वव्यवस्था।**

---

अत्रायं श्लोकार्थः – विज्ञानेनैव वस्तु व्यवस्थाप्यते। विज्ञानं द्विविधम् – भेदावगाहि अभेदावगाहि चेति। भेदशब्दोऽत्र विशेषवाची, अभेदशब्दश्च सामान्यवाची। तथा च विशेषावभासि विज्ञानं यथा "घटः" इति। सामान्यावभासि विज्ञानं यथा – "सन्" इति। यदि भेदावगाहि विज्ञानं भेदे प्रमाणं न स्यात् तदाऽभेदावगाहि विज्ञानमभेदेऽपि प्रमाणं नैव सम्भवेत्। अतो भेदाभेदावभासिविज्ञानद्वयबलाद् भेदाभेदावुभावपि तात्त्विकौ स्तो नाभेदमात्रमिति पूर्वपक्षे सिद्धान्ती आह – **परीक्ष्यतामिति**। अर्थात् पूर्वं यथा भेदवादः परीक्ष्य निराकृतस्तथा भेदाभेदवादोऽपि परीक्षणीयो निराकर्तव्यश्चेति श्लोकाभिप्रायः।

एतदेव विशदयति– **यदि मतमित्यादिना**। भिद्यत इति भेदो विशेषरूपं व्यावृत्तम्, तदवभासि विज्ञानं यथा घट इति। तद्विपरीतमनुवृत्तं सामान्यरूपं विज्ञानं यथा– "सन्" इति। यदि तु सामान्यविशेषोभयावभासि विज्ञानद्वयं न स्यात् तदा "सन्" इत्यनुवृत्तव्यवहारो "घटः" इति वा व्यावृत्तव्यवहारो नैव सम्भवेत्। यदि द्वे विज्ञाने नेष्येते, तदा द्विरूपो व्यवहारो न स्यात्। अस्ति च द्विरूपो व्यवहारः, यथा वत्सो मातरमन्विष्यन् सामान्यबुद्ध्या गोगणमभिधावति विशेषबुद्ध्या च स्वमातरम्। अतोऽनुवृत्तव्यावृत्ताकारे द्विविधे ज्ञाने स्तः। न हि विज्ञानस्वरूपं विहाय कश्चिदन्योऽस्ति वस्तुव्यवस्थाहेतुः। तस्माद् विशेषसामान्यावभासिनी विज्ञाने भेदाभेदावुभावपि व्यवस्थापयेताम्। अन्यथा भेदाव्यवस्थापनेऽभेदमपि न व्यवस्थापयेदिति।

**स्यादेतत्, न प्रत्यक्षं युक्त्याऽपबाध्यते, सत्यम्, प्रत्यक्षतैव भेदज्ञानस्य नेत्यावेदितम्, यथा क्षपीयस्सर्वतोदिक्संयोगकारितस्यालातचक्रज्ञानस्य। तत् सदप्यप्रमाणोत्थं प्रत्यक्षस्वरूपं स्वप्नदृश्यालातचक्रादिज्ञानवद् न तत्त्वावगमनिमित्तम्।**

---

तदेतद् भेदाभेदवादिमतमपि निराकरोति – **नैतत् सारमिति**। अयमाशयः – न हि विज्ञानमित्येतावन्मात्रेण तदर्थतत्त्वव्यवस्थायां हेतुर्भवति। यद्येवं स्यात् तदाऽलातचक्रगन्धर्वनगराकाशहस्तिप्रभृतिज्ञानेभ्योऽपि वास्तविकस्यार्थतत्त्वस्य व्यवस्था स्यात्, किन्तु नैवं भवति। सत्यपि ज्ञाने अलातचक्रादयो मिथ्या एव भवन्तीति सर्वजनानुभवः। तस्माद् जातमपि ज्ञानमपि परीक्षणीयं यत् तद् युक्तिविरुद्धमस्ति न वेति, तत् प्रमाणजन्यं न वेति। परीक्षायां यदि तद् युक्तिविरुद्धं न भविष्यति प्रमाणजन्यं च भविष्यति, तदा तज्ज्ञानं सत्यार्थ-व्यवस्थापकं स्यात्, अन्यथा तु तज्ज्ञानविषयो मिथ्यैव भविष्यति शुक्तिरजतवद् रज्जुसर्पवच्चेति भावः।

ननु प्रत्यक्षज्ञानं जातं चेत्, तद् युक्त्याऽपबाधितुं न शक्यते, जातत्वेन प्रबलत्वादिति शङ्कते– **स्यादेतदिति**। शङ्कां निरस्यति – **सत्यमिति**। अयं भावः– यद्धि वस्तुगत्या प्रत्यक्षज्ञानम्, तद् युक्त्या बाधितुं न शक्यत इति सत्यम्, किन्तु प्रकृते भेदज्ञानस्य प्रत्यक्षतैव नास्ति। अर्थाद् भेदज्ञानं न प्रत्यक्षं प्रत्यक्षाभासमेव तदिति "आहुर्विधातृप्रत्यक्षम्" इति पूर्वम्, अनुपदमपि च प्रतिपादितम्। यथा चोदाहृतमलातचक्रज्ञानस्य प्रत्यक्षाभासत्वम्। तद्धि न यथार्थज्ञानं प्रत्युतातिवेगेन भ्राम्यमाणस्यालातस्य सर्वदिक्षु क्षिप्रं जायमानैः संयोगैः कारिता सा मिथ्या चक्राकारताप्रतीतिरिति।

ननु भेदज्ञानस्य प्रत्यक्षतैव नास्तीति भवानाह, तत्रालातचक्रज्ञानं कथं निदर्शनीकर्तुं शक्यते? उल्मूकस्य चक्राकारज्ञानस्य स्वरूपतः प्रत्यक्षत्वादिति शङ्कायामाह – **तत्सदपीति**। भवतु नाम जाग्रदवस्थं तदलातचक्रज्ञानं स्वरूपतः प्रत्यक्षम्, तथापि स्वरूपतः सदपि तद् अप्रमाणोत्थत्वात् स्वप्नदृश्यालातचक्रज्ञानवदेव न तत्त्वावगमनिमित्तं नार्थसाधकं भवति। तथैव भेदप्रत्यक्षज्ञानं स्वरूपवतः सदपि नार्थसाधकं भविष्यति। अतो न प्रत्यक्षप्रमाणाद् भेदसिद्धिरिति भावः।

**ननूक्तेन प्रकारेण प्रमाणादन्यतोऽपि भेदज्ञानस्योदयो न सम्भवति। को वाऽन्यथाऽऽह? न हि परमार्थतो भेदावगमोऽस्ति। यदि स्यात्, कथं भेदोऽपह्नूयेत? अपह्नवे वा कथं तदवगमः? नावगम्यमस्ति, अवगम्यते चेति दुर्घटम्।**

**किन्तर्हीदम्? अविद्या विभ्रमः। यथावभासं च वेद्यसद्भावे न विभ्रमः, किन्तु सम्यग् ज्ञानम्, असति चावगमोऽनुपपन्नः। तस्मान्न परमार्थतः सत्त्वेन निरुच्यते, नाप्यसत्त्वेन, लोके सिद्धत्वात् सर्वप्रवादेष्वित्युक्तम्।**

---

ननु न भेदः केवलः, न विधिसहितः, न विधेः पश्चात् प्रमाणस्य व्यापारः, न विधिरेव व्यवच्छेद इति रीत्या यदि प्रमाणाद् भेदज्ञानं न सम्भवतीति, तदा अनयैव रीत्या प्रमाणादन्यतोऽपि भेदज्ञानं न सम्भवतीति भेदज्ञानं सर्वथा दूरोत्सारितमेव स्यादिति चेत्, को नु जन एतन्नानुमन्येत। अर्थाद् भेदावगमो नैव भवतीति वयं स्वीकुर्म एव। यथा भेदोऽपारमार्थिकस्तथा भेदस्यावगमोऽप्यपारमार्थिक एवेति ब्रूमहे वयम्। यदि भेदावगमः सन् पारमार्थिकः स्यात् तदा तद्विषयभूतो भेदः कथमस्माभिरपह्नूयेत? निर्विषयस्य ज्ञानस्यासम्भवात्। यदि तु भेदोऽपह्नूयेत, तथापि कथं तदवगमः स्यात्? अवगम्यविषयं विनाऽवगमानुपपत्तेः। एतदुक्तम्— **नावगम्यमस्ति, अवगम्यते चेति दुर्घटमिति।**

शङ्कते— **किन्तर्हीदमिति**। अयं शङ्काभिप्रायः— ननु यदि नास्ति भेदः, भेदावगमोऽपि नास्ति, तर्हीदं भिन्नं भासमानं जगत् किमस्ति? अत्रोत्तरमाह— **अविद्येति**। भिन्नत्वेन जगत्प्रतीतिरियमविद्यैवेत्यर्थः। अविद्या च विभ्रमः, अविद्याकृता भ्रान्तिरिति यावत्।

ननु भ्रान्त्याऽपि प्रतीयमानो भेदः सत् स्यादित्याशङ्क्याह— **यथावभासमिति**। भ्रान्तिविषयस्य सद्भावे = **पारमार्थिकत्वे** भ्रान्तिरेव सा न स्यात् किन्तु सम्यग् ज्ञानमेव तत्स्यादित्यर्थः। यतोऽस्ति भ्रान्तिरतस्तद्विषयो न सत्, बाध्यमानत्वादिति मन्तव्यम्। ननु तर्हि गगनकुसुमवद् भेदोऽसन्नेव स्यादिति शङ्कायामाह— **असति चेति**। अर्थाद् भेदस्य असत्त्वे (तुच्छत्वे) प्रतीतिरेव न स्यात्,

**अपि च ज्ञानद्वयेऽस्मिंश्चतस्रः कल्पनाः सम्भवन्ति – ज्ञानभेदात् सामान्यव्यक्तिविभागेन वस्तुद्वयम्, यथाहुः संसर्गवादिनः। एकं वा सामान्यविशेषात्मकं वस्तु, यथाहुरनेकान्तवादिनः। विशेषा एव वा वस्तूनि। तेषामात्यन्तिकभेदनिश्चयासामर्थ्यात् तदुपादानस्तद्विषय एवाभेदः कल्पनाज्ञानगोचरः। दृष्टा हि भिन्नेष्वभेदकल्पना 'वनम्' इति यथाहुरात्यन्तिकभेदवादिनः।**

---

न हि गगनकुसुमं कदाचिदपि प्रतीयमानं दृष्टम्। ननु भेदो यदि न सन् भ्रान्तिविषयत्वेन बाध्यमानत्वात्, नाप्यसन् भ्रान्त्यैव प्रतीयमानत्वात्, तदा किंस्वरूपो भेद इति वक्तव्यमित्याशङ्कायां सिद्धान्तमाह – **तस्मादिति**। उक्तरीत्या भेदो हि न परमार्थतः सत्त्वेन निर्वक्तुं शक्यते, बाध्यमानत्वात्, नाप्यसत्त्वेन निर्वक्तुं शक्यते, सर्वमतेषु लोकसिद्धत्वात् प्रतीयमानत्वादिति यावत्। एतच्च **पूर्वम्**– "सर्वप्रवादिभिश्चेत्थमियमास्थेया" इत्यत्रोक्तमिति ज्ञेयम्। अतोऽनिर्वचनीय एव भावानां भेद इति वेदान्तसिद्धान्तः।

ज्ञानद्वयपरीक्षायां प्रकारान्तरमाह– **अपि चेति**। अयं भावः – ज्ञानद्वयं नाम भेदज्ञानमभेदज्ञानं च। भेदज्ञानञ्च घटत्वपटत्वादिना घटपटादिविशेषज्ञानं "घट" इत्याद्याकारकं व्यावृत्तज्ञानम्। अभेदज्ञानञ्च "सन्" इति सामान्यज्ञानमनुवृत्ताकारम्। अस्मिंश्च सामान्यविशेषविषयकज्ञानद्वयसम्बन्धे चतुर्विधाः कल्पना भवितुमर्हन्ति – "सन्" इति "घट" इति च ज्ञानभेदात् सामान्यविशेषविभागेन जगति वस्तुद्वयमस्ति – भेदोऽभेदश्चेति। इयं हि संसर्गवादिनां काणादानां कल्पना। ते हि सामान्यविशेषयोर्जातिव्यक्त्योः समवायं संसर्गं वदन्ति। इयमेका कल्पना।

एकमेव वस्तु सामान्यात्मकं विशेषात्मकं च भवतीत्यनेकान्तवादिनां भट्टानाम् आर्हतानां च कल्पना। ते हि जातिव्यक्त्योर्नैकान्तेन भेदमभेदं वा मन्यन्ते। अतो वस्तुमात्रं जात्याऽभिन्नं व्यक्त्या च भिन्नमस्तीत्याहुः। इयं द्वितीया कल्पना।

**अभेदो वा परमार्थः। तस्यानवच्छिन्नस्यानन्तस्य तथा निश्चेतुमशक्तेरनादित्वाच्चाविद्यायास्तदुपादानास्तद्विषया भेदपरिकल्पनाः। दृष्टा हि तरङ्गभेदादभिन्ने चन्द्रमसि भेदकल्पना। तन्नापरीक्ष्य तत्त्वनिश्चयः।**

---

विशेषाः = व्यक्तय एव वस्तूनि = परमार्थभूताः, सामान्यं तु (जातिस्तु) न परमार्थ इति न जातिरूपेणाभेदः क्वचिदस्ति। प्रत्युत व्यक्तिरूपेण स्वलक्षणानां भेदानामेव अस्तित्वं सर्वत्र। जातिरूपेणाभेदस्तु कल्पनामात्रविषयः। इयं हि आत्यन्तिकभेदवादिनां बौद्धानां कल्पना। एतदेवाह – **विशेषा एव वस्तूनीति।** तदुपपादयति – **तेषामिति।** अयं भावः – भाववस्तूनां तेषामात्यन्तिको भेदो नामात्यन्तिकी व्यावृत्तिः। सा च द्वेधा – देशतः परमाणुत्वं = परमाणुरूपता, कालतश्च क्षणिकत्वम्। अर्थाद् भावानां देशत आत्यन्तिकी व्यावृत्तिः परमाणुषु पर्यवस्यति, कालतश्चात्यन्तिकी व्यावृत्तिः क्षणिकत्वे पर्यवस्यति। अत एव बौद्धा घटाद्यवयविनं न मन्यन्ते किन्तु परमाणुपुञ्जं ब्रुवन्ति, घटादिकं स्थायिनमपि न मन्यन्ते किन्तु क्षणिकं वदन्ति। इयं हि भावानां परमाणुत्वक्षणिकत्वरूपाऽऽत्यन्तिकी व्यावृत्तिर्नार्वाग्दृशां ज्ञानगोचरः। तदुक्तं मूले – **तेषामात्यन्तिकभेद-** (व्यावृत्ति) **निश्चयासामर्थ्यादिति।**

अत एव वस्तुगतात्यन्तिकभेदनिश्चयासामर्थ्याद् अनादिवासनावशात् तदुपादानः = व्यक्त्युपादानः, तद्विषयः = व्यक्तिविषय एवाभेदः कल्पनया विषयीक्रियते। अतो 'घटोऽयं घटोऽयम्' इत्यभेदबोधो न घटत्वाद्यभिन्नजातिकृतः किन्तु व्यक्तिबोधासामर्थ्यकृतः काल्पनिक एवेति मन्तव्यम्। अत्र दृष्टान्तमाह – **दृष्टा हीति।** विभिन्नासु वृक्षव्यक्तिषु 'वनम्' इत्यभेदकल्पना यथा जायते, तथेतरत्रापि अभेदप्रतीतिः काल्पनिक्येवेति आत्यन्तिकभेदवादिनां बौद्धानां कल्पना तृतीया।

अभेदो वा परमार्थ इति चतुर्थी कल्पनाऽद्वैतवेदान्तिनाम्। स ह्यभेदो (अद्वैतं) देशकालाद्यनवच्छिन्नोऽत एव अनन्तः, तथापि अनाद्यविद्यावशाद् अनवच्छिन्नानन्तत्वादिरूपेण तस्याभेदस्य निश्चेतुमशक्यत्वाद् अविद्यामेवोपादानकारणमुपादाय अविद्यां विषयीकृत्य अत एवाविद्याकारणी आविद्यकभेदविषयिणी परिकल्पना भवतीति। अत्रापि दृष्टान्तमाह – **दृष्टा हीति।** अभिन्नेऽपि चन्द्रमसि तरङ्गभेदात् चन्द्रभेदकल्पना लोके दृष्टा सर्वेषाम्।

तत्र परीक्षयाम्—

**न हि तावद् द्वयैकात्म्यप्रख्यानानवकल्पनात् ॥ १२ ॥**

**समवायकृतं तच्चेन्न भेदस्यापरिप्लुतेः ॥ १२-१/२ ॥**

**न तावद् द्वे वस्तुनी सामान्यविशेषौ, प्रख्याभेदात् । समानाधिकरणत्वेन हीमे प्रख्ये जायेते—"सन् घटः, गौः स्वस्तिमती" इति । न व्यधिकरणत्वेन**

---

तदेवं चतुर्विधवादिविप्रतिपत्तेः संशयो जायते– किमत्र तत्त्वमिति । अतः सत्यपि अनुवृत्तव्यावृत्ताकारे ज्ञानद्वये परीक्षामन्तरा न तत्त्वनिश्चय इत्यवश्यं परीक्षा कार्येत्याशयः ।

तत्र सामान्यविशेषविभागेन परस्परभिन्नं वस्तुद्वयमिति प्रथमकल्पना न युज्यते, यतो हि द्वयस्य ऐकात्म्यप्रख्यानं = सामानाधिकरण्यप्रतीतिः नावकल्पते= न सम्भवति । यद्युच्येत – सामान्यविशेषयोर्भिन्नवस्तुत्वेऽपि समवायसम्बन्धकृतं तयोः सामानाधिकरण्यमुंपपत्स्यत इति, तदपि न युज्यते, जातिव्यक्त्योः समवाय-सम्बन्धस्वीकारेऽपि तयोर्भेदस्यापरिप्लुतत्वाद् यथावदवस्थितत्वादित्यर्थः । अतः समवायसंसर्गपक्षेऽपि भेदस्य जागरूकत्वेन 'सन् घटः' इति ऐकात्म्येन = सामानाधिकरण्येन = अभेदेनेति यावत्, प्रतीतिर्नोपपद्येतेति श्लोकार्थः ।

कारिकार्थं स्वयं व्याचष्टे – **न तावदित्यादिना** ।अयं भावः– 'सन्' इत्यनु-वृत्तप्रत्ययः 'घट' इति च व्यावृत्तप्रत्ययः । तथा चानयोः प्रख्ययोर्भेदात् तद्विषयभूतौ सामान्यविशेषो परस्पर भिन्नौ स्त इति वक्तुं न शक्यते । तत्रोप-पत्तिमाह – **समानाधिकरणत्वेनेति** । इमे प्रतीती समानाधिकरणत्वेन जायेते 'सन् घटः' इति 'गौः स्वस्तिमती' इति च । न तु नीलपीतप्रख्ये इव 'दण्डो देवदत्तः' इति प्रख्ये इव व्यधिकरणत्वेन उक्तप्रख्ये जायेते । अन्या हि नीलप्रख्या, अन्या च पीतप्रख्या, एवं दण्डप्रख्यातो देवदत्तप्रख्यापि भिन्नैव । अतो व्यधिकरणा इमाः सर्वाः प्रख्या विभिन्नविषयत्वात् । प्रकृते तु या 'सन्' इति प्रख्या, सैव 'घट' इति प्रख्या, या च गौरिति प्रख्या, सैव स्वस्तिमतीति प्रख्या, समानविषयत्वात् । तस्मादिमे प्रख्ये समानाधिकरणत्वेन जायेते इति स्वीकार्यम् ।

**यथा नीलपीतप्रख्ये, यथा वा 'दण्डो देवदत्तः' इति। नापि विशेषणविशेष्यभावेन यथा 'दण्डी' इति, सम्बन्धस्याप्रतिभासनात्। न च वस्तुभेदविषयत्वे सामानाधिकरण्यमवकल्पते सत्यपि सम्बन्धे। सम्बन्धिद्वयं विशेषणविशेष्यत्वेन द्वाभ्यामेकया वा बुद्ध्या गृह्यते,**

---

ननु "सन् घटः, गौः स्वस्तिमती" इति प्रख्ये मा भूताम् व्यधिकरणत्वेन, विशेषणविशेष्यभावेन तु स्याताम्, तावतापि नाभेदसिद्धिः, भेदेऽपि विशेषणविशेष्यभावदर्शनात्, यथा 'दण्डी' इति प्रख्यायाम्। तत्र हि दण्डो विशेषणं पुरुषश्च विशेष्यः परस्परं भिन्नावेव स्त इति शङ्कते– **नापीति**। उत्तरयति– **सम्बन्धस्येति**। अयं भावः – यत्र परस्परभिन्नवस्तुनोर्विशेषणविशेष्यभावस्तत्र मतुबर्थतया संयोगादिसम्बन्धो भासते 'दण्डी' इत्यादौ। 'सन् घटः' इत्यत्र तु ऐकात्म्यमेव भासते, न तु सत्तावान् घट इति भिन्नयोः सत्ताघटयोः सम्बन्धस्यावभासनमस्ति। एवमेव 'गौः स्वस्तिमती' इत्यत्र ऐकात्म्यमेव भासते, न तु गोत्वस्वस्तिमत्योर्भेदेन सम्बन्धोऽवभासते। तस्मात् सुष्ठूक्तम्– **सम्बन्धस्याप्रतिभासनादिति**।

ननु दण्डदण्डिनोर्यथा संयोगसम्बन्धकृतो व्यवहारो भवति दण्डीति, तथा सत्ताघटयोर्गोत्वस्वस्तिमत्योश्च समवायसम्बन्धकृतो व्यवहारो भविष्यति 'सन् घटः' इति, 'गौः स्वस्तिमती' इति चेति शङ्कायामाह – **न चेति**। समवायसम्बन्धे सत्यपि भिन्नत्वेन सत्ताघटयोर्विशेषणविशेष्यभावाभ्युपगमे 'सन् घटः' इत्याकारेण सामानाधिकरण्यं (ऐकात्म्यं) नोपपद्येत, प्रतीयते चात्र सर्वजनैरैकात्म्यम्। अयमभिप्रायः – यत्र सामान्यविशेषयोः सम्बन्धकृतो विशेषणविशेष्यभावो भवति तत्र "सत्तावान् घटः, गोत्ववती स्वस्तिमती" इति वैयधिकरण्येनैव व्यवहारो भवति वस्तुद्वयभेदविषयकः। तस्मात् "सन् घटः" इति सामानाधिकरण्येन तु जायमानो व्यवहार ऐकात्म्यमभेदमेव गमयतीति बोध्यम्।

एतदेव स्फुटीकरोति– **सम्बन्धिद्वयमिति**। अयं भावः – संयोगसमवायादिसम्बन्धस्य प्रतियोगिभूतमनुयोगिभूतं च वस्तुद्वयं विशेषणत्वविशेष्यत्वाभ्यां

**न तु परस्परात्मत्वेन। परस्परात्मत्वेन चेह प्रतिपत्तिः प्रत्यात्मवेदनीया। विप्रतिपत्तेश्च सामान्यविशेषयोर्भेदे, नान्यथा विप्रतिपद्येरन्।**

**सामान्यप्रत्यक्षे च विशेषप्रत्यक्षाभिमानात्, अन्यथा धूमदृष्टाविवाग्नौ परोक्षाभिमानः स्यात्।**

**स्यादेतत्— न सम्बन्धमात्रादभेदप्रतिपत्तिः, अपि तु सम्बन्धविशेषात् समवायात्, स हि वस्तुसंश्लेषात्मकः। तन्न, समवायेऽपि ताभ्यां रूपभेद-**

---

द्वाभ्यां ज्ञानाभ्यां गृह्यते। पूर्वं विशेषणज्ञानविषयो दण्डो भवति पश्चाद् दण्डीति विशेष्यज्ञानं भवतीति वैशेषिकाणां पन्थाः। एकेनैव ज्ञानेन विशेषण-विशेष्ययोर्युगपद् ज्ञानं भवति "दण्डविशिष्टपुरुष" इति भाट्टानां पन्थाः। कोऽपि पन्था भवतु; दण्डी पुरुष इत्यत्र विशेषणविशेष्यत्वेनैव दण्डपुरुषयोर्ज्ञानं भवति, न तु परस्परात्मत्वेन = ऐकात्म्येन = अभेदेनेति यावत्।

सन् घट इत्यादौ तु ऐकात्म्येनैव वस्तु अवभासत इति सर्वजनानुभवः। तस्मात् 'सन् घट' इत्यादौ अभेद एव भासते न कथञ्चिदपि भेद इति तात्पर्यम्। एतदुक्तम्— **परस्परात्मत्वेन चेह प्रतिपत्तिरिति**।

उपपत्त्यन्तरमाह— **विप्रतिपत्तेश्चेति**। अर्थात् सामान्यविशेषयोः (जातिव्यक्त्योः) भेदे सांख्यानां विप्रतिपत्तिरपि वर्तते। यदि सामान्यविशेषयोर्भेदेन प्रतीतिः स्यात् तदा प्रतीतिसिद्धत्वात् तयोर्भेदे सांख्या न विप्रतिपद्येरन् विरुद्धबुद्धयो न स्युरित्यर्थः। विप्रतिपद्यन्ते च सांख्यास्तयोर्भेदे, तस्मान्न भेदः किन्त्वभेद एवेति सिद्धम्।

सामान्यविशेषयोर्भेदाभावे युक्त्यन्तरमाह— **सामान्येति**। एवं सामान्य-विशेषयोर्भेदेन प्रतीतौ सामान्यप्रत्यक्षे जाते विशेषप्रत्यक्षाभिमानो यो भवति, स न भवेत्। भवति हि गोत्वसामान्यप्रत्यक्षे गौर्मया प्रत्यक्षीकृत इत्यभिमानः। भेदेन प्रतीतौ तु यथा धूमप्रत्यक्षे जाते तद्भिन्ने वह्नौ 'अनुमितः' इति परोक्षाभिमानो भवति न प्रत्यक्षाभिमानस्तथेहापि सामान्यप्रत्यक्षे विशेषोऽनुमितो मयेति परोक्षाभिमान एव स्यादिति भावः।

अत्र शङ्कते — **स्यादेतदिति**। ननु यत्र विशेषणविशेष्ययोः संयोगसम्बन्धो भवति यथा दण्डीत्यत्र दण्डपुरुषयोः, तत्र स भिन्नयोस्तयोरभेदावभासको मा स्म भूत्।

**स्यानपायात्। अन्यथा भेदाभावादसम्बन्धात्। तथा च नैकात्म्येन प्रख्या युज्यते। अस्ति चेयम्। अतस्तया विरुद्धः प्रख्याभेदो न वस्तुभेदव्यवस्थायै प्रभवति, स्वयं वा व्याहतत्वाद्, एकाधिकरणत्वेनोपपत्तेः।**

---

मयापि सम्बन्धमात्राद् अभेदप्रतिपत्त्यनङ्गीकारात्। किन्तु यत्र समवायाख्यात् सम्बन्धविशेषाद् विशेषणविशेष्यभावस्तत्र भिन्नयोरप्यभेदप्रतिपत्तौ न कापि बाधा। यतो हि समवायसम्बन्धो भिन्नयोरपि वस्तुनोर्नैरन्तर्यरूपसंश्लेषात्मकः। अतः स भिन्नयोस्तयोर्भेदं तिरोधाय अभेदं बोधयति। एतदनुसारेण "सन् घटः, गौः स्वस्तिमती" इत्यादौ सत्यपि विशेषणविशेष्ययोर्भेदे सामानाधिकरण्यबुद्धिर्युज्यते। अत उक्तस्थलयोः समवायसम्बन्धप्रयुक्त एव सामानाधिकरण्यावभासो नाभेदकृतः, सत्ताघटयोः, गोत्वस्वस्तिमत्योश्च समवासम्बन्धस्वीकारादिति चेत्, तन्न, अत्यन्तसंश्लेषात्मकसमवाये स्वीकृतेऽपि ताभ्यां "सन् घटः, गौः स्वस्तिमती" इति प्रयोगाभ्यां सत्ताघटयोर्गोत्वस्वस्तिमत्योश्च स्वरूपभेदो नापैति। अस्यां स्थितौ "सन् घटः" इति जायमाना ऐकात्म्यबुद्धिर्नोपपद्येत; किन्तु भवति तादृशी बुद्धिः, तस्मात् "सन् घटः" इत्यादयो भवन्तो व्यवहारा अभेदबोध एव युज्यन्त इति बोध्यम्। एतदभिप्रायेणोक्तम्– **समवायेऽपीत्यादि**। व्यतिरेके बाधकमाह– **अन्यथेति**। अयमाशयः – यदि समवायसम्बन्धकृतस्तत्राभेदः प्रतीयेत तदा भेदाभावात् समवायसम्बन्धोऽपि न भासेत यतः समवायोऽपि भेदगर्भ एव भवति। तस्माद् भेदपक्षे "सन् घटः" इत्यादि नैकात्म्यं भासेत। किन्तु भासत ऐकात्म्यम्। अतस्तयाऽभेद(ऐकात्म्य)प्रख्यया प्रत्यक्षया विरुद्धः प्रख्याविशेषः सन्निति सदाकारा घट इति घटाकारा च सामान्यविशेषप्रतिपत्तिर्न सामान्य-विशेषवस्तुनोर्भेदं व्यवस्थापयितुमलमिति भावः।

पूर्वं "सन् घटः" इत्यादौ प्रख्याविशेषद्वयमाश्रित्य ऐकात्म्यप्रख्यया सामान्य-विशेषात्मिका प्रख्या विरुद्धा इति कृत्वा भेदसिद्धिर्निराकृता। इदानीमेकयैव प्रख्यया द्वे वस्तुनी (सामान्यं विशेषश्चेति) समानाधिकरणत्वेन बोध्येते इति मतं निराकरोति– **स्वयं वेति**। अयमाशयः– का सा एका प्रख्या, यया द्वे वस्तुनी

**ननु भेदेऽपि परस्परात्मत्वेन प्रतिपत्तेर्निमित्तं समवायः, तस्य खल्वेष सामर्थ्यातिशयो येन भेदवतामर्थानां भेदं तिरोदधाति, तथा च तेऽभेदेन प्रकाशन्ते। अत्रोच्यते –**

**भेदान्तर्धानसामर्थ्यं तस्य भेदेऽपि चेन्मतम्॥ १३॥**

**हन्तैकस्यैव तत् किं न यदेवमवभासते॥१३-१/२॥**

**समवायसामर्थ्याच्चेद् भेदवतोरभेदावभासः, हन्त! एकस्यैव वस्तुनः सामर्थ्यविशेषान्नानावभासोऽभ्युपेयताम्, व्यर्था वस्तुभेदकल्पना। न ह्यस्ति विशेषः – यतो भिन्नयोरभेदप्रकाशसम्भवः, नैकस्य नानावभाससम्भव इति।**

---

समानाधिकरणत्वेन बोध्येते इति जिज्ञासायां यद्यैकात्म्यप्रख्या गृह्येत तदा ऐकात्म्यप्रख्या च द्वे वस्तुनी गृह्येते चेति व्याहतम्। अत ऐकात्म्यप्रख्याबलादभेद एव सिध्येत्, न भेदः। यदि तु एका प्रख्या सामान्यविशेषप्रत्ययरूपा गृह्येत, तदा स्वयमेव व्याहता सा प्रख्या सामान्यविशेषात्मकविरुद्धार्थविषयकत्वान्नोत्पत्तुमर्हतीति कथं सा स्वरूपमलभमाना प्रख्या भेदं गमयेत्? तस्मादेकाधिकरणत्वेन एकात्मत्वेनैव तत्रत्या प्रख्या उत्पद्यते, सा च भेदं बोधयितुं न क्षमेति तात्पर्यम्।

सामान्यविशेषौ यदि वस्तुगत्या भिन्नौ तदा ''सन् घटः, गौः स्वस्तिमती'' इति परस्परात्मत्वेन (अन्योन्यात्मकत्वेन) या प्रतिपत्तिर्भवति लोके, तस्याः किं निमित्तमिति अभेदवादिशङ्कां मनसिकृत्य भेदवादी तत्समाधानेन स्वपक्षमुपपादयति– **नन्विति**। सामान्यविशेषयोः अत्यन्तभिन्नत्वेऽपि तयोः परस्परात्मत्वेन प्रतिपत्तेः समवायसम्बन्ध एव निमित्तं **स्वीकर्तव्य इत्यर्थः**। एतदेवोपपादयति– **तस्य खल्विति**। अयं भावः – समवायसम्बन्धस्यैवैष सामर्थ्यविशेषो येन सोऽत्यन्तभिन्नानामप्यर्थानां भेदं तिरोधाय तेषामभेदं (परस्परात्मत्वं) प्रकाशयति। तस्मात् ''सन् घटः, गौः स्वस्तिमती'' इत्यादावपि विशेषणविशेष्ययोर्भेद एव वास्तविकोऽभेदभानं तु समवायकृतमिति पूर्वपक्षे सिद्धान्ती उत्तरमाह – **अत्रोच्यते – भेदान्तर्धानेति**।

**ननु ज्वलनायोगुडादिषु दृष्टमेवंविधं संसर्गस्य सामर्थ्यम्, तत्र दर्शनात् सम्भवी संसर्गाद् भेदवत्स्वभेदावभासः, नैकस्मिन्नानावभासः, अदर्शनात्। उच्यते –**

**दृष्टः संसर्गधर्मोऽयं यद्येकमपि वै तथा॥१४॥**

**नानावभासते चित्रं रूपमेकं तथा मतिः॥ १४-१/२ ॥**

---

अयं श्लोकार्थः – यदि सामान्यविशेषयोरत्यन्तभेदेऽपि समवायस्य भेद-तिरोधानसामर्थ्यमुपेत्य परस्परात्मत्वप्रतिपत्तिरुपपाद्येत, तर्हि एकस्यैवाद्वितीयब्रह्मणो घटपटादिनानाभेदप्रतिपत्तिसामर्थ्यं किमिति नाभ्युपेयेत, यस्मात् सामर्थ्यविशेषाद् एकं ब्रह्म नानारूपेणावभासत इति।

श्लोकार्थमेव विशदयति मूलकारः – **समवायसामर्थ्याच्चेदिति**। स्फुटो वाक्यार्थः। **न ह्यस्ति विशेष इति**। भिन्नयोरभेदावभासे यदि किमपि विनिगमकं स्यात् तदा भेदेऽभेदावभास इति पक्षः स्वीक्रियेत, अभेदे भेदावभासपक्षश्च परित्यज्येत। किन्तु नास्ति तथाविधं किमपि विनिगमकम्। तस्माद् विनिगमकाभावाद् यथा भिन्नयोरभेदावभाससम्भवस्तथा एकस्यापि नानावभासः सम्भवत्येवेति अभेदपक्ष एव किं न स्वीक्रियतामित्यभिप्रायः।

संसर्गस्य भेदान्तर्धानपुरस्सरमभेदावभासे दृष्टान्तमाशङ्कते – **नन्विति**। ननु ज्वलनेऽग्नौ, अयोगुडम् अयोगोलकम् तस्मिन् स्थले संसर्गस्याभेदावभासकत्वं दृष्टमित्यर्थः। अग्निसंसर्गाद् अयोगोलकमग्निरित्यभेदेनावभासते। अनेन दृष्टान्तेन भिन्नयोरप्यग्निलौहगोलकयोरभेदोऽवभासते। अभेदे भेदावभासस्य तु नास्ति किञ्चन निदर्शनमित्याशङ्कितुराशयः।

अत्रोत्तरत्वेन श्लोकमवतारयति – **उच्यत इति**। दृष्टः संसर्गधर्मोऽयमित्यादि-श्लोकस्यायमर्थः– यदि संसर्गस्यायं धर्मः सामर्थ्यविशेषो यद् भिन्नयोरप्यग्नि-लौहगोलकयोरभेदोऽवभासत इति दृष्टञ्चेत् तदा एकमपि अभिन्नमपि भिन्नतयाऽवभासत इत्यपि दृष्टमेवास्ति। यद् एकमपि चित्रं रूपं नानात्मकमवभासते, एकापि बुद्धिर्युगपन्नानाविषयावलम्बिनी नानात्मिकाऽवभासत इति।

**दृष्टं खल्वेकमपि विविधावभासम्, यथा चित्रं रूपम्। तद्धि खलु न नीलादिसमाहारमात्रम्, तेषामवयवसमवाये रूपान्तरानभ्युपगमे चावयविनो नीरूपत्वप्रसङ्गात्।**

**न च नीरूपत्वमेवावयविनः, रूपसंस्काराभावे हि न स चाक्षुषः स्यात्। न च रूपिसमवायात् संख्याकर्मादिवच्चाक्षुषत्वम्। एवं ह्युक्तम्— "महत्यनेकद्रव्यसमवायाद् रूपाच्चोपलब्धिः" (वै०सू०४/१/६) इति, सर्वश्चेत्थमवयवी नीरूपः स्यात्।**

---

श्लोकार्थमेव स्फुटीकरोति मूलकृत्— **दृष्टं खल्विति**। यद्यपि चित्ररूपमेकमेव भवति, तथापि नीलपीतहरितादिनानाकारतयाऽवभासमानं भवतीति दृष्टमेवेत्यर्थः।

ननु पटस्य चित्रं नाम किमपि स्वतन्त्रं रूपं नास्ति, किन्तर्हि? तन्तूनामेव नीलपीतादिरूपाणि एकत्र समाहृतानि सन्ति चित्रमित्युच्यत इत्याशङ्क्याह— **तद्धीति**। यदि विभिन्नतन्तुगतानां नीलपीतादिरूपाणां समाहारमात्रं चित्रं स्यात् तदा नीलादिरूपाणां तन्तुष्वेवावयवेषु समवायात् चित्ररूपस्य चानभ्युपगमात् पटोऽवयवी नीरूप एव प्रसज्येतेति समाधानवाक्यार्थः।

पुनः शङ्कते— **न चेति**। पटोऽवयवी नीरूप एवास्तु, का हानिरिति वक्तुं न शक्यते। रूपलक्षणस्य संस्कारस्याभावे स पटः चक्षुषा न प्रत्यक्षीक्रियेत, यथा रूपरहित आकाशो न प्रत्यक्षो भवति, तद्वत्।

ननु यथा संख्याकर्मादयः स्वयं नीरूपा अपि रूपिद्रव्यसमवायात् चाक्षुषप्रत्यक्षविषया भवन्ति, तथैव नीरूपोऽपि अवयवी पटो रूपिषु तन्तुषु समवायात् प्रत्यक्षो भविष्यतीति शङ्कते— **न च रूपीति**।

अत्रोत्तरमाह— **एवं ह्युक्तमिति**। अर्थाद् एवं सति "महत्यनेकद्रव्यसमवायाद् रूपाच्चोपलब्धिः" इति वैशेषिकसूत्रविरोधः स्यात्। अयं सूत्रार्थः— महति द्रव्ये घटादौ या चाक्षुषी उपलब्धिः साऽनेकद्रव्येष्ववयवेषु समवेतत्वात् स्वयं रूपवत्त्वाच्च भवति नान्यथेति। तथा च यदि पटो नीरूपः स्यात् तदा तस्य चाक्षुषप्रत्यक्षं न

**अथ नारूपः प्रतीयत इति नायं प्रसङ्गः, चित्रोऽपि तथेति नारूपः; तच्चास्य रूपं नीलपीतादिनिर्भासः। तथा नगरत्रैलोक्यादिबुद्धयो विविधविषयाकारा निर्भासन्ते भेदाभावेऽपीति विषयाकारज्ञानवादिनो मन्यन्ते। न चैकबुद्धितत्त्वाव्यतिरेकाद् विषयाकाराः परस्परतोऽपि व्यावर्तन्ते, प्रागेव बुद्धेः।**

---

सम्भवेदिति समाधानाशयः। एतदुक्तं भवति– गुणकर्मादिर्नीरूपस्यापि द्रव्यसमवायाच्चाक्षुषत्वम्, न द्रव्यस्य। तस्य तु रूपादेव चाक्षुषत्वम्। अतः पटस्य चित्ररूपांनभ्युपगमे तस्याचाक्षुषत्वप्रसङ्गः। चित्ररूपाभ्युपगमे च एकमपि तद् नीलपीताद्यनेकाकारतयाऽवभासत इति सिद्धोऽभेदपक्षः। अनेन चित्रपटन्यायेन सर्वे घटादयोऽवयविनो नीरूपा एव भवेयुरित्यान्ध्यप्रसङ्गः।

ननु रूपरहितं द्रव्यं न प्रतीयते, प्रतीयते च घटादिः, तस्माद् घटादेर्नोक्तनीरूपत्वप्रसङ्ग इति शङ्कते– **अथ नारूप इति**। उत्तरयति– **चित्रोऽपीति**। अयमर्थः – घटादिवदेष तर्हि चित्रपटोऽपि प्रतीयत एवेति सोऽपि न नीरूपः। अतोऽस्ति चित्रं रूपमिति स्वीकार्यम्। तच्च चित्रपटस्य रूपं नीलपीतादिविभिन्नाकारतयाऽवभासत इति सिद्ध एकस्य नानावभासः, अभिन्नस्य भेदेनावभास इति यावत्।

सिद्धान्ती स्वं पक्षं दृष्टान्तान्तरेण समर्थयति– **तथेति**। नगरमिति त्रैलोक्यमिति वा एकैकापि बुद्धिर्भेदाभावेऽपि = स्वत एकत्वेऽपि गृहप्रासाददेवमन्दिरादिभेदेन नानावभासिनी अनुभूयते सर्वैः। एतद्धि विषयाकारज्ञानवादिनो योगाचारस्य मतेनापि सिद्धमित्याह – **मन्यन्त इति**।

ननु बुद्धेराकारा नानावभासन्तां नाम बुद्धिस्तु एकैव भासते। अतो नायं दृष्टान्त एकस्य नानारूपतयाऽवभास इति चेत्, न, तेषां विषयाकाराणां बुद्धितत्त्वाद् भेदाभावेन परस्परतोऽपि अव्यावृत्तत्वात् = अभिन्नत्वात् तदभिन्नाभिन्नस्य मिथोऽभिन्नत्वात्। तथा च ये विषयाकाराः परस्परतोऽपि न भिद्यन्ते, बुद्धितत्त्वाव्यतिरिक्तत्वात्, ते तु सुतरां बुद्धेर्न भिद्यन्ते। एतदभिप्रेत्योक्तम् – **न चैकबुद्धितत्त्वेत्यादिना प्रागेव बुद्धेरित्यन्तेन ग्रन्थेन।**

**स्यादेतत् – चित्रमपि रूपं संसर्गादिवैकार्थसमवेतसमवायलक्षणात् तथाऽवभासते। तदसत्, यतः –**

**न च सम्बन्धिसम्बन्धः संसर्गो व्यवधानतः॥१५॥**

**संश्लेषो हि संसर्गः, ततश्च परस्पररूपावभासः। स चाव्यवधाने युज्यते, न तु स्वाश्रयाभ्यां व्यवधाने। अवयवावयविरूपयोरेक-व्यवधानेऽप्यसंश्लेषः, किमु द्वयव्यवधाने।**

---

पुनः शङ्कते– **स्यादेतदिति**। अयं शङ्काग्रन्थार्थः – चित्रमेकं रूपं भवतु नाम, किन्तु न हि तत् स्वरूपेण नीलपीताद्यनेकाकारतयाऽवभासते। तत्र नीलपीताद्यनेकाकारतावभास एकार्थसमवेतसमवायलक्षणस्य परम्परासंसर्गस्यैव सामर्थ्यमस्ति, यत्प्रभावात् चित्रं नीलपीताद्यभिन्नं प्रतीयते। अत्रेदं रहस्यम् – येष्ववयवेषु तन्तुषु नीलादयः समवेताः, तेष्वेवावयवेषु स चित्रपटोऽपि समवेतः, अतो नीलादिभिः सह एकार्थसमवेतः पटो जातः, तस्मिंश्चैकार्थसमवेते पटे चित्ररूपस्य समवायसंसर्गोऽस्ति। अत एतस्य एकार्थसमवेतसमवायलक्षणस्य संसर्गस्य सामर्थ्याद् एकमपि चित्रं रूपं नानानीलाद्यात्मना प्रकाशमानं नाना इवावभासत इत्यन्यत्रापि संसर्गस्यैव तादात्म्यप्रकाशनसामर्थ्यम्, न तु स्वरूपतो वस्त्वभिन्नं भवतीति पूर्वपक्षिणोऽभिप्रायः। तामिमाशङ्कां निराकरोति सिद्धान्ती – **तदसदिति**। निराकार्यत्वे हेतुमाह– "न च सम्बन्धिसम्बन्धः संसर्गो व्यवधानतः" इति। सर्वथा अव्यवहितयोरेव सम्बन्धिनोः सम्बन्धः संसर्गो भवति, न व्यवहितयोरिति श्लोकार्थः। तदेव विवृणोति – **संश्लेषो हीति**। संश्लेषो नाम परस्परं संश्लिष्टता, सैव संसर्ग इत्युच्यते नान्यः। संश्लिष्टतावशादेव परस्परावभासो भवति, यथाऽग्निः संश्लिष्टतया परस्य भिन्नस्यायोगोलकस्य पररूपेण अग्निरूपेणावभासो भवति "अग्निरेवायम्" इति।

स च संश्लेषोऽव्यवधान एव युज्यते। प्रकृते तु नीलपीतादिरूपाणां चित्ररूपस्य च नास्ति परस्परं साक्षात् संश्लेषः। तथा चायोगोलकमिव चित्रमपि कथं नीलपीताद्यात्मनाऽवभासितुमर्हति? इह नीलपीतादिरूपाणां चित्ररूपस्य च

**किञ्च –**

**व्यवहारे परोपाधौ सर्वा धीर्व्यावहारिकी।**
**अयथार्था यदा, भावभेदकल्पस्तदा मुधा॥१६॥**

**यस्य खलु 'शुक्लो गौः' इत्यादिबुद्धयो व्यवहाराङ्गभूता द्रव्येषु गुणजात्युपाधिनिबन्धनाः, तस्यैता न यथावस्तु, जातिगुणद्रव्याणामन्योन्यमर्थान्तरत्वात्। तथा च न वस्तुनिबन्धनो व्यवहारः, बुद्ध्यानुपदर्शितस्याव्यवहाराङ्गत्वाद् बुद्ध्युपदर्शितस्य च तथाभावात्।**

---

स्वाश्रयाभ्यां द्वाभ्यां व्यवधानाद् नास्ति संश्लेष इत्याह – **न त्विति**। अत्र स्वं नीलादिरूपं चित्ररूपं च, तयोः पृथक् पृथग् द्वौ आश्रयौ स्तः, नीलादिरूपस्याश्रयस्तन्तुसमूहः, चित्ररूपस्य चाश्रयः पटः। तथा चाभ्याम् आश्रयाभ्यां व्यवधानात् नीलादिरूपचित्ररूपयोर्नास्ति संश्लेषः। अतः कथं चित्ररूपमेकं संसर्गसामर्थ्याद् नीलादिनानारूपात्मनाऽवभासितुमर्हति ? संश्लेषरूपसंसर्गाभावात्।

उक्तमर्थं कैमुतिकन्यायेनाप्युपपादयति सिद्धान्ते – **अवयवावयविरूपयोरिति**। अर्थात् चित्ररूपस्य अवयविना एकेनापि व्यवधानाद् यदा अवयवैः संसर्गो नास्ति, तदा कथमवयवगतैर्नीलादिरूपैः संसर्गः सम्भवेत् ? तन्तुपटाभ्यामवयवाभ्यां द्वाभ्यां व्यवधानादित्याशयः।

एवं "सन् घटः, गौः शुक्लः" इत्यादिव्यवहारेषु सत्सु सामान्यविशेषयोरात्यन्तिकभेदकल्पना व्यर्थैव भेदवादिन इत्याह सिद्धान्ती – **किञ्चेति**।

श्लोकार्थस्तु – यो हि व्यवहारो गुणजात्याद्युपाधिकृतो भवति। तत्र तदङ्गभूता सर्वापि धीर्व्यावहारिक्येव यदा भवति न वास्तविकी, तदा व्यावहारिकीं बुद्धिमाधृत्य भावानां भेदकल्पनापि व्यर्थैवास्तीति। श्लोकार्थमेव स्फुटयति - **यस्य**

**एवञ्च प्रत्ययविरचितेनैवायमर्थेन व्यावृत्तो व्यवहारोऽनुवृत्तश्चेति व्यर्था वस्तुभेदकल्पना, कल्पितस्यापि तस्य व्यवहारेऽनुपयोगाद् इतरस्य चोपयोगात्। यथार्थत्वाय हि व्यावहारिकीणां बुद्धीनां वस्तुभेदः कल्प्यते, कल्पिते च तस्मिन् परोपाधित्वात् तासां नायथार्थत्वपरिहारः।**

---

**खल्विति**। सामान्यविशेषयोरत्यन्तभेदवादिनामपि "सन् घटः, गौः शुक्लः" इत्याद्याबुद्धयो व्यवहाराङ्गभूता द्रव्येषु सत्ताजातिशुक्लगुणोपधानेन तदुपरक्ताः सत्यो द्रव्यजात्योर्द्रव्यगुणयोश्च भेदेऽपि सदभेदेन शुक्लगुणाभेदेन च भवन्ति, किन्तु ता बुद्धयो न यथार्था मन्यन्ते भेदवादिभिः, जातिगुणाभ्यां द्रव्यस्यार्थान्तरत्वात्। ततश्च अयथार्थबुद्धिभिरेव यदा उक्ता भेदव्यवहाराः सम्भवन्ति तदा तुल्यन्यायेन घटपटादिभेदबुद्धयोऽपि अयथार्था एव भेदव्यवहारं प्रवर्तयिष्यन्तीति न कथमपि भेदः सिध्यतीति भावः।

फलितार्थमाह – **तथा**ेति। अयं भावः – उक्तविवेचनेनेदमायाति यत् सर्वोऽपि व्यवहारो बुद्धिनिमित्त एव भवति न वस्तुनिमित्तः। सत्यपि वस्तुनि बुद्ध्याऽनुपदर्शितत्वे व्यवहाराभावात्, असत्यपि वस्तुनि बुद्ध्युपदर्शितत्वे व्यवहाराङ्गत्वादिति। तस्मात् "सन् घटः, गौः शुक्लः" इत्यादौ असत्यप्यभेदे यदि औपाधिकोऽभेदव्यवहारोऽङ्गीक्रियते भेदवादिभिस्तदा असत्यपि भेदे घटपटादि-भावेष्वयथार्थबुद्धिनिबन्धनो भेदव्यवहार इत्यपि स्वीकर्तव्यमेव तैरिति।

उक्तार्थमेव पुनर्निष्कृष्य प्रदर्शयति – **एवञ्चेति**। अयमभिप्रायः – जाति-गुणाभ्यां द्रव्याणां भेदे सत्यपि बुद्ध्युपस्थापितेनैवाभेदात्मकेन "गौः" इत्यनुवृत्तो व्यवहारः, "शुक्लः" इति च व्यावृत्तो व्यवहारो भवति। अत्र गौरिति जात्या गोरभेदबुद्धिः शुक्ल इति च गुणेन गोरभेदबुद्धिरिति ध्येयम्। गौरिति अनुवृत्तो व्यवहारो गोत्वजातेः सर्वगोष्वनुवृत्तत्वात्, शुक्ल इति व्यावृत्तो व्यवहारो नीलादिगोषु व्यावृत्तत्वादित्यपि ध्येयम्। तस्मादुक्तव्यवहारे वस्तुभेदस्यानुपयोगाद् बुद्ध्युप-स्थापितस्याभेदस्यैवोपयोगाद् व्यर्थैव वस्तुभेदकल्पना भेदवादिनाम्। एतदेवोक्तं मूले – कल्पितस्यापि तस्य व्यवहारेऽनुपयोगाद् इतरस्य बुद्ध्युपस्थापितस्याभेदस्य चोपयोगादिति।

**स्यादेतत् – असति वस्तुभेदे अयथार्थमप्यनुवृत्तव्यावृत्तावग्रहं व्यावहारिकं विज्ञानं नोदेतुमर्हति, बीजाभावात्। न खलु स्थाणुशुक्तिशकलादिषु पुरुषरजतादिविभ्रान्तयो निर्बीजाः, सामान्यनिबन्धनत्वात्। उच्यते –**

**अयथार्थधियो बीजमवश्यं बाह्यमेव न।**
**दृष्टस्तिमिरकामादिरान्तरोऽपि ह्युपप्लवः॥१७॥**

**न विषयदोषादेव सादृश्यादेरयथार्थज्ञानम्, आध्यात्मिकेभ्योऽपि तु दोषेभ्यस्तिमिरकामशोकादिभ्यः। तत्रासति वस्तुभेदे आध्यात्मिको दोषोऽविद्यालक्षणो व्यावहारिकज्ञानबीजमिति नार्थो वस्तुभेदेन।**

---

इतश्च वस्तुभेदकल्पना व्यर्थेत्याह – **यथार्थत्वायेति**। अयं भावः – घटपटादिषु व्यावहारिकीणां बुद्धीनां यथार्थत्वं यथा निर्वहेत्, एतदर्थमेव वस्तुभेदः कल्प्यते भेदवादिभिः, किन्तु जातेर्गुणाच्च द्रव्यरूपभेदे कल्पितेऽपि "गौः शुक्लः" जात्यभेदो गुणाभेदश्च द्रव्यस्य प्रतीयत एवेति न तादृशीनां बुद्धीनामयथार्थत्वं परिहृतं भवति, यथार्थत्वं वा निर्वहतीति व्यर्था वस्तुभेदकल्पनेति।

पूर्वपक्षी वस्तुभेदकल्पनायाः सार्थकत्वमाशङ्कते – **स्यादेत**दिति। अयं भावः – यदि वस्तुभेदो नास्ति, तदा भ्रमात्मकमपि "गौः शुक्लः" इति अनुवृत्तव्यावृत्तरूपग्राहिव्यावहारिकमभेदविज्ञानं नोत्पत्तुमर्हति, भ्रमज्ञानस्य हेत्वभावात्। यतो हि स्थाणुपुरुष - शुक्तिरजतरज्जुसर्पादिविभ्रान्तिषु सामान्यमेव = सादृश्यमेव बीजमस्ति, सादृश्यञ्च भेदगर्भितं भवति। अतो 'गौः शुक्लः' इत्यादिभ्रान्तिज्ञानेऽपि किञ्चित् कारणमवश्यं भवेत्। तच्च कारणं वस्तुभेद एव। यतो हि यदि द्वे वस्तुनी भवेतां तदैव व्यधिकरणयोरपि तयोः सामानाधिकरण्येन भाने सति "गौः शुक्लः" इत्यभेदभ्रान्तिर्भवितुमर्हति, नान्यथा। अतो भ्रान्तिज्ञानोत्पत्तिबीजरूपेण वस्तुभेद आवश्यक एव। मूले सामान्यनिबन्धनत्वादित्यस्य भ्रमस्य सादृश्यनिबन्धनत्वादित्यर्थः।

**अस्तु तर्हि एकं द्व्यात्मकम्। एवं हि परस्परात्मप्रतिपत्तिश्च सामान्यविशेषयोः कल्पते। वस्तुविपरीतश्च नार्थसामर्थ्यातिशयः कल्पयितव्यः। वस्तुनिबन्धनो व्यवहारः, न व्यावहारिकज्ञानानामयथार्था वृत्तिः।**

---

अत्र सिद्धान्ती समाधत्ते – **उच्यत इति** ।अयथार्थधियः = भ्रान्तिज्ञानस्य बीजं बाह्यमेव वस्तु भवतीति नास्ति यतः क्वचित् केशोण्ड्रक - कामिन्यादिभ्रमे आन्तरो हेतुस्तिमिरादिः कामादिर्दोषो दृष्टो लोके ।श्लोके उपप्लवशब्दो दोषार्थः ।श्लोकार्थमेव स्फुटीकरोति – **न विषयदोषादेवेति** । अयं भावः – शुक्तिरजतादिविभ्रमेषु यद्यपि सादृश्यादिरूपो बाह्यदोष एव बीजं भवति तथापि तिमिरकामशोकादिभ्यः आध्यात्मिकेभ्योऽपि दोषेभ्यः केशोण्ड्रककामिन्यादिभ्रमो जायमानो दृश्यते ।प्रकृते च वस्तुभेदाभावेऽपि "गौः शुक्लः" इति सामान्यविशेषयोरभेदभ्रमे व्यावहारिके आध्यात्मिक आन्तरोऽविद्यालक्षणो दोष एव बीजमिति तदर्थं वस्तुभेदकल्पना निरर्थिकैवेति ।

एवं संसर्गवादिस्वीकृतं भेदपक्षमवधूय अनेकान्तवादिनां भेदाभेदपक्षं दूषयितुमुपक्रमते - **अस्तु तर्हीति** । यदि 'शुक्लो गौः' इत्यादिव्यवहारदर्शनात् केवलभेदपक्षो न सम्भवति चेत्, तदा "एकं द्व्यात्मकमभ्युपगम्य सामान्यविशेषयोर्भेदाभेदावुभौ स्वीक्रियेताम्, गोत्वसामान्येन गौरित्यभेदव्यवहारः, शुक्लत्वादिविशेषेण च भेदव्यवहार इति । एवं सति सामान्यविशेषयोः परस्परात्मत्वप्रतीतिरप्युपपद्यते – यो गौः स शुक्लः, यः शुक्लः स गौरिति ।

भेदाभेदपक्षे कल्पनालाघवमपि भवतीत्याह – **वस्तुविपरीतश्चेति** । अयं भावः – केवलभेदपक्षे "गौः शुक्लः" इत्यभेदव्यवहारोपपत्त्यर्थं समवायाख्यसंसर्गस्य भेदतिरोधानरूपः सामर्थ्यातिशयः कल्पयितव्यो भवति, स च वस्तुविपरीतः । यतो हि यदि वस्तु भिन्नं तदाऽभेदोपपादनाय समवाये भेदतिरोधानसामर्थ्यातिशयकल्पना वस्तुविपरीतैवास्तीति स्फुटम् । भेदाभेदोभयपक्षे त्वभेदस्य स्वयं सिद्धत्वेन तदुपपादनाय समवायसंसर्गस्य सामर्थ्यातिशयकल्पना नावश्यकीति कल्पनालाघवं भवतीति ।

**स्यादेतत् – एकस्य द्व्यात्मकता विरोधवती। एकं च द्व्यात्मकञ्चेति विप्रतिषिद्धम्। अपि च सामान्यं भेदान्तरानुयायि। ततो व्यावृत्तस्वभावो भेदः। तयोरेकत्वं हि विरोधादशक्यावगमम्।**

**नैतत् सारम्। विरुद्धमिति नः क्व सम्प्रत्ययः ? यत् प्रमाणविपर्ययेण वर्तते। यस्तु यथा प्रमाणेनावगम्यते तस्य तथाभावे विरुद्धत्वाभिधाने कं वतायमाश्रित्य हेतुं विरुद्धत्वाविरुद्धत्वे व्यवस्थापयेत् ?**

---

भेदाभेदपक्षे "व्यवहारे परोपाधौ" इति कारिकया सिद्धान्तिना यत् प्रतिपादितं तदपि परिहृतं भवतीत्याह – **वस्तुनिबन्धन इति**। "सन् घटः, गौः शुक्लः" इत्यादिः सर्वोऽपि व्यवहारो वस्तुनिबन्धन एव भवति, न तु वस्त्वभावेऽपि। अतः सर्वाण्यपि व्यावहारिकज्ञानानि यथार्थान्येव भवन्ति, न तु तेषामयथार्था वृत्तिरित्यभिप्रायः।

भेदाभेदवादिनं प्रति मध्ये आशङ्कते – **स्यादेतदिति**। अयं भावः – एकत्र वस्तुनि सामान्यविशेषात्मना भेदाभेदौ तदा सम्भवेतां यदा एकं वस्तु द्व्यात्मकं भवेत्, तदेव तु नास्ति, एकस्य द्व्यात्मकत्वे विरोधात्। एकञ्च द्व्यात्मकञ्चेति विप्रतिषिद्धमेतत्। सामान्यविशेषयोर्नाभेदरूपविषयदृष्ट्यैव विरोधः, किन्तु स्वरूपतोऽपि स्वभावतोऽप्यस्ति विरोध इत्याह – **अपि चेति**। सामान्यं कमप्यन्यं भेदं विशेषमनुगच्छति, विशेषे च कश्चिदन्यो विशेषो भवतीत्यर्थः। तमेव विशेषं स्फुटीकरोति – **तयोरिति**। सामान्यविशेषयोः पृथक् स्वभावतैव विशेषोऽस्ति। सामान्यं हि अनुवृत्तस्वभावं भवति, विशेषस्तु व्यावृत्तस्वभावो भवतीति तयोः स्वरूपतोऽपि भेदोऽस्ति। अतो भिन्नस्वभावयोस्तयोरेकत्वं नावगन्तुं शक्यते, विरोधादित्यभिप्रायः।

अवान्तरशङ्कामिमामनेकान्तवादी निराकरोति – **नैतत् सारमिति**। अयं भावः – अस्माकं मते विरुद्धमिति ज्ञानं क्व भवतीति विचारणीयम् - प्रमाणप्रतिपन्ने प्रमाणविपर्यये वा ? अनयोर्यो द्वितीयः पक्षः, तत्र विरोधप्रतिपत्तिर्भवितुमर्हति।

**प्रमाणं चैकस्य सामान्यविशेषात्मकतामवगमयति, व्यावृत्त्यनुवृत्तिभ्यां प्रख्यारूपभेदाद् ऐक्याधिकरण्यावगमाच्च।**

**तदिदमसाम्प्रतम्। यतो नेदृशां विप्रतिषिद्धार्थज्ञानानां प्रामाण्यमेव युज्यते संशयज्ञानवत्। अन्यथा संशयविषयोऽपि द्व्यात्मा स्यात्, द्व्याभासत्वात् तस्य, सामानाधिकरण्याच्च तदवभासयोः।**

---

अर्थाद् यत् प्रमाणेन तथा प्रतिपन्नं नास्ति, तस्याप्रामाणिकस्य तथा बोधे विरोधो भवतु नाम, किन्तु यत्तु प्रमाणेन यथाऽवगम्यते, तथैव तस्याभ्युपगमे क्व विरोधः? प्रमाणप्रतिपन्नेऽपि वस्तुनि यदि कश्चिद् विरुद्धत्वमाचक्षीत, तदा हन्त! कं हेतुमाश्रित्य संसारे विरुद्धत्वाविरुद्धत्वयोर्व्यवस्था स्यात्? तथा सति विरुद्धत्वाविरुद्धत्वव्यवस्थैव सर्वथा भज्येत। तस्माद् यत् प्रमाणेन यथा प्रतीयते, तत् तथैव युक्तम् अविरुद्धञ्च।

प्रमाणेन प्रमीयते चैकं द्व्यात्मकम्। तथा हि अनुवृत्तिव्यावृत्तिरूपेण बुद्धिभेदात् सामान्यविशेषात्मकत्वेन द्व्यात्मकत्वम्, तथा सामान्यविशेषयोरेकाधिकरणत्वावगमादेकत्वमिति प्रमाणसिद्धमेकस्य द्व्यात्मकत्वम्। तत्र सामान्यात्मकत्वेनाभेदो विशेषात्मकत्वेन भेदश्चेत्युभावपि युक्ताविति अनेकान्तवादानुसारी पन्थाः।

तदिदमनेकान्तवादिमतमुपस्थाप्य दूषयति — **तदिदमसाम्प्रतमिति**। असाम्प्रतत्वमेवोपपादयति हेतुना — **यत इति**। अयमर्थः — यद्येकस्य द्व्यात्मकत्वज्ञानं प्रमाणं स्यात्, तदा तेन प्रमाणेन एकं वस्तु द्व्यात्मकं भवेत्, किन्तु तादृशं ज्ञानं प्रमाणमेव नास्ति, विरुद्धार्थविषयत्वात् तस्य ज्ञानस्य। यथा विरुद्धार्थविषयकं संशयज्ञानं न प्रमाणं भवति, तद्वत्। अत्रायमनुमानाकारः — एकस्य द्व्यात्मकत्वज्ञानमप्रमाणम्, विरुद्धविषयकत्वात् संशयज्ञानवदिति। यदि विप्रतिषिद्धार्थकमपि प्रमाणं स्यात्, तदा संशयज्ञानमपि प्रमाणं स्यात्। तथा संशयविषयोऽपि द्व्यात्मकः स्यात्, स्याच्च पुरःस्थितं वस्तु स्थाणुरपि पुरुषोऽपि चेति। यतो हि संशयज्ञानेऽपि द्वयं भासते स्थाणुश्च पुरुषश्चेति। सामानाधिकरण्यञ्च तदुभयाभासयोः, विषयतासम्बन्धेन

**अथ मतम्—न संशयिते रूपसमुच्चयावगमः, यथा सामान्यविशेषवति, 'अयं वा, अयं वा' इति प्रतीतेः। मा भूत् समुच्चयः, विकल्पः स्यात्। सोऽपि न, वस्तुनो विकल्पानुपपत्तेः। एकमपि तर्हि न द्व्यात्मकम्, एकस्य द्व्यात्मकताविरोधात्। तत्र यथा संशयज्ञानं विप्रतिषेधादप्रमाणम्, तथा सामान्यविशेषप्रतिपत्तिरपि, ऐकाधिकरण्यात्।**

---

उभयोरवभासयोरेकस्मिन्नेव वस्तुनि वर्तमानत्वादिति। अतो नैकस्य द्व्यात्मकत्वं प्रमाणस्य विषय इति अप्रामाणिकत्वेन एकस्य भेदाभेदात्मकत्वमयुक्तमिति भावः।

भेदाभेदवादी शङ्कते— **अथ मतमिति**। "गौः शुक्लः" इत्यादिस्थले सामान्यविशेषयोः समुच्चयः प्रतीयते, संशयस्थले तु न स्वरूपसमुच्चयोऽवगम्यते, स्थाणुर्वा पुरुषो वेति प्रतीतिः। अतो विषयभेदात् संशयिते स्थले न एकस्य द्व्यात्मकताप्रतीतिप्रसङ्ग इति शङ्काभिप्रायः।

परिहरति— **मा भूदिति**। तर्हि संशयस्थले समुच्चयाभावेऽपि विकल्पः स्यात् स्थाणुत्वपुरुषत्वयोरिति भावः।

विकल्पप्रतीतेरपि संशयो भिन्न इति पुनः शङ्कते— **सोऽपि नेति**। संशयो विकल्पप्रतीतिरूपोऽपि नास्ति, एकस्य स्थाणुत्वपुरुषत्वविकल्पस्याप्यनुपपत्तेरित्यर्थः।

परिहरति— **एकमपि तर्हीति**। अयमभिप्रायः— यद्येकस्य वस्तुनो विकल्पो न भवितुमर्हति, अनुपपन्नत्वात्, तदा एकस्य द्व्यात्मकत्वमपि नोपपद्यते, विरुद्धत्वादिति।

उपसंहरति— **तत्रेति**। अर्थाद् यथा संशयज्ञानं न समुच्चितविषयकं न वा विकल्पितविषयकम्, उभयथापि विरोधात्, अत एवाप्रमाणं तत्, तथैव एकस्य वस्तुनः सामान्यविशेषोभयात्मकत्वेऽपि विरोधाद् एकस्य द्व्यात्मकत्वप्रतिपत्तिरपि संशयवदेवाप्रमाणम्, ऐकाधिकरण्यात्। एकस्मिन् विषये विरुद्धार्थयोः सामान्यविशेषयोः प्रतीयमानत्वादित्यर्थः।

**स्यादेतत् – न संशयज्ञानं विप्रतिषेधादप्रमाणम्, निर्णयज्ञानेन तु बाधात्। यत्र तर्हि न निर्णयस्तत्र विकल्पात्मता स्यात्। अपि च यथा बाधायामेकस्याप्रामाण्यं निराकरणात्, एवं विरोधेऽपि द्वयोरेकस्य वा**

---

भेदाभेदवादी पुनरभिप्रायान्तरेण शङ्कते – **स्यादेतदिति**। स्वाभिप्रायमेव व्यनक्ति – **न संशयज्ञानमिति**। अयं भावः – संशयज्ञानं न विप्रतिषेधात् = परस्परं विरोधाद् अप्रमाणं मन्यते, किन्तु एकतरस्य निर्णयज्ञानेनान्यतरज्ञानस्य बाधनादेवाप्रामाण्यं तस्य ।अतः कस्यापि ज्ञानस्याप्रामाण्ये विरोधोऽकिञ्चित्करः। तथा च 'सन् घटः' इति सामान्यविशेषप्रतीतेर्भेदाभेदविषयकत्वेन विरोधे सत्यपि नाप्रमाणत्वम्, बाधकाभावात्। अतः संशयज्ञानवद् विप्रतिषेधात् सामान्य-विशेषज्ञानमप्रमाणमित्यभेदवादिकथनं न युक्तमिति। सिद्धान्ती उत्तरयति – **यत्र तर्हीति**। समाधातुरयमाशयः – यदि संशयस्याप्रामाणत्वे बाधको निर्णय एव निमित्तम्, न विरोधः, तदा यत्र संशये नास्ति बाधको निर्णयस्तत्रैकस्य वस्तुनो विकल्प्यमानवस्तुद्धयात्मकत्वं स्यात्, न चैतदिष्टं कस्यापि। तथेष्टत्वे तु चन्द्रपरभागवर्तिहरिणसदसद्भावयोरद्याप्यनिर्णयाद् हरिणसद्भावासद्भावौ वैकल्पिकौ भवेताम्, आपद्येत च "हरिणः सन् वा असन् वा" इति संशयज्ञानस्य प्रामाण्यमिति।

एवम्, एकत्वज्ञानं द्व्यात्मकत्वज्ञानं च परस्परविरुद्धार्थकम्। अनयोर्मध्ये किमप्येकमेव ज्ञानं यदि केनाप्येकेन ज्ञानेन निराक्रियते, तदा एकत्वद्व्यात्मकत्वयोर्मध्ये यदबाधितं तदेव निश्चीयते, एकत्वं वा द्व्यात्मकत्वं वेति। अस्यां स्थितौ किमपि वस्तु एकमेव भविष्यति द्व्यात्मकमेव वा भविष्यति, न तु एकञ्च द्व्यात्मकञ्चेति क्वानेकान्तवादस्यावकाशः? यदि तु परस्परं निराक्रियते अर्थाद् एकत्वज्ञाने द्व्यात्मकत्वज्ञानं द्व्यात्मकत्वज्ञानेन चैकत्वज्ञानं निराक्रियते, तदा कस्यापि निश्चयो नार्हति भवितुम्, तुल्यबलत्वात् संशय एव स्यात्। तथा चास्यामपि स्थितौ न तज्ज्ञानं प्रमाणं स्यादित्यतो न प्रमाणसिद्धोऽनेकान्तवाद इत्यभिप्रायेणाह – **अपि चेत्यादि**।

**ज्ञानस्य विरुद्धरूपोपग्रहे तद्रूपाधिगत्योरन्योन्यनिराकरणात्। तत्रैकनिराकरणे इतरस्मान्निश्चयः; परस्परनिराकृतौ तुल्यबलत्वे सन्देह इति न संशयज्ञानादेकस्य सामान्यविशेषप्रतिपत्तिर्विशिष्यते। तस्मादिहानैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चितमिति स्वपक्षोपवर्णनम्। अपि च,**

**एकत्वमविरोधेन भेदसामान्ययोर्यदि।**
**न द्व्यात्मता भवेदेकतरनिर्भक्तभागवत् ॥ १८॥**

---

मूलार्थस्तु – यथा बाधस्थले शुक्तिज्ञानेन बलीयसा रजतज्ञानस्य बाधायां रजतज्ञानस्याप्रामाण्यं भवति, तस्य निराकरणात्, एवमेकत्वानेकत्वयोर्विरोधस्थलेऽपि द्वयोरेव ज्ञानमप्रमाणं भविष्यति, कस्याप्येकतरस्य वा ज्ञानमप्रमाणं भविष्यति। यतो हि विरुद्धरूपोपग्रहे सति अर्थाद् विरुद्धयोरेकत्वानेकत्वरूपयोर्ग्रहणे सति तद्रूपाधिगत्योः = विरुद्धरूपविषयकयोर्ज्ञानयोः परस्परनिराकरणं तत्र भवतीति। तत्र यदि रजतादिज्ञानस्येव एकस्य ज्ञानस्य शुक्तिज्ञानेनेव बलवताऽन्येन ज्ञानेन निराकरणं भवति, तदा इतरस्मात् = अर्थाद् बलवतो ज्ञानात् शुक्तिज्ञानादिव शुक्तिः, एकमेव वस्तु प्रमाणनिश्चितं स्यात्, एकत्वमेव वा द्व्यात्मकत्वमेव वा, न त्वेकञ्च द्व्यात्मकं चेति।

यदि तु विरुद्धविषयकाभ्यां तुल्यबलाभ्यां ताभ्यां ज्ञानाभ्यां परस्परं निराकरणं क्रियते, तदा एकत्वद्व्यात्मकत्वयोर्निश्चयाभावात् संशयज्ञानतुल्यैव एकस्य सामान्यविशेषोभयस्वरूपत्वप्रतिपत्तिरित्यप्रमाणमेव सा संशयज्ञानवदिति मन्तव्यम्।

तस्माद् यो भेदाभेदवादी सर्वं वस्तु अनैकान्तिकमिति सुनिश्चितं जानाति वर्णयति च, स नूनं स्वपक्षमेव वर्णयति, न तु यथार्थं तदीयं ज्ञानमिति च मन्तव्यमिति तात्पर्यम्।

पूर्वं ज्ञानविचारद्वारा वस्तुनो द्व्यात्मकत्वं प्रतिषिद्धम्, इदानीं ज्ञेयद्वाराऽपि तत्प्रतिषेधति – **अपि चेति**। श्लोकार्थस्तु - यदि अविरोधेन = अन्योन्याभावरूप-

**अवश्यमनेन पदार्थानां भेदाभेदौ व्यवस्थापयता – यथा तावत् सामान्यमभिन्नं विशेषा भिद्यन्त इति – भेदाभेदयोर्लक्षणं वाच्यम्; तत्र रूपविरोधोऽन्योन्याभावो भेदलक्षणम्, विपर्ययोऽभेदलक्षणम्। रूपविशेषाद्धि अन्योन्याभावपर्यायाद् विशेषा भिद्यन्ते। भिद्यमानेष्वपि तेषु सामान्यमभिन्नम्, विपर्ययात्। तत्र सामान्यविशेषयोर्यदि स्वरूपविरोधोऽन्योन्याभावः, नैकत्वं भेदानामिव परस्परम्।**

---

विरोधाभावेन वस्तुन एकत्वम्, तदा एकतरनिर्भक्तभागवत् सामान्यविशेषयोरपि द्व्यात्मकत्वं = परस्परभिन्नत्वं न भविष्यतीति। अत्र एकतरनिर्भक्तभागवद् इति दृष्टान्तवाक्यस्यायमर्थः – एकतरो निर्भक्तः = निर्भेदः, भागः = सामान्यं विशेषश्चेति। तथा च एको भागः सामान्यं सामान्याद् न भिद्यते, तथा विशेषोऽपि एकोंऽशो न विशेषाद् भिद्यते, अविरोधात्, तथैव सामान्यविशेषौ परस्परमपि न भिद्येते, विरोधाभावात्, एकतरभागवदिति। श्लोकार्थमेव विशदयति – **अवश्यमिति**। अयं ह्यनेकान्तवादी पदार्थानां भेदाभेदौ व्यवस्थापयति – केऽभिन्नाः के च भिन्ना इति। यथा च सामान्यमभिन्नं भवति, विशेषाश्च परस्परं भिद्यन्त इति तेषां व्यंवस्था। किन्त्वेतद्व्यवस्थायाः पूर्वं तैर्भेदाभेदयोर्लक्षणम् अवश्यं वाच्यम्। तत्र च अन्योन्याभावस्वरूपो रूपविरोधो भेदस्य लक्षणम्, तथाऽन्योन्याभावविपर्ययोऽर्थादन्योन्याभावस्याभावस्वरूपो रूपाविरोधो अभेदस्य लक्षणमिति। तादृशलक्षणानुसारेण अन्योन्याभावस्वरूपाद् रूपविरोधाद् विशेषा भिद्यन्ते, तद्विपर्ययात्, अर्थाद् अन्योन्याभावात्मकस्य रूपविरोधस्याभावाद् घटत्वादिसामान्यमभिन्नं भवति सर्वेषु घटादिविशेषेष्विति भेदाभेद वादिनां व्यवस्था।

तमिमं पूर्वपक्षं सिद्धान्ती निरस्यति – **तत्र सामान्यविशेषयोर्यदीति**। अयमाशयः सिद्धान्तिनः – अनेकान्तवादी यदि सामान्यविशेषयोरन्योन्याभावरूपं रूपविरोधमभ्युपगच्छति तदा तयोः परस्परमन्योन्याभावे सति कथमेकत्वं सिध्येत्? यथा हि प्रत्येकं विशेषाः स्वरूपविरोधात् कारणात् परस्परं भिन्ना एव भवन्ति, तथैव सामान्यविशेषावपि अन्योन्याभावरूपविरोधकारणादेव परस्परं भिन्नावेव स्तः, नैकत्वम् इति स्वीकरणीयमिति भावः। मूले भेदानामिवेत्यस्य विशेषाणामिवेत्यर्थः।

**अथ सामान्यविशेषबुद्ध्योरैकाधिकरण्येनोत्पत्तेर्न स्वरूपविरोधोऽभ्युपेयते, न तर्ह्येकं द्व्यात्मकम्; सामान्यविशेषयोः स्वरूपविराधाभावादसति भेदे द्वित्वानुपपत्तेः। यथा न सामान्यांशो द्विरूपो विशेषांशो वा, रूपविरोधाभावात् — तत्रैकस्मिन् निर्भक्ते द्वित्वाभावात् — तथा सामान्यविशेषयोरपि सामानाधिकरण्यबुद्धेर्यदि न विरोधः, न परस्पराभावः, द्वित्वं न युज्यते। अथ रूपविरोधः, नैकत्वमिति।**

---

"ननु एकस्मिन्नेव वस्तुनि "सन्" इति सामान्यबुद्धिः, "घटः" इति विशेषबुद्धिश्चोत्पद्येते। अतः सामानाधिकरण्येनोभयबुद्ध्योरुत्पत्तेः सामान्यविशेषयोर्न स्वभावविरोधोऽभ्युपगम्यते। तस्मादविरोधेन सामान्यविशेषयोरेकत्वं सिध्यतीति पूर्वपक्षमुत्थापयति— **अथेत्यादिना**। पूर्वपक्षमिमं निराकरोति— **न तर्ह्येकमिति**। एवं रीत्या सामान्यविशेषयोरेकत्वं सिद्धं चेत् तदा द्व्यात्मकत्वं नोपपद्यते। तदेवोपपादयति — **सामान्येति**। एवं तर्हि सामान्यविशेषयोः स्वरूपविरोधाभावेन भेदाभावाद् भवदभिमतं द्वित्वं नोपपद्येत, द्वित्वस्य भेदाधिष्ठानत्वात्।

अत्र कारिकोक्तं दृष्टान्तं स्मारयति— **यथेति**। कारिकायां दृष्टान्तीकृतम्— **"एकतरनिर्भक्तभागवत्"** इति। अयं भावः— सामान्यविशेषसमाहारे द्वावंशौ स्तः, तत्रैकोंऽशः सामान्यांशः, द्वितीयश्च विशेषांशः। तयोः सामान्यांशोऽपि न द्विरूपो न वा विशेषांशोऽपि द्विरूपः, एकैकस्मिन्नंशे स्वरूपभेदाभावात्। **तथैव** समुदितयोः सामान्यविशेषयोरपि परस्परं नास्ति विरोधः, तयोः सामानाधिकरण्येन प्रतीतेः। विरोधाभावादेव च नास्ति तयोः परस्पराभावः = अन्योन्याभावरूपो भेदः। अत एव च तयोर्द्वित्वमपि न युज्यते। यदि तु तयोः परस्परं स्वरूपविरोधः कल्प्यते तदा स्वरूपविरोधकारणाद् द्वित्वं कामं युज्यताम्, किन्तु तस्यां स्थितावेकत्वं न युज्यते। अर्थाद् द्वित्वस्य युक्तत्वे एकत्वं न युज्यते, एकत्वस्य युक्तत्वे द्वित्वं न युज्यते। अत एकस्य द्व्यात्मकत्वमित्यनेकान्तवादो न युक्तिसहः।

यदि मतम् — न स्वरूपविरोधाद् नानात्वं तदभावाच्चैकत्वम्, येन सामान्यविशेषयोः स्वरूपविरोधाभावाद् द्वित्वं न स्यादन्यतरस्येव भागस्य; किन्तु बुद्धे रूपभेदाभेदाभ्याम्। सामान्यविशेषयोश्च परस्परात्मत्वेन प्रतिपत्तेरसत्यपि अन्योन्याभावलक्षणे स्वरूपविरोधे बुद्धे रूपभेदाद् द्वित्वम्। अंशे तु रूपाभेदादेकत्वम्। अतो वस्तुनो द्विरूपबुद्धिग्राह्यत्वाद् द्व्यात्मतेति।

तत्रोच्यते —

ऐकात्म्यबुद्धेर्भागे चेदेवं वस्तुनि तर्ह्यसौ।
न चेत्, कुतस्त्यमेकत्वमस्ति चेद्, द्व्यात्मता कथम्॥१९॥

---

अत्रैव प्रसङ्गे मतान्तरमुपस्थापयति नानात्ववादी — **यदि मतमिति**। अयमभिप्रायः — यदि वयं सामान्यविशेषयोः स्वरूपविरोधाद् नानात्वं स्वरूपविरोधाभावाच्च एकत्वं मन्येमहि, तदा सामानाधिकरण्येन प्रतीतिबलात् सामान्यविशेषयोः स्वरूपविरोधाभावात् तयोर्द्वित्वं कामं न भवेत्, यथाऽन्यतरस्य केवलसामान्यभागस्य केवलविशेषभागस्य च द्वित्वं न भवति, तद्वत्। किन्तु बुद्धेः स्वरूपभेदान्नानात्वं स्वरूपभेदाभावाच्च एकत्वमिति मन्यामहे। अर्थाद् यत्र द्व्याकारा बुद्धिस्तत्र नानात्वं यत्र च एकाकारा बुद्धिस्तत्रैकत्वमित्यस्माकं मतमस्ति। प्रकृते च सामान्यविशेषयोर्यद्यपि अन्योन्याभावलक्षणः स्वरूपभेदो नास्ति, 'गौरयम्', 'गौः शुक्लः' इत्यादिव्यवहारे गोशुक्लयोः परस्परात्मत्वेन प्रतीतेः, यो गौः स शुक्लः, यः शुक्लः स गौरिति। अतः सामान्यविशेषयोः स्वरूपविरोधप्रयुक्तं द्वित्वं कामं न भवेत्, किन्तु तयोर्बुद्धिस्वरूपभेदाद् द्वित्वं भविष्यति। बुद्ध्यो रूपभेदश्च स्फुटः — "गौः" इति सामान्यबुद्धेराकारः, "शुक्लः" इति च विशेषबुद्धेराकार इति। केवलसामान्यांशे एकतरनिर्भक्तभागे तु बुद्धिस्वरूपं न भिद्यत इति केवलसामान्यभागे केवलविशेषभागे चैकत्वं निर्बाधमस्ति। अतो वस्तुनः सामान्यविशेषात्मकद्विरूपबुद्धिविषयत्वाद् द्व्यात्मकत्वं सिध्यतीति पूर्वपक्षाशयः।

**यदि तर्हि बुद्धेरेकरूपोपग्राहित्वादभेदोंऽशस्य, वस्तु विचार्यम् – तत्रापि बुद्धिः किमेकरूपोपग्राहिणी! न वेति। तत्र यदि नैकरूपोपग्राहिणी वस्तुनि बुद्धिः – सामान्यविशेषात्मकं हि वस्तु – तद्विरूपबुद्ध्युपग्राह्यम्, कथमेकत्वं वस्तुनः ? बुद्धिरूपाभेदस्याभेदलक्षणस्याभावात्, रूपभेदस्य च भेदलक्षणस्य भावात्। अथैकरूपोपग्राहिण्येव वस्तुनि बुद्धिः, न द्व्यात्मकत्वमंशवदेव।**

---

बुद्धिस्वरूपाभेदादेकत्वं यथा केवलसामान्यांशे केवलविशेषांशे चैकत्वं भवति। रूपभेदाच्च द्वित्वं भवति यथा सामान्यविशेषयोरिति पूर्वपक्षमिमं पूर्व कारिकया दूषयति – **तत्रोच्यत इति**। श्लोकार्थस्तु – भागे = एकस्मिन् अंशे केवलसामान्यांशादावैकात्म्यबुद्धेः = एकाकारबुद्धिबलात्, एवम् = केवलसामान्यस्य केवलविशेषस्य चैकत्वं यदि स्वीक्रियते, तर्हि वस्तुनि = सामान्यविशेषात्मके शुक्लगवादिवस्तुनि, असौ = एकाकारबुद्धिर्नास्ति चेत्, कुत एकत्वं वस्तुनि सिध्येत् ? तस्मिन् वस्तुनि एकाकारबुद्धिरस्ति चेत्, तर्हि द्व्यात्मकत्वं कथं स्यादित्यर्थः। एकस्य द्व्यात्मकत्वं कथमपि न सम्भवतीति भावः। एकत्वमेव स्याद् द्व्यात्मकत्वमेव वा स्यादिति समाधानरहस्यम्।

श्लोकार्थमेव विशदयति – **यदि तर्हीति**। बुद्धेरेकरूपोपग्राहित्वाद् एकाकारत्वाद् अंशस्य = सामान्यभागस्य अभेदः = एकत्वं यदि स्यात्, तर्हि सामान्यविशेषात्मकवस्तुविषयेऽपि विचारः करणीयो यत् तत्रत्या बुद्धिरेकरूपोपग्राहिणी अस्ति न वेति।

अत्र नास्तीति पक्षमादाय विचारयति – **तत्रेति**। अयमाशयः – घटादिवस्तु सामान्यविशेषात्मकं भवति। अतस्तद् ''घटः'' इति ''शुक्लः'' इति द्विरूपबुद्ध्युपग्राह्यमेव भवति। अस्यां स्थितौ वस्तुनि बुद्धिर्यदि नैकरूपोपग्राहिणी, तदा बुद्धिबलादेकत्वं वस्तुनि कथं सिध्येत् ? तत्र बुद्धिस्वरूपे = बुद्ध्याकारे अभेदस्य वस्त्वभेद(एकत्व)साधकस्याभावात्। प्रत्युत भेदसाधकस्य ''घटः'' इति ''शुक्लः'' इति च रूपभेदस्यैव विद्यमानत्वादिति तात्पर्यम्।

**अथ मतम् – बुद्धिरूपभेदः परस्परात्मताऽभावश्च भेदलक्षणम्। तत्र गवादयो भेदा भिन्नरूपबुद्ध्युपग्राह्याः, परस्परानात्मानश्च, न तु सामान्यविशेषौ, बुद्धिरूपभेदेऽपि परस्परात्मत्वेन प्रतिपत्तेः। एवमपि सामान्यविशेषयोर्भेदलक्षणेन विरहान्न द्व्यात्मता, अंशवदित्युक्तम्।**

---

यदि तु घटादिवस्तुविषयिणी बुद्धिः सामान्यात्मना विशेषात्मना च एकरूपोपग्राहिण्येवास्तीति पक्ष आश्रीयते, तदा तस्य वस्तुनो द्व्यात्मकत्वं न स्यात्, यथा केवलसामान्यभागे केवलविशेषभागे च एकत्वमेव भवति न द्व्यात्मकत्वम्, तद्वद् घटादिसामान्यविशेषवस्तुनोऽपि एकत्वमेव सिध्येन्न द्व्यात्मकत्वमपीत्यसिद्धो भेदाभेदवादः।

पूर्वपक्षी पुनः प्रत्यवतिष्ठते – **अथ मतमिति। बुद्धिरूपभेद इति।** अयं भावः – न केवलं बुद्धिरूपभेदमात्रं परस्परात्मत्वाभावमात्रं वा भेदलक्षणमभिमतम्, किन्तु बुद्धिरूपभेदः परस्परात्मत्वाभावश्चेति समुच्चितावेव भेदलक्षणतयाऽभिप्रेतौ। तत्र गवाश्वादयो भेदा भिन्नरूपबुद्धिग्राह्याश्च भवन्ति परस्परानात्मकाश्च भवन्तीति गवाश्वादिषु भेद एवास्ति नाभेदः। सामान्यविशेषौ तु गवाश्वादिभ्यो विलक्षणौ स्तः। तयोः समुच्चितं भेदलक्षणं नास्ति, तयोर्बुद्धिरूपभेदे सत्यपि परस्परानात्मकत्वं नास्ति परस्परात्मत्वेनैव प्रतीयमानत्वात्। प्रतीयते हि घटः शुक्लात्मना शुक्लश्च घटात्मना "घटः शुक्लः" इति। तथा च सामान्यविशेषयोः समुच्चितभेदलक्षणाभावाद् एकत्वं सेत्स्यतीति।

एतदपि निराकरोति – **एवमपीति।** भवतु नामोक्तरीत्या सामान्य-विशेषयोरेकत्वम्, द्व्यात्मकत्वं तु न सम्भवति, समुच्चितस्य भेदलक्षणस्य तयोर्विरहात्। अंशवदित्यनुपदमुक्तमुदाहरणं स्मारयति। यथा केवलसामान्यांशे विशेषांशे वा न द्व्यात्मकत्वं तथोभयांशेऽपीति भावः।

**यदि मन्येत – बुद्धे रूपाभेदः परस्परात्मत्वप्रतिपत्तिश्च द्वे अभेदलक्षणे। तत्रांशस्य रूपाभेदादेकत्वम्, उभयोस्तु परस्परात्मत्वप्रतीतेः। विशेषाणां तु न बुद्धे रूपाविभागः, न परस्परात्मप्रतिपत्तिरिति भिन्ना इति।**

**एवमप्यभेदलक्षणे सति परस्परात्मप्रतिपत्तौ, उभयाभावे च भेदलक्षणेऽविद्यमाने न द्व्यात्मता। न चैकस्याभेदस्य द्वे लक्षणे युज्येते। लक्षणाभेदो ह्यभेदं व्यवस्थापयति, तद्भेदश्च भेदम्। लक्षणभेदेऽपि चेत् तत्त्वम्, अन्यत्वं च लक्षणाभेदेऽपि यदि, व्यर्थतैव लक्षणस्य स्यादिति।**

---

पुनः शङ्कते – **यदि मन्येतेति**। शङ्कापक्षमुपपादयति – **बुद्धेरिति**। अयमर्थः – बुद्धिरूपाभेदः परस्परात्मत्वप्रतिपत्तिश्चेति द्वे प्रत्येकमभेदलक्षणे स्तः। तत्र सामान्यांशस्य विशेषांशस्य च बुद्धिरूपाभेदादभेदलक्षणात् प्रत्येकमेकत्वम्। सामान्यविशेषयोस्तु बुद्धिरूपाभेदाभावेऽपि परस्परात्मत्वप्रतिपत्तिरूपाद-भेदलक्षणादेकत्वम्। तदुक्तम् – उभयोस्तु परस्परात्मत्वप्रतीतेरिति। अत्र "एकत्वम्" इति शेषः। यत्र तु बुद्धिरूपाभेदोऽपि नास्ति परस्परात्मत्वप्रतिपत्तिरपि नास्ति, तत्र उभयाभावरूपात् समुच्चिताद् भेदलक्षणाद् भेद एव भवति, यथा विशेषाणां परस्परं भेद एव भवति, उक्तयोरभेदलक्षणयोस्तत्राभावात्। अत एव गवाश्वादयः परस्परं सर्वथा भिन्ना भवन्ति। तेषु बुद्धिरूपाभेदाभावात् परस्परात्मत्वरूपा-भेदाभावाच्चेति भावः। तथा च सामान्यविशेषयोः स्वरूपतो द्वित्वमप्यस्ति, परस्परात्मत्वप्रतिपत्त्या चैकत्वमप्यस्तीति सिद्धमेकस्य द्व्यात्मकत्वमिति।

इदमपि मतं निरस्यति – **एवमपीति**। अयमाशयः – एवं सति परस्परात्मत्व-प्रतीत्या सामान्यविशेषयोरभेदलक्षणमस्तीति तयोरेकत्वं पूर्वपक्षिणोऽप्यभिमतम्। अत एव उभयविधयोरभेदलक्षणयोर्मध्ये अस्याभेदलक्षणस्य विद्यमानत्वेन सामान्यविशेषात्मकवस्तुनि अस्य लक्षणस्याभावो नास्ति। अतोऽत्र अभिन्न-बुद्धिरूपाभेदलक्षणस्याभावे सत्यपि "एकसत्त्वेऽपि द्वयं नास्तीति" नियमाद् उभा-वभेदलक्षणाभावौ न स्तः। उभयोः समुच्चितावभावौ भेदलक्षणमिति च पूर्व-पक्षिणोऽभिमतम्। अतः सामान्यविशेषात्मकवस्तुनि समुच्चिताभावरूपभेद-

**अपि च सामान्यविशेषयोरभेदे,**

**बुद्ध्यन्तरस्य वैयर्थ्यमेकांश इव चापतेत्।**

**नानात्वादर्थवत्ता चेदेकत्वाद् व्यर्थता न किम् ॥२०॥**

---

लक्षणस्याविद्यमानत्वेन द्व्यात्मकत्वं नैव सिध्यति। एकत्वं तु पूर्वपक्षिरीत्यैव सिद्धमित्यनुपदमुक्तम्। अत एकं द्व्यात्मकमित्यनेकान्तवादोऽसिद्ध इति सारः।

दूषणान्तरमाह – **न चैकस्येति**। अयमर्थः – एकस्याभेदस्य बुद्धिरूपाभेद-नामकं परस्परात्मत्वप्रतिपत्तिनामकं चेति द्वे लक्षणे न सम्भवतः। यतो हि लक्षणाभेदेन लक्ष्यानामभेदो व्यवस्थापितो भवति, लक्षणभेदेन च तेषां भेदो व्यवस्थाप्यते। अत एव सास्नावत्त्वलक्षणाभेदेन सर्वेषां गवां गोत्वाभेदः, लक्षणभेदेन च गवाश्वयोर्भेदो व्यवस्थाप्यत इति। तत्र यदि लक्षणभेदेऽपि = लक्षणद्वैविध्येऽपि लक्ष्याभेदः स्यात्, लक्षणाभेदेऽपि च यदि लक्ष्यस्य भेदः स्यात्, तदा वैयर्थ्यमेव लक्षणस्यापद्येतेति मन्तव्यम्।

सामान्यविशेषयोरेकत्वे दोषान्तरमाख्यातुं पूरकवाक्यमाह– **अपि चेति**। अर्थात् सामान्यविशेषयोर्यदि एकत्वं स्वीक्रियेत तदा बुद्ध्यन्तरस्य वैयर्थ्यमेव स्यादिति। अयमभिप्रायः श्लोकस्य– यदि सामान्यविशेषयोरभेदः स्यात्, तदा तयोर्मध्ये कस्यचिदेकस्य बुद्ध्यैव तदितरस्यापि गृहीतत्वात् तदितरग्राहिणो बुद्ध्यन्तरस्य वैयर्थ्यमापद्यते, एकबुद्ध्यैव इतरस्यापि गृहीतत्वेन इतरविषयिण्या बुद्धेरपेक्षाऽभावेन व्यर्थत्वमेव बुद्ध्यन्तरस्य स्यात्। अर्थात् सामान्ये गृहीते विशेषोऽपि गृहीत एवेति विशेषविषयिणी बुद्धिर्निरर्थिकैव प्रसज्येत। एवमेव विशेषे गृहीते सामान्यममि गृहीतमेवेति सामान्यविषयिणी बुद्धिरपि व्यर्थैव स्यात्। अत्र दृष्टान्तमाह श्लोके– **एकांश इवेति**। अयमर्थः – यथा सामान्यभागमात्र-ग्रहणे तदुपयोगितया विशेषबुद्धिर्निरर्थिका अनपेक्षितत्वात्, विशेषांशमात्र-ग्रहणे च तदुपयोगित्वं सामान्यबुद्धेर्नास्तीति सा निरर्थिका तद्वदित्यर्थः। अतो बुद्ध्यन्तरस्य वैयर्थ्यापत्तेः सामान्यविशेषयोरभेदो न स्वीकर्तुं शक्य इति भावः।

**बुद्ध्यन्तरप्रवृत्तिरेव सामान्यविशेषयोरेकवस्त्वात्मतामपाकरोति। सा हि नानात्मत्वे भेदेष्विवार्थवती, अनधिगताधिगमात्। एकत्वे तु यथा सामान्यविशेषविभागयोः स्वबुद्धिसमधिगतयोर्न विलक्षणं बुद्ध्यन्तरमर्थ्यते, तथा सामान्यबुद्धेर्न बुद्ध्यन्तरं विलक्षणं विशेषाधिगमाय प्रार्थ्येत; तथा विशेषबुद्धेर्न सामान्याधिगमाय।**

---

यद्युच्येत सामान्यविशेषयोर्नाभेदमात्रमस्ति, किन्तु भेदोऽप्यस्ति अभेदोऽप्यस्तीति। तथा च भेदपक्षे अर्थाद् नानात्वपक्षे नैकग्रहणेनापरस्य ग्रहणं भवतीति बुद्ध्यन्तरस्याप्यपेक्षितत्वाद् बुद्ध्यन्तरस्यापि सार्थकत्वमस्त्येवेति चेत्, न, यदि नानात्वाद् बुद्ध्यन्तरस्य सार्थकत्वं तदा एकत्वाद् बुद्ध्यन्तरस्य निरर्थकत्वमेव किं न स्यादिति भावः श्लोकस्य।

इममेवाभिप्रायं विंशदयति– **बुद्ध्यन्तरप्रवृत्तिरिति**। अयं भावः– सामान्ये गृहीतेऽपि विशेषाधिगमाय या बुद्ध्यन्तरस्य विशेषविषयकस्य प्रवृत्तिर्दृश्यते, सा प्रवृत्तिरेव साधयति यत् सामान्यविशेषयोरेकवस्त्वात्मता नास्तीति। बुद्ध्यन्तर-प्रवृत्तिर्हि सामान्यविशेषयोर्नानात्मत्व एव सार्थिका भवितुमर्हति, नैकत्वे। तत्र दृष्टान्तमाह– **भेदेष्विवेति**। भेदेषु विशेषेष्वित्यर्थः। यथा गवादिविशेषेषु ज्ञातेष्वपि अश्वादिविशेषबुद्ध्यन्तरं निरर्थकं न भवति, अनधिगतस्याश्वादेरधिगत्यर्थं तस्य सार्थकत्वात्। तद्वद् गोसामान्ये ज्ञाते शुक्लादिविशेषबुद्धेरपि तदैवार्थवत्त्वं सम्भवि यदा सामान्यविशेषयोर्गवाश्वयोरिव नानात्मत्वं स्यात्।

तयोरेकत्वे तु बुद्ध्यन्तरस्य वैयर्थ्यमुपपादयति– **एकत्वे त्विति**। अयमभिप्रायः– यथा एकैकस्मिन् केवलसामान्यभागे केवलविशेषभागे वा स्वस्व-बुद्ध्या समधिगते सति न तत्तदधिगमे ततस्ततो विलक्षणं तत्तद् बुद्ध्यन्तरमपेक्षितं भवति, एकैकात्मकत्वात् तस्य तस्य भागस्य; तथैव "गौः शुक्लः" इति व्यवहार-विषयभूतयोः सामान्यविशेषयोरपि यद्येकत्वं स्वीक्रियेत, तदा सामान्यबुद्धिः विशेषाधिगमाय स्वविलक्षणं बुद्ध्यन्तरं नापेक्षेत, तथा विशेषबुद्धिरपि सामान्या-धिगमाय स्वविलक्षणं बुद्ध्यन्तरं नापेक्षेत। अभिन्नत्वात् तयोरिति हृदयम्।

**अथ नात्यन्तमव्यतिरेकः सामान्यविशेषयोः, व्यतिरेकोऽपि तु; तत्र व्यतिरेकादर्थवत्तेति। तदसत्। एवमपि कुत एतत् – व्यतिरेकादर्थवत्त्वं भेदवत्, न पुनरव्यतिरेकादेकांशवद् वैयर्थ्यम् ? तुल्ययोर्हि भेदाभेदयोः कुत एतत् – भेदादेकया बुद्ध्या न ग्रहणम्, न पुनरभेदाद् ग्रहणमिति बुद्ध्यन्तरवैयर्थ्यम् ?**

---

तस्मात् सामान्यविशेषयोरेकत्वे एकस्मिन् अधिगते परविषयकं बुद्ध्यन्तरं निरर्थकमेवापद्येतेति। तथा च सर्वैरनुभूयमाना बुद्ध्यन्तरप्रवृत्तिरेव सामान्यविशेषयोरेकवस्त्वात्मतां निवारयतीति मन्तव्यम्।

प्रकारान्तरेण बुद्ध्यन्तरस्य सार्थक्यमाशङ्कते पूर्वपक्षी – **अथेति**। अयं भावः – यदि सामान्यविशेषयोरत्यन्तमव्यतिरेकः = एकत्वं स्यात् तदा तयोरेकतरस्मिन् अधिगतेऽन्यतरोऽप्यधिगत एवेति व्यर्थं बुद्ध्यन्तरं स्यात्। यदि तु व्यतिरेकोऽपि अर्थाद् नानात्मत्वमप्यस्ति सामान्यविशेषयोस्तदा नानात्मत्वबोधाय बुद्ध्यन्तरमप्यपेक्षणीयमेवेति न वैयर्थ्यं बुद्ध्यन्तरस्येति पूर्वपक्षाशयः। अथवा भेदोऽप्यस्तीति पक्षे निश्चितेऽप्येकस्मिन् इतरस्मिन् सन्दिहते जिज्ञासन्ते चेति न वैयर्थ्यं बुद्ध्यन्तरस्येत्यपि बोध्यम्।

इमामप्याशङ्कां निरस्यति – **तदसदिति**। अयमत्र समाधातुराशयः – भवतु नाम सामान्यविशेषयोर्व्यतिरेकोऽपि, तथापि कुत एतदायाति यत् ''व्यतिरेककारणाद् इतरविषयकं बुद्ध्यन्तरमपि सार्थकम्, यथाऽधिगतेऽपि गवि अश्वाधिगमाय अश्वविषयकं बुद्ध्यन्तरं सार्थकं भवति, तद्वत्'' इति। इदं कथं नायाति यत् ''अव्यतिरेककारणाद् इतरविषयकं बुद्ध्यन्तरं निरर्थकम्, यथा केवलसामान्यभागस्य बोधे करणीये विशेषांशविषयकं बुद्ध्यन्तरं निरर्थकं भवति, तद्वत्'' इति।

यद्युच्येत – एकांशस्य स्वतोऽत्यन्ताभेदात् तद्बोधे जननीये बुद्ध्यन्तरस्य वैयर्थ्यमुक्तम्, सामान्यविशेषयोस्तु नास्त्यात्यन्तिकाभेदः किन्तु भेदोऽप्यस्तीति न बुद्ध्यन्तरं निरर्थकमिति, तत्राह – **तुल्ययोरिति**। तुल्यौ हि भेदाभेदाविह स्तः।

**औत्सर्गिकश्च हेत्वभावे फलाभावः स्वभावसिद्धः। तस्य हेतुभावे फलभावोऽपवादः। तत्राभेदे हेतुभावाद् एकयैव बुद्ध्या उभयाधिगमो युक्तः। नैकत्वेऽन्यतराधिगमहेतुर्नास्तीति शक्यं वक्तुम्।**

**अथापि कथञ्चिन्नास्तीत्युच्येत, तथाप्यस्ति तावत्, एकत्वात्। तत्र हेतुभावात् फलभावः स्यात्, तस्य कारणत्वात्। न त्वभावोऽभावस्य**

---

यदि सामान्यविशेषयोर्नात्यन्तिकाभेदस्तदाऽऽत्यन्तिकभेदोऽपि तयोर्नास्ति, अभेदस्यापि पूर्वपक्षिणा स्वीकृतत्वात्। तथा च भेदाद् यद्येकया बुद्ध्या न समग्रग्रहणमिति बुद्ध्यन्तरं सार्थकम्, तदाऽभेदबलाद् एकयैव बुद्ध्या समग्रग्रहणं सम्पद्यत इति बुद्ध्यन्तरस्य वैयर्थ्यं ध्रुवमिति भावः। न पुनरभेदाद् ग्रहणमित्येतदपि कुतः ? इति रीत्या मूलं योजनीयम्।

उत्सर्गापवादन्यायेनापि बुद्ध्यन्तरस्य वैयर्थ्यमित्याह – **औत्सर्गिकश्चेति**। अयमाशयः – हेत्वभावे फलाभावो यथा बीजाभावे अङ्कुराभावः स्वभावसिद्ध इत्युत्सर्गः, बीजरूपहेतुसद्भावे अङ्कुररूपफलभाव इति तस्यापवादः। प्रकृते च सामान्यविशेषयोरभेदे य एव सामान्याधिगमहेतुः स एव विशेषस्याप्यधिगम-हेतुर्भविष्यतीति सामान्याधिगमहेतौ सति विशेषाधिगमफलमपि तत एव भविष्यतीत्युभयाधिगमो भवितुं युक्तोऽपवादरूपत्वात्। औत्सर्गिक उभयाधि-गमाख्यफलाभावस्तदा स्याद् यदा उभयाधिगमहेतोरभावः स्यात्। प्रकृते सामान्य-विशेषयोरेकत्वे स्वीक्रियमाणेऽन्यतराधिगमहेतुर्नास्तीत्यपि वक्तुं नैव शक्यते, सामान्यविशेषयोरेकत्वे तदन्यतराधिगमहेतोरपि विद्यमानत्वात्। तस्मादभेदपक्षे बुद्ध्यन्तरस्य वैयर्थ्यमनिवार्यम्। इदमेव मनसि कृत्वा **"अथापि कथञ्चिन्नास्ति"** इत्याशङ्क्य "तथाप्यस्ति तावत्, एकत्वात्" इति समाहितं मूले। "कथञ्चित्" इत्यस्य सामान्यविशेषयोर्भेदस्यापि अनेकान्तवादिमते सत्त्वेनैकत्वाभावादित्यर्थः। नास्ति = तयोरन्यतराधिगमहेतुर्नास्तीत्यर्थः। तथा च हेत्वभावादेव उभयाधिगम-फलाभावो भविष्यतीति शङ्काशयः। समाधानपक्षे "तथाप्यस्ति तावत्" इत्यस्य

**कारणम्। स्वभावसिद्धस्त्वभावः फलस्य। तस्य हेतुनिबन्धनः फलभावो निवर्तकः। स च हेतुरुभयत्रास्ति तावत्। असत्त्वं त्वनुपयोगम्, अकारणत्वादिति।**

---

"अन्यतराधिगमहेतुरप्यस्ति तावत्" इत्यर्थः। "एकत्वात्" इत्यस्य "सामान्यविशेषयोरुभयोरेकत्वाद्" इत्यर्थः। यतः सामान्यविशेषयोरेकत्वमतोऽन्यतराधिगमहेतुरप्यस्तीति निष्कृष्टार्थः।

एतदेवोपपादयति – **तत्र हेतुभावादिति**। सामान्यविशेषयोरेकत्वेन अन्यतराधिगमहेतोर्विद्यमानत्वात् उभयाधिगमरूपफलस्य भावः स्यादित्यर्थः। तस्य कारणत्वात् = हेतुभावस्यैव फलजनकत्वरूपत्वादित्यर्थः।

ननु सामान्यविशेषयोर्भेदस्यापि सत्त्वेन अन्यतराधिगमहेतोरभावोऽप्यस्तीति हेत्वभावात् कदाचिद् अन्यतराधिगमरूपफलस्याभावोऽपि स्यादित्याशङ्कां निराकरोति – **न त्विति**। न तु हेत्वभावः फलप्रागभावस्य कारणम्, कार्यप्रागभावस्यानादित्वेन कारणानपेक्षत्वात्। अतः फलस्य प्रागभावः स्वभावसिद्धः= औत्सर्गिकः, तस्य निवर्तकोऽपवादभूतो हेतुप्रयुक्तः फलभाव इत्यावेदितं प्राक्। स च हेतुः सामान्यविशेषयोरेकत्वाद् उभयोरधिगमाय क्षमोऽस्तीत्येकस्य बोधेनैवेतरस्याप्यधिगतत्वात् सामान्यविशेषयोरभेदपक्षे बुद्ध्यन्तरस्य वैयर्थ्यं ध्रुवमिति मन्तव्यम्। 'अभावः फलस्य' इति मूले अभावपदं प्रागभावार्थे।

ननु भेदपक्षेऽन्यतराधिगमहेतोरसत्त्वमपि वर्तत इति हेत्वभावात् फलाभावः स्यादित्याशङ्कां निरस्यति – **असत्त्वमिति**। हेत्वसत्त्वं तु फलप्रागभावं प्रत्यनुपयोगि, प्रागभावस्यानादित्वेन अकारणत्वात् कारणानपेक्षत्वादिति बहुव्रीहिणा व्युत्पादनीयम्। न कारणमकारणमिति नञ्तत्पुरुषाश्रयणे तु 'अकारणत्वात्' इत्यस्य हेत्वभावस्य फलप्रागभावं प्रत्यकारणत्वेन कारणाकारणयोः सन्निपाते कारणमर्थक्रियासूपयुज्यते न अकारणम्, अकारणस्यार्थक्रियासु अकिञ्चित्करत्वादित्यर्थः कार्यः।

**अपि च –**

**सामान्यं न हि वस्त्वात्मा न भेदश्चित्र एव सः।**

**तस्यानन्वयतो भेदवादः शब्दान्तरादयम्॥ २१॥**

**यस्यैकमुभयात्मकं वस्तु, न तस्य सामान्यमात्रं वस्तुन आत्मा, न विशेषमात्रम्, तन्मात्रत्वे वस्तुभेदप्रसङ्गात्। तस्मात् संभिन्नोभयरूपः शबलो वस्त्वात्मा। न च शबलस्यान्यत्रानुगमः। यस्य त्वनुगमः, स**

---

एकं वस्तु द्व्यात्मकमिति भेदाभेदपक्षे दोषान्तरमाह– **अपि चेति**। यद्धि द्व्यात्मकं वस्तु, तस्यात्मा स्वरूपं सामान्यमात्रं न भवितुमर्हति, तथा सति वस्तुनो द्व्यात्मकत्वमनुपपन्नं स्यात्। अत एव न विशेषमात्रं वस्तुनः स्वरूपं तथा सति सामान्य-विशेषोभयात्मकत्वमनुपपन्नं स्यात्।प्रत्युत विशेषमात्रस्वरूपत्वे सामान्येन विना एकं विशेषवस्तु विशेषवस्तुद्वयं प्रसज्येत, तदैव हि भेदाभेदवादिना प्रतिज्ञातम् एकस्य वस्तुनो द्व्यात्मकत्वं कथञ्चित् समर्थितं स्यात्। तच्चानिष्टम्। न ह्येको घटविशेषो घटविशेषद्वयं भवति। एतदुक्तं "सामान्यं न हि वस्त्वात्मा, न भेदः" इति कारिकांशेन।

कस्तर्हि वस्तुन आत्मा इति जिज्ञासायामाह –"चित्र एव सः" इति। चित्रः शबलः सामान्यविशेषोभयरूपः स = आत्मा वस्तुनः स्वरूपमिति कारिका-पूर्वभागार्थः।अयमेव श्लोकार्धार्थो विशदीकृतो मूले – यस्यैकमुभयात्मकमित्यारभ्य "शबलो वस्त्वात्मा" इत्यन्तेन ग्रन्थेन। अत्र "वस्तुभेदप्रसङ्गात्" इत्यस्य "एकं विशेषवस्तु भिन्नं वस्तुद्वयं प्रसज्येत" इत्यर्थो बोध्यः।

"तस्यानन्वयतो भेदवादः शब्दान्तरादयम्" इति श्लोकोत्तरार्धभागं व्याचक्षाणो मूलकारः शबलवस्तुपक्षमपि दूषयति –**न चेत्यादिना**। शबलो नाम सामान्यविशेषोभयरूपो वस्त्वात्मा इत्युक्तं प्राक्। तस्य व्यक्त्यन्तरेऽनुगमो नास्ति। अतो गोत्वसामान्यविशिष्टादेकस्माद् गोव्यक्तिविशेषात् तादृशमेव गोत्वसामान्यविशिष्टं गोव्यक्तिविशेषान्तरं भिन्नमिति मन्तव्यम्। इत्थञ्च सर्व एव शबला गोघटादिव्यक्तिविशेषा परस्परं भिन्ना एव सिध्यन्तीति अत्यन्तभेदवाद एव

**वस्तुरूपं न भवति। तथा च शब्दान्तरमवलम्ब्य भेदा एव सत्या इत्येतत् प्रतिपाद्यते, शब्दान्तरेण वा हेतुना द्व्यात्मकमेकमिति। अनुगन्तुरवस्तुस्वभावत्वे कल्पनाविषयत्वात्।**

**स्यादेतत्– मा भूद् वस्तु, तदंशत्वं तु न वार्यते। अन्यथा निर्बीजा कल्पनाऽपि न भवेत्।**

---

शब्दान्तरादुक्तः पूर्वपक्षिणा, न तु भेदाभेदवाद इति तात्पर्यार्थः। शब्दान्तरपदेनात्र "द्व्यात्मकम्" इति शब्दो विवक्षितो ग्रन्थकर्तुः। तथा च पूर्वपक्षी भेदशब्देनानुक्त्वा शब्दान्तरेण द्व्यात्मकशब्देन भेदमाह। अयमाशयः– एकस्य शबलविशेषस्य शबलविशेषान्तरेषु अनन्वयात् = अनुगमाभावात् सर्वेऽपि शबलविशेषाः परस्परं भिन्ना एव गले पतिताः पूर्वपक्षिणः। अस्यां स्थितौ "एकं द्व्यात्मकम्" इत्यत्र भेद एव द्व्यात्मकशब्देन उक्तो भवति। तथा च एकम् = प्रत्येकं, द्व्यात्मकम् = भिन्नम् इति तदीयवाक्यार्थः सम्पद्यते।

यस्य गोत्वादिसामान्यस्य सर्वेषु गोविशेषेष्वनुगमो वर्तते, तन्मात्रं न वस्तुस्वरूपमिति पूर्वपक्षिणैवोक्तमनुपदमेव। अतो न सामान्यानुगममादाय अभेदोऽपि भवितुं शक्नुयात्। निष्कर्षमाह– **तथा चेति**। शब्दान्तराद् इत्यत्र ल्यब्लोपे पञ्चमीमाश्रित्य शब्दान्तरमवलम्ब्य इति व्याख्यातम्। अथवा हेतुपञ्चमीमाश्रित्य "द्व्यात्मकमेकम्" इति शब्दान्तरेण हेतुना भेदा एव सत्या इति प्रतिपाद्यत इति व्याख्येयम्।

सामान्यानुगमस्य नात्यन्तभेदवादबाधकत्वमिति स्फुटीकरोति– **अनुगन्तुरिति**। व्यक्तिविशेषेष्वनुगतस्य सामान्यमात्रस्य द्व्यात्मकवस्तुपक्षे न वस्तुस्वभावत्वमिति पूर्वपक्षिणा स्वीकृतत्वेन सामान्यस्य कल्पनामात्रविषयत्वात् तदनुगमो वस्त्वभेदसाधने सर्वथा अकिञ्चित्कर इति सुदृढोऽत्यन्तभेदप्रसङ्ग इति भावः।

आत्यन्तिकभेदवादप्रसङ्गमसहमानः पूर्वपक्षी शङ्कते– **स्यादेतदिति**। अयमर्थः– सामान्यं स्वयं वस्तुस्वरूपं कामं न भवेत्, तथापि द्व्यात्मकस्य वस्तुनोंऽशभूतं सामान्यमिति को वारयिष्यति ? सामान्यस्य वस्त्वंशत्वाभावे वस्तुनो

**कः पुनरयमंशो नाम ? न तावत् वस्त्वेव, तन्मात्ररूपत्वे वस्तुनो भेदप्रसङ्ग इत्युक्तम्। नापि वस्तुनोऽन्यत् स्वयं वस्तु, सामान्यविशेषतद्वतां त्रयाणां वस्तूनां प्रसङ्गात्। अथ न वस्त्वेव, नान्यत् स्वयं वस्तु, परिशेषात् कल्पनाविषयस्तत्त्वान्यत्वाभ्यामनिर्वचनीयः।**

**ननु नांशोंऽशिनोऽर्थान्तरम्, नापि स एव, उभयथाऽनंशत्वात्। नाप्यवस्तु, अत एव न हि खपुष्पं कस्यचिदंशो भवति। तत्रांशानुगमे वस्त्वेवानुगतं भवति, तस्य तदव्यतिरेकात्।**

---

द्व्यात्मकत्वमेव न स्यात्। एवं सामान्यं यदि वस्त्वंशतयाऽपि न स्वीक्रियेत तदा तस्य निर्बीजा कल्पनाऽपि न स्यात्। क्वचित् सत एव रजतादेः शुक्तिकादिषु कल्पनादर्शनात्।

सिद्धान्ती प्रश्नमुखेन शङ्कां निवारयति – **कः पुनरिति**। न च सामान्यांशो वस्त्वेवेति वाच्यम्, एवं सति सामान्यांशोऽपि वस्तुमात्रं विशेषांशोऽपि च वस्तुमात्रमित्येकस्य वस्तुनो भेदप्रसङ्गः स्यात्। अर्थात् सामान्यविशेषौ द्वे वस्तुनी स्याताम्, न तु एकस्य द्व्यात्मकत्वं स्यादिति। नापि सामान्यांशस्तद्वस्तुनोऽन्यत् स्वयं वस्तु इति वाच्यम्, तथा सति सामान्यं स्वयमेकमन्यद्वस्तु, विशेषांशोऽपि स्वयमेकमन्यद्वस्तु, तदुभयविशिष्टं पृथगेव वस्तु स्वीकृतमिति त्रयाणां वस्तूनां प्रसङ्गः स्यात्।

यद्युच्येत सामान्यांशो न वस्त्वेव, नापि तद्वस्तुनोऽन्यः स्वयमेकं वस्त्विति, तदा परिशेषात् कल्पनाविषय एव सामान्यं स्यात्। अर्थात् तद्वस्तुरूपत्वेन तदन्यवस्तुरूपत्वेन च निर्वक्तुमशक्यतया अनिर्वचनीय एव सामान्यांशः स्यात्। तावताऽपि पूर्वपक्षिणो नैष्टसिद्धिरित्याशयः।

पूर्वपक्षी शङ्कते – **नन्विति**। ननु अंशः अंशिनो न भिन्नः, नापि अभिन्नोऽशिनः, भेदेऽभेदे चोभयथांऽशत्वानुपपत्तिः। न हि घटभिन्नः पटो **घटस्यांशो** भवति, नापि घटाभिन्नो घटो घटस्यांशो भवति। अतः सामान्यांशो

**नैतत् सारम्। अननुगमादंशान्तरस्य किं न वस्तुनोऽननुगमः ? अपि च अननुगम एव, तस्य समुदायात्मकत्वाद् एकाभावेऽप्यभावात्। तथा हि इतरेतरापेक्षौ वा सामान्यविशेषौ वस्तु, तत्समाहारो वा, उभयथाऽर्थान्तरे विशेषस्याभावान्न वस्त्वन्वयः। प्रत्येकमनपेक्षयोर्वस्तुत्वे नोभयात्मकमेकं वस्तु स्यादिति सुष्ठूच्यते— "तस्यानन्वयतो भेदवादः शब्दान्तरादयम्" इति।**

---

न वस्तुनो भिन्नो नाप्यभिन्नः। अत एव सामान्यांशो न अवस्तु तुच्छम्। न हि खपुष्पादि अवस्तु कस्यचिदंशो भवति। तस्माद् वस्त्वेव सामान्यांशः। तत्र सामान्यांशानुगमे वस्त्वेवानुगतं भवतीति सिद्धो वस्त्वनुगम इति न भेदवादप्रसङ्ग इति पूर्वपक्षाशयः।

सिद्धान्ती निराकरोति शङ्काम्— **नैतत् सारमिति**। अयं भावः— भवतु नाम वस्त्वव्यतिरेकात् सामान्यांशस्य विशेषान्तरेऽनुगमाद् वस्त्वनुगमः, तथापि वस्त्वव्यतिरिक्तस्य विशेषांशस्य विशेषान्तरेऽननुगमादेव वस्तुनोऽननुगमः किं न स्यात् ?

ननु विशेषांशस्यानुगमाभावेऽपि सामान्यांशस्यानुगमोऽपि विद्यत इति तथापि नात्यन्तिकभेदवादप्रसङ्गदोष इति चेदाह— **अपि चेति**। अयमभिप्रायः— सामान्यांशस्यानुगमेऽपि वस्त्वनुगमो नास्त्येव, वस्तुनः सामान्यविशेषसमाहारात्मकत्वेन एकस्याप्यनुगमाभावे वस्त्वनुगमाभावाद् एकसत्त्वेऽपि द्वयं नास्तीति नियमात्।

अनुगममेवोपपादयति— **तथा हीति**। एकस्य वस्तुनो द्व्यात्मकत्वसिद्ध्यर्थम् इतरेतरसापेक्षौ सामान्यविशेषौ वस्तुनी स्याताम्, तयोः समाहारो वा वस्तु भवेत्, उभयथाऽपि नास्ति वस्त्वन्वयः, सामान्यांशस्य विशेषान्तरेऽन्वये सत्यपि विशेषांशस्य विशेषान्तरेऽन्वयाभावात्, एकसत्त्वेऽपि द्वयं नास्तीति नियमात्। यद्युच्येत— नेतरेतरसापेक्षौ सामान्यविशेषौ वस्तु, न वा तयोः समाहारो वस्तु।अतः सामान्यांशमात्रस्य विशेषान्तरेषु अन्वयमाधृत्य अभेदोऽपि सिध्यत्येवेति नात्यन्तिकभेदप्रसङ्गावसर इति चेत्, नेदमपि वक्तुं शक्यम्, प्रत्येकमनपेक्षयोः सामान्य-

**यदि वाऽखिलभावानामभेदात् तदतत्त्वतः।**
**अभेदवादाश्रयणं स्यादन्यविधया गिरा ॥ २२ ॥**

**अंशानुवृत्त्या वा वस्त्वनुगमेऽद्वैतवादः। तथा हि – गौः स्वतस्तावद् गौः, सद्द्रव्यादिरूपानुगमादश्ववस्तुनोऽनुगमादश्वः। तदेवं गौर्गौश्चाश्वश्च। अश्वोऽपि तावदश्वः, सद्द्रव्यादिरूपानुगमेन गोवस्तुनोऽन्वयाद् गौः। तदेवमश्वोऽप्यश्वो गौश्च। तदेवं सर्वभावानां तद्भावान्यभावाभ्यामभेद इत्यद्वैतं जगदित्युक्तमन्यप्रकारया वाचा।**

---

विशेषयोर्वस्तुत्वे एकं वस्तु द्व्यात्मकमिति पक्षो न सिध्येत्, प्रत्युत आत्यन्तिकभेदवाद एव प्रसज्येत। तथा च साधूक्तम् – "तस्यानन्वयतो भेदवादः शब्दान्तरादयम्" श्लोकोत्तरार्धभागेनेति।

पूर्वं विशेषांशानुगमाद् भेदवादप्रसङ्ग आपादितः, इदानीं सामान्यांशानुगमाभ्युपगमे सति अभेदवादप्रसङ्गमापादयति – **यदि वेति**। अखिलभावानां = गवादिपदार्थानां तदतत्त्वतः = गोत्वाश्वत्वादिरूपेण अभेदाद् अन्यविधया गिरा = शब्दान्तरेण अभेदवादाश्रयणं = सर्वाभेदवादप्रसङ्गः स्यादिति श्लोकार्थः। स्वाभिप्रायं संक्षेपेणाह – **अंशानुवृत्त्येति**। अयमर्थः:– सत्त्वादिसामान्यांशानुगमात् तस्य सामान्यांशस्य अश्वाद्यव्यतिरेकाद् अश्वव्यक्तेरनुगमोऽपि गवि अभ्युपगन्तव्यः। एवं हि सामान्यांशानुगमद्वारा सर्ववस्तूनां सर्वत्रानुगमाद् अद्वैतवादः प्रसज्यते। एतदेव विशदयति – **तथा हीति**।

अयं भावः – गौस्तावत् स्वतो गौः, तत्र च अश्ववृत्तिद्रव्यत्वाद्यनुगमाद् अश्ववस्त्वनुगमोऽपि वर्तत इति स गौरश्वोऽप्यस्ति। तदेवं रीत्या गौः गौश्चास्ति, अश्वोऽपि चास्ति। एवमश्वोऽपि स्वतोऽश्वोऽस्ति, गोगतसत्त्वद्रव्यत्वादिसामान्यानुगमात् तत्र गोवस्त्वनुगमोऽप्यस्तीति रीत्या सोऽश्वो गौरप्यस्ति। ततश्च गोर्गोत्वमश्वत्वं च, एवमश्वस्याप्यश्वत्वं गोत्वञ्चास्ति। एतदेवोक्तं कारिकायां "तदतत्त्वतः" इति। तच्च अतच्चेति तदतदी, तयोर्भावस्तदतत्त्वं, तत इति

**सत्यम्, द्वैतमप्यस्ति; यतस्तद्भावान्यभावाभ्यामभेदः। नैतत् सारम्, गौरपि चेदश्वो गौश्च, अश्वश्च, तत्कुतोऽन्यत्वम्? गौश्चाश्वश्चेत्यपि भेदाभिधानमनिबन्धनमेव। सिद्धे हि गवाश्वभेद एतदुपपद्यते, गवाश्वस्य तु प्रत्येकं गवाश्वत्वे भेदाभावादनिबन्धनमेव तत्।**

---

व्युत्पत्तिः। तथा च गवि तत्त्वं गोत्वम्, अतत्त्वं तदन्यभावोऽश्वत्वम् इति ताभ्यां गवाश्वयोरभेदः प्राप्नोति। एवं रीत्याऽन्येषामपि भावानां तत्त्वतदन्यत्वाभ्यामभेदः प्राप्नोतीति। तथा चान्यप्रकारया वाचा सर्वं जगदद्वैतमित्युक्तं स्यात् पूर्वपक्षिणेति सर्वाभेदसिद्ध्या न भेदाभेदरूपोऽनेकान्तवादावसरः।

पूर्वपक्षी प्रत्यवतिष्ठते – **सत्यमिति**। अद्वैतं जगदिति यदुक्तं तत् सत्यमस्तु, तथापि द्वैतमप्यस्तीति स्वीकरणीयमेव, यतो हि तद्भावान्यभावाभ्यामभेद इति सिद्धान्तिनैवानुपदमुक्तम्। तद्भावो नाम गोत्वम्, अतद्भावो नाम गवान्याश्वत्वम्। गोत्वानुगमाद् गौश्च, तथा स गौः अश्ववृत्तिसत्त्वद्रव्यत्वाद्यनुगमादश्वश्चास्ति इति गवि स्वतो गोत्वम्, सत्त्वद्रव्यत्वानुगमद्वारा अश्वत्वमप्यस्तीति रीत्या गवाश्वयोरभेदं साधयता सिद्धान्तिनैव गवान्यत्वेनाप्यश्व उक्तः। तथा च नात्यन्तिकाभेदः किन्तु भेदोऽप्युक्तः सिद्धान्तिना स्वमुखत एवेति पूर्वपक्षाशयः।

तदेतन्निराकरोति सिद्धान्ती – **नैतत् सारमिति**। अयं भावः– मया हि गौरपि अश्वः साधितः स्वतः स गौश्चास्ति, एवमश्वोऽपि गौः साधितः स्वतः सोऽश्वश्चास्ति। अस्यां स्थितौ गवाश्वयोरन्यत्वं क्वास्ति, येन द्वैतमप्यस्तीति पूर्वपक्षी प्रतिपादयेत्। मया तु ''तद्भावान्यभावाभ्याम्'' इति वदता यदन्यत्वमुक्तं तन्न मुख्यं किन्तु लोकसिद्धमन्यत्वमभिप्रेत्य परप्रतिपत्त्यर्थमुक्तं गौणमेव। परमार्थतस्तु गवाश्वयोरभेद एव नान्यत्वम्। अतो न द्वैतमप्यस्तीति।

ननु गौश्च अश्वश्चेति व्यपदेशभेद एव गवाश्वयोरन्यत्वसाधकोऽस्तीति चेत्, न, व्यपदेशभेदस्य वस्तुभेदसिद्धौ अनिबन्धनत्वाद् अकारणत्वादिति यावत्। अन्यथा पर्यायशब्दभेदादपि वस्तुभेदः सिद्धः स्यात्। ननु घटकलशशब्दयोः पर्यायत्वेन वस्तुभेदासाधकत्वेऽपि गवाश्वशब्दौ अपर्यायभूतौ कथं न वस्तुभेदं

**ननु विशेषांशानां व्यावृत्तेरन्यत्वसिद्धिः, तथा च द्वैताद्वैतात्मकं जगदिति। अथ विशेषव्यावृत्तेरन्यत्वसिद्धिः, किमुभयरूपत्वाद् वस्तुनो वस्त्वन्तरेऽनुगमो नास्ति, अश्ववस्तु गोवस्तु न भवति ? अथास्त्यनुगमः, अश्वोऽपि गौर्भवति ? तत्र पूर्वस्मिन् कल्पे वस्तुनोऽनन्वयाद् अनुयतश्चा-वस्तुत्वाद् भेदवाद इत्युक्तम्।**

**अथ विशेषव्यावृत्तावपि तद्वस्त्वनुगतम्, भवत्यश्वोऽपि गौः; कुतोऽन्यत्वसिद्धिः ?**

---

साधयेतामिति शङ्कायामाह – **सिद्धे हीति**। अयं भावः – गवाश्वयोर्भेदो यदि सिद्धः स्यात् तदा गवाश्वशब्दयोरपर्यायत्वं स्यात्, तयोर्भेद एव तु नाद्यावधि सिद्धः। गवाश्वत्वस्य तु प्रत्येकं गवाश्वत्वे सिद्धे भेदाभावाद् नात्र शब्दभेदस्तयोः भेदसिद्धौ प्रयोजक इति।

पुनः शङ्कते – **नन्विति**। वस्त्वंशभूतसामान्यानुगमादभेदो यथा, तथा विशेषांशस्य विशेषान्तरेभ्यो व्यावृत्तेर्भेदोऽपि सिध्यति। अतो भेदाभेदाभ्यां द्वैताद्वैतात्मकं जगदस्ति।

शङ्कामिमां निराकर्तुं सिद्धान्ती विकल्पयति – **अथेति**। अयं भावः – उभयरूपमेव हि वस्तु सामान्यात्मकं विशेषात्मकञ्च। अतोऽस्य वस्तुनो विशेषव्यावृत्तिकारणाद् विशेषान्तरेभ्यो भेदः सिध्यति किम्? भिन्नत्वादेव च वस्तुनो वस्त्वन्तरेऽनुगमो नास्ति किम् ? यथाऽश्ववस्तु गोवस्तुनो भिन्नं सद् न गोवस्तुनि अनुगतं भवति, तद्वदिति ते मतमस्ति ? अथवा उभयरूपत्वादेव अस्ति वस्तुनो वस्त्वन्तरेऽनुगमः, भवति चाश्वोऽपि गौः, गौरपि चाश्व इति वा ते मतमस्ति ? तत्रोभयोः कल्पयोर्मध्ये प्रथमे कल्पे व्यावृत्तस्वभावत्वाद् वस्तुनोऽन्यत्रानुगमो नास्ति, यस्य त्वस्त्यनुगमः सामान्यस्य, तस्य स्वयमवस्तुत्वाद् आत्यन्तिकभेदवादः प्रसज्यत इत्युक्तं पूर्वम्।

**यदि मतम् – अनुगतं चाननुगतं चाश्वे गोवस्तु; भवति चाश्वो गौः; गौस्तु गौरेव; भवत्येव हि तत्र गोवस्तु; ततोऽन्यत्वसिद्धिरिति।**

**अथ गोवस्तु कथं वक्तव्यम् ? किं यद् गौर्भवत्येव, अथ यन्न भवत्यपि ? तत्र पूर्वस्यां कल्पनायां न वस्तुनोऽनुगम इत्यनन्वितानि वस्तूनि। द्वितीयस्यां वस्तुनो वस्त्वन्तरेऽन्वयादद्वैतम्। सर्वथा येन**

---

अथ द्वितीयविकल्पमनुसृत्य विशेषांशस्य व्यावृत्तस्वभावत्वेऽपि तद्वस्तुनो यदि वस्त्वन्तरेष्वनुगमोऽस्ति, तदा अश्वोऽपि गौः सिध्यति गौरपि चाश्वः सिध्यतीति कुतो भेदसिद्धिः, अर्थाद् गवाश्वादिवस्तूनामात्यन्तिकाभेद एव प्रसज्येतेत्यसिद्धो भेदाभेदवाद इत्यभिप्रायः।

प्रकारान्तरेण पूर्वपक्षमुपस्थापयति– **यदि मतमिति**। अयं भावः – सामान्यांशानुगमाद् गोवस्तुनोऽश्वेऽनुगतत्वं विशेषांशाननुगमाच्चाश्वे गो–वस्तुनोऽननुगतत्वमभ्युपगम्यते। तत्रानुगतत्वपक्षे अश्वे गोत्वस्यात्यन्तायोग-व्यवच्छेदाद् गौरश्वोऽपि भवति। तदुक्तम्– **भवति चाश्वो गौरिति**। अत्र चकारोऽप्यर्थकः। तथा च गौरश्वोऽपि भवति सामान्यांशानुगमादिति तदर्थः। अननुगतत्वपक्षे गवि गोत्वस्यायोगो व्यवच्छिद्यते। तदुक्तम्– **गौस्तु गौरेवेति**। अर्थाद् गोविशेषांशो यदि अश्वेऽप्यनुगतः स्यात् तदा गौर्गौरिवेति न स्यात्। तथा च गोवस्तुनः स्वरूपेण व्यावृत्तत्वादन्यत्वसिद्धिः। एतदेव शब्दान्तरेणाह– **भवत्येव हि तत्र गोवस्त्विति**। आभ्यामत्यन्तायोगव्यवच्छेदायोगव्यवच्छेदाभ्यामयं निष्कर्ष आयाति यद् अश्वोऽपि गौर्भवतीति सोऽयमत्यन्तायोगव्यवच्छेदः सामान्यांशानुगमे। किन्तु गौस्तु गौरेव सदा भवति न कदाचिदगौरिति। सोऽयमयोगव्यवच्छेदो गवि गोत्वस्य। तस्मादननुगमपक्षे तस्मिन्नेवाश्वे गवान्यत्वं तथा गवि अश्वान्यत्वमपि सेत्स्यतीति सिद्धो भेदाभेदपक्षः।

मतमिदं निरस्यति– **अथेति**। अयं भावः– यद् गोवस्तु स्वरूपेणाश्वाद् व्यावृत्तं तत् कथम् = किं प्रकारमिति पूर्वपक्षिणा वक्तव्यम्। तत्र द्वौ प्रकारौ भवितुमर्हतः = प्रथमः प्रकारो यथा – गौर्भवत्येवेति। द्वितीयश्च प्रकारो यथा –

**विशेषेणायमश्वाद् गोवस्तु व्यवस्थापयत्यन्यत्, तद्विशेषयुजस्तु तस्यानन्वयाद् भेदवादः। अथानन्वयदोषान्न विशेषमाश्रयति, अभेदवाद इति न द्वैताद्वैत-कल्पनोपपद्यत इति।**

**द्रव्यपर्यायार्थकानां नय एतेन वारितः।**
**तेषामपि द्रव्यनयः पर्यायनय एव वा॥२३॥**

**येऽपि— द्रव्यं नित्यं मृत्सुवर्णादि, तस्य च घटरुचकादयः पर्याया विशेषाख्या अपायिन उपायिनश्चाव्यतिरेकाः। न च ते द्रव्यमेव, तस्य**

---

गौर्नापि भवतीति। प्रथमः प्रकारो गोवस्तुनोऽसाधारणः। अस्मिन् प्रकारे भेदवादः सिध्यति। यतो हि गौर्यदि गोरूप एव नान्यरूपः, तथैवाश्वोऽपि अश्वरूप एव नान्यरूप इति सिद्धो भेदवादः। द्वितीयस्तु गोवस्तुनः प्रकारोऽश्वसाधारणः। अस्मिन् प्रकारे गौरश्वरूपोऽपीति गौर्गवाश्वरूपः। अश्वोऽपि च गोरूपोऽपीति अश्वोऽपि गवाश्वरूप इत्यभेदवादः सिद्धः। एतदभिप्रायेणोक्तं मूले— तत्र पूर्वस्यां कल्पनायाम् अनन्वितानि वस्तूनीति, द्वितीयस्यां कल्पनायामद्वैतमिति चेति।

पूर्वोक्तमर्थं संक्षेपेणाह— **सर्वथेति**। यं विशेषमाश्रित्यायं पूर्वपक्षी गोवस्तु अश्वादन्यदिति व्यवस्थापयति, तद्विशेषयुक्तस्य गोवस्तुनो वस्त्वन्तरेष्वनन्वयात् सर्वथैव भेदवादः सिद्ध्येत्। अथ अनन्वयदोषापत्त्या यदि तं विशेषं नाश्रयति वादी तदा विशेषानाश्रयणात् सर्वथाऽभेदवाद एव वा सिद्ध्यतीति न द्वैताद्वैतोभयकल्पना कथमप्युपपद्यत इत्यभिप्रायः सिद्धान्तिनः।

सामान्यविशेषात्मकमेकं वस्त्विति मतं दूषितम्, इदानीं द्रव्यपर्यायात्मकमेकं वस्त्विति दिगम्बरमतेऽपि तद्दूषणमतिदिशति— **द्रव्येति**। अत्रापि मते द्रव्यमिति सामान्यं पर्याय इति विशेषो बोध्यः। अतः पूर्वमतखण्डनेनैवेदमपि खण्डितं बोद्धव्यम्। श्लोकार्थस्तु— द्रव्यं मृत्सुवर्णादि कारणम्, पर्याया घटरुचकादयो विकाराः, तौ मिलितावर्थौ येषां ते द्रव्यपर्यायार्थका दिगम्बराः, तेषां नयोऽपि

**स्थितिमत्त्वात्। न च ततोऽत्यन्तं व्यावर्तन्ते, भेदेनानुपलब्धेः; द्रव्यस्यैव रुचकादिरूपेण प्रत्ययात्।**

**एवं द्रव्यपर्यायरूपं वस्तु। अथ द्रव्यमेव स्यात्, वर्धमानकभङ्गेन रुचकक्रियायां न किञ्चिदुत्पन्नं नष्टं वेति प्रीतिशोकौ तदर्थिनोर्न स्याताम्। अथ तु पर्यायमात्रम्, हेमार्थिनो मध्यस्थता न स्यात्। पर्यायमात्रे हि हेम्नि हेम्नो विनाशात् पर्यायविनाशे कथं मध्यस्थता ? उत्पादे वा ?**

---

मतमपि एतेन पूर्वोपदर्शितेन दूषणेन निराकृतं बोद्धव्यम्। एकस्या एव मृदो घटशरावादयः, एकस्मादेव च सुवर्णाद् रुचकादयो विशेषाः पर्यायेण जायन्ते। अतो घटरुचकादयः पर्याया इत्युच्यन्ते। तेषामपि स नयो द्रव्यनयो वा भवेत् पर्यायनयो वा उभयमपि निराकृतं भवतीति।

श्लोकार्थमेव विशदयति मूलकारः– **येऽपीति**। तत्र द्रव्यं मृत्सुवर्णादिकं नित्यम्, तस्य च घटरुचकादयः पर्याया विशेषाख्या अपायिनः = नाशधर्मवन्त उपायिनः = जननशीलाः, अत एव नित्याद् द्रव्याद् भिन्नाः सन्तीति भेदवाद उक्तः। उपायिनः = जननशीला अत एव अव्यतिरेकाः, ततो जातस्य तदव्यतिरिक्तत्वाद् इत्यभेदवादः। तथा चास्मिन् मतेऽपि भेदाभेदवादः। भेदमेव द्रढयति – **न च ते इति**। ते घटरुचकादयो द्रव्यमेवेति नास्ति, द्रव्यस्य मृत्सुवर्णादेः स्थितिमत्त्वात्, घटरुचकादेस्त्वपायधर्मकत्वात्। अतो द्रव्यपर्याययोर्भेदः सिद्धः। अभेदमपि समर्थयति – **न च तत इति**। घटरुचकादयो मृत्सुवर्णादिभ्योऽत्यन्तं भिद्यन्तेऽपि न, मृदादिभिन्नतया तेषामनुपलब्धेः। प्रत्युत मृदादिद्रव्यमेव घटरुचकादिरूपेण प्रतीयत इति द्रव्यपर्याययोरभेदोऽपि सिध्यतीत्यभेदवादः। अस्मिन्नपि मत एकमेव वस्तु उभयात्मकमस्ति, न द्रव्यमात्रं न पर्यायमात्रं वेति।

निष्कर्षमाह – **एवं द्रव्यपर्यायरूपं वस्त्विति**। वस्तुनो द्रव्यमात्रत्वेऽनुपपत्तिमाह – **अथ द्रव्यमेवेति**। अयं भावः– वर्धमानकं पात्रविशेषः, तस्य भङ्गेन शोकान्वितो भवति तदिच्छुर्जनः, एवं रुचकरचनायां प्रीतिमान् भवति तदभिलाषी। यदि वस्तु द्रव्यमात्रं स्यात्, तदा वर्धमानकभङ्गेन न किञ्चिन्नष्टं मृद्रूपस्य द्रव्यस्य

**तस्माद् द्रव्यपर्यायरूपत्वाद् वस्तुन उत्पत्तिस्थितिभङ्गानामेकत्र सम्भवाद् द्रव्यरूपस्थितेर्माध्यस्थ्यम्, पर्याययोरुत्पत्तिविनाशाभ्यां प्रीतिशोकाववकल्पेते इति मन्यन्ते, तन्नीतिरप्यनेनैव निराकृता प्रकारेण।**

**तथा हि– तेषामपि वस्तुनो वस्त्वन्तरान्वयेऽपि भागाभावाद् द्रव्यमात्रं स्यात्। अथ न वस्त्वन्वेति द्रव्यपर्यायरूपत्वाद् वस्तुनः, पर्यायान्तरे**

---

यथावद् विद्यमानत्वादिति वर्धमानकाभिलाषी जनः शोकान्वितो न भवेत्। एवं हेम्नो रुचकक्रियायां न किञ्चिद् हेमातिरिक्तं वस्तूत्पन्नमिति रुचकक्रियया न प्रीतिमान् स्याद् रुचकार्थी। तस्मान्न द्रव्यमात्रं वस्तु।

यदि ब्रूयात् पर्यायमात्रं वस्त्विति, तदपि न युक्तम्। तथा सति हेमार्थी जनो रुचकरचनायां न प्रीतिमान् भवति शोकान्वितो वा भवति, किन्तु प्रीतिशोकयोर्मध्यस्थो भवति, तच्च न स्यात्। यतो हि हेमवस्तुनि पर्यायमात्रे सति रुचकादिरूपपर्यायंनाशे हेमवस्तुनोऽपि नाशात् कथं जनस्तदानीं मध्यस्थः स्यात्? प्रत्युत शोकान्वितो भवेत्। अथवा पर्याये उत्पन्ने सति हेमवस्तूत्पादाद् हेमार्थिनो जनस्य हर्षस्य उत्पत्तिर्भवेत्, मध्यस्थः कथङ्कारं भवेत्? भवति च हेमार्थी जनो रुचकादिपर्यायोत्पादेऽपि मध्यस्थः। तस्मात् पर्यायमात्रं वस्त्विति कथनं न युज्यते।

तस्माद् वस्तुनो द्रव्यपर्यायोभयरूपत्वमङ्गीकरणीयम्। अस्मिन् पक्षे उत्पत्तिस्थितिभङ्गा एकस्मिन्नेव वस्तुनि सम्भवन्ति। तत्राभिनवपर्यायोत्पत्तौ हर्षः, पूर्वपर्यायभङ्गे शोकः, द्रव्यरूपवस्त्ववस्थितिदशायां माध्यस्थ्यञ्चोपपद्यत इति दिगम्बरा मन्यन्ते। तेषामियं नीतिः (नयः) अपि अनुपदोक्तखण्डनप्रक्रिययैव निराकृता भवतीति मन्तव्यम्।

दिगम्बरमतखण्डनप्रक्रियामेव प्रपञ्चयति– **तथा हीति**। अयं भावः– दिगम्बरमतेऽपि वस्तुनो वस्त्वन्तरेऽनुगतिरस्ति ? न वा ? प्रथमपक्षे वर्धमानकभङ्गानन्तरमुत्पन्ने रुचके यदि द्रव्यात्मकं हेमवस्त्वनुगतं तदा वर्धमानकरुचकयो-

**च पर्यायान्तरस्याननुगमादनन्वितानि, तर्हि व्यावृत्तस्वभावानि वस्तूनि। यस्यानुगमः कल्प्यते तन्मात्ररूपस्यावस्तुत्वात् पर्यायमात्रम्। अवस्थितं हि द्रव्यमुच्यते, न चैवमवस्थितं किञ्चिदेकं वस्त्वस्ति। वस्तुनस्त्वपोद्धृत-स्यांशस्यावस्थानकल्पंना कल्पनैव, वस्तुनश्चित्रत्वात्, तस्य चातथा-भावादिति।**

---

रुभयोरपि पर्याययोर्हेमांशेन द्रव्येणाभेदात्=अव्यावृत्तत्वाद् एकमेव वस्तु हेमद्रव्यरूपमस्तीत्यायातम्। तयोः पर्याययोर्हेम्नो भागाभावात्=अविभक्तत्वात् परस्परमपि अव्यावृत्तत्वादित्यर्थः। तथा चाभेदवादोऽस्मिन् पक्षे। तदा चावस्थितं द्रव्यमात्रं जगदिति नीतिः स्यात्, न तु पर्यायरूपमपीति।

यद्युच्येत, वस्तु नानुगतम्। यतो हि वस्तुनो द्रव्यपर्यायोभयरूपत्वेन एकस्य पर्यायस्य वर्धमानकस्य पर्यायान्तराद् रुचकाद् व्यावृत्त्या उभयात्मकं वस्त्वपि व्यावृत्तमेव, एकसत्त्वेऽपि द्वयं नास्तीति नियमात्। यद्यपि हेमांशमात्रं रुचकेऽप्यनुवृत्तं तथापि न तावन्मात्रानुवृत्त्या वस्तुनोऽनुवृत्तिर्वक्तुं शक्यते, केवलस्य हेमांशस्य स्वयमवस्तुत्वात्। तथा च वस्त्वननुगमपक्षे पर्यायमात्रं जगदापद्येत। अस्मिन् पक्षे परस्परव्यावृत्तपर्यायमात्रात्मकं जगत्, न तु अवस्थितद्रव्यात्मकं जगदस्ति। पर्यायमात्रपक्षेऽवस्थितद्रव्यस्यैवाभावात्। या तु हेमांशमात्रस्य रुचकनाशेऽपि वर्धमानकेऽवस्थानकल्पना, सापि कल्पनैव यतस्तन्मते द्रव्यपर्यायरूपं चित्रं वस्तु, हेमांशमात्रस्य तु वस्तुत्वमेव नास्तीति – शङ्कपाणिः। वस्तुनो वस्त्वन्तरानुगमे द्रव्यमात्रं जगत् स्यात्, अननुगमे च पर्यायमात्रं जगत् स्यादिति द्रव्यपर्यायोभयरूपत्वं न युक्तिं सहत इति तात्पर्यम्।

एतदेवोक्तम् – **पर्यायान्तरे चेत्यारभ्य तस्य चातथाभावादित्यन्तेन** ग्रन्थेन।

अपि च—

उत्पादस्थितिभङ्गानामेकत्र समवायतः।

प्रीतिमध्यस्थताशोकाः स्युर्न स्युरिति दुर्घटम् ॥ २४ ॥

यस्य खलु द्रव्यात् पर्याया भिद्यन्ते, तस्य द्रव्यमात्रार्थिनो द्रव्यस्य स्थितेर्विनाशाभावादपूर्वस्यानुत्पादान् मध्यस्थता, रुचकार्थिनस्तस्य अपूर्वस्योत्पत्तेः प्रीतिः, वर्धमानकार्थिनस्तस्य विनाशाच्छोक इति व्यवस्था कल्पते। यस्य तु पर्यायेभ्योऽनन्यद् द्रव्यम्, न द्रव्यादन्ये पर्यायाः, तस्य— उत्पत्तिस्थितिंभङ्गानामेकत्र समवाये द्रव्यार्थिनो मध्यस्थता भवेत्, न भवेच्च। प्रीतिशोकौ स्याताम्, न स्याताम्। न हि तद्द्रव्यमवतिष्ठत एव, विनश्यत्यपूर्वं चोत्पद्यते। तत्र विनाशात्पूर्वोत्पत्तेश्च प्रीतिशोकौ स्याताम्, न मध्यस्थता, मध्यस्थता च स्थितेः स्यात्—इति दुर्घटमापद्येत।

---

द्रव्यस्य पर्यायाणां च परस्परमैकान्तिकाभेदे एकस्मिन्नेव वस्तुनि उत्पत्तिस्थितिभङ्गा भविष्यन्तीति अवस्थितद्रव्ये मध्यस्थता स्यादपि नापि स्यात्। द्रव्यदृष्ट्या मध्यस्थता स्याद् द्रव्यार्थिनः। रुचकादिदृष्ट्या तु मध्यस्थता नापि स्यादिति।एवं रुचकोत्पत्तिवर्धमानकभङ्गदृष्ट्या उत्पद्यमानौ प्रीतिशोकौ स्यातामपि न स्यातामपीति द्रव्यदृष्ट्या पक्षे मध्यस्थताया अप्युत्पादादिति श्लोकार्थः।

श्लोकाभिप्रायमाह वैशद्येन— **यस्य खल्विति**। यस्य मते हेमादिद्रव्याद् रुचकादयः पर्याया भिद्यन्ते, तस्य मते हेममात्रार्थिनो जनस्य हेम्नोऽवस्थितत्वेन तस्यापूर्वोत्पत्त्यभावाद् विनाशाभावाच्च मध्यस्थता स्यात्, न प्रीतिर्नापि शोक इति व्यवस्था।तत्रैव रुचकार्थिनो रुचकस्योत्पत्तेःप्रीतिरपि स्यात्, वर्धमानकस्य भङ्गात् शोकोऽपि व्यवतिष्ठते। किन्तु यस्य मते हेमरुचकवर्धमानकाः सर्वे अभिन्नाः सन्ति, अर्थाद् न पर्यायेभ्यो रुचकादिभ्यो हेमद्रव्यं भिन्नं नापि हेम्नो रुचकादि— पर्याया भिन्नास्तस्य मते यस्य कस्यापि भवन्त उत्पत्तिस्थितिभङ्गा एकत्रैव समवेता मन्तव्याः। तथा च द्रव्यार्थिनस्तदवस्थितिदृष्ट्या मध्यस्थता भवेत्,

**तथा वर्धमानकार्थिनस्तन्नाशाच्छोकः स्यात्, न स्यात् स्थितेः, प्रीतिश्च तस्यापूर्वस्योत्पादात् स्यात्, न च स्यात्। तथा रुचकार्थिनस्तस्यापूर्वस्योदयात् प्रीतिः स्यात्, न च भवेत्, पूर्वस्यैव स्थितेः। विनाशाच्च शोकः स्यादिति।**

**अथ भेदोऽप्यस्तीति नायं दोषः, अभेदोऽप्यस्तीति किं न भवति ?**

---

दृष्ट्यन्तरेण मध्यस्थता नापि भवेत् । एवमभीष्टपर्यायोत्पत्तिभङ्गाभ्यां प्रीतिशोकौ भवेतां नापि भवेताम्, दृष्टिभेदात् । न हि तद्धेमद्रव्यमवतिष्ठत एव प्रत्युत उत्पद्यते च विनश्यति च रुचकवर्धमानकाभिन्नत्वात्। अतो विनाशादपूर्वोत्पत्तेश्च प्रीतिशोकौ स्यातां न मध्यस्थता स्यात्। किन्तु हेमद्रव्यस्य पूर्ववदवस्थितत्वेन मध्यस्थतापि स्यात् ।इत्थञ्चाभेदपक्षे प्रीतिशोकमध्यस्थता अव्यवस्थिता भवेयुरिति तात्पर्यम् ।

यथा हि द्रव्यार्थिनो मध्यस्थता स्यात्, न स्यादित्यव्यवस्था द्रव्यपर्यायाणामनन्यत्वस्वीकारे तथैव वर्धमानकार्थिनो जनस्य तन्नाशात् शोकः स्यात्, नैवापि स्यात् ।एवमेव रुचकार्थिनो जनस्य अपूर्वरुचकोत्पत्तेः प्रीतिः स्यात्, नैवापि स्यात्। प्रत्युत पूर्वस्यैव हेम्नोऽवस्थितेर्मध्यस्थता किं न स्यात् ? तथा पूर्वावस्थितस्य वर्धमानकस्य विनाशाच्छोकः स्यात्, रुचकस्य हेमवर्धमानकाभ्यां दिगम्बरैरनन्यत्वाभ्युपगमात् । एतदुक्तं "**तथा**" इत्यारभ्य "**स्यादि**"त्यन्तेन ग्रन्थेन ।

दोषोद्धारमाशङ्क्य पुनर्दोषमेव द्रढयति – **अथ भेदोऽप्यस्तीति।** अत्रायमभिप्रायः– यद्युच्येत द्रव्यात् पर्यायाणां भेदोऽप्यस्तीति नोक्ताऽव्यवस्थाऽऽपततीति चेत्, यदि भेदाद् अव्यवस्था नापतति तर्ह्यभेदोऽप्यस्तीति तद्वशादव्यवस्था किं न स्यात् ?

पुनः शङ्कते – अथेति ।अयमर्थः– यदि द्रव्यपर्यायाणामत्यन्तमभेदः स्यात्, तदा तत्तदर्थिनो जनस्य प्रीतिशोकमध्यस्थतानामव्यवस्थारूपं साङ्कर्यमापतेत्, न त्वेवमस्ति, ततो नोक्तदोषः।

**अथ नात्यन्तमभेदस्तेन न संकरः, नात्यन्तमभेद[1] इति व्यवस्थाऽपि न युज्यते। न चास्य किञ्चित् क्वचिदेकान्ततः सर्वत्रानेकान्तमभ्युपयतः, येनायं विशेष उच्यते— नात्यन्तमभेद इत्यसङ्कर इति।**

**तथा च—**

**नैकान्तः सर्वभावानां यदि सर्वविधानतः।**
**अप्रवृत्तिनिवृत्तीदं प्राप्तं सर्वत्र ही! जगत्॥ २५॥**

---

उत्तरयति – **नात्यन्तमभेद इति**। अयमाशयः – अभेदमात्रं न अव्यवस्थापादकं किन्तु अत्यन्ताभेदः स चेह नास्तीति यदि पूर्वपक्षी ब्रूयात्, तर्हि सिद्धान्ती वक्ष्यति – भेदमात्रं न व्यवस्थापादकं किन्तु अत्यन्तं भेद, स चेह नास्तीति प्रीतिशोकमध्यस्थतानां पूर्वोक्ताऽव्यवस्था तदवस्थैव स्यात्।

किञ्च अनैकान्तिकत्वमपि तव ऐकान्तिकम्? अथवाऽनैकान्तिकम्? आद्ये तव स्याद्वादो व्याहन्यते। अनैकान्तिकत्व एव अनेकान्तवादस्य व्यभिचारात्। द्वितीये त्वनैकान्तिकत्वमपि स्वयं यदाऽनैकान्तिकं तदा तन्न्यायेन भेदोऽप्यनैकान्तिकः। तथा चानैकान्तिकभेदबलेन अर्थाद् ऐकान्तिकभेदाभावेन पूर्वोक्तसाङ्कर्यप्रसङ्गस्य वारयितुमशक्यत्वात्। एवं यो हि सर्वत्रानेकान्तमभ्युपगच्छति, तस्य क्वंचिदपि किञ्चिदेकान्तं नास्तीति, तेन अयमप्यैकान्तिको विशेषः कथं वक्तुं शक्यते यत् "नात्यन्तमभेदः, अतो न सङ्करदोषः" इति। अर्थाद् उक्तवचनस्याप्यनैकान्तिकत्वेनात्यन्ताभेदाभावेऽपि सङ्करदोषस्य सम्भवादित्यभिप्रायेणोक्तम्– **न चास्येत्यादि**।

सम्प्रति अनेकान्तवादमेव सामान्येन दूषयति – **तथा चेति**। अनैकान्तिकत्वे यथा पूर्वोक्तदूषणानि तथा वक्ष्यमाणोऽपि दोष इत्यर्थः। दूषणमेवोपन्यस्यति श्लोकेन – **नैकान्त इति**। सर्वेषां भावानां वस्तूनां सर्वविधानतः= सर्वप्रकारेण यदि अनैकान्तः = अनैकान्तिकत्वं तदा प्रवृत्तिश्च निवृत्तिश्च प्रवृत्तिनिवृत्ती,

---

१. 'नात्यन्तं भेद' इति पाठ उचितः।

**यदा हि सर्वप्रकारेष्वनैकान्तिकत्वं भावानाम्, तथा सति— नायं लोकः क्वचिदभिमतसाधनताप्रकारमवधार्य प्रवर्तेत, यतो नासौ तथैव। नापि निवर्तेत, यतो नासावतथैव। तथा दुःखहेतोर्न निवर्तेत, यतो नासौ तथैव। नापि च न निवर्तेत, यतो नासावतथैव इति कष्टां बत! दशामापद्येत।**

**अथवा यदुक्तम्— प्रीतिमध्यस्थताशोकाः स्युर्न न स्युरिति दुर्घटमिति, तत्र ब्रूयुः— सर्ववस्तुषु सर्वप्रकाराणामनैकान्तिकत्वात् का दुर्घटता? तथा हि— प्रीतिमध्यस्थताशोका नैकान्ततः सन्ति, नैकान्ततो न सन्तीति। अत्रोच्यते— नैकान्तः सर्वभावानामिति।**

**यदि खलु प्रीत्यादीनां सदसत्त्वेऽनैकान्तिके— न प्रीत्यर्थी प्रीतिसाधनेषु प्रवर्तेत, प्रीतेर्विद्यमानत्वात्, नापि न प्रवर्तेत, तस्या अभावात्। तथा दुःखनिवृत्त्यर्थी न दुःखसाधनसम्पर्कं परिहरेत्, तस्यासत्त्वात्, नापि न परिहरेत्, तस्य सत्त्वात्, इत्यप्रवृत्तिनिवृत्तिकं बत! विश्वमापन्नमिति।**

---

न प्रवृत्तिनिवृत्ती यस्य यस्मिन् वा तादृशमिदं जगज्जायेत सर्वत्र सर्वविषयेष्वित्यर्थः। बत इति खेदप्रकाशनार्थम्। श्लोकार्थमेव विशदयति— **यदा हि** सर्वेत्यादिना **दशामापद्येत** इत्यन्तेन ग्रन्थेन। तथैव = अभिमतसाधनमेवेत्यर्थः। नासावतथैव = नासौ असाधनमेवाभिमतं प्रतीत्यर्थः। शेषः सुगमः। श्लोके 'ही' खेदे।

प्रकारान्तरेण श्लोकार्थं विवृणोति— **अथवेति**। अयमभिप्रायः— सिद्धान्तिना यदुक्तम्— अनेकान्तवादे वर्धमानकादिपर्यायेषु नष्टेषूत्पन्नेषु च प्रीत्यादयः स्युर्न स्युरिति दुर्घटमापद्येतेति, तन्न युक्तम्। यतो हि सर्वत्रानेकान्तवादिनो मम प्रीत्यादयः सन्ति न सन्ति च। अतः प्रीतिमध्यस्थताशोकानां दुर्घटत्वमिष्टमेवेति न मम किञ्चिद् दुर्घटमिति पूर्वपक्षिण आशङ्कायामुत्तरमाह— **नैकान्तः सर्वभावानामित्यादि**। श्लोकार्थं विशदयति— **यदि खल्विति**। प्रीत्यादीनां सत्त्वमसत्त्वञ्च यद्यनैकान्तिकं तदा प्रीत्यर्थी जनः प्रीतिसाधनेषु न प्रवर्तेत, प्रीतेः पूर्वत एव सत्त्वात्। न वा न प्रवर्तेतापि, प्रीतेः पूर्वतोऽविद्यमानत्वात्। एवम्,

**एवं तावन्न द्वे वस्तुनी, नैकं द्व्यात्मकम्। तत्र द्वयमवशिष्यते—भेदः सत्यः, तदुपादानाऽभेदकल्पना। अभेदो वा सत्यः, तदुपादाना भेदकल्पनेति। तत्र—**

**आपेक्षिकत्वाद् भेदो हि भेदग्रहपुरस्सरः।**

**नैकज्ञानं समीक्ष्यैकं न भेदं तत्त्वहानतः॥ २६॥**

**न भेदमुपादायाभेदकल्पना। कुतः? आपेक्षिको हि भेदो नान्यमनपेक्ष्य शक्यते ग्रहीतुम्। न चागृहीतो भेदोऽभेदकल्पनाया उपादानं भवति।**

---

दुःखनिवृत्तिकामो जनो न दुःखसाधनानां सम्पर्कं परिहरेत्, दुःखसाधनानां पूर्वत एव अभावात्। न वा नापि परिहरेत्, दुःखसाधनानां पूर्वतो वर्तमानत्वेन तत्परिहारस्यावश्यकत्वात्। इत्युभयतो दोलायमानं विश्वं प्रवृत्तिनिवृत्त्युभय-शून्यमापद्येतेति भावः।

सामान्यविशेषौ द्वे वस्तुनी न स्तः, न वा एकं वस्तु द्व्यात्मकमिति पूर्वं सयुक्तिकं प्रतिपादितम्। इदानीं, भेदः सत्यः, तदाश्रिता अभेदकल्पना, अथवाऽभेद एव सत्यः, भेदस्तु अभेदमाश्रित्य कल्पित इति पक्षद्वयेऽन्यतरनिर्णयार्थमुपक्रमते—**एवं तावदिति**। निर्णयमेवाह—**तत्रेति**। अत्रायं श्लोकार्थः—भेदो हि आपेक्षिको भवति, अर्थाद् भेदः प्रतियोगिनं धर्मिणञ्चापेक्षते। अतो भेदो भेदग्रहपुरस्सरो भवति। अर्थाद् धर्मिणः प्रतियोगिनश्च परस्परं भेदग्रह एव तयोः प्रतियोग्यनु-योगिभावः सिध्यति, तत्सिद्धौ च भेदः सिध्यति। तथा चान्योन्याश्रयः—प्रतियोग्यनुयोगिभेदे सिद्धे प्रतियोग्यनुयोगिभावसिद्धिः, तत्सिद्धौ च प्रतियोग्यनु-योगिनोर्भेदसिद्धिरिति स्फुटोऽन्योन्याश्रयो भेदसत्यत्वपक्षे। तथा चान्योन्याश्रयदोषाद् भेद एवासिद्धस्तदा कुतस्तदुपादानाऽभेदकल्पना उपपादयितुं शक्येत? न हि स्वयमगृहीतो भेदोऽभेदकल्पनाया उपादानं भवितुमर्हति। एतदेवोक्तं मूले—न भेदमुपादायाभेदकल्पना इत्यारभ्य प्राक् प्रपञ्चितमित्यन्तेन ग्रन्थेन। "परापेक्षत्वे चास्य ग्रहणमनुपपन्नम्" इति मूलस्य अन्योन्याश्रयादिति शेषो बोध्यः। परात्मानौ व्यवतिष्ठेते = प्रतियोग्यनुयोगिनौ व्यवतिष्ठेते इत्यर्थः। परात्मव्यवस्थामन्तरेणेत्यस्य प्रतियोग्यनुयोगिव्यवस्थां विना इत्यर्थः।

परापेक्षत्वे चास्य ग्रहणमनुपपन्नम्। यतो नागृहीते भेदे परात्मानौ व्यवतिष्ठेते। न च परात्मव्यवस्थामन्तरेण भेदग्रहोऽस्तीति प्राक् प्रपञ्चितम्।

न चैवमभेदग्रहणमभेदग्रहणापेक्षम्, नापि भेदग्रहणापेक्षम्, अभेद-हानप्रसङ्गात्। न हि भेदे गृहीतेऽभेदस्यावकाशोऽस्ति। तत्राभेदं गृहीत्वा तमुपादाय तस्य यथावन्निश्चयाशक्तौ व्यवच्छेदकल्पनोपपद्यते, यथैक-बुद्धिनिर्ग्राह्येषु घटादिषु अवयवविभागकल्पना। न तत्र भेदोपादानाऽभेद-कल्पना। भेदो हि परमाणुषु व्यवतिष्ठते, ते चातीन्द्रियाः।

---

ननु यथा भेदो भेदग्रहापेक्षः (भेदग्रहपुरस्सरः) तथा अभेदोऽप्यभेद-ग्रहापेक्ष इतीहाप्यन्योन्याश्रयः स्यादिति शङ्कायां श्लोकार्धेनोत्तरयति – **नैकज्ञानमिति**। एकज्ञानम् = अभेदज्ञानमपेक्ष्य एकम् = अभेदो नास्तीति नान्योन्याश्रय इत्यर्थः। ननु अभेदो यदि न अभेदग्रहापेक्षस्तदा भेदग्रहापेक्षः स्यादित्याशङ्काभिप्रायेणोत्तरमाह – **न भेदं तत्त्वहानत इति**। अभेदो यदि भेदापेक्षः स्यात् तदा अभेदस्वरूपमेव हीयेत। अथवा भेदमपेक्ष्य यदि अभेद एव सिध्येत् तदा भेदस्वरूपमेव हीयेतेत्यर्थः श्लोकोत्तरार्धस्येति।

श्लोकोत्तरार्धं स्फुटीकरोति मूले – **न चैवमिति**। अभेदग्रहणस्याभेदग्रहसापेक्षत्वे आत्माश्रयस्यान्योन्याश्रयस्य वाऽऽपत्तिरित्यर्थः। नापि अभेदग्रहणं भेदग्रहणमपेक्षते, तथा सति अभेदस्वरूपस्यैव हानिः स्यात्। न हि भेदे गृहीतेऽभेदस्यावकाशोऽस्ति। अथवाऽभेदग्रहणाय यदि भेदज्ञानमुपयुज्येत तथा सति अभेदाय उपयुज्यमानो भेदः स्वस्वरूपमेव जह्यादिति भावः। सिद्धान्तपक्षनिष्कर्षमाह – **तत्राभेदं गृहीत्वेति**। अतः स्वातन्त्र्येणाभेदं गृहीत्वा अभेदमेवोपादानीकृत्य तदुपादानकस्य व्यवच्छेदस्य = भेदस्य कल्पनोपपद्यते, यतो हि भेदस्य कल्पनामन्तरा यथावदभेदनिश्चयस्य भवितुमशक्यत्वात्। अत्रैव दृष्टान्तमाह – **यथैकबुद्धीति**। यथैकबुद्धिग्राह्येषु घटाद्यवयविषु तत्रावयवविभागकल्पनायाः सम्भवः। यथैव एकावयवी अवयवविभागकल्पनाया हेतुर्भवति, तद्वदित्यर्थः।

**ननु चैकत्वमप्यनुसन्धानप्रत्ययावसेयम्, स च न भेदमन्तरेण, भेदासंस्पर्शे हि किं केनानुसन्धीयतामिति। प्रत्युक्तमेतत् — नेदानीमभिन्न-देशकालोऽर्थ एकः स्यात्। असति चैकस्मिन् किमाश्रया भेदाशङ्का स्यात्, यस्यानुसन्धानादेकत्वमुच्यत इति।**

---

भेदमुपादायाभेदकल्पना कथं न स्यादिति शङ्कां निरस्यति – **न तत्रेति**। भेदो वस्तुभूतस्तमाश्रित्याभेदकल्पनेति न युज्यते। यतो हि भेदो वस्तुतः परमाणुषु चरमावयवेषु व्यवतिष्ठते, परमाणवश्चातीन्द्रियास्तेऽभेदकल्पनाया हेतवो न भवितुमर्हन्ति। अतीन्द्रियत्वेन अगृहीतानां परमाणूनामभेदकल्पनां प्रत्युपादान-त्वासम्भवादित्याशयः।

एकत्वज्ञानं स्वोत्पत्तये भेदं नापेक्षत इत्युक्तं पूर्वं "न भेदं तत्त्वहानतः" इति श्लोकांशेन। तत्र शङ्कते – **नन्विति**। अयमत्र शङ्कितुरभिप्रायः – "सोऽयम्" इति अनुसन्धानप्रत्ययेन = प्रत्यभिज्ञाज्ञानेन तद्देशकालस्थस्यैतद्देश-कालस्थेन सहाभेदो निश्चीयते। स चाभेदो न देशकालभेदं विना घटते। यतो हि देशकालभेदं विना पूर्वापरभावो न भवेत्। पूर्वापरभावाभावे च किं परदेश-कालसम्बद्धं केन पूर्वदेशकालसम्बद्धेन सह "सोऽयम्" इत्यनुसन्धीयेत ? तस्मात् पूर्वापरयोरभेदनिश्चयाय देशकालभेद आवश्यकः। अतो नैकत्वज्ञानं स्वोत्पत्तये भेदमपेक्षत इति रिक्तं वचः।

इयमपि शङ्का पूर्वमेव निराकृतेति स्मारयति – **प्रत्युक्तमेतदिति**। निराकरणमेव स्फुटीकरोति – **नेदानीमिति**। "नेदानीमभिन्नदेशकालोऽर्थ एकः स्यात्" इति पूर्वोक्तेन एकादशकारिकाव्याख्यागतेन वचनेन प्रत्युक्तं खण्डितमित्यर्थः। अयं भावः – देशकालभेदानुसन्धानपूर्वकमेव यद्येकत्वं स्यात् तदा अभिन्नदेशकालः कश्चिदर्थ एको न स्यादिति कथनद्वारा खण्डितमिति तत्रत्यवचनाशयः।

एवमेकार्थाभावे च किमाश्रया तव भेदाशङ्का स्यात् ? यस्यानुसन्धाना-**देवैकत्वमित्युच्यते** भवतेति। तस्मादेकत्वमवश्यं स्वीकार्यं तदाश्रया च भेदकल्पना क्रियतां नामेति।

**अपि च, सर्वप्रत्यात्मवेदनीयमेतदभेदोपादानो भेद इति। तथा हि –**

**आलोच्यते वस्तुमात्रं ज्ञानेनापातजन्मना।**
**अचेत्यमानो भेदोऽपि चकास्तीत्यतिसाहसम् ॥ २७ ॥**

**वस्तुमात्रविषयं प्रथममविकल्पकं प्रत्यक्षम्। तत्पूर्वास्तु विकल्पबुद्धयो विशेषानवगाहन्त इति सर्वप्रत्यात्मवेदनीयम्।**

**स्यादेतत् – विशिष्टरूपोपग्राह्येव प्रत्यक्षम्, स तु भेदः शब्देनासंस्पर्शान्न तथोपलक्ष्यते, यथा विकल्पबुद्धौ। तदयुक्तम्, विप्रतिषेधात्।**

---

अभेदोपादानैव भेदकल्पना इति स्वपक्षे उपपत्त्यन्तरमाह सिद्धान्ती – **अपि चेति**। सर्वेषां जनानां प्रत्यात्मवेदनीयम् = स्वानुभवसिद्धमेतद् यदभेदोपादानो भेद इति। वस्तुभूतमभेदमुपादानमालम्ब्य भेदः कल्प्यत इति यावत्।

एतदेवोपपादयति – तथा हि – **"आलोच्यते..... अतिसाहसम्"** इति श्लोकेन।अयं श्लोकार्थः – इन्द्रियार्थसन्निकर्षोत्तरम् आपातत उत्पन्नेन निर्विकल्पकज्ञानेन निर्विशेषं वस्तुमात्रं तावत् प्रथममालोच्यते। न तत्र कश्चिद् भेदो विशेषो भाति। एवम्, "अबुध्यमानोऽपि भेदस्तस्मिन् निर्विकल्पके चकास्ति प्रकाशते" इति कथनमतिसाहसमस्तीति। स्वयं श्लोकार्धांशं विवृणोति – **वस्तुमात्रविषयमित्यादिना**। पूर्वं निर्विकल्पके प्रत्यक्षे उत्पन्ने तत्पूर्विकाः सविकल्पकबुद्धय उत्पद्यन्ते, ता एव च विशेषान् भेदान् पश्चाद् अवगाहन्ते विषयीकुर्वन्तीति सर्वजनानुभवसिद्धमस्ति।

अत्र पूर्वपक्षी शङ्कते – **स्यादेतदिति**। अयं भावः – सर्वं प्रत्यक्षं विशिष्टरूपोपग्राहि, अर्थाद् भिन्नरूपोपग्राह्येव भवति।किन्तु स भेदो निर्विकल्पकप्रत्यक्षे भेदस्वरूपेण नोपलक्ष्यते, "अयं घटः" इत्याद्याकारकशब्दसंस्पर्शरहितत्वात्। अत्र वैधर्म्येण दृष्टान्तमाह – **यथा विकल्पबुद्धाविति**। अयमभिप्रायः – सर्वा हि

**न चोपलक्ष्यते प्रत्यक्षबुद्धौ विशेषः प्रकाशते चेति विप्रतिषिद्धम्, अतोऽतिसाहसमित्युच्यते।**

**यस्तु संवित्तावेव विप्रतिपद्यते सर्वानात्मव्यावृत्तस्पष्टप्रतिभासं प्रत्यक्षमिति वदन् , तस्योत्तरम् – "आहुर्विधातृप्रत्यक्षम्" इत्याद्युक्तमेवेति।**

---

सविकल्पकबुद्धिर्भिन्नत्वेन घटपटादिवस्तु विषयीकरोति, "घटोऽयं पटोऽयम्" इत्यादिशब्दसंस्पर्शसहितत्वात् । नैवं निर्विकल्पकबुद्धिः शब्दसंस्पर्शोपेता भवति, अतो भिन्नरूपोपग्राहिणी भवन्ती अपि न तथोपलक्ष्यत इति ।अस्यां शङ्कायामुत्तरमाह – **तदयुक्तमिति**। विप्रतिषेधात् परस्परविरुद्धत्वाद् इत्यर्थः। विप्रतिषेधमेवाह – विशेषो = भेदः प्रत्यक्षबुद्धौ नोपलक्ष्यते – प्रकाशते चेति विप्रतिषिद्धमेतत्। एवं हि परस्परव्याहतविषयप्रतिपादनमत्साहसमेवास्ति पूर्वपक्षिण इत्यभिप्रायः।

मतान्तरमाशङ्कते – **यस्त्विति**। संवित्तावेव विप्रतिपद्यत इति। अयं भावः– कस्यचिन्मतमभूत् – प्रत्यक्षबुद्धौ विशेषः प्रकाशते परं न चोपलक्ष्यत इति ।अस्मिन् मते विप्रतिषेधः प्रदर्शितः ।अन्यस्तु विप्रतिषेधदोषवशात् तथाविधां संवित्तिं (प्रत्यक्षबुद्धिमेव) न स्वीकरोति ।स ब्रूते – प्रत्यक्षे भेदः प्रकाशते नोपलक्ष्यते चेति नाहं ब्रवीमि येन विप्रतिषेधः स्यात्, अपि तु "सर्वानात्मव्यावृत्तस्पष्टप्रतिभासं प्रत्यक्षम्" इत्येव वदामि। अयं शब्दार्थः– घटस्य सर्वे येऽनात्मनः पटादयः, तेभ्यो व्यावृत्तं भिन्नं घटं स्पष्टमेव प्रतिभासयति प्रत्यक्षम्। अर्थाद् भेदः प्रकाशत एव न तु नोपलक्ष्यतेऽपि ।अतो नास्मिन् मते विप्रतिषेधदोष इति ।एवंविधवादिन उत्तरन्तु "आहुर्विधातृप्रत्यक्षम्" इत्यादिना पूर्वमेवोक्तमिति स्मारयति सिद्धान्ती – **तस्योत्तरमिति**। सर्वमपि प्रत्यक्षं विधायकमेव भवति न तु व्यावर्तकमिति श्लोकार्थः। अर्थाद् इदमेव पूर्वोक्तमुत्तरं स्मर्तव्यमित्याशयः।

किञ्च,

प्रतिष्ठितं च विज्ञानमर्थमात्रावलम्बनम्।
भेदेषु त्वप्रतिष्ठत्वमस्तीन्द्रियधियामपि ॥ २८ ॥

वस्तुद्वयानुपपत्तेरेकस्य च द्व्यात्मताऽयोगादवश्यकल्पनीयेऽन्यतरस्य मिथ्यात्वे युक्तं विशेषावभासस्य मिथ्यात्वम्। रजतादिविभ्रान्तिषु दर्शनात्, न तु वस्तुमात्रावभासस्य। न हि वस्तुमात्रव्यभिचारः क्वचिज्ज्ञाने दृष्टोऽस्ति, अन्ततस्तस्यैव वस्तुनः प्रतिभासनात्।

दृष्टतद्भावस्यैव तत्कल्पना लघ्वी, क्लृप्तत्वाद् योग्यतायाः, इतरत्र तु कल्प्यत्वात्।

---

सामान्यतोऽर्थमात्रावबोधकं सर्वमेव विज्ञानं प्रतिष्ठितम्, अर्थात् सामान्यार्थमात्रेऽव्यभिचारीत्यर्थः। अत एव "इदं रजतम्" इत्यादिभ्रान्तिज्ञानेष्वपि इदमंशे नास्ति व्यभिचारः। यतो हि पश्चाद् बाधदशायामपि "शुक्तिशकलमिदम्" इदमंशस्य यथापूर्वमेवावभासो भवत्यव्यभिचरितमिति सर्ववादिसम्मतम्। किन्तु भेदेषु रजतादिविशेषेषु त्विन्द्रियजन्यज्ञानानामप्यप्रतिष्ठितत्वं दृश्यत इति भेदबोधे विज्ञानस्य व्यभिचारित्वं स्पष्टमिति श्लोकार्थः।

स्वयं श्लोकाभिप्रायं स्फुटीकरोति मूलकारः– **वस्तुद्वयेति**। अयमर्थः– सामान्यविशेषौ भिन्ने द्वे वस्तुनी नोपपद्येते इति पूर्वमुक्तं तार्किकमतखण्डनप्रसङ्गे। एवम्, एकमेव वस्तु द्व्यात्मकमित्यनेकान्तवादोऽपि पूर्वं निरस्त एव। अतः सामान्यविशेषयोरर्थाद् अभेदभेदयोर्मध्येऽवश्यमेकतरस्य मिथ्यात्वं कल्पनीयम्, द्वयोः पारमार्थिकत्वासम्भवस्यानुपदमेव साधितत्वात्। अस्यां स्थितौ कस्य मिथ्यात्वं कल्पनीयमिति विचिकित्सायां विशेषावभासस्यैव (भेदावभासस्यैव) मिथ्यात्वं युक्तं कल्पयितुम्, रजतादिविशेषावभासेषु मिथ्यात्वस्य लोके दृष्टत्वात्। सामान्यात्मकवस्तुमात्रावभासस्य तु मिथ्यात्वकल्पनं न युक्तम्, इदमर्थसामान्यस्य भ्रान्तिज्ञानेष्वप्यव्यभिचारादित्यनुपदमेवोक्तम्। इदमेवाह– **न हि वस्तुमात्रव्यभिचारः क्वचिद्**

**स्यादेतत् – मानस्य एव बुद्धयः क्लृप्तयोग्यभावा मिथ्यात्वं प्रति, नेन्द्रियजन्मानः। इन्द्रियबुद्धिसमधिगम्याश्च भेदा इति। एतच्च वार्तम्, इन्द्रियदोषविशेषानुविधायित्वाद् भ्रान्तीनामिति।**

**अपि च यस्य मतम् – व्यावृत्तस्वलक्षणा भावाः, तेन तेऽन्योन्याभावस्वभावा व्याकर्तव्याः, तद्विशेषणा वा। नान्यथा व्यावृत्तशब्दोऽर्थवान् भवति, तस्येतरेतराभावनिमित्तत्वात्। तत्र–**

---

**ज्ञाने दृष्टोऽस्तीति।** अन्ततः = बाधकालेऽपि, तस्यैव = शुक्तिरूपस्यैव वस्तुनस्तत्र प्रतिभासमानत्वात्। निष्कर्षमाह – दृष्टतद्भावस्यैव = दृष्टस्तद्भावो मिथ्यात्वं यस्य तादृशस्यैव ज्ञानस्य रजतादिविशेषविषयकस्यैव तत्कल्पना = मिथ्यात्वकल्पना लघ्वी, तस्मिन् ज्ञाने मिथ्यात्वकल्पनायोग्यतायाः क्लृप्तत्वाद् दृष्टत्वात्। इतरत्र तु = सामान्यवस्तुविषयके ज्ञाने तु मिथ्यात्वस्याक्लृप्तत्वेन कल्प्यत्वाद् इति मूलार्थयोजना। अत एव **सामान्यवस्तुज्ञाने** मिथ्यात्वकल्पना गुर्वीत्यर्थः। तस्मादिहापि भेदज्ञानमेव मिथ्या नाभेदज्ञानमिति भावः।

शङ्कते – **स्यादेतदिति।** अयमर्थः – पीतशङ्खादिबुद्धयो नेन्द्रियजाः, इन्द्रियाणां पीतादिभिरसन्निकर्षात्, अपि तु मनोमात्रजन्यास्ता मनसो विषयनियमाभावात्, यथा स्वप्ने। एतादृशीनां मानसीनामेव बुद्धीनां मिथ्यात्वं प्रति योग्यता क्लृप्ता, नेन्द्रियजानाम्। भेदाश्च इन्द्रियजन्यबुद्धिविषयाः, अतो भेदा मिथ्या भवितुं नार्हन्तीति शङ्कितुराशयः।

शङ्कामिमां निराकरोति – **एतच्च वार्तमिति।** वार्तम् = वार्तामात्रं वाङ्मात्रं न तु यथार्थम्। अत्र हेतुमाह – **इन्द्रियेति।** सर्वा हि भ्रान्तय इन्द्रियदोषविशेषानुसारिण्य एव भवन्ति, न स्वतन्त्राः। अतो मानसीनां भ्रान्तीनामपि इन्द्रियजत्वेन इन्द्रियजन्यबुद्धिविषयाणां भेदानामपि मिथ्यात्वं शङ्खपीतत्वादीनामिव सिद्धमेवेति।

मतान्तरं दूषयितुमुपन्यस्यति – **अपि च यस्येति।** व्यावृत्तं स्वलक्षणं येषां भावानां ते व्यावृत्तस्वलक्षणा भावाः। अर्थात् सर्वेषां भाववस्तूनां स्वरूपं परस्परव्यावृत्तात्मकं भवति। अतः सर्वे भावा अन्योन्याभावात्मका निरूपणीयाः,

**अन्योन्याभावरूपत्वं सर्वेषां न प्रकल्पते।**
**तत्रोपाधौ प्रतीयन्तां तथा भिन्ना न रूपतः॥ २९ ॥**

**एकस्मिन्ननपेक्षे स्थिते तदभावरूपोऽन्यो व्यवतिष्ठते। सर्वे तु नान्योन्याभावरूपाः कल्पन्ते, परस्पराश्रयस्थितित्वात्।**

**अथ विशेषणमन्योन्याभावः, कामम्, अतदात्मानोऽपि विशेषणानुरागात् तथावगम्यन्ताम्, न तु स्वभावभेदः स्यात्। ननु नान्योन्याभावो नाम कश्चित्, यो भावानां तत्त्वं विशेषणं वा स्यात्, अर्थसिद्धिरेवैषा। न चेदन्योन्याभावो नाम कश्चित्, सिद्धस्तर्ह्यभेद इति।**

---

अथवा परस्परान्योन्याभावविशेषणा अर्थाद् अन्योन्याभाववन्तः परस्परं भिन्ना वा निरूपणीयाः। यद्येवं न स्यात् तदा "व्यावृत्तः" इति शब्द एव निरर्थक आपद्येत। यतो हि "व्यावृत्तः" इति शब्द इतरेतराभावबोधस्य निमित्तभूत इति सिद्धः शब्दमाहात्म्यादेव भेद इति। तत्रोत्तरमाह– **अन्योन्याभावरूपत्वमिति**। सर्वे भावा अन्योन्याभावरूपा न भवितुमर्हन्तीत्यर्थः।

एतदेव व्याचष्टे– **एकस्मिन्ननपेक्षे इति**। अयं भावः– सर्वेषाम् अन्योन्याभावरूपत्वं तदा स्यात्, यद्येकं भावरूपम् इतरनिरपेक्षं सिद्धं स्यात् ततोऽपरं तदभावरूपतया व्यवस्थितं स्यात्। यदा तु सर्वमेवाभावरूपं तदैकस्मिन् असति अपरं तदभावरूपं कथं स्यात्? एवमपरस्मिन्नपि असति एकमपि तदभावरूपं कथं सिद्धं स्यात्? अन्योन्याश्रयग्रस्तत्वात्। एतदेवोक्तम्– "सर्वे तु नान्योन्याभावरूपाः कल्पन्ते, परस्पराश्रयस्थितित्वात्" इति।

पक्षान्तरमुपन्यस्य दूषयति – **अथेत्यादि**। भाववस्तु नान्योन्याभावरूपं किन्तु अन्योन्याभावो विशेषणं भावानाम्। तेन भेदविशिष्टा भिन्ना भावा इति द्वितीयः पक्षः। तं दूषयति– **काममिति**। अयमर्थः– भवतु नामान्योन्याभावो विशेषणं भावानाम्; तथापि न तावता भावा भिन्नात्मानः सिध्यन्ति, अन्योन्याभावरूप-विशेषणोपरागाद्धेतोस्ते भिन्नाः प्रतीयन्ते, यथा जपाकुसुमोपरागात् स्फटिकं

**अपि च भेदत्वादेव विश्वस्य भेदोऽभेदोपादान इति शक्यतेऽनुमातुम्। दृष्टो हि मणिकृपाणदर्पणादिष्वभिन्नमुखोपादानस्तद्भेदः। न च तत्र भावान्तरोत्पत्तिः, विरुद्धपरिणामत्वात्।**

**स्यादेतत् – अभेदोऽपि शक्यो भेदोपादानोऽनुमातुम्, वनाभेदस्य तरुभेदोपादानत्वात्। न, भेदाभावप्रसङ्गात्। एवं हि न कश्चिदेकोऽभिन्नः परमाणुरपि, तदभेदोऽपि हि भेदोपादानःस्याद् वनादिवत्। तथा तदंशाभेदोऽपीत्यनवस्थायामेकस्याभावात् तत्समुच्चयरूपोऽभेदो न स्यात्।**

---

रक्तं प्रतीयते, तद्वत्। न तु भेदो भावानां स्वभावः। एतदेवोक्तम् – **अतदात्मानोऽपीत्यादिना**। अयमेवाशय उत्तरार्धेन श्लोकेनाभिव्यञ्जितो मूलकारेण। शङ्कते – ननु अन्योन्याभावो यदि भावानां स्वरूपं विशेषणं वा स्यात् तदा उक्तदोषः प्रसज्येत। अर्थसिद्धिरेवैषा। अर्थाद् अर्थातिरिक्तो नान्योन्याभावः कश्चिदस्ति। अत्रोत्तरमाह – **न चेदिति**। यदि भावातिरिक्तोऽन्योन्याभावो नास्ति चेत्, आयातोऽसि मार्गेण। भेदाभावे सिद्धोऽभेद इति।

भेदस्याभेदोपादानत्वेऽनुमानम् उपन्यस्यति सिद्धान्ती – **अपि चेति**। अनुमानप्रकारश्चेत्थम् – अयं विश्वभेदोऽभेदोपादानः, भेदत्वात्, मणिकृपाणदर्पणादिषु मुखभेदवदिति। एकमेव मुखमुपादाय नाना मुखानि अवभासन्त इति सिद्धं भेदस्याभेदोपादानत्वमित्यनुमानार्थः। न च मुखसन्निधिमासाद्य मुखान्तराण्येवोत्पद्यन्ते वस्तुभूतानीति वाच्यम्, यदि मुखसान्निध्याद् मुखान्तराण्युत्पद्यन्ते तदा मुखान्तराणि प्रति सन्निहितं मुखमपि कारणं मन्तव्यम्। कारणपरिमाणानुसार्येव कार्यं जायत इति नियमाद् मूलमुखसमानपरिमाणान्येव मुखान्तराणि जायेरन्, न तु तथा जायन्ते। तस्मान्न तत्र मुखान्तराण्युत्पद्यन्ते विरुद्धपरिमाणदर्शनात्।

सत्प्रतिपक्षमाशङ्कते – **स्यादिति**। अयं भावः – यथाऽनुमानबलेन भेदोऽभेदोपादानं इति साध्यते तथैवाभेदोऽपि भेदोपादान इति साधयितुं शक्यतेऽनुमानबलेनैव। यथा – अभेदो धर्मी भेदोपादानः, अभेदत्वात्, वनाभेदवत्।

**अथ क्वचिदवतिष्ठते स एकः, तदभेदो न भेदोपादान इति व्यभिचारः। तदिदमुच्यते –**

**दर्पणादौ मुखस्येव भेदोऽभेदावलम्बनः।**
**भेदाऽवलम्बनोऽभेदो न तथा तदभावतः॥ ३०॥**

**अपि च,**

**प्रत्येकमनुविद्धत्वादभेदेन मृषा मतः।**
**भेदो यथा तरङ्गाणां भेदाद् भेदः कलावतः॥ ३१॥**

---

अत्र वनमित्यभेदस्तरुभेदोपादानो दृष्ट इति दृष्टान्तार्थः। आशङ्कां निराकरोति – **नेति**। अयमर्थः – यदि यावानभेदः स सर्वोऽपि भेदोपादानोऽत एव स्वतो मिथ्या स्यात्, तदा परमाणुरप्येको न स्यात्, प्रत्युत परमाणुगताभेदोऽपि भेदोपादान एव स्यात्। एवं तदंशस्तदंशांशोऽपीत्यनवस्था स्यात्। एवं हि न किमप्येकं स्यात्। ततश्चैकैकपरमाणुसमुच्चयरूप एकैकतरुसमुच्चयरूपो वा वनाभेदोऽपि नास्त्येवेति कुतो ''वनम्'' इत्यभेदकल्पना स्यात्।

यदि तु क्वचिद् दूरमपि गत्वा पर्यवसान एकः स अवतिष्ठते परमाणुस्तदा तदभेदो न भेदोपादानः स्यात् तस्यान्तिमत्त्वेन निरुपादानत्वादिति तत्रैव तव भेदोपादानत्वानुमानं व्यभिचरितं स्यादिति समाधानग्रन्थाशयः। एतदेवोक्तं कारिकायाम् – **दर्पणादौ मुखस्येत्यादि**। मणिदर्पणकृपाणादिगतमुखवत् सर्वोऽपि भेदोऽभेदावलम्बनोऽस्ति। अभेदस्तु भेदावलम्बनो न भवितुमर्हति, तथा सति परमाणुरप्यभिन्नः कश्चिदेको न सिध्येत्। एकैकपरमाण्वभावे एकैकवृक्षाद्यभावे च तत्समुच्चयरूपो वनाभेदोऽपि न सिध्येत्। तदुक्तम् – **तथा तदभावत इति**।

भेदस्य मृषात्वेऽनुमानान्तरमुपन्यस्यति – **अपि चेति**। अयमत्र श्लोकार्थः – प्रत्येकं भेदो मिथ्या, अभेदेन अनुविद्धत्वात्, यथा तरङ्गाणां भेदात् कलावतश्चन्द्रस्य प्रतीयमानो भेदो मिथ्येति सर्वजनप्रसिद्धो दृष्टान्तः।

**अभेदानुविद्धत्वात् प्रत्येकं विश्वस्य भेदो मृषा; यथा जलतरङ्गेषु चन्द्रमसः। तत्र हि प्रत्येकं चन्द्रमा इत्यभेदान्वयः, तथा विश्वस्य भेदेऽपि प्रत्येकम् 'इदम्' 'तत्' 'अर्थः' 'वस्तु' इत्यभेदान्वयः।**

**तरुभेदस्तु यद्यपि न मृषा, वनमित्यभेदानुगमश्च न प्रत्येकम्। न हि प्रत्येकं तरुषु वनमिति बुद्धिः। अतो न तेन व्यभिचारः। एतदर्थं च प्रत्येकमित्युक्तम्।**

**अपि च—**

**एकस्यैवास्तु महिमा यन्नानेव प्रकाशते।**
**लाघवान् न तु भिन्नानां यच्चकास्त्यभिन्नवत्॥ ३२॥**

---

श्लोकार्थमेव विवृणोति ग्रन्थकारः— **अभेदानुविद्धत्वादिति**। चन्द्रदृष्टान्तं घटयति— **तत्र हीति**। तरङ्गेषु प्रतीयमानचन्द्रेषु प्रत्येकं चन्द्रमा इत्यभेदानुवेधो दृश्यते, तथैव विश्वस्य प्रतीयमानेषु सर्वभेदेषु "इदम्" इति वा, "तत्" इति वा, "अर्थः" इति वा, "वस्तु" इति वा अभेदानुवेधो दृष्टः सर्वजनैरिति विश्वभेदोऽपि चन्द्रभेदवदेव मिथ्येति मन्तव्यम्।

उक्तमृषात्वानुमाने व्यभिचारं वारयति— **तरुभेदस्त्विति**। अयमर्थः— तरुभेदे "वनम्" इत्यभेदानुगमरूपो हेतुरस्ति, किन्तु तत्र मिथ्यात्वरूपं साध्यं नास्तीति व्यभिचारः प्रदर्शयितुं न शक्यते। यतो हि समुदिततरुषु "वनम्" इत्यभेदानुवेधे सत्यपि प्रत्येकं तरौ "वनम्" इत्यभेदानुगमाभावेन तरुभेदेषु हेतोरप्यभावात्। तस्मात् तत्र मृषात्वसाध्याभावेऽपि न व्यभिचारः। एतदर्थमेव श्लोके "प्रत्येकम्" इति हेतुविशेषणमुपात्तमिति ज्ञेयम्।

किञ्च कल्पनालाघवादभेदोपादानाभेदकल्पना इत्येव युक्ततरमित्याह— **अपि चेति। एकस्यैवास्त्विति** श्लोकस्यायमर्थः — एकस्यैव = अभेदस्यैवायं महिमा = सामर्थ्यं यदेकोऽपि चन्द्राद्यर्थो नाना इव प्रतिभाति। कुतः ? लाघवाद् अत्यन्तलाघवादित्यर्थः। व्यवच्छेद्यमाह— **न तु भिन्नानामिति**। भिन्नानामेष महिमा

**इदं तावदयं भेदवादी प्रष्टव्यः — कथमयं व्यावृत्तस्वलक्षणेष्वभेदावभासोऽनुवृत्तव्यवहारश्च ? यदि सादृश्यात्, तदत्यन्तमनन्वितेष्वनुपपन्नम्। अथ व्यावृत्तेरग्रहात्, को हि गुञ्जाप्रवालादीनां रागव्यावृत्तिमवग्रहीतुं क्षमत इति। तदसत्, व्यावृत्तस्वभावस्य तदग्रहे ग्रहणमेव हि न स्यात्।**

---

नास्ति, यत्तेऽभिन्नवत् चकासति, अत्यन्तगौरवादिति ।अयं भावार्थः — भेदवादिना बहूनां बहूनि सामर्थ्यानि कल्पनीयानि अभिन्नवदवभासं प्रति । अभेदवादिना तु एकस्यैव एकमेव सामर्थ्यं कल्पनीयं भिन्नवदवभासं प्रति । तथा च सामर्थ्यकल्पनायामत्यन्तलाघवमनुरुध्य अभेदोपादानिकैव भेदकल्पनेति पक्षो युक्ततरः । एतदेव प्रश्नमुखेन विशदयति ग्रन्थकारः — **इदं तावदित्यादिना** । प्रथमं प्रश्नस्वरूपमाह — **कथमिति** । व्यावृत्तस्वलक्षणेषु अर्थात् परस्परभिन्नासु भावव्यक्तिषु "गौर्गौ"रित्यभेदावभासः कथं भवति ? न हि निर्निमित्तं किमपि ज्ञानं भवति । एवं "गामानय" इत्युक्ते यां गोव्यक्तिं पूर्वं कदाचिदानीतवान् पुनरपि पश्चात् "गामानय" इत्युक्ते न तामेव गोव्यक्तिमानयति न वा यां काञ्चिदश्वादिव्यक्तिमानयति, किन्तु ताभ्यां भिन्नं गोसामान्यमेवानयति । सोऽयमत्यन्तभेदे "गौर्गौ"रित्यनुवृत्तगोसामान्यावभासोऽनुवृत्तगोसामान्यानयनादिव्यवहारश्च भवन् भिन्नेषु स्वलक्षणेष्वनुवर्तमानमभेदं साधयति ।

यद्युच्येत भिन्नासु गोव्यक्तिषु अभेदावभासोऽनुवृत्तव्यवहारश्च सादृश्याद् भवतीति गौणावभेदावभासव्यवहारौ न परमार्थाविति, तन्न, अत्यन्तभिन्नासु अत एव परस्परमनन्वितासु सादृश्यस्याप्यनुपपन्नत्वात् । यतो हि सादृश्यमप्यवयवसामान्यान्वयेन भवति, न चात्यन्तभेदवादिनः सोऽवयवसामान्यान्वयाभावे सम्भवतीति ।

अथोच्येत — गोव्यक्तिषु याऽन्योन्यव्यावृत्तिरस्ति सा वर्तमानाऽपि नास्माभिर्गृह्यते ।गोव्यक्तिषु व्यावृत्तेरग्रहणे दृष्टान्तमाह — **को हि गुञ्जाप्रवालादीनामिति** । गुञ्जासु यो रागस्तस्मात् प्रवालरागो भिन्नस्तथापि तद्भेदो यथा न गृह्यते, तद्वद् गोव्यक्तिष्वपि भेदो न गृह्यत इत्यर्थः । अत एव कारणाद् व्यावृत्तस्वलक्षणेष्वपि

**अथ निश्चयप्रत्यक्षयोरात्मभेदादनिश्चयात्, तदसत्, उभयरूपव्यवहारदर्शनात्। तथा हि – कालाक्ष्यां गोसामान्यनिबन्धनश्च व्यवहारो गवान्तरव्यावृत्तिश्च दृश्यते। न च गवान्तरव्यावृत्तेरनिश्चये स युज्यते।**

---

गोषु गौर्गौरित्यभेदावभासो भवति, आनयनादिव्यवहारश्च भवति। अश्वादिषु तु वर्तमाना गोव्यावृत्तिः स्फुटमेव गृह्यतेऽतस्तत्र न गोत्वानुवृत्तिर्न वा गवानयनादेशेऽश्वाद्यानयनव्यवहार इति।

अयं द्वितीयकल्पोऽपि न सम्भवति। यतो हि यदि अन्योन्यव्यावृत्तिस्वभावा गोव्यक्तयो विद्यन्ते तदा व्यावृत्तेरग्रहे तत्स्वभावानां गोव्यक्तीनामपि ग्रहणं नोपपद्येत। तस्माद् व्यावृत्तेरग्रहणाद् अनुवृत्तावभासव्यवहारौ भवत इति रिक्तं भवतां वच इति सिद्धान्तिनोऽभिप्रायः। एतदेवोक्तम् – **तदसत्, व्यावृत्तस्वभावस्येति**।

अथाप्युच्येत – सविकल्पात्मकाद् निश्चयाद् निर्विकल्पकात्मकस्य प्रत्यक्षस्य स्वरूपभेदोऽस्ति। अतस्तयोर्मध्ये व्यावृत्तिविषयकस्य निर्विकल्पकस्य प्रत्यक्षस्य अनिश्चयात्मकत्वेन गोव्यक्तिषु विद्यमानायाः प्रत्यक्षाया अपि व्यावृत्तेरनिश्चयाद् गौर्गौरित्यभेदावभासोऽनुवृत्तव्यवहारश्चोपपत्स्येते इति पूर्वपक्षाशयः। मूले उक्तः "आत्मभेदः" अयमेव यत् सविकल्पकं निश्चयात्मकं भवति निर्विकल्पात्मकं गोव्यावृत्तिप्रत्यक्षन्तु अनिश्चयात्मकं भवतीति। मूले "अनिश्चयात्" इत्यनन्तरम् "गोव्यावृत्तेरग्रहणम्" इति शेषः।

पूर्वपक्षमिममपि निराकरोति – **तदसदिति**। तदयुक्तत्वे हेतुमाह – **उभयरूपेति**। निर्विकल्पके च व्यावृत्तेरग्रहणं न युज्यते, उभयरूपस्य व्यवहारस्य दर्शनादित्यर्थः। एतदेव विशदयति – **तथा हीति**। सविकल्पके एकस्यां कालाक्ष्यां गवि "गौः" इति सामान्यव्यवहारोऽपि दृश्यते स्वस्तिमत्या गवान्तराद् व्यावृत्तिश्च दृश्यते, तद्वद् निर्विकल्पकेऽपि स्यात्। यदि तु गवान्तरव्यावृत्तिनिश्चयो न स्यात् तदा कालाक्ष्यां स्वतिमतीव्यावृत्तिर्नानुभूयेतेत्यर्थः। अतो यदुक्तं भेदवादिना "व्यावृत्तेरग्रहणात् 'गौर्गौ' रित्यभेदावभासोऽनुवृत्तव्यवहारश्च" इति, तन्नोपपद्यत इति तात्पर्यम्।

**अथैकार्थक्रियाकारित्वादतत्क्रियाकारिव्यावृत्तेस्तुल्यत्वात् । तदप्यसाम्प्रतम्, अर्थक्रियाणामपि भेदादतत्क्रियाकारिव्यावृत्तेस्तुल्यत्वायोगात् । नैकसाध्याऽन्यस्यार्थक्रिया, येनातत्कारिव्यावृत्तिस्तुल्या स्यात् । वस्तुस्वभावश्च व्यावृत्तिः प्रतिवस्तुभेदान्न तुल्या । अथास्वभावः, तेषां कथं तुल्या ?**

**अथानादिवासनोपादानो न वस्तुगतविशेषापेक्षः, तदप्ययुक्तम्,**

---

गोव्यक्तिष्वभेदावभासमनुवृत्तव्यवहारं च प्रकारान्तरेणाशङ्कते भेदवादी – **अथैकार्थेति** । अयमर्थः – सर्वा गोव्यक्तय एकार्थकारिण्यो भवन्ति । तासु च तद्भिन्नाश्वादिव्यावृत्तिः समानैव वर्तते । तथा च तुल्यव्यावृत्त्याश्रयत्वेन सर्वगोव्यक्तिषु असन्नप्यभेदोऽवभासते अनुवृत्तव्यवहारश्च पूर्वप्रदर्शित उपपद्यत इति पूर्वपक्षाशयः ।

निराकरोति – **तदप्यसाम्प्रतमिति** । अयमभिप्रायः – गोव्यक्तीनां भेदात् तासु जायमाना अर्थक्रिया अपि भिन्ना भिन्ना एव भवन्ति ।अत एकार्थक्रियाया अभावेन नैकार्थक्रियाकारित्वप्रयुक्ता तुल्या अतत्क्रियाकार्यश्वादिव्यावृत्तिर्युज्यते, न वा तेन हेतुना गोव्यक्तिष्वभेदावभासोऽनुवृत्तव्यवहारश्चोपपादयितुं शक्यत इति । एतदेवोपपादयति – **नैकेति ।** यदि चेद् एकगोव्यक्तिसाध्या अन्यगोव्यक्तिगताऽर्थक्रिया स्यात् तदा एकार्थक्रियाकारित्वात् सर्वासु गोव्यक्तिषु तुल्याऽश्वादिव्यावृत्तिस्स्यात्, न त्वेवमस्ति ।

व्यावृत्तेस्तुल्यत्वाभावे युक्त्यन्तरमाह – **वस्तुस्वभावश्चेति ।** एवं व्यावृत्तिर्यदि वस्तुनः स्वभावस्तदा वस्तूनां भेदात् तत्स्वभावभूता व्यावृत्तिरपि भिन्नैव स्यादिति कथं तुल्यता व्यावृत्तेः ?

व्यावृत्तिर्यदि वस्तूनां न स्वभावः, तदा तादात्म्यादिसम्बन्धाभावाद् वस्तुभिः सर्वथाऽसम्बद्धतया तेषां वस्तूनां व्यावृत्तिस्तुल्या इति कथनं कथं सङ्गच्छेत ?

अभेदावभासमनुवृत्तव्यवहारं च प्रकारान्तरेणोपपादयितुं पुनराशङ्कते भेदवादी – **अथानादीति ।** अनादिवासना उपादानं कारणं यस्य, तादृशो ह्यभेदाव-

**नियमात्। कासुचिदेव व्यक्तिषु कश्चिदेवाभेदावभासः, स वासनामात्रोपादानत्वे न युज्यते। तस्मात् प्रकृत्यैव केचित् कस्यचिदभेदावमर्शस्य योग्याः केचिन्नेति स्वभावविपरीतानां भावानां सामर्थ्यातिशयाः कल्पयितव्याः। तथा सत्येवं गौरवात् कल्पनायाः, एकस्यैवास्तु माहात्म्यं यदेकोऽपि नानेव भासते, लघुत्वात् कल्पनायाः। न तु भिन्नानां ते सामर्थ्यातिशयाः, यदमी अभिन्ना इवावभासन्ते।**

---

भासो व्यवहारश्चेति स न स्वोपपत्तये सादृश्यादिरूपं वस्तुगतं विशेषमपेक्षते। अर्थाद् अनादिवासनानिमित्तकावेव भिन्नास्वपि गोव्यक्तिषु ''गौर्गौ''रिति अभेदावभासव्यवहारौ गौणौ न परमार्थाविति। निराकरोति — **तदप्ययुक्तमिति**। अयुक्तत्वे हेतुमाह — **नियमादिति**। अयं भावः — गोव्यक्तिषु वास्तविकाभेदरूपविशेषानाश्रयणे हि गोव्यक्तिष्वेव ''गौः'' इत्येकरूपावभासो भवति, नाश्वव्यक्तिष्वित्ययं नियमो न स्यात्। तस्मान्न वासनामात्रनिमित्तकोऽयमभेदावभासोऽपि तु गोव्यक्तीनामभेदरूपविशेषपूर्वक एवेति स्वीकरणीयम्। तथा च नाश्वव्यक्तिषु गोरूपावभासप्रसङ्गः। तदुक्तम् — **तस्मात् प्रकृत्यैवेत्यादि**। प्रकृत्यैवेत्यनेन वासनाव्यवच्छेदः। केचित् = गावः, अभेदावमर्शस्य ''गौर्गौ''रित्यभेदावभासस्य योग्याः, न केचिदश्वादयस्तद्योग्या इत्यर्थः। निष्कर्षमाह — **स्वभावविपरीतानामिति**। अयमभिप्रायः — यथा अभिन्नानां गोव्यक्तीनां ''गौर्गौ''रित्यभेदावभासस्य हेतवो गोव्यक्तिषु सामर्थ्यातिशयाः कल्प्यन्ते, तथैव गोस्वभावविपरीतभावानामश्वादीनां ''न गौः'' इति भेदावभासस्यापि हेतवः केचित् पृथक् सामर्थ्यातिशयाः कल्पयितव्याः। एवं सति कल्पनागौरवं भेदवादिनः स्यात्। यतो हि गोव्यक्तिषु अभेदावभासस्य हेतवः पृथक् सामर्थ्यातिशयाः कल्प्यन्ते, गोभिन्नाश्वादिव्यक्तिषु गोभेदावभासस्य हेतवश्च पृथक् सामर्थ्यातिशयाः कल्प्यन्त इति स्फुटं कल्पनागौरवं भेदवादिनः स्यात्।

स्वपक्षे लाघवमाह सिद्धान्ती — **एकस्यैवास्त्विति**। अर्थाद् एकस्यैवेदं माहात्म्यं स्वीकरणीयं यदेकोऽपि नानेव भासते, एवं स्वीकारे कल्पनायां लाघवं

**भेदव्यवहाराश्च यथावभासं भेदवादिनामिवाभेदव्यवहारा उपपद्यन्ते। तथा हि— आत्यन्तिकभेदवादिनां यथावभासमभेदव्यवहारः, न यथावस्तु। संसर्गवादिनामपि सामान्यस्यार्थान्तरत्वाद् यथावभासमेव भेदेष्वभेदव्यवहारः।**

---

भवति। भिन्नाः सन्तो भावा अभिन्ना इव भासन्त इति तु नैव स्वीकर्तुमुचितम्, भिन्नानां तावत् सामर्थ्यातिशयकल्पनायां महद्गौरवात्। यतो ह्येवं स्वीकारे भिन्नानि वस्तूनि स्वीकर्तव्यानि, तेषां वस्तूनां भिन्नाः सामर्थ्यातिशयाश्च कल्पयितव्या भवन्ति। ममाभेदवादिनस्तु एकस्य वस्तुन एव नानावभासनसामर्थ्यरूपम् (अविद्यालक्षणं) माहात्म्यमेकमेव कल्पनीयं भवतीति महल्लाघवमिति भावः।

तत्त्वाभेदपक्षेऽपि घटपटादिभेदव्यवहारमुपपादयति सिद्धान्ती— **भेदव्यवहाराश्चेति**। भेदवादिनां यथावभासमभेदव्यवहारा इव अभेदवादिनामपि यथावभासं भेदव्यवहारा अप्युपपत्स्यन्त इति मूलार्थः। एतदेव विवृणोति— **तथा हीति**। अयमभिप्रायः— सर्वोऽपि व्यवहारो यथावभासं भवति न यथावस्तु। अत एव रज्जौ सर्पावभासे पलायनं दृश्यते लोकानाम्। तद्वद् भेदोऽप्यवभासतेऽतोऽवभासानुरूपा भेदव्यवहारा उपपत्स्यन्ते। तत्र दृष्टान्तमाह— **आत्यन्तिकभेदवादिनामित्यादि**। अयं भावः— यथा हि अनुगतजातिमनङ्गीकुर्वतां बौद्धानां भेदवादिनां भिन्नासु गोव्यक्तिषु "गौर्गौ"रित्यभेदव्यवहारो भवति. स च व्यवहारो यथावभासं भवति न यथावस्तु। एवं सामान्यविशेषयोरत्यन्तभिन्नयोः समवायाख्यसंसर्गवादिनां वैशेषिकाणां "गोत्ववतीं गोव्यक्तिमानय" इति यथावस्तु भेदघटितो न भवति व्यवहारः, किन्तु "गामानय" इत्यभेदावभासानुसार्येव विशेषेषु सामान्यव्यवहारो भवति। एवं जातिव्यक्त्योरनर्थान्तरत्वं ब्रुवतां भाट्टानामपि सर्वं वस्तु सामान्यविशेषात्मकं द्व्यात्मकं भवति। तादृशस्य च वस्तुनः शबलस्य क्वचिदन्वयाभावेऽपि गोत्वस्य गोव्यक्त्यन्तरेऽन्वीयमानत्वेऽपि गोव्यक्तेरन्यत्र गोव्यक्तावननुगतत्वादित्यर्थः। योऽयं "गौर्गौः" इत्यनुगतरूपो

**येऽप्यनर्थान्तरवादिनः, तेषामपि शबलत्वाद् वस्तुनस्तस्य चानन्वयाद् यथावभासमेवोभयव्यवहारः, न वस्त्वनुपातीति दर्शितमिति।**

**यथानुवृत्तव्यवहारसिद्धिं यथावभासं कथयन्ति बाह्याः।**
**तथैव भेदव्यवहारयोगं वदन्ति वेदान्तविवेकभाजः॥ ३३ ॥**

**॥ इति श्रीमण्डनमिश्रविरचितायां ब्रह्मसिद्धौ तर्ककाण्डः॥**

---

व्यवहारो भवति, स यथावभासमेव भवति न यथावस्तु शबलरूपो व्यवहारो भवति, तद्वदित्यर्थः। एतत् प्रदर्शितं पूर्वम्।

अनुपदमुक्तं विवरणं श्लोकेन संक्षिप्य दर्शयति – **यथेति**। यथा हि बाह्या भेदवादिनो यथावभासं ''गौर्गौ''रिति शब्दप्रयोगरूपां गवानयनादिरूपां वाऽनुगतव्यवहारसिद्धिं कथयन्ति, तथैवाभेदवादिनो वेदान्तविज्ञानेन प्राप्तविवेका वेदान्तविज्ञानसुनिश्चितार्था इति यावद् अपि यथावभासमेव भेदव्यवहारोपपादनं कुर्वन्तीति श्लोकार्थ इति निष्कर्षः।

**॥ इति ब्रह्मसिद्धौ आचार्यश्रीकेदारनाथत्रिपाठिकृते**
**विवेचने तर्ककाण्डः॥**

# अथ नियोगकाण्डः

**एवं प्रत्यक्षादिविरोधात् कर्मविधिविरोधाच्च श्रुतार्थपरिग्रहे ये मन्यन्ते वेदान्तानामुपचरितार्थत्वं तत्प्रतिबोधनाय विहितः प्रयत्नः। सम्प्रति तु – कार्य एवार्थे वेदस्य प्रामाण्यम्, न भूतरूपे; एवं ह्युक्तम् – "चोदनालक्षणोऽर्थो धर्मः" (मी० सू० १।१।२) चोदनाप्रमाणको वेदार्थ इति यावत्। चोदना च प्रवर्तकं वचनम्। तस्मात् कार्यार्थे वेदः प्रमाणम्।**

---

एवं पूर्वापरकाण्डयोस्तर्कनियोगयोः सङ्गत्यवगमाय तयोः संक्षेपेणार्थं दर्शयति – **एवमित्यादिना तत्प्रतिबोधनाय प्रयत्यत** इत्युत्तरेण ग्रन्थेन।

अयं भावः – वेदान्तानामुपनिषदां नाद्वैतबोधने मुख्यं तात्पर्यम्, तथा सति श्रुतार्थस्याद्वैतस्य परिग्रहे सति भेदबोधकप्रत्यक्षादिप्रमाणविरोधः कर्मविधिविरोधश्च स्याताम्। न हि भेदग्रहाधीनाः कर्मविधयोऽद्वैतस्य श्रुतार्थस्य बोधने उपपद्यन्ते। प्रत्यक्षादि प्रमाणविरोधस्तु स्पष्टः। तस्माद् गौणार्था वेदान्ता न मुख्यार्था इति ये मन्यन्ते, तेषां मतनिरासाय विहितः प्रयासस्तर्ककाण्डे। सम्प्रति तु नियोगकाण्डेऽस्मिन् "कार्यरूप एवार्थो वेदस्य मुख्योऽर्थः, न सिद्धार्थ इति" इति येषां मतम्, तान् प्रतिबोधयितुं प्रयासः क्रियत इत्युपक्रमते ग्रन्थकारः – **सम्प्रति त्वित्यादिना।** तत्रायं पूर्वपक्षः – **कार्य एवेति**। कार्य एवार्थे चेदस्य प्रामाण्यं न भूतरू। सिद्धार्थे। तत्र जैमिनीयं सूत्रमुदाहरति – "चोदनालक्षणोऽर्थो धर्मः" इति।चोदनाप्रमाणगम्यो वेदार्थो धर्म इति सूत्रार्थः।

ननु चोदनाशब्देन कृत्स्न एव वेदो वेदनीयः, तथा च अद्वैतब्रह्मरूपसिद्धार्थोऽपि चोदनाप्रमाणगम्य एवेति सिद्धार्थेऽपि ब्रह्मणि वेदस्य प्रमाणत्वे न काचिद् व्याहतिरिति शङ्कायामाह – **चोदना चेति**। अयमभिप्रायः – उक्तसूत्रे चोदनाशब्दो न कृत्स्नवेदपरः किन्तु प्रवर्तकवचनपरः। प्रवृत्तिश्च कार्यार्थ एव न

**वेदान्तानामपि तु प्रतिपत्तिकर्तव्यताप्रामाण्यभाजां तन्मुखेन तदनुगतभूतात्मतत्त्वविषयबोधकत्वम्। अतस्तेऽपि कार्यनिष्ठतां नातिवर्तन्ते। तथा च कथं तर्हि मन्त्रार्थवादाः सोपनिषत्का इत्याशङ्क्य "चोदना हि भूतं भवन्तम्" (शाबरभा० १।१।२) इत्याद्युक्तम्। एतदुक्तं भवति, कार्यमर्थमवगमयन्ती चोदनैव भूतादिकमप्यर्थमवगमयतीति — ये मन्यन्ते, तत्प्रतिबोधनाय प्रयत्यते।**

---

सिद्धार्थे, तत्र प्रवृत्तिवैयर्थ्यात्। तस्मात् कार्यार्थ एव वेदस्य प्रामाण्यम्, नाद्वैतब्रह्मरूपे सिद्धार्थ इति भावः।

ननु कर्मकाण्डीयश्रुतीनां भवतु नाम कार्येऽर्थे प्रामाण्यम्, तासां क्रियार्थत्वात्, वेदान्तानान्तु सिद्धार्थबोधकानां क्व कार्यपरत्वं येन तेषां तत्र प्रामाण्यं स्यादिति शङ्कायामाह — **वेदान्तानामपीति**। अयं भावः — वेदान्तवाक्यैर्विधीयमानमन्यत् कार्यं कामं मा भूत् तथापि तेषामपि सिद्धब्रह्मात्मप्रतिपत्तिरेव कार्यमस्ति, यत्र तेषां प्रामाण्यम्। ब्रह्मप्रतिपत्तिरेव क्रिया तत्रेत्यतस्तेषामपि क्रियापरतया तां प्रधानीकृत्यैव तदनुगतभूतात्मबोधकत्वं न स्वातन्त्र्येण सिद्धार्थमात्रप्रतिपादकत्वम्। अतो वेदान्तानामपि कर्मकाण्डीयवाक्यैस्तुल्यं कार्यपरत्वम्, न कश्चिद् विशेष इति। एतदेवोक्तं मूले — **अतस्तेऽपि कार्यनिष्ठतां नातिवर्तन्त इति**। अयमेवार्थो भाष्योक्ताभ्यां शङ्कासमाधानाभ्यां दृढीक्रियत इत्याह — **तथा चेति**। तत्रत्यशङ्काग्रन्थार्थः — यदि कार्येऽर्थे वेदः प्रमाणम्, कथं तर्हि मन्त्रार्थवादा उपनिषदश्च सिद्धमर्थं प्रतिपादयन्ति ? इति। समाधानग्रन्थश्च — **चोदना हि भूतं भवन्तमित्यादि**। "चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवजातीयकमप्यर्थं शक्नोत्यवगमयितुम्" इति शाबरभाष्यम्। समाधानग्रन्थाशयं स्वयमाह मूलकारः — **एतदुक्तं भवतीति**। अयमाशयः — न हि मन्त्रादीनां स्वातन्त्र्येणार्थबोधकत्वं येन ते सिद्धार्थपराः स्वीक्रियेरन् किन्तु विध्येकवाक्यतापन्नास्ते। अत एवैकवाक्यतापन्नत्वाद् एकैव चोदना कार्यमवगमयन्ती तत्परतया (कार्यान्वयिरूपेण) भूतं भवन्तं चार्थं स्वैकदेशेन स्वांशेन

**तिस्रश्च प्रतिपत्तयो ब्रह्मणि – प्रथमा तावच्छब्दात्, अन्या शब्दात् प्रतिपद्य तत्सन्तानवती ध्यानभावनोपासनाशब्दवाच्या, अन्या ततो लब्धनिष्पत्तिर्विगलितनिखिलविकल्पा साक्षात्करणरूपा। तत्र प्रथमामधिकृत्य उच्यते –**

**शब्दाद् यदात्मविज्ञानं तन्न तावद् विधीयते।**
**भवत्यधीतवेदस्य तद्धि कर्मावबोधवत्॥ १॥**

---

(कार्यान्वयिना रूपेणेत्यर्थः) ब्रूते, न भूतादिमात्रपर्यवसितरूपेण। अतः स्वतो **भूतार्थानां** मानान्तरगोचरत्वेऽपि कार्यान्वयिरूपेण मानान्तरागोचरतया तेष्वनपेक्षं चोदनायाःप्रामाण्यं सिध्यतीति भावः। अतः कापि श्रुतिर्न केवलं भूतार्थमाह, विध्येकवाक्यत्वात्। तेन उपनिषदोऽपि प्रतिपत्तिरूपक्रियान्वयिभूतार्थपरा एव न भूतार्थमात्रपरा इति येषां मान्यता तान् प्रत्येत काण्डारम्भ इति भावः।

प्रतिज्ञातं प्रतिवादिप्रतिबोधनप्रयत्नमेव प्रदर्शयति – **तिस्र इत्यादिना।** ब्रह्मविषये तिस्रः प्रतिपत्तयः = ज्ञानानि सन्ति। तत्र प्रथमा प्रतिपत्तिस्तु शब्दात् = शब्दसामर्थ्यात् = शब्दश्रवणमात्राद् भवति। इयं हि शाब्दी प्रतिपत्तिर्ब्रह्मविषयकशाब्दज्ञानरूपा। द्वितीया शब्दाद् यथाश्रुतं प्रतीत्य तत्प्रतीतिसन्तानवती अर्थाद् ब्रह्मविषयकप्रतीत्येकतानतारूपा ध्यान-भावना-उपासनाशब्दवाच्याऽस्ति। ध्यानादन्या तृतीया प्रतिपत्तिरस्ति यस्या निष्पत्तिर्ध्यानसन्तत्या आदरनैरन्तर्यदीर्घकालसेवनलब्धपरिपाकया लभ्यते, यस्यां च सर्वे विशेषणविशेष्यभावावभासोपेतविषयप्रत्ययरूपा विकल्पा विगलिता भवन्ति, तथाविधा प्रतिपत्तिः ब्रह्मसाक्षात्काररूपाऽस्ति। आसु त्रिविधासु प्रतिपत्तिषु मध्ये प्रथमां प्रतिपत्तिमधिकृत्योच्यते श्लोक आचार्येण – **शब्दाद् यदात्मविज्ञानमित्यादिः।**

अयं श्लोकार्थः – यद् ब्रह्मात्मज्ञानं शब्दात् = शब्दशक्तिबलाद् भवति, तज्ज्ञानं न विधीयते = विधिविषयो न भवतीत्यर्थः। हि = यतो ह्यधीतवेदस्य = साङ्गवेदाध्ययनं कृतवतः पुंसस्तदात्मज्ञानं विधिं विनैव कर्मावबोधवदेव शब्दशक्तिमाहात्म्यादेव भवतीति।

**ब्रह्मणो हि प्रमाणान्तरानधिगमनविरूपत्वाच्छब्दाधिगम्यस्वभावविषयं ज्ञानं विधेयम्। [1]तत्र, यच्छब्दादेव ज्ञानं तदविधेयम्, विधिमन्तरेण भावात् कर्मावबोधवत्। यथैव "स्वर्गकामो यजेत" (तैत्ति० सं० २/५/५) इति श्रुतिवाक्यस्य वाक्यार्थावबोधस्तद्वाक्यप्रामाण्यादेव भवति, न विध्यन्तरमपेक्षते, तथाऽऽत्मस्वरूपाभिधायिवाक्यप्रामाण्यादात्मावबोधो विध्यनपेक्षः सञ्जायते, सति प्रमाणे तत्सामर्थ्येनैव प्रमेयबोधोत्पत्तेः। न खलु सोपकरणे समग्रे प्रमाणे सतीच्छापि पुरुषस्यापेक्ष्यते ज्ञानं प्रति, अनिष्टानामप्यवबोधात्, प्रागेव विधिः।**

---

यच्छब्दादेव ज्ञानं तदविधेयम्, विधिं विनाऽपि तस्य भावात् कर्मावबोधवदित्यभिप्रायेण श्लोकार्थं स्वयं स्फुटीकरोति – **ब्रह्मणो हीति**। शब्दातिरिक्तेन प्रमाणान्तरेण अनधिगमनीयं रूपं यस्य तादृशं न ब्रह्म, किन्तु तद्विरूपम्=तद्विसदृशमिति यावत्। एतावता ब्रह्मणः प्रमाणान्तराधिगम्यस्वरूपत्वं प्रदर्शितं भवति। एवं सति प्रमाणान्तरेणाधिगमं परित्यज्य शब्दादेव ब्रह्म ज्ञातव्यं न प्रमाणान्तरादिति शब्दाद् ब्रह्मविषयं ज्ञानं विधेयं भवेदिति।

मतमिदं निरस्यति – तन्नेति। न त्वेवमस्ति, ब्रह्मणः प्रमाणान्तरेण अनधिगम्यस्वरूपत्वात्। तस्माद् यतः शब्दादेव ब्रह्मज्ञानमतो न तद्विधेयम्, विधिं विनाऽपि शब्दं श्रुत्वा शब्दसामर्थ्यादेव ब्रह्मज्ञानोत्पत्तिसम्भवात् कर्मावबोधवदिति भावः। शब्दादधिगम्यः स्वभावो यस्य ब्रह्मणस्तद्विषयं ज्ञानं तदैव विधेयं स्यात्, यदि तद् ब्रह्म प्रमाणान्तराधिगम्यस्वभावं स्यात्, न त्वेवमस्ति, अतो न तज्ज्ञानं विधेयमिति तात्पर्यार्थः। अतः सुष्ठूक्तम् – "शब्दाद् यदात्मविज्ञानं तन्न तावद् विधीयते" इति।

कर्मावबोधवदिति दृष्टान्तार्थं विशदयति – **यथैवेति**। यथा "स्वर्गकामो यजेत" इति वाक्यं येन पुंसा श्रुतम्, तस्य पुंसस्तद्वाक्यार्थावबोधस्तद्वाक्यरूपात् प्रमाणादेव जायते। न हि सोऽवबोधः स्वोत्पत्त्यर्थं विध्यन्तरमपेक्षते। एको विधिः "स्वर्गकामो यजेत" इति, अन्यश्च विधिः "वाक्यार्थबोधं कुर्यादिति", विध्यन्तरं नापेक्ष्यते यागविधिवाक्यार्थबोधजनन इति भावः! तथैवात्मस्वरूपाभिधायिनः

---

१. मुद्रितग्रन्थे 'तत्र' इति पाठो दृश्यते।

**तामेव विधेरनपेक्षतां कर्मावबोधे दर्शयति –**

**स्वर्गकामो यजेतेति बोधेऽस्मिन्न व्यपेक्ष्यते।**
**विधिरन्योऽनवस्थानान्नायं कर्मव्यवस्थितेः॥ २॥**

**न कर्मविधिवाक्यार्थज्ञानप्रवृत्तौ विधिरपेक्ष्यतेऽन्यः, न तद्गत एव वा। अन्यस्मिन्ननवस्थादोषात्, तदर्थज्ञानेऽपि विध्यन्तरस्यापेक्षणीयत्वात्। तद्गतस्य च कर्मविषयत्वेन तद्बोधं विधातुमसामर्थ्यात्।**

---

"सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्यरूपात् प्रमाणादेव आत्मस्वरूपावबोधो जायते, सोऽवबोधः स्वोत्पत्त्यर्थं न कमपि विधिमपेक्षत इति सर्वथा विध्यनपेक्ष-स्तद्वाक्यार्थावबोधः स्वोत्पत्तय इति मन्तव्यम्। सति शब्दादिप्रमाणे तत्प्रमाण-सामर्थ्येनैव प्रमेयबोध उपपद्यत इति न तदर्थं विध्यपेक्षेति दार्ष्टान्तिकार्थः।

इममेव प्रस्तुतार्थं द्रढयति – "न खलु सोपकरणे" इत्यादिना। साङ्गे प्रमाणे पूर्णे सति प्रमेयबोधोत्पत्तये बोधेच्छाऽपि न प्रतीक्ष्यते, का वार्ता विध्यपेक्षायाः। पुंस इच्छा भवतु मा वा भवतु, विधिरप्यस्तु मा वाऽस्तु पदपदार्थसङ्गतिज्ञस्य सतो वाक्ये श्रुते सति तदर्थावबोधोऽनिच्छतोऽपि अनियुक्तस्यापि पुंस उत्पत्स्यत एवेति प्रघट्टकार्थः।

पूर्वकारिकायां कर्मावबोधवदिति दृष्टान्त उक्तः, तत्र कर्मावबोधे विधेरनपेक्षां दर्शयति – **स्वर्गकामो यजेतेति** कारिकान्तरेण। अस्मिन् "स्वर्गकामो यजेतेति" वाक्यजन्यबोधे कश्चिदन्यो विधिर्नापेक्ष्यते, तथा सति अन्यविधि-वाक्यार्थस्यावबोधेऽपि पुनर्विध्यन्तरापेक्षायां पुनस्तदर्थस्याप्यवबोधे विध्यन्तरापेक्षेति अनवस्थादोषप्रसङ्गः। यद्युच्येत – "यजेत" इत्ययमेव विधिः स्वर्गकामो यजेतेति वाक्यार्थावबोधाय अपेक्षणीय इति चेत्, तन्न, अथदितद्वाक्यगतो विधिरपि नापेक्ष्यते, अस्य विधेः कर्मण्येव व्यवस्थितत्वेन यागज्ञानं प्रति हेतुः, न तु कर्मज्ञानं विधत्त इति श्लोकार्थः। एतद्वाक्यगतेन "यजेत" इति विधिना कर्म विधीयते न तु कर्मज्ञानं विधीयत इति तात्पर्यार्थः।

**ननु यथैषां ग्रहणे विध्यन्तरमपेक्ष्यते "स्वाध्यायोऽध्येतव्यः" (तैत्ति० आर० २।१५) इति, न चानवस्था, तद्वत् तदर्थबोधेऽपि स्यात्। अस्ति च विधिः "वेदः कृत्स्नोऽधिगन्तव्यः" इति (मनु० २।१६५)।**

**विषम उपन्यासः — अप्रवृत्तोऽपि हि स्वाध्यायाध्ययनविधिवाक्याध्ययने पुरुषान्तराधीतात् ततस्तस्य चान्येषां च वाक्यानामध्ययने प्रवर्तते,**

---

अयमेवार्थः "न कर्मविधिवाक्यार्थज्ञानप्रवृत्तौ" इत्यारभ्य "तद्बोधं विधातुमसामर्थ्यात्" इत्यन्तेन ग्रन्थेन व्याख्यात इति सुगममेतत्।

पूर्वपक्षी शङ्कते — **नन्विति**। एषां "स्वर्गकामो यजेत" इत्यादिविधिवाक्यानां ग्रहणे = अध्ययने यथा "स्वाध्यायोऽध्येतव्यः" इति विध्यपेक्षा भवति। यदि "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिर्न स्यात् तदा "स्वर्गकामो यजेत" इत्यादिकर्मविधिवाक्यानामध्ययने प्रवृत्तिरेव न स्यात्। अतो यथा कर्मविधिवाक्याध्ययने अध्ययनविध्यपेक्षा, न चानवस्था, स्वाध्यायाध्ययनविध्यध्ययने विध्यन्तरस्यानपेक्षणात्। यतो अध्ययनविधिर्हि स्वाध्यायमात्राध्ययनं विदधत् स्ववाक्याध्ययनमपि विधत्ते एव, स्वस्यापि स्वाध्यायान्तर्गतत्वादिति तात्पर्यम्। तथैव कर्मावबोधोऽपि स्वस्मिन् प्रवृत्तिजननाय विध्यन्तरमपेक्षिष्यते न चानवस्था भविष्यतीति। नन्वध्ययने प्रवृत्तौ "स्वाध्यायोऽध्येतव्यः" इत्यस्ति विध्यन्तरम्, कर्मावबोधप्रवृत्तौ तु किमस्ति विध्यन्तरं यदपेक्षा स्यादिति चेन्न, "वेदः कृत्स्नोऽधिगन्तव्यः" इति विधेरेव जागरूकत्वात्।

अस्यां शङ्कायां समाधानमाह — **विषम उपन्यास इति**। उपन्यस्यत इत्युपन्यासः, दृष्टान्त इत्यर्थः। वैषम्यमुद्घाटयति — **अप्रवृत्तोऽपीति**। यदि स्वाध्यायाध्ययनविधिवाक्यं स्वयमधीतं सद् वाक्यान्तराणामध्ययने प्रवर्तयति,

**शाखान्तरीयाङ्गोपसंहार इव श्रवणमात्रात्। न खलु स्वाधीतमेव वाक्यं प्रवर्तयति। यथैकस्तथा पुरुषान्तराण्यपि, अनादित्वाद् वेदवत् तदध्ययन-स्यापि।**

---

ततोऽध्ययनविधिवाक्यांध्ययनमपि अध्ययनविध्यन्तराधीनमित्यनवस्था स्यात्। यतस्तु स्वाध्यायाध्ययनविधिवाक्याध्ययने स्वयमप्रवर्तितोऽपि हि पुमान् पुरुषान्तराधीतात् (ततः) अध्ययनविधिवाक्यात् (तद्वाक्यं श्रुत्वेत्यर्थः, ल्यब्लोपे पञ्चमी) तस्य स्वाध्यायाध्ययनविधिवाक्यस्य अन्येषां च वाक्यानामध्ययने प्रवर्तते, तेन तत्रानवस्था नैव भवतीति युज्यते।

नन्वन्येनाधीतात् "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिवाक्याद् अन्यस्य पुरुषस्य कथं प्रवृत्तिस्तस्य वाक्यस्य अन्येषां च वाक्यानामध्ययने। अधीतं हि वाक्यं प्रवर्तयति, नानधीतम्, स्वयमनधीतस्य प्रवर्तकत्वायोगादित्याशङ्कायां समाधानमाह– **शाखान्तरेति**।

अयं भावः – स्वाध्यायविधेरध्ययनं प्रवृत्तौ न तन्त्रम्, अपि तु श्रवणम्। अतः स्वयं स्वाध्यायाध्ययनविधिवाक्यम् "स्वाध्यायोऽध्येतव्यः" इत्येतदन-धीत्यापि अन्यदीयं तद्विधिवाक्याध्ययनं श्रुत्वाऽपि अन्यपुरुष इव सोऽपि सामान्यतो वेदाध्ययने प्रवर्तत एव। यथा काठककाण्वमाध्यन्दिनतैत्तिरीयादि-शाखासु आम्नाते दर्शपूर्णमासाख्यकर्मणि स्वयमनधीतादपि शाखान्तराधीतादङ्गात् तदध्यायिभ्यः श्रुतादेव तदङ्गानामुपसंहारः स्वयमनुष्ठीयमानप्रयोगेषु क्रियते शाखान्तरीयैः। न ह्यल्पायुषा मनुष्येण सर्वशाखाध्ययनपूर्वकं कर्मानुष्ठानं कर्त्तुं शक्यम्। तद्वदिहापि पुरुषान्तरेणाधीयमानम् अध्ययनविधिवाक्यं श्रुत्वैव अनधीततद्विधिवाक्योऽपि पुरुषः सामान्यतो वेदाध्ययने प्रवृत्तो भविष्यतीति नानवस्थादोषावसर इति बोध्यम्। एतदुक्तम्– **न खलु स्वाधीतमेव वाक्यं प्रवर्तयतीति**।

ननु यद्येकस्य स्वाधीतत्वं नापेक्षितं प्रवृत्तौ, तदा पुरुषान्तराणामपि कथमध्ययनविधिवाक्याध्ययनमित्याशङ्कायामाह– **यथैक इति**। अर्थाद् यथैकः

**अनवबुद्धार्थस्त्ववबोधविधिर्नावबोधे प्रवर्तयति, तदर्थबोधश्चेद् विध्यपेक्षः। न तत्र स एव प्रवर्तयति, अनवबुद्धार्थत्वादितरेतराश्रयं स्यात्— तदर्थबोधात् प्रवृत्तिः, प्रवृत्तस्य च तदर्थबोध इति। तस्माद् विध्यन्तरमपेक्षितव्यमित्यनवस्था।**

**न च "वेदः कृत्स्नोऽधिगन्तव्यः" (मनु० २-१६५) इत्यपूर्वार्थविधिः, "दृष्टो हि तस्यार्थः कर्मावबोधनम्" (शाबरभा० १।१।१) इति**

---

पुरुषोऽध्ययनविधिवाक्याध्ययनं प्रवृत्तौ नापेक्षते, तथा पुरुषान्तराण्यपि नापेक्षन्त एव तदध्ययनमितीष्टापत्त्या परिहरणीयम्। अपेक्षाभावे हेतुमाह— **अनादित्वादिति**। यथा वेदोऽनादिस्तथा तदध्ययनमप्यनादिपरम्परासिद्धमित्यर्थः।

अनवबुद्धेत्यादेरयं भावः— स्वर्गकामादिवाक्याध्ययने नानवस्थादोष इत्युक्तम्। तदर्थबोधे तु "वेदः कृत्स्नोऽधिगन्तव्यः" इति विध्यन्तरापेक्षा भविष्यति। यत एतदपि विधिवाक्यम् अनवगतार्थं सद् न स्वर्गकामादिवाक्यार्थावबोधे प्रवर्तयितुमलम्, अतो "वेदः कृत्स्नोऽधिगन्तव्यः" इति वेदार्थावबोधविधायक-वाक्यस्यार्थावबोधोऽपि नूनं विध्यपेक्षः। अतोऽनवस्थादोषोऽपरिहार्यः।

न च "वेदः कृत्स्नोऽधिगन्तव्यः" इत्ययमेव विधिर्वेदान्तरार्थबोध इव स्वार्थबोधेऽपि प्रवर्तयति, तत्र कृत्स्नशब्दोक्तेरिति वाच्यम्, स्वयमनवबुद्धार्थस्य प्रवर्तकत्वायोगात्। तदर्थबोधात् प्रवृत्तिः, प्रवृत्तस्य च तदर्थबोध इत्येवमितरेतराश्रयत्वं स्यात्। तद्वारणाय "वेदः कृत्स्नोऽधिगन्तव्यः" इत्यस्यार्थबोधे विध्यन्तरमपेक्ष्यम्। एवं तस्य तस्यार्थबोधेऽपि विध्यन्तरस्यापेक्षाऽऽपतेदित्यनवस्था स्यात्। अतः सुष्ठूक्तम्— **विषम उपन्यास इति**।

यच्चोक्तम्— कर्मावबोधप्रवृत्तावस्ति विधिः "वेदः कृत्स्नोऽधिगन्तव्यः" इति, तदपि न युक्तमित्याह— **न चेति**। अयमर्थः— अपूर्वार्थप्रापको हि विधिर्भवति, न चायमपूर्वार्थप्रापकः, "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधेः 'दृष्टे सत्यदृष्टकल्पनाऽयोगात्' इति न्यायाद् दृष्टार्थत्वेन कर्मावबोधनमेव तस्य दृष्टं प्रयोजनमस्ति। तथा चोक्तन्यायप्राप्तस्य कर्मावबोधरूप-दृष्टार्थस्यानुवादमात्रं करोति "वेदः कृत्स्नोऽधिगन्तव्यः" इति वचनम्, न तु कमप्यपूर्वार्थं विधत्ते। अतस्तस्य विधित्वकथनमपि न युज्यते। अर्थाद्

**न्यायप्राप्तोऽर्थः प्रदर्श्यते। अथाप्येष विधिः — स्वाध्यायाध्ययनविधि-नार्थाक्षिप्तमर्थज्ञानम् उच्येत, तथापि ब्रह्मस्वरूपाभिधायिवेदवाक्यप्रभवे बोधे न पृथग् विधिरपेक्षितव्यः, कर्मविधिवाक्यवत्।**

---

अनुवाद एवेदं वचनम्, न विधिः, अर्थज्ञानं विहाय साङ्गवेदाध्ययनानुपपत्त्या स्वाध्यायविधिनैवार्थज्ञानमपि प्राप्तम्। अतः प्राप्तमेवानेन "वेदः कृत्स्नोऽधिगन्तव्यः" इति वाक्येनानूद्यते न विधीयत इति तात्पर्यम्।

अर्थावबोधवाक्यस्य विधित्वमभ्युपगम्यापि आत्मनः प्रतिपत्तिविध्य-विषयत्वमुपपादयति — **अथापीत्यादिना कर्मविधिवाक्यवदित्यन्तेन** सन्दर्भेण। अयं भावः — अर्थावबोधो भवतु नाम अध्ययनविधिनाप्याक्षिप्तस्तथापि "वेदः कृत्स्नोऽधिगन्तव्यः" इति वाक्यं वेदार्थज्ञानस्य विधायकमेव नानुवादकमिति स्वीकरणीयमेव। यतो हि विध्यन्तराक्षिप्तमपि विधीयते। अत एव यागविध्या-क्षिप्तमपि व्रीह्यादि विधीयते "व्रीहिभिर्यजेत" इति। यत आक्षेपो हि विलम्बेन प्रतिपत्तिजनकः, प्रत्यक्षा श्रुतिस्तु आशु प्रतिपत्तिजनिका। अतो यावदाक्षेपो विलम्ब्य वेदार्थावबोधमाक्षेप्तुं व्यापारवान् भविष्यति, तावद् व्यापारात् पूर्वमप्राप्तमर्थावबोधं "वेदः कृत्स्नोऽधिगन्तव्यः" इति प्रत्यक्षश्रुतिर्विधास्यति, विलम्बे प्रमाणाभावात्। तस्मात् सिद्धम् "कृत्स्नो वेदोऽधिगन्तव्यः" इति वाक्यस्य विधित्वमिति पूर्वपक्षः।

अयमत्र सारः — स्वाध्यायाध्ययनविधिरध्ययनस्य फलवत्त्वसिद्धयेऽर्थज्ञान-माक्षिपति न तु विधत्ते, अधिगन्तव्य इति विधिस्तु साक्षादर्थज्ञानं विधत्ते, ततो नायमधिगन्तव्यविधिरनुवाद इति।

मूले 'अर्थाक्षिप्तमर्थज्ञानम् उच्येत' इत्यस्य आक्षेपलभ्यमर्थज्ञानम् आक्षेपव्यापारात् प्रागेव "वेदः कृत्स्नोऽधिगन्तव्यः" इति प्रत्यक्षया श्रुत्या विधीयेत इत्यर्थः। तस्माद् विधिरेवायमिति पूर्वपक्षोक्तिमभ्युपगच्छन्नेव सिद्धान्ती स्वाभिमतं समर्थयति — **तथापीति**। अयमभिप्रायः — "वेदः कृत्स्नोऽधिगन्तव्यः" इति वाक्यं

यथैव "स्वर्गकामो यजेत" (तैत्ति०सं० २/५/५) इति सामान्यविधिना सिद्धे नान्योऽपेक्ष्यते, अनवस्थानात्, सत्यपि विधावन्यस्यापेक्षणात्। न चैतद्गत एव, कर्मविषयत्वात्। एवं तत्त्वप्रतिपत्तिपरेष्वपि वाक्येषु न विधिरपेक्षितव्यः, वाक्यसामर्थ्यादेव तत्त्वबोधोत्पादादिति।

इतश्च— फलं विधेयावगमात् प्रवृत्तिश्चोत्तरा विधेः।
अन्योन्यसंश्रयान्नैष शाब्दो बोधः स नो परः॥ ३ ॥

शब्दादवगम्य विधेयं या प्रवृत्तिः, सा विधेः प्रयोजनम्, न तु शब्दप्रभवो विधेयावगम एव, अन्योन्यसंश्रयात्— अवगते शब्दार्थे

---

कामं विधिर्भवेत्, तथापि ब्रह्मस्वरूपाभिधायिनः "सदेव सोम्येदमग्र आसीत्" इत्यादिवेदवाक्याज्जायमाने बोधे नैव विध्यन्तरमपेक्षितव्यम्। यथा "स्वर्गकामो यजेत" इति यागविधिवाक्यं न स्वजन्यबोधे विध्यन्तरमपेक्षतेऽनवस्थाभयात्, तद्वदिति। अमुं दृष्टान्तमेव विवृणोति — **यथैवेति**। अयमर्थः — "स्वर्गकामो यजेत" इति विधिरेव पुरुषं यागकर्मणि नियुञ्जानः सन् 'अधिगन्तव्य' इति सामान्य-विधिबलादेव कर्मावबोधमपि करोतीति न कर्मावबोधाय पृथग् विध्यन्तरमपेक्षितं भवति, अनवस्थापत्तेः। तद्वत् 'सदेव' इति वाक्येऽपि बोध्यम्।

न चैतद्गतो "यजेत" इति कर्म विधिरेव कर्मावबोधं विधास्यतीति वाच्यम्, तस्य कर्मविषयकत्वात्। न हि स कर्मबोधविषयकः, किन्तर्हि? कर्मविषयकः सः। एवम् आत्मतत्त्वबोधकानि "सदेवे"त्यादिवाक्यानि न तत्त्वबोधोत्पादाय विध्यन्तरमपेक्षन्ते, तद्वाक्यसामर्थ्यादेव तत्त्वबोधोत्पादादिति भावः।

शब्दाज्जायमानमात्मतत्त्वविज्ञानं न विधीयत इत्यत्र युक्त्यन्तरमाह— **इतश्चेति**। फलमित्यादिकारिकाया अयमर्थः — विध्यनन्तरं जायमाना या पुरुषप्रवृत्तिः, सैव विधेयावगमस्य फलं प्रयोजनम्, यथा यागादिविधिस्थले विधेयमवगत्य जनो यागादिकर्मणि प्रवर्तत इति। किन्तु शब्दाद् जायमानं यदात्मविज्ञानं तद् विधातुं नैव शक्यते, तद् विधेः फलं नास्तीत्यर्थः। तथा सति

**प्रवृत्तेः, प्रवृत्तस्य चावगमात्। शब्दार्थबोधादेव वा शब्दार्थबोध इत्यात्माश्रयः। अन्योन्यसंश्रयस्तु तुल्यानुपपत्तित्वादुक्तः। यस्तु तत्त्वावबोधपराद् वाक्यात् तत्त्वावबोधः, नासौ शब्दार्थबोधात् पराचीनः, किन्तु स एवेति।**

**अपि च–**

**जाते बोधे न प्रवर्त्यो नतरां खल्वबोधके।**
**शब्देन निश्चये तस्मादन्यस्मादन्यवाञ्छनम्॥ ४॥**

---

आत्माश्रयदोषापत्तेः। शब्दाद् जायमानमर्थावगममाश्रित्य तदर्थावगमाय विधिप्रयुक्ता प्रवृत्तिः, प्रवृत्तौ च सत्यामर्थावगम इति स्फुटोऽत्रात्माश्रयः। यो हि तत्त्वावगमपराद् वेदान्तवाक्यात् तत्त्वावबोधः, स न शब्दार्थावबोधात् पर उत्तरकालीनोऽस्ति, किन्तु स शब्दार्थावबोधरूप एवास्तीत्यात्माश्रयदोष आपद्येत। अत आत्मा प्रतिपत्तव्य इत्यात्मप्रतिपत्तिर्न विधेः फलमित्यर्थः। तदुक्तम्– "शब्दादवगम्य इत्यारभ्यात्माश्रय" इत्यन्तेन सन्दर्भेणेति। अत्र शब्दार्थबोधादेव शब्दार्थबोध इत्यात्माश्रय उक्तः। एवम्, अवगते शब्दार्थे प्रवृत्तिः, प्रवृत्तौ च सत्यामर्थावगम इत्यन्योन्याश्रयोऽपि। एतदेवोक्तम्– **अन्योन्यसंश्रयस्त्विति**। "यस्तु" इत्यादिना "किन्तु स एवेति" इत्यन्तेन सन्दर्भेणानुपदमापादित आत्माश्रयः स्फुटीकृत इति वेदितव्यम्।

शब्दजन्यात्मतत्त्वबोधस्याविधेयत्वे युक्त्यन्तरमप्याह– **अपि चेति**। अयं श्लोकार्थः– शब्दाद् अर्थावबोधे जाते सति "आत्मा प्रतिपत्तव्यः" इति विधिः कुत्र पुरुषे प्रवृत्तिं जनयिष्यति ? प्रवृत्तिविषयस्य बोधस्य जातत्वादेव। न हि सिद्धे कश्चित् प्रवर्त्यते। यद्युच्येत– शब्दो नैवार्थमवबोधयतीति चेत्, एवं सति सुतरां तदर्थबोधे प्रवृत्तिं न जनयिष्यति। यतो हि प्रवृत्तस्यापि पुरुषस्य स शब्दोऽर्थावबोधं नैव कुर्यादिति निरर्थिकां प्रवृत्तिं कथं जनयेत् ? अतः साधूक्तम्– **नतरामिति**।

**उदपादि चेत् "सदेव सोम्येदमग्र आसीत्, एकमेवाद्वितीयम्" (छा० ६।२।१) इत्युपक्रमात् "तत्त्वमसि" (छा० ६।८।७) इत्यन्ताद् वाक्यादात्मतत्त्वावबोधः, पदानां परस्परान्वितार्थत्वात्, किमन्यद् विधिः करिष्यति ? न प्रवृत्त एव प्रवर्त्यः।**

**अथ पदार्थसमन्वयमात्रान्न तत्त्वबोधोत्पादः, सुतरामप्रवर्त्यः, शाब्दस्य तत्त्वावबोधस्यासम्भवात्।**

---

यद्युच्येत – शब्देनार्थावबोधे जातेऽपि तेनैव शब्देन अर्थस्य निश्चयं कुर्यात् पुरुषः, निश्चयार्थमेव च "आत्मा प्रतिपत्तव्यः" इति विधिना पुरुषः प्रवर्तनीय इति चेत्, तदपि न युक्ततरम्। यतो हि अर्थबोधकात् तस्मादेव शब्दाद् यदि निश्चयो जननीयः, तदा स शब्दः प्रथममेवार्थनिश्चयं कथं नाजीजनदित्यत्र हेतुर्वक्तव्यो विध्यपेक्षावादिना।

यद्युच्येत – तस्माच्छब्दादर्थावबोधः, अर्थनिश्चयस्तु प्रमाणान्तरात् करणीय इति तत्रैव पुरुषो विधिना प्रवर्त्यत इति, तदपि न युक्तम्, तथा सति अर्थनिश्चयार्थं सर्वत्रैव अर्थबोधकात् शब्दाद् अन्यत् किमपि प्रमाणान्तरमपेक्षणीयं स्याद् विधिवाक्येनेति शब्दस्तत्र निश्चयहेतुर्न स्यात्। न चैतदिष्टं पूर्वपक्षिणः, न वा कस्यापि जनस्य तथानुभव इति कारिकाभिप्रायः। एष [illegible]शयः स्फुटीकृतो व्याख्यायाम् – **उदपादि चेदित्यादिना**। अक्षरार्थस्तु स्पष्टः।

"नतरां खल्वबोधके" इत्यस्य व्याख्यानम् – **अथेति**। यदि पदपदार्थसम्बन्ध-ज्ञानमात्रान्नात्मतत्त्वावबोधोत्पत्तिरतो विधिरपेक्षणीय इत्युच्यते, तदा विधिना पुरुषः सुतरामेव प्रवर्तयितुमशक्यः, शब्दात् तत्त्वावबोधस्यासम्भवेन तदर्थं विधेः प्रवर्तकत्वायोगादिति भावः।

**स्यादेतत्– उत्पन्नेऽपि तत्त्वावभासे शब्दात्, निश्चये प्रवर्त्यः 'एवमिदम्' इति। तन्न, यदि तस्माच्छब्दान्निश्चयः, स जात एव। अथान्यतो निश्चयः, अन्यवाञ्छनं = प्रमाणान्तरापेक्षा। न तत्र तत्त्व-निश्चयनिबन्धनं शब्दः स्यात्। एवं तावन्न तत्त्वनिश्चयाय विधिरर्थ्यते।**

**अथाविवक्षितार्थत्वनिवृत्त्यै प्रार्थ्यते विधिः।**
**अर्थो ज्ञातव्य इत्युक्ते ज्ञेयः स्यान्नाविवक्षितः॥५॥**

---

"आत्मा प्रतिपत्तव्यः" इति विध्यपेक्षायां हेत्वन्तरमाशङ्कते – **स्यादेतदिति**। अयमर्थः –"सदेवे"त्यादिशब्दाद् आत्मतत्त्वावबोधोत्पत्तौ जातायामपि आत्मतत्त्वस्य निश्चयो न जातस्तदानीम्, अत उक्तविधिवाक्येन तन्निश्चये पुरुषः प्रवर्तनीयः, स च निश्चयः 'एवमेवेदम्' इत्याकारः सामान्यज्ञानाकाराद् विशिष्टः। तस्माद् आत्मतत्त्वनिश्चये पुरुषप्रवृत्तिजननमेवोक्तविधेः प्रयोजनमिति शङ्काग्रन्थाशयः।

शङ्कामिमां निराकरोति– **तन्नेति**। अयमर्थः– तत्त्वावबोधं जनयित्वा तत्त्वनिश्चयमपि तदेव शब्दप्रमाणं जनयिष्यति प्रमाणान्तरेण वा तन्निश्चय उत्पत्स्यते ? यद्युच्येत – तत्त्वनिश्चयमपि स एव शब्दः करिष्यतीति चेत्, निश्चयजननसमर्थः स शब्दः प्रथममेव तत्त्वनिश्चयमुत्पादयेदिति व्यर्था तदर्थं विध्यपेक्षा, विधिं विनाऽपि शब्दसामर्थ्यादेव निश्चयस्य जातत्वात्।

यद्युच्येत – शब्दात् तत्त्वावभासमात्रमुत्पद्यते, निश्चयस्तु विधिना प्रवृत्तस्य पुरुषस्य अन्यस्मात् = प्रमाणान्तराद् भवतीति, तदपि नोचितम्। तथा सति निश्चयोत्पादनाय अन्यस्य = शब्दातिरिक्तस्य प्रमाणान्तरस्यापेक्षा स्यात्। शब्दस्य प्रमाणस्य निश्चयजनकत्वं लुप्येतेत्यर्थः। निष्कर्षमाह – **एवं तावदिति**। एवमादिदोषप्रसक्तेस्तत्त्वनिश्चयायापि विधिर्नापेक्ष्यत इत्यायातम्।

भूतार्थपरवाक्यस्य वैयर्थ्याद् वेदान्तवाक्यानामविवक्षितार्थत्वपरिहाराय विधिसापेक्षत्वमिति शङ्कते – **अथेति**। वेदान्तवाक्यानि भूतार्थपरतयाऽविवक्षितार्थानि मा भूवन् इति तान्यपि विधिमपेक्षन्ते "आत्मा प्रतिपत्तव्यः" इति। यतो हि

**यदपि मतम् – सत्यपि वाक्यादर्थोपप्लवे तात्पर्यं दुर्लभम्, भूतार्थपरस्य वैयर्थ्यात्। सांशयिकत्वं वा, अतात्पर्यस्यापि दर्शनाज्जपमन्त्रेषु। विधौ त्वर्थज्ञानस्य चोदितत्वान्नार्थोऽविवक्षितो भवितुमर्हति। तस्माद् विवक्षितार्थत्वाय विधिः प्रार्थ्यः।**

---

"आत्मा प्रतिपत्तव्यः" इति विधिना प्रतिपादितत्वे सति आत्मा ज्ञेयत्वेन विवक्षितो भविष्यति न त्वविवक्षितः। तेन "सदेवे"त्यादिवेदान्तानामपि सार्थक्यं सूपपद्यते। तस्मादस्ति विध्यपेक्षेति कारिकार्थः।

कारिकोक्तं पूर्वपक्षं विशदयति – **यदपि मतमिति**। वाक्यादर्थोपप्लवः = वाक्यजनितमर्थज्ञानम्। अयं भावः – सदेवेत्यादिवेदान्तवाक्याद् ब्रह्मस्वरूपार्थज्ञाने उत्पन्नेऽपि तेषां वाक्यानां ब्रह्मरूपसिद्धार्थे तात्पर्यं दुर्लभमेव, सिद्धार्थपरवाक्यस्य वैयर्थ्याद् निष्प्रयोजनत्वादिति यावत्। ननु 'पुत्रस्ते जातः' इत्यादिसिद्धार्थकवाक्यस्यापि सार्थकत्वं दृश्यत इत्यत आह – **सांशयिकत्वं वेति**। क्वचित् सार्थकत्वे सत्यपि न सार्वत्रिकमिति वेदान्तवाक्यानां तात्पर्यं सांशयिकमेव। अत एव जपमन्त्रेषु 'हुं फडादि' शब्दानाम् अर्थविशेषे तात्पर्याभावोऽपि दृश्यते, जपमात्रप्रयोजनत्वात्।

ननु कर्मविधिवाक्यान्यपि वेदान्तवदेवाविवक्षितार्थानि स्युरित्याशङ्कामपाकरोति – **विधौ त्विति**। अयं भावः – "स्वर्गकामो यजेत" इत्यादिकर्मविधिस्थले "वेदोऽधिगन्तव्यः" इति श्रुत्या कर्मस्वरूपावबोधस्य विहितत्वेन कर्मविधिवाक्यानि नाविवक्षितार्थानि भवितुमर्हन्तीति समाधानाशयः।

पूर्वपक्षनिष्कर्षमाह – **तस्मादिति**। अयमर्थः – यदि वेदान्तवाक्यान्यपि विवक्षितार्थान्यभ्युपगम्येरन् तदा तेषां विवक्षितार्थत्वसिद्धये "आत्मा प्रतिपत्तव्यः" इति प्रतिपत्तिविध्यपेक्षा स्वीकरणीयैवेति सिद्धं तत्रापि ब्रह्मप्रतिपत्तेर्विधेयत्वम्, अन्यथा अविवक्षितार्थत्वेन निरर्थकत्वमेव तेषां प्रसज्येतेत्यभिप्रायः।

**तद्वार्तमर्थपरता शब्दानां लोकवेदयोः ।**

**'अविशिष्टस्तु वाक्यार्थः' इत्युत्सर्गवती यतः ॥ ६ ॥**

**औत्सर्गिकः शब्दानामर्थं प्रति शेषभावः । निमित्तान्तरात्तु स्वरूपप्रधानत्वमविवक्षितार्थत्वमपवादो लोके । तथा वेदेऽपि, लोकावगम्यत्वाच्छब्दसामर्थ्यस्य । तदुक्तम् – "अविशिष्टस्तु वाक्यार्थः" (मी०सू० १।२।४०) इति ।**

---

एतत्पूर्वपक्षदूषणपरां कारिकामाह – **तद्वार्तमित्यादि** । तद्वार्तम् = पूर्वपक्षोक्तमसदित्यर्थः । लोके वेदे चोभयत्र शब्दस्यार्थपरत्वम् "अविशिष्टस्तु वाक्यार्थः" इति न्यायानुसारमौत्सर्गिकं = स्वाभाविकं भवतीति यावत् । श्लोके 'यतः' इति पदं हेतुवाचकम् । अर्थात् लोकवेदयोः शब्दानामर्थपरत्वस्यौत्सर्गिकत्वाद्धेतोः पूर्वपक्षोक्तमसदिति कारिकार्थः ।

कारिकोक्तं सिद्धान्तपक्षं विशदयति – **औत्सर्गिक इति** । शब्दानामर्थं प्रति शेषभावः = अङ्गत्वम् = सम्बद्धत्वमिति यावत्, औत्सर्गिकः = स्वाभाविकः = औत्पत्तिक एव भवति न तु विधिकृतो भवति । क्वचित्तु निमित्तान्तरवशात् शब्दानां स्वाभाविकमर्थपरत्वं विहाय स्वरूपप्रधानत्वमविवक्षितार्थत्वं वा भवति । परमेषोऽपवादः, स च क्वाचित्को भवति न सार्वत्रिकः । यथा जरद्गवादिशब्दस्य लोके अविवक्षितार्थत्वं भवति, हुं-फडादिपदस्य स्वरूपप्रधानत्वं भवति नार्थप्रधानत्वमिति । यथा लोके तथैव वेदेऽपि शब्दानामर्थं प्रति गतिरिति मन्तव्यम् ।

ननु लोके शब्दानां तादृशी गतिर्भवतु नाम, वैदिकशब्दानां कुतस्तादृशी गतिरङ्गीकार्या इत्यवान्तरशङ्कायामाह – **लोकावगम्यत्वादिति** । लोकादेवावगम्यते अर्थं प्रति शब्दसामर्थ्यमिति । अतो वैदिकशब्दानामपि अर्थं प्रति शेषभावः स्वाभाविक एव स्वीकरणीयः । यच्च लोके क्वचित् शब्दानामविवक्षितार्थत्वं भवति, तत्तु निमित्तान्तरात् प्रत्यक्षादिविरोधाद् भवति । वेदान्तेषु तु नास्ति किमपि तथाविधं निमित्तान्तरं येनाविवक्षितार्थत्वं तेषां सम्भवेदिति । अत्रैव जैमिनिवचनं प्रमाणयति – **तदुक्तमिति** । वचनमिदं व्याख्यातपूर्वमिति न पुनरुच्यत इति ।

**दृष्टार्थता च स्वाध्यायविधेरत्र न भिद्यते।**
**भवेदितरथा कृत्स्नः सविध्यर्थोऽविवक्षितः॥ ७॥**

**यथैव कर्मविधीनां "दृष्टो हि तस्यार्थः कर्मावबोधनम्" (शाबरभा० १।१।१) इति नाविवक्षितार्थानामध्ययनात् फलान्तरकल्पना तथा दृष्टत्वादात्मतत्त्वावबोधस्य वेदान्तानाम्। न च भूतार्थप्रतिपत्तौ**

---

अध्ययनविधिबलात् कर्मकाण्डब्रह्मकाण्डयोस्तुल्यं दृष्टार्थत्वमर्थावबोधपरत्वरूपम्, न भिन्नम्; अतो न वेदान्तानां विवक्षितार्थत्वसिद्ध्यर्थं प्रतिपत्तिविध्यपेक्षेत्यभिप्रायेण कारिकामाह – **दृष्टार्थता चेत्यादि**। अयमर्थः – स्वाध्यायविधिबलात् क्रियमाणे कर्मविधिवाक्याध्ययने कर्मावबोधरूपदृष्टार्थता यथैवास्ति, तथैव स्वाध्यायविधिबलादेव क्रियमाणेऽत्र वेदान्ताध्ययनेऽपि आत्मतत्त्वावबोधरूपदृष्टार्थतैवास्ति, न भिन्ना। अतः कर्मविधिवाक्यवद् दृष्टार्थत्वेनैव वेदान्तानामप्यविवक्षितार्थता निवृत्तैवेति प्रतिपत्तिविधिना तेषां विवक्षितार्थत्वोपपादनं निष्प्रयोजनम्।अन्यथा सविध्यर्थो = विध्यर्थेन सहितः कृत्स्नो वेदार्थोऽविवक्षितः प्रसज्येत। अर्थाद् अनवस्थाप्रसक्त्या विध्यन्तराभावात् "स्वाध्यायोऽध्येतव्यः", "आत्मा प्रतिपत्तव्यः" इति विध्यर्थोऽपि अविवक्षितः स्यात्, तदविवक्षितत्वे च सर्वे कर्मकाण्डार्था वेदान्तकाण्डार्थाश्च अविवक्षिताः स्युरिति। एतदभिप्रेत्य कारिकार्थं विशदयति – **यथैवेत्यादिना**।

अक्षरार्थस्तु "दृष्टो हि तस्यार्थः कर्मावबोधनम्" इति न्यायानुसारं "स्वाध्यायोऽध्येतव्यः" इत्यध्ययनविधिबलात् कर्मविध्यध्ययनस्य कर्मावबोध एव फलम्, नाविवक्षितार्थत्वम्, न वा कर्मावबोधरूपं फलं विहाय विश्वजिन्न्यायेन स्वर्गो रात्रिसत्रन्यायेन वा दधिमधुकुल्यादिफलान्तरं कल्प्यते।तथैव वेदान्तानामपि **दृष्टः आत्मतत्त्वावबोध एव फलमिति मन्तव्यम्**।

ननु वेदान्तवाक्यजन्य आत्मतत्त्वावबोधो भूतार्थप्रतिपत्तिरूपः, तथा च प्रवृत्तिनिवृत्त्यनुपयोगेन वैयर्थ्यम्, "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति नियमात्। अत एव वेदान्तानामविवक्षितार्थत्वम्। कर्मविधिवाक्यानान्तु

**वैयर्थ्यमिति वक्ष्यते, प्रतिपत्तिविधौ च तुल्यम्। अवश्यं चैतदेवं विज्ञेयम्, अन्यथा सह विधायकेन कृत्स्नस्याविवक्षितार्थता स्यात्। यतो विधायकशब्दनिबन्धनमन्येषां विवक्षितार्थत्वम्, विधायकस्य तु न तन्निबन्धनमस्ति। एवञ्च तस्याविवक्षितार्थत्वे इतरेऽपि तथा स्युः। अथ विधायकः प्रकृत्या दृष्टार्थत्वेन चार्थपरः, इतरेऽपि तथेति व्यर्थोऽसौ विधिः।**

**ज्ञानस्य पुरुषार्थत्वसिद्धये विधिरिष्यते।**
**सर्वत्र पुरुषार्थत्वं विधेरित्यप्यपेशलम् ॥ ८ ॥**

---

प्रवृत्तिनिवृत्त्युपयोगेन सार्थक्याद् विवक्षितार्थत्वं युक्तमित्याशङ्कायामाह – **न च भूतार्थेत्यादि**। भूतार्थ(सिद्धार्थ)प्रतिपत्तावपि वेदान्तानां न वैयर्थ्यमिति वक्ष्यते "प्रतिपत्तिविधौ तुल्यं यदि सैव प्रयोजनम्" इति द्विनवतितमायां कारिकायामित्यर्थः।

कारिकाया उत्तरार्धं व्याचष्टे – **अवश्यं चेति**। अयमर्थः – आत्मतत्त्वावबोधरूपदृष्टार्थकत्वमिदं वेदान्तानामवश्यमेव विज्ञेयम्। अत एव हि वेदान्तानामपि विवक्षितार्थत्वमपि विज्ञेयम्। अन्यथा "आत्मा प्रतिपत्तव्यः" इति विधायकेन वाक्येन सह कृत्स्नस्य वेदान्तस्याविवक्षितार्थता प्रसज्येत। उक्तप्रसङ्गे उपपत्तिमाह – **यतो विधायकेति**। यतो हि उक्तविधायकस्य वाक्यस्य बलाद् अन्ये वेदान्ता विवक्षितार्था भवन्ति। किन्तु विधायकवाक्यस्य विवक्षितार्थत्वसाधको कोऽपि हेतुर्नास्तीत्युक्तविधायकवाक्यं स्वयमविवक्षितार्थं सत् कृत्स्नं वेदान्तमविवक्षितार्थमापादयिष्यतीति।

यदि तूक्तविधायकवाक्यं स्वभावतो दृष्टार्थकत्वेन विवक्षितार्थं तदा इतरेऽपि वेदान्ताः "सदेवेत्येवमादयः" प्रकृत्यैव विवक्षितार्था भविष्यन्तीति न तदर्थं प्रतिपत्तिविध्यपेक्षेति सम्पूर्णार्थः।

ज्ञाने वा कर्मणि वा पुरुषार्थसाधनत्वं विध्यधीनमेव भवति न स्वतः, अतस्तदर्थमेव विधिरपेक्षणीय इत्याशङ्क्य परिहरति – **ज्ञानस्येति**। सर्वत्र = ज्ञाने कर्मणि च पुरुषार्थसाधनत्वं विधेरेव निश्चीयते। अतो ज्ञानस्य = आत्मतत्त्वावबोधस्य

**विध्यधीनः पुरुषार्थसाधनतावबोधः, तच्छब्दतो लब्धजन्मनोऽप्यात्मतत्त्वावबोधस्य पुरुषार्थसाधनत्वावगमो विधेरित्येतदपि न शोभनम्।**

**ज्ञेयाभिव्याप्तितो यस्मान्न विज्ञानात्फलान्तरम्।**
**इष्यते मोक्ष इति चेत् साध्यस्तत्त्वच्युतेर्न सः॥९॥**

**ज्ञानस्य हि दृष्टमेव फलम् – ज्ञात्रा ज्ञेयस्याभिव्याप्तिः = ज्ञातारं प्रति तस्य प्रकाशता – न त्वदृष्टं कालान्तरभावि, यदर्थो विधिः स्यात्।**

---

पुरुषार्थत्वसिद्ध्यर्थं विधिरिष्यते = अपेक्ष्यत इति, कारिकार्थः। कारिकार्थमेव विवृणोति – **विध्यधीन** इति। अयं भावः – ज्ञानस्य यागादिकर्मणो वा पुरुषार्थसाधनत्वमित्यवबोधो विध्यधीन एव, नान्यथा। तस्मात् "सदेवेत्यादि"शब्दतो जायमानस्यापि आत्मतत्त्वावबोधस्य मोक्षरूपपुरुषार्थसाधनत्वमित्यवगमस्तु "आत्मा प्रतिपत्तव्यः" इति विधिबलादेव भवतीति पूर्वपक्षः। एतदपि दूषयति – **न शोभनमिति।**

दूषणप्रकारमेवाह – **ज्ञेयाभिव्याप्तित इति** कारिकया। यस्माद् आत्मतत्त्वविज्ञानाद् ज्ञेयाभिव्याप्तिं विहाय, ततोऽन्यत् किमपि फलान्तरं नास्ति, अतो ज्ञाने जाते तत्फलान्तरप्रतीत्यर्थं विधिर्नापेक्षणीयः। यद्युच्येत – मोक्ष एव ज्ञानस्य फलान्तरमिष्यत इति चेत्, तदपि न युक्तम्। यतस्तद् मोक्षफलं ज्ञानस्य साध्यं नास्ति, तथा सति तत्त्वच्युतिः स्यात्। अर्थाद् मोक्षस्य साध्यत्वे आत्मनो नित्यमुक्तस्वभावताया हानिः स्यादिति श्लोकार्थः।

श्लोकार्थं स्वयमुद्घाटयति ग्रन्थकारः – **ज्ञानस्य हीति**। अयमाशयः – ज्ञानस्य दृष्टमेव फलमस्ति – ज्ञेयविषयाभिव्याप्तिरिति। ज्ञेयाभिव्याप्तिश्च ज्ञात्रा = ज्ञातृद्वारा भवति अर्थाद् ज्ञाता ज्ञेयविषयमभिव्याप्नोति ज्ञेयविषयो ज्ञातारं प्रति प्रकाशितो भवतीति यावत्। तथा च ज्ञातारं प्रति विषयस्य प्रकाशमानतैव ज्ञेयाभिव्याप्तिः, सैव च ज्ञानस्य दृष्टं फलं न तु कालान्तरभावि किमपि अदृष्टं फलमस्ति, यत्कृते विधिरपेक्षितो भवेदिति तात्पर्यम्। यत्तु दृष्टं फलम्, तत्र न विध्यपेक्षा दृष्टफलस्यान्वयव्यतिरेकसिद्धत्वेन विध्यनपेक्षत्वादिति भावः।

**स्यादेतत् – आत्मज्ञानस्य फलान्तरमपीष्यते मोक्षः। तन्न, असाध्यत्वात्। न हेतुजन्योऽसौ मोक्षः, तत्त्वच्युतेः, कार्यत्वे विनाशात्तस्य पुनः संसारात्। आत्यन्तिकी च संसारनिवृत्तिर्मोक्ष इत्युच्यते।**

**ननु कार्योऽपि नाशो न नश्यति, सत्यम्, भावरूपं तु मोक्षं निरतिशयानन्दलक्षणं निरतिशयैश्वर्यलक्षणं चाभिप्रेत्यैतदुच्यते, भावस्य कार्यस्य नाशेनाविनाभावात्।**

**आगामिशरीरेन्द्रियबुद्धिसंयोगाभावस्य प्रागभावस्य कार्यत्वमनुपपन्नमेव। बन्धहेतुनिवृत्तिस्तु यद्यपि कार्या, कार्यत्वेऽपि च नास्या**

---

श्लोकस्योत्तरार्धं व्याचष्टे – **स्यादेतदिति**। ननु आत्मतत्त्वज्ञानस्यैकं फलमस्ति ज्ञेयस्यात्मतत्त्वस्याभिव्याप्तिः = प्रकाशमानता, फलान्तरञ्चास्ति (द्वितीयं) मोक्षः, तदर्थमेव च "आत्मा प्रतिपत्तव्यः" इति विधेरपेक्षाऽस्ति। तत्प्रेरित एव हि पुमान् मोक्षाय यतेतेति चेत्, न, मोक्षस्य असाध्यत्वात्। अर्थाद् नात्मतत्त्वज्ञानस्यादृष्टं फलान्तरं मोक्षः, यतो हि मोक्षो न हेतुजन्यो येन तदुत्पत्तये विधिरपेक्षितः स्यात्। तथा सति तस्य मोक्षत्वमेव हीयेत। कार्यं हि विनाशि भवति। अतो मोक्षस्य कार्यत्वे तस्य विनाशः स्यात्, तथा सति पुनश्च मुक्तस्य संसारापत्तिः स्यात्। सा च नेष्टा, यत आत्यन्तिकी संसारनिवृत्तिरेव मोक्ष इत्युच्यते।

शङ्कते – ननु यथा कार्योऽपि घटादिध्वंसो न नश्यति, "सादिरनन्तः प्रध्वंसः" इति ध्वंसलक्षणात्, तथा जन्योऽपि मोक्षो न नङ्क्ष्यति। अतो मुक्तस्य न पुनः संसारापत्तिरिति। अत्रोत्तरमाह – **सत्यमिति**। अयं भावः – कार्योऽपि घटादिध्वंसोऽभावरूपतयाऽनन्तो भवतु नाम, मोक्षस्तु भावरूपो निरतिशयानन्दलक्षणो निरतिशयैश्वर्यलक्षणश्च। अतस्तस्य कार्यत्वेऽवश्यं तस्य विनाशः प्रसज्येतेत्यभिप्रायः। भावकार्यस्य विनाशेन सहाविनाभावसम्बन्धादिति[1]।

नन्वागामिशरीरेन्द्रियबुद्धिसंयोगाभावो मोक्षः, स एव कार्यस्तत्त्वज्ञानस्य स्यादित्याशङ्कते – **आगामीति**। निराकरोति – **प्रागभावस्येति**। अयं भावः –

---

१. ननु "आत्यन्तिकी संसारनिवृत्तिर्मोक्ष इत्युच्यते" इत्युक्त्वा कथमाह – भावरूपो मोक्ष इति। उच्यते – मोक्षे सा भवतीत्युपचारात् सैव मोक्ष इत्युक्तमित्यविरोध इति शङ्खपाणिः।

**अनित्यत्वप्रसङ्गः, तथापि नासौ तत्त्वज्ञानात् पृथग् इति न तेन साध्या। अविद्या हि बन्धहेतुः, तत्त्वज्ञानोदय एव च तन्निवृत्तिः।**

**अथवा ''परं ज्योतिरुपसम्पद्य स्वेन रूपेणावतिष्ठते'' (छा० ८।१२।२) इति स्वरूपस्थितिर्मुक्तिरुक्ता। साध्यत्वे च न स्वरूपस्थितिः स्यात्। अतो मोक्षत्वाच्च्यवेत। यत्तु ''न च पुनरावर्तते'' (छा० ८।१५।१) इति श्रुतेः प्रामाण्यात् कार्यस्यापि मोक्षस्य नित्यत्वमिति दृष्टविपरीतमपि तदाश्रीयेतानन्यगतित्वे श्रुतेः।**

---

उक्तसंयोगाभावस्तु प्रागभावरूपः, अतस्तस्य तत्त्वज्ञानकार्यत्वमनुपपन्नमेवेत्यर्थः। यद्युच्येत बन्धस्य यो हेतुस्तन्निवृत्तिरेव मोक्षः, सा च कार्यैव। कार्यत्वेऽपि च सा न नङ्क्ष्यति घटध्वंसवदिति चेत्, न, तादशी बन्धहेतुनिवृत्तिस्तु तत्त्वज्ञानरूपैव न ततः पृथगस्ति। अतो न तत्त्वज्ञानसाध्या सा। तदेवोपपादयति – **अविद्या हीति**। अविद्यैव बन्धहेतुः, सा च तत्त्वज्ञानोदयकाल एव निवर्तत इति तत्त्वज्ञानोदय एव बन्धहेत्वविद्यानिवृत्तिर्न तत्कार्यभूतेत्याशयः।

आत्यन्तिकी संसारनिवृत्तिर्मोक्ष इति पक्षे ''तत्त्वच्युतेः'' इति पदं व्याख्यातम्। इदानीं 'स्वरूपस्थितिर्मुक्तिः' इति पक्षे तद् व्याचष्टे – **अथवेति**। ''परं ज्योतिरुपसम्पद्य स्वेन रूपेणावतिष्ठते'' इति श्रुत्या आत्मनः स्वरूपावस्थितिर्मोक्ष उक्तः। सा यदि तत्त्वज्ञानकार्या स्यात्, तदा तस्या अनित्यत्वेन विनाशाद् मुक्तोऽपि पुरुषो मोक्षात् च्यवेत संसारे पुनरावर्तेत। न हि यस्य यत्स्वरूपं तत् साध्यते, स्वरूपस्यासाध्यत्वात्। न ह्यग्नेः प्रकाशस्वरूपं साध्यते हेतुना, तथा सति प्रकाशः स्वरूपमेवाग्नेर्न स्यादिति तात्पर्यम्।

ननु ''न च पुनरावर्तते'' इत्यपुनरावृत्तिश्रुतिबलात् कार्योऽपि मोक्षो नानित्यो भविष्यतीति न मुक्तस्य पुनः संसारापत्तिरिति शङ्कते – **यत्त्विति**। उत्तरयति – **दृष्टेति**। यत् कार्यं भवति, तदनित्यं भवतीति व्याप्तिः सर्वजनदृष्टा घटादौ। एतद्विपरीतं कार्यस्यापि मोक्षस्य नित्यत्वं ''न च पुनरावर्तते'' इति श्रुतिबलात् तदा आश्रीयेत यदोक्तश्रुतेस्तद्विहायान्या काचिद् गतिर्न भवेत्।

**यदा तु विदितात्मतत्त्वस्याद्वयं विशुद्धप्रकाशमात्मानं पश्यतः समुत्खातायामनवयवेनाविद्यायां हेत्वभावात् पुनर्बन्धस्यासम्भाव्यत्वात् प्राप्तमेवार्थं वर्तमानापदेशादनुवदति श्रुतिरर्थवादत्वेन, तदा कुतस्तत्प्रामाण्यादनन्तफलत्वम् ?**

---

प्रकृते त्वस्त्यन्या गतिरपुनरावृत्तिश्रुतेरित्याह – **यदा त्विति** । अयं भावः– "आत्मा प्रतिपत्तव्यः" इति प्रतिपत्तिविधेः "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति श्रुत्या जातस्यात्मतत्त्वज्ञानस्य फलमनन्तो मोक्षो जायत इति बोधयति "न च पुनरावर्तते" इति श्रुतिरिति कार्यत्वेऽपि मोक्षस्य श्रुतिप्रामाण्याद् नित्यत्वं सिध्यतीति मोक्षकार्यत्ववादिनोऽभिप्रायः । उत्तरयति – तत्तदा उपपद्येत यदि अपुनरावृत्तिश्रुतिरनन्यगतिका स्यात्, तथा तत्प्रामाण्यादेव कार्यस्यापि मोक्षस्यानन्तफलत्वं (नित्यत्वं) सिध्येत् । परन्त्वेवं नास्ति, अस्ति तस्याः श्रुतेरन्या गतिः अर्थवादत्वमिति । काऽसौ गतिरित्युपपादयति – "सदेव" श्रुत्या विदितात्मतत्त्वस्य अत एव विशुद्धप्रकाशमद्वितीयमात्मानं साक्षात्कुर्वतो विद्यया अनवयवेन = निःशेषतोऽविद्यायामुच्छिन्नायां सत्यां बन्धहेत्वभावादेव पुनर्बन्धो नापतिष्यतीति मोक्षस्यानन्तत्वं स्वत एव प्राप्तमिति प्राप्तमेवार्थं "न पुनरावर्तते" इति श्रुतिरर्थवादरूपेण वर्तमानकालप्रयोगादनुवदति[1] न तु विधत्ते । अतोऽर्थवादत्वेनाप्रमाणभूतायास्तस्याः श्रुतेर्बलात् मोक्षस्य नित्यत्वं नैव निश्चेतुं शक्यम् । तस्माद् मोक्षस्य कार्यत्वाङ्गीकारे "यत् कार्यं तदनित्यम्" इत्यनुमानं निर्बाधं सद् मोक्षस्यानित्यत्वमेव प्रमापयेत् । अतो मोक्षो न तत्त्वज्ञानकार्यभूतं फलमिति सिद्धान्तिनोऽभिप्रायः ।

---

१. विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ।। इत्युक्त्यनुसारेण इहानुवादरूपोऽर्थवादो बोध्यः ।

**तथा हि— वर्तमानापदेशादेव नापुनरावृत्तिः साध्यत्वेनावगम्यते। न च कामोपबन्धोऽस्ति, यतः साध्यता गम्येत, तस्मादर्थवादः। अर्थवादादपि च या फलकल्पना, सापि ज्ञाने ज्ञेयतत्त्वावभासदृष्टफलनिराकाङ्क्षेऽनुपपन्ना। पुरुषार्थता चास्य वक्ष्यत इति।**

---

वर्तमानापदेशात् प्राप्तार्थानुवादकत्वेनार्थवादत्वमुपपाद्य वर्तमानापदेशादेव मोक्षस्यासाध्यत्वेनापि (अविधेयत्वेनापि) अपुनरावृत्तिश्रुतेरर्थवादत्वं प्रतिपादयति— **तथा हीति**। तथैवेत्यर्थः। वर्तमानकालिकक्रियाप्रयोगादेव उक्तश्रुत्या अपुनरावृत्तिः (मोक्षः) साध्यत्वेन = कार्यत्वेन = विधेयत्वेन नावगम्यते, अतोऽपि श्रुतिरियमर्थवाद इति बोध्यम्। अन्यथा तस्यां श्रुतौ "न च पुनरावर्तेत" इति विधिलिङेव प्रयुज्येतेति भावः।

मोक्षस्य साध्यत्वाभावे युक्त्यन्तरमाह — **न चेति**। यथा अग्निहोत्रादिकर्मणि "स्वर्गकामः, पशुकामः" इति कामोपबन्धस्तथा आत्मतत्त्वज्ञाने 'अपुनरावृत्तिकामः' इति कामोपबन्धाभावादपि मोक्षो न स्वर्गपश्वादिवत् साध्यः। तस्मादर्थवाद एवेयं श्रुतिरिति।

ननु कामोपबन्धाभावेऽपि "प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति" इति वर्तमानापदेशवतोऽर्थवादादपि प्रतिष्ठाया रात्रिसत्रफलत्वकल्पनावद् अपुनरावृत्तेर्ज्ञानफलत्वमपि कल्पनीयमिति चेत्, न, ज्ञेयतत्त्वावभास एव ज्ञानस्य दृष्टं फलम्, तावतैव ज्ञाने निराकाङ्क्षत्वसिद्धौ अपुनरावृत्तिरूपफलान्तरकल्पनाया अनुपपन्नत्वात् = अयुक्तत्वात् तस्मान्मोक्षो न ज्ञानसाध्य इति सुस्थितम्।

ननु ज्ञेयस्यात्मनस्तत्त्वावभासोऽपि स्वयमपुरुषार्थः, अतोऽस्त्येव पुरुषार्थाकाङ्क्षा, तत् कथं नैराकाङ्क्ष्यं ज्ञानस्येत्याशङ्कायामाह — **पुरुषार्थता चास्य वक्ष्यत इतीति**। वक्ष्यते = सिद्धिकाण्डे वक्ष्यत इत्यर्थः।

अन्ये पुनराहुः –

विधेर्विना कार्यशून्यं भूतार्थमनुवादकम् ।
वचः स्यादनुवादश्च प्रमाणान्तरगोचरे ॥ १० ॥
तत्प्रमाणान्तरापेक्षं प्रामाण्यमतिवर्तते ।
मानान्तरस्याविषये विध्यर्थे तु प्रतिष्ठितम् ॥ ११ ॥
अनपेक्षं प्रमाणत्वमश्नुते कर्मवाक्यवत् ।
परप्रवृत्त्यभावेऽपि प्रामाण्यायैव तद्विधिः ॥ १२ ॥

---

सिद्धब्रह्मणः प्रमाणान्तरागोचरत्वेन तद्विषयकवेदान्तवाक्यानां प्रामाण्यसिद्धये विधिराश्रयितव्य इति मतान्तरमाशङ्कते – **अन्ये पुनरिति** । ''विधेर्विना'' इत्यादिश्लोकानामयमर्थः – विधेर्विना = विधायकलिङादिपदं विना, कार्यशून्यम् = नियोगधीरहितं वैदिकमपि वचः लोके भूतार्थवचसामनुवादत्वदर्शनाद् अनुवादोऽस्तु । अनुवादश्च प्रमाणान्तरस्य गोचरे विषये भवति । अतस्तद्वाक्यं तत्प्रमाणान्तरापेक्षमेव भवतीति तादृशं वाक्यं प्रामाण्यम् अतिवर्तते = प्रामाण्यं नाश्नुत इत्यर्थः । अत एव अनुवाद एव तद्वाक्यमित्यर्थः । विध्यर्थस्तु न मानान्तरस्य विषयो भवति, अतस्तद्वाक्यं विध्यर्थे प्रतिष्ठितं भवति । अतः प्रमाणान्तरानपेक्षं तादृशं विधिवाक्यं प्रमाणत्वम् = प्रामाण्यमश्नुते । तत्र दृष्टान्तमाह – **कर्मवाक्यवदिति** । ''यजेत'' इत्यादिकर्मविधायकवाक्यवदित्यर्थः ।

अतो वेदान्तवाक्यादात्मतत्त्वावभासात् परा उत्तरकाले विधिफलरूपा काचित् प्रवृत्तिर्यद्यपि नास्ति, तथापि वेदान्तानां प्रामाण्यायैव ''आत्मा प्रतिपत्तव्यः'' इति विधिराश्रयणीयः । कर्मवाक्ये प्रवृत्तिर्विधिफलं प्रामाण्यञ्च, वेदान्तवाक्ये तु प्रामाण्यमेव विधिफलमित्यन्येषां मतगिति भावः ।

**विधिमन्तरेण न कार्योपदेशप्रतीतिः। यथावस्थितं वस्तु, तद्विध-स्यानुवादमात्रत्वं गम्यते। अनुवादश्च प्रमाणान्तरविषय इति तदपेक्षो भूतार्थो नार्थ उच्यत इति सापेक्षत्वादप्रामाण्यम्। विध्यर्थस्य तु प्रमाणान्तरा-विषयत्वात् तन्निष्ठमनपेक्षं प्रमाणं कर्मविधिवाक्यवत्। प्रमाणान्तरा-विषयश्च विध्यर्थः, न हि 'कुरु' इति शब्दज्ञानादन्यतः प्रतीतिः। एवञ्च सति तत्त्वप्रतिपत्तिपरे वाक्ये यद्यपि वाक्यार्थबोधात् पराचीना प्रवृत्ति-र्विधिफलं नास्ति, प्रामाण्यायैव तु विधिनिष्ठत्वमेषितव्यमिति।**

**अत्रोच्यते –**

**प्रमाणान्तरयातार्थभावः किमनुवादता ?**
**उत भूतार्थता ? तत्र सिद्धार्थमपि यद्वचः॥ १३॥**

---

अयमर्थः – 'यजेत', 'कुरु' इत्यादिविधिनैव 'स्वर्गार्थिना यागः कर्तव्यः' इत्युपदेशः प्रतीयते। यथावस्थितवस्तुबोधकं वाक्यं त्वनुवादमात्र-मिति निश्चीयते। अनुवादश्च प्रमाणान्तरविषयको भवतीति प्रमाणान्तरापेक्षः सिद्धार्थो नार्थः = न तद्वाक्यस्य विधेय उच्यते। अतः प्रमाणान्तरसापेक्षत्वाद-प्रामाण्यमनुवादस्य। यो हि न सिद्धार्थः किन्तु विधेयार्थः, तस्य प्रमाणान्तरेणागम्यत्वात् तन्निष्ठं = तद्बोधकं विधायकं वाक्यं परानपेक्षं सत् प्रमाणं भवति, 'यजेत' इत्यादिकर्मविधिवाक्यवत्। न हि विधेयार्थः शब्दातिरिक्तस्य प्रमाणान्तरस्य विषयो भवति, न हि 'कुरु' इति शब्दज्ञानादन्यतः प्रतीयते। इत्थं दृष्टान्तं व्याख्याय दार्ष्टान्तिकं व्याचष्टे – **एवंच सतीति**। आत्मतत्त्वप्रतिपत्तिपरं "सदेवेत्यादि" वाक्यस्थले वाक्यार्थबोधानन्तरं काचित् प्रवृत्तिर्विधिप्रयोजनभूता नास्ति, तथापि प्रामाण्यायैव तादृशवाक्यस्य "आत्मा प्रतिपत्तव्यः" इति विधिसापेक्षत्वं स्वीकर्तव्यमिति शङ्कावाक्यस्य सरलार्थः।

पूर्वोक्तं खण्डयति – अत्रोच्यत इति। अत्रायं कारिकार्थः – प्रमाणान्तरेण यातः प्राप्तोऽर्थो यस्य वचसः, तद्वचः प्रमाणान्तरयातार्थम्, तस्य भावः अर्थात् प्रमाणान्तरगतार्थता। तथा भूतः सिद्धोऽर्थो यस्य वचसस्तद्भूतार्थम्, तस्य

न मानान्तरलब्धार्थतया तस्यावबोधकम्।
न तत् सापेक्षमेषा चेदभिप्रेताऽनुवादता॥ १४॥

**कः पुनरनुवादः – अधिगमान्तरसम्भिन्नार्थत्वम्, मानान्तरेणाधिगत इति प्रतिपादनम्? आहोस्विद् भूतार्थतामात्रम्? तत्र पूर्वस्मिन् कल्पे भवत्वधिगमान्तरसम्भिन्नार्थं सापेक्षम्।**

**यत्तु भूतार्थमपि न मानान्तराधिगत इति बोधयति न तदनुवादकम्, पूर्वाधिगमसंस्पर्शेन प्रतिपत्तेरभावात्।**

**अथापरः कल्पः –**

सापेक्षतायाः को हेतुः शुद्धा सिद्धार्थता यदि।
प्रमाणान्तरसम्भेदस्तद्व्यपेक्षणकारणम्॥ १५॥
अनृधीप्रभवे नास्ति भूतार्थेऽपि स वैदिके॥ १५-१/२॥

---

भावो भूतार्थता। अर्थात् प्रमाणान्तरप्राप्तार्थता अनुवादता? अथवा भूतार्थतामात्रमनुवादता? प्रथमकल्पे वेदान्तवचसां नानुवादता, तेषामपौरुषेयत्वेन प्रमाणान्तरज्ञातार्थाबोधकत्वात्। अत एव सापेक्षत्वाभावेन न अप्रामाण्यं वेदान्तवाक्यानाम्। पौरुषेयं हि वाक्यं प्रमाणान्तरप्राप्तार्थकं भवति, वेदान्तवाक्यानि तु अपौरुषेयाणीति भावः।

कारिकार्थं प्रश्नमुखेन व्याचष्टे – **कः पुनरिति**। स्पष्टार्थमेतत्। यत्तु वेदान्तवाक्यं भूतार्थमपि न मानान्तराधिगतार्थं बोधयति, न तदनुवादकम्, पूर्वाधिगमसंस्पर्शेन प्रतिपत्तेर्बोधस्याभावादिति भावः।

पूर्वनिर्दिष्टं ''भूतार्थतामात्रमनुवादत्वम्'' इति द्वितीयं कल्पमुत्थाप्य समाधत्ते – **अथापरः कल्प इति**। अयं कारिकार्थः – वेदान्तवाक्येष्वनुवादत्वप्रयोजिकायाः सापेक्षतायाः किं निमित्तम्? नास्ति किमपि निमित्तमित्यर्थः। यतो हि यदा शुद्धा सिद्धार्थता अर्थाद् भूतार्थतामात्रं वेदान्तवाक्येष्वस्ति, तदा सापेक्षताया निमित्तं यत् प्रमाणान्तरसंस्पर्शः, स सिद्धार्थेऽपि वेदान्तवचसि नास्ति, न ना (नरः) अना = अपुरुषः, तस्य धीः अनृधीः, तत्प्रभवत्वाद् अपुरुषबुद्धिप्रभवत्वाद्

**भूतार्थमात्रं चेदनुवादता न सापेक्षत्वहेतुरस्ति। न· भूतार्थतैव सापेक्षत्वहेतुः, भूतार्थयोरपि प्रत्यक्षानुमानयोरनपेक्षत्वात्। तस्माद् भूतार्थेऽभूतार्थे वाऽधिगमान्तरसंस्पर्शः प्रमाणान्तरापेक्षाहेतुः, स्मृतौ दर्शनात्। सा ह्यधिगमान्तरसम्भिन्नार्थेति तत्साधनमपेक्षते।**

**एवञ्च पुरुषबुद्धिप्रभवं भूतार्थमभूतार्थं वा वचो भवति सापेक्षम्। ततो हि तत्सम्भिन्न एवार्थे प्रत्ययः, न त्वनपेक्षितपूर्वाधिगमः स्वातन्त्र्येणार्थे। यथोक्तम् – ''अपि च पौरुषेयाद् वचनात् 'एवमयं पुरुषो वेद' इति भवति प्रत्ययः, न 'एवमर्थः' (शाबर-भा० १।१।२) इति''। अपुरुष-बुद्धिप्रभवत्वाद् वेदवचसि भूतार्थेऽपि न सापेक्षत्वहेतुः, पुरुषसम्बन्धकृतत्वात् पूर्वाधिगमसम्भेदस्य।**

---

अपौरुषेयत्वादिति यावत्, वेदान्तवचसः। अतोऽपौरुषेयत्वाद् वेदान्तवाक्यं न सापेक्षम्, सापेक्षत्वाभावाद् नानुवादता, अनुवादत्वाभावाच्च न अप्रामाण्यमिति संक्षिप्तार्थः।

इममर्थमेव विवृणोति – **भूतार्थमात्रं चेदिति**। यद्युच्येत प्रमाणान्तर-संस्पर्शाभावेऽपि भूतार्थतैव सापेक्षत्वनिमित्तमिति, तन्न, प्रत्यक्षानुमानयोर्भूतार्थत्वेऽपि सापेक्षत्वाभावात्। तस्माद् भूतार्थं वा अभूतार्थं वा भवतु वचः, ज्ञानान्तरसंस्पर्श एव तत्र प्रमाणान्तरसापेक्षताया निमित्तं भवति, यथा च स्मृतिस्थले दृश्यते। स्मृतिर्हि अनुभवरूपज्ञानान्तरस्य विषयेण संस्पृष्टैव भवति। अतो अनुभवविषय एव स्मृतिज्ञाने भासते नान्यः। अत एव स्मृतिरनुभवजनकप्रत्यक्षानुमानादि-प्रमाणान्तरमवश्यमपेक्षते।

निष्कर्षमाह – **एवञ्चेति**। अर्थाद् भूतार्थमभूतार्थं वा वचः पुरुषबुद्धि-प्रभवमेव प्रमाणान्तरसापेक्षं भवति। यतो हि पुरुषबुद्धिप्रभवं वचनं प्रमाणान्तर-जन्यज्ञानविषयीभूतस्यैवार्थस्य प्रत्यायकं भवति, न तु पूर्वज्ञानमनपेक्ष्य स्वातन्त्र्येण तस्यार्थस्य बोधकं भवतीति।

अत्र शाबरभाष्यवचनं प्रमाणत्वेनोपस्थापयति – **यथोक्तमिति**। पौरुषेयाद् वाक्यात् प्रतीयते यदयमुच्चारयिता पुरुष एवं वेद अर्थाद् एवं विदित्वा

**स्यादेतत् – अपौरुषेयेऽपि भूतार्थे तद्विषये प्रमाणान्तरस्य सम्भवात् तदपेक्षा। तथा हि– सम्भवति प्रमाणान्तरे तद्विसंवादोऽपि शङ्क्येत। तस्मात् तदभावाय तत्संवादोऽपेक्षणीयः। असम्भवति तु कार्येऽर्थे न कुतश्चिद् विसंवादाशङ्केति नापेक्ष्यमस्ति। अत्रोच्यते –**

**न सम्भवमात्रेण तदपेक्षावकल्पते॥ १६॥**

**विशेषो न हि गम्येत सापेक्षत्वे तदा तयोः॥ १६-१/२॥**

---

वाचमुच्चारयति। अतोऽस्य वाक् प्रमाणान्तरजन्यज्ञानसापेक्षा! पौरुषेयवाक्यात् 'एवमयमर्थः' इति न तु प्रतीयते। अपौरुषेयवाक्याद् वेदान्तात्तु एवमयमर्थ इत्येव प्रतीयते, न तु 'एवमयं वेद' इति प्रतीयते, वेदितुः पुरुषस्याभावात्, अपौरुषेयत्वाद् वेदस्य। अतो न सापेक्षत्वं वेदान्तवाक्यानाम्। एतदेवाह– **अपुरुषबुद्धिप्रभवत्वादिति**। पूर्वज्ञानसम्भेदः (संसृष्टत्वं) तत्रैव वचसि भवति, यद्वचसि पुरुषसम्बन्धोऽवतिष्ठते। वेदान्तास्तु न पुरुषसम्बद्धाः, अतो निरपेक्षतया स्वतन्त्रा भूतार्थबोधे। अत एव नानुवादा इति नाप्रामाण्यं तेष्विति भावः।

भूतार्थपरत्वेऽपि शब्दस्य स भूतार्थः प्रमाणान्तरस्यापि विषयो भवति, यथा चाक्षुषप्रत्यक्षविषये स्पार्शनप्रत्यक्षयोग्यताऽपि भवति। तथा च अपौरुषेयेऽपि वेदान्ते प्रमाणान्तरापेक्षाऽस्त्येव तद्विषयीभूते सिद्धार्थे प्रमाणान्तरस्य सम्भवाद् इत्यभिप्रायेणाशङ्कते– **स्यादेतदिति**। ननु प्रमाणान्तरसम्भवमात्रेण कथं मानान्तरापेक्षेति चेत्, तदुपपादयति– **तथा हीति**। अयमर्थः– यस्मिन् विषये प्रमाणान्तरं सम्भवति, तस्मिन् विषये तस्य प्रमाणान्तरस्य विसंवादोऽप्याशङ्क्येत। तस्याशङ्कितविसंवादस्य निराकरणाय प्रमाणान्तरसंवादस्यापेक्षणीयत्वात्। तथा च अपौरुषेयस्यापि सिद्धार्थविषयकस्य वेदान्तवचसः स्वविषये संवादार्थं प्रमाणान्तरापेक्षाऽस्त्येवेत्यनुवादत्वं प्रसज्येत, अनुवादत्वाच्चाप्रामाण्यं स्याद् वेदान्तवाक्यानाम्। अतो वेदान्तवाक्यानां प्रामाण्याय कार्यार्थत्वमेव स्वीकरणीयं न भूतार्थत्वम्। यतो हि प्रमाणान्तरागोचरे कार्येऽर्थे तु शब्दं विहाय न प्रमाणान्तर सम्भवति, यस्माद् विसंवादाशङ्का स्यात्। तस्माद् विसंवादाशङ्काया अभावादेव

**द्वयोरेकविषयसम्भवे कुत एतत् — शब्दस्तदपेक्षः, न पुनस्तत् प्रमाणान्तरं शब्दापेक्षं स्यादिति।**

**अथ शब्दः प्रमाणान्तराधिगतविषयो लोके दृष्ट इति, प्रमाणान्तरस्याविषये तर्हि नतरां प्रामाण्यं तस्य भवति। प्रमाणान्तरविषये हि प्रमाणान्तरसम्भवादपि तावत् स्यात्, अन्यत्र तदभावाद् दुर्लभं तत्।**

---

न प्रमाणान्तरसंवादापेक्षाऽस्तीति निरपेक्षतया प्रामाण्याय वेदान्तानां कार्यपरत्वमेव युक्तं न भूतार्थपरत्वमिति पूर्वपक्षे उत्तरमाह — **अत्रोच्यत इति।**

अयं श्लोकार्थः — शब्दप्रमाणविषये प्रमाणान्तरस्य सम्भवमात्रेण शब्दे प्रमाणान्तरापेक्षाऽस्तीति न युक्तम्, यतो हि तदा तयोर्द्वयोरपि सापेक्षत्वे न कश्चिद् विशेषो गम्येत। अर्थात् शब्दप्रमाणान्तरयोर्मध्ये शब्द एव प्रमाणान्तरे सापेक्षो न प्रमाणान्तरं शब्दापेक्षमित्यत्र किमपि विनिगमकं नास्ति। अतः शब्दवत् प्रमाणान्तरेऽपि कथं न सापेक्षत्वं प्रसज्येतेति भावः। एतदेवाह — **द्वयोरेकविषयसम्भव इति।**

शब्दस्य सापेक्षत्वे विनिगमकमाह पूर्वपक्षी — **अथ शब्द इति**। अयमाशयः — ननु शब्दः प्रमाणान्तरेणाधिगतो विषयो यस्य तादृशो दृष्टो लोके, अत एव स प्रमाणान्तरसापेक्षः। प्रमाणान्तरं तु न शब्दसापेक्षं लोके दृश्यते। अयमेवास्ति विशेषः शब्दप्रमाणान्तरयोः। तस्मात् शब्दस्यैव प्रमाणान्तरसापेक्षता, न प्रमाणान्तरस्य शब्दसापेक्षता, अदृष्टत्वादिति चेदुत्तरयति — **प्रमाणान्तरस्येति**। अर्थात् तर्हि प्रमाणान्तराविषये कार्येऽप्यर्थे शब्दस्य प्रामाण्यं लोके न दृष्टमिति तत्रापि शब्दस्य प्रामाण्यं नैव स्यात्।

"नतराम्" इत्युक्तमतिशयं विशदयति — **प्रमाणान्तरविषये हीति**। अयमर्थः — प्रमाणान्तरविषयविषयकत्वं शब्दप्रमाणस्य गुणो न दोषः, प्रमाणान्तरेण शब्दप्रमाणविषयस्य समर्थनसम्भवात्। अन्यथा तु प्रमाणान्तरेण समर्थनाभावात् कार्येऽर्थे शब्दस्य प्रामाण्यमेव भवतो दुर्लभं स्यादिति।

**अथ पौरुषेयत्वकारिता लोकवचसां प्रमाणान्तराधिगतार्थता, न शब्दसामर्थ्यकारिता। शब्दस्य प्रमाणान्तरासम्भिन्न एवार्थे सामर्थ्यम्। न तर्हि प्रमाणान्तरसम्भवाच्छब्द एव सापेक्षः, तदपि शब्दसम्भवाच्छब्दापेक्षं स्यात्। किमतस्तस्य ? सापेक्षत्वेनाप्रमाणं स्यात्।**

**न शब्दस्य तत्रापेक्षा युज्यते। सति हि तस्य प्रामाण्ये तत्संवादविसंवादावपेक्ष्येयाताम्।**

---

पुनः शङ्कते– **अथ पौरुषेयत्वेति**। अयमाशयः – विषयबोधने शब्दस्य द्वे गती स्तः– तद्गतं पौरुषेयत्वं स्वीयं सामर्थ्यं चेति। तत्र लौकिकवचसां पौरुषेयत्वकारितैव प्रमाणान्तराधिगतार्थता न शब्दसामर्थ्यकारिता। शब्दस्य स्वतः सामर्थ्यं तु प्रमाणान्तरासंस्पृष्ट एवार्थेऽस्ति न तु प्रमाणान्तरसंस्पृष्टे सिद्धार्थे। अतोऽपौरुषेयवचसां प्रमाणान्तरासंस्पृष्टे कार्येऽर्थे प्रामाण्यं न दुर्लभमिति पूर्वपक्षः।

निराकरोति – **न तर्हीति**। अयमभिप्रायः– यदि प्रमाणान्तरासंस्पृष्ट एवार्थे शब्दस्य स्वतः सामर्थ्यम्, तदा न सिद्धार्थे प्रमाणान्तरसम्भवात् शब्द एव सापेक्षः, किन्तु प्रमाणान्तरमपि तद्विषये शब्दसापेक्षं स्यात्। अयमत्र सारः – प्रमाणान्तरासंस्पृष्ट एवार्थे शब्दस्य स्वतः सामर्थ्ये सत्यपि यदि। प्रमाणान्तरसंभवात् तत्सापेक्षत्वमापद्येत, तदा प्रमाणान्तरमपि तद्विषये शब्दप्रमाणसम्भवात् शब्दसापेक्षं स्यादिति।

पृच्छति – **किमतस्तस्येति**। यदि प्रमाणान्तरं शब्दसापेक्षं स्यात् तदा तस्य किं हीयेतेति प्रश्नार्थः। उत्तरयति– शब्दसापेक्षत्वेन प्रमाणान्तरं न प्रमाणं स्यादित्युत्तरार्थः।

शब्दसापेक्षत्वेन यदि प्रमाणान्तरं प्रमाणं न स्यात् ततोऽपि किं स्यात् इत्याशङ्कायामाह – **न शब्दस्येति**। अर्थात् प्रमाणान्तरस्याप्रामाण्ये तत्र शब्दस्यापेक्षा नैव युज्यते। यतो हि प्रमाणान्तरस्य प्रमाणत्वे सत्येव तेन सह शब्दप्रमाणस्य संवादोऽस्ति विसंवादो वाऽस्तीति अपेक्षा युज्यते। न ह्यप्रमाणेन सह संवादविसंवादयोः प्रश्नस्यावसरोऽस्तीति।

**अथ शब्दस्याप्रामाण्यान्न तत् शब्दापेक्षया प्रमाणम्, प्रमाणमेव, अनपेक्षत्वात्। शब्दस्याप्रामाण्यं कुतः ? प्रमाणान्तरापेक्षत्वात्। तस्य च प्रामाण्यमनपेक्षत्वात्, अनपेक्षत्वं च शब्दस्याप्रामाण्यादितीतरेतराश्रयम्। प्रमाणे हि शब्दे तद्विषये सम्भवति तदपि सापेक्षं स्यात्, तत्सम्भव इव शब्दः, विशेषाभावात्।**

**अथ शब्दसम्भवेऽपि न तत्सापेक्षम्, तत्सम्भवेऽपि न शब्दस्य सापेक्षता, विशेषाभावात्।**

---

पुनः शङ्कते– **अथेति**। अयमर्थः– शब्दस्य अप्रमाणत्वाद् न हि प्रमाणान्तरस्य प्रामाण्यं शब्दाधीनम्, प्रत्युत निरपेक्षतया स्वयमेव प्रमाणान्तरं प्रमाणमस्तीति।

उत्तरयति– शब्दस्याप्रामाण्यं कस्माद्धेतोरुच्यते ? यद्युच्येत प्रमाणान्तर-सापेक्षत्वात् शब्दस्य निरपेक्षप्रामाण्यं नास्तीति, तन्न, अन्योन्याश्रयदोषात् प्रमाणान्तरस्य स्वयं प्रामाण्याभावेन कथं शब्दस्तदपेक्षेत ? तथा हि– प्रमाणान्तरस्य प्रामाण्यं शब्दानपेक्षत्वाधीनम्, शब्दानपेक्षत्वञ्च तस्य शब्दाप्रामाण्याधीनम्। तच्च शब्दा-प्रामाण्यं तदा सिद्ध्येद् यदा प्रमाणान्तरं प्रमाणं भवत् शब्देनापेक्ष्येत। इत्थञ्च प्रमाणान्तरस्य प्रामाण्ये सति शब्दानपेक्षत्वसिद्धिः, शब्दानपेक्षत्वे च सिद्धे प्रमाणान्तरस्य प्रामाण्यसिद्धिरिति स्फुटोऽन्योन्याश्रयो दोषः। अथवा शब्दाप्रामाण्ये तदनपेक्षत्वात् प्रमाणान्तरस्य प्रामाण्यात्, तत्प्रामाण्ये च तदपेक्षत्वात् शब्दस्याप्रामाण्यमितीतरेतराश्रयं स्यात्।एतदाह– शब्दस्याप्रामापयं कुत इत्यादिना।

एवं यथा शब्दप्रमाणविषये प्रमाणान्तरे सम्भवति संवादार्थं शब्दः प्रमाणान्तर-मपेक्षिष्यते तथा प्रमाणान्तरविषये शब्दप्रमाणे सम्भवति सति प्रमाणान्तरमपि संवादार्थमेव शब्दप्रमाणमपेक्षेत, विशेषाभावाद् विनिगमकाभावादिति यावत्। अर्थात् शब्दप्रमाणान्तरयोरेकविषयानुप्रवेशे यथा शब्दस्य मानान्तरापेक्षत्वम्, तथैव मानान्तरस्यापि शब्दापेक्षत्वं स्याद् विनिगमकविरहात्। तथा च तुल्यम-प्रामाण्यमुभयोः प्रसज्येतेति तात्पर्यम्। एतदेवाह– प्रमाणे हीत्यादिना विशेषा-भावादित्यन्तेन ग्रन्थेन। व्यतिरेके त्वाह– अथेति।

अपि च,

प्रत्यक्षानुमयोरेवं वृत्तेरन्योन्यगोचरे ॥ १७ ॥

परस्परव्यपेक्षत्वमविशेषं प्रसज्यते ।

स्यादक्षमपि सापेक्षं यदक्षान्तरगोचरे ॥ १८ ॥

सम्भवमात्रेण सापेक्षत्वे प्रत्यक्षानुमानयोरेकस्मिन् विषये सम्भवादन्योन्यापेक्षत्वादप्रामाण्यप्रसङ्गः । तथा सत्तागुणत्वद्रव्येष्वनेकेन्द्रियग्राह्येष्विन्द्रियान्तराणामिन्द्रियान्तरसापेक्षत्वप्रसङ्गः ।

अथ शब्दस्यैव प्रमाणान्तरसम्भवे सापेक्षत्वम्, विशेषहेतुर्वाच्यः । प्रमाणान्तरादधिगतार्थत्वदर्शनादिति चेत्, उक्तमत्र । यदि शब्दमात्र-

---

प्रमाणान्तरसापेक्षत्वात् शब्दस्याप्रामाण्ये प्रत्यक्षानुमानयोरप्यप्रामाण्यप्रसङ्ग इत्याह – **अपि चेति । प्रत्यक्षानुमानयोरिति ।** अयमत्र श्लोकार्थः – यदि भूतार्थे शब्दे प्रमाणान्तरसम्भवमात्रेण तत्सापेक्षत्वं स्यात् तदा सम्भवाद् अन्योन्यसापेक्षत्वाद् शब्द इव तयोः प्रत्यक्षानुमानयोरपि अप्रामाण्यप्रसङ्गः, स्पर्शनकम्पादिलिङ्गयो रेकत्र विषये वायुसंज्ञके प्रवृत्तेः । एवमिन्द्रियान्तरविषये इन्द्रियान्तरस्य प्रवृत्तेस्तयोरपि परस्परसापेक्षत्वेनाप्रामाण्यं प्रसज्येत, यथा सत्तागुणत्वद्रव्येष्वनेकेन्द्रियग्राह्येषु विषयेष्वित्यर्थः । तत्र रूपरसादीनां पञ्चानां सत्ताजातिः गुणत्वञ्च पञ्चेन्द्रियग्राह्ये स्तः, द्रव्यं च घटपटादि त्वग्ग्राह्यं चक्षुर्ग्राह्यञ्च भवतीति अनेकेन्द्रियग्राह्यत्वमेतेषां दृश्यते । एतदेवोक्तं व्याख्यायाम् "सम्भवमात्रेण" इत्यारभ्य "इन्द्रियान्तरसापेक्षत्वप्रसङ्गः" इत्यन्तेन मूलेन ।

यद्युच्येत – शब्दस्यैव प्रमाणान्तरसम्भवे सापेक्षत्वम्, नान्येषां प्रत्यक्षानुमानादीनामिति चेत्, न, विशेषहेत्वभावात् । ननु शब्दगम्यो विषयः प्रत्यक्षादिप्रमाणान्तरादधिगतो दृश्यते, इत्ययमेव विशेषहेतुर्येन शब्दस्यैव सापेक्षत्वमिति चेदत्र "प्रमाणान्तरस्याविषये तर्हि नतरां प्रामाण्यं तस्य भवति" इति पूर्वोक्तं स्मारयति – **उक्तमत्रेति** । पूर्वोक्तार्थमेव विशदयति – **यदीति** । अर्थात्

**धर्मोऽयमसम्भवादेव तद्विषये प्रत्यक्षादेर्बुद्धादिवाक्यवदप्रामाण्यं प्राप्नोति, सम्भवे त्विन्द्रियविषये प्रत्ययितपुरुषवचोवद् युज्यते प्रामाण्यम्। यथोक्तम्— "तच्चेत् प्रत्ययितात् पुरुषादिन्द्रियविषयं वा, अवितथमेव तत्" (शाबरभा० १।१।२) इति।**

**अथ पौरुषेयशब्दधर्मोऽयम्, न सम्भवत्प्रमाणान्तरविषयस्याप्यपौरुषेयस्य शब्दस्य सापेक्षत्वम्।**

---

पौरुषेयापौरुषेयशब्दमात्रधर्मोऽयं 'प्रमाणान्तराधिगतार्थत्वम्' इति यदि मन्येत, तदा तस्य यो विषयस्तस्मिन् प्रत्यक्षादिप्रमाणान्तरस्यांसम्भवादेव बुद्धादिवाक्यवद् अप्रामाण्यं तस्य शब्दस्य आपद्येतेत्यर्थः। पौरुषेयशब्दस्य तु प्रामाण्यं प्रत्यक्षादिप्रमाणान्तराधिगतार्थत्वसम्भवे युज्यते, यथा प्रत्ययितस्य आप्तस्य पुरुषस्य वाक्यं प्रमाणान्तराधिगतार्थत्वेन प्रमाणं भवतीति।

तस्माद् "वेदान्तानां सिद्धार्थत्वे प्रमाणान्तरसम्भवेन सापेक्षत्वाद् अप्रामाण्यम्, कर्मविधीनां कार्यार्थत्वे तु प्रमाणान्तरासम्भवाद् निरपेक्षतया प्रामाण्यम्" इति यदुक्तम्, तदयुक्तमेव मन्तव्यम्, वस्तुस्थितिवैपरीत्यात्। इयं हि वस्तुस्थितिः— पौरुषेयवाक्यं प्रमाणान्तराधिगतार्थं प्रमाणम्, प्रमाणान्तरानधिगतार्थन्तु बुद्धादिवाक्यवदप्रमाणमिति।अत्रैव शाबरभाष्यं प्रमाणत्वेनोद्धरति— तच्चेत्यादि। तच्चेद् वाक्यं प्रत्ययितात्=आप्तात् पुरुषात् श्रुतं स्यादथवा इन्द्रियविषयं वा स्यादुभयथा अवितथमेव=प्रमाणमेव तदिति भाष्यवचनार्थः।

न पौरुषेयापौरुषेयशब्दमात्रस्यायं धर्मः— प्रमाणान्तरान्तराधिगतार्थत्वेन सापेक्षत्वमिति; किन्तु पौरुषेयशब्दस्यैवायं धर्मः। वेदस्य च वेदान्तकर्मकाण्डोभयसाधारणस्यापौरुषेयत्वेन कार्यार्थत्वमेव न प्रमाणान्तराधिगतार्थत्वरूपं सिद्धार्थत्वमित्याशङ्कामुत्थाप्य निरस्यति— अथ पौरुषेयशब्दधर्मोऽयमित्यादिना सापेक्षत्वमित्यन्तेन वाक्येन। अयमत्र समाधानाशयः— यदि वेदान्तसहितः समस्तो वेदोऽपौरुषेय इति मन्यमानस्य ते आशङ्का तदा अपौरुषेयत्वादेव न सम्भवत्प्रमाणान्तरविषयस्यापि सिद्धार्थस्य वेदान्तस्य सापेक्षत्वापत्तिः। पौरुषेयत्वे हि

**अपि च प्रत्यक्षाधिगतविषयं किञ्चिदनुमानमिति न सामान्यतोदृष्टस्य तथा प्रत्यक्षसापेक्षता, यथा चागमपूर्वकं षड्जादिविवेकविषयं प्रत्यक्षमिति न सर्वं प्रत्यक्षं तथा। एवं पुरुषवचसां प्रमाणान्तराधिगतविषयत्वदर्शनेऽपि नापौरुषेयस्य तथा भावो भूतार्थस्यापि। अन्यथा सुतरां प्रमाणान्तरासम्भवादप्रामाण्यं स्यादित्युक्तम्।**

---

सापेक्षत्वं युक्तम्, अपौरुषयस्य तु कीदृशी सापेक्षतेति सिद्धार्थवेदान्तानां न सापेक्षतयाऽप्रामाण्यम्, अपौरुषेयतया सापेक्षत्वाभावात्।

अपौरुषेयवेदान्तवाक्यानां सापेक्षत्वाभावं दृष्टान्तान्तरेण समर्थयति – **अपि चेति**। अयं भावः – पौरुषेये शब्दे दृष्टं प्रमाणान्तराधिगतविषयकत्वं शब्दत्वसामान्याद् अपौरुषेयेऽपि सम्भावयितुं न युज्यते। यतो हि अन्यत्र दृष्टं यद्यन्यत्रापि केनचित् सामान्येन स्यात् तदा धूमदर्शनेनानुमीयमानोऽग्निः प्रत्यक्षयोग्य इत्यनुमानत्वसामान्याद् रूपादिदर्शनेनानुमीयमानं चक्षुरिन्द्रियमपि प्रत्यक्षयोग्यं स्यात्, किन्तु नैवमस्ति। एतदभिप्रेत्योक्तं मूले "किञ्चिदनुमानं प्रत्यक्षाधिगतविषयं दृष्टमिति न सामान्यतोदृष्टस्य सर्वानुमानस्य तथा प्रत्यक्षसापेक्षता" इति।

एवं षड्जधैवतादिस्वरविवेकविषयकं प्रत्यक्षं गानशास्त्रपूर्वकमेव भवति न तच्छास्त्रमन्तरा इति कृत्वा घटादिप्रत्यक्षमपि तथैव शास्त्रमपेक्षत इति नास्ति। एवं पौरुषेयशब्दानां प्रमाणान्तराधिगतविषयकत्वे सत्यपि शब्दत्वसामान्याद् अपौरुषेयवचसोऽपि भूतार्थविषयोऽपि न तथैव प्रमाणान्तराधिगतोऽपेक्ष्यत इति मन्तव्यम्। विपक्षे दोषमाह – **अन्यथेति**। अर्थाद् अपौरुषेयवाक्यानामपि प्रमाणान्तरसापेक्षत्वस्वीकारे तद्विषयभूते सिद्धार्थे प्रमाणान्तरासम्भवात् नितरामप्रामाण्यमेव तेषां वाक्यानां स्यादिति पूर्वमेवोक्तमित्याशयः।

शब्दस्य भूतार्थकत्वं न प्रमाणान्तरसापेक्षत्वप्रयोजकम्, किन्तु पौरुषेयत्वमेव सापेक्षतायां निमित्तमिति प्रतिपादितम्। इदानीं प्रतिवाद्यभिमतं कार्यार्थत्वमपि न निरपेक्षत्वस्य प्रयोजकम्, अतिप्रसङ्गदोषादित्याह – **अपि चेति**। असम्भवात् =

अपि च—

असम्भवादौषधादिनियोगस्यानपेक्षता ।
लौकिकस्य प्रसज्येत, नरप्रत्ययपूर्वकः ॥ १९ ॥
विनियोगस्तत्र, तेन व्यपेक्षा, वैदिके पुनः ।
अबुद्धिपूर्वकः सोऽपीत्यनपेक्षत्वमुच्यते ॥ २० ॥

**यदि कार्ये नियोगार्थे प्रमाणान्तरस्यासम्भवाद् वेदवचसां तन्निष्ठाना-मनपेक्षत्वम् "ज्वरवियोगकाम इदमौषधं पिबेत्", "स्वर्गकामः सिकता भक्षयेत्" इति लोकवचांस्यपि कार्यनिष्ठान्यनपेक्षाणि प्रामाण्यमश्नुवीरन् ।**

---

प्रमाणान्तरासम्भवात् लौकिकस्य औषधपाननियोगस्य, आदिना सिकताभक्षण-नियोगस्य च प्रमाणान्तरनिरपेक्षता स्यात्, निरपेक्षत्वाच्च तयोर्नियोगयोः प्रामाण्यं प्रसज्येत । यद्युच्येत — तयोर्लौकिकयोर्विनियोगयोः पुरुषबुद्धिपूर्वकत्वात् पौरुषेय-त्वादवश्यं प्रमाणान्तरसापेक्षता स्यादिति, तदा वैदिकेऽपौरुषेये विनियोगे त्वबुद्धिपूर्वकत्वेनैव = पुरुषबुद्ध्यपूर्वकत्वेन प्रमाणान्तरनिरपेक्षत्वमुच्यते, तत एव च कार्यार्थत्वपक्षेऽपि प्रामाण्यं वेदान्तवाक्यस्येति श्लोकवाक्यार्थः ।

इमं श्लोकं मूलकारो व्याचष्टे — **यदि कार्ये इति।** अयमर्थः — अत्र यद्युच्येत — कार्ये विनियोगार्थे प्रमाणान्तरस्यासम्भवात् तन्निष्ठानां वेदवचसामनपेक्षतया प्रामाण्यमक्षुण्णं स्थास्यतीति, तर्हि "ज्वरवियोगकाम इदमौषधं पिबेत्", "स्वर्गकामः सिकता भक्षयेत्" इति लौकिकवचांस्यपि कार्यनिष्ठान्येव सन्तीति तान्यपि प्रमाणान्तरानपेक्षाणि सन्ति प्रमाणानि स्युरिति अतिप्रसङ्गो दोषः । उक्त-नियोगवाक्ययोर्मध्ये आद्यं त्वनुवादत्वान्न प्रमाणम्, द्वितीयन्तु सिकताभक्षण-वाक्यं निर्मूलत्वान्न प्रमाणमिति बोध्यम् ।

यद्युच्येत — लौकिकयोर्ज्वरवियोगौषधपानयोर्यः साध्यसाधनभावः स पुरुषविवक्षाधीनः, तेन तत्रत्यो विनियोगः प्रमाणान्तरसापेक्षः, वेदे तु

**अथ यस्तत्र साध्यसाधनभावः स पुरुषविवक्षापूर्वकः, तेन तत्र सापेक्षता, वेदे तु साध्यसाधनभावोऽपि न पुरुषविवक्षापूर्वक इत्यनपेक्षत्वम्। यो वा विषयनियोज्यविनियोगानां सम्बन्धः, स पुरुषबुद्धिविरचितो लोकवाक्ये, वेदे तु न केवलं नियोगोऽपुरुषबुद्धिपूर्वकः; सोऽपीत्यनपेक्षत्वम्।**

**उच्यते –**

**नृबुद्धिपूर्वतैवेत्थं हन्तापेक्षानिबन्धनम्।**
**मानान्तरासम्भवेऽपि ततः सापेक्षता यतः॥ २१॥**

---

स्वर्गयागयोर्मोक्षतत्त्वज्ञानयोश्च यः साध्यसाधनभावः स न पुरुषविवक्षाधीन इति स निरपेक्ष एवेति न वेदान्तवाक्याप्रामाण्यप्रसक्तिः। एतच्च विनियोगशब्दस्य साध्यसाधनभावार्थमाश्रित्य निरपेक्षत्वमुक्तम्।

इदानीं विनियोगपदस्यार्थान्तरमाश्रित्यापि निरपेक्षत्वमाह- **यो वेति।** विनियोगशब्दे "वि" इति विषयः, "नि" इति नियोज्यपुरुषः, "योग" इति विनियोग इत्यर्थो निहितः। तेषां विषयनियोज्यविनियोगानां यः सम्बन्धः स सर्व एव लौकिकवाक्ये पुरुषबुद्धिविरचित इत्यतः स सापेक्षः। वेदे तु न केवलं नियोग एवापुरुबुद्धिपूर्वकोऽपौरुषेयः, अपि तु विषयनियोज्यविनियोगानां त्रयाणां स सम्बन्धोऽपि अपौरुषेय इति सर्वथा निरपेक्षत्वं कार्यनिष्ठानां वेदान्तवाक्यानामतो नाप्रामाण्यशङ्का वेदान्तवाक्यानामिति पूर्वपक्षयितुराशयः।

इत्थं भवदुक्तरीत्या नृबुद्धिपूर्वतैव अर्थाद् नियोगवाक्यस्य पौरुषेयत्वमेव प्रमाणान्तरसापेक्षताया निमित्तम्। कुत इत्याशङ्कायामुत्तरार्धमाह– **मानान्तरासम्भवेऽपीति** ।यतः मानान्तरासम्भवेऽपि सापेक्षता, ततः= तस्मादित्यन्वयः।यतो हि यत्र मानान्तरं नास्ति यथा "सिकता भक्षयेत् स्वर्गकामः" इति सर्वथा निर्मूले वाक्ये, तत्रापि पुरुषबुद्ध्यपेक्षाऽस्ति।तस्मादिति श्लोकार्थः।एतदेव विवृणोति–

**असंभवत्प्रमाणान्तरकार्यनिष्टेऽपि चेद् वाक्ये पुरुषसम्बन्धात् सापेक्षत्वम्, पुरुषबुद्धिपूर्वतैव तर्हि प्रमाणान्तरव्यपेक्षाकारणमन्वयव्यतिरेकाभ्याम्। तद्भावे लोके सापेक्षत्वात्, तदभावे वेदे निरपेक्षत्वात्। न विषये प्रमाणान्तरसम्भवः, तदभावेऽपि लोकनियोगे सापेक्षत्वदर्शनात्।**

**अथ मतम्–**

**वेदे नियोगनिष्ठत्वं, विनियोगप्रधानता।**
**लोके, वेदे न व्यपेक्षा तल्लोके च व्यपेक्षणम्॥२२॥**

**नियोगपर्यवसितं वैदिकं वचः, स च प्रमाणान्तरस्यागोचर इत्यनपेक्षत्वम्। साध्यसाधनभावनिष्ठं तु लौकिकं वचः, स च प्रमाणान्तरविषय इति सापेक्षता।**

---

**असम्भवदित्यादि**। स्पष्टार्थः। पुरुषबुद्धिपूर्वकत्वसापेक्षत्वयोरन्वयव्यतिरेकौ प्रदर्शयति- तद्भावे सापेक्षत्वं यथा लोके, पुरुषबुद्ध्यभावे सापेक्षत्वाभावोऽर्थाद् निरपेक्षत्वं यथा वैदिके वाक्ये। ननु न पौरुषेयत्वमात्रं सापेक्षतायाः प्रयोजकं किन्तु प्रमाणान्तरसाहित्यमपि कारणं स्यादिति शङ्कायामुत्तरार्धं व्याचष्टे– **न विषय इति**। न तद्विषये नियोगे प्रमाणान्तरसम्भेदः कारणम्, यतो हि प्रमाणान्तराभावेऽपि लौकिके उक्तनियोगवाक्ये पुरुषबुद्धिसापेक्षत्वं दृश्यते। तस्माद् पौरुषेयत्वमात्रस्य सापेक्षत्वे हेतुत्वेन अपौरुषेयवेदान्तवाक्यानां निरपेक्षमेव प्रामाण्यमिति भावः।

मतान्तरमाशङ्कते – **वेदे इति**। वेदे नियोगनिष्ठत्वम्, लोके विनियोगप्रधानता, तद् (तस्माद्) वेदे न व्यपेक्षा, लोके च व्यपेक्षणमिति श्लोकान्वयः। अत्र नियोगनिष्ठत्वमित्यस्य क्रियापरत्वमित्यर्थः। विनियोगो नाम साध्यसाधनभावः। तथा च लोके = लौकिके वाक्ये विनियोगप्रधानता अर्थात् साध्यसाधनभाव-प्रधानता भवति। तत् = तस्माद् वेदार्थो नियोगो न प्रमाणान्तरविषयोऽतो वेदे निरपेक्षं प्रामाण्यम्। लौकिकवाक्याभिप्रेतः साध्यसाधनभावरूपो विनियोगस्तु

न शब्दमात्रसामर्थ्यप्रविभागोऽयमीदृशः।

लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः॥२३॥

**न तावदयं शब्दमात्रस्यानपेक्षितपुरुषसम्बन्धासम्बन्धस्य शक्ति-प्रविभागः— यदेकत्र नियोगः शब्दार्थः, अन्यत्र च विनियोगः, यथा गोशब्दस्य सास्नादिमान्, अश्वशब्दस्य केसरादिमान्। यतो लोकाधिगतसामर्थ्यो वेदेऽपि प्रतिपादकः। लोके चेद्विनियोगः शब्दार्थः, तत्रैवास्य सामर्थ्यमवगतम्, न नियोगे। तत्र वेदेऽपि विनियोग एव प्रमाणार्थः स्यात्।**

---

प्रमाणान्तरस्य विषयो भवतीत्यतो न लौकिकवाक्यस्य निरपेक्षं प्रामाण्यं किन्तु सापेक्षमेवेति विशदार्थः। एतदेव स्फुटीकृतं व्याख्यायां मूलकारेण नियोग-पर्यवसितमित्यादिना सापेक्षता इत्यन्तेन वाक्येन। तस्माद् निरपेक्षप्रामाण्याय वेदान्तवाक्यानां क्रियापरत्वमेवास्थेयमिति पूर्वपक्षाभिप्रायः।

उक्तं पूर्वपक्षं निरस्यति – **न शब्दमात्रेति**। अयं श्लोकार्थः– शब्दमात्रस्य = अनपेक्षितपुरुषसम्बन्धासम्बन्धस्य यत् सामर्थ्यम्, तस्य प्रविभाग ईदृशो नियोगविनियोगरूपो नास्ति, यथा च भवानाह – क्वचिन्नियोगनिष्ठत्वं क्वचिच्च विनियोगनिष्ठत्वमिति। तत्र हेतुमाह – **लोकेति**। अर्थात् लोकावगतसामर्थ्यः। शब्दो लोकवदेव वेदेऽपि बोधको भवति, न तु वेदे नियोगपरो भवति लोके च विनियोगपरो भवतीति। एतमेवार्थं स्फुटीकरोति मूलकारः– **न तावदयमिति**। शब्दमात्रस्येत्यंशस्य व्याख्यानम्– अनपेक्षितपुरुषसम्बन्धासम्बन्धस्येति। न अपेक्षितौ पुरुषसम्बन्धासम्बन्धौ येन तस्येति विग्रहः। पौरुषेयस्य लौकिकशब्दस्य अपौरुषेयस्य वैदिकशब्दस्य चेत्यर्थः। अयं भावः– पौरुषेयो भवतु शब्दः, अपौरुषेयो

**अथ मानान्तराज्ज्ञात्वा प्रयुङ्क्ते पुरुषो वचः।**

**अर्थे तत्तेन तन्निष्ठमितरत्त्वन्यथा स्थितम्॥ २४॥**

**अथ मतम् – नैव शब्दमात्रस्य सामर्थ्यविभागः, शब्दस्य हि निजं सामर्थ्यं कार्यनिष्ठतैव। तथा हि कार्यो नियोगार्थः, कार्याय चान्यस्यान्वयः प्रतीयते, न तु कार्यस्यान्यार्थोऽन्वयः। तस्मात् कार्यत्वान्नियोगस्य तत्प्रधानता। पुरुषस्तु प्रमाणान्तरादवगम्यार्थं तत्र प्रयुङ्क्ते वचनम्।**

---

वा भवतु, तत्र कश्चिद् नियोगपरः कश्चिच्च विनियोगपरः स्यादिति शक्ति-विभागो नास्ति। यत्रास्ति वस्तुतः शक्तिविभागस्तं शब्दमुदाहरति – **यथेति**। गोशब्दः सास्नादिमन्तमर्थं बोधयति, अश्वशब्दस्तु केसरादिमन्तमर्थं बोधय-तीत्यस्ति शक्तिप्रविभागः सर्वलोकसिद्धः। किन्तु गोशब्दाश्वशब्दयोरिव पौरुषेयापौरुषेयशब्दयोर्नास्ति शक्तिविभागो यद् वैदिकः शब्दो नियोगपरो भवेत् तथा लौकिकः शब्दो वैपरीत्येन विनियोगपरो भवेदिति।

शक्तिविभागाभावे हेतुमाह – **यतो लोकेति**। यस्मात् लोकादधिगतसामर्थ्य एव शब्दो वेदेऽपि अर्थबोधको भवति, नान्यथा। अतो न पौरुषेया-पौरुषेयशब्दयोरर्थबोधकत्वे सामर्थ्यभेदोऽस्ति। इत्थञ्च लोके चेद् विनियोगः शब्दार्थस्तदा विनियोगार्थ एवास्य सामर्थ्यमवगतं न नियोगार्थे। अस्माद्धेतोः लोक इव वेदेऽपि विनियोग एव (साध्यसाधनभावरूपसिद्धार्थ एव) शब्दार्थः स्यात्। अतो वेदेऽपि प्रमाणान्तरसापेक्षता प्रसज्येतेति निरपेक्षप्रामाण्यं वेदस्य न सिध्येदिति समाधातुराशयः।

नियोगपरत्वविनियोगपरत्वरूपप्रविभागः शब्दमात्रकृत इति नास्तीति सर्वशब्दानां लोकावगतसामर्थ्यस्य सर्वशब्देषु तुल्यत्वादिति पूर्वं प्रसाधितम्। तच्चेष्टमित्यभ्युपगच्छन् इदानीं पुनः पूर्वपक्षी स्वपक्षमुत्थापयति – **अथ मानान्तरादिति**। अयं श्लोकार्थः – ''पौरुषेयवचसोऽयमीदृशः स्वभावो यत् पुरुषः प्रमाणान्तरात् कुतश्चित् कञ्चिद् विषयं ज्ञात्वा यथाज्ञानं तस्मिन्नर्थे वाक्यं प्रयुङ्क्ते। अतः

**न च नियोगः प्रमाणान्तरगोचरः। तस्मान्न तत्र प्रयोक्तुमर्हति। विनियोगस्य तु तथा भावात् तत्र युज्यते प्रयोगः। तस्माद् विनियोगप्रधानं पुरुषवचः। वैदिकन्तु सामर्थ्येन कार्यत्वान्नियोगस्य, तत्प्रधानमिति।**

---

पौरुषेयवचनं लोकानुसारं विनियोगपरम्, विनियोगस्य सिद्धार्थस्य प्रमाणान्तरादवगतत्वात्। अपौरुषेयं तु वैदिकं वचनं तथाविधं नास्ति, साध्यायाः क्रियायाः प्रमाणान्तरेणावगन्तुमशक्यत्वात्। तस्माद् वैदिकं वाक्यम् अन्यथा स्थितम् = नियोगनिष्ठमेवेत्यस्ति प्रविभागः। अयमाशयः – यद्यप्ययं प्रविभागः शब्दमात्रकृतो नास्ति, तथापि पौरुषेयत्वापौरुषेयत्वकृतस्त्वस्त्येवेति पूर्वपक्षाभिप्रायः। एतदेव स्फुटीकृतम् **'अथ मतम्'** इत्यारभ्य **'तत्प्रधानमिति'** इत्यन्तेन मूलेन। शब्दमात्रस्यैव विभक्तं सामर्थ्यं नास्ति, किन्तु तस्यैकमेव निजं सामर्थ्यमस्ति यत् कार्यनिष्ठत्वम् (नियोगनिष्ठत्वम्) इति। औत्सर्गिकोऽयं नियमः। पौरुषेयं वचनं विनियोगनिष्ठं यद् भवति, तत्त्वपवादभूतं पौरुषेयत्वप्रयुक्तम्। एतदुपपादयति – तथा हीति। सर्वेषां शब्दानां नियोगरूपार्थः कार्यः, कार्यायैव चान्यस्य भूतस्य = सिद्धार्थस्यान्वयो भवति। भूतं भव्यायोपदिश्यत इति नियमात्। अतो यत्रापि "अरुणया एकहायन्या गवा सोमं क्रीणाति" इत्यादौ सिद्धार्थो विधीयमानः प्रतीयते तत्रापि स सिद्धार्थः कार्यायैवेति विज्ञेयम्। न तु कार्यस्यान्यार्थः सम्बन्धो भवति, कार्यस्यैव मुख्यत्वाद् अन्यस्य च तच्छेषत्वात्।

फलितार्थमाह – **तस्मादिति**। नियोगस्य कार्यत्वाद् नियोगस्यैव प्राधान्यं सर्वेषु शब्देष्विति तात्पर्यं बोध्यम्। "तत्र न प्रयोक्तुमर्हति" इत्यनन्तरं "वचनं पुरुषः" इति शेषो बोध्यः। अपवादभूते विनियोगार्थे पुरुषवचःप्रयोगे निमित्तमाह – **विनियोगस्य त्विति**। तथाभावात् = प्रमाणान्तरावगतत्वादित्यर्थः। निष्कर्षमाह – **तस्मादिति**। उक्तान्निमित्तात् पौरुषेयं वचो विनियोगप्रधानम्। वैदिकन्तु वाक्यं शब्दसामान्यसामर्थ्येन नियोगप्रधानम्, नियोगस्य कार्यत्वेन अपौरुषेयत्वादित्यर्थः।

अत्रोच्यते –

मानान्तरव्यपेक्षत्वात् सम्भवत्यन्यप्रमाणकः।
हन्तास्य गोचरो नास्मादपेक्षास्य प्रमान्तरे॥ २५ ॥

**यदि पुरुषोऽधिगते विषये वचः प्रयुङ्क्त इति विनियोगविषयता तस्य कल्प्यते प्रमाणान्तरापेक्षत्वात्, तर्हि सम्भवत्प्रमाणान्तरोऽस्य विषयः; न तु सम्भवत्प्रमाणान्तरविषयत्वात् पुरुषवचोऽपि सापेक्षम्, सापेक्षत्व-निमित्तत्वात् तद्विधस्य विषयस्य।**

---

उक्तं पूर्वपक्षं निराकरोति – **अत्रोच्यत इति**। प्रमाणान्तरसापेक्षत्वाद् अस्य पुरुषवचसो विषये प्रमाणान्तरमपि सम्भवति इत्येवायाति न तु तावता पुरुषवचसः प्रमाणान्तरापेक्षा सिद्ध्यति। तथा सति इतरेतराश्रयदोषः प्रसज्येत प्रमाणान्तर सापेक्षत्वात् पुंवचसि सम्भवदन्यप्रमाणविषयविनियोगविषयकत्वसिद्धिः, सम्भवदन्यप्रमाणगोचरकत्वाच्च प्रमाणान्तरसापेक्षत्वसिद्धिरिति श्लोकार्थः। अयमभिप्रायः – पूर्वपक्षोक्तरीत्या मानान्तरसापेक्षत्वाद् अस्य पुरुषवचसो विषयीभूतो विनियोगः सम्भवदन्यप्रमाणक इत्येव प्रत्येष्यते, न त्वस्मात् सम्भवदन्यप्रमाणकत्वाद् अस्य पुरुषवचसो मानान्तरव्यपेक्षा सिद्ध्येत्, तथा सत्यन्योन्याश्रयापत्तेः।

एतदेव विशदयति – **'यदि'** इत्यादिना **'तद्विधस्य विषयस्य'** इत्यन्तेन ग्रन्थेन। अयमत्राक्षरार्थः – यदि भवान् मन्यते यत् पुरुषः प्रमाणान्तरादर्थमधिगत्य तस्मिन्नर्थे वचः प्रयुङ्क्ते इति कृत्वा तस्य वचसः विनियोग- (सिद्धार्थ) विषयताऽस्तीति कल्प्यते, सा च विषयता प्रमाणान्तरसापेक्षत्वाद् निमित्ताद् भवतीति। एवन्तर्हि इदमेवायाति यदस्य वचसो यो विषयस्तस्मिन् प्रमाणान्तरं सम्भवतीति। न त्वस्मिन् विषये प्रमाणान्तरसम्भवमात्रात् पुरुषः एतद्विषयकवचः-प्रयोग प्रमाणान्तरमपेक्ष्यैव कुरुत इति। तत्रोपपत्तिमाह – **सापेक्षत्वनिमित्तत्वादिति**। सापेक्षत्वं प्रति तद्विधस्य = सम्भवदन्यप्रमाणकस्य विनियोगादिविषयस्यैव निमित्तत्वम्, न तु एवंविधविषयतां प्रति सापेक्षत्वं निमित्तम्। एवञ्च पौरुषेयं

**तस्मान्मानान्तराद् गत्वा परस्य प्रतिपत्तये।**

**वचः प्रयुङ्क्ते पुरुषो नाकस्मात्, तेन तद्गिरि ॥२६॥**

**प्रमाणान्तरसम्भेदो, व्यपेक्षाऽतो न सम्भवात् ॥ २६-१/२॥**

**स्वोपलब्धिख्यापनाय पुरुषस्य गीः, ततस्तस्यां प्रमाणान्तरसम्भेदः, 'मयोपलब्धोऽयमर्थः' इत्यर्थः। तेन तत्रोपलब्धेः सम्भवासम्भवावेवा-**

---

वचो यदा प्रयोगे न प्रमाणान्तरसापेक्षं तदा का कथा अपौरुषयस्य वैदिकस्य वचसः सापेक्षतायाः। तस्मात् सिद्धं वैदिकवचसो नियोगार्थे निरपेक्षं प्रामाण्यमिति भावः।

अर्थनिश्चयः प्रमाणान्तराधीनश्चेद् वाक्यप्रयोगो निरर्थकः स्यात्, मानान्तरादेव तन्निश्चयादित्यभिप्रायेण पूर्वोक्ताशङ्कामुपसंहरन् परिहरति – **तस्मान्मानान्तरादिति**। अयं कारिकार्थः – यतः पुरुषो मानान्तराद् गत्वा = विषयं ज्ञात्वा परस्य श्रोतुस्तदर्थबोधाय वचः प्रयुङ्क्ते न अकस्मात् प्रयुङ्क्ते। अतः पौरुषेये वचसि प्रमाणान्तरसम्भेदो युज्यते तस्मिन्नर्थे। अतः सम्भवात् = प्रमाणान्तरसम्भेदाद् न व्यपेक्षा वचसि सिद्ध्यति। अर्थाद् विषये प्रमाणान्तरसम्भेदो न वचसः सापेक्षत्वप्रयोजक इति निरपेक्षप्रामाण्यं वचसामर्थबोधेऽस्तीति। श्लोकोक्तमर्थं विशदयति – स्वोपलब्धीत्यादिना वाक्यजातेन। पुरुषस्य गीः = वाक् स्वोपलब्धिख्यापनाय भवति, सा चोपलब्धिः पुरुषस्य प्रमाणान्तराद् भवति। अतस्तस्यां वाचि प्रमाणान्तरसम्भेदः 'मयोपलब्धोऽयमर्थः' इति ख्यापने प्रयोजनवान् भवति।

यस्माद् वक्तृसमवेताया अर्थोपलब्धेर्ज्ञानं श्रोतरि स्यादित्येतदर्थं वक्ता वचः प्रयुङ्क्ते, तस्मात्तत्र पुरुषवचसि श्रोता इदमेवापेक्षते यद् अस्य पुरुषस्य तदर्थविषयिणी उपलब्धिः सम्भवति न वेति। यत्र वचसि श्रोतॄणामुपलब्धेर्निश्चयो जायते यत् "सम्भवत्यस्य पुरुषस्योपलब्धिः, न चानुपलभ्यायं ब्रवीति" इति तस्मिन् वचसि प्रामाण्यं भवति, यथाऽऽप्तजनवाक्यस्य प्रामाण्यसम्बन्धे सर्वस्य निश्चयो

**पेक्ष्येयाताम्। यत्रोपलब्धेर्निश्चयः "सम्भवत्यस्योपलब्धिः, न चानुपलभ्यायं ब्रवीति" इति तत्र प्रामाण्यम्, यथाऽऽप्तपुरुषवचनस्य प्रमाणविषये।**

**यत्र तूपलब्धेरसम्भव एवादृष्टार्थे बुद्धादिवाक्ये, यत्र चानुपलभ्यापि वचनप्रवृत्तिसम्भावना, तत्राप्रामाण्यम्, न तु प्रमाणान्तरसम्भवात् पुरुषवचनेऽपि तदपेक्षा।**

**अपौरुषेयता तेन पौरुषेयत्वमेव च॥ २७॥**
**अनपेक्षव्यपेक्षत्वनिमित्ते वर्णिते बुधैः।**
**भूतार्थमपि सापेक्षं नातोऽपुरुषबुद्धिजम्॥ २८॥**

---

भवति यत् सम्भवत्यस्योपलब्धिरेतद्विषयिणी, न ह्यनुपलभ्यार्थमयं वचो ब्रवीति इति। अनाप्तवाक्ये तु उपलब्धिसम्भावनायामप्युपलब्धिनिश्चयाभावाद् न प्रामाण्यमनाप्तोक्तत्वेनानुपलभ्यापि वचनप्रवृत्तिसम्भावनादिति ध्येयम्।

एवं यत्रादृष्टार्थे स्वर्गादिजनकतयाऽभिमन्यमाने चैत्यवन्दनादावुपलब्धेरसम्भव एव सर्वथा, तादृशार्थके बुद्धादिवाक्येऽपि न प्रामाण्यम्। एवं स्थिते प्रकृते फलितार्थमाह – न तु प्रमाणान्तरसम्भवात् पुरुषवचनेऽपि तदपेक्षेति। पुरुषो हि स्वगतां प्रतिपत्तिं परत्र सङ्क्रामयितुं वाचं प्रयुङ्क्ते। सा च प्रतिपत्तिः प्रमाणान्तराज्जाता। अतः पौरुषेये प्रमाणशब्दे प्रतिपत्तिहेतुभूतप्रमाणान्तरसंसृष्टत्वं स्वभावाज्जातम्। न च तावता स प्रमाणान्तरमपेक्षत इति भावः। वाक्प्रयोगे प्रमाणान्तरसम्भेदे सत्यपि वाक्यार्थबोधजननार्थं न प्रमाणान्तरापेक्षेति रहस्यम्।

सिद्धान्ती स्वपक्षं न्यायविदां सम्मत्या सुदृढीकरोति – **अपौरुषेयता तेनेति**। अयं श्लोकार्थः – तेन= यतः पौरुषेयत्वापौरुषेयत्वे एव सापेक्षत्वनिरपेक्षत्वयोर्निमित्तभूते स्त इति बुधैर्न्यायविद्भिराचार्यैर्निरूपितम्, अतो हेतोरपुरुषबुद्धिजमपौरुषेयं यद् वेदान्तवाक्यं तद्भूतार्थमपि = सिद्धार्थप्रतिपादकमपि न सापेक्षं किन्तु निरपेक्षमेव स्वार्थबोधजनने इति नाप्रामाण्यं तस्य। अतस्तस्य प्रामाण्यसिद्ध्यर्थं कार्यपरत्वकल्पना व्यर्थैवेति। प्रामाण्यं प्रति निरपेक्षत्वमेव प्रयोजकं

**अत एव च पौरुषेयत्वापौरुषेयत्वे सापेक्षत्वानपेक्षत्वकारणे न्यायविद्भिर्दर्शिते पौरुषेयत्वनिराकरणप्रयत्नेन – "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" (मी०सू० १।१।५) इति। औत्पत्तिके हि शब्दार्थसम्बन्धेऽस्वातन्त्र्याच्छब्दस्य न पुरुषबुद्धिपूर्वकत्वमिति न प्रमाणान्तरसम्भिन्ना शब्दादर्थावगतिरिति निरपेक्षत्वम्।**

---

न कार्यपरत्वम्, निरपेक्षत्वे च वेदान्तवाक्यस्य अपौरुषेयत्वमेव निमित्तमिति तु सारम्।

कारिकाभिप्रायं स्वयं विशदयति ग्रन्थकारः – **अत एव चेति**। अपौरुषेयत्वेन निरपेक्षत्वादेवेत्यर्थः। जैमिनिसूत्रमुदाहरति – औत्पत्तिकस्त्विति। "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्" इति पूर्णं सूत्रम्। सूत्रे 'तु' इति शब्दः पौरुषेयत्वशङ्कां व्यावर्तयति। ननु शब्दार्थसम्बन्धस्यौत्पत्तिकत्वेन कथं शब्दस्य निरपेक्षत्वमायातीत्युपपादयति – **औत्पत्तिके हीति**। औत्पत्तिकत्वं नाम नित्यत्वम्। नित्यो हि शब्दार्थसम्बन्धो न पुरुषकर्तृकः। तस्मात् शब्दार्थसम्बन्धे पुरुषस्य अस्वातन्त्र्यात् = अकर्तृत्वात् शब्दो न पुरुषबुद्धिपूर्वको न पौरुषेय इति यावत्। अत एव शब्दाज्जायमाना अर्थावगतिर्न प्रमाणान्तरसंसृष्टा। तस्मात् सिद्धं प्रमाणशब्दस्य स्वार्थबोधजनने प्रमाणान्तरनिरपेक्षत्वं ततः प्रामाण्यं चेति भावः।

ननु प्रमाणान्तरासम्भवादपि शब्दादर्थावगतिर्निरपेक्षेति जैमिनिमुनेः सिषाधयिषितं भवितुमर्हतीति पूर्वपक्षी शङ्कते – नन्विति। अयं भावः – "औत्पत्तिकस्तु" इति सूत्रे जैमिनिमुनेः पौरुषेयत्वनिराकरणप्रयत्नदर्शनाद् अपौरुषेयत्वं निरपेक्षत्वे प्रयोजकं पौरुषेयत्वं च सापेक्षत्वे प्रयोजकमिति समर्थितम्। एतावता

**ननु प्रमाणान्तरासम्भवेऽपि कृत एव यत्नः – "सत्संप्रयोगे" (मी०सू० १।१।४) इति। सत्यम्, चोदनैव प्रमाणम्, नान्यत् इत्यवधारणसिद्धये, न तु प्रमाणमेवेति।**

---

च अपौरुषेयत्वेन वेदान्तवाक्यस्य निरपेक्षप्रामाण्यं साधितं सिद्धान्तिना। किन्तु तेनैव मुनिना "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्" इति सूत्रेण अलौकिके धर्मे चोदनातिरिक्तप्रमाणान्तरासम्भवेऽपि प्रयत्नः कृत इति दृश्यते। तथा च अलौकिकधर्मावबोधने प्रमाणान्तरासम्भवात् प्रमाणान्तरनिरपेक्षैव श्रुतिः प्रमाणमित्यपि जैमिनिमुनेरभिप्रायः प्रकटितो भवति। एवं सति प्रमाणान्तरासम्भवोऽपि निरपेक्षत्वे प्रयोजकमिति स्वीकरणीयम्। अस्यां स्थितौ वेदान्तवाक्यस्य सिद्धार्थकत्वे प्रमाणान्तरसम्भवात् सापेक्षत्वेन अप्रामाण्यमापद्येत। अतस्तदप्रामाण्यं मा भूदिति तस्य निरपेक्षत्वार्थं प्रमाणान्तरासम्भव उपपादनीयः। प्रमाणान्तरासम्भवाय च कार्यार्थत्वं वेदान्तानामवश्यमाश्रयणीयमिति पूर्वपक्षिणः शङ्काग्रन्थार्थः।

अत्र समाधानमाह सिद्धान्ती – **सत्यमिति**। अयमाशयः – सत्यमुक्तं मुनिना यद् धर्मे विषये प्रमाणान्तरासम्भव इति। किन्तु प्रमाणान्तरासम्भवो वेदान्तवाक्यस्य निरपेक्षत्वप्रयोजकतया न उक्तो मुनिना, किन्तु "चोदनैव धर्मे प्रमाणं नान्यत्" इत्यवधारणार्थमेव प्रमाणान्तरासम्भवे यत्नः कृतो मुनिनेति। प्रमाणान्तरे सति तु चोदनैवेत्यवधारणं न स्यात्। न तु निरपेक्षत्वेन चोदनायाः प्रामाण्यार्थं तथा प्रयतितम्। निरपेक्षत्वं प्रति अपौरुषेयत्वस्यैव प्रयोजकत्वात्। एतदेवोक्तम् – **न तु प्रमाणमेवेति**। तस्माद् धर्मे प्रमाणान्तरासम्भवानुरोधेन वेदान्तवाक्यानां कार्यार्थत्वं नावश्यकमिति सिद्धान्तसारः।

ननु चोदनाया निरपेक्षप्रामाण्यं प्रति अपौरुषेयत्वमेव प्रयोजकं न प्रमाणान्तरासम्भव इत्युच्यते सिद्धान्तिना। एवं सति यदि प्रमाणान्तरसम्भवेऽपि चोदनाप्रामाण्ये न कश्चिद् व्याघातस्तदा मुनिना "सत्सम्प्रयोगे" इति सूत्रे कृतं

**अथ प्रमाणान्तरसम्भवेऽपि यदि चोदनाप्रामाण्यं न व्याहन्यते, कोऽर्थः प्रमाणान्तरनिराकरणेन ? धर्मतत्त्वज्ञानम् । प्रमाणान्तरसम्भवे हि सर्वज्ञाभिमतबुद्धाद्युपदिष्टोऽपि धर्मः प्रतीयेत । तत्र न धर्मतत्त्वमवधारितं स्यात्, तदवधारणार्थश्चायं यत्नः ।**

**चोदनाप्रामाण्यमपि तदर्थं मृग्यते, नादृष्टाय । अथवा तद्विरोधाच्चोदनाया बाधः स्यात्, संशयो वा तुल्यबलत्वे । तेन तस्यासम्भवः प्रतिपाद्यते । न तु तत् सम्भवात् सापेक्षतेति ।**

---

प्रमाणान्तरनिराकरणं व्यर्थं स्यात् । अतः स्वीकरणीयं यत् प्रमाणान्तरसम्भवोऽपि सापेक्षतायाः प्रयोजको भवेत्, तेन च सापेक्षत्वेन चोदनावाक्यानां प्रामाण्य-व्याघातो दुष्परिहरः स्यादिति चोदनाप्रामाण्यव्याघातो मा भूदित्यभिप्रेत्यैव मुनिना उक्तसूत्रे प्रमाणान्तरनिराकरणं कृतम् । एवञ्च वेदान्तानां सिद्धार्थकत्वे तत्रावश्यं प्रमाणान्तरसम्भवात् सापेक्षत्वं प्रसज्येत, सापेक्षत्वेन च वेदान्तवाक्यानाम-प्रामाण्यं स्यादिति प्रमाणान्तरासम्भवाय तेषां कार्यार्थत्वमाश्रयणीयमित्यभिप्रायेण पूर्वपक्षी 'कोऽर्थः प्रमाणान्तरनिराकरणेन' इति प्रश्नमुखेनाशङ्कते -- **अथेति** ।

उत्तरमाह – **धर्मतंत्त्वज्ञानमिति** । प्रमाणान्तरसम्भवात् सापेक्षत्वेन चोदनायाः प्रामाण्यव्याघातो मा भूदित्येतदर्थं प्रमाणान्तरनिराकरणं कृतं मुनिना इति नास्ति, किन्तु धर्मतत्त्वज्ञानमेव प्रमाणान्तरनिराकरणस्य प्रयोजनमस्ति । सिद्धान्ते चोदना-वाक्यस्य सापेक्षत्वं त्वपौरुषेयत्वादेव वारितं भवति निरपेक्षप्रामाण्यञ्च सिध्यति । यदि हि धर्मे श्रुत्यतिरिक्तं प्रमाणान्तरमपि सम्भवेत्, तदा सर्वज्ञत्वेन अभिमन्यमाना ये बुद्धप्रभृतयोऽभूवन्, तैरुपदिष्टः चैत्यवन्दनादिरपि धर्म इति प्रतीतः स्यात् । तथाऽग्निहोत्रादिरेव धर्मतत्त्वमिति नावधारितं स्यात् ।अस्यां स्थितौ श्रुतिप्रतिपादितो धर्मोऽस्ति बुद्धप्रतिपादितो वा धर्मोऽस्तीति संशये पुरुषस्य धर्मतत्त्वावधारणं न स्यात् । अतः श्रुतिप्रमाणोक्त एव धर्म इत्यवधारणार्थमेव धर्मतत्त्वे प्रमाणान्तरसम्भवस्य निराकरणं कृतं जैमिनिमुनिनेति ज्ञेयम् ।

किञ्च, अपौरुषेयत्वेन चोदनाप्रामाण्यं यद् अन्विष्यते तदपि धर्मतत्त्व-ज्ञानार्थमेव, न तु चोदनाप्रामाण्यस्य किमप्यदृष्टं प्रयोजनमस्तीति । सति प्रामाण्ये चोदनावाक्यं धर्मतत्त्वं प्रत्याययेत्, नान्यथेति ।

**ननु तदभावोऽपेक्षणीयः स्यात्, कामम्, न तु शब्दः प्रमाणान्तरापेक्षमर्थं प्रतिपादयति, यतो यदर्थस्य प्रतिपादकं न तु तदपेक्ष्यते, यदपेक्ष्यते न तदर्थं प्रतिपादयति। न हि विरोधिप्रमाणाभावः प्रतिपत्तिहेतुः। विरोधिसम्भवमात्रेण चाप्रामाण्ये प्रत्यक्षादीनामपि तत्स्यात्।**

---

अथवा बुद्धोपदेशविरोधात् चोदना बाधिता सती धर्मं न प्रत्याययेत्, बुद्धाद्युपदिष्टश्चैत्यवन्दनादिरेव धर्मः प्रतीयेत। चोदनार्थानुष्ठाने यज्ञीयहिंसादौ बुद्धादिभिर्दोषो दर्शित इति सर्वज्ञप्रत्यक्षविरोधश्चोदनायाम्। प्रत्यक्षविरोधे च शब्दो न प्रामाण्यमंश्नुयादिति तत्प्रतिपादितस्य अग्निहोत्रादेर्धर्मत्वं न स्यादित्यर्थः। अथवा चोदनावाक्यबुद्धोपदेशयोस्तुल्यबलत्वे धर्मतत्त्वं सन्दिग्धमेव स्यात्। लोको न तत्र कञ्चन निर्णयमाप्नुयात्। एवमभिप्रेत्य मुनिना प्रमाणान्तरस्यासम्भव एव प्रतिपाद्यते निराक्रियते च तत्स[म्भ]ावना। तस्माद् धर्मतत्त्वज्ञानार्थमेव प्रमाणान्तरं निराकृतं मुनिना न तु प्रमाणान्तरसम्भवात् चोदनावाक्ये सापेक्षतामापाद्य तन्निराकरणेन सापेक्षतानिवारणद्वारा चोदनावाक्यस्य प्रामाण्यस्थापनार्थं प्रमाणान्तरासम्भवः प्रतिपादित इति। प्रमाणान्तरनिराकरणस्य मुख्यं प्रयोजनं धर्मतत्त्वावधारणमेवेति रहस्यम्।

ननु प्रमाणान्तरनिराकरणमपि चोदनाप्रामाण्यद्वारैव धर्मतत्त्वनिर्णये उपयुज्यते, सम्भवति हि विरोधिप्रमाणान्तरे शब्दो धर्मे प्रमाणमेव न स्यात्। अतः शब्दप्रामाण्याय विरोधिनः प्रमाणान्तरस्याभावोऽपेक्षणीय एवेति शब्दप्रमाणे सापेक्षत्वं दुर्वारम् इत्यभिप्रायेणाशङ्कते – **नन्विति**। उत्तरमाह – **काममिति**। शब्दः स्वप्रामाण्याय कामं विरोधिप्रमाणान्तराभावमपेक्षतां न तावता शब्दस्य सापेक्षत्वं भविष्यति, स्वार्थबोधे प्रमाणान्तरापेक्षत्वं हि सापेक्षत्वम्, न हि शब्द[ः प्र]माणान्तरमपेक्ष्यार्थबोधं जनयति, न चापेक्ष्यमाणः प्रमाणान्तराभावः प्रमाणान्तररूपो येन तदपेक्षणे शब्दे सापेक्षत्वं प्रसज्येत। एतदुपपादयति – **यत इति**। अर्थस्य यद् बोधकं भवति प्रमाणान्तरं तन्नापेक्ष्यते शब्देन, यश्चापेक्ष्यते शब्देन विरोधिप्रमाणान्तराभावः, स न प्रमाणान्तरम्। इति न शब्दे स्वार्थबोधे प्रमाणान्तरापेक्षत्वम्। एतदेवोक्तम् – न हि विरोधिप्रमाणस्याभावोऽर्थबोधं प्रति हेतुरस्तीति। एवं भूतार्थप्रतिपादकेषु वेदान्तेषु विरोधिप्रमाणसम्भवमात्रेण वेदान्तानामप्रामाण्यप्रसङ्गो न भविष्यति, तथा सति भूतार्थप्रतिपादकानां प्रत्यक्षादीनामप्यप्रामाण्यं प्रसज्येतेति समाधानग्रन्थार्थः।

**अपि च विरोधिसम्भवादप्रामाण्यं कार्यनिष्ठत्वेऽप्यपरिहार्यम्, कर्तव्यताद्वारेण भूतार्थप्रतिपत्तेरिष्टत्वात्, तत्र तु प्रमाणान्तरविरोधसम्भावनात्। भूतार्थस्य प्रमाणान्तरविषयत्वात् तेन कार्यनिष्ठता वर्ण्यते, प्रमाणान्तर-विषयत्वे किलानुवादत्वात् प्रमाणान्तरापेक्षमर्थं प्रतिपादयति — प्रमाणान्त-रेणायमधिगतः — इति, न स्वातन्त्र्येण। कार्यनिष्ठत्वे तु स्वातन्त्र्येण, तस्य प्रमाणान्तरागोचरत्वात्। उक्तेन प्रकारेण न सापेक्षत्वमिति 'भूतार्थ-मपि सापेक्षं नातोऽपुरुषबुद्धिजम्' इति सुष्ठूक्तम्।**

---

वेदान्तवाक्यस्य कार्यनिष्ठत्वं तत्प्रामाण्ये-नोपयोगीति प्रकारान्तरेण स्वपक्षं समर्थयति सिद्धान्ती — **अपि चेति**। अयमर्थः — विरोधिप्रमाणान्तरसम्भवात् कार्यनिष्ठत्वेऽपि वेदान्तानामप्रामाण्यं परिहर्तुं न शक्यते। कथं न शक्यत इति जिज्ञासायामाह — **कर्तव्यताद्वारेणेति**। प्रतिपत्तिकर्तव्यताद्वारा सिद्धार्थ एव ब्रह्म प्रतिपत्तुमिष्टं कार्यनिष्ठत्ववादिनोऽपि। तस्मिंश्च सिद्धार्थे ब्रह्मणि प्रमाणान्तर-विरोधसम्भवात्। इत्थञ्च श्रुतेर्भूतार्थनिष्ठत्वं निराकृत्य कार्यैकनिष्ठत्वनिरूपणं मीमांसकैर्यत् क्रियते, तद्व्यर्थमेव, कार्यनिष्ठत्वेऽपि कार्यस्य भूतार्थसंसृष्टत्वेन तत्र प्रमाणान्तरविषयत्वरूपसापेक्षताया अपरिहार्यत्वात्।

परोक्तं संक्षेपेण स्मारयति — भूतार्थस्येत्यारभ्य अगोचरत्वादित्यन्तेन। तन्निराकरोति च — उक्तेन प्रकारेणेत्यादिना "सूष्ठूक्तम्" इत्यन्तेन ग्रन्थेन। तथा हि — सिद्धार्थस्य प्रमाणान्तरविषयत्वात् सिद्धार्थबोधकवेदान्तवाक्यस्य प्रामाण्याय तेन=मीमांसकेन प्रतिपत्तिरूपकार्यनिष्ठता निरूप्यते 'ब्रह्म प्रतिपत्तव्यम्' इति। यतः सिद्धार्थस्य प्रमाणान्तरविषयत्वे सति सिद्धार्थबोधकवेदान्तवाक्यस्यानुवादत्वाद् वेदान्तः प्रमाणान्तरमपेक्ष्यैव स्वार्थं प्रतिपादयति "प्रमाणान्तरेणायमर्थोऽधिगतः" इति, नान्यथा = न स्वातन्त्र्येण। यदा तु वेदान्तवाक्यस्य प्रतिपत्तिरूपकार्यनिष्ठत्वं स्वीक्रियते, तदा वेदान्तः स्वातन्त्र्येण स्वार्थं ब्रह्मप्रतिपत्तिं प्रतिपादयति, न तु प्रमाणान्तरमपेक्ष्य, प्रतिपत्तेः कार्यस्य प्रमाणान्तराविषयत्वात्। एवं सति वेदान्तवाक्यस्य निरपेक्षप्रामाण्यं निर्बाधं स्यादिति कार्यनिष्ठत्वं वेदान्तवाक्यस्यापि

**अथ संसर्गभाजो नो पदार्थाः क्रियया विना।**

**किमायातं विधेः, सापि त्वस्त्यादिः सुलभा क्व न॥ २९॥**

**यदि मतम् – आख्यातपदार्थमन्तरेण न नामपदार्थानां संसर्गः, क्रिया हि पदार्थसंश्लेषहेतुः, तदभावे साकाङ्क्षत्वात्। अतः सिद्धोऽर्थो ब्रह्मादिर्न शब्दगोचरः, पदस्याविदितसङ्गतित्वेनानवबोधकत्वात्। न वाक्यार्थस्तस्य संसर्गात्मकत्वात्, क्रियारहितानाञ्च पदार्थानामसंसर्गात्।**

---

स्वीकरणीयं वेदान्तिनेति पूर्वपक्षसंक्षेपः। एतस्य पूर्वपक्षस्य पूर्वकृतं निराकरणमेव स्मारयति सिद्धान्ती – **उक्तेनेति**। उक्तप्रकारेण वेदान्तवाक्यस्य भूतार्थत्वे यत् सापेक्षत्वमापाद्यते कार्यनिष्ठत्ववादिना तन्न युक्ततरम्, अपुरुषबुद्धिजत्वाद् वेदान्तवाक्यस्य अपौरुषेयत्वादित्यर्थः। अयमाशयः– सापेक्षत्वे पौरुषेयत्वमेव प्रयोजकं न प्रमाणान्तरविषयत्वम्, अपौरुषेयं हि वेदान्तवाक्यम्। अतः सापेक्षत्वाभावेन निरपेक्षप्रामाण्यं सिद्धं वेदान्तवाक्यानामिति ध्येयम्।

वेदान्तवाक्यानां यदि विधिशेषत्वं न स्यात् तदा क्रियां विना "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादीनां तदीयपदार्थानां संसर्ग एव न स्यादित्याशङ्कते – **अथेति**। शङ्कां निराकरोति – **किमायातमिति**। अर्थात् क्रियां विना यदि पदार्थानां संसर्गो न सम्भवी, तदा भवतु नाम काचित् क्रिया वेदान्तेष्वपि, तावता तेषां विधिशेषत्वं कथं सिध्येत्? एवं, को ब्रूते – वेदान्तेषु क्रियापदं नास्तीति। सुलभा तत्रापि अस्तिप्रभृतिक्रियेति श्लोकार्थः। एतदेव विवृणोति – **यदि मतमिति**। शङ्कापक्षमुपस्थापयति – आख्यातमित्यादिना असंसर्गादित्यन्तेन ग्रन्थेन। अयं भावः– वाक्येषु यदि कश्चिद् आख्यातपदार्थो न भवेत् तदा केवलनामपदार्थानां संसर्गबोधो न भवेत्। क्रियैव हि पदार्थानां परस्परसंसर्गहेतुर्भवति, संसर्गबोधाच्च वाक्यं निरपेक्षं सम्पद्यते। क्रियाया अभावे तु वाक्यं साकाङ्क्षतयाऽपर्यवसितार्थमेव स्यात्। इत्थञ्च वेदान्तप्रतिपाद्यो ब्रह्मादिसिद्धार्थो न शब्देन प्रतिपादितः स्यात्। क्रियां

**एवमपि क्रियाऽभ्युपेयताम्, तद्द्वारेण च पदार्थसंसर्गसिद्धिराशास्यताम्, न विधेः कश्चिदर्थः। साऽपि च क्रिया सर्वत्र सुलभैवाश्रूयमाणाप्यस्त्यादिः "अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽपि गम्यते" (म० भा० २।३।१) इति। तत्र ब्रह्मस्वरूपप्रतिपत्तिपरं वाक्यमस्त्यर्थनिष्ठम्, तन्निबन्धनस्तत्र पदार्थसंश्लेषः। सत्तायाश्च प्रकृत्यैव सत्प्रधानत्वात् तद्द्वारेण विशिष्टवस्तुसिद्धिरिति।**

---

विना व्यवहाराभावात् पदपदार्थयोः सङ्गतिज्ञानासम्भवेन तेन पदेन अर्थबोधानुपपत्तेः। ननु मा नाम भूद् ब्रह्मादि सिद्धं वस्तु पदार्थः, वाक्यार्थस्तु भविष्यतीति शङ्कायामाह – **न वाक्यार्थ इति**। ब्रह्मादिसिद्धार्थो वाक्यस्याप्यर्थो न भवितुमर्हति, वाक्यार्थस्य संसर्गरूपत्वात् क्रियारहितानां च पदार्थानां परस्परमसंसर्गादिति शङ्काभिप्रायः।

श्लोकोक्तं समाधानं विशदयति मूले – **एवमपीति**। यदि क्रियां विना पदार्था न संसर्गभाजस्तर्हि क्रियाऽपि अभ्युपगम्यताम्, तद्द्वारेण च पदार्थानां परस्परसंसर्गोऽपि सिध्यतु नाम, तथापि वेदान्तवाक्यस्य विधिशेषत्वस्वीकारे न किमपि प्रयोजनं पश्यामः। "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिब्रह्मस्वरूपप्रतिपादके वाक्ये यद्यपि न कापि क्रिया उक्ता श्रूयते, तथापि अस्तिप्रभृतिक्रिया सर्वत्र सुलभैव, तथा चोक्तमभियुक्तैः – "अस्तिर्भवन्तीपरःप्रथमपुरुषोऽप्रयुज्यमानोऽपि गम्यते" इति। आदिशब्देन यथासम्भवमन्या अपि क्रिया गृह्यन्ते, यथा – 'द्वारं द्वारम्' इत्युक्ते 'उद्घाटय' इति वा 'पिधेहि' इति वा अप्रयुज्यमानाऽपि क्रिया गृह्यते। ब्रह्मस्वरूपसिद्धार्थकवेदान्तवाक्ये तु 'अस्ति' क्रियैव विवक्षिता, तद्द्वारैव च सत्यज्ञानादिपदार्थानां संसर्गबोधः। नन्वेवमपि सत्तां प्रधानीकृत्य ब्रह्मास्तित्वमेव सिध्येत्, न ब्रह्म, ब्रह्मास्तीति वाक्यस्य ब्रह्मास्तित्वबोधकत्वाद् इति शङ्कायामाह – **सत्तायाश्चेति**। अयं भावः – ब्रह्मस्वरूपसंसृष्टा सत्यज्ञानानन्तरूपं ब्रह्मास्तीति 'अस्ति' क्रिया न स्वयं प्रधानभूता किन्तु ब्रह्मप्रधाना सा, सत्तायाः स्वभावत एव सद्वस्तुप्रधानत्वात्। अतः सद्वस्तु

**अत्राहुः — न प्रमाणावगम्यताया अन्या काचन सत्ता। तथा हि — यत् प्रमाणेनावगम्यते तत्र 'अस्ति' इति व्यवहारो लौकिकानाम्, विपर्यये 'नास्ति' इति। न खल्वन्यः सदसद्विभागहेतुर्लक्ष्यते। अर्थक्रियाभावाभावौ चेत्, न, तयोरपि प्रमाणभावाभावाधीनत्वात्। तथा हि — कार्येऽपि सद्व्यवहारो यदि कार्यान्तरनिबन्धनोऽनवस्था। तस्मादन्तेऽपि प्रमाणादेव**

---

ब्रह्मैव प्रधानम्, न सत्ताक्रिया। तस्मात् सत्ताद्वारेण सच्चिदानन्दलक्षणं प्रत्यग्भूतं विशिष्टवस्तु ब्रह्म वेदान्तवाक्यात् सिध्यति, किमत्र विधिनेत्याशयः।

ननु **ब्रह्मस्वरूपप्रतिपत्तिपरस्य** वेदान्तवाक्यस्य अस्त्यर्थनिष्ठत्वेऽपि प्रमाणान्तरापेक्षमेवार्थबोधकत्वमिति सापेक्षत्वं दुर्वारमिति शङ्कते — **अत्राहुरिति**। अयं भावः — सत्ता नाम न काचिज्जातिः, यया ब्रह्मस्वरूपस्य सत्त्वं व्यवह्रियेत यदभावाच्च शशशृङ्गादेरसत्त्वं व्यवह्रियेत। किन्तु प्रमाणावगम्यतैव सत्ता न काचिदन्या सत्ता। तस्माद् यत् प्रमाणेनावगम्यते तत्र लौकिकानाम् 'अस्ति' इति व्यवहारः, यत् प्रमाणेन नावगम्यते तत्र 'नास्ति' इति व्यवहारः। तथा च प्रमाणगम्यत्वतदभावावेव सदसद्विभागयोर्हेतू स्तो नान्यः।

ननु कथमुच्यते सदसद्व्यवहारयोर्नियामकोऽन्यो हेतुर्नास्तीति, यावता अर्थक्रियाभावः सद्व्यवहारस्य अर्थक्रियाऽभावश्च असद्व्यवहारस्य च नियामकौ भविष्यतः। अर्थाद् यदर्थक्रियाकारि तत् सत्, यन्नार्थक्रियाकारि तदसद् इति चेत्, न, अर्थक्रियाभावाभावावपि प्रमाणभावाभावाधीनौ। यस्मिन् वस्तुनि प्रमाणभावोऽस्ति तस्मिन्नर्थक्रियाकारित्वमस्ति, यस्मिन् वस्तुनि नास्ति प्रमाणम्, न तत्रार्थक्रियाकारित्वम्। एतदुपपादयति — **तथा हीति**। कार्येऽपि = अर्थक्रिया-कारित्वेऽपि यः सद्व्यवहारः स यदि कार्यान्तरनिबन्धनः = अर्थक्रिया-कारित्वान्तराधीनः, तदा तदर्थक्रियाकारित्वान्तरमपि अर्थक्रियाकारित्वान्तराधीनमिति परम्पराकल्पनायामनवस्थादोषप्रसङ्गः। तद्वारणाय अन्ततोगत्वा प्रमाणादेव सद्व्यवहारः, तथा प्रमाणविपर्ययाद् असद्व्यवहार इति सिद्धार्थवादिनाऽपि स्वीकरणीयमेव। इत्थञ्च यद्यन्ततो गत्वा प्रमाणभावाभावाधीनौ सदसद्व्यवहारौ

सद्व्यवहारः, तद्विपर्ययाच्चासद्व्यवहारः। एवं चेदादावेव प्रमाणभावाभावनिबन्धनौ सदसद्व्यवहारौ स्ताम्। तथा चास्त्यर्थनिष्ठं वाक्यं प्रमाणान्तरापेक्षमेवार्थं बोधयति, प्रमाणविषयताया अस्त्यर्थत्वात्।

अत्रोच्यते –

न च मानावगम्यत्वमस्तीति विषयो मतः।
मानादेव यतो बुद्धिरभूदस्ति भविष्यति॥ ३०॥
धूमादिना मिते हि स्याद् वह्न्यादावियमन्यथा।
भिद्येतोत्तरकाले वा भवन्ती न खलु त्रिधा॥ ३१॥

---

स्वीक्रियेते तदाऽऽदावेव प्रमाणभावाभावाधीनौ सदसद्व्यवहारौ कथं न भवेताम्? तत एवोक्तानवस्थादोषपरिहारसम्भवात्। तथा च सति वेदान्तेऽपि अस्त्यर्थनिष्ठमपि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिवाक्यं प्रमाणान्तरापेक्षमेव सदर्थं बोधयिष्यति, नान्यथा, प्रमाणविषयताया एव अस्तिपदार्थत्वादिति पूर्वपक्षाशयः।

"अत्राहुः" इत्यादिना यत् पूर्वमुक्तं तद् दूषयति – **अत्रोच्यत इति**। अस्तीति बुद्धेः शब्दस्य च विषयः प्रमाणावगम्यत्वं नास्ति। अर्थात् प्रमाणावगम्यता सत्ता नास्ति। यतो हि प्रमाणादेव अस्तिबुद्धिः, 'अभूत्' इति बुद्धिस्तथा 'भविष्यति' इति बुद्धिरपि च भवति। यथा, धूमाद् अत्राग्निरस्तीति बुद्धिर्जायते, नदीपूरविशेषाद् अभूद् वृष्टिरिति बुद्धिर्जायते, तथा मेघोदयविशेषादिह भविष्यति वृष्टिरिति बुद्धिर्जायते, तद्वत्।

यतो हि अस्त्यादिबुद्धयः स्वयं मानाज्जायन्ते। मानाज्जायमानास्ता मानावगम्यं कथं विषयीकुर्युः? अन्यथा यदि ता बुद्धयो मानावगम्यं विषयीकुर्युस्तदा धूमादिहेतुना वह्न्यादौ ज्ञाते सति पश्चात् तत्सत्तादिबुद्धयः स्युः। किन्तु नैवं भवति, प्रत्युत स्वयं धूमादिमानाद् वह्न्यादीनां सत्ता ज्ञाता भवति। यदि हि

**न प्रमाणावगम्यत्वमस्त्यर्थः, न 'अस्ति' इति बुद्धेस्तद्विषयः। यतः प्रमाणादेव त्रिधा बुद्धिर्भवति– 'धूमादस्त्यत्राग्निः', 'नदीपूरविशेषादभूद्वृष्टिः', 'मेघोदयविशेषाद् भविष्यति वृष्टिः' इति।**

**तत्र यदि 'अस्तीति' बुद्धिः प्रमाणविषयतां गोचरयति, प्रमिते हि स्यात्, न प्रमाणादेव। न हि प्राक् प्रमाणोत्पत्तेः सन् (सत्) प्रमाणसम्बन्धः, प्रमाणसम्बन्धनिबन्धना चेयं बुद्धिः।**

---

अस्त्यादिबुद्धिर्मानोत्तरकाले भवेत् तदा उत्तरकालोत्पत्त्यविशेषाद् अस्ति, अभूत्, भविष्यतीति बुद्धित्रैविध्यं न स्यात्, बुद्धिस्त्रिधा न भिद्येतेति यावदिति कारिकाद्वयार्थः।

स्वयं कारिकार्थं स्फुटीकरोति मूलकारः– **न प्रमाणावगम्यत्वमित्यादिना**। अस्त्यर्थः = अस्तीति बुद्धिविषय इत्यर्थः। एतद्वाक्यस्यैव व्याख्यानम्, न 'अस्ति' इति बुद्धेस्तत् (प्रमाणावगम्यत्वं) विषय इत्यनेन कृतम्। उक्तप्रतिज्ञायां हेतुमाह– **"यतः प्रमाणादेव"** इत्यादिना। एता बुद्धयः स्वयं प्रमाणाज्जायन्ते, न त्वेतद्विषयीभूताः सत्ता - भूतता - भविष्यत्ताः प्रमाणावगम्या इति विषयीकुर्वन्ति। न हि मातुरुदराज्जातो बालः स्वदेहस्य मातुरुदरात् प्रभवमपि जानाति किमुतोदरान्तरात् प्रभवं जानीयादिति, तद्वत्।

ननु तथापि 'अस्तीति' बुद्धिः प्रमाणविषयतां = प्रमाणावगम्यतां गोचरयेत् स्वविषयीकुर्यात्, का हानिः ? इति शङ्कामुत्थापयति – **तत्र यदीति**। निराकरोति – **प्रमिते हीति**। पूर्वं प्रमाणाद् ज्ञाते सति विषये पश्चात् सा प्रमाणावगम्यता प्रतीता स्यात्, न तु तस्मात् प्रमाणादेव जायेत सा प्रतीतिः। 'अस्तीति' बुद्धिर्जायते तु तस्मात् प्रमाणादेवेति सर्वजनानुभवः।

अनुभवमेव दर्शयति – **न हि प्रागिति**। प्रमोत्पत्तेः = सत्ताप्रमोत्पत्तेः सत्ताबुद्ध्युत्पत्तेः प्रागिति यावत्। सत्-प्रमाणसम्बन्धः[1] = वस्तुनः प्रमितत्वमित्यर्थः। एतच्च 'न हि' इत्यनेन योजनीयम्। 'सन्' इति पाठे तु प्रमाणसम्बन्धः

---

१. उपलक्षणमेतत्, अतीतानागतवस्तुसम्बन्ध इत्यपि बोध्यम्।

**अथ वैयात्यादुत्तरकालतामेवास्या ब्रूयात्, त्रैविध्यमनुपपन्नम्, प्रमाणसम्बन्धस्याभेदाद् भिन्नकालेष्वप्यर्थेषु।**

**स्वसम्बन्धितया मानमथ वस्त्वधिगच्छति।**
**तथापि नैव भिद्येत नेत्थं चान्यव्यपेक्षता॥ ३२॥**

---

वस्तुना सह न हि सन् इति बोध्यम्। अर्थाद् एतत्पाठे न सन् प्रमाणसम्बन्ध इति तद्वाक्यार्थः। प्रमाणसम्बन्धनिबन्धना = प्रमाणादेवेयं वस्तुनि सत्ताबुद्धिरिति स्वप्रतिज्ञातमर्थं निगमयति मूलकारः।

ननु अग्न्यादौ पूर्वमिते सति धूमादिलिङ्गात् पश्चादग्न्यादौ अस्ति-अभूत्-भविष्यति इति धीर्भवति, विषयं विना अस्त्यादिज्ञानायोगादिति शङ्कते– **अथेति**। वैयात्याद् = धार्ष्ट्याद् हठादिति यावत्। निराकरोति – **त्रैविध्यमिति**। एवं स्वीकारे "अस्ति-अभूत्-भविष्यति" इति ज्ञानत्रैविध्यं नोपपन्नं स्यात्। यतो हि अग्न्यादिविषयास्त्रयोऽपि पूर्वमेव मिताः, पश्चाच्च ते त्रयोऽपि वर्तमानकालिकैरेवानुमानप्रमाणैः सम्बद्धाः। तथा हि यथा साम्प्रतमेवानुमीयते वह्निस्तथैव साम्प्रतमेवानुमीयेते वृष्टी अपीति सर्वत्रैव अस्तीत्येव बुद्धिर्जायेत वह्निरस्तीति, वृष्टिरस्तीति चेति। न तु वह्निरस्तीत्येका बुद्धिः, वृष्टिरभूद् इति भिन्ना बुद्धिः, तथा वृष्टिर्भविष्यतीति च भिन्ना बुद्धिर्जायेतेति समाधातुराशयः। बुद्धीनां त्रैविध्यानुपपत्तौ निमित्तमाह– **प्रमाणसम्बन्धस्याभेदादिति**। प्रमाणसम्बन्धस्य भिन्नकालेष्वपि त्रिष्वेव विषयेषु वर्तमानकालिकत्वेन एकरूपत्वादिति भावः।

प्राक् प्रवृत्तमानावगम्यत्वमस्त्यर्थ इति पक्षो दूषितः। इदानीं वर्तमानमानावगम्यत्वमस्त्यर्थ इति पक्षान्तरमुत्थापयति – **स्वसम्बन्धितयेति**। ननु 'अस्ति' इति बुद्धेर्व्यपदेशस्य च विषयः प्राक्प्रवृत्तप्रमाणावगम्यत्वं मास्तु, उक्तात् त्रैविध्यानुपपत्तिदोषात्। वर्तमानमानावगम्यत्वमेव अस्त्यर्थोऽस्तु। अर्थाद् वर्तमानप्रमाणविषयतारूपा सत्तैव वेदान्तवाक्येन ब्रह्मणि प्रत्यायिता स्यात्, तावतैव वेदान्ते सापेक्षत्वं प्रसज्येतेति पूर्वपक्षाशयः। मानम् = धूमादिलिङ्गक-

**अथ मतम् – आत्मसम्बन्धितयैव प्रमाणेनार्थोऽवगम्यते। अतो न 'अस्ति' इति बुद्धेरुत्तरकालता प्रमाणसम्बन्धविषयाया अपि, स्वात्मसम्बन्धितयैवार्थस्य प्रतीतेः। एवमपि 'अस्ति' इत्येव सर्वत्र स्यात्, न त्रैविध्यम्, सर्वस्य प्रमितौ प्रमाणसम्बन्धस्य वर्तमानत्वात्। न चेत्थं प्रमाणान्तरव्यपेक्षत्वमस्त्यर्थनिष्ठे वचसि, तत्प्रमाणसम्बन्धस्यैवास्त्यर्थत्वात्।**

---

मनुमानप्रमाणं स्वात्मसम्बन्धितया = स्वविषयतया अग्निवृष्ट्यादि वस्तु बोधयति, यतः प्रमाणजातं स्वसम्बन्धितयैवार्थं विषयीकरोति। एतावताऽपि वेदान्तप्रतिपाद्यब्रह्मवस्तुनो मानावगम्यत्वरूपं सत्त्वमायातीति वेदान्ते सापेक्षत्वं दुर्वारमिति पूर्वपक्षकारिकाभागार्थः। अयमपि पक्षो न सम्भवी, यतो हि तथात्वेऽपि अस्तित्व-अतीतत्व-भविष्यत्त्वरूपत्रैविध्यं नोपपद्येत सर्वेषामपि वर्तमानकालिकेनैव प्रमाणेनावगम्यत्वात् त्रैविध्यानुपपत्तिदोषस्तदवस्थः।

किञ्च, इत्थं स्वीकारेऽपि स्वमानावगम्यत्वं वेदान्तविषयस्य भवतु नाम मानान्तरावगम्यत्वं तु नायातम्। तावतैव प्रमाणान्तरनिरपेक्षत्वरूपं प्रामाण्यं वेदान्तवाक्यस्य सुस्थिरमित्युत्तरकारिकार्थः।

कारिकार्थमेव विवृणोति – **अथ मतमिति**। प्रमाणेन अर्थः स्वसम्बन्धितयैवावगम्यते न निरपेक्षतया। अतः प्रमाणसम्बन्धविषयाया अपि 'अस्तीति' बुद्धेर्नोत्तरकालता = न पूर्वप्रमितविषयतेत्यर्थः। अत्रोपपत्तिमाह – स्वात्मनः प्रमाणस्वरूपस्य सम्बन्धितयैव विषयस्य प्रतीतेरित्यर्थः। उत्तरपक्षं विवृणोति – **एवमपीति**। सर्वस्य प्रमितौ = अस्तित्वस्य – अतीतत्वस्य – भविष्यत्त्वस्य च प्रमितावित्यर्थः। वर्तमानकालिकेनैव प्रमाणेन सदतीतानागतानां प्रतीयमानत्वादस्ति इत्येव बुद्धिः सर्वत्रापि स्यात्। अर्थाद् विभिन्नत्रिकालेष्वर्थेषु तत्प्रमाणावगम्यता तु वर्तमानैवास्ति, अतः अस्धात्वर्थविषयिणी बुद्धिस्त्रिधा न भिद्येतेत्याशयः। मानावगम्यत्वम् उपगम्याप्याह – **न चेत्थमिति**। अस्त्यर्थनिष्ठे सिद्धार्थबोधके वेदान्तवाक्ये न प्रमाणान्तरसापेक्षत्वं सिध्यति। तत्प्रमाणसम्बन्धितस्यैव अस्त्यर्थत्वात् 'अस्ति' इति बुद्धिविषयत्वादित्यर्थः। एवकारेण प्रमाणान्तरसम्बन्धित्वं व्यवच्छिन्नं भवति।

**अन्यमानावगम्यत्वमथ लिङ्गात् त्रिधेक्ष्यते।**

**स्याल्लिङ्गमपि सापेक्षं तत्सिद्धेस्तत एव चेत्॥ ३३॥**

**नैरपेक्ष्यं यदि न तद्वेदे दण्डैर्निवार्यते॥ ३३-१/२॥**

**अथ मतम् — प्रमाणान्तरगम्यतैव लिङ्गेनाधिगम्यते, तेन नोत्तरकालता। तच्च प्रमाणं त्रिकालमिति त्रैविध्यम्। किं पुनस्तत्? प्रत्यक्षम्। तथा हि — भूतायां वृष्टौ कस्यचिद् भूतं प्रत्यक्षम्, भविष्यन्त्यां भविष्यत्, वर्तमानेऽग्नौ वर्तमानमिति।**

---

प्रमाणान्तरावगम्यत्वमेव "अस्ति" इत्यादिबुद्धेर्विषय इति मतं पुनरुत्थाप्य दूषयति — **अन्यमानेत्यादिना "निवार्यते"** इत्यन्तेन कारिकाभागेन। अयं श्लोकार्थः — लिङ्गादन्यमानं प्रत्यक्षम्, तद्विषयत्वमेव अस्त्यर्थः सत्त्वं धूमादिलिङ्गगम्यम्। तच्च प्रमाणान्तरविषयत्वं धूमनदीपूरमेघोदयरूपात् त्रिविधाल्लिङ्गात् त्रिधाऽवगम्यते। अतो नानुपपत्तिस्त्रैविध्यस्येति मतम्। तद् दूषयति — **स्याल्लिङ्गमिति।** एवं सति लिङ्गप्रमाणमपि सापेक्षं प्रसज्येत, सापेक्षत्वेन तस्याप्यप्रामाण्यं स्यात्।

यद्युच्येत मानान्तरं तत् प्रत्यक्षमपि तत एव = लिङ्गादेव सिध्यतीति लिङ्गस्य नैरपेक्ष्यं चेत्, तद् वेदान्तवाक्येऽपि न दण्डैर्वारयितुं शक्यत इति कारिकार्थः।

कारिकार्थमेव विशदार्थीकरोति — **अथ मतमित्यादिना "इति समानम्"** इत्यन्तेन प्रघट्टकेन। अयमाशयः — धूमादिलिङ्गेन यद् वह्न्यादिसत्त्वमधिगम्यते, तद् न लिङ्गप्रमाणमात्रविषयः, किन्तर्हि? प्रमाणान्तरविषयतैव लिङ्गप्रमाणेनाधिगम्यते। तद्धि प्रमाणान्तरं प्रत्यक्षम्। तच्च त्रिकालम्। तथा हि — भूते विषये वृष्टौ भूतं कस्यचित् प्रत्यक्षम्, अनागते विषयेऽपि वृष्टौ कस्यचित् प्रत्यक्षमपि अनागतम्, वर्तमानविषये तु वह्नौ वर्तमानमेव प्रत्यक्षम्। अतः प्रत्यक्षस्य त्रिकालत्वात् तद्विषयताऽपि त्रिकालेति "अभूत्–अस्ति–भविष्यति" इति त्रिधा विषयता भिद्यत इति न त्रैविध्यानुपपत्तिः।

**एतच्च वार्तम्, नित्यानुमेये तस्याभावात्। अपि च, लिङ्गमप्येवं प्रमाणान्तरापेक्षत्वादप्रमाणं स्यात्।**

**अथ लिङ्गादेव प्रमाणान्तरसद्भावस्य सिद्धेर्निरपेक्षत्वम्। तथा हि– प्रमाणान्तरसद्भाव एवेदानीं लिङ्गं प्रमाणम्, न च तत्रान्यदपेक्ष्यते, प्रमाणसद्भावद्वारा प्रमेयसिद्धिरिति।**

**नायं विधिर्वेदे दण्डवारितः। वैदिकमपि वचोऽस्त्यर्थनिष्ठं विशिष्टार्थसद्भाव एव प्रमाणम्, तत्र निरपेक्षम्, तत्प्रमाणद्वारा च विशिष्टार्थसिद्धिरिति समानम्।**

---

इत्थञ्च अस्त्यर्थस्य प्रत्यक्षरूपप्रमाणान्तरविषयत्वे सिद्धे अस्त्यर्थनिष्ठानां शब्दात्मकवेदान्तानामपि प्रमाणान्तरापेक्षत्वध्रौव्याद् निरपेक्षप्रामाण्यं न स्यात्। अतस्तेषां प्रामाण्याय कार्यनिष्ठत्वं वेदान्तानामकामेनापि स्वीकार्यमिति पूर्वपक्षाशयः।

तद्दूषयति – **एतच्च वार्तमिति**। वार्तम् = वार्तामात्रम् अयुक्तमित्यर्थः। अयुक्तत्वमुपपादयति – **नित्यानुमेय इति**। एवं हि सति सर्वथाऽप्रत्यक्षेऽनुमानमात्रैकगम्ये परमाण्वादौ मानान्तरविषयता नास्तीति परमाणुर्नानुमानप्रमाणगम्यः स्यात्। किञ्चैवं सति वेदान्तानामिव धूमादिलिङ्गप्रमाणस्यापि प्रमाणान्तरसापेक्षत्वेनानुमानस्याऽप्यप्रामाण्यं प्रसज्येत।

ननु प्रमाणान्तरस्य प्रत्यक्षस्य सद्भावोऽपि लिङ्गादेव सिध्यतीति लिङ्गप्रमाणस्य निरपेक्षत्वं सुस्थिरमिति। तथा हि सर्वत्रानुमानादिगम्ये विषये प्रमाणान्तरसद्भावोऽस्तीत्यपि केनापि लिङ्गेनैव सिध्यति। यतः प्रमाणसद्भावद्वारैव प्रमेयं सिध्यति, नान्यथा। प्रमाणसद्भावसिद्धौ च लिङ्गं नान्यत् प्रमाणमपेक्षत इति निरपेक्षत्वं लिङ्गस्य।

अयमत्र सारः– संवादकप्रमाणान्तरानपेक्षत्वमेव निरपेक्षत्वम्। इह लिङ्गेन प्रमाणान्तरसद्भावसिद्धौ प्रमाणान्तरं संवादाय नापेक्ष्यतेऽपि तु स्वेनैव प्रमाणान्तरसद्भावःप्रमीयते। अतस्तत्प्रमितौ लिङ्गं निरपेक्षमेवेति यद्युच्येत– तदात्र

**तत्सम्भवो लैङ्गिकेऽर्थे बुद्धवाक्यार्थवन्न तु॥ ३४॥**

**अत्रेति साक्षात्करणाभ्युपायादसमञ्जसम्॥ ३४-१/२॥**

**स्यान्मतम् – युक्तं लिङ्गस्य प्रामाण्यमेवम्, अर्थे तस्य प्रमाणान्तरस्य सम्भवात्। सम्भवति हि वृष्ट्यादिषु प्रमाणान्तरम्, ततस्तद्द्वाराऽर्थगतिः, न तु सर्वविशेषातीते ब्रह्मण्याम्नायैकनिबन्धनेऽभ्युपगम्यते।**

**तन्न यथैव बुद्धादिवाक्यानाम 'एवमयं पुरुषो वेद' इति ज्ञान-निष्ठानामतीन्द्रियार्थे ज्ञानस्यासम्भववान्नर्थे प्रामाण्य-मतीन्द्रियार्थोपदेशिनाम्,-**

---

समाधानमाह – नायमिति। अयं नैरपेक्ष्यसाधनविधिर्वेदान्तवाक्येऽपि वर्तत एव, न तु लगुडेन वारितो भवति। अर्थात् लिङ्गप्रमाणमिव अस्त्यर्थनिष्ठं वेदान्तवाक्यमपि अद्वैतब्रह्मस्वरूपविशिष्टार्थसद्भाव एव प्रमाणं भविष्यति, निरपेक्षमेव सत्। अतो निरपेक्षभूतवेदान्तप्रमाणद्वारैव सत्यज्ञानानन्तस्वरूपविशिष्टब्रह्मसिद्धिरपि भविष्यतीति तुल्य एव पन्था लिङ्गप्रमाणवेदान्तवाक्ययोरिति बोध्यम्।

इदानीं वेदान्तलिङ्गयोर्न साम्यमिति पूर्वपक्षयति – **तत्सम्भव इति**। लैङ्गिके लिङ्गप्रमाणगम्येऽग्निवृष्ट्याद्यर्थे प्रमाणान्तरस्य प्रत्यक्षस्य सम्भवोऽस्ति। तेन तत्र प्रत्यक्षप्रमितिद्वारा वृष्ट्याद्यर्थसिद्धेः लिङ्गप्रमाणस्य प्रामाण्यं भवति। वेदान्तवाक्ये तु प्रामाण्यं न सम्भवति, वेदान्तवाक्यैकगम्येऽतीन्द्रिये ब्रह्मणि प्रमाणान्तरस्यासम्भवात्। यथा अतीन्द्रिये बुद्धवाक्यार्थे प्रमाणान्तरस्य तत्साधकस्याभावाद् बुद्धवाक्यस्य प्रामाण्यं न भवति, तद्वदिति पूर्वपक्षकारिकार्थः। तन्निराकरोति – **असमञ्जसमिति**। असामञ्जस्ये हेतुमाह – **साक्षात्करणाभ्युपायादिति**। वेदान्तेऽपि साक्षात्करणस्य = ब्रह्मस्वरूपानुभवस्य मानान्तरस्याभ्युपगमात्। तत्साक्षात्कारात्मकप्रमितिद्वारेण ब्रह्मस्वरूपसिद्धौ वेदान्तानामपि प्रामाण्यं निर्बाधमिति सिद्धान्तकारिकार्थः।

कारिकोक्तौ पूर्वोत्तरपक्षौ स्वयं विवृणोति ग्रन्थकारः – **स्यान्मतमिति**। सर्वविशेषातीत इत्यनेन ब्रह्मणोऽतीन्द्रियत्वमुक्तम्। अत एवाम्नायैकगम्ये ब्रह्मणि मानान्तरं नाभ्युपगम्यत इत्यर्थः। शेषं स्पष्टार्थम्। वेदान्तवाक्यानां प्रामाण्यासम्भवे

**तथाऽन्नापि स्यातद्ध । सम्भविप्रमाणविषयाप्तवचनवत्तु लिङ्गस्य प्रमाण निष्ठत्व ऽपि युज्यते प्रामाण्यम् ।**

**तदसत्, ब्रह्मण्यपि साक्षात्करणस्याभ्युपगमादविद्यासंहारे । अविद्यावतां तु तदाम्नायैकनिबन्धनमुच्यते ।**

---

दृष्टान्तोपस्थापनपूर्वकं लिङ्गस्य प्रामाण्यं सदृष्टान्तं निगमयति – तन्न यथैवेत्यारभ्य "युज्यते प्रामाण्यम्" इत्यन्तेन सन्दर्भेण । बुद्धादिवाक्यानाम् "एवमयं पुरुषो वेद" इत्याकारकज्ञाननिष्ठानां ज्ञाननिष्ठत्वेनापेक्ष्यमाणानां तथाविधज्ञानपर्यव-सितत्वेनापेक्ष्यमाणानां तथाविधज्ञानानुमापकानामिति यावत् । अतीन्द्रियार्थे बुद्धस्य ज्ञानं न सम्भवति, अतो बुद्धवाक्यानि "एवमयं बुद्धो वेद" इत्याकारकं ज्ञानं श्रोतरि जनयितुं न शक्नुवन्ति । एवं हि बुद्धवाक्यमतीन्द्रियार्थे प्रमितिं जनयितुं न शक्नोतीति यथा नातीन्द्रियार्थोपदर्शिनो बुद्धवाक्यस्य प्रामाण्यम्, तथा वेदान्तवाक्येऽपि न प्रामाण्यं स्यात्, सर्वविशेषातीतेऽतीन्द्रिये ब्रह्मस्वरूपे प्रमाणान्तरस्य द्वारभूतस्य प्रत्यक्षस्यासम्भवात् ।

लिङ्गस्य तु प्रमाणज्ञाननिष्ठत्वं सदृष्टान्तमुपसंहरति – **सम्भविप्रमाणेति** । सम्भवी प्रमाणविषयो यस्य तादृशं यद् आप्तजनवाक्यम्, तदिव सम्भविप्रत्यक्ष-प्रमाणविषयकं लिङ्गमपि प्रमाणनिष्ठं = प्रमाज्ञानजनकं भविष्यतीति लिङ्गस्य प्रामाण्यमुचितमेवेति पूर्वपक्षाशयः ।

निराकरोति – **तदसदिति** । अयं भावः – यथा सम्भविप्रत्यक्षप्रमाणविषयतया आप्तजनवाक्यवत् लिङ्गस्य प्रामाण्यमुपपाद्यते, तद्वद् ब्रह्मण्यपि अविद्यानाश-दशायां साक्षात्कारस्याभ्युपगमाद् वेदान्तवाक्यस्यापि प्रामाण्यमुपपद्यत एव । ननु ब्रह्मस्वरूपं साक्षाद् भाति चेत्, कथं तर्हि "आम्नायतः प्रसिद्धिं च कवयोऽस्य प्रचक्षते" इत्यत्र आम्नायैकगम्यं ब्रह्मेत्युच्यत इति शङ्कायामाह – **अविद्यावतामिति** । अविद्यानाशात् पूर्वमविद्यावतां कृत एव आम्नायैकनिबन्धनत्वं ब्रह्मण उच्यत इत्यर्थः । यद्यप्यात्मनः स्वप्रकाशतयाऽविद्यावतामपि आत्मा साक्षाद् भाति, तथापि स आत्मा ब्रह्मरूपेण न भाति, किन्तु अहङ्कारानुबद्धेन ज्ञेयरूपेणैव भाति । विद्यावतां तु निर्मुक्ताहङ्कारादिग्रन्थिस्वरूपेणैव भातीति विद्यावद्– विद्यावतोर्विशेषः ।

**अपि च,**

**मेयत्वमेव सत्ता चेन्माने त्रिविधता कुतः॥ ३५॥**

**तत्सम्बन्धादतो नार्थे त्रैविध्यमवकल्पते॥ ३५-१/२॥**

**यदि च लिङ्गेन प्रमाणमेव मीयते, मीयमानतैव च सत्ता, तत्र प्रमीयमाणत्वात् प्रमाणं सर्वं सदेव, सच्च वर्तमानमित्युच्यते। तत्र वर्तमानत्वात् प्रमाणस्य सर्वत्रार्थे 'अस्ति' इत्येव स्यात्, न प्रमाणत्रैविध्यादर्थे त्रैविध्यम्। मीयमानस्य सत्त्वात्, सतश्च वर्तमानत्वादिति।**

---

प्रमाणान्तरसम्बन्धस्य वस्त्वनुसारेण त्रैकाल्यात् ''अभूत्–अस्ति–भविष्यति'' इत्यर्थे त्रैविध्यमिति; तदप्ययुक्तमित्याह– **अपि च, मेयत्वमेव सत्तेति।** अयमर्थः– मेयत्वम् = मीयमानत्वमेव सत्ता चेद् अतीतादिस्थलेष्वपि यस्य कस्यचिज्जनस्य जातं जनिष्यमाणं वा प्रत्यक्षमपि लिङ्गेन मीयमानत्वात् सदेव स्यात्, यत् सत् तद् वर्तमानम्। अतस्तस्यैव त्रैकाल्यमसिद्धमिति तद्द्वारा कथमर्थस्य त्रैविध्यम्? प्रत्युत वह्निवृष्ट्यादीनां सर्वेषामर्थानां वर्तमानत्वमेव स्यात्। मेयत्वमेव यदि सत्ता, तदा अतीत-वर्तमान-भविष्यत्कालिकानि सर्वाण्यपि प्रत्यक्षाणि सदात्मकानि स्युः, सच्च वर्तमानं भवति। एवं रीत्या वह्निवृष्ट्यादिप्रमापकानि मानानि त्रिविधानि कथं भवेयुः? मानानां त्रैविध्यासम्भवादेव च अर्थेऽपि त्रैविध्यं नोपपत्स्यत इति कारिकायाः संक्षिप्तार्थः। अयमेवाभिप्रायो ग्रन्थकृता ''यदि च लिङ्गेन'' इत्यादिना विशदीकृतम्। तत्र = धूमनदीपूरादिलिङ्गकानुमानस्थले प्रमाणस्य वर्तमानत्वात् सर्वत्र = अग्निवृष्ट्यादिरूपेऽर्थे 'अस्ति' इत्येवं बुद्धिः स्यात्, न तु क्वचिदस्तीति; क्वचिदभूदिति, क्वचिच्च भविष्यतीति त्रिप्रकारा बुद्धिर्भवेदिति।

प्रमाणत्रैविध्यानुपपत्त्याऽर्थत्रैविध्यासम्भवमुपपाद्य स्वतोऽपि नार्थे त्रैविध्यं सम्भवतीत्युपपादयति– **मीयमानस्य सत्त्वात् सतश्च वर्तमानत्वादिति।** अयमर्थः– अतीतानागतवृष्टिरूपार्थोऽपि नदीपूरादिलिङ्गेन मीयमानः सदात्मक एव, सच्च

**अपि च, इदमयं प्रष्टव्यः — किं वर्तमानप्रमाणयोगः प्रमाणसम्बन्धः सत्ता, तद्विपर्ययोऽसत्ता, आहोस्वित् प्रमाणयोगमात्रम् अनाश्रित-कालविशेषम् ? तत्र —**

**वर्तमानप्रमायोगः सत्ताऽसत्ता विपर्ययः॥ ३६ ॥**

**मते यदि ततः प्राप्तमसत्त्वं स्मृतिगोचरे॥ ३६-१/२ ॥**

**न स्मर्यमाणस्य वर्तमानप्रमाणसम्बन्धः। ननु स्मर्यमाणे विनाशसम्भवान्नैव 'अस्ति' इति व्यवहारः, सत्यम्, 'नास्ति' इत्यपि नास्ति। यदि वर्तमान-प्रमाणयोगः सत्ता तद्विपर्ययोऽसत्ता, 'नास्ति' इत्येव स्यात्, न च 'अस्ति' इति। तस्मादन्ये सदसत्त्वे।**

---

वर्तमानं भवति । तथा च सर्वस्य वृष्ट्याद्यर्थस्य वर्तमानत्वाद् वह्निर्वर्तमानो वृष्टी चातीतानागते इति अर्थत्रैविध्यं न सम्भवतीति ।

"स्वसम्बन्धितया मानमथ वस्त्वधिगच्छति" इति पूर्वोक्तं प्रकारान्तरेण दूषयितुं विकल्पयति — **"अपि च, इदमयं प्रष्टव्यः"** इत्यादिना । विकल्पस्वरूपमाह — किं वर्तमानप्रमाणयोगरूपः प्रमाणसम्बन्धः सत्ता, तद्विपरीतो वा असत्ता अभिप्रेता ? अथवा अनाश्रितोऽतीतवर्तमानादिकालविशेषो यस्मिन् तथाविधं प्रमाणयोगमात्रं सत्ता, तद्विपरीता चासत्ता अभिमता ? इति वक्तव्यम् । अनयोर्विकल्पयोर्यदि वर्तमानप्रमाणयोगः सत्ता, वर्तमानप्रमाणयोगाभावश्चासत्ता इति सत्ताऽसत्ते अभिमते, तदा स्मृतिविषये = स्मर्यमाणेऽर्थे वर्तमानप्रमाणयोगाभावाद् असत्त्वं प्रसज्येत । प्रथमविकल्पे स्मर्यमाणेऽर्थेऽसत्त्वप्रसक्तिमुपपादयति — **न स्मर्यमाणस्येति** । स्पष्टार्थः । अत्र पूर्वपक्षी इष्टापत्त्या शङ्कते — **नन्विति** । स्मर्यमाणस्यार्थस्य विनाशः सम्भाव्यतेऽतस्तस्मिन् वस्तुनि अस्तित्वं व्यवहर्तुं न शक्यत इति तत्रासत्त्व-प्रसक्तिरिष्टैवेति चेत्, सत्यमुक्तम्, किन्तु विनाशनिश्चयाभावात् "नास्ति" इत्यपि व्यवहारो न भवति । यतो हि अनष्टस्यापि स्मृतिर्भवति, न तु नष्टस्यैवेति भावः ।

यद्युच्येत विनाशनिश्चयाभावदशायां क्वचित् सदपि स्मर्येत, का क्षतिरिति चेत्, तत्राह — **यदीति** । अयं भावः — स्मर्यमाणं वस्तु सद् वा भवतु, असद्वा

**प्रमाणयोगमात्रं चेत् सत्ताऽसत्ता विपर्ययः॥ ३७॥**

**प्राप्ता प्रमितनष्टेन घटेन मधुधारणा।**

**प्रमिते च न जिज्ञासा पुनः स्यात् सदसत्त्वयोः॥ ३८॥**

**अनाश्रितकालविशेषे प्रमाणयोगमात्रे सत्त्वे प्रमितनष्टमपि वस्तु सदिति तेनार्थक्रियाप्रसङ्गोऽनष्टेनेव, सत्त्वाविशेषात्।**

---

भवतु, यदि वर्तमानप्रमाणयोगः सत्ता तद्विपर्ययोऽर्थाद् वर्तमानप्रमाणायोगोऽसत्ता स्यात्, तदा स्मर्यमाणे वर्तमानप्रमाणयोगाभावात् 'नास्ति' इत्येव व्यवहारः स्यात्, तत्र 'अस्ति' इति व्यवहारस्तु नैव सम्भवति। अतः क्वचित् सदपि स्मर्येतेति कथनं न युज्यते। तस्माद् वर्तमानप्रमाणयोगायोगाभ्यामन्ये एव सत्त्वासत्त्वे इति युज्यत इति भावः।

प्रमाणयोगमात्रं सत्ता, तदभावोऽसत्ता इति द्वितीयविकल्पं दूषयति— **प्रमाणयोगमात्रं चेदिति**। प्रमाणयोगमात्रं सत्ता, तद्विपर्ययोऽर्थात् प्रमाणयोगमात्राभावोऽसत्तेति स्वीकारे पूर्वं प्रमाणावगतेन पश्चाद् नाशं प्राप्तेन घटेन मधुधारणं प्रसज्येत। एवं घटो यदि पूर्वमेव प्रमितस्तदा तद्विषये सत्ताया असत्ताया वा जिज्ञासैव नोदियादिति कारिकार्थः।

कारिकार्थमेव विशदयति— **अनाश्रितकालविशेष इति**। वर्तमानकालरूपविशेषणरहितं प्रमाणयोगमात्रं यदि सत्त्वं स्वीक्रियते तदा कदाचित् प्रमितं पश्चान्नष्टमपि घटादिवस्तु सत् स्यात्, सत्त्वाच्च नष्टेनापि कुम्भेन मधुधारणादिरूपाऽर्थक्रिया तथैव प्रसज्येत यथाऽनष्टेन वर्तमानघटेन मधुधारणं भवति। प्रसङ्गे हेतुमाह— **सत्त्वाविशेषादिति**। यतः प्रमाणसम्बन्धमात्रं सत्त्वन्त्वेकदा प्रमितत्वे सति नष्टेऽनष्टे चोभयत्रैव घटे समानरूपेण वर्तते, अत इति भावः। तस्माद् न प्रमाणसम्बन्धमात्रं सत्तेति।

नन्वेको घटो नष्टस्तत्र नष्टत्वं विशेषः, अपरश्च अनष्ट इति तत्र अनष्टत्वं विशेषः। तथा च नष्टत्वानष्टत्वरूपविशेषसद्भावान्न अनष्टघटवद् नष्टघटे

**नष्टानष्टयोर्विशेषान्नैवमिति चेत्, स एव तर्हि विशेषः सदसद्-व्यवहारव्यवस्थाया हेतुः कार्यव्यवस्थाया इव, न प्रमाणयोगः। तदनुसारिण्येवैषा दृश्यते लोके। न खलु प्रमितनष्टं 'सत्' इत्युपचरति लोकः। किञ्च प्रमितेऽर्थे सदसत्त्वे जिज्ञासेरन् न पुनर्लौकिकाः, सिद्धत्वात् प्रमाणयोगमात्रस्य तल्लक्षणत्वाच्च सत्त्वस्य।**

**अथ प्रमाणयोग्यत्वं सत्त्वं नष्टाच्च तच्च्युतम्।**
**स्मर्यमाणे प्रचलितं क्वचिदित्यप्यसुन्दरम्॥ ३९॥**

---

मधुधारणं प्रसङ्क्ष्यत इति चेत्, तर्हि नष्टत्वानष्टत्वरूपविशेष एव एकत्र घटे सद्व्यवहारस्य, अन्यघटेऽसद्व्यवहारस्य च व्यवस्थायां हेतुर्भविष्यति, यथा च स विशेषो मधुधारणाधारणरूपकार्यस्य व्यवस्थायां हेतुर्भवति, तद्वत्। अतो न प्रमाणयोगः सत्तायाः, तदयोगश्चासत्ताया व्यवस्थापको भवितुं योग्यः। तदनुसारिण्येव = नष्टत्वानष्टत्वरूपविशेषानुसारिण्येव एषा = सदसद्व्यवहारव्यवस्था लोके दृश्यते, न तु प्रमाणयोगायोगानुसारिणी एषा व्यवस्था लोके दृश्यते। यतो न हि लोकः प्रमितनष्टं घटं प्रमाणयोगमात्रात् 'सत्' इति परं प्रत्युपदिशति स्वयं जानाति वेति।

किञ्च प्रमितविषयसम्बन्धे सन् स विषयोऽसन् वेति पश्चात् लौकिकानां जिज्ञासाऽपि कदाचिन्न स्यात्, प्रमितत्वेन सत्त्वस्यैव सिद्धत्वाद् निश्चितत्वात्, प्रमाणयोगमात्रस्यैव च सत्त्वलक्षणत्वादिति भावः। एतेन वेदान्तवाक्यैः सद्ब्रह्मबोधने ब्रह्मणः सत्त्वार्थं प्रमाणयोगो नापेक्षित इति सद्ब्रह्मबोधने निरपेक्षं प्रामाण्यं वेदान्तवाक्यानामिति पर्यवसन्नम्।

सत्त्वस्य लक्षणान्तरमाशङ्क्य दूषयति– **अथ प्रमाणेति**। अयमर्थः कारिकायाः– ननु प्रमाणयोग्यत्वमेव सत्त्वं तच्चार्थधर्मः, स च धर्मोऽर्थे धर्मिणि नष्टे सति तस्मादर्थात् च्यवते। अतो न नष्टस्यार्थस्य प्रमाणयोग्यत्वमिति नष्टेऽर्थे प्रमाणयोग्यत्वरूपस्य सत्त्वस्य न प्रसक्तिः। स्मर्यमाणे चार्थे क्वचिदेव तत् सत्त्वं

**अथ मतम् – न वर्तमानप्रमाणयोगः सत्ता, नानाश्रितकालं तद्-योगमात्रम्, अपि तु प्रमाणं प्रति योग्यता, सा च नष्टाच्च्युतेति न तस्य सत्त्वप्रसङ्गः। स्मर्यमाणे तु कुतश्चिच्च्युता कुतश्चिन्नेति न सर्वस्या-सत्त्वमिति।**

**एतदपि न सुन्दरम्, अभ्युपगतहानात्। तथा हि – इत्थमर्थ-स्वभाव एव सत्ता वर्णिता भवति, प्रमाणयोग्योऽर्थस्वभावः सत्ता। अर्थस्वभावनिबन्धन एव सदसद्व्यवहारविभागः, न प्रमाणतदभावोपाधिः। तस्य त्वेष कथनोपायः, न प्रमाणसंस्पर्शः। यथा 'नीलाकारज्ञानयोग्योऽर्थो नीलः' इत्याख्यातेऽपि न नीलशब्दो नीलज्ञानोपाधिः।**

---

'प्रचलितं' व्यभिचरितं न सर्वत्र। तस्मात् स्मर्यमाणे विषये सत्त्वस्य संशयो भवितुमर्हति न तु तदभावनिश्चय इति न सर्वस्यासत्त्वमिति। इमं पूर्वपक्षं दूषयति श्लोके – **इत्यप्यसुन्दरमिति**। 'अथ मतम्' इत्यारभ्य 'न सर्वस्यासत्त्व'-मित्यन्तग्रन्थेन कारिकोक्तः पूर्वपक्षो विवृतः। तदप्यसुन्दरमिति कारिकोक्तं सिद्धान्तं विवृणोति – **एतदपि न सुन्दरमिति**।

एतन्मतस्याशोभनत्वे हेतुमाह – **अभ्युपगतहानादिति**। हेत्वर्थं विवृणोति – **तथा हीति**। अयं भावः– एतद्रीत्या अर्थस्वभाव एव सत्तेति सम्प्रति वर्ण्यते, स चार्थस्वभावः प्रमाणयोग्यतारूप इति च वर्ण्यते। अस्यां स्थितावर्थस्वभावप्रयुक्त एव सद्व्यवहारस्य असद्व्यवहारस्य च विभागः, न तु त्वयैव पूर्वमभ्युपगतः प्रमाणसद्भावप्रमाणासद्भावकृतः सत्ताऽसत्ताव्यवहारविभागः। अतः स्फुटाऽत्र तवाभ्युपगतहानिरिति। मूले प्रमाणयोग्य इति पदं भावप्रधानमतः प्रमाणयोग्यताऽर्थस्वभावः सत्तेति वाक्यार्थो बोध्यः। ननु प्रमाणयोगं विहाय प्रमाणयोग्यता सत्ता इत्युक्तावपि प्रमाणान्तरसंस्पर्शोऽस्त्येवेति सद्ब्रह्मबोधकानां वेदान्तवाक्यानां प्रमाणान्तरसापेक्षत्वं दुर्वारमेवेत्याशङ्कायामुत्तरमाह – **तस्य त्वेष इति**। अयं भावः– वस्तुगत्या अर्थस्वभावभूता योग्यतैव सत्ता, तथापि

**तथा च सोऽस्तिशब्देनाभिधीयत इत्यर्थस्वभावनिष्ठमस्त्यर्थप्रधानं वाक्यमिति कुतः सापेक्षत्वम् ? प्रमाणस्यासंस्पर्शात् ।**

**स्यादेतत् – भिन्ना एवार्थस्वभावाः प्रमाणं प्रति योग्याः सच्छब्द-वाच्याः स्युः, नैका सत्ता । मा भूत्, नैतत् साध्यम् । सर्वथाऽर्थस्वभावाभि-धायी 'अस्ति'शब्दो न प्रमाणयोगनिमित्त इति ।**

---

निर्विशेषायाः सामान्यतो योग्यताया प्रतिपत्तुमशक्यत्वेन 'प्रमाणयोग्यता' इति कथनं योग्यताप्रतिपत्तेरुपायमात्रमस्ति, न तु योग्यता प्रमाणसंस्पृष्टा, प्रत्युत प्रमाणाद् बहिरेव अर्थस्य स्वभावभूता सा । अतो न तस्यां प्रमाणसंस्पर्शोऽस्ति ।

अयमभिप्रायः– अर्थगता योग्यता सत्ता इत्युक्ते या काचिद् योग्यता न प्रतीता भवेदिति तद्विशेषप्रतिपत्तये प्रमाणयोग्यता इत्याख्यायते, न तु प्रमाणं योग्यताशरीरान्तर्भूतम्, येन योग्यतारूपायां सत्तायां प्रमाणं विशेषणं स्यात् । कथनमात्रेण नोपाधिः (न विशेषणं) भवति, इत्यत्र दृष्टान्तमाह– **यथा नीलाकारेति** । नीलपदार्थः स्वरूपतो यथाभूत एवास्ति तथापि तस्य प्रतिपत्तये नीलाकारज्ञानयोग्यो योऽर्थः स नील इति कथ्यते, न तु नीलस्वरूपे नीलाकारेत्यादि-विशेषणमपि सन्निविष्टं भवति, तद्वत् सत्तास्वरूपभूतायां योग्यतायां प्रमाणं न सन्निविष्टं भवतीति ।

निष्कर्षमाह – **तथा चेति** । सः = अर्थस्वभावः । अर्थात् सः = अर्थस्वभावः अस्तिशब्देनाभिधीयते घटोऽस्ति पटोऽस्तीत्यादिवद् ब्रह्मास्तीति । तस्मादर्थस्वभाव-भूतसत्तानिष्ठम् = अस्त्यर्थभूतसत्ताप्रधानं "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि-वेदान्तवाक्यमस्ति न तु प्रमाणसंस्पर्शप्रधानं तत् । तस्माद् वेदान्तवाक्यस्य न कथमपि सापेक्षत्वमस्ति, प्रमाणसंस्पर्शस्य सर्वथैवाभावादिति ।

पुनः पूर्वपक्षी शङ्कते – **स्यादेतदिति** । अयं भावः– अर्थस्वभावः सत्ता भवतु नाम, तथापि नाद्वैतब्रह्मवादिन एका सत्ता सिध्यति । किन्तु भिन्ना-नामर्थस्वभावानां समुपलम्भाद् बह्व्यः सत्ताः प्रमाणयोग्याः सच्छब्दवाच्याः सिध्येयुरिति । अस्यां शङ्कायां समाधानमाह – **मा भूदिति** । एका सत्ता न

**प्रमाणसंस्पर्शे हि सापेक्षता स्यात्। अनेकता तु न कञ्चिद् दोषमावहति।**

**अपि च, यदि तस्यानेकत्वम्, कथमभिन्नशब्दप्रवृत्तिः? तथा हि — भिन्नेष्वभिन्नं विशेषणमुपलक्षणं वाऽऽश्रित्यैकः शब्दो वर्तेत, भिन्ननिमित्तो**

---

सिध्येन्नाम। नैतन्ममास्ति साध्यं यदेका सत्तेति। तर्हि किमस्ति साध्यमिति जिज्ञासायां स्वेन यत् साधनीयं तदाह — **सर्वथेति**। अर्थस्वभाव एव सर्वथा 'अस्ति' शब्दार्थः, न प्रमाणयोगनिमित्तः 'अस्ति' शब्दः। प्रमाणयोगः प्रवृत्तिनिमित्तं यस्य 'अस्ति' शब्दस्य, स प्रमाणयोगनिमित्त इति व्युत्पत्त्या 'प्रमाणयोग्यता सत्ता न' इत्येतावन्मात्रं मम साध्यमस्ति। अर्थस्वभाव एकोऽस्तु, नाना वास्तु इत्यत्र सम्प्रति मे नाग्रहः। कथं तर्हि 'प्रमाणयोगनिमित्तः 'अस्ति'- शब्दो न, इति साधने यत्नः क्रियत इति शङ्कायां हेतुमाह — **प्रमाणसंस्पर्शे हीति**। अयमभिप्रायः — प्रमाणसंस्पर्शे सति वेदान्तवाक्यानां प्रमाणान्तरसापेक्षता स्यात्, तेन च वेदान्तानां निरपेक्षप्रामाण्यं न स्यात्। अतो वेदान्तवाक्यानां प्रामाण्यस्थैर्यार्थमेव मम तथा प्रयासः। अनेकता तु सत्ताया भवन्ती अपि न वेदान्तानां प्रामाण्ये काञ्चित् क्षतिं करोतीति समाधातुराशयः।

सत्तैकत्वसाधनं नाभिप्रेतमिति यदुक्तं सिद्धान्तिना, तदभ्युपगमवादेन उक्तम्। वस्तुतस्तु सत्ताया एकत्वमेव वेदान्तिनोऽभिप्रेतमिति सत्ताया अनेकत्वेऽनुपपत्तिमुपस्थापयति सिद्धान्ती — **अपि चेत्यादिना**। अयमर्थः — तस्यार्थस्वभावस्य = सत्ताया इति यावद् यदि अनेकत्वं स्यात्, तदा भिन्नेषु अर्थस्वभावात्मकेषु सत्त्वेषु 'सत्' इत्यभिन्नः शब्दः कथं प्रवृत्तः स्यात्? प्रश्नविषयं स्पष्टयति — **तथा हीति**। अयं भावः — किं! यथा विभिन्नगोव्यक्तिषु एको गोशब्दः, दण्डिषु नानासु एको दण्डिशब्दः, शकट–विदेवनेन्द्रिय–विभीतकेषु चैकोऽक्षशब्दः प्रवर्तते तद्वदेव विभिन्नार्थस्वभावेषु एकः 'अस्ति'-शब्दः प्रवर्तिष्यते, इति मन्यते? मैवं युक्तम् — यतो हि नानागोव्यक्तिषु एकं गोत्वविशेषणमाश्रित्य एको गोशब्दः प्रवर्तेत, नानादण्डिषु समानजातीयमेकं

**वा साधारणशब्दः स्यादक्षादिवत्। तत्र न तावदनन्तार्थस्वभावेषु साधारणत्वमुपपद्यते, सम्बन्धग्रहणसामर्थ्याभावात्। परिमितजातिविषया ह्यक्षादिशब्दाः परिमितोपलक्षणलक्षिता वा स्युः।**

**स्यादेतत्—द्रव्यत्वादिसामान्यत्रयोपलक्षितानामर्थानां सच्छब्दः साधारण इति, तन्न, यो हि सत्तामवजानीते स द्रव्यत्वादीन्यप्यवजानीत एव।**

---

दण्डरूपमुपलक्षणमाश्रित्य च एकः 'दण्डि' शब्दः प्रवर्तितुं कामं शक्नुयात्। एवं शकटत्व–द्यूतत्वेन्द्रियत्व–विभीतकत्वरूपविभिन्नजातीयेषु शकटाद्यर्थेषु साधारणः 'अक्षः' इति शब्दोऽपि प्रवर्तितुं कामं शक्नुयात्। अर्थाद् अनन्तास्वपि गो-शकटादिव्यक्तिषु गोत्वादिसामान्यं पुरस्कृत्य 'गौः', 'अक्षः' इत्यादि साधारणः शब्दः कामं प्रवर्तेत, तथापि प्रकृते न सम्भवति, नानार्थस्वभावेषु सत्तां विहाय अन्यस्य एकस्य निमित्तस्याभावात्, सत्तायाश्च भवतैवानेकत्वस्वीकारात्। तथा च किं विशेषणमुपलक्षणं वाऽऽश्रित्य भिन्नेष्वर्थस्वभावेषु एकः 'अस्ति' इति शब्दः प्रवर्तेतेति अनन्तेष्वर्थस्वभावेषु 'अस्ति' शब्दस्य सम्बन्धग्रहणसामर्थ्या-भावात्, गोत्वादिवद् एकस्याः सत्ताया पूर्वपक्षिणाऽनङ्गीकारात्। अक्षशब्दस्तु शकटत्वादिपरिमितजातिविषयतया परिमितोपलक्षणलक्षिततया वा चतुर्विधेष्वर्थेषु शक्यसम्बन्धग्रहः। अर्थस्वभावानां त्वनन्ततया न तेषु 'अस्ति' शब्दस्य सम्बन्धग्रहणसामर्थ्यमिति तात्पर्यम्। इत्याह— "**तथा ही**"त्यादिना '**लक्षिता वा स्युः**' इत्यन्तेन ग्रन्थेन।

'सत्' इत्येकशब्दप्रवृत्तौ निमित्तमुपन्यस्यति पूर्वपक्षी— **स्यादेतदिति**। अयं भावः—भिन्नेष्वर्थस्वभावेषु द्रव्यत्व-गुणत्व-कर्मत्वरूपधर्मत्रयमुपलक्ष्यीकृत्य सच्छब्दः साधारणः प्रवृत्तो भविष्यतीति पूर्वपक्षार्थः। तन्निराकरोति— **तन्नेति**। अयं भावः— द्रव्यत्वादिरूपधर्मत्रिकसाङ्कर्यमेव सत्ता, द्रव्यत्वादित्रिकसाङ्कर्यं च द्रव्यत्वेन गुणत्वेन, कर्मत्वेन च सत्तायाः साङ्कर्यम्, सत्तावन्तस्त्रयस्त्वाद्या इति न्यायात्। न ततोऽन्या सत्ता इत्येवं रीत्या सत्तामेकां योऽपह्नुते, स द्रव्यत्वादीन्यपि अपह्नोत्येव। यतो द्रव्यत्वमपि पृथिवीत्वजलत्वादिनवकसाङ्कर्यमेव भविष्यति,

**न किल तेजो दृष्टवतोऽप्सु तदवमर्शो भवति । अपि च सामान्यविशेषसमवाया अपि सन्त एव। न तेष्वौपचारिकः सच्छब्दः, प्रत्ययस्यावैलक्षण्यात्। न च सामान्याद् विनोपचारः। सति वा सामान्ये तदेव सच्छब्दार्थः। तदेव च सत्ता, तुल्यत्वात् प्रत्ययस्य।**

---

न ततोऽन्यदिति । तदेवोपपादयति – **न किलेति**। द्रव्यत्वादिकं दृष्ट्वा सत्तामिव पृथिवीत्वतेजस्त्वादि दृष्ट्वा न तेभ्योऽतिरिक्तं द्रव्यत्वमपि परामर्शयिष्यतीति सत्तान्यायेन द्रव्यत्वादेरपि अपह्नवः प्रसज्येतेति भावः। अथवा तेजो द्रव्यत्वेन दृष्टवतो जनस्य जले द्रव्यत्वपरामर्शो न भवतीति जले द्रव्यत्वापह्नवः। एवमेव जलं द्रव्यमिति दृष्टवतोऽपि तेजसि द्रव्यत्वापह्नवो भवतीति वाऽर्थः। तदवमर्शः = द्रव्यत्वावमर्श इत्यर्थः। सोऽयं सत्तान्यायेन द्रव्यत्वादेरप्यपह्नव-प्रसक्तिरिति बोध्यम्।

द्रव्यत्वादेर्न सच्छब्दप्रवृत्तिनिमित्तत्वमित्यत्र युक्त्यन्तरमाह– **अपि चेति**। सामान्यविशेषसमवायेष्वपि सच्छब्दः प्रयुज्यते 'सत् सामान्यं सन् विशेषः सन् समवायः' इति। अतो न द्रव्यत्वादित्रयमेव सच्छब्दप्रवृत्तिनिमित्तमित्यर्थः। न च सामान्यादौ सच्छब्द औपचारिकः (लाक्षणिकः) सत्तया सहैकत्र सामानाधि-करण्यवशादेव सत् सामान्यमिति व्यवहार इति वाच्यम्, सद् द्रव्यमिति प्रतीतेः सत् सामान्यमिति प्रतीतौ वैलक्षण्याभावाद् एकस्यौपचारिकत्वे विनिगमनाविरहात्।

एवम्, किञ्चित् सामान्यं (समानधर्मं) दृष्ट्वा उपचारो भवति, यथा सिंहमाणवकयोः शौर्यं समानधर्मं दृष्ट्वैव माणवके सिंहशब्द उपचर्यते। प्रकृते द्रव्यत्वादित्रिके सामान्यादित्रिके च न कश्चित् समानो धर्मोऽस्ति, येन द्रव्यादौ प्रयुज्यमानस्य सच्छब्दस्य सामान्यादावौपचारिकः प्रयोगः स्यात्। यदि चास्ति कश्चित् समानो धर्मस्तदा स एव सच्छब्दस्यार्थः, स धर्म एव च सत्ता स्यात्, द्रव्यादिषु सामान्यादिषु च तुल्याया एव 'अस्ति' इति प्रतीतेर्दर्शनादिति। एतदेवोक्तम्– **सति वा सामान्ये इति**। समानधर्मे सतीति तदर्थः। 'अस्ति' इति प्रत्ययस्य तुल्यत्वात् = उभयत्र तुल्यत्वादित्यर्थः।

**अथ मतम् – सर्वप्रवादेषु सर्वपदार्थाः परिमितैः कैश्चिद् धर्मैरुप-सङ्गृहीताः। तदुपलक्षणानामनन्तानामप्यर्थानां 'सत्' इति साधारणः शब्दः। तदयुक्तम् – सङ्ग्रहो हि नैकमन्तरेण। तत्र यदि सच्छब्दतायां सङ्ग्रहः 'एतावत्प्रभेदः सच्छब्दार्थः' इति, नार्थान्तरनिवृत्तिः स्यात्। तत्र न सर्वार्थसङ्ग्रहः स्यात्, यथा 'नवविधो गोशब्दार्थः' इति नान्येषाममभाव एव। तत्र न प्रवादेभ्यः काचिदर्थतत्त्वावगतिः स्यात्।**

---

'सत्' शब्दस्य प्रकारान्तरेण साधारणत्वं साधयति पूर्वपक्षी – **अथ मतमिति**। सर्वप्रवादेषु सर्वमतेष्वित्यर्थः। सर्व एव अर्थाः कैश्चित् परिमितैरेव द्रव्यत्वादिधर्मैर्यथा बौद्धानां पञ्चस्कन्धकादिनां पञ्चभिः, वैशेषिकाणां च षड्भावपदार्थवादिनां षड्भिर्वा सङ्गृहीताः सन्तो दृश्यन्ते।अतो द्रव्यत्वादिधर्मैरुप-लक्षितानामर्थानाम् अनन्तानामपि उपसङ्ग्राहको भवति 'सत्' इति शब्दः साधारणः। ते च धर्मा यथा – गुणवत्त्वं सर्वेषां द्रव्याणां सङ्ग्राहकं भवति। एवं गुणत्वं सर्वगुणानां सङ्ग्राहकं भवति। एवमेव अनुवृत्तप्रत्ययहेतुत्वरूप-सामान्यत्वधर्मेण सङ्गृहीतानि सर्वसामान्यानि, अत्यन्तव्यावृत्तबुद्धिहेतुत्वधर्मेण सङ्गृहीता अनन्तविशेषाश्च 'सत्' शब्देन साधारणेन व्यवह्रियन्त इति। एवं-बौद्धप्रवादे रूपस्कन्धत्वादिपञ्चकं जगद्वस्तूनि उपसङ्गृह्णाति। तथा चैवमादयो धर्मा एव 'सत्ता' इति शब्दस्य प्रवृत्तिनिमित्ततया बोध्या इति पूर्वपक्षाशयः।

तदपि न युज्यत इत्याह सिद्धान्ती – **तदयुक्तमिति**। तत्रापि एको धर्मः कश्चिदाश्रयणीयो भवति सङ्ग्राहको द्रव्यत्वादिरूपः। एवमेव च नरत्वेनैकेन उपसंह्रियन्ते सर्वे ब्राह्मणादयो वर्णाः, रसत्वेन च सर्वे रसाः शृङ्गारादयः। तत्रैतेषां पदार्थानां द्रव्यत्व-गुणत्व-नरत्व-रसत्वादिसङ्ग्राहकैः परिमितधर्मैरुपलक्षितानां द्रव्याणां गुणानां नराणां नवरसादीनां च यदि सच्छब्दवाच्यत्वेन सङ्ग्रहो भवति 'एतावत्-प्रकारः सच्छब्दार्थ' इति, तावता न तदतिरिक्तप्रकाराणां निवृत्तिर्भवति। प्रत्युत तेभ्योऽतिरिक्ता अपि प्रकाराः 'सत्' शब्देन सङ्गृह्यन्त एव लोके। अर्थात् ''गोशब्दः पशु-भूम्यंशुर्वा दिगर्थः प्रयुज्यते। स्वर्ग-लोचन-बाणाम्बु-कुलिशार्थोऽपि

**ननु न प्रवादानामर्थवत्ता साध्या। न ब्रूमः, प्रवादानामर्थवत्ता साध्येति, किन्तु प्रतिपद्यन्ते प्रवादिनः कञ्चिदर्थस्वभावमेकम्, यस्यायं "पञ्च, षट्" इत्यादिप्रभेदसङ्ग्रहः। यतो नैकमन्तरेणोपसङ्ग्राहकमवान्तरसंख्यानां निवेशः।**

---

दृश्यते"।। इति प्रतापकोशानुसारं नवविधो गोशब्दार्थः सच्छब्दवाच्यो नवविधो रसशब्दार्थः सच्छब्दवाच्य इति रीत्या सङ्ग्रहे क्रियमाणेऽपि गोशब्दार्थातिरिक्तानां रसशब्दार्थातिरिक्तानां च सच्छब्दवाच्यत्वाभावो न भवति। अतो भवदुक्तरीत्या परिमितैः कतिपयधर्मैरुपसङ्गृहीतानां सच्छब्दवाच्यत्वकथने सर्वेषां पदार्थानां सच्छब्दवाच्यत्वेन सङ्ग्रहो न भवितुं शक्नुयात्। तस्मात् कतिपयप्रवादबलाद् वस्तूनां कश्चित् तत्त्वावबोधो न सम्भवीति प्रवादा निरर्थका एव तत्त्वावबोध इति सारः।

परः शङ्कते – **ननु नेति**। बौद्धवैशेषिकादिप्रवादानां यद्यर्थवत्त्वं साध्यं भवेत्, तदा उक्तरीत्या प्रवादानां नैरर्थक्यं प्रसज्येतेति दोषापादनं शोभेत। किन्तु प्रकृते प्रवादानामर्थवत्ता न साध्याऽस्ति, प्रत्युत सच्छब्दस्य साधारणत्वाभाव एव वेदान्तिना साधनीयः। स च वेदान्तिनोऽभिप्रायो न सेद्धुमर्हति, यतः परिमितै रूपस्कन्धत्वादिभिर्द्रव्यत्वादिभिश्च पञ्चप्रकारैः षट्प्रकारैश्च सच्छब्दस्य साधारणत्वमुपपद्यत एव मतभेदेन पञ्चविधाः षड्विधाश्च अर्थाः सन्तीति पूर्वपक्षाशयः।

अत्राह सिद्धान्ती– **न ब्रूम इति**। अनभिज्ञो भवान् ममाभिप्रायस्य, न वयं तेषां प्रवादानामर्थवत्तां साधयितुं प्रवृत्ताः। स्वप्रवादानां सार्थक्यसाधनं तेषामेव कार्यम्। वयं त्वेतद् ब्रूमहे यद् वस्तूनां "पञ्च, षट्, पञ्चविंशति" इत्यादिप्रभेदसङ्ग्रहं कुर्वाणास्ते बौद्धकाणादकापिलादयः कञ्चिदेकमर्थस्वभावमङ्गीकुर्वन्तीति। अत्रोपपत्तिमाह – **यतो नैकेति**। अर्थाद् यथा "षड् गावः" इति प्रतिपत्तौ षट् संख्यायाः सन्निवेशो गवामुपसङ्ग्राहकमेकं गोत्वं विना न सम्भवी, तथैव स्वाभिमततत्त्वसङ्ग्रहेऽपि "पञ्च, षट्, पञ्चविंशतिः"

**अथ एतावान् प्रमाणयोग्योऽर्थक्रियासामर्थ्यो वेति प्रमाणयोग्यत्वेऽर्थ-क्रियासामर्थ्ये वा सङ्ग्रहः। ताभ्यामेव सच्छब्दार्थ उपलक्ष्यताम्, व्यर्थः परिमितधर्मोपन्यासः। तत्र सामान्यशब्दतैव स्यात्, न साधारण-शब्दता।**

---

इत्यादिसंख्यासन्निवेशः सङ्ग्राहकमेकं सामान्यधर्मं विना न भवितुमर्हति। अतस्ते प्रवादिन एकं किञ्चित् सामान्यं = साधारणधर्ममवश्यं प्रतिपद्यन्ते, स च साधारणो धर्मः सत्तास्त्येका। बौद्धा विज्ञानवादिनो रूपविज्ञानवेदनासंज्ञासंस्काराख्याः पञ्चपदार्थाः सन्तीति प्रतिपद्यन्ते, काणादा द्रव्यगुणकर्मसामान्यविशेषसमवायाः षट् पदार्थाः सन्तीति प्रतिपद्यन्ते, सांख्याश्च प्रकृतिमहदहङ्कारपञ्चतन्मात्र-पञ्चमहाभूतैकादशेन्द्रियाणि पुरुषश्चेति पञ्चविंशतिः पदार्थाः सन्तीति प्रतिपद्यन्ते। मूले संख्यायामवान्तरत्वविशेषणम् एतावन्त एव पदार्थाः प्रामाणिका इत्यवधारणार्थमुक्तमिति ज्ञेयम्। एवं हि सर्वैरेव तैः स्वस्वाभिमतपदार्थेषु सत्ताख्य एकः साधारणो धर्मः प्रतिपद्यत इति तान् प्रति बोधनमेव ममाभीष्टं न तत्प्रवादानामर्थवत्तासाधनमिति भावः।

ननु मा भूत् सत्त्वमेकमुपसङ्ग्राहकं सामान्यं "पञ्च, षट्" इत्यादि-संख्यासन्निवेशनिमित्तम्, प्रमाणयोग्यत्वमर्थक्रियाकारित्वं वा एकमुपसङ्ग्राहकं भविष्यतीति शङ्कते – **अथेति**। 'अर्थक्रियासामर्थ्यः' इत्यत्र अर्थक्रियायां सामर्थ्यं यस्येति बहुव्रीहिणा व्याख्येयम्। प्रमाणयोग्यत्वे अर्थक्रियासामर्थ्ये इति निमित्तसप्तम्यौ बोध्ये। शङ्कामिमां निरस्यति – **ताभ्यामिति**। अयमाशयः – यदि च वस्तुमात्रवृत्ति प्रमाणयोग्यत्वम् अर्थक्रियाकारित्वं वा उपसङ्ग्राहकं निमित्तमभ्युपगम्यते, तदा ताभ्यामेव 'अस्ति' इति सच्छब्दार्थ उपलक्ष्यताम्, यत् प्रमाणयोग्यमर्थक्रियासमर्थं च, तत् सच्छब्दार्थ इति। अर्थात् ते एव 'सत्' शब्दस्य प्रवृत्तिनिमित्ते भवेताम्। रूपस्कन्धत्वादेः, द्रव्यत्वादेः, प्रकृतित्वादेश्च परिमितधर्माणां सच्छब्दप्रवृत्ति-निमित्ततयोपन्यासो व्यर्थ एवेति समाधानाशयः।

**भिन्ननिमित्तत्वे चाक्षादिशब्देभ्य इव निमित्तभेदात् संशयः स्यात्, न विशेषप्रतीतिः। न हि 'सन् घटः' इति निमित्तभेदेषु प्रतिपत्तारः संशेरते। यथैव 'शुक्लः पटः' इति निराकाङ्क्षः, तथा 'सन् घटः' इत्यपि।**

---

यद्युच्येत, एवमेवास्तु यत् प्रमाणयोग्यत्वमर्थक्रियासामर्थ्यमेव वा सर्वत्रानुगतं सद् अनुगतव्यवहारकारणमस्तु, तथापि च एकस्या अनुगतायाः सत्ताया नैवावसरः सिध्यतीति चेत्, आह– **तत्रेति**। तथा स्वीकारेऽपि प्रमाणयोग्यत्वार्थक्रियासामर्थ्यशब्दौ 'गो'शब्दवत् सामान्यशब्दमात्रं भवेताम्। न तयोः साधारणशब्दताऽक्षादिशब्दवत्। तदर्थक एव च 'सत्ता'शब्दोऽपि भवता किमिति न स्वीक्रियेत। एवञ्च को विद्वेषो भवतां सत्तासामान्ये इति न विद्महे इत्यभिप्रायः। ।।इति भावशुद्धिः।।

तत्रेत्यादिवाक्यं केचिदेवं व्याचक्षते – प्रमाणयोग्यत्वस्य अर्थक्रियासामर्थ्यस्य च प्रतिवस्तु विलक्षणतया गोघटादिशब्दवत् सामान्यशब्दतैव स्यात्, न तु सर्वार्थसङ्ग्राहकसाधारणशब्दतेति । गोशब्दो यथा गोसामान्यमेवाह न अश्वसामान्यमपि, तथैव प्रमाणयोग्यत्वादिशब्दोऽपि प्रमाणयोग्यमेवाह न प्रमाणागोचरमपि। सत्ताशब्दस्तु प्रमाणगोचरागोचरं सर्वमेवाह। अतो नायं सामान्यशब्द इति। परिच्छिन्नसामान्यबोधो यस्मात् शब्दात्, तादृशः शब्दो यस्य, तस्य भावः सामान्यशब्दता। एवं साधारणोऽपरिच्छिन्नोऽर्थो यस्य शब्दस्य, तस्य भावः साधारणशब्दता। इत्थञ्च सत्तायामेव सर्वसाधारणशब्दता नान्यत्र प्रमाणयोग्यत्वार्थक्रियासामर्थ्ययोरिति भावः। (इत्यभिप्रायप्रकाशिकासरणिः)

शङ्खपाणिस्तु व्याचष्टे – "एवञ्च सच्छब्दस्य साधारणतापि न स्यादित्याह – **तत्रेति**। यो भिन्ननिमित्तो भिन्नेष्वर्थेष्वेकः शब्दः स साधारणः, यथा अक्षादिः। एक एव तु जगद्वर्तिनी प्रमाणयोग्यत्वार्थक्रियासामर्थ्ये निमित्ते इति सच्छब्दस्य सामान्यशब्दतैव स्यात्, न साधारणता। अथ ते प्रत्यर्थभिन्ने, न तर्हि उपसङ्ग्राहके, यत एकमुपसङ्ग्राहकमिति भावः"। अत्र 'निमित्ते' इति पदस्य प्रवृत्तिनिमित्ते इत्यर्थ इति।

दोषान्तरमाह– **भिन्नेति**। अयं भावः– अक्षादिशब्दवत् सच्छब्दस्य भिन्ननिमित्तत्वेन साधारणत्वस्वीकारे "अक्षमानय" इत्युक्ते विभीतकादिषु संशयवत्

**यस्तु द्रव्यं गुणः कर्म रूपं विज्ञानमिति वा संशयः, न स लौकिकानाम्। लौकिकास्त्वभिन्नमेव निमित्तं प्रतिपद्यन्ते। अर्थाच्च सन्देहः, न शब्दात्। कुतः ? विशेषप्रतीतिमन्तरेणापि प्रतिपत्तुर्नैराकाङ्क्ष्यात्। यत्र हि अर्थसामर्थ्येन संशयः, यथा 'वृक्षश्छिद्यताम्' इति परशुकुठा-**

---

'सन् घटः' इत्युक्तेऽपि सत्तावत्सु द्रव्यगुणकर्मसु क इति संशयः स्यात्। अर्थात् किं घटो द्रव्यं वा गुणो वा कर्म वास्तीति संशयः स्यात्। यतो न हि तत्र संशयरहितो निश्चयात्मको द्रव्यत्वादिरूपेण विशेषबोधो भवति। किन्तु 'सन् घटः' इति संशयरहितो निश्चयात्मको घटास्तित्वबोधो भवत्येव। संशयराहित्यमेव प्रदर्शयति – **न हि 'सन् घटः' इति**। 'सन् घटः' इत्युक्तौ प्रवृत्तिनिमित्तभेदेषु द्रव्यत्वगुणत्वकर्मत्वेषु सत्सु बोद्धारो जनाः संशयं न कुर्वन्ति 'घटो गुणो वा कर्म वा द्रव्यं वे' त्यर्थः। अत्रैवोदाहरणं प्रदर्शयति – **यथैवेति**। यथा 'शुक्लः पटः' इति निराकाङ्क्षो निःसन्दिग्धः प्रत्ययः, तथैव 'सन् घटः' इत्युक्तावपि निःसन्दिग्धः निराकाङ्क्षश्च प्रत्ययो भवति, न तु कश्चित्तत्र सन्दिग्धो जन इति भावः।

'सन् घटः' इत्युक्ते प्रकारान्तरेण संशयमुद्भाव्य समाधत्ते – **यस्त्विति**। यद्युच्येत, तत्र घटः किं वैशेषिकरीत्या द्रव्याद्यन्यतमो विज्ञानवादिबौद्धपद्धत्या रूपविज्ञानाद्यन्यतमस्कन्धो वेति संशय उदेत्येवेति चेत्, कामं भवतु स संशयः शास्त्रज्ञानाम्, लौकिकानान्तु नैव भवति स संशयः, ते त्वभिन्नमेव प्रवृत्तिनिमित्तं सत्तारूपं प्रतिपद्यन्ते, निराकाङ्क्षाश्च भवन्ति। पश्चाद् भवन्नपि 'घटो द्रव्यं गुणो वा' इत्यादिः संशयोऽर्थतो भवति न शब्दाद् भवति। आर्थिक एव तथाविधः संशयो न शाब्दिक इति यावत्। कुत इति प्रश्ने हेतुमाह – **विशेषप्रतीतिमन्तरेणेति**। द्रव्यत्वादिविशेषप्रतीतिं विनैव घटसत्ताप्रतीत्यैव श्रोतुराकाङ्क्षा शाम्यतीति भावः। तस्माद् न सच्छब्दोऽक्षादिशब्दवत् साधारण इति मन्तव्यम्।

आर्थिकं संशयमुदाहरति – **यत्र हीति**। 'वृक्षश्छिद्यताम्' इत्युक्ते परशुना कुठारादिना वा छिद्यताम् इति संशयो भवति पश्चात्। पश्चात् संशये

**रादिषु। तत्रान्यतरविशेषानवगमेऽपि नैराकाङ्क्ष्यम्, यस्य कस्यचिदुपादानात्, अन्यथाऽनवस्थानात्।**

**यत्र तु शब्दात्, तत्र विशेषावगमहेतोर्विना साकाङ्क्षत्वमेव। तदेवं न नानानिमित्तः साधारणशब्दः। विशेषणमप्येकं प्रमाणं स्यात्। तच्च प्रागपि ततः सच्छब्दानुविद्धबुद्ध्युत्पादादनुपपन्नमित्युक्तम् – ''मानादेव यतो बुद्धिः'' इति प्रपञ्चेन।**

---

उदीयमानेऽपि तत्र परशुकुठारान्यतरबोधाभावेऽपि च तद्वाक्यं शाब्दबोधं जनयत्येव निराकाङ्क्षञ्च भवति। यत्किञ्चित् छेदनसाधनस्योपादानात्। यद्युच्येत, तत्रापि साधनविशेषस्य कुठारादेराकाङ्क्षा स्यादेव, न तु स्वेच्छया यत् किमपि साधनमुपाददीतेति चेत्, न, तथा सति कुठारेऽपि कः कुठार उपादेय इति कुठारविशेषाकाङ्क्षा उदियादेव। इत्थञ्च तत्तद्विशेषाकाङ्क्षाधारायामनवस्था स्यात्। अतः सुदूरमपि गत्वा यस्य कस्यचिदुपादानाद् नैराकाङ्क्ष्यं भवेदेव, तद् वरमादावेव यस्य कस्यचिदुपादानाद् नैराकाङ्क्ष्यं भवेदिति भावः।

क्व तर्हि साकाङ्क्षत्वमिति निर्धारयति – **यत्र त्विति**। यत्र तु शब्दसामर्थ्यकृतः संशयो यथा 'अक्षमानय' इत्यत्र, तत्र विभीतकाद्यर्थविशेषप्रतिपत्तिहेतुर्यावन्नोपतिष्ठते, तावत् तद्वाक्यं साकाङ्क्षमेवावतिष्ठते, न निराकाङ्क्षं भवतीति। 'सन् घटः' इत्यादौ सच्छब्दात्तु 'कोऽस्यार्थः' इत्याकाराकाङ्क्षा नास्त्येव। तस्माद् अक्षशब्दवद् न सच्छब्दो नानाप्रवृत्तिनिमित्तकोऽत एव न साधारण इति मन्तव्यम्।

''भिन्नेष्वभिन्नं विशेषणमुपलक्षणं वाऽऽश्रित्यैकः सच्छब्दो वर्तेत'' इति कल्पोक्तं विशेषणपक्षमिदानीं दूषयति – **विशेषणमिति**। यद्यपि प्रमाणं नार्थस्य विशेषणं भवति, प्रमाणस्य प्रमातृधर्मत्वात्, तथाप्यभ्युपगमवादेन तद्दूषणोपन्यास इति ध्येयम्। अयमभिप्रायो दूषणोक्तेः – विशेषणपक्षे सच्छब्दार्थस्यैकं विशेषणं प्रमाणमपि सम्भावितं स्यात्। तच्चापि प्राग् अनुपपन्नम् = नोपपद्यते, सच्छब्दार्थविशेषणतया प्रमाणावगमोऽपि प्राग् नोपपद्यत इत्यर्थः। कुतः? इति जिज्ञासायामाह –

**अपि च कार्यादपि वृत्तमेव प्रमाणमवसीयते, तत्र कुतस्तद्विशिष्टता ? न खल्वर्थोऽसन्निहितविशेषणो विशिष्टो भवति। न च निश्चिते विशेषणाभावे विशिष्टाभिधानानुविद्धः संशयो भवति दण्डाभावनिश्चय इव 'दण्डो न वा' इति। भवति च शून्यनगरादिषु चिरनिखातनिधिषु प्रमाणाभावनिश्चयेऽपि 'सन्ति न वा' इति संशयः। तस्मादन्यः प्रमाणयोगात् सदर्थः, यत्रैष संशयः।**

---

**तत इति**। अर्थात् सच्छब्दानुविद्धस्य अर्थस्य या बुद्धिः, तस्या बुद्धेस्तत एव सच्छब्दप्रमाणादेव उत्पादादित्यर्थः।

अस्यायमाशयः— सच्छब्दरूपप्रमाणानुविद्धस्यार्थस्यावगमो यदा सच्छब्दादेवोत्पद्यते, तदा ततः प्रागेवार्थविशेषणतया प्रमाणस्यावगमः कथं भवेत् ? न हि स्वबोध्यस्यार्थस्य स्वयमेव विशेषणतया प्रागेवावगन्तुं शक्यमिति। एतच्च "मानादेव यतो बुद्धिः" इति कारिकया प्रपञ्चितं पूर्वमिति भावः।

सच्छब्दार्थस्य प्रमाणवैशिष्ट्ये दूषणान्तरमाह— **अपि चेति**। अयं भावः— प्रमाणादतीताद् अनुभवरूपं कार्यमुत्तरकाले जायते। अतोऽनुभवरूपकार्यादतीतमेव प्रमाणं तज्जनकतया निश्चीयते। अतोऽतीतप्रमाणविशिष्टत्वं वर्तमाने सदर्थे कथं स्यात् ? अतीतवर्तमानयोर्विशेषणविशेष्यभावासम्भवात्। नन्वतीतमपि वर्तमानस्यार्थस्य विशेषणमस्तु, का क्षतिरिति शङ्कायामुत्तरमाह— **न खल्विति**। असन्निहितं प्रमाणरूपं विशेषणं यस्य तादृशः सच्छब्दार्थो विशिष्टो न भवति। तथात्वे कुण्डलविगमेऽपि कुण्डली भवेत्।

अतीतप्रमाणस्य सदर्थविशेषणत्वे दूषणान्तरमाह— **न च निश्चित इति**। यत्र विशेषणाभावो निश्चितो भवति तत्र विशिष्टाभिधानानुविद्धः=विशेषणविशिष्टत्वेन कथनपुरस्सरं संशयो न भवति। यथा दण्डाभावनिश्चये सति दण्डविशिष्टत्वेन कथनानुविद्धः 'दण्डी न वा' इति संशयो नैव भवति, विशेषणाभावनिश्चयस्य विशिष्टसंशयनिवर्तकत्वात्। एतन्नियमानुसारेण प्रमाणस्य

**नाप्युपलक्षणं प्रमाणम्, प्रमितध्वस्तेषु सच्छब्दाप्रयोगात् स्मर्यमाणे च सच्छब्दानुविद्धात् सन्देहात्। वृत्तप्रमाणसम्बन्धस्य प्रमाणोपलक्षितत्वात् सत्त्वमेव स्यात्, नासत्त्वम्, न संशयः।**

---

सच्छब्दार्थविशेषणत्वे यत्र प्रमाणाभावस्य निश्चयः स्यात् तत्र 'अस्ति न वा' इति सन्देहोऽपि न स्यात्। किन्तु भवति चिरनिखातनिधिषु शून्यनगरेषु प्रमाणाभावनिश्चयेऽपि 'इह निधयः सन्ति न वा' इत्याकारः संशयः। यस्मात् प्रमाणाभावनिश्चयेऽपि यत्रैवंविधः संशयो भवति, तस्मात् प्रमाणयोगादन्यः अर्थात् प्रमाणविशेषणरहित एव सच्छब्दार्थस्तत्र स्वीकरणीयः। तद्वदेव हि "सन् घटः, सद्ब्रह्म" इत्यादावपि प्रमाणविशेषणासंस्पृष्ट एव सच्छब्दार्थ इति मन्तव्यम्।

इदानीं प्रमाणं सच्छब्दार्थस्योपलक्षणमिति पक्षमपि दूषयति– **नापीति।** प्रमाणं सदर्थस्योपलक्षणमपि भवितुं नार्हति। पूर्वं प्रमितेषु पश्चाद् नष्टेष्वपि सच्छब्दस्य प्रयोगापत्तेः। न हि प्रमितनष्टेषु 'सन्ति' इति शब्दः केनापि प्रयुज्यते। अस्माद्धेतोः प्रमाणं सदर्थस्योपलक्षणं न भवितुमर्हति। दोषान्तरादपि प्रमाणं न सदर्थस्योपलक्षणमित्याह– **स्मर्यमाणे चेति।** अर्थाद् यद्वस्तु पूर्वं प्रमाणेनानुभूतं पश्चात् स्मर्यते, तत्र 'अस्ति न वा' इति सन्देहो न जायेत, कदाचित् प्रमाणावगतत्वेन अस्तित्वस्यैव निश्चयापत्तेः कथं संशयो भवेत्? भवति च स्मर्यमाणे वस्तुनि लौकिकानां सच्छब्दानुविद्धः 'अस्ति न वा' इति सन्देहः।

ननु प्रमाणस्यातीतत्वादेव न प्रमितनष्टेषु सच्छब्दस्य प्रयोगापत्तिः, न वा स्मर्यमाणे सन्देहानुपपत्तिरिति शङ्कायामाह– **वृत्तप्रमाणसम्बन्धस्येति।** वृत्तः= पूर्वं जातः प्रमाणसम्बन्धो यस्मिन् वस्तुनि, तस्येति बहुव्रीहिः। तथा च कदाचित् प्रमाणसम्बन्धस्य जातत्वादेव तद्वस्तु नष्टमपि प्रमाणोपलक्षितमेवेति तस्यापि सत्त्वमेव प्रसज्येत, न असत्त्वं स्यात्। एवं स्मर्यमाणवस्तुनि प्रमाणसम्बन्धस्य पूर्वं जातत्वादेव सत्त्वमेव निश्चीयेत, न तु संशयः स्यात्, प्रमाणयोगस्यैव सच्छब्दार्थत्वमिति पूर्वपक्षिणोऽभिमतत्वादिति भावः।

**योऽप्यर्थक्रियया सच्छब्दार्थं विशिनष्टि उपलक्षयति वा, तस्यापि प्राक्कार्यदर्शनाद् न सच्छब्दप्रयोगः स्यात्। अथ प्रमाणजननमेवार्थक्रियां ब्रूयात्, प्रमाणादेवास्तिबुद्धिर्न स्यात्। अथ वैकल्पिकीयं प्रमाणोत्तरकालेति मतं, लिङ्गान्न स्यात्।**

---

अर्थक्रियाकारित्वं सच्छब्दार्थ इति विज्ञानवादिमतं दूषयति – **योऽपीति**। यो हि विज्ञानवादी अर्थक्रियामेव सदर्थस्य विशेषणं वा उपलक्षणं वा मन्यते। अर्थाद् अर्थक्रियाकारित्वविशिष्टोऽर्थक्रियाकारित्वोपलक्षितो वा सच्छब्दार्थ इति मन्यते, तस्यापि मते अर्थक्रियादर्शनात् पूर्वं वस्तुषु सच्छब्दस्य प्रयोगो न भवेत्। अर्थाद् अङ्कुरोत्पत्तेः पूर्वं बीजे सच्छब्दस्य प्रयोगो न स्यात्। भवति च बीजे प्रयोगः सच्छब्दस्य अर्थक्रियादर्शनात् प्रागपीत्यतो न अर्थक्रिया सदर्थस्य विशेषणमुपलक्षणं वेति।

यदि विज्ञानवादी अङ्कुरोत्पत्तेः पूर्वमपि बीजस्य सत्त्वं साधयेत्, तन्न सम्भवतीत्याह – **अथेति**। अयं भावः – न ह्यङ्कुरजननमेवार्थक्रिया बीजस्य, किन्तु स्वविषयकप्रत्यक्षजननमपि बीजस्य कार्यम्, स्वप्रत्यक्षं प्रति विषयविधया बीजस्य कारणत्वात्। तथा च स्वविषयकप्रत्यक्षजननरूपार्थक्रियावत्त्वाद् अङ्कुरानुत्पत्तिकालीनस्यापि बीजस्य सत्त्वं निर्बाधमिति यदि विज्ञानवादी ब्रूयात्, तन्न सम्भवति, तथा सति प्रमाणादेव=प्रत्यक्षादेव प्रत्यक्षकाल एवेति यावत् 'बीजमस्ति' इति या बुद्धिर्भवति सा न स्यात्, स्वप्रमाण(प्रत्यक्ष)जनन-रूपार्थक्रियाज्ञानस्यापि बीजे 'अस्ति' इति बुद्धिं प्रति तन्मते कारणत्वात्। किन्तु नैवमस्ति, ज्ञायमानमेव बीजम् 'अस्ति' इति ज्ञायते। अर्थात् प्रत्यक्षज्ञानकाल एव बीजम् 'अस्ति' इति ज्ञायते, न तु प्रत्यक्षजननरूपार्थक्रियाज्ञानमप्यपेक्षत इति भावः। एतदेवोक्तम् – **प्रमाणादेवास्तिबुद्धिर्न स्यादिति**। प्रमाणपदमत्र प्रत्यक्षज्ञानपरं बोध्यम्।

यदि विज्ञानवादी मन्येत यद् निर्विकल्पकं प्रत्यक्षं प्रमाणम्, "कल्पना-पोढं प्रत्यक्षम्" इति तत्सिद्धान्तात्। 'अस्ति' इतीयं बुद्धिस्तु वैकल्पिकी= सविकल्पिकाऽस्ति। अतः शब्दानुविद्धत्वात् 'अस्ति' इति सविकल्पा धी-

**अथ निर्ज्ञातकार्यसम्बन्धमेव लिङ्गेनानुगम्यते, एवं तर्हि प्रमेयाभावः। तथा हि— कार्यवत्ता ह्यस्त्यर्थः, सा चाधिगतैव। कार्यवत्तयैव कार्यवत्ताऽवगम्यत इत्यचतुरस्रम्। कार्यकारणयोश्च यौगपद्याभावाद् विशिष्टतानुपपत्तिः।**

---

निर्विकल्पकात्मकप्रमाणोत्तरकाल एव भवतीति, तदपि तदीयं मतं न युक्तम्, एवं सति धूमादिलिङ्गाद् अग्न्यादौ 'अस्ति' इति बुद्धिर्न स्यात्। यतः पर्वतेऽग्न्यनुमितिः सविकल्पिकैवेष्यते। न च तदव्यवहितपूर्वकाले निर्विकल्पकमस्ति प्रमाणम्, यज्जननात् पश्चात् पर्वते अग्निविषयिणी 'अस्ति' इति बुद्धिः सविकल्पिका जायेतेति सिद्धान्तिनोऽभिप्रायः।

अनुमानात् पूर्वं निर्विकल्पकाभावेऽपि वह्निसत्ताज्ञानमुपपादयति पूर्वपक्षी— **निर्ज्ञातकार्येति**। निर्ज्ञातो नियमेन ज्ञातः कार्येण धूमेन सह सम्बन्धोऽविनाभावः साहचर्यमिति यावत्, यस्य अग्न्यादेः साध्यस्य, तादृशं निर्ज्ञातधूमादिकार्यसम्बन्धमेव अग्न्यादि[1]साध्यं धूमेन लिङ्गेन अनु पश्चाद् गम्यते= अनुमीयते। अतो निर्विकल्पकाभावेऽपि अनुमित्यात्मकं वह्निसत्ताज्ञानमुपपद्यत एवेति पूर्वपक्षे निराकरणमाह— **एवन्तर्हीति**। एवं स्वीकारे न वह्निः प्रमेयो भवितुं शक्नुयात्। वह्निसत्ता नावगन्तुं शक्या स्यादित्यर्थः। तदेवोपपादयति सिद्धान्ती— **तथा हीति**। अयं भावः— अनुमितिस्थले वह्नेः सत्ता न साक्षाद् अस्तिबुद्ध्या गृह्यते। यतो हि धूमादिकार्यवत्तैव तत्रार्थक्रियाभूता सत्ता वह्निसत्ता न ततोऽन्या, सा च निर्ज्ञातकार्यसम्बन्धात्मिकया कार्यवत्तयैव अवगन्तव्या। एवं सति कार्यवत्तारूपा सत्तैवावगम्या कार्यसम्बन्धात्मिका कार्यवत्तैव तदवगमिकाऽपीति। सा चाधिगतैव पूर्वमिति साध्यसाधनयोरभेदाद् न धूमेन लिङ्गेन वह्निरनुमातुं शक्येत, एकस्य

---

१. ननु तथापि 'अस्येदं व्याप्यम्' इति ज्ञातसम्बन्धमेव अग्न्यादि लिङ्गेन गम्यत इति दोषोऽस्त्येव, उच्यते— मम सामान्ययोः सम्बन्धः, विशेषतश्च प्रमेति नैष दोषः। बौद्धानां तु न सामान्यमस्तीति विशेष इति शङ्खपाणिः।

**अथोपलक्षणम्, अतीतस्यापि सत्त्वप्रसङ्गः, स्मर्यमाणे च संशयो न स्यादित्युक्तम्। तस्माद् यथैव नीलादिशब्दार्थोऽर्थस्वभावः, न कार्यलक्ष्यः, न प्रमाणलक्ष्यः, अनवस्थानात्। स्वरूपव्यवस्थस्तु यथाप्रमाणमवसीयते, तथा सदर्थस्वभावोऽपीति युक्तम्। कार्यप्रमाणसदसद्भावनिबन्धने हि सदसद्व्यवहारविभागे तस्याप्रवृत्तिरेव, कार्यप्रमाणसदसद्व्यवहारविभागस्यापि तन्निबन्धनत्वप्रसङ्गाद् अनवस्थानात्। तस्मादर्थस्वभाव एकः सत्तेति ब्रह्मविदो मन्यन्ते।**

---

साध्यसाधनत्वविरोधात्। तस्मात् सुष्ठूक्तम्– "एवं तर्हि प्रमेयाभावः" इति। अत्र "प्राप्तः" इति शेषो बोध्यः।

दूषणान्तरमाह – **कार्यकारणयोरिति**। अयमर्थः – क्षणिकवादिनां मते कार्यक्षणे कारणक्षणमसत्, अतो न कारणे कार्यविशिष्टता कार्यवत्तेति यावत्। तथा च कार्यवैशिष्ट्याभावाद् न कारणस्य सत्ता स्यात्, न वा सा ज्ञायेतेति भावः।

अर्थक्रियाकारित्वोपलक्षितं सत्त्वम् इति पक्षमपि दूषयति – **अथोपलक्षणमिति**। अयं भावः– अर्थक्रियाकारित्वस्य सत्तास्वरूपत्वे प्रतीतविनष्टस्यापि वस्तुनः सत्त्वप्रसङ्गः, एवं स्मर्यमाणे वस्तुनि "अस्ति न वा" इति संशयो न स्यात्, उपलक्षितस्य भवन्नये सत्त्वनिश्चयात्। प्रतिपादितं चैतदधस्तात्, तदेवेह समाधानं स्मारयति – **उक्तमिति**। यथा नीलादिशब्दानार्मोऽर्थस्वभाव एव अर्थात्मक एव भवति, न कार्योपलक्षितो न वा प्रमाणोपलक्षितो नीलशब्दार्थो भवति। तथा सति कार्यमपि कार्यान्तरोपलक्षितं प्रमाणमपि च प्रमाणान्तरोपलक्षितं स्यात्। ते अपि कार्यान्तरप्रमाणान्तरे पुनः कार्यान्तरप्रमाणान्तराभ्यामुपलक्षिते, तेऽपि च ततोऽन्याभ्यामित्यनवस्था प्रसज्येत। तस्माद् नीलशब्दार्थः कार्यप्रमाण-निरपेक्षस्वरूपेणैव व्यवस्थितः सन् प्रमाणेनावबोध्यते। प्रमाणं नीलस्वरूपं न व्यवस्थापयति किन्तु स्वरूपतो व्यवस्थितं तदवबोधयतिमात्रम्। तथैव सदर्थः सत्ताऽपि स्वरूपत एव व्यवस्थितो भवति, न हि कार्येण (अर्थक्रियया) प्रमाणेन वा व्यवस्थाप्यत इत्यर्थः।

**अथ मतम्— नार्थस्वभावो योग्यता, प्रमाणहेतुसद्भावस्तु। न चासतां प्रमाणहेतवः सन्तीति। तदयुक्तम्,**

**भूमौ निखातं निर्लिङ्गमवेद्यानुपपन्नकम्।**

**नष्टदृष्टकमत्येति यत् सर्वमिति[1]योग्यताम्॥ ४०॥**

---

अनवस्थानादिति यदुक्तं तद्विशदयति— **कार्यप्रमाणेति**। सदसद्व्यवहारो यदि कार्यस्य प्रमाणस्य वा सद्भावासद्भावनिबन्धनः स्यात्, तदा कार्यस्य प्रमाणस्यापि च सदसद्व्यवहारविभागः कार्यान्तरप्रमाणान्तरसदसद्भावनिबन्धन एव प्रसज्येतेत्यनवस्थाप्रसङ्गः स्यात्।

स्वपक्षमुपसंहरति— **तस्मादिति**। परिशेषाद् वेदान्तोक्ताऽर्थस्वभावभूता एका सत्तेति स्वरूपव्यवस्थापक्ष एव सच्छब्दार्थस्य युक्त इति ब्रह्मविदां मतमिति भावः।

ननु प्रमाणयोग्यतारूपोऽर्थस्वभावः सत्तेति पक्षो दूषितः पूर्वम्। तेन प्रमाणयोग्यताऽर्थस्वभावो मा भूत्, प्रमाणहेतुसद्भावस्त्वर्थस्वभावो भवतु। अतः प्रमाणहेतुसद्भाव एव सत्ता। प्रमाणहेतवश्च सामग्री। न हि असत्सु शशशृङ्गादिषु प्रमाणसामग्री उपपद्यते। तस्मात् प्रमाणहेतुसद्भाव एवार्थस्वभावः सत्ता तथा प्रमाणहेत्वभाव एवासत्ता। प्रमाणसामग्रीराहित्यादेव च शशशृङ्गम-सदुच्यत इति शङ्कते— **अथ मतमिति**।

इदमत्र रहस्यमुद्घाटयति शङ्खपाणिः— प्रमाणहेतौ सत्यवश्यं प्रमाणेनापि भवितव्यम्, हेतौ सति कार्यावश्यंभावात्। एवञ्च वेदान्तवाक्यानामस्त्यर्थ-निष्ठत्वेऽप्यस्त्यर्थे प्रमाणहेतुसद्भावे प्रमाणसद्भावोऽप्यवश्यं भवेदिति वेदान्तवाक्यस्य प्रमाणान्तरापेक्षत्वं गले पतितमिति सापेक्षत्वेनाप्रामाण्यं प्रसज्येत। अतो वेदान्तानामप्रामाण्यनिवारणाय अस्त्यर्थनिष्ठत्वं विहाय क्रियापरत्वमास्थेयमित्य-भिप्रायेण पूर्वपक्षान्तरमाशङ्कते— **अथ मतमिति**।

---

१. मितिः=प्रमाणम्। सर्वप्रमाणयोग्यतामतिक्रामतीत्यर्थः।

**भूमौ निखातमविद्यमानेन्द्रियसम्बन्धमदृश्यमानाविनाभूतमसंवेद्यमानान्यथानवकल्पमानं वस्तु प्रलीनद्रष्टृकं यत्, तस्य न प्रत्यक्षानुमानार्थापत्त्यागमहेतवः सन्ति। सादृश्यविषयं ह्युपमानम्, तस्य हेतुर्दूरापेत एव, सर्वप्रमाणयोग्यतामतिक्रामति, न च तदसत्।**

---

पूर्वपक्षमिमं निषेधति – **तद्युक्तमिति**। भूमौ निखातमिति श्लोकस्यायमर्थमाह – **"भूमौ निखातम्"** इत्यनेन अविद्यमानेन्द्रियसम्बन्धम् अर्थात् प्रत्यक्षप्रमाणराहित्यं सूचितम्। निर्लिङ्गमित्यस्य अदृश्यमानाविनाभूतम् अर्थाद् व्याप्तिमल्लिङ्गदर्शनराहित्येन अनुमानप्रमाणराहित्यं सूचितम्। **अवेद्यानुपपन्नकमिति**। क्वचिदवेद्यानुपपत्तिकमिति पाठः। अवेद्या असंवेद्या अनुपपत्तिर्यत्रेत्यर्थः। "अवेद्यानुपपन्नकम्" इति पाठपक्षे असंवेद्यमत एवानुपपन्नम् अन्यथानवकल्पमानं यत्रेति व्युत्पत्त्या अन्यथाऽनुपपद्यमानताया असंवेद्यमानत्वेन अर्थापत्तिप्रमाणराहित्यं द्योत्यते। **नष्टदृष्टकमिति**। नष्टमविद्यमानं दृष्टं दर्शनं यस्येति व्युत्पत्त्या वस्तुसाक्षात्काराभावाद् आगमप्रमाणराहित्यं सूच्यते। साक्षात्कृतवस्तुना आप्तेन प्रयुक्त एवागमः प्रमाणं भवति नान्यः। "नष्टद्रष्टृकम्" इति पाठे तु नष्टो अविद्यमानो द्रष्टा यस्य वस्तुनस्तदित्यर्थः। इत्येवंविधं हि यद् वस्तु तत् सर्वमितियोग्यतां = सर्वप्रमाण-योग्यतामत्येति = अतिक्रामतीति श्लोकार्थः। अत्र साक्षात् प्रत्यक्षादिप्रमाणराहित्य-मनुक्त्वा प्रत्यक्षादिप्रमाणानां याः सामग्र्यस्तासामेवासद्भावः प्रदर्शितः। एतदेवोक्तं मूले – **"तस्य न प्रत्यक्षानुमानार्थापत्त्यागमहेतवः सन्ति"** इति। भूमिनिखातनिधौ उपमानमपि प्रमाणं नास्तीत्याह – **सादृश्येति**। तस्य = उपमानप्रमाणस्य हेतुः सादृश्यज्ञानं भूमिनिखातनिधावसम्भवमेव। समक्ष एव वस्तुनि सादृश्यज्ञानोदयादिति भावः। तेन च प्रमाणहेतुसद्भाव एव प्रमाणयोग्यता, एवंविधप्रमाणयोग्यतैव च अर्थस्वभावः सत्तेति पक्षोऽपि निराक्रियते। अयमाशयः – यदि प्रमाणहेतुसद्भाव एवार्थस्वभावभूतः सत्ता तदा भूमौ चिरनिखातनिधेरसत्ता निश्चीयेत, न त्वेवमस्ति। तत्र तु संशय एव भवति – "अत्र निधिरस्ति न वा" इति। न च तदसत् = भूमिनिखातं धनं न असदित्यर्थः।

**जिज्ञासा न प्रवर्तेत यदि संवित्त्यभावतः॥ ४२-१/२॥**

**[1]"दृष्टिपूतं पदं न्यसेत्" (मनु०६।४६) इति कीटकण्टकाद्य-भावेऽप्रमिते कथं तन्न्यासः? तथा हि—कीटकण्टकाद्यर्थान्तरभूतलादि-परिच्छेदात् स स्यात्? कीटाद्यपरिच्छेदात्? अभावपरिच्छेदाद् वा? तत्र न तावदर्थान्तरपरिच्छेदात्, कण्टकादिभावेऽपि प्रसङ्गात्, तत्रापि**

---

अभावस्य प्रमेयत्वे हेत्वन्तरमुपन्यस्यति सिद्धान्ती—**अपि चेति**। कारिकायाः सरलार्थस्तु इत्थम्—कण्टकाभावम् अमित्वा अप्रमाय जनेन भूतले चरणः क न्यस्यते? अर्थाद् भूतले कण्टकाभावं ज्ञात्वैव लोकश्चरणं न्यस्यति। अतः सिद्धमभावस्य प्रमेयत्वम्। यद्युच्येत, अन्यस्य भूतलादेर्ग्रहाद् ज्ञानादेव चरणन्यासः क्रियत इति, तन्न, तस्य कण्टकस्य भावेऽपि विद्यमानतायामपि भूतलज्ञानसत्त्वात् कण्टकाकीर्णेऽपि भूतलें चरणन्यासप्रसङ्गात्। एवम्, अन्यवस्तुनो ज्ञानाच्चरण-न्यासस्वीकारे भूतलज्ञानात् प्रागपि यस्य कस्यचित् (जलादिरूपस्य) वस्तुनो ज्ञानमस्त्येवेति कण्टकाभावज्ञानमिव भूतलज्ञानमप्युपेक्ष्य जनश्चरणौ न्यसेत्, न त्वेवं भवति। तदुक्तम्—**पुरस्ताच्च प्रसङ्गत इति**। तस्मात् कण्टकाभावस्य ज्ञानात् चरणन्यासदर्शनात् सिद्धमभावस्य प्रमेयत्वमिति श्लोकार्थः।

अभावस्यामेयत्वे शास्त्रप्रामाण्यमपि न स्यादिति प्रतिपादयन् श्लोकार्थं विशदयति ग्रन्थकारः—**दृष्टिपूतमित्यादिना**। दृष्टिपूतमित्यनेन चरणन्यासे कार्ये कीटादेःसपदिः कण्टकादेश्च अभावज्ञानस्यावश्यकत्वं सूच्यते। तथा च कीटकण्टकाद्यभावाज्ञाने चरणन्यासो न सम्भवेदित्यर्थः।

असम्भवमेवोपपादयति—**तथा हीति**। अयं भावः—तत्र चरणन्यासः किं कीटकण्टकादिबाधकेभ्यो भिन्नं यद्भूतलादिकं तस्य ज्ञानाद् भवेत्? किं वा दुःखदानां कीटकण्टकारीनामज्ञानात् चरणं न्यस्येत? अथवा कीटादीनामभावज्ञानात्

---

१. दृष्टिपूतं न्यसेत् पादं वस्त्रपूतं जलं पिबेत्।
सत्यपूतां वदेद्वाणीं मनपूतं समाचरेत्॥ इति।

**वस्त्वन्तरपरिच्छेदस्य सत्त्वात्, प्रागपि च भूभागपरिच्छेदात् प्रसज्येत, यस्य कस्यचिद् वस्त्वन्तरस्य परिच्छित्तेर्विद्यमानत्वात्।**

**अथ कीटकण्टकाद्यपरिच्छेदाद् न तद्भावाभावजिज्ञासा स्यात्। जिज्ञासापूर्वकादपि प्रयत्नात् तदपरिच्छेदमात्रमेव प्राप्यते, यस्याभावो न प्रमेयः। तच्च प्रागपि ततोऽस्ति। अभावे तु प्रमेये अभावनिश्चयाय**

---

चरणन्यासो भवेत् ? तत्र न प्रथमः कल्पः, वस्त्वन्तरपरिच्छेदमात्रात् पादन्यासोपपादने कण्टकादिसद्भावेऽपि चरणन्यासप्रसङ्गः, तत्रापि वस्त्वन्तरस्य भूतलादेर्ज्ञानसद्भावात्। किञ्च घोरान्धकारे भूतलादिपरिज्ञानात् प्रागपि निःशङ्कं चरणं न्यस्येत, यस्य कस्यचित् ज्योतिरिङ्गणादिवस्त्वन्तरस्य ज्ञानसद्भावादिति।

द्वितीयकल्पे दोषमाह– **अथ कीटेति**। अर्थात् कीटकण्टकाद्यपरिच्छेदात् तदज्ञानात् पादन्यासो भवति, यदि मार्गे कीटकण्टकादिकं ज्ञायेत, तदा न जनो गमनाय पादं न्यसेत्। यतो न पश्यति कण्टकादिकमतश्चरणं न्यस्यतीति कण्टकाद्यपरिच्छेद एव चरणन्यासहेतुरिति यद्युच्येत चेत्, न, तथात्वे पादन्यासात् प्राक् 'तत्र कीटादिकमस्ति न वा' इति कीटादिसद्भावासद्भावजिज्ञासा लोकस्य न स्यात्, जिज्ञासते च जनस्तथा, अतः कण्टकाद्यपरिच्छेदमात्रं न पादन्यासहेतुरिति।

यदि पादन्यासप्रयत्नात् पूर्वं कीटकण्टकादिजिज्ञासा स्यादपि, तथापि तस्य कीटादेरपरिच्छेदमात्रमेव पादन्यासहेतुतया तेन पुंसा प्राप्यते (प्रापणीयमस्ति) न तु तस्य पुंसः कीटाद्यभावः प्रमेयतया अपेक्षितोऽस्ति। अर्थाद् यो हि पुमान् पादन्यासार्थं कीटाद्यभावं प्रमेयतया नापेक्षते, तेन पुंसा तदर्थं कीटाद्यपरिच्छेदमात्रमेव प्रापणीयमस्तीति। तच्च कीटाद्यपरिच्छेदमात्रं जिज्ञासापूर्वकात् प्रयत्नात् प्रागपि वर्तत एवेति किं जिज्ञासया निरर्थिकया।

यस्य च जनस्य पादन्यासार्थं कीटकण्टकाभावः प्रमेयतयाऽपेक्षितो भवति, तस्य तु कीटाद्यभावनिश्चयाय जिज्ञासा युज्यत एव, न निरर्थिकेति भावः।

**जिज्ञासा युज्यते। त चापरिच्छेद एव जिज्ञास्यः, स्वतः सिद्धत्वात्। परिच्छेदेन हि स तिलर्त्य। अप्रमेयत्वाच्च, सोऽपि खल्वभाव इत्यप्रमेयः**

**अथ मतम् – सत्सूपलम्भहेतुषु प्रमाणविषयस्यापरिच्छेदात् प्रवृत्तिः, तदसत्,**

**प्रमाणविषयत्वस्य नोपयोगोऽत्र दृश्यते॥ ४३॥**

**असद्बोधेऽनन्यहेतुभानेन ह्युपयुज्यते॥ ४३-१/२॥**

---

न च अपरिच्छेदपक्षेऽपि जिज्ञासा न निरर्थिका, कण्टकाद्यपरिच्छेदस्यैव पादन्यासार्थं जिज्ञास्यत्वादिति वाच्यम्, परिच्छेदप्रागभावरूपस्य अपरिच्छेदस्य तु अनादित्वेन स्वतः सिद्धत्वात् तज्जिज्ञासाबास्तथापि निष्फलत्वात्। नन्वपरिच्छेद-निवृत्तिं प्रति प्रतियोगिज्ञानविधया अपरिच्छेदज्ञानस्य हेतुत्वेन अपरिच्छेदो जिज्ञास्य इति चेत्, न, स्वतः सिद्धो ह्यपरिच्छेदो विरोधिना परिच्छेदेनैव निवर्तिष्यत इति न अपरिच्छेदनिवृत्तावपि जिज्ञासायाः प्रयोजकत्वम्। अपरिच्छेदस्य अजिज्ञास्यत्वे हेत्वन्तरमाह – **अप्रमेयत्वाच्चेति**। अयं भावः – प्रमेयं हि जिज्ञास्यं भवति। अपरिच्छेदोऽपि परिच्छेदाभावरूपः। अभावश्च भवतां मते न प्रमेयोऽस्तीति न स प्रमित्यर्थं जिज्ञास्यत इति सर्वथा निष्फलैव जिज्ञासा स्यात्। एतदाशयेन "जिज्ञासा न प्रवर्तेत यदि संवित्त्यभावतः" इति कारिकांशः प्रवृत्त इति बोध्यम्।

ननु कण्टकाद्युपलम्भहेतुषु चक्षुरादिषु सत्सु प्रमाणविषयस्य प्रमाणयोग्यस्य सत एव कण्टकादेरपरिच्छेदात् चरणन्यासे प्रवर्तते लोकः, न तूपलम्भहेतुरहितात् कण्टकाद्यपरिच्छेदमात्रात्। तथा च कण्टकादिमाध्यमेन कण्टकाद्यपरिच्छेदस्यापि प्रमाणविषयत्वरूपं मेयत्वं ज्ञेयत्वं जिज्ञास्यत्वञ्चोपपद्यत इति शङ्कते – **अथ मतमिति**। शङ्कामिमां निराकरोति – **तदसदिति**। निराकरणकारिकामाह – **प्रमाणविषयत्वस्येत्यादि**। अत्र अपरिच्छेदे स्वतः सिद्धे प्रमाणविषयत्वस्य कोऽप्यु-पयोगो न दृश्यते चरणन्यासादिव्यवहारे। क्व तर्हि प्रमाणविषयत्वस्योपयोग इत्याह – **असद्बोध इति**। कारिकायां 'हि'शब्दः 'त्वर्थे' बोध्यः। अनन्यहेतु-

**अपरिच्छेदाच्चेत् प्रवृत्तिर्न प्रमाणविषयत्वस्योपयोगः, इतरत्रापि अपरिच्छेदस्य तुल्यत्वात् ततश्च प्रवृत्तेः। यस्य त्वभावः प्रमेयः, तत्परिच्छेदात् प्रवृत्तिः। तस्यानन्यनिमित्तत्वेनोपयोगवत् प्रमाणविषयत्वम्।**

---

भानेन अर्थात् प्रमाणादन्येन हेतुना भानासम्भवेन असद्बोधे हि = कण्टकाद्यभावबोधे त्वित्यर्थः, प्रमाणविषयत्वमुपयुज्यत इति कारिकासंक्षिप्तार्थः।

उक्तार्थमेव विशदयति – **अपरिच्छेदाच्चेदित्यादिना**। कण्टकाद्यपरिच्छेदाच्चेत् प्रवृत्तिरभ्युपेयते तदा, तत्रापरिच्छेदे न प्रमाणविषयत्वस्योपयोगोऽस्ति, इतरत्रापि=प्रमाणसामग्रीवैकल्यावस्थायामपि अपरिच्छेदस्य तुल्यत्वात् = प्रमाण-सामग्रीसाकल्यावस्थायां योऽपरिच्छेदस्तत्समानत्वात्। ततश्च प्रवृत्तेः = प्रमाणसामग्रीवैकल्यावस्थादपरिच्छेदादपि प्रवृत्तिदर्शनादित्यर्थः। तस्मादनुपयुक्त-मेवापरिच्छेदे प्रमाणविषयत्वमिति भावः।अयमाशयः– "सत्सूपलम्भहेतुषु प्रमाण-विषयस्यापरिच्छेदात्" इत्यस्यार्थः– चक्षुरादिप्रमाणसामग्र्यां सत्यां यः कण्टकाद्य-परिच्छेदस्तस्मात् पदन्यासे प्रवृत्तिर्भवतीति ।अत्र कण्टकाद्यपरिच्छेदे प्रमाणसामग्र्या उपयोग इत्यभिमानः पूर्वपक्षिणः। अयमभिमान एव निरस्यते "नोपयोगोऽत्र दृश्यते" इत्यनेन ।अयमत्र सिद्धान्तिनोऽभिप्रायः– प्रमाणसामग्री किमर्थमुपयुज्यते ? किं कण्टकादेरपरिच्छेदार्थम् ? अथवा पदन्यासे प्रवृत्त्यर्थम् ? नाद्यः, प्रमाण-सामग्रीविकलानामपि अपरिच्छेदभावात्। तथा च न प्रमाणसामग्री अपरिच्छेदे उपयुज्यत इति। नापि पदन्यासे प्रवृत्त्यर्थं प्रमाणसामग्र्या उपयोग इति द्वितीयः पक्ष इत्याह– **ततश्च प्रवृत्तेरिति**। कण्टकाद्यभावस्य प्रमाणतः परिच्छेदादेव पदन्यासे प्रवृत्तिर्न तु कण्टकादेरपरिच्छेदादित्यर्थः। तथा च प्रवृत्तिजनके अभावपरिच्छेद एव प्रमाणसामग्री अपेक्षिता भवतीति अभावपरिच्छेद एव प्रमाणसामग्र्या उपयोगो न कीटाद्यपरिच्छेद इत्यर्थः।

यस्तु चरणन्यासार्थम् अभावं प्रमेयं=प्रमाणपरिच्छेद्यं मन्यते, तस्य मतेन कण्टकाद्यभावपरिच्छेदात् पादन्यासे प्रवृत्तिः।स चाभावपरिच्छेदः अनन्यनिमित्तः= प्रमाणं विहाय अन्यद् निमित्तं तस्य नास्तीत्यनन्यनिमित्तः सोऽभावपरिच्छेदः।

**नायमपरिच्छेदः सत्येवार्थे हेतुवैकल्यनिमित्तः, समग्रत्वात् तद्धेतूनाम्, तस्मादर्थाभावादिति।**

**अथ यत्र प्रवृत्तिः स्यात्, तत्र केवलसंविदः॥ ४४॥**

**जिज्ञासेत न सूक्ष्मार्थं कैवल्यं संविदो यदि।**

**केवलो विषयो नेष्टो रूपोन्मिश्रेऽपि तद्यतः॥ ४५॥**

**विशिष्टस्य च नास्त्यन्यदन्याभावाद् विशेषणम्॥ ४५-१/२॥**

---

अत एव कण्टकाद्यभावपरिच्छेदे उपयुज्यते प्रमाणविषयत्वम्। एतदेवोक्तं मूले– "तस्यानन्यनिमित्तत्वेनोपयोगवत् (उपयोगीत्यर्थः) प्रमाणविषयत्वम्" इति।

अभावपरिच्छेदस्य अनन्यहेतुकत्वमुपपादयति– **नायमिति**। अस्यां स्थितौ योऽयमपरिच्छेदः कण्टकादेः, स न कण्टके सत्येव प्रमाणसामग्रीवैकल्यकारणाद् भवति, यतो हि तत्र परिच्छेदहेतुभूतानि समग्राण्यपि चक्षुरादीनि सन्त्येव ऋते कण्टकादीन्। तस्मादर्थाभावकारणादेव कण्टकादेरपरिच्छेदः, अपरिच्छेदाच्च कण्टकाद्यभावज्ञानम्, कण्टकादेरभावज्ञानाच्च चरणन्यासे प्रवृत्तिरिति सिद्धं कण्टकादेरभावबोधे प्रमाणविषयत्वोपयोग इति सर्वं समञ्जसम्। तदुक्तं कारिकया– "असद्बोधेऽनन्यहेतुभानेन ह्युपयुज्यते" इति।

ननु न अर्थान्तरग्रहात्, नापि कण्टकाद्यपरिच्छेदात् चरणन्यासे लोकस्य प्रवृत्तिः, किन्तु केवलभूतलज्ञानाच्चरणन्यासे प्रवृत्तिरिति शङ्कते– **अथ यत्रेति**। अयमत्र कारिकार्थः– यत्रापि प्रवृत्तिर्भवति तत्र केवलसंविद एव भवति। अर्थाद् अर्थान्तरग्रहणात् कीटाद्यपरिच्छेदाद् वा प्रवृत्तिर्न भवति, किन्तु केवलभूतलज्ञानादेव प्रवृत्तिर्जायते। शङ्कां निराकरोति– **जिज्ञासेतेति**। अयमर्थः– केवलभूतलसंविद इत्यत्र कैवल्यं यदि संविदो ज्ञानस्य विशेषणं तत्र पादन्यासात् पूर्वं चरणन्यासादिकार्यार्थं सूक्ष्मार्थं न जिज्ञासेत जनो यत् किमत्र किञ्चित् पादव्यथाजनकं सूक्ष्मवस्तु अस्ति न वेति। यतो हि ज्ञानमात्रस्यापेक्षितत्वे

**यदि मतम् – यत्र भूभागादौ चरणन्यासादिलक्षणा प्रवृत्तिः, तस्य केवलस्य सा ज्ञानादिति। तत्रापि सम्प्रधार्यम् – किमिदं ज्ञानस्य कैवल्यमभिसंहितमेकविषयप्रतिनियमो विषयान्तरासंसर्गः, आहोस्विद् विषयस्य ? यदि विज्ञानस्य, प्रमितेऽपि भूभागादौ स्थूले सूक्ष्मकीटकण्टकादिभावाभावपरीक्षा न स्यात्, प्रवर्तेतैव, केवलभूतलावग्रहज्ञानात् ।**

---

यत्किञ्चिज्ज्ञानं तत्रापि वर्तत एवेति किमिति सूक्ष्मकीटादिजिज्ञासा भवति लोकस्य ? तत्र जिज्ञासत एव न पादं न्यस्यतीति । तस्मात् कैवल्यं न ज्ञानविशेषणं वक्तुं शक्यते ।

यद्युच्येत भूतलादिविषये कैवल्यं विशेषणमिति, अर्थात् केवलस्यैकाकिनो भूतलस्य ज्ञानं चरणन्यासे प्रवर्तकम् । कण्टकादिसत्त्वे तु तत्सहितमेव भूतलं ज्ञायेत न केवलमिति न तत्र पदन्यासे प्रवृत्तिरिति । तत्र दोषमाह – **केवलो विषयो नेष्ट इति** । अयमर्थः – प्रवृत्तौ संवेद्यस्य भूतलस्य किं स्वरूपेण कैवल्यं विवक्षितमथवा विशेषणसहितत्वेन ? नाद्यः, यतो रूपोन्मिश्रेऽपि = विशेषणयोगेऽपि = कण्टकादिमिश्रितेऽपि भूतल इति यावद् भूतलस्य स्वरूपं वर्तत एव न क्वचिदपेतमिति तत्रापि पादन्यासप्रसङ्गात् । यदि द्वितीयः पक्षो विवक्षितोऽस्ति, अर्थाद् विशेषणविशिष्टस्य भूतलस्य कैवल्यमभीष्टमस्तीति, तदा तद्विशेषणं कण्टकाद्यभावादन्यद् न भवतीति तत्र विशेषणविधया कण्टकाभावज्ञानादेव पदन्यासो भवेदिति गले पतितमेवाभावस्य प्रमेयत्वमिति कारिकाभिप्रायः।

इममेवाभिप्रायं स्फुटयति – **यदि मतमित्यादिना** । यत्र भूभागादौ चरणन्यासादिरूपा प्रवृत्तिर्भवति, सा प्रवृत्तिस्तस्य केवलभूभागस्य ज्ञानाद् भवतीति पूर्वपक्षवाक्यान्वयः। पूर्वपक्षमिमं निराकर्तुं विमृशति – **तत्रापि सम्प्रधार्यमिति**। तत्र ज्ञानस्य कैवल्यं विवक्षितमाहोस्विद् विषयस्येति विकल्पद्वये ज्ञानकैवल्यपक्षं पूर्वं दूषयितुं पृच्छति – **किमिदं ज्ञानस्य कैवल्यमभिसंहितमिति**। ज्ञानस्य कैवल्यमिह विषयप्रतिनियमः प्रतिनियतविषयकत्वमित्यर्थः। प्रतिनियमशब्दस्यैवार्थो विषयान्तरासंसर्ग इति । विषयान्तरस्य कण्टकादेरसंसर्गो भूतलैकविषयकत्वमिति

**अथ विषयस्य, तत्रापि सम्प्रधार्यम् – स्वरूपेण वा विषयस्य कैवल्यम्, विशेषणयोगेन वा ? तत्र न तावत् स्वरूपेण, मिश्रेऽपि तस्य भावात्। विशेषणयोगेन कैवल्ये प्राप्ता कीटकण्टकाद्यभावविशिष्ट-परिच्छेदात् पदन्यासादिलक्षणा प्रवृत्तिः, यतो नान्याभावाद् विशेषणमन्यादृशं किञ्चिद् दृश्यते, यद्विशेषणं वस्तु केवलं स्यादिति।**

---

यावत्। उक्तार्थकं ज्ञानकैवल्यपक्षमुत्थाप्य दूषयति – **यदि विज्ञानस्येति**। स्थूले भूभागादौ प्रमितेऽपि = ज्ञातेऽपि विषयान्तरासंसृष्टं (केवलं) भूतलज्ञानमस्त्येवेति निःशङ्कं पदन्यासे प्रवर्तेतैव जनः, न तु सूक्ष्मकीटकण्टकादिभावाभावौ परीक्षेत। किन्तु केवलभूतलज्ञाने जातेऽपि अत्र सूक्ष्मः कीटादिरस्ति न वेति जिज्ञासत एव जनः, न तु सहसैव पदन्यासे प्रवर्तते। तस्माद् ज्ञानकैवल्यपक्षो न युज्यत इति भावः।

विषयस्य कैवल्यमभिसंहितमिति द्वितीयपक्षमुत्थापयति – **अथ विषयस्येति**। इममपि पक्षं दूषयितुं विमृशति – **तत्रापि सम्प्रधार्यमिति**। अस्मिन् विषयकैवल्यपक्षेऽपि निर्धारणीयं यत् स्वरूपेण विषयस्य कैवल्यमिदम् आहोस्विद् विशेषणयोगेन ? स्वरूपपक्षे तावद् दोषमाह – **मिश्रेऽपीति**। व्याख्यातमेतत् कारिकार्थोल्लेखावसरे। विशेषणयोगेन विषयकैवल्यपक्षेऽपि दोषमाह – **विशेषणयोगेनेति**। कण्टकाद्य-भावरूपविशेषणविशिष्टतया भूतलस्य कैवल्य इत्यर्थः। कीटकण्टकाद्यभाव-विशिष्टस्य भूतलस्य ज्ञानात् पदन्यासादिलक्षणा प्रवृत्तिः प्राप्तेति विशेषणविधया कण्टकाद्यभावज्ञानं प्रवृत्तिहेतुतया अस्मिन्नपि पक्षे गलेपतितम्। एतदेवोप-पादयति – **यतो नेति**। अन्यस्य कीटकण्टकादेरभावाद् अन्यादृशं विशेषणं भूतलगतं किमपि न दृश्यते, यद्विशेषणं = यद्विशिष्टं भूतलवस्तु केवलमेकाकि-स्यादित्यर्थः। यद् विशेषणं यस्मिन् इति बहुव्रीहिणा व्याख्यानाद् यद्विशिष्टमिति तदर्थः। तच्च विशेषणं कण्टकाद्यभाव एव तत्परिच्छेदादेव पदन्यास इति सिद्धमस्मिन्नपि पक्षे अभावस्य प्रमेयत्वमित्यभिप्रायः।

**नास्तीति धीव्यवहृती विषयं कमुपाश्रिते॥ ४६ ॥**

**मानाभावं यदि क्षुण्णं मेयाभावस्य तत्र किम्॥ ४६-१/२ ॥**

**अपि च, अनेन 'नास्ति' इति बुद्धिशब्दयोर्विषयो वाच्यः। स न वस्तुस्वरूपेण, मिश्रेऽपि प्रसङ्गात्। न केवलम्, अभावादन्यस्य विशेषणस्याभावादित्युक्तम्।**

---

एवं तावद् अभावज्ञानमन्तरेण पदन्यासे प्रवृत्तिर्नोपपद्येतेत्युक्तम्, सम्प्रति अभावानभ्युपगमे 'नास्ति' इति धीः शब्दव्यवहारश्च नोपपद्येयातामित्याह— **नास्तीति** कारिकया **अपि च** इत्यादिना तद्विवरणेन चेति। अयमत्र कारिकायाः सरलार्थः— 'नास्ति' इति धीव्यवहृतीं = बुद्धिव्यपदेशौ कं विषयमुपाश्रित्य प्रवर्तेते इति वक्तव्यं पूर्वपक्षिणा। यदि स ब्रूयात्— तौ बुद्धिव्यपदेशौ मानाभावं विषयीकुरुत इति। अर्थात् 'नास्ति' इति बुद्ध्या शब्दव्यवहारेण च न कण्टकादेरभावो विषयीक्रियते किन्तु कण्टकादेः प्रतीत्यभाव एव विषयीक्रियते। कण्टकादिर्नास्तीत्यस्यार्थः— **कण्टकादिर्न प्रतीयत इति**। तथा च प्रतीत्यभाव एव 'नास्ति' इति बुद्धिव्यपदेशयोर्विषय इति पूर्वपक्षिणोऽभिप्रेतार्थः।

तदेतद् दूषयति— **क्षुण्णमिति** कारिकाशेषभागेन। तत्र मेयाभावस्य किं क्षुण्णं = किमपराद्धमित्यर्थः। अयं भावः— पूर्वपक्षी अभावस्य प्रमेयत्वं द्वेष्टि, मानाभावं च बुद्धिविषयं स्वीकरोति। इत्थञ्च तेनापि यदि मानाभावस्य प्रमेयत्वं स्वीक्रियत एव, तदा मेयाभावस्य कण्टकाद्यभावस्य कोऽपराधोऽस्ति, यत् तेन मेयाभावस्य प्रमेयत्वं न स्वीक्रियत इति।

कारिकार्थं स्वयं विशदयति ग्रन्थकारः— **अपि चेति**। सः = 'नास्ति' इति बुद्धिशब्दयोर्विषयः स्वरूपेण भूतलादि वस्तु न सम्भवति, कण्टकादिमिश्रितेऽपि भूतले 'नास्ति' इति बुद्धिशब्दयोः प्रसङ्गात्, मिश्रेऽपि भूतले स्वरूपत्वानपायात्। न वा केवलं भूतलं तद्विषयः, कण्टकाभावादन्यस्य विशेषणस्य कैवल्यस्य भूतले वक्तुमशक्यत्वात्। तथा च सिद्धोऽभावस्य बुद्धिविषयत्वरूपं प्रमेयत्वम्।

**ननु 'नास्ति' इत्ययमर्थः 'नेदं प्रमीयते' इति, न पुनरभावोऽवगम्यते। विरुद्धमिदम् – नास्त्यवगम्यते चेति। यद्येवं प्रमाणाभावो विषय उक्तः स्यात् 'नास्ति' इति धीशब्दयोः, तत्र कोऽपराधः स्यात् प्रमेयाभावस्य, येन तमतिलङ्घ्य प्रमाणाभावो विषय उच्यते ? न हि तयोर्निरुपाख्यत्वे कश्चिद् विशेषः।**

**अथ मतम् –**

**अग्रहेऽसद्ग्रहभ्रान्तिरभावव्यवहृद् भ्रमः॥ ४७॥**

**अभावे च व्यवहृतेरदृष्टौ ध्वान्तदृष्टिवत्॥ ४७-१/२॥**

---

शङ्कते – **नन्विति**।'नास्ति' इत्यस्य शब्दस्य 'कण्टकादिर्न प्रतीयते' इत्येवार्थः, न तु तेन शब्देन कण्टकाभावोऽवगम्यत इति। अत्र हेतुमाह – **विरुद्धमिदमिति**। अभावश्च अवगम्यते चेति विरुद्धमेतत्। 'नास्त्यवगम्यते च' इति वाक्येन अयमेव विरोधः प्रदर्शितः। शङ्कां निराकरोति – **यद्येवमिति**। 'नास्ति' इत्यस्य 'न प्रतीयते' इत्यर्थकरणेन प्रमाणाभावः = प्रतीत्यभाव एव विषय उक्तो भवति 'नास्ति' इति बुद्धेर्व्यपदेशस्य चेत्यर्थः। अनेन निदर्शनेन स्वपक्षं समर्थयन्नाह सिद्धान्ती – **तत्र कोऽपराध इति**। यद्येवं तर्हि प्रमेयाभावस्य कोऽपराधो येन तस्य विषयत्वमुपेक्ष्य प्रमाणाभावस्य = प्रतीत्यभावस्य विषयत्वमुच्यत इति। प्रमाणाभावप्रमेयाभावयोः साम्यमाह – **न हि तयोरिति**। प्रमाणाभावप्रमेयाभावयोरुभयोरेव निरुपाख्यत्वेऽभावस्वरूपत्वे नास्ति कश्चिद विशेषः। तस्मात् प्रमेयाभावस्यापि विषयत्वं=प्रमेयत्वं निर्बाधमिति ज्ञेयम्।

अग्रहवादी शङ्कते – **अथ मतमिति**। मतमेव श्लोकत आह – **अग्रहे इति**। अयमत्र श्लोकार्थः – अग्रहेऽर्थात् कीटकण्टकादेरग्रहे सति तत्र कण्टकाद्यभावग्रहस्य भ्रान्तिर्भवति। यथा शुक्तिकाया अग्रहे सति तत्र रजतग्रहस्य भ्रान्तिर्भवति, तद्वत्। एवं शुक्तिकादिव्यवहारस्याभावे सति शुक्तिकाद्यभावस्य व्यवहारो भवति, तद्वत्। श्लोके स्वयं दृष्टान्तमाह – अदृष्टौ = आलोकस्यादर्शने

**नैव स्तां 'नास्ति' इति बुद्धिव्यवहारौ। कथमिमौ सर्वजनानां प्रतीतावपह्नूयेते ? उच्यते – भ्रमोऽयं सद्बुद्ध्यभावे तद्विपर्ययपरिच्छेद इति। तथा सद्व्यवहाराभावे तद्विपर्ययव्यवहारभ्रमः, यथाऽऽलोकदर्शनाभावे 'तमः पश्यामि' इति विभ्रमः। न हि तमो नाम किञ्चिद् दृश्यमस्ति। नैतत् सारम्।**

**इत्थं भवेत् सुषुप्तादौ त्रैलोक्याभावदृग्भ्रमः॥ ४८॥**

---

सति अन्धकारो दृश्यत इति लोकानां भ्रमो भवति, तद्वदित्यर्थः। ग्रन्थकारः स्वयं श्लोकं व्याचष्टे – **नैव स्तामिति**। 'कण्टको नास्ति' इत्यभावबुद्धिः, तथा 'कण्टको नास्ति' इत्यभावव्यवहारश्च नैव भवतः। सिद्धान्ती पृच्छति – **कथमिति**। इमौ = अभावबुद्ध्यभावव्यवहारौ सर्वजनानां प्रतीतिविषयौ स्तः। अतोऽभाव-बुद्धिव्यवहारयोरपह्नवोऽपलापः कथं भवितुमर्हतीति प्रश्नार्थः। कण्टकादेरग्रह एव अव्यवहार एव च भवति, तत एव च 'लोकश्चरणन्यासमग्रे करोति' इत्य-ग्रहवादी उत्तरयति – **उच्यत इति**। वस्तुतो यद्यपि सतो बुद्ध्यभाव एव भवति, तत्रैव कण्टकाद्यभावस्य परिच्छेदो भवतीति भ्रमो बोध्यः। एवं कण्टकादिव्यवहार-स्याभाव एव भवति, तत्रैव कण्टकाद्यभावस्य व्यवहार इति भ्रमो बोध्य इत्यग्रहवादिनोऽभिप्रायः। तत्र दृष्टान्तमाह – यथाऽऽलोकदर्शनाभावे सति लोकस्य भ्रमो भवति 'तमः पश्यामीति'। न हि तमो नाम किञ्चिद्भावात्मकं वस्त्वस्ति, यद्दृश्येतेति। तस्मात् सिद्धम् – कण्टकाद्यदर्शनादेव पादन्यासो न तु कण्टकाभावप्रत्ययादिति पूर्वपक्षाभिप्रायः।

यदुक्तम् – 'अग्रहे अभावग्रहभ्रान्तिः, अव्यवहारे च व्यवहारभ्रमभ्रान्तिरिति', तत् सारहीनं कथनम्। सारहीनत्वमेव प्रदर्शयति – **इत्थमित्यादिना दर्शनविभ्रमः** इत्यन्तेन कारिकात्रयेण। अयमत्र कारिकार्थः – यद्यग्रहेऽभावग्रहभ्रान्तिः स्यात्, तदा सुषुप्तिकाले वस्तूनामग्रहो भवतीति तत्काले त्रैलोक्यं नास्तीति त्रैलोक्या-भावग्रहणभ्रान्तिर्भवेत्, न च भवति तथा भ्रान्तिरित्यत उक्तकथनमसारम्। एवं,

**अपरिच्छिन्दतः किञ्चिद् विभ्रमश्च न युज्यते।**

**आरोपविषयारोप्ये नाजानन् रजतभ्रमी॥ ४९॥**

**नाभावभिन्ना व्यवहृत् तदभावश्च धीपदे।**

**तमोदृष्टिस्तु भूच्छायामालोकाभावमेव वा॥ ५०॥**

**आलम्बते न त्वदृष्टाविष्टो दर्शनविभ्रमः॥ ५०-१/२॥**

**यदि खल्वदर्शने विपर्ययदर्शनभ्रमो भवति, सुषुप्तावस्थासु विश्वाभावदर्शनभ्रमः स्यात्, आलोकादर्शनभ्रमवत्। न च किञ्चिद-परिच्छिन्दतो विभ्रमः। तथा हि आरोपस्य विषयं पुरोवर्ति वस्तु आरोणीयं**

---

किञ्चिदजानतो जनस्य विभ्रमोऽपि न युज्यते। यतो हि आरोपविषयं शुक्तिम् आरोप्यमाणं रजतं चाजानतो जनस्य रजतविभ्रमो नैव भवति।

एवम् अभावभिन्नः = अभावर्मिश्रितः = अभावविशेषित इति यावद् व्यवहारः, तथा तदभावश्च व्यवहाराभावश्च 'धीपदे न भवतः' अर्थाद् बुद्धेरा-लम्बने न भवतः। यत् पुनरुक्तं 'ध्वान्तदृष्टिवत्' इति, तत्तु पृथिवीच्छायाम् अथवाऽऽलोकाभावमेव विषयीकरोति। न तु अदृष्टौ = दर्शनाभावे दर्शन-विभ्रमः = दर्शनभ्रान्तिः कस्यापि इष्टोऽस्तीति श्लोकार्थयोजना ज्ञेया।

ग्रन्थकृत् स्वयं कारिकार्थं विशदयति – **यदीत्यादिना**। अदर्शने= कीटकण्टकाद्य-भावदर्शनस्य भ्रमो भवति, तदा सुषुप्तिमूर्च्छाद्यवस्थासु विश्वदर्शनाभावाद् विश्वाभावदर्शनस्य भ्रमो भवेत्, यथा च आलोकादर्शनदशायां तमोदर्शनस्य भ्रमो भवति, तद्वदिति भावः। न त्वेवं भवतीति। न हि सुषुप्तिदशायां कस्यचिद् विश्वं नास्तीति भ्रमो भवतीत्यर्थः।

अदर्शने दर्शनाभावभ्रमानुपपत्तौ युक्त्यन्तरमाह – **न च किञ्चिदिति**। विभ्रमस्थलेऽपि अवश्यं किञ्चित् परिच्छिद्यते = ज्ञायत एव। एतदेवो-पपादयति – **तथा हीति**। यो हि जन आरोपविषयं पुरोवर्तिवस्तु शुक्तिं न जानाति,

**च रजतं ज्ञानेनानाप्नुवन् न रजतभ्रमवान् भवति। अन्यथा अप्रतिपत्तिः, स्मृतिः, सामान्यप्रतिपत्तिर्वा। न च बुद्ध्यभावो ज्ञानस्य विषयो न व्यवहाराभावः, नाभावबुद्धिर्नाभावव्यवहारः, विशेषणस्याभावस्य ज्ञानाविषयत्वात्। तत्रोभयोर्विषयारोपणीययोरग्रहणे न मिथ्याज्ञानमिति।**

---

आरोपणीयमापणस्थं रजतं च नैव जानाति, तस्य जनस्य रजतभ्रमोऽपि नैव भवति। शुक्तिरजतयोरज्ञानदशायां त्रिविधा गतिर्भवेदिति विवेचयति – **अन्यथेति**। अयमर्थः – शुक्तिरजतयोरुभयोरज्ञाने न कापि प्रतिपत्तिः स्यादित्येका गतिः। इदन्त्वेन पुरोवर्तिविषयशुक्तेरज्ञाने रजतांशमात्रसिद्धौ केवलं रजतस्मृतिरेव स्यात्, न तु 'इदं रजतम्' इति प्रतीतिः स्यादिति द्वितीया गतिः। रजतस्य ज्ञानाभावे इदमंशमात्रज्ञाने 'किञ्चिदिदम्' इति सामान्यप्रतिपत्तिरेव स्यात्। न तु तत्र पुरोवर्तिनि रजतविभ्रमः स्यादिति तात्पर्यम्। तस्माद् आरोपविषयस्य आरोपणीयस्य च ज्ञाने सत्येव विभ्रमो भवतीति स्वीकरणीयम्।

उक्तनिष्कर्षं प्रकृते घटयति – **न च बुद्ध्यभाव इति**। बुद्ध्यभावः = कीटकण्टकादिदर्शनाभावो ज्ञानस्य विषयो नास्ति, एतावता शुक्त्यज्ञानवद् आरोपविषययोः कण्टकादिदर्शनाभावकण्टकादिव्यवहाराभावयोरज्ञानं प्रदर्शितम्। एवमारोपविषयाज्ञानं प्रदर्श्य आरोप्यासम्भवं प्रदर्शयति – **नाभावबुद्धिर्नाभावव्यवहार इति**। प्रकृते आरोपविषयस्यादर्शनस्य अव्यवहारस्य च ज्ञानाभावे कण्टकाद्यभावविभ्रमरूपः कण्टकाद्यभावव्यवहाररूपश्च आरोपौ नैव भवितुमर्हत इत्यभिप्रायः। नाभावबुद्धिरित्यत्र बुद्धिपदं विभ्रमपरम्। नाभावव्यवहार इत्यत्र व्यवहारपदं शब्दप्रयोगपरम्, तथा **च कण्टकं नास्तीति** भ्रमात्मकशब्दप्रयोगोऽपि न भवितुमर्हतीति तदर्थः। उक्तविभ्रमव्यवहारयोरसम्भवे हेतुमाह – **विशेषणस्येति**। उक्तदर्शनाभावरूपस्य व्यवहाराभावरूपस्य च विशेषणस्य ज्ञानाविषयत्वादित्यर्थः। 'विशेषणस्य' इत्युपलक्षणम्, 'विशेष्यस्य' इत्यपि बोध्यम्। तेन बुद्ध्यभावेऽभावस्य विशेष्यत्वेऽपि न क्षतिरिति।

**अभ्युपगम्य प्रमाणयोग्यतां सत्तां दोषाभाव उच्यते—**

**अस्तु वा मानयोग्यत्वं सत्त्वं तच्च प्रमीयताम् ॥ ५१ ॥**

**तस्मिन् मिते वस्तुसत्त्वं भवत्यागमगोचरः ।**

**न च सापेक्षता, नास्मिन्नन्तरार्थविभिन्नताम् ॥ ५२ ॥**

**प्रचक्षते येऽपि सत्तामन्यां न प्रतिजानते ॥ ५२-१/२ ॥**

---

फलितमाह—**तत्रोभयोरिति**। आरोपविषयस्य = भ्रमाधिष्ठानस्य सामान्यतः प्रत्यक्षाभावे आरोपणीयस्य च स्मरणाभावे कीटकण्टकाद्यभावविषयकं मिथ्याज्ञानं न सम्भवति, एतदसम्भवे च घोरान्धकारे मार्गे लोकस्य चरणन्यासो न सम्भवतीति तात्पर्यम् ।

अभ्युपगमवादेन . सिद्धान्ती "प्रमाणयोग्यता सत्ता" इति प्रतिवाद्युक्तिमभ्युपगम्यापि अस्त्यर्थनिष्ठेषु वेदान्तवाक्येषु "तत्त्वमसि" इत्यादिषु न सापेक्षत्वदोष इत्याह—**"अस्तु वा मानयोग्यत्वम्"** **इत्यादि**। अयमत्र कारिकासरलार्थः—प्रमाणयोग्यत्वं सत्त्वं भवतु नाम, सत्वं=प्रमाणयोग्यतारूपा सत्ता वेदान्तैः प्रमाणैः प्रमीयताम्= प्रमिता भविष्यति । एवं हि तस्मिन् सत्त्वे प्रमिते सति ब्रह्मणो वस्तुसत्त्वं = परमार्थसत्त्वम् आगमगोचरः = वेदान्तप्रतिपाद्यो भवत्येव । यतो हि तस्याः सत्तायाः प्रमैव ब्रह्मणो वस्तुसत्त्वप्रमा, नान्या । सा चागमस्यैव गोचरीभूता । तस्मात् तां सत्तां वेदान्तवाक्यान्येव बोधयन्तीति तात्पर्यम् । न चैतावता वेदान्तवाक्येषु प्रमाणान्तरसापेक्षतादोष आयाति । एतदेवोपपादयति—**नास्मिन्नन्तरार्थविभिन्नतामि**त्यादिकारिकांशेन । अयमर्थः—येऽपि प्रमाणयोग्यतां= प्रमाणग्राह्यतां = प्रमाणसम्बन्धरूपां सत्तां प्रचक्षते = आहुः, न ततोऽन्याम्, तेऽपि अस्मिन् सत्त्वे ब्रह्मसत्तायामिति यावत्, अन्तरा एतन्मध्ये अर्थविभिन्नतां = प्रमाणान्तरसम्भिन्नतां = प्रमाणान्तरसम्भेदं (संस्पर्शम्) मानान्तरप्रवृत्तिमिति यावत्, न प्रतिजानते नाभ्युपगच्छन्ति इत्यर्थः। अथवा अर्थान्तरविभिन्नतां (प्रमाणान्तरसम्भेदं) न प्रतिजानत इति योजना कार्या । **अत्रापि**

**भवतु वा प्रमाणयोग्यता सत्ता, सैव च प्रमेयास्तु, तत्प्रमेयं वस्तु-सत्त्वमागमार्थः। न च प्रमाणान्तरापेक्षतादोषः, प्रमाणान्तर-सम्भेदस्याभावात्, 'प्रमाणयोग्यः' इत्येतावन्मात्रावगतेः।**

**तथा हि – येऽपि प्रमाणयोग्यतां सत्तामाहुर्न तद्व्यतिरेकिणीम्, तेऽपि नात्रान्तरार्थसंस्पर्शमिच्छन्ति। तत्संस्पर्शे ह्यन्यत् प्रमाणमन्वेष्यं स्यात्। कथं नान्वेष्यम्? यदा वचः प्रमाणयोग्यतायां पर्यवसितं न विशिष्टार्थसत्त्वं बोधयति, तत्र यस्य प्रमाणस्य योग्यो विशिष्टोऽर्थस्तद-**

---

प्रमाणान्तरसम्भेदं 'न प्रतिजानते' इति पदस्य नास्मिन्नन्तरेत्यनेन सम्बन्धः। कारिकार्थं स्वयं व्याचष्टे मूलकारः – **भवतु वेति**। सैव च सत्तैव च प्रमेया भवतु, आगमेनेति शेषः। अभिप्रायमाह – **तदिति**। तद्धि प्रमेयं ब्रह्मणो वस्तुसत्त्वं= पारमर्थिकत्वम् आगमस्यैवार्थः, आगमेनैव गम्यं न प्रमाणान्तरेणेति। इदमत्र रहस्यम् – प्रमाणयोग्यता सत्ता भवतु नाम, नात्र विप्रतिपद्यामहे, किन्तु सत्ता ब्रह्मसत्तैव नान्या, तच्च प्रमाणमागम एव नान्यत्। अतो योग्यतारूपसत्तायाः प्रमाजननद्वारा वेदान्तानां प्रामाण्यसिद्धिः, ब्रह्मणो वस्तुसत्त्वसिद्धिश्च भवतीति स्फुटम्।

अस्यां स्थितौ वेदान्तेषु प्रमाणान्तरसापेक्षतादोषो न भवति, ब्रह्मस्वरूप-सत्तावबोधे प्रमाणान्तरसंस्पर्शस्य सर्वथैवाभावात्। यतो हि ब्रह्मसद्भावः (सत्ता) प्रमाणयोग्य इत्येतावन्मात्रमवगम्यते "प्रमाणयोग्यता सत्ता" इति वादिनोऽपीति। पराभ्युपगमरीत्या वेदान्तेषु उक्तं प्रमाणान्तरसापेक्षतादोषा-भावमुपपादयति - **तथा हीत्यादिना**। येऽपि प्रमाणयोग्यतां प्रमाणग्राह्यतां प्रमाणसम्बन्धं वा सत्तामाहुर्न तद्व्यतिरिक्ताम्, तेऽपि प्रमाणस्य मध्ये अन्तरार्थ-संस्पर्शम्= अर्थान्तरसंस्पर्शं प्रमाणान्तरसंश्लेषमिति यावद् नेच्छन्ति। तदुक्तं पूर्वम् – **प्रमाणस्य प्रमेयकोटिप्रविष्टत्वान्नेच्छन्तीति**।

प्रमाणयोग्यता सत्तेति पक्षे प्रमाणान्तरसंस्पर्शे को दोष इति शङ्कायां दोषमाह – **तत्संस्पर्शे हीति**। प्रमाणान्तरसंस्पर्शे स्वीक्रियमाणे यत्तत् प्रमाणान्तरं

**वश्यापेक्षणीयम्। किमर्थं तदपेक्ष्यते? विशिष्टवस्तुसत्त्वाधिगमाय। किं पुनर्विशिष्टस्य वस्तुनः सत्त्वम्? प्रमाणयोग्यत्वम्। अधिगतमेव तर्हि तदस्त्यर्थनिष्ठाद् वचनात्, प्रमाणयोग्यताया अस्त्यर्थत्वात्।**

---

तदवश्यमन्वेषणीयमापद्येतेत्यर्थः। एवञ्च तैरपि प्रमाणयोग्यतारूपसत्तावादिभिर्यदि प्रमेयकोटिप्रविष्टे प्रमाणे प्रमाणान्तरं नान्विष्यते, तदा तेषां किमु वक्तव्यं ये प्रमाणयोग्यतारूपां सत्तां विहाय अर्थस्वभावभूतामर्थगतामेव योग्यतां सत्तां स्वीकुर्वन्तीति।

किन्तु प्रमाणयोग्यतारूपसत्तापक्षे प्रमाणान्तरमन्वेषणीयमेवेति पूर्वपक्षी दार्ढ्येनाह – **कथं नान्वेष्यमिति**। अवश्यमन्वेषणीयमित्यर्थः। अवश्यान्वेषणीयत्व-मेवोपपादयति– **यदा वच इति**। अयमाशयः – यदा अस्त्यर्थनिष्ठं वेदान्तवचः प्रमाणयोग्यतारूपसत्तामात्रबोधे पर्यवसितं सद् निराकाङ्क्षं जायेत न विशिष्टस्य= आनन्दाद्यात्मकस्य वस्तुनो ब्रह्मणः सत्त्वं बोधयेत्, तदा तादृशविशिष्टार्थसत्त्वसिद्धये यस्य प्रमाणस्य योग्योऽसौ विशिष्टार्थः, तत् प्रमाणान्तरं कथं नापेक्ष्यम्? अपि त्वपेक्ष्यमेवेत्यर्थः।

सिद्धान्ती पृच्छति – **किमर्थमिति**। यद्भवान् प्रमाणान्तरापेक्षामाश्वयकीं मन्यते, तत्किमर्थमिति वक्तव्यम्। पर उत्तरमाह – **विशिष्टवस्त्विति**। अर्थाद् विशिष्टवस्तुनो ब्रह्मसत्त्वस्याधिगमार्थमेव प्रमाणान्तरमन्वेषणीयमित्यर्थः। पुनः गूढाभिसन्धिः सिद्धान्ती परं प्रति पृच्छति – **किं पुनर्विशिष्टस्य वस्तुनः सत्त्वम्?** इति। अगृहीताभिसन्धिः परः स्वोक्तमेव पुनरावर्त्य उत्तरयति – **प्रमाणयोग्यत्वमेव वस्तुनः सत्त्वमिति**। ननु पूर्वमेवोक्तं प्रमाणयोग्यतैव विशिष्टवस्तुनो ब्रह्मणः सत्ता, न तु वस्तुनः स्वभावभूता वस्तुगता सत्तेति पराभिप्रायः। परेणैवमुक्ते स्वाभिसन्धिं प्रकटयन् सिद्धान्त्याह – **अधिगतमेवेति**। अहो किमिति विस्मरति भवान्? प्रमाणयोग्यतारूपा सत्ता त्वधिगतैव भवता अस्त्यर्थनिष्ठाद् वेदान्तवचनात्। यतः प्रमाणयोग्यतैव सत्ता अस्त्यर्थ इति भवतोऽभिमतम्। सा चाधिगतैवेति किमर्थमन्वेषणीयं प्रमाणान्तरमिति भावः।

**प्रमाणान्तरसम्भेदाऽभ्युपगमेऽपि नाप्रामाण्यप्रसङ्गदोष इति दर्शयति—**

**प्रमाणान्तरभिन्नार्थमपि मानं न नो वचः॥ ५३॥**

**निरपेक्षमिहार्थे तु प्रमितं वस्त्विदं मया ।**

**अर्थमात्रे च सापेक्षमन्यापेक्षार्थबोधनात्॥ ५४॥**

---

अयमेवात्र सिद्धान्तिनो गूढाभिसन्धिः— प्रमाणयोग्यतां सत्तां मन्यमाना अपि भवन्तो यदि विशिष्टसत्त्वबोधने प्रमाणान्तरसंस्पर्शं नेच्छन्ति, तदा तेषामद्वैतिनां किमु वक्तव्यम्, ये प्रमाणयोग्यतारूपां सत्तां विहाय अर्थस्वभावभूतामर्थगतामेव योग्यतां सत्तामुररीकुर्वन्तीति ।

प्रमाणयोग्यतामात्रं सत्त्वमिति स्वीकारपक्षे प्रमाणान्तरसम्भेदाभावाद् अस्त्यर्थनिष्ठानां वेदान्तानां न प्रमाणान्तरापेक्षा, अत एव न अप्रामाण्यदोष इत्युक्तम् । इदानीं प्रमाणान्तरयोग्यत्वं सत्त्वमिति स्वीकारपक्षेऽपि प्रमाणान्तरसंश्लेषाभ्युपगमेऽपि न अप्रामाण्यप्रसङ्गदोषो वेदान्तवचस्सु इत्यभिप्रायेण कारिकामवतारयति—**प्रमाणान्तरसम्भेदेति** ।

प्रमाणन्तरेत्यादि "भविष्यती"त्यन्तकारिकाणामयमर्थः — प्रमाणान्तरेण भिन्नः = संसृष्टोऽर्थो यस्य वचसस्तदपि वेदान्तवचो न मानमिति न, किन्तु प्रमाणमेव । यथा — लोके प्रमाणान्तरसम्भिन्नार्थकमपि आप्तवाक्यं प्रमाणं भवति, तद्वत् ।

ननु प्रमाणान्तरसंस्पृष्टार्थञ्चेदाप्तवाक्यं ततः सापेक्षत्वं प्रसज्येत, सापेक्षत्वाच्च प्रमाणभावाद्धीयेतेत्याशङ्क्य आह — **निरपेक्षमिति** । आप्तवाक्यं श्रुत्वा 'इदं वस्तु मया प्रमितम्' इत्यस्मिन्नर्थे तु निरपेक्षमेवाप्तवचः । यतस्तत्र श्रोता प्रमाणान्तराप्रतीतं प्रमाणान्तरनिरपेक्षादेव शब्दात् तमर्थं प्रत्येति । तस्मात् श्रोतुस्तदर्थप्रतीतौ निरपेक्षमेव तदाप्तवाक्यमिति मन्तव्यम् । कथं तर्हि सापेक्षत्वप्रसिद्धिराप्तवचस इत्यत आह — **अर्थमात्रे चेति** । अर्थमात्रे तद्वचः सापेक्षम् । यतो वक्तृप्रमाणद्वारेण तत्रार्थो बुध्यते, न तु वक्तृप्रमाणनिरपेक्षमिति

**अबाधितमपि त्वर्थे प्रमाणांशेऽपबाधनात्।**
**तत्राप्रमाणतामेति बुद्धानाप्तवचो यथा॥ ५५॥**
**आप्तवाक्यं पुनर्नार्थे न मानांशेऽपबाधितम्।**
**निरपेक्षं प्रमाणांशे व्यवहारोऽन्यथा कथम्?॥ ५६॥**

---

न वक्तरि अप्रमाणे सति तत्रार्थो बुध्यते श्रोत्रेत्यर्थः। अत एव आप्तवचः सापेक्षमिति। अन्यापेक्षार्थबोधनादित्यंशस्येत्थमर्थव्युत्पत्तिः – अन्यत् = वक्तृप्रमाणं स्वसिद्धयेऽपेक्षते योऽर्थः, सोऽन्यापेक्षार्थः, तादृशस्यार्थस्य बोधनाद् आप्तवचः सापेक्षं=प्रमाणान्तरावगतार्थबोधनाद् अर्थमात्रे सापेक्षमिति।

ननु प्रमाणान्तरावगतार्थबोधनाद् आप्तवाक्यस्य सापेक्षत्वस्वीकारे कथं तत्र प्रामाण्यमुच्यत इति चेत्,न, अबाधितार्थत्वात्। अर्थाद् अर्थेऽविसंवादमात्राभिप्रायेण अर्थे आप्तवाक्यं प्रमाणमिति स्वीकारान्न दोषः।

ननु यदि सापेक्षमपि अबाधितार्थं वचः प्रमाणं भवति तर्हि कथं चैत्यवन्दनादिबुद्धादिवाक्यम् अबाधितार्थमपि सापेक्षत्वदोषमात्राद् अप्रमाणमुच्यत इति शङ्कायां कारिकामाह– **अबाधितमपि त्वर्थ इति**। अयमर्थः – यद्यपि बुद्धादिवाक्यस्य नार्थे बाधः, तथापि मूलभूते वक्तृप्रमाणांशे तद् वाक्यमपबाध्यते। तथा हि बुद्धादिवाक्यस्य मूलं न प्रत्यक्षादिप्रमाणम्, धर्मस्य प्रत्यक्षादिप्रमाणागोचरत्वात्। न हि बुद्धस्य मन्वादेरिव वेदसंयोगोऽस्ति। तदेवं प्रमाणांशे बुद्धवाक्यं बाध्यते। वेदसंयोगाभावादेव अर्थोऽपि तद् बाध्यत एव। एतदुक्तम् – "तत्राप्रमाणतामेति बुद्धानाप्तवचो यथा" इति। तदेवान्यत्र स्फुटीकृतम् – "पुरुषाशक्तितस्तत्र सापवादत्वसम्भवः" इति। पुरुषस्य धर्मं द्रष्टुमशक्तितस्तत्र बुद्धवचनादौ सापवादत्वस्य अप्रामाण्यस्य सम्भव इत्यर्थः। आप्तवाक्ये तु तद्वैपरीत्येन प्रामाण्यमित्याह – **आप्तेति**। आप्तवाक्यं तु नार्थेऽपबाधितम्, न प्रमाणांशेऽपबाधितम्। प्रमेयांशे मूलभूतप्रमाणगोचरगोचरत्वात्, प्रमाणांशे च मूलभूतप्रमाणमूलकत्वात्। तथापि

**मयेति वक्त्रभावेन सम्भेदरहितं ततः।**
**प्रलीनज्ञानविज्ञेयविभागं स्वात्मवेदनम्॥ ५७॥**
**प्रवेदयन्तु वेदान्ता मानान्तरमलौकिकम्।**
**तत्सिद्धिसिद्धतार्थं पुंवचोवद् भविष्यति॥ ५८॥**

---

नाप्रमाण्यम्, मूलभूतप्रमाणोपस्थापनद्वारेण अर्थनिश्चायकत्वादिति भावः। अत्रोपपत्तिमाह – **व्यवहारोऽन्यथा कथमिति**। अर्थाद् आप्तवाक्यस्य सापेक्षत्वेनाप्रामाण्ये सर्व एव शब्दनिबन्धनो व्यवहारः समुच्छिद्येतेत्यर्थः।

एवञ्च वेदान्तानामपौरुषेयाणामस्त्यर्थनिष्ठानाम्, आप्तवचनवत् प्रमाणान्तरसंश्लिष्टार्थकानामपि तत्र कस्यचिद् वक्तृप्रमाणस्य अभावेन 'मयेदं प्रमितम्' इति सम्भेदमात्ररहितानां सिद्धं प्रामाण्यमित्याह दार्ष्टान्तिकम्– **"मयेति वक्त्रभावेन सम्भेदरहितं ततः"** इति कारिकाद्वयेन। अयमर्थः – आप्तवचनेभ्यो वेदान्तवाक्यानामयं भेदो यदेकत्र वक्तृसद्भावेन स वक्ता मयेदं प्रमितमिति निजाभिप्रायं श्रोतरि प्रकाशयितुं प्रयुङ्क्ते। वेदान्तेषु तु वक्तुरभावेन मयेदं प्रमितमिति प्रमाणान्तरसंश्लेषराहित्यं भवति।अत आप्तवाक्यं पूर्वप्रमाणसंश्लिष्टं यदि प्रमाणं भवति, तदा प्रमाणान्तरसम्भेदरहितानि वेदान्तवाक्यानि ब्रह्मतत्त्वप्रकाशने किमिति प्रामाण्यं नाश्नुवीरन्निति।

वेदान्तानां ब्रह्मतत्त्वबोधने आप्तवचनापेक्षया विशेषमाह– **प्रलीनेत्यादि**। वेदान्ताः 'इदं ज्ञानम् इदं ज्ञेयम्' इति विभागरहितं स्वात्मसंवेदनम्= स्वप्रकाशाख्यम्, अत एवालौकिकम् = ज्ञानज्ञेयविभागोपेतात् लौकिकात् प्रत्यक्षाद् अन्यद् मानान्तरं ब्रह्मस्वरूपं प्रतिपादयन्तीति विशेषः। तत्सिद्धिरेव ब्रह्मतत्त्वरूपस्यार्थस्यापि सिद्धिरिति निष्कर्षमाह – **तत्सिद्धीति**। तादृशस्वप्रकाशाख्यज्ञानस्य सिद्धिरेव ब्रह्मसिद्धिर्ब्रह्मणः स्वप्रकाशज्ञानाभिन्नत्वात्। तस्मात् स्वप्रकाशमानसिद्ध एव ब्रह्मणि वेदान्तवाक्यैः सिद्धत्वव्यवहारो भवतीति तात्पर्यम्।

**न खलु प्रमाणान्तरसम्भिन्नार्थमपि वचो न प्रमाणम्, प्रमाणमेव ह्याप्तवाक्यम्। कथं पुनः प्रमाणं सापेक्षमिति चेत्, उच्यते— निरपेक्षमेव तत् 'प्रमितोऽयं मयार्थः' इत्यस्मिन्नर्थे। केवले ह्यर्थे 'एवमयमर्थ इत्यप्रतीतेः''एवमयं पुरुषो वेद' इति च प्रतीतेः पुरुषज्ञाना-**

---

यथा ह्याप्तवाक्यं प्रत्यक्षादिप्रमाणान्तरसम्भिन्नार्थमपि सत् प्रमाणमेव भवति नाप्रमाणम्, तद्वदेव वेदान्तवाक्यमपि यदि प्रमाणान्तरसम्भिन्नार्थमपि अभ्युपगम्येत तथापि प्रमाणमेव तद् भविष्यति नाप्रामाण्यं तस्याशङ्कितुं शक्यत इत्याह— **न खल्विति**। ननु वेदान्तानां प्रमाणान्तरसम्भिन्नत्वाभ्युपगमे (सापेक्षत्वाभ्युपगमे) मानान्तरनिरपेक्षत्वरूपं स्वतः प्रामाण्यं तेषां यत्स्वीकृतं तद् विरुध्येत इति शङ्कते — **कथं पुनरिति**। यदि वेदान्तवाक्यं प्रमाणं तर्हि कथं मानान्तरसापेक्षम्? यदि चेत् सापेक्षम्, तदा कथं प्रमाणम्? प्रमाणत्वसापेक्षत्वयोर्विरोधादिति शङ्काभिप्रायः। उत्तरयति— **उच्यत इति**।

अयमर्थः — पुवंचोवदेव वेदान्तवचोऽपि ज्ञानांशे (ज्ञानजनने) 'प्रमितोऽयं मयार्थः' इत्यस्मिन्नंशे निरपेक्षमेवास्ति न तु सापेक्षमतः प्रमाणमेव तत्। अत्रेदं तात्पर्यम् — पुरुषो हि येन केनापि स्रोतसाऽर्थं ज्ञात्वा वाक्यं प्रयुङ्क्ते 'नद्यास्तीरे फलानि सन्ति' इति। श्रोताऽपि तदीयं वाक्यं श्रुत्वैव प्रमिणोति ''नदीतीरे फलानि सन्ति'' इति। अतो वक्तृवाक्यं श्रोतुस्तथाविधज्ञानजनने निरपेक्षमेव स्वतन्त्रमेव प्रमाणं भवति, न तु तत्र मानान्तरसाहाय्यमपेक्षते। अत एव तत्र वक्ता 'प्रमितोऽयं मयार्थः' इति बुद्ध्वा वाक्यं प्रयुङ्क्ते, श्रोतापि च तद्वाक्यं श्रुत्वा 'प्रमितोऽयं मयार्थः' इति स्वज्ञानोत्पत्तिं व्यपदिशति। तस्माद् ज्ञानोत्पत्तावाप्तवाक्यवदेव वेदान्तवाक्यमपि निरपेक्षमेव प्रमाणमिति बोध्यम्।

ज्ञानोपत्तावाप्तवाक्यस्य निरपेक्षप्रामाण्यमुपपाद्य अर्थसद्भावे सापेक्षत्वमुपदर्शयति — **केवले ह्ययर्थ इति**। अयं भावः — अर्थसद्भावसम्बन्धे तु आप्तवाक्यं न स्वतन्त्रं प्रमाणमस्ति, किन्तु चक्षुरादिस्रोतोऽधीनज्ञानापेक्षं तस्य प्रामाण्यं भवति। यतो हि स्फीतालोके निर्दोषचक्षुषार्थं ज्ञात्वा पुरुषो वाक्यं प्रयुङ्क्ते तदा तद्वाक्यं

**पेक्षम्। तत्रोपलब्धौ तावदनपेक्षत्वात् प्रामाण्यमश्नुते। तत्सिद्धिद्वारश्च पश्चादर्थ इति।**

**कथं तर्हि पुरुषवचः किञ्चिदबाधितार्थमपि सापेक्षत्वेनाप्रमाणं कथ्यते ? उच्यते – यद्यप्यर्थे बाधो नास्ति, यदपेक्षं त्वस्यार्थे प्रामाण्यं**

---

तस्मिन्नर्थेऽपि तज्ज्ञानसापेक्षं सत् प्रमाणं भवति। अत एव श्रोता तद् वाक्यं श्रुत्वा न आहत्यैव प्रत्येति यदेवमेवायमर्थोऽस्तीति। प्रत्युत इदमेव प्रत्येति यत् 'एवमयं पुरुषो जानाति' इति। केवले ह्यर्थे पुरुषज्ञानापेक्षं प्रमाणमित्यन्वयः। 'एवमयमर्थ' इत्यादि शेषवाक्यद्वयं पुरुषज्ञानापेक्षत्वे हेतुबोधकम्।

फलितम्– **तत्रोपलब्धाविति**। उपलब्धौ अर्थाद् ज्ञनोत्पत्तिं प्रति मानान्तरानपेक्षत्वाद् आप्तवाक्यं प्रामाण्यमधिगच्छति प्रमाणं भवतीति यावत्। तत्सिद्धिद्वारश्च पश्चादर्थसद्भावो निश्चीयत इति फलितार्थः।

शङ्कते – **कथं तर्हीति**। अर्थे सापेक्षमपि पुरुषवचो यदि प्रमाणं भवति तदा अबाधितार्थमपि बुद्धादिवाक्यं सापेक्षत्वकारणात् कथमप्रमाणमुच्यते वेदानुयायिभिरिति शङ्कार्थः।

समाधत्ते– **उच्यत इति**। यद्यपि बुद्धोपदिष्टार्थविषये बाधानुदयाद् बुद्धादिवाक्यमबाधितार्थकमेव तावदस्ति, तथापि बुद्धादिवाक्यं न स्वतः प्रमाणम्, पौरुषेयवाक्यत्वात् पुरुषान्तरवाक्यवत्। अप्रामाण्यमेवोपपादयति– **यदपेक्षमिति**। अयमर्थः – यथाविधं मानान्तरमपेक्ष्य बुद्धादिवाक्यस्य अर्थविषये प्रमाणत्वं सम्भवेत्, यत्प्रमाणत्वद्वारा च बुद्धादिवाक्यं चैत्यवन्दनादिरूपार्थं साधयेत्, तादृशमानान्तरांशे बुद्धादिवाक्यं बाधितार्थमेवास्ति तादृशमानान्तरस्य बौद्धैरनङ्गीकारात्। अस्माकन्तु श्रुतिरेव मानान्तरमस्ति यदपेक्ष्य मन्वादिवाक्यस्यार्थेऽपि प्रामाण्यं मन्यते। तथा चक्षुरादिकमेव मानान्तरमस्ति यदपेक्ष्य चाप्तवाक्यस्यापि अर्थे प्रामाण्यं मन्यत इति।

**यत्सिद्धिमुखेन तं साधयति तत्र प्रमाणांशे बाध्यते । तस्यासिद्धेस्तद्द्वारेण नार्थसिद्धिरित्यर्थेऽप्रमाणम् । यथाऽतीन्द्रियार्थे बुद्धवचः, पुरुषस्य दर्शनाभावात् । यथोक्तम् – "पुरुषाशक्तितस्तत्र सापवाद-त्वसम्भवः" (श्लो०वा०, पृ० ७४) इति, यथा च विप्रलम्भकवाक्यम्, अयथादृष्टार्थवादित्वस्य प्रमाणावगतत्वात् ।**

---

एवंरीत्या बुद्धादिवाक्यस्य अर्थांशेऽप्रामाण्यमुपसंहरति– **तस्यासिद्धेस्तद्द्वारेण नार्थसिद्धिरित्यर्थेऽप्रमाणमिति** । अपेक्षितस्य मानान्तरस्याभावात् तद्द्वारेण सम्भवन्ती अर्थसिद्धिः = अर्थनिश्चयो नैव भवति, अतो न बुद्धादिवाक्यमर्थांशे प्रमाणं भवति, ज्ञानोत्पत्तौ प्रमाणं भवदपीति तात्पर्यम् ।

उक्तार्थमुदाहरणेन स्फुटीकरोति – **यथाऽतीन्द्रियार्थ इति**। बुद्धस्यातीन्द्रियार्थविषयकं वाक्यं न प्रमाणम्, अतीन्द्रियार्थेष्वपेक्ष्यमाणस्य चक्षुरादिमानन्तरस्य अभावेन बुद्धादेस्तज्ज्ञानाभावेन तदीयवाक्यस्यातीन्द्रियार्थविषयेषु प्रमाणत्वासम्भवादिति भावः। अत्र भाट्टवार्तिकसंवादमाह – "पुरुषाशक्तितस्तत्र सापवादत्वसम्भवः" इति । तत्र = अतीन्द्रियार्थेषु पुरुषस्य दर्शनशक्तेरभावात् तदीयवाक्यस्य तत्र बाधितत्वसम्भवादिति कारिकार्थः । यद्यपि अबाधितार्थस्य प्रामाण्यमौत्सर्गिकम्, तथाप्यपेक्षितप्रमाणदर्शनासम्भवेन तस्य प्रामाण्यमपोद्यते, उत्सर्गापेक्षयाऽपवादस्य बलीयत्वादिति भावः ।

"अनाप्तवचो यथा" इति कारिकांशं व्याख्यातुकाम उदाहरणान्तरमाह – **यथा च विप्रलम्भकवाक्यमिति** । विप्रलम्भकजनोक्तं नदीतीरफलादिवाक्यम् अपेक्षितमानान्तरादर्शनादेव अप्रमाणं भवति, विप्रलम्भकजनेषु अयथादृष्टार्थवादित्वस्य बहुशः प्रमाणैरवधृतत्वादित्याशयः ।

**आप्तवचः पुनर्नार्थे नापि प्रमाणांशे सम्भवत्प्रमाणगोचरं बाध्यते। प्रमाणांशे चानपेक्षं तन्मुखेन चार्थसिद्धिं विदधन्नाप्रमाणं भवितुमर्हति, अन्यथ शब्दनिबन्धनो व्यवहारो न स्यात्। एवञ्च प्रमाणान्तरसम्भिन्नार्थत्वेऽपि वेदान्तवचसां न प्रामाण्यव्याहतिः, आप्तवाक्यवत्। तथा हि – तान्यपि ज्ञानज्ञेयविभागविकलं स्वप्रकाशरूपमलौकिकं काममवगमयन्तु, तद्द्वारा चार्थसिद्धिराप्तवचनवत्। इयांस्तु विशेषः स्यात्– वेदे वक्तुरभावात् 'मया' इति संस्पर्शो न स्यात्।**

---

ननु विप्रलम्भकवाक्यवदेव आप्तवाक्येऽपि अपेक्ष्यमाणप्रमाणदर्शना-सम्भवादप्रामाण्यं स्यादिति शङ्कायामाह – **आप्तवचः पुनरिति**। आप्तवचस्तु संभवत्प्रमाणगोचरम् अत एव नार्थांशे नापि प्रमाणांशे बाधितं भवतीत्यन्वयार्थः। इत्थमाप्तवाक्यप्रामाण्ये बाधकमपवादं परिहृत्य औत्सर्गिकत्वं समर्थयति– **प्रमाणांशे चेति**। ज्ञानोत्पत्तौ निरपेक्षं प्रमाणमाप्तवाक्यं सम्भवत्प्रमाणान्तरद्वारेण अर्थसद्भाव-निश्चयं कुर्वत् कथमपि अप्रमाणं न भवितुमर्हति। अर्थात् प्रमाणांशे निरपेक्षत्वाद् अर्थांशे च मानान्तरमूलकत्वाद् आप्तवाक्यं सुतरां प्रमाणं भवतीति। अस्यां स्थितावपि आप्तवाक्यानामप्रामाण्ये शब्दनिबन्धनो व्यवहार एव लुप्येत।

ननु एवमाप्तवाक्यानां भवतु तावत् प्रामाण्यम्, तावता वेदान्तवाक्यानां प्रामाण्ये किमायातमित्याशङ्कां निवारयति– **एवञ्चेति**। प्रमाणान्तरविषयी-भूतार्थकत्वेऽपि वेदान्तवचसां न प्रामाण्यहानिः, ज्ञानोत्पत्तौ निरपेक्षत्वात्, आप्तवचनवदिति सरलार्थः।

तदेवोपपादयति – **तथा हीति**। आप्तवचनवदेव वेदान्तवाक्यान्यपि ज्ञानज्ञेयभावरहितं स्वप्रकाशात्मकालौकिकं ब्रह्म नूनमवबोधयिष्यन्ति, वेदे च वक्तुरभावेन तद्वाक्यद्वारैव ब्रह्मरूपार्थस्य निश्चयोऽपि भविष्यति। आप्त-वचनापेक्षया वेदे यो विशेषस्तमाह – **इयांस्त्विति**। वेदे वक्तुरभावेन 'मया प्रमितोऽयमर्थः' इति 'मया'शब्दसंस्पर्शो नास्ति। लोके तु सर्वत्रैव तथा प्रतीयते वक्त्रा, श्रोत्रापि च 'एवमयं पुरुषो वेद' इति प्रतीयत इति विशेषः।

**अभ्युपगमवादं परिसमाप्य प्रकृतमुपसंहरति—**

**एवं न मेयता सत्ता ..........**

**परः पुनः प्रत्यवतिष्ठते—**

**............... नन्वन्याऽपि न युज्यते।**

**न हि पूर्वावमर्शेन विना सामान्यकल्पना॥ ५९॥**

**गामेकाक्षीमीक्षितवतो जायतेऽन्यत्र यादृशः ।**

**अवमर्शो दृष्टसतस्तथा न हि सदन्तरे॥ ६०॥**

**एकशब्दप्रवृत्तिस्तु दण्ड्यादिवदुपेयताम्॥ ६०-१/२॥**

---

अभ्युगमवादस्य आश्रयणेनापि सिद्धान्ती वेदान्तवाक्यानां प्रामाण्यसाधनं सम्पाद्य प्रस्तुतं प्रकरणमुपसंहरति – **"एवं न मेयता सत्ता"** इति कारिकांशद्वारा। अर्थात् प्रमाणविषयतारूपा सत्ता नास्तीति।

प्रतिवादी पुनः शङ्कामुत्थापयति– **'नन्वन्याऽपि न युज्यते'** इति। अर्थाद् अर्थस्वभावोऽपि सत्ता न युक्तेति। तत्र हेतुमाह – **न हीति**। अयमाशयः – स्वगतो भावः स्वभावः सामान्यम्, तस्य कल्पना पूर्वावमर्शेन विना न भवति। पूर्वावमर्शो नाम अनुवृत्तप्रतिसन्धानम्। अर्थाद् व्यावृत्तेषु अनुवृत्तप्रतिसन्धानमेव सामान्यकल्पनाया निदानम्। तद्भावादेव परस्परव्यावृत्तेषु अश्वमहिषादिषु एकजातिकल्पना भवति। कारिकायां स्वयमुदाहरति – **गामेकाक्षीमिति**। पुरुषस्य एकाक्षीं गां पश्यतो यादृशोऽवमर्शो भवति 'इयं गौः' इति, तादृश एवावमर्शः प्रतिसन्धानं कालाक्ष्यां गवि अपि भवति 'इयं गौरिति,। किन्तु अश्वं दृष्टवतः पुरुषस्याश्वे यादृशोऽवमर्शो भवति 'अश्व' इति, तादृश एवावमर्शः सदन्तरे महिषादौ तस्य पुरुषस्य न भवति, अश्वमहिषयोर्भिन्नस्वभावत्वात्। तस्मादर्थस्वभावोऽपि सत्ता नास्ति।

ननु सामान्यकल्पनाया अभावे एकाक्षीकालाक्ष्योरुभयोः 'सत्' इत्येकशब्दव्यवहारः कथं भवतीति शङ्कां निवर्तयितुमाह – **एकशब्द-**

दृष्टरूपावमर्शः सामान्यकल्पनायां प्रमाणम् । यथा बाहुलेयं दृष्टवतः शाबलेये 'स एवायमिति'। न च किञ्चित् सद् गृहीतवतोऽन्यत्र स भवति। एकशब्दप्रवृत्तिस्तु विनाऽपि सामान्येनार्थान्तरयोगनिमित्ता, दण्डिपाचकादिशब्दवत्।

अत्रोच्यते –

को नु पूर्वावमर्शोऽयं पूर्वरूपान्वयो धियः ॥ ६१॥

सदन्तरेऽपि सोऽस्त्येव कयाचित् खलु मात्रया।

सर्वात्मना त्वनुगमो न दृष्टः खण्डमुण्डयोः॥ ६२॥

---

**प्रवृत्तिरिति**। अर्थाद् भिन्नयोरपि तयोः 'सत्' इत्येकशब्दस्य प्रवृत्तिस्तु बहुषु दण्डिष्वेकजात्यभावेऽपि दण्डिशब्दवत्, बहुषु पाचकेष्वेकजात्यभावेऽपि पाचकशब्दवच्च स्वीक्रियतामिति कारिकार्थः।

कारिकार्थमेव विवृणोति– **दृष्टरूपावमर्श इत्यादिना**। अन्वयमुदाहरति– **यथा बाहुलेयमिति**। बाहुलेयं गां दृष्टवतो जनस्य शाबलेयेऽपि गवि गौरेवायमिति प्रतिसन्धानं भवति गोत्वसामान्यात्।

व्यतिरेकमुदाहरति– **न च किञ्चिदिति**। न हि किञ्चिदश्वादिकं सद्गृहीत्वा महिषमपि सद्भूतमश्व इति प्रतिसन्धत्ते, अश्वमहिषयोः समानजात्यभावादित्यर्थः। कथन्तर्हि अश्वमहिषयोः "सन्" इत्येकशब्दप्रवृत्तिरिति शङ्कायामाह – **एक इति**। एकशब्दप्रवृत्तिस्तु समानजातिं विनापि प्रमाणयोग्यत्वरूपार्थान्तर-योगनिमित्तैव भवति। अर्थात् प्रमाणयोग्यतारूपां सत्तामाश्रित्यैव "अश्वः सन्, महिषः सन्" इति सच्छब्दः प्रवर्तते, न तु सत्तानाम्नीं जातिमाश्रित्य । यथा हि दण्डयोगाद् दण्डीति पाकक्रियायोगात् पाचक इति एकशब्दप्रवृत्तिर्भवति बहुषु दण्डिषु पाचकेषु चेति भावः।

समाधत्ते –**अत्रोच्यत इति**। धियः = बुद्धेः पूर्वरूपस्य = पूर्वदृष्टवस्त्वंशस्य कस्यचिदुत्तरदृष्टिविषये योऽन्वयः = अवभासः स पूर्वावमर्शः? किं वा 'स-एवायम्' इति पूर्वापरानुसन्धानम्? यदि आद्यपक्षस्तदा सदन्तरेऽपि स पूर्वान्वयः

**न तादृशश्चेन्नो भेदमात्राद् वेद्यः स्वपह्नवः।**
**न भेदमात्रान् मृज्जातिहीनं मणिकमल्लकम्॥ ६३॥**
**रूपान्वयः प्रत्ययस्य मणिकेषु हि यादृशः।**
**न दृष्टमल्लकस्यास्ति मणिके खलु तादृशः॥ ६४॥**

---

कयाचिन्मात्रया भावत्वेनेत्यर्थः, अस्त्येव। यथा अश्वः सन् तथा महिषोऽपि सन्नेवेति भावत्व-रूपैकांशान्वयोऽस्त्येवेत्यर्थः। तथा च सिद्धं सत्तासामान्यम्। यदि द्वितीयः पक्षस्तदा सर्वात्मनाऽनुगमस्तु खण्डमुण्डयोरपि न दृश्यते। यथा मेरुसर्षपादिरूपे खण्डे सर्वात्मनाऽनुगमो न भवति 'स एवायम्' इति, एवं मुण्डेषु गवादिष्वपि 'स एवायम्' इत्युत्कटः पूर्वरूपपरामर्शो नैव दृश्यत इत्यर्थः।

शङ्कते – **तादृशश्चेदिति**। तथापि यादृशः पूर्वरूपान्वयः खण्डादिषु अस्ति, तादृशोऽश्वमहिषयोर्नास्तीति कुतस्तयोः सत्तासामान्यसिद्धिरिति शङ्काग्रन्थाशयः।

समाधत्ते – **न भेदमात्रादिति**। न वैलक्षण्यमात्रेण प्रतीयमानस्य सामान्यस्य निरासः सम्भवति। वेद्यः प्रतीयमानो भावः स्वपह्नवः = सुकरापलापो न सम्भवतीत्यक्षरार्थः। न हि आकृतिभेदमात्रात् मणिकमल्लकं मणिकः शरावश्च मृज्जात्या हीयेते। प्रत्युत भिन्नाकारावपि तौ मृज्जातीयौ भवत एव। वैलक्षण्यमे मणिकमल्लकयोः स्पष्टयति –**रूपान्वयइति**। नानामणिकविषयकबुद्धौ यादृशरूपानुगमो भवति तादृशरूपानुगमो भिन्नाकारयोर्मणिकशरावयोर्नास्ति, तथापि भिन्ना मणिका यथा मृज्जातीया भवन्ति तथैव भिन्नाकारावपि दृश्यमानौ मणिकमल्लकौ मृज्जातीयौ भवत एवेति कारिकार्थः।

**कः पुनरयं पूर्वावमर्शः ? पूर्वरूपावभासो बुद्धेः, अथ 'सोऽयम्' इति पूर्वापरानुसन्धानम् ? तत्र यदि पूर्वः कल्पः, सोऽस्त्येव सदन्तरे मात्रया।**

**तथा हि— निरुपाख्यवैलक्षण्येन सतां तुल्यरूपता प्रकाशते, अन्यथा निरूपाख्यवत् सन्तोऽप्यत्यन्तविलक्षणाः प्रकाशेरन्। अथ सर्वरूपानुगमः, सोऽभिप्रेतेऽपि सामान्यगोचरे नास्ति। न हि खण्डमुण्डयोः सर्वात्मनान्वयः, एकत्वप्रसङ्गात् सामान्याभावापत्तेः। अथ न तादृशो यादृशः खण्डादिषु, तदसत्, न विशेषमात्रेण संवेद्यान्वयिरूपप्रत्याख्यानं युज्यते, गोत्वादेरपि तत्संभवात्। न हि देवदत्तस्य द्वितीयदर्शने यादृशो रूपानुगमः, तादृशः**

---

कारिकार्थं स्पष्टयितुं विकल्पयति— **कः पुनरिति**। प्रथमं विकल्पमनूद्य दूषयति— **तत्रेति**। यदि बुद्धेः पूर्वरूपावभासः = पूर्वरूपान्वयः पूर्वावमर्शस्तदा महिषादिसदन्तरे सत्तारूपेणास्त्येवेति न नो हीयते किञ्चित्। उक्तमेव विशदयति— **तथा हीति**। अयमभिप्रायः – यदि भवान् मन्येत, यावत् कालं सत्तासामान्यं न सिद्धम्, तावत्तु सदन्तरे मात्रयापि पूर्वावमर्शो नास्तीति तदपि न युक्तम्, सत्तासामान्यसिद्धेः प्रागपि निरुपाख्यात् शशशृङ्गाद् वैलक्षण्येन सर्वभावानामश्व-महिषादीनां तुल्यरूपता प्रकाशत एव। यदि तेषां समानं शशशृङ्गादिवैलक्षण्यं न प्रकाशेत तदा सन्तोऽप्यश्वमहिषादयः सद्भ्योऽत्यन्तविलक्षणाः शशशृङ्गादिवदेव असन्तः प्रकाशेरन्, न तु भावत्वेन प्रकाशेरन्निति।

ननु मात्रया पूर्वरूपान्वयः पूर्वावमर्शो न विवक्षितः किन्तु पूर्वदृष्टस्वरूपस्य सर्वस्य उत्तरबुद्धिविषयेऽन्वयः पूर्वावमर्शो विवक्षितः। तादृशश्च नास्ति खण्डमुण्डयोरिति शङ्कते— **अथेति**। तद्दूषयति – **तदसदिति**। अर्थाद् यत् किञ्चिद् विशेषमात्रेण खण्डमुण्डयोः संवेद्यमानमन्वयिरूपं प्रत्याख्यातुं न शक्यते। तथा सति नानागोषु प्रतीयमानं गोत्वसामान्यमपि शाबलेयबाहुलेयादिविशेषमात्रेण प्रत्याख्यातं भवेत्।

सामान्यगोचरेऽपि स्थले न सर्वत्र तुल्यः पूर्वरूपावमर्श इत्यत्र कारिका-मुक्तोदाहरणेन स्फोरयति – **न हीति**। अयमाशयः – देवदत्तं प्रथमं दृष्ट्वा पश्चात्तस्य द्वितीयदर्शनेऽपि यादृशं रूपानुगमं पश्यति लोकः, तादृशमेव

**खण्डं दृष्टवतो मुण्डक इति। सामान्यगोचरेऽपि च न सर्वत्र तुल्यः, नानामणिकविलक्षणो हि मणिकशरावयो रूपान्वयः। न च तावता मृज्जातिहीनता तयोः, किञ्चित्तुल्यतयाऽवभासमानत्वात्।**

**अथ द्वितीयः कल्पः, अत्रोच्यते—**

**पूर्वावमर्शः स इति प्रख्येत्यपि न शोभते ।**
**मणिकं वीक्षितवतः सोऽपि नोदेति मल्लके॥ ६५॥**

**पूर्वापरानुसन्धानात्मिका 'सोऽयम्' इत्यभेदमवगमयन्ती भिन्नेष्वपि सामान्यकल्पनाहेतुर्बुद्धिः पूर्वावमर्श इत्युच्यते, इत्येतदपि न शोभते, यतो**

---

पूर्वरूपानुगमं खण्डं दृष्ट्वा पश्चाद् मुण्डकदर्शने न पश्यति। एतावता स्वीकरणीयमेतद् यत् सामान्यगोचरेऽपि न सर्वत्र तुल्यः पूर्वरूपावमर्श इति।

एवमेव नानामणिकेषु यादृशो रूपान्वयो भवति, तद्विलक्षण एव रूपान्वयो यद्यपि मणिकशरावयोर्भवति, तथापि तयोः सामान्यकल्पना भवत्येव, न तु मृज्जातिहीनता तयोर्भवति, मृज्जातिरूपायाः किञ्चित्तुल्यताया उभयत्राव-भासमानत्वादिति निष्कर्षः।

'सोऽहम्' इत्याकारकं पूर्वापरानुसन्धानं पूर्वावमर्श इति द्वितीय-कल्पानुसरणे आह – **पूर्वावमर्शः स इति** कारिकया। अर्थात् पूर्वापरानुसन्धानरूपा 'सः' इति प्रख्यैव पूर्वावमर्शः, सैव च सामान्यकल्पनाया बीजमिति द्वितीय-कल्पोऽपि न शोभनः। अत्र हेतुमाह– **'मणिकं वीक्षितवत इति**। अर्थाद् दृष्टमणिकस्य जनस्य शरावं पश्यतः सतः 'सोऽयम्' इत्यनुसन्धानाभावेऽपि शरावो मणिकवद् मृज्जातीय इति सामान्यकल्पना दृश्यतेऽतो द्वितीयकल्पोऽपि न शोभन इति कारिकायाः सरलार्थः।

कारिकां स्वयं मूलकारो व्याचष्टे– **पूर्वापरानुसन्धानात्मिका** इत्यादिवाक्येन। अयं भावः – 'सोऽयम्' इत्यभेदं बोधयन्ती पूर्वापरानुसन्धानात्मिका बुद्धिरेव पूर्वावमर्शः, सैव च भिन्नेष्वपि सामान्यकल्पनाया हेतुरस्तीति पक्षोऽपि न शोभनः,

**नानुसन्धानादेवाभेदसिद्धिः, अभिन्नरूपावभासादपि, अन्यथा नाभिन्नदेशकाल एकोऽर्थः स्यात्। न हि तत्र देशकालभेदाभावे 'सः' इत्यनुसन्धानम्। अपि च दृष्टमणिकस्य मल्लके न भवति द्रागिव 'सः' इत्यनुसन्धानं खण्डमुण्डवत्, न चैवं मृज्जातिहीनता। विमृशतस्तु 'तज्जातीयमिदम्' इति बुद्धिः सदन्तरेऽपि समाना।**

**तुल्ये तर्हि सामान्ययोगे कस्मात् क्वचित् 'सः' इत्यवमर्शः, नान्यत्र ? उच्यते—**

**सामान्यरूपभूयस्त्वे तस्मात् तत्त्वं प्रकाशते ।**
**विलक्षणत्वमल्पत्वे चकास्ति तदनुद्भवात्॥ ६६ ॥**

---

यतः पूर्वापरानुसन्धानादेव अभेदः सिध्यतीति नास्ति। तथा सति भिन्नयोस्तद्देशैतद्देशयोरनुसन्धानाभावदशायाम् अभिन्नदेशकालवर्तिनि अपि वस्तुनि 'एकोऽयमर्थः' इत्येकं वस्तु न सिध्येत् । न हि तस्मिन् देशकालयोर्भेदोऽस्ति येन प्रत्यभिज्ञायामिव 'सः' इति प्रत्ययो भवेत्।

एवम्, मणिकं दृष्टवतो जनस्य मल्लके( शरावे) झटिति 'सः' इत्यनुसन्धानं नैव भवति, यथा खण्डं दृष्टवतो मुण्डे न भवति तद्वत्। न चैतावताऽपराधेन मणिकमल्लकयोरेका जातिर्न भवति, न वा तयोर्मृज्जातिहीनता भवति। तस्माद् विमर्शपूर्वकं सद्रूपमश्वं दृष्टवतो जनस्य सदन्तरे महिषेऽपि 'सद्रूपोऽयम्' इति, 'सज्जातीयोऽयम्' इति च सामान्यबुद्धिर्भविष्यतीति न काचिदनुपपत्तिरिति भावः।

ननु मणिकयोर्यथा एकमृज्जातियोगस्तथैव मणिकशरावयोरपि एकमृज्जातियोगश्चेदस्ति, तर्हि कथं मणिकं दृष्टवतो जनस्य मणिकान्तरदर्शने 'स एवेदम्' इत्यनुसन्धानं भवति, शरावदर्शने तु न भवतीति पृच्छति— **तुल्ये तर्हीति**। एतज्जिज्ञासानिवृत्तये परिहारश्लोकमवतारयति— **उच्यत इति**। अयं

**यस्मात् सत्यपि सामान्ययोगे मणिशरावयोः ॥ ६६–१/२ ॥**

**न; 'सः' इति प्रख्या मणिकान्तरे च भवति भूयिष्ठसामान्ययुक्ते। तस्मात् सामान्यरूपाणां भूयिष्ठत्वेनोद्भवात् 'सः'–इति तत्त्वप्रख्या, अल्पत्वे तु न तथा, तेषामनुद्भवात्।**

**न च दण्ड्यादिवदेकशब्दप्रवृत्तिरित्याह–**

**प्रमाणं कार्यविज्ञेयमसंयोज्यास्ति धीर्यतः॥ ६७ ॥**

**प्रथमं जायते तस्मान्न दण्ड्यादिसमानता ॥ ६७–१/२ ॥**

---

श्लोकार्थः – मणिकशरावयोः एकमृत्सामान्य(जाति)योगे सत्यप्यन्येषां सामान्यरूपाणामल्पत्वनिमित्तेन विलक्षणत्वं चकास्ति। शरावे सामान्यरूपाणामल्पत्वे प्रमाणमाह – **तेषामनुद्भवादिति**। सामान्यरूपाणामनवभासनादित्यर्थः। मणिकयोस्तु सामान्यरूपाणां बाहुल्यावभासनात् 'स एवेदम्' इत्यनुसन्धानं भवतीति विवेकः। श्लोके 'यस्मात्' इत्यादिना हेतुनिर्देशः, 'तस्मात्' इति च निगमननिर्देशः। तत्त्वम् = तज्जातीयत्वमित्यर्थः।

परिहारश्लोकार्थं स्वयं स्पष्टयति मूलकारः – **नेति**। शङ्कापरिहारपरत्वेन 'न' इति शब्दोऽधिको योजितो व्याख्याग्रन्थे स्वयं मूलकारेणेति बोध्यम्। शेषं स्पष्टार्थम्।

"एकशब्दप्रवृत्तिस्तु विनापि सामान्येन अर्थान्तरयोगनिमित्ता, दण्डिपाचकादिशब्दवत्" इति पूर्वपक्षिणा यदुक्तम्, तन्निराकर्तुं परिहारश्लोकमवतारयति– **न चेति**। यथा, दण्डयोगाद् बहुषु एकदण्डिशब्दप्रयोगः पाकक्रियायोगाच्च बहुषु एकपाचकशब्दप्रवृत्तिस्तथात्र अर्थान्तरयोगनिमित्ता 'सत्' इत्येकशब्दप्रवृत्तिर्नास्तीति मन्तव्यम्। अत्रोपपत्तिमाह– **प्रमाणं कार्यविज्ञेयमित्यादिना**। यतः = यस्मात् कार्यगम्यं प्रमाणम् असंयोज्य = अनपेक्ष्यैव अश्वमहिषयोः खण्डमुण्डयोर्वा 'अस्ति' इति बुद्धिः प्रागेव जायते, तस्माद् दण्डिपाचकादिशब्दसमानता नास्ति। दण्डिपाचकादिशब्दप्रवृत्तिस्तु प्रत्यक्षादिप्रमाणेन दण्डादियोगं निमित्तीकृत्यैव भवतीति विशेषः, इति श्लोकार्थः।

**नागृहीतविशेषणा विशिष्टबुद्धिः। न च सद्बुद्धेः प्राक् प्रमाणग्रहणं तत्कालं वा। तथा हि — प्रमाणादेव सा भवति, प्रमाणं च प्रमितिकार्योन्नेयत्वात् पश्चात् तत्प्रतिपत्तेर्गृह्यते। तस्मादग्रहात् प्रमाणस्य तत्संयोजनविकला सा न प्रमाणयोगनिमित्ता।**

**यदि तर्हि न प्रमाणयोगोऽस्त्यर्थः, कथं तत्कालानुविधायिनी कालप्रवृत्तिरस्त्यर्थे 'कूपोऽस्ति' 'कूपोऽभूत्' 'कूपो भविष्यति' इति? तदुपाधि-**

---

श्लोकार्थं स्वयं विशदीकरोति— **नागृहीतविशेषणेति**। अयं भावः यद्युच्येत— यथा दण्डादियोगाद् भिन्नेष्वपि एकदण्ड्यादिशब्दप्रवृत्तिस्तथैव प्रमाणयोगादश्वमहिषयोर्भिन्नयोरपि 'सद्' इत्येकशब्दप्रवृत्तिर्भवितुमर्हति। अतस्तदर्थं सत्तासामान्यं नैव स्वीकार्यमिति, तन्न, यतो नागृहीतविशेषणा विशिष्टबुद्धिर्भवतीत्यस्ति नियमः। अत एव दण्डविशेषणग्रहणपुरस्सरमेव 'अयं दण्डी' इति बुद्धिजार्यते। अतो यदि 'सद्' इति बुद्धिरपि प्रमाणयोगनिमित्ता स्वीक्रियेत तदा तादृशबुद्धेः प्रागेव प्रमाणग्रहणं भवेत्, विशिष्टबुद्धित्वात् प्रमाणस्य च विशेषणत्वात्। किन्तु नैवं भवति, प्रत्युत तादृशबुद्धिरूपकार्योन्नेयत्वेन तादृशबुद्ध्युत्तरकाले बुद्धिसमकालमेव वा प्रमाणग्रहणं सम्भवति, न तु ततः पूर्वम्[1]। तस्मात् प्रमाणयोगो न तादृशबुद्धौ निमित्तमिति मन्तव्यम्। अतः "सद्" इति एकशब्दप्रवृत्तौ न दण्ड्यादिशब्दतुल्यता। तस्माद् अश्वमहिषयोः 'सद्' इत्येकशब्दप्रवृत्तिः सामान्यनिमित्तैव स्वीकरणीया, यथा बहुषु मणिकेषु एकमणिशब्दप्रवृत्तिर्मणिकत्वसामान्यनिमित्ता भवति, तद्वदिति तात्पर्यम्। एतदेव प्रपञ्चितम् **तथा हीत्यादिना**। सा = सद्बुद्धिः, तत्प्रतिपत्तेः = सद्बुद्धेः पश्चात् प्रमाणं गृह्यत इत्यन्वयः।

ननु अस्त्यर्थो यदि सत्तासामान्यरूपस्तदा सामान्यस्य वर्तमान एव समवायात् प्रमाणयोगस्य यादृशः कालस्तदनुविधायिनी वस्तुनः कालप्रवृत्तिर्न स्यात्। भवति च प्रमाणयोगकालानुविधायिनी कालप्रवृत्तिरस्त्यर्थे, यथा— कूपोऽस्ति, कूपोऽभूत्, कूपो भविष्यतीति। तस्मात् 'सद्' इति

---

१. **विशेषणज्ञानजन्या विशिष्टबुद्धिरिति वैशेषिकाभिप्रायेण 'प्राक्' इत्युक्तं मूले, विशेषणविशेष्ययोरेकज्ञानग्राह्यत्वमिति नैयायिकमताभिप्रायेण च 'तत्कालं वा' इत्युक्तमित्यभिप्रायप्रकाशिका।**

प्रकल्पितभेदत्वात्, देवदत्तसत्ताया इव पाटलिपुत्रसंयोगोपाधि-कल्पितभेदाया इति।

न च 'क्रियामन्तरेण न संसर्गः पदार्थानाम्' इति शब्दार्थ-नयविदामविगानमित्याह –

सम्बन्धमात्रावसितमपि चान्ये विपश्चितः॥ ६८॥

आहुर्वचोऽक्रियमयं राज्ञो ना फलिनो द्रुमाः॥ ६८-१/२॥

'राज्ञोऽयं पुरुषः' 'फलिता एते वनस्पतयः' इति क्रियारहितेष्वपि संसर्गः प्रतीयते । न चेहापि 'अस्ति क्रिया' इति युज्यते, यतो

---

बुद्धिः प्रमाणयोगनिमित्तैव मन्तव्या, न सामान्यनिमित्तेति चेत्याशङ्कते – **यदि तर्हीति**। उत्तरयति – **तदुपाधीति**। प्रमाणस्योपाधिस्तदुपाधिः = प्रमाणविषय-कालत्रयम्। तेन कालत्रयरूपोपाधिना सत्ताभेदस्तत्र कल्पितो न तु सत्ताभेदो वास्तविकः। अत्र दृष्टान्तमुपन्यस्यति– **देवदत्त इति**। भूतभविष्यद्वर्तमानानां पाटलिपुत्रसंयोगोपाधीनां भेदाद् एकापि देवदत्तसत्ता भिन्नेति कल्प्येत, देवदत्तः पाटलिपुत्रेऽस्ति, पाटलिपुत्रेऽभूत्, पाटलिपुत्रे भविष्यतीति। तस्माद् भिन्नेषु द्रव्यगुणकर्मसु अनन्यथासिद्धसदित्यभिन्नबुद्धिव्यपदेशनिमित्तं सत्तासामान्यं सिद्धम्।

एवम् अस्तिक्रियासंसर्गमभ्युपगम्य वेदान्तवाक्यैः सद्ब्रह्मबोधे प्रमाण-योग्यतारूपां मेयतां परिहृत्य, अधुना क्रियापेक्षापि वेदान्तार्थसम्बन्धे नास्तीत्यस्मिन्नर्थे श्लोकमवतारयति– **न चेति**। क्रियामन्तरेण पदार्थानां संसर्गो नास्तीति नैवास्ति, किन्तु अस्त्येव पदार्थसंसर्गः क्रिया-मन्तरेणापीत्यस्ति शब्दार्थनयविदां सम्मतमित्यवतरणवाक्यार्थः। अन्ये शब्दार्थनयविदो विपश्चितः सम्बन्धमात्रपर्यवसितमपि अक्रियं वच आहुः। यथा – राज्ञः पुरुषः फलवन्तो वृक्षा इति श्लोकार्थः। श्लोकार्थमेव विशदयति – **राज्ञोऽयं पुरुष इत्यादिना** ग्रन्थेन। अयं भावः – "राज्ञोऽयं पुरुषः, फलिता एते वनस्पतयः" इत्यादिषु क्रियारहितेष्वपि वाक्येषु पदार्थानां संसर्गः प्रतीयते।

न निर्ज्ञातराजसम्बन्धस्य पुरुषस्य फलवतां च वनस्पतीनां सत्तेह प्रतिपाद्या गम्यते। न ह्येते वाक्ये सत्तायां पर्यवस्यतः, किन्तु पुरुषस्य राजसम्बन्धे, द्रुमाणां च फलसम्बन्धे– 'योऽयं पुरुषः स राज्ञः', 'य एते वनस्पतयः, ते फलिताः'। न च 'यो राजपुरुषः, सोऽस्ति', 'ये च फलिताः, ते सन्ति' इति।

यदपि केचित्– 'अवधार्यताम्' इति प्रतिपत्तिक्रियाविधिना क्रियावत्तां मन्यन्ते, तदपि शब्दादेव प्रतिपत्तेः सिद्धत्वात् प्राङ् निरस्तमेवेति। अथापि न क्रियारहितं वाक्यमस्ति, क्रियायां च सापेक्षता, तथापि न दोष इत्याह–

---

न चोक्तवाक्येष्वपि अस्तिक्रियाया योगो विद्यत इति वाच्यम्, यतो हि उक्तवाक्याभ्यां पुरुषस्य राजसम्बन्धमात्रं वृक्षाणां च फलसम्बन्धमात्रं प्रतिपाद्य-मस्ति, न तु तेषां सत्ताऽपि प्रतिपाद्यत्वेन प्रतीयते। न हीमे वाक्ये तथाविध-पुरुषस्य तथाविधवृक्षाणां च सत्तायां पर्यवस्यतः, यो राजपुरुषः, सोऽस्ति, ये च फलिता वृक्षास्ते सन्तीति। किन्तु "योऽयं पुरुषः स राज्ञः, य एते वनस्पतयस्ते फलिताः" इत्यत्रैव तयोर्वाक्ययोः पर्यवसानं प्रतीयत इत्याशयः।

**यदपि केचित्** साग्रहं तत्रापि 'अवधार्यताम्' इति अवधारणक्रियाविधिना क्रियावत्तां स्वीकुर्वन्ति, यथा –'योऽयं पुरुषः स राज्ञः' इत्यवधार्यताम्, तथा 'य एते वनस्पतयस्ते फलिताः' इत्यवधार्यताम् इति, तदपि निरस्तमेव पूर्वमिति स्मरणीयम्। यतो हि शब्दादेव प्रतिपत्तेर्जायमानत्वेन तस्या अविधीयमानत्वात्। अतो वेदान्तवाक्याद् यदात्मविज्ञानं तन्न तावद् विधीयते, विधिं विनाऽपि वेदान्तवाक्यं श्रुत्वैव तद्विज्ञानस्य जायमानत्वादिति पूर्वमेव निरस्तोऽयमपि पक्ष इति ज्ञेयम्।

पूर्वं वेदान्तवाक्यानां प्रामाण्याय क्रियारहितमपि वाक्यं भवति, अस्तिक्रियानिष्ठस्य निरपेक्षत्वं च भवतीति प्रतिपादितम्। इदानीं स्वीकृत्यापि क्रियारहितवाक्यानामभावम्, अस्तिक्रियानिष्ठस्य सापेक्षत्वं च वेदान्तानां प्रामाण्यमुपपादयति– **अथापीत्यादिना**। तथा न दोष इति समाधानवाक्यम्, तथापि न दोषो वेदान्तानां प्रामाण्य इति तदर्थः।

**जनिक्रियावसानाच्च विशिष्टं शक्यबोधनम् ॥ ६९॥**

**कारणं जायत इदमीदृक्षात् कारणादिति ॥ ६९–१/२ ॥**

**'ईदृक्षात् कारणाज्जगज्जायते' इति जनिक्रियानिष्ठादपि वाक्यात् तद्विधकारणसत्ता शक्यते प्रतिपत्तुम्। यथा– 'ईदृक्षात् तरोरिदं फलमजनि' इति तद्विधतरुसद्भावः। तथा च श्रुतयः काश्चिदेवमेव ब्रह्म प्रतिपादयन्ति– "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते" (छा० १।९।१), "यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनः सर्वे देवाः" (बृ०२।१।२०) इत्यादि। तथा–**

---

कथं न दोष इत्याह – **जनिक्रियावसानाच्चेत्यादिना**। जनिक्रियायामवसानं पर्यवसानं यस्य वाक्यस्य तस्मादपि वाक्याद् विशिष्टस्य = सत्यज्ञानानन्तप्रत्यक्स्वरूपस्य जगत्कारणस्य ब्रह्मणो बोधनं शक्यमित्यर्थः। उक्तविशिष्टस्य बोधनप्रकारमेव प्रदर्शयति– 'ईदृक्षात् कारणाद् इदं जगज्जायते' इति जनिक्रियानिष्ठादपि वाक्यात् तथाविधस्य सत्यज्ञानानन्तप्रत्यक्स्वरूपस्य कारणस्य सत्ता बोद्धुं शक्यत इति भावः। अत्रोदाहरणमाह – **ईदृक्षात् तरोरिति**। तद्विधतरुभावः = एवंविधफलजननक्षमस्य तथाविधस्य तरोः सत्ता यथा बोध्यते, तथैव एवंविधस्यास्य ब्रह्मादिस्थावरान्तस्य जगतः कारणमपि ब्रह्म वेदान्तवाक्यैर्बोद्धुं शक्यत इति समुदितार्थः। ननु उपनिषदो निर्विशेषं ब्रह्म प्रतिपादयन्ति, न तु जगत्कारणत्वेन विशिष्टमिति शङ्कायामाह– **तथा च श्रुतय इति**।

श्रुतीरुदाहरति– "सर्वाणि ह वा इमानि" इति, "यथाऽग्नेः क्षुद्रा विस्फुल्लिंङ्गाः" इति, "यथोर्णनाभिः सृजते" इति, "यथा सुदीप्तात् पावकात्"

यथोर्णनाभिः सृजते गृह्णते च

यथा पृथिव्यामोषधयः सम्भवन्ति।

यथा सतः पुरुषात् केशलोमानि

तथाक्षरात् सम्भवतीह विश्वम्॥ (मुण्ड० १/१/७)

"तदेतत् सत्यम्"। (मुण्ड० २/१/१)

"यथा सुदीप्तात् पावकाद् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः।

तथाऽक्षराद् विविधाः सौम्यभावाः प्रजायन्ते तत्र चैवापियन्ति"॥

(मुण्ड०२/१/१)

---

इति, "दिव्यो ह्यमूर्तः पुरुषः" इति चेति। सर्वाणि = ब्रह्मादिस्थावरान्तानि भूतानि आकाशवदलक्षितात् परमात्मन एव समुत्पद्यन्त इति प्रथमश्रुत्यर्थः। जडाजडसर्वभूतकारणत्वेन ब्रह्मोदाहृत्य विशिष्टरूपेण जीवानां कार्यत्वेन तत्कारणत्वेन ब्रह्मप्रतिपादकं श्रुत्यन्तरमुदाहरति – **यथेति**। यथाऽग्नेः क्षुद्राः = लघुरूपाः विस्फुलिङ्गा व्युच्चरन्ति = विविधा उद्गच्छन्ति, एवमेवैतस्मादात्मनः सर्वे प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते, यथा प्राणेभ्यो देवा देवेभ्यो लोका विप्रतिष्ठन्त इति द्वितीयश्रुत्यर्थः।

चेतनस्य ब्रह्मणोऽचेतनजगदुपादानत्वे उपादानधर्मस्य ब्रह्मचैतन्यस्य प्रपञ्चे समवायप्रसङ्ग इत्याशङ्कापरिहाराय तादृशनियमे व्यभिचारप्रदर्शनाय श्रुत्यन्तरमुदाहरति– **यथोर्णनाभिरिति**।

न केवलं जगदुत्पत्तिकारणत्वं ब्रह्मणः, अपि तु लयकारणत्वमपि ब्रह्मण एवेति प्रतिपादनाय श्रुत्यन्तरमुदाहरति – **यथा सुदीप्तादिति**। अत्र 'अपियन्ति' इत्यस्य 'लीयन्ते' इत्यर्थः। इति तृतीयश्रुत्यभिप्रायः।

ब्रह्मणो जगदुपादानत्वे तस्य जगदभेदे जडत्वापत्तिः, भेदेऽद्वैत-

तथा –

"दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रोऽक्षरात् परतः परः ॥
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी" ॥ (मुण्ड० २/१/२) इति ।

इदानीं पदार्थसंसर्गायैव विधिराश्रयितव्य इति प्रत्यवतिष्ठते –

ननु प्रमान्तराधीनसंसर्गाः पुरुषोक्तिषु ॥७० ॥

---

हानिरित्याशङ्क्य तन्निरासपरं श्रुत्यन्तरमुदाहरति – **दिव्यो हीति**। अत्र पूर्णत्वाद् ब्रह्म पुरुषपदेन व्यपदिशति श्रुतिः। स पुरुषो दिव्यो न तु प्राकृतः। स बाह्येन पृथिव्यादिना आभ्यन्तेरण देहादिना च सह वर्तत इति स बाह्याभ्यन्तर उक्तः। एतावता बाह्याभ्यन्तरभेदराहित्यं सूच्यते ब्रह्मणः। 'अजः' इति जन्मरहितः। 'अप्राणो ह्यमनाः' इति पदाभ्यां लिङ्गदेहराहित्यं तथा शुभ्र इत्यनेन स्थूलदेहराहित्यं सूच्येते। स एव पुरुषः प्राणस्य मनसः सर्वेन्द्रियाणामाकाशस्य वायोरग्नेरपां विश्वधारिण्याः पृथिव्याश्चोत्पत्तिहेतुरिति चतुर्थश्रुत्यर्थः। वेदान्तवाक्यैर्ब्रह्मबोधने यदि क्रियानिष्ठता आवश्यकी मन्येत, तदापि सा क्रिया जनिक्रियैवास्ति, यां पुरस्कृत्य श्रुतिर्ब्रह्म बोधयतीति न काचिदनुपपत्तिरिति भावः।

वेदान्तेषु विधेराश्रयणं सर्वथा निरर्थकमिति पूर्वं प्रतिपादितम् "अथ ससंर्गभाजो नो पदार्थाः क्रियया विना। किमायातं विधेः, साऽपि त्वस्त्यादिः सुलभा क्व न" ॥ (२९) इति कारिकाव्याख्यानप्रसङ्गे। तच्च असहमानः प्रतिवादी पुनः प्रत्यवतिष्ठते – **'पदार्थसंसर्गायैव विधिराश्रयितव्यः'** इति। प्रतिवादी स्वपक्षं कारिकाभिरुपपादयति – **"ननु प्रमान्तराधीनससंर्गाः पुरुषोक्तिषु"** इति। घटेन कूपाज्जलमाहर इत्यादिपौरुषेयवाक्यस्थलेषु घटकूपजलादिपदार्थाः प्रमान्तराधीनसंसर्गाः प्रमान्तराधीनः संसर्गो येषां तथाविधा भवन्ति। इतरत्र तु = अपौरुषेयवाक्यस्थलेषु वेदेषु तु "सत्यं ज्ञानमनन्तं

**पदार्था विध्यधीनात्मसंश्लेषा इतरत्र तु।**
**पदानां रचना तत्र विवक्षापरिपूर्तये॥ ७१॥**
**प्रमाणान्तरगम्येऽर्थे विवक्षा च व्यवस्थिता।**
**विध्यर्थसिद्धये वेदे तदभावे त्वसङ्गतेः॥ ७२॥**
**विशिष्टार्थगतिर्भ्रान्तिरग्रहे ग्रहविभ्रमः॥ ७२-१/२॥**

**विवक्षितार्थनिष्पत्तये हि लोके पदानां समभिव्याहारः। नैकपदसाध्यो विवक्षितार्थः। प्रमाणान्तरोपलब्धश्च विवक्षाविषयः। तेन तत्र प्रमाणयन्तः**

---

ब्रह्म" इत्यादिषु विध्यधीनात्मसंश्लेषाः = विध्यधीन आत्मसंश्लेषः (संसर्गः) येषां तथाविधा एव भवन्ति पदार्थाः।

लौकिकवैदिकवाक्ययोरुक्तवैरूप्ये इदं निमित्तं यत् लौकिकवाक्यस्थले पदानां रचना सहोच्चारणं विवक्षापरिपूर्तये भवति, अर्थाद् वक्तुः विशिष्टार्थविवक्षां परिपूरयितुं भवति। वक्तुर्विवक्षा च प्रत्यक्षादि-प्रमाणान्तरगम्याऽत एव घटकूपजलाद्यर्थे व्यवस्थिता दृश्यते, न त्वतीन्द्रिये प्रमाणागोचरेऽर्थे।

वेदे तु पदानां समभिव्याहाररूपा रचना विध्यर्थस्य नियोगस्य सिद्धय एव भवति, न तु कस्यचिद् विवक्षापरिपूर्तये, तत्र वक्तुरभावात्। अतो विध्यर्थाभावे वैदिकपदार्थानां परस्परसंसर्ग एव न सङ्गच्छेतेति।

ननु विध्यभावेऽपि "सत्यं ज्ञानम्" इत्यादिवेदवचनात् पदार्थसंसर्गावगमो भवत्येव, किं विधिनेति चेत्, न, तत्र विशिष्टस्य संसृष्टार्थस्य याऽवगतिरुच्यते, सा भ्रान्तिरेव। अर्थाद् असंसर्गाग्रह एव संसर्गग्रहस्य भ्रमो भवतीति विधिवादिनः पूर्वपक्षिणोऽभिप्राय उक्तकारिकासु प्रकटितः।

उक्तकारिकार्थं ग्रन्थकारः स्वयं विवृणोति – **विवक्षितार्थनिष्पत्तये हीत्यादिना।** अयं भावः – वक्तुर्यो विवक्षिताऽर्थस्तस्य निष्पत्तये = परप्रतीतय एव व्यवहारे

**संसर्गः। तथा च तद्विरोधेऽसंसर्ग एव पदार्थानाम्— "जरद्गवः पादुककम्बलाभ्याम्" इति।**

**वेदे तु प्रमाणान्तराभावाद् विधिनिबन्धनोऽसौ। तदभावे त्वसंभवाद् येयं विशिष्टार्थगतिरुच्यते, सा भ्रान्तिः समभिव्याहारात्। सोऽयं विवेकाग्रहे संसर्गग्रहविभ्रमः।**

**अत्रेदमेव विचार्यम्— कथं लोके प्रमाणान्तराधीनः संसर्गः इति। यदि प्रमाणान्तरेण तदवगमात्, तदसत्, अपूर्वस्यापि तस्य प्रतीतेः।**

---

अनेकपदानां सहोच्चारणं भवति। यतो नैकेन पदेनोच्चारितेन वक्तुः सर्वो विवक्षितार्थः श्रोत्रा प्रतिपत्तुं शक्यते।वक्तुश्च यावान् विवक्षाविषयः= विवक्षितार्थो भवति, तं सर्वं प्रत्यक्षादिप्रमाणान्तरेणोपलभ्यैव परस्य बोधार्थं तद्वाचकशब्दसमूहमुच्चारयति, तं श्रुत्वा च श्रोता वक्तुः सम्पूर्णं विवक्षितार्थमवगच्छति। विवक्षितार्थावगमश्च वाक्यान्तर्गतसमस्तपदार्थानां संसर्गबोधः। अनयया प्रक्रियया लोके पदार्थानां संसर्गबोधः प्रमाणान्तराधीन इत्यायाति।प्रमाणान्तरेण विरोधे तु पदार्थानां संसर्गबोधो न सम्भवी। यथा "जरद्गवःपादुककम्बलाभ्याम्" इति वाक्ये प्रयुक्ते पदार्थसंसर्गबोधो न कस्यापि भवति, अत्रत्यपदार्थानां संसर्गस्य प्रत्यक्षादिप्रमाणान्तरविरुद्धत्वात्। "जरद्गवः पादुककम्बलाभ्यां द्वारि स्थितो गायति भद्रकामी। तं ब्राह्मणी पृच्छति पुत्रकामा राजन् रुमायां लशुनस्य कोऽर्थः"।। इति सम्पूर्णश्लोकस्वरूपम्।

वैदिकवाक्ये लौकिकाद् वैरूप्यं स्फुटयति– **वेदे त्विति**। अर्थाद् वैदिकेषु ब्रह्मादिपदार्थेषु प्रत्यक्षादिप्रमाणान्तरासम्भवात् तेषु न प्रमाणान्तराधीनः संसर्गबोधः, किन्तु विधिप्रयुक्ता एव संसर्गप्रतीतिः। तदभावे=विध्यभावे तु संसर्गप्रतीतिरेवासम्भवा। यदप्युच्यते– विध्यभावेऽपि सत्यं ज्ञानमित्यादिपदार्था मिथः संसृष्टा अवगम्यन्त इति, तन्न, तत्र पदानां समभिव्याहारबलाद् भ्रम एवास्ति अवगमः। अयं च संसर्गग्रहरूपो विभ्रमो विवेकस्य असंसर्गस्य अग्रहनिमित्त एव भवतीति मन्तव्यम्। पदार्थानाम् असंसर्गो न गृहीत इत्येतदेव 'संसर्गो गृह्यत इत्यभिमन्यते' भ्रान्तपुरुषः, न तु वस्तुतः संसर्गग्रहः। तस्माद् वेदे विध्यधीनः सर्वत्र संसर्गग्रह इति ब्रह्मादिवाक्येऽपि विधिरेवाश्रयितव्य इति विधिवाद्यभिप्रायः।

**अन्यथा वचनवैयर्थ्यात्। अनधिगतं हि श्रोतुरर्थं बोधयितुं वचः प्रयुज्यते।**

**अथ संसर्गयोग्यतामात्रस्य प्रमाणान्तरेणावगमात्, समानमेतद् वेदे। तथा हि— अरुणया क्रीणातीति संसर्गः, नारुणयैकहायन्येति। तथा**

---

लोकवेदयोः पदार्थसंसर्गबोधे प्रतिवाद्युक्तं प्रयोजकवैरूप्यं निराकर्तुमुपक्रमते— **अत्रेदमेव विचार्यमिति**। 'लोके प्रमाणान्तराधीनः संसर्गः' इति पक्षस्तावद् विचारणीय इत्यर्थः। तत्र सिद्धान्ती पृच्छति – कथं प्रमाणान्तराधीनः संसर्गः? इति। यद्युच्येत 'प्रमाणान्तरेण संसर्गोऽवगम्यतेऽत एव स प्रमाणान्तराधीन' इति, तन्न युक्तम्। यः संसर्गः अपूर्वः = न प्रमाणेन पूर्वमवगतस्तस्यापि श्रोत्रा प्रतीयमानत्वात् 'अग्निरुष्णः' इति क्वचित् प्रयोगस्थले अग्नेरुष्णतायाश्च संसर्गो यद्यपि प्रत्यक्षेण प्रमाणान्तरेण पूर्वमवगतो भवति, तथापि नायं सार्वत्रिको नियमः, अपूर्वस्यैव संसर्गस्य श्रोत्रा प्रायः सर्वत्र वाक्येषु प्रतीतेः। अन्यथा संसर्गबोधार्थं वाक्यप्रयोग एव वक्तुर्व्यर्थः स्यात्, भवन्मतानुसारेण संसर्गबोधस्य प्रमाणान्तरेण पूर्वमेव निष्पन्नत्वात्। स्वाभिप्रेतं समर्थयितुं सिद्धान्ती व्यवहारं प्रमाणयति – **अनधिगतं हीति**। श्रोत्रा पूर्वमनधिगतमेवार्थं बोधयितुं वक्त्रा वाक्यं प्रयुज्यत इति।

यद्युच्यते – तवापि मते संसर्गो न प्रमाणमन्तरेण पूर्वम् अवगतो भवति किन्तु संसर्गयोग्यतामात्रं पूर्वं प्रमाणान्तरावगतं भवतीति, तत्तु वेदेऽपि समानमेवास्ति। यथा "अरुणया एकहायन्या गवा सोमं क्रीणाति" इति वेदवचनस्थले आरुण्यपदार्थक्रययोः संसर्गयोग्यताऽस्तीति योग्यतामात्रज्ञानं लौकिकव्यवहारप्रमाणादेव भवतीति वयं सिद्धान्तिनोऽपि मन्यामह एवेति नावयोर्वैषम्यं लोकवेदयोः। अत एव लोकप्रमाणानुसारेण 'अरुणया' इत्यस्य 'क्रीणाति' इत्यनेनैव संसर्गयोग्यता न तु 'एकहायन्या' इत्यनेन। एवं वेदे लोके च भावार्थः = भव्यार्थः = साध्या क्रिया इति यावद् नियोगविषयो भवति। अर्थात् साध्यायां क्रियायामेव तां निर्वर्तयितुं कश्चिन्नियुज्यते, न सिद्धे द्रव्ये गुणे वा, सिद्धत्वादेव तयोः। को नियोगविषयः, कश्च न नियोगविषय इति हि व्यवस्था

**भावार्थो नियोगविषयः, न द्रव्यगुणशब्दार्थ इति प्रमाणान्तरावसितयोग्यता-सामर्थ्येनैव व्यवस्थाप्यते। अथ न विवक्षैकपदावगम्या, तदर्थमात्रविवक्षाया निष्प्रयोजनत्वात्। तस्माद् विवक्षाविशेषसिद्धिर्नासंसृष्टेषु पदार्थेषु भवतीति तथा विवक्षया प्रयुक्ताः संसृज्यन्ते। सा च प्रमाणान्तरसिद्ध इति।**

**एवमपि विवक्षानिबन्धनः स्यात्, तत्प्रयुक्तानां संसर्गात्, न प्रमाणान्तरनिबन्धनः। यतो न तत् तस्य प्रतिपादकम्, न प्रयोजकं वा।**

---

प्रमाणान्तरावगतयोग्यतासामर्थ्येनैव भवति नान्यथा। समाना चेयं पद्धतिर्लोक-वेदयोः। अतः साधूक्तम् – "**समानमेतद् वेदे**" इति।

तस्मात् "लोके प्रमाणान्तराधीनः पदार्थसंसर्गो वेदे च ब्रह्मादिवाक्ये विधिप्रयुक्तः" इति वैरूप्योक्तिर्निःसारा। अतो यथा लोके पदार्थसंसर्गयोग्यता-मात्रपरिच्छेदे प्रमाणान्तरमुपयुज्यते न तु पदार्थसंसर्गबोधेऽपि, तथा वैदिकवाक्येऽपि पदार्थसंसर्गयोग्यतामात्रपरिच्छेदे प्रमाणान्तरोपयोगितां न वारयामः, किन्तु सत्यज्ञानादिपदार्थसंसर्गबोधे प्रमाणान्तरासामर्थ्यात् तदर्थं विधिराश्रयितव्य इत्येव वयं न रोचयामह इति भावः।

पुनः प्रकारान्तरेण प्रमाणान्तराधीनत्वं पदार्थसंसर्गस्येति प्रत्यवतिष्ठते – **अथ नेति**। अयं भावः – विवक्षया वाक्यघटकानि पदानि समुच्चार्यन्ते। विवक्षा च वचसाऽर्थप्रत्यायनेच्छा। सा च वक्तुरिच्छा एकेनोच्चारितपदेनापि प्रतीयते, किन्तु सा निष्प्रयोजना एकपदार्थमात्रविवक्षाया निरर्थकत्वात्। तस्मात् पदसमूहात्मकवाक्येन क्रियाकारकपदार्थसार्थस्य प्रत्यायनेच्छैव विवक्षा प्रकृतोपयोगिनी। तादृशस्य विवक्षाविशेषस्य सिद्धिः (प्रतीतिः) परस्परसंसृष्टेष्वेव पदार्थेषु विषयभूतेषु भवति, नासंसृष्टेषु। अतः परस्परं संसृष्टपदार्थसमूहप्रत्यायनेच्छया प्रयुक्तैः पदसमूहैरवगताः पदार्था एव परस्परं संसृज्यन्ते। अतस्तादृश्येव विवक्षा प्रयोजनवती। असंसृष्टैकपदार्थप्रत्यायनेच्छया प्रयुक्तं तु पदं निरर्थकमेव।

तादृशी संसृष्टार्थविषयिणी च वक्तुर्विवक्षा तावन्न भवितुमर्हति यावत् स प्रमाणान्तरेण संसृष्टार्थं न प्रतीतवान् भवेत्। तस्माद् विशिष्टविवक्षैव संसृष्ट-

**यत्तु प्रमाणान्तरसिद्धे विवक्षेति, भवतु, न तस्य संसर्ग उपयोगः। तथा च विप्रलम्भकवाक्येऽपि संसर्गप्रतीतिः।**

**यत्तु विरोधे न संसर्गः, कामम्, न तु ततः संसर्गः। विरोधेऽपि तु नासंसर्गः, प्रतीतेः। प्रतीतोऽपि तु बाध्यते प्रमाणान्तरेण। एवं चानृतं**

---

पदार्थप्रतीतिं प्रति अर्थात् पदार्थसंसर्गप्रतीतिं प्रति प्रमाणान्तरस्य प्रयोजकत्वं साधयतीति सिद्धं पदार्थसंसर्गस्य प्रमाणान्तरावगम्यत्वमिति 'अथ नेत्यादि'-शङ्काग्रन्थस्याभिप्रायः।

समाधत्ते— **एवमपीति**। एवन्तर्हि विवक्षानिबन्धन एव पदार्थसंसर्गो न प्रमाणान्तरनिबन्धन इत्यायाति, विवक्षाप्रयुक्तानामेव पदार्थानां परस्परसंसर्गात्। विवक्षिता एव पदार्थाः संसृज्यन्ते नाविवक्षिताः, अत एव भोजनकाले 'सैन्धवमानय' इति प्रयोगे लवणमेव आनयनक्रियया सम्बध्यते, तस्यैव वक्त्रा विवक्षितत्वात्, नाश्वः, तस्याविवक्षितत्वात्। प्रमाणान्तरस्य पदार्थसंसर्गं प्रत्यकारणत्वे निमित्तमाह— यतो न श्रोतारं प्रति पदार्थसंसर्गस्यावबोधकं प्रमाणान्तरम्, वक्तृस्थत्वात्, नापि तस्य प्रयोजकम् उत्पादकं वा प्रमाणान्तरम्, विवक्षाया एव संसर्गं प्रति प्रयोजकत्वादिति।

यत्तूक्तम्— प्रमाणान्तरसिद्ध एव विवक्षा भवति, अतः प्रमाणान्तराधीना लोके संसर्गप्रतीतिरिति। तन्न युक्तम्, यतः प्रमाणान्तरसिद्धे भवतु नाम विवक्षा, तथापि संसर्गबोधं प्रति प्रमाणान्तरस्य न कोऽप्युपयोगः। विनाऽपि प्रमाणान्तरं 'नद्यास्तीरे पञ्च फलानि सन्ति' इत्यादितो वञ्चकवाक्यादपि पदार्थसंसर्गप्रतीतेः।

यदप्युक्तम्— प्रमाणान्तरविरोधदशायां न संसर्गबोधो जायते, यथा 'जरद्गवः पादुककम्बलाभ्याम्' इत्यादिवाक्ये। अतः प्रमाणान्तरं संसर्गबोधोपयोगीति। तत्र ब्रूमः— कामं प्रमाणान्तरविरोधे संसर्गबोधो न जायते, न हि तावता प्रमाणान्तरात् संसर्गबोध इत्यायाति। विप्रलम्भकवाक्ये क्वास्ति प्रमाणान्तरम्? तथापि तु संसर्गप्रतीतिर्जायत एव। तथा स्वीकृतौ च प्रतिबन्धकविरोधे कार्यानुत्पत्तेः प्रतिबन्धकस्यापि कार्यजनकत्वापत्तेः। आतपविरोधे न छायेति आतपाधीना छाया स्यात्। वस्तुतस्तु विरोधावस्थायामपि 'असंसर्ग' इति नास्ति, प्रमाणविरुद्धादनाप्तवाक्यादपि संसर्गप्रतीतेः।

**किञ्चिद्वचः, किञ्चिदनर्थकम् — दशदाडिमादि, किञ्चित् सत्यम्। अन्यथाऽनृतानर्थकविभागो न स्यात्।**

**अथ प्रमाणान्तरेणोपलभ्यार्थं विवक्षित्वा परस्मै प्रतिपादयति पुरुषः। तेन तद्वचसः प्रमाणान्तरोपलब्धिरेवार्थः, सैव प्रयोजिका पदार्थसंसर्गस्य। तस्याः प्रयोजिकाया अभावान्न वेदे पदार्थसंसर्गसिद्धिः। मा भूत् सा, विशिष्टार्थ एव प्रयोजकः।**

---

ननु आप्तवाक्यादिव अनाप्तवाक्यादपि यदि संसर्गप्रतीतिस्तदाऽऽप्त-वाक्यादनाप्तवाक्यस्य को विशेषः? इति शङ्कायामाह — **प्रतीतोऽऽपीति**। अयं भावः — अनाप्तवाक्याज्जायमानायाः प्रतीतेर्विषयो बाध्यते पश्चात् प्रमाणान्तरेण, आप्तवाक्याज्जायमानायाः प्रतीतेर्विषयस्तु न कदाचिद् बाध्यत इत्युभयोर्विशेषः। अत एव किञ्चिद् वचोऽनृतम्, किञ्चिदनर्थकम्, यथा दशदाडिमादिवचनम्, किञ्चिच्च सत्यम्, यथाऽऽप्तजनोदीरितं वचः। इत्थञ्च वचनत्रैविध्यमुपपन्नं भवति। अन्यथा वचसाम् अनृतानर्थकसत्यविभागो न स्यात्। तथा सति सर्वमेव वचोऽनृतमेव भवेत्, सत्यमेव वा भवेदिति भावः।

पूर्वं विवक्षायाः प्रमाणान्तराधीनत्वात् प्रमाणान्तरनिबन्धनः संसर्गबोध इत्युक्तम्, इदानीं पौरुषेयवचसां प्रमाणान्तरोपलब्धविषयकत्वात् प्रमाणान्तराज्जाता या वक्तुरुपलब्धिः, तन्निबन्धनः संसर्गबोधो लोक इति शङ्कते — **अथ प्रमाणान्तरेणेति**। अयं भावः — शब्दप्रयोक्ता पुरुषः प्रत्यक्षादिप्रमाणेन स्वयम् अर्थमुपलभ्य परत्र स्वबोधसङ्क्रान्तये विवक्षति= शब्दान् प्रयोक्तुमिच्छति। तदनन्तरं शब्दान् प्रयुज्य परस्मै प्रतिपादयति= शब्दप्रयोगद्वारा श्रोतरि अर्थबोधं जनयति। अर्थबोधश्च पदार्थसंसर्गबोध एव। अनेन प्रकारेण पुरुषवचसः प्रमाणान्तराज्जाता उपलब्धिरेव विषय इति प्रत्येतव्यम्। यतस्तां स्वोपलब्धिमेव वचसा प्रकटयति श्रोतारं प्रति वक्ता पुरुषः। तस्मात् सैव= वक्तुः प्रमाणान्तरोप-लब्धिरेव विषयविधया श्रोतरि पदार्थसंसर्गबोधस्य प्रयोजिका लोके। वेदे तु तस्याः = प्रमाणान्तरोपलब्धिरूपायाः प्रयोजिकाया अभावात् पदार्थसंसर्गसिद्धिर्न

**अथ लोकावगम्यत्वाच्छब्दसामर्थ्यस्य लौकिकप्रयोजकाभावान्न संसर्गः, विधिमत्त्वेऽपि न स्यात्। अथ लोके संसर्गमात्रपरत्वेऽर्थापत्तिः, न तद् विशेषे, तन्मात्रेण प्रतीतिप्रयोगयोरुपपत्तेः। विनापि प्रमाणान्तरोपलब्ध्या विशिष्टार्थगतिसिद्धिः।**

---

सम्भविनी। अतो वेदे पदार्थसंसर्गसिद्धये विधिरेव शरणमिति पूर्वपक्षः। समाधानमाह – **मा भूत् सा, विशिष्टार्थ एव प्रयोजक इति** ।

अयमाशयः– मा भूद् वेदे प्रमाणान्तरादर्थोपलब्धिः, तथापि तत्र विधिर्नाश्रयितव्यः। तत्र पदार्थसंसर्गबोधप्रयोजकस्तु सत्यज्ञानानन्तब्रह्मरूपो विशिष्टोऽर्थ एव। यथा हि विधिवादिनो मते पुंवचसः प्रमाणान्तरादुत्पन्नोपलब्धिरेव विषयः, सैव च श्रोतरि स्वप्रतिपत्तये पदार्थसंसर्गबोधं प्रति विषयविधया प्रयोजिका, तथैव वेदान्तवाक्यानां सत्यज्ञानानन्तादिस्वरूपं ब्रह्मैव विषयः, तदेव च स्वप्रतिपत्तये विषयविधया पदार्थसंसर्गबोधं प्रति प्रयोजकं भवतीति किमन्तर्गडुना विधिनेति भावः।

प्रकारान्तरेण वेदे विध्यपेक्षामाशङ्कते प्रतिवादी – **अथ लोकावगम्यत्वादिति**। अयमर्थः – अर्थबोधने शब्दसामर्थ्यं लोकव्यवहारादेवावगम्यते नान्यथा। लोके च प्रमाणान्तरोपलब्धिः पदार्थसंसर्गबोधे प्रयोजिका दृष्टा। स्फुटीकृतं चैतत् पूर्वम्। वेदान्तेषु ब्रह्मणि प्रमाणान्तराभावेन सत्यज्ञानानन्तादिशब्दानां सामर्थ्यानवधारणाद् न ततः संसर्गबोधसम्भव इति विधिराश्रयितव्य इति। निराकरोति – **विधिमत्त्वेऽपि न स्यादिति**। अयमाशयः – संसर्गबोधे प्रमाणान्तरोपलब्धेरावश्यकत्वे वेदान्तेषु विधिस्वीकारेऽपि संसर्गबोधप्रयोजिकायाः प्रमाणान्तरोपलब्धेरभावात् संसर्गबोधो न स्यादेव। अतो वृथा वेदान्तेषु विधिकल्पनाप्रयासः।

वेदान्तेषु विधिमत्तासमर्थनाय प्रकारान्तरेण प्रत्यवतिष्ठते प्रतिवादी – **अथ लोक इति**। शब्दानां पदार्थमात्रपरत्वं पदार्थसंसर्गरूपविशिष्टार्थपरत्वं वेति विमर्शे अर्थापत्तिप्रमाणेन शब्दश्रवणानन्तरं पदार्थसंसर्गप्रतीत्यन्यथानुपपत्त्या पदार्थसंसर्गमात्रप्रत्ययार्थं शब्दप्रयोगान्यथाऽनुपपत्त्या च पदार्थसंसर्गमात्रपरत्वं

**अथ प्रमाणान्तराल्लोके संसर्गसत्यतावगमः। अपूर्वोऽपि हि श्रोतुः संसर्गो वक्तुः प्रमाणानुमानमुखेन सत्यतां लभते, तदसम्भवेऽसत्यत्वाद् बुद्धादिवाक्येषु। तेन प्रमाणान्तरनिबन्धनो लोके संसर्ग उच्यते।**

---

वाक्यघटकशब्दानां निर्णीयते। अर्थाद् वाक्ये प्रयुज्यमानाः शब्दा यदि पदार्थ-संसर्गपरा न स्युस्तदा तान् शब्दान् श्रुत्वा पदार्थसंसर्गप्रतीतिर्नोपपद्येत, नोपपद्येत च पदार्थसंसर्गबोधाय तेषां शब्दानां सह प्रयोगः। अनयोः प्रत्ययप्रयोगयोरनुप-पत्तिसहकृतेन अर्थापत्तिप्रमाणेन शब्दानां पदार्थसंसर्गमात्रपरत्वं निर्धार्यते। तत्र च पदार्थसंसर्गः 'प्रमाणान्तरोपलब्धिप्रयुक्तः' इति विशेषणेन न विशेष्यते। अर्थात् प्रमाणान्तरोपलब्धिप्रयुक्तो यः पदार्थसंसर्गविशेषस्तत्परत्वं शब्दानामिति न निर्धार्यतेऽर्थापत्त्या, किन्तु तथाविधविशेषणरहितपदार्थसंसर्गमात्रपरत्वमेव निर्धार्यते। तावतैव तथाविधप्रत्ययशब्दप्रयोगयोरुपपत्तेः। एतदभिप्रेत्य पूर्वपक्षमूले उक्तम् – "अथ लोके संसर्गमात्रपरत्वेऽर्थापत्तिः, न तद्विशेषे (न प्रमाणान्तरोप-लब्धिप्रयुक्तपदार्थसंसर्गविशेष इत्यर्थः), तन्मात्रेण प्रतीतिप्रयोगयोरुपपत्तेः" इति।

अतो विनापि प्रमाणान्तरोपलब्ध्या केवलेन विध्याश्रयेण स्यादेव वेदान्तेषु संसर्गबोध इति वेदान्तेषु विधिपक्षपातिनः पूर्वपक्षिणोऽभिप्रायः।

अत्र सिद्धान्ती समाधत्ते – **विनापीति**। अयं भावः – एवं तर्हि भवद्रीत्यैव लोके पदार्थसंसर्गं प्रति प्रमाणान्तरोपलब्धेरप्रयोजकत्वात्, तां विनापि शब्दानां संसर्गमात्रपरत्वसामर्थ्येनैव वेदान्तेष्वपि सत्यज्ञानानन्तादिस्वरूपविशिष्टब्रह्मपदार्थ-बोधो भवेदेवेति तदर्थं किं विधिकल्पनाक्लेशेनेति।

विधिवादी पुनः प्रकारान्तरेणाक्षिपति – **अथेति**। यद्यपि लोके न प्रमाणान्तरो-पलब्धिप्रयुक्तः संसर्गबोधः किन्तु शब्दानां संसर्गपरत्वसामर्थ्यप्रयुक्त एव, तथापि पदार्थसंसर्गस्य सत्यता प्रमाणान्तराधीनैव। यतः शब्देभ्यो ज्ञायमानः पदार्थसंसर्गः श्रोतुः कृतेऽपूर्व एव भवतीति तस्य सत्यता वक्तृगतप्रमाणानुमानाधारेण निर्धार्यते। अत एव प्रमाणान्तरमनुपजीव्य स्वतोऽलौकिकार्थोपदेष्टुर्बुद्धादेर्वाक्येषु प्रमाणान्त-राधारशून्येषु सत्यत्वं नावधार्यते। तेन प्रमाणान्तरनिबन्धनो लोके संसर्ग

**भवतु, वेदे तु प्रमाणान्तरसम्भेदाभावात् स्वातन्त्र्येणार्थप्रतीतेः शब्दनिबन्धन एव। तदास्तामेतत्। भवतु यथा तथा लोके। इदं तु पर्यनुयुज्यते–**

**कथं नु विध्यधीनत्वं यदि स्यादन्यथा वृथा॥ ७३॥**

---

इत्युच्यते। अतो वेदान्तवाक्येषु प्रमाणान्तराभावाद् विध्याश्रितमेव संसर्गबोधस्य सत्यत्वमास्थेयमित्याक्षेप्तुरभिप्रायः।

समाधत्ते – **भवत्विति**। लोके भवतु नाम प्रमाणान्तरनिबन्धनः संसर्गस्य सत्यत्वावगमः पौरुषेयत्वात् लौकिकवचसः, वेदे त्वपौरुषेयत्वादेव।

वक्तृप्रमाणसंस्पर्शाभावात् स्वतन्त्रेणैव प्रमाणान्तरोपलब्धिनिरपेक्षेण पदार्थसंसर्गनिश्चयाद् न तत्सत्यत्वार्थमपि प्रमाणान्तरस्यापेक्षा। शब्दादेव संसर्गस्य सत्यत्वावधारणात् शब्दनिबन्धन एव संसर्गसत्यत्वावगमोऽपि। एवं हि सति न पदार्थसंसर्गावगमार्थं न च तत्सत्यत्वार्थं वेदान्तेषु विधिराश्रयणीय इति तात्पर्यमवसेयम्।

अलं बहूक्त्या ।। लोके संसर्गबोधस्य तत्सत्यत्वावगमस्य च यः कोऽपि प्रकारो भवतु नाम। वेदान्तेषु तावत् पृच्छ्यते यत् तेषु संसर्गबोधो विध्यधीन इति कथं स्वीक्रियताम्? यतो हि न हि विधिः संसर्गसामान्यं संसर्गविशेषं (विषय - नियोज्य - संसर्गरूपं) वा बोधयति, येन संसर्गबोधाय विधिरपेक्षणीयः स्यात्। तस्मात् संसर्गबोधाय न विध्यपेक्षा।

शङ्कते – यदि अन्यथा स्यात्, अर्थाद् यदि विधिः संसर्गं न बोधयेत् तदा निर्विषयो विधिर्वृथा = निरर्थक एव स्यात्। अतो विधिरेव संसर्गमाक्षिपतीति सिद्धं संसर्गबोधस्य विध्यधीनत्वमिति ।

**विधिर्निर्विषयस्तुल्यमिदमन्यपदोदिते।**
**विशिष्टार्थावगत्यान्यपदार्थोऽपि प्रयुज्यते॥७४॥**
**अर्थवत्त्वे प्रमाभावादस्त्वसौ चेदनर्थकः।**
**विधिर्नैवं कस्य हेतोरथ स्यादपरं पदम्॥७५॥**
**प्रमाणान्तरसिद्धार्थे प्रयोगि न विधायकम्।**
**तदर्थोऽनन्यगम्यो हि मीयमानः समाक्षिपेत्॥७६॥**

---

उत्तरयति – **तुल्यमिति**। अन्यपदोदिते = पदार्थान्तरेऽपि इदं तुल्यम् = संसर्गाक्षेपकत्वाभावे निर्विषयत्वप्रसङ्गेन निरर्थकत्वं तुल्यमित्यर्थः। अर्थाद् विधिवद् वैदिकपदान्तरमपि संसर्गाक्षेपकं स्यादिति भावः। तदेवोपपादयति – विशिष्टार्थावगत्या = प्रयोजनेन अन्योऽपि पदार्थस्तत्र वेदे प्रयुज्यते। न हि एकार्थकः शब्दो विशिष्टार्थम् अवगमयितुं क्षमत इति तदर्थं संसर्गमाक्षिपेत् स्वनिरर्थकत्वपरिहाराय। तथा च वेदे पदार्थान्तरेऽपि संसर्गाक्षेपकत्वं प्रसज्येत विधिवदेवेति सिद्धान्तिनोऽभिप्रायः।

शङ्कते – **अर्थवत्त्व इति**। अयं भावः – लोके बुद्धिपूर्वकप्रयुक्ताः पदार्था भवन्ति। अतस्तेषां संसर्गाक्षेपकत्वं प्रमाणतो दृष्टम्। वेदे तु बुद्धिपूर्वकत्वाभावात् तत्रत्यस्य पदार्थान्तरस्य संसर्गाक्षेपकत्वं न प्रमाणतो दृष्टमतस्तस्यार्थवत्त्वे प्रमाणाभावाद् निरर्थकत्वमेव पदार्थान्तरस्य प्रसज्येत, यदि विधिर्न संसर्गमाक्षिपेत्। अतो वेदे पदार्थान्तरस्य निरर्थकत्वपरिहाराय विधिरेव शरणं संसर्गबोधायेति विधिवादिनामभिप्रायः।

सिद्धान्ती उत्तरयति – **विधिर्नैवमिति**। अयमर्थः – यथा लौकिकस्तथा वैदिकोऽपि पदार्थः संसर्गं विनाऽनर्थकः सन् संसर्गमाक्षेप्तुमलमिति विधौ कोऽधिको विशेषः। एवञ्च विधिना विनाऽपि वेदान्तेषु सत्यज्ञानादिपदार्था एव संसर्गमाक्षेप्स्यन्ति, किं विधिना इति। अतः सम्यगुक्तं कारिकांशेन– **विधिर्नैवं कस्य हेतोरिति**।

**विषयं न यथासिद्धपदार्थस्त्वनुवादभाक्।**
**अव्युत्पन्नप्रवृत्तिः स्यात् सम्बन्धज्ञाननिह्नवे॥७७॥**
**पदं स्वधर्मं व्युत्क्रामेदन्यसिद्धार्थताऽन्यथा॥७७–१/२॥**

---

पुनः शङ्कते– **'अथ स्यादपरं पद'**मित्यादिना **"अनुवादभाक्"** इत्यन्तेन कारिकांशेन। अयमर्थः – विधायकपदादन्यस्य पदस्य प्रयोगः प्रमाणान्तर-सिद्धेऽर्थे भवति, किन्तु विधायकपद्स्यार्थो विधिर्न प्रमाणान्तरसिद्धः, विधेः प्रमाणान्तरागोचरत्वात्। अतस्तदर्थः = विधायकार्थो विधिः अनन्यगम्यो भवन् विधायकाच्छब्दादेव मीयमानः = अवगम्यमानो भवति। अतः प्रमाणान्तरानपेक्षो विधायकार्थ एव संसृष्टरूपमपूर्वार्थमाक्षेप्स्यति।

वेदान्तेष्वपि विध्यतिरिक्तस्तु पदार्थः प्रमाणान्तरसिद्धतया यथा प्रमाणान्तरसिद्धो भवति तथैव वेदान्तेषु अनुवादभाक् = अनूद्यमानो भवति, न तु विषयनियोज्ययोः संसर्गरूपमपूर्वार्थमपि समाक्षेप्स्यति, प्रमाणान्तरपरतन्त्रत्वात्। अतो वेदान्तेषु पदार्थसंसर्गावबोधार्थं विधिराश्रयितव्य इति विधिवादिनां पूर्वपक्षः।

सिद्धान्ती विकल्पमुत्थाप्य उत्तरयति– **"अव्युत्पन्नप्रवृत्ति"**रित्यादिना **"अन्यसिद्धार्थताऽन्यथा"** इत्यन्तेन कारिकांशेन। अयमर्थः– संसर्गबोधने विधायक-शब्दो यदि सम्बन्धज्ञानम् = सङ्गतिज्ञानं निह्नुते = नापेक्षते। अर्थाद् लिङ्गादेस्तादृशः सामर्थ्यातिशयोऽस्ति, येन सः स्वयमगृहीतसङ्गतिकोऽपि गृहीतसङ्गतिकपदान्तरेण सह पठितोऽर्थं बोधयेत्, तदा सङ्गतिग्रहसापेक्षबोधकत्वरूपः पदधर्मोऽकारणं परित्यक्तः स्यात्। "अव्युत्पन्नप्रवृत्तिः स्यात्" इत्यस्य "अगृहीतसंगतिकस्यापि प्रवृत्तिः स्यात्" इत्यर्थः।

अन्यथा तु = यदि लिङादिविधायकपदम् अर्थबोधे सङ्गतिग्रहणमपेक्षते, तदा अन्यसिद्धार्थताऽऽपद्येत। अर्थात् प्रमाणान्तराज्ञाते सम्बन्धिनि विधौ लिङादि-शब्दस्य सङ्गतिज्ञानासम्भवात् सङ्गतिज्ञानाय विधेरपि प्रमाणान्तरसिद्धताऽऽपद्येत। अतो तथा सति च "पदार्थान्तरेभ्यो विध्यर्थस्य न कश्चिद् विशेषः स्यात्। अतो नापूर्वार्थबोधाय वेदान्तेषु विधिराश्रयणीय इति "कथं नु" इत्यादि कारिकाणामाशयः।

न तावद् विधिः साक्षात् संसर्गसामान्यं तद्विशेषं वा बोधयति। अथाक्षिपति, अन्यथा नियोगमात्रं निर्विषयमनर्थकं स्यात्। पदार्थान्तरेष्वपि तुल्यमेतत्। तेऽपि हि केवलाः पदार्थान्तरसंसर्गमनाप्नुवन्तोऽपूर्वार्थप्रतिपत्तेरभावादनर्थकाः। न च लोके पदैः स्वार्थाः स्वरूपमात्रनिष्ठतयैव प्रत्याय्यन्ते; किन्तु विशिष्टार्थप्रत्ययप्रयुक्ताः[1], तथा व्यवहारोपपत्तेः। तथा च प्रतिपदार्थं संसर्गाक्षेपः[2]।

स्यादेतत्— लोके बुद्धिपूर्वप्रयुक्तानां मा भूदानर्थक्यमिति संसर्गार्थता। वेदे तु नार्थवत्वे प्रमाणमस्ति। अतः पदार्थान्तरमनर्थकमेवास्तु। नैतत् सारम्, नान्यथानर्थक्यमित्यप्रमाणोऽर्थः शक्यः प्रतिपत्तुम्, यस्य कस्यचित् प्रतिपत्तिप्रसङ्गात्। तस्माद् व्यवहारात् संसर्गप्रयुक्तस्वार्थावबोधसामर्थ्यमेव पदानां गम्यते, ततो वेदेऽपि संसर्गाक्षेपः। यदि चान्यपदार्थानामानर्थक्यम्, विध्यर्थस्य तन्न कस्मात्?

अथ मतम् — पदान्तराणि प्रमाणान्तरसिद्धेऽर्थे प्रयुज्यन्ते, तानि यथावगतार्थानुवादपर्यवसितानि। तथा हि — अनूद्यमानोऽर्थो

---

"कथं नु" इत्यादि कारिकार्थं स्वयं विवृणोति मूलकारः — **न तावदित्यादिना**। पदार्थान्तरेष्वपि = नियोगातिरिक्तवैदिकपदार्थान्तरेष्वपीत्यर्थः। "अर्थवत्त्वे प्रमाणाभावात्" इत्याशङ्कां "विधिर्नैवम्" इति समाधानं च कारिकोक्तं विशदयति ग्रन्थकारः — **"स्यादेतदित्यादिना" "विध्यर्थस्य तन्न कस्मात्"** इत्यन्तेन ग्रन्थेन। एतत् प्रघट्टकार्थः कारिकाव्याख्यानेनैव स्फुटार्थ इति न प्रतन्यते।

मतान्तरमुपस्थापयति — **पदान्तराणीति**। पदान्तराणि= लिङाद्यतिरिक्तानि पदानीत्यर्थः। उपपादयति — **तथा हीति**। अनूद्यमानो अर्थः = प्रमाणान्तरसिद्धतया पदान्तरैरनूद्यमानोऽर्थ इति यावत्। अनुवादमात्रत्वाद् नापूर्वसंसर्गमाक्षेप्तुमलमित्यर्थः।

---

१. पदानि संसर्गविशिष्टप्रत्ययपराणि भवन्ति, पदार्थप्रतिपादनं तेषामवान्तरव्यापारः।

२. अभिहितान्वयवादमाश्रित्यतैदुक्तमिति ज्ञेयम्।

**यथावगममनुवादान्नापूर्वार्थाक्षेपायालम् । विधायकस्तु शब्दोऽनन्यगम्यार्थ-विषयः, तदर्थः प्रमीयमाणः शक्नोत्यपूर्वमर्थमाक्षेप्तुमन्यथाऽनवकल्पमानः। तस्माद् वेदे विधिनिबन्धनोऽपूर्वसंसर्ग इति।**

**तदयुक्तम्, प्रमाणान्तराविषयश्चेद् विधायकार्थः, तत्र सम्बन्ध-ज्ञानमशक्यमिति निह्नूयेत। तथा च सम्बन्धज्ञानानपेक्षत्वादव्युत्पन्नोऽपि प्रवर्तेत। सम्बन्धज्ञानापेक्षता च पदधर्मो व्युत्क्रम्येत, तन्निरपेक्षता वाक्यधर्म आश्रीयेत। अथ सम्बन्धापेक्षता नास्य निह्नूयेत, बलात् प्रमाणान्तरसिद्धार्थताऽऽपद्येत, तथा च न विशेषः।**

---

विधायके लिङादिशब्दे विशेषमाह – **विधायकस्त्विति**। यतो विधायकः शब्दोऽनन्यगम्यार्थविषयकः, तस्मात् ततः प्रमीयमाणो नियोगरूपार्थो विषय-नियोज्यसंसर्गरूपमर्थमाक्षेप्तुं समर्थः। अन्यथा स निरर्थकः स्यादित्यभिप्रायः। निष्कर्षमाह – **तस्मादिति**।

मतमिदं दूषयति – **प्रमाणान्तराविषयश्चेदित्यादिना**। सम्बन्धज्ञानम् = तत्रत्यं पदपदार्थसम्बन्धज्ञानमशक्यत्वाद् शाब्दबोधेऽनपेक्षितं स्यात्। तदनपेक्षायां च अव्युत्पन्नोऽपि = साधारणोऽपि जनः शब्दश्रवणानन्तरं प्रवर्तेत। एवम्, सम्बन्धज्ञानापेक्षया बोधकत्वं पदधर्मः, स परित्यक्तः स्यात्, तदनपेक्षया बोधकत्वं वाक्यधर्मः, स चाश्रितः स्यादिति च दोष आपद्येत।

यदि तु उक्तदोषपरिहाराय लिङादिपदस्यापि वाच्यार्थसम्बन्धज्ञान-मपेक्षितमिति पक्षः स्वीक्रियेत, तदा विधायकपदस्यापि प्रमाणान्तरसिद्धार्थ-विषयकत्वमापद्येत। एवं सति वेदे विधायकपदेऽपि पदान्तराद् न कश्चिद् विशेषः स्यात्, न वा विध्यर्थस्य नियोगस्य पदार्थान्तरेभ्यः कश्चिद् विशेषः स्यादिति वेदे विध्याश्रयणमयुक्तमित्याशयः।

शब्दादेव मिते योऽपि मन्यते सङ्गतिग्रहम् ॥ ७८ ॥
नान्योन्यसंश्रयावद्यं न स्वयं प्रमिते हि सः ।
परेण शब्दावगते तत्प्रवृत्त्या च सूचिते ॥ ७९ ॥
पदार्थान्तरवत् तत्र सुकरः सङ्गतिग्रहः ॥ ७९-१/२ ॥

**योऽपि मन्यते – न प्रमाणान्तरसिद्धे विध्यर्थे सम्बन्धज्ञानम्, अपि तु शब्दसिद्ध एव। न चान्योन्यसंश्रयदोषः – शब्दात् सिद्धे सम्बन्धज्ञानम्, सम्बन्धज्ञानपूर्विका च शब्दात् सिद्धिरिति। यतो न स्वयं शब्दात् प्रमिते तदुच्यते, किन्तु वृद्धप्रयुक्ताद् वृद्धान्तरेणावगते। तदवगमाच्च तस्य वृद्धस्य या प्रवृत्तिस्तयाऽनुमिते – "नूनमनेन वृद्धेन प्रतिपन्नः कश्चित् प्रवृत्तिहेतुरर्थोऽस्माच्छब्दात्, येनायमेतच्छ्रवणात् प्रवृत्तः" इति। यथा – 'गामानय' इति सास्नादिमदानयनदर्शनात् तत्प्रत्ययमनुमाय तत्र सम्बन्धग्रहणमिति।**

---

प्रमाणान्तरासिद्धे नियोगे लिङादिपदस्य सङ्गतिज्ञानासम्भवः प्रतिपादितः। इदानीं तत्र प्रकारान्तरेण सङ्गतिज्ञानसम्भावनामपि निराकर्तुं मतान्तरमुत्थापयति – **शब्दादेव मिते इति**। अयमत्र कारिकार्थः – "प्रमाणान्तरात् सिद्धेऽर्थे मा नाम भूत् लिङादिपदस्य सङ्गतिग्रहः, उत्तमवृद्धप्रयुक्तात् शब्दादेव मिते ज्ञाते अनुमिते इति यावद् नियोगे लिङादिपदस्य संगतिग्रहः सम्भवतीति कश्चिन्मन्यते। न चैवंरीत्या सङ्गतिज्ञाने अन्योन्याश्रयो दोषः, शब्दाद् ज्ञाते नियोगे लिङादिपदस्य सङ्गतिग्रहः, लिङादिपदसङ्गतिग्रहे च सति लिङादिशब्दाद् नियोगज्ञानसम्भवादिति वाच्यम्, यतः शब्दात् स्वयमर्थं प्रमाय बालस्य यदि तत्र सङ्गतिग्रह उच्येत तदा उक्तान्योन्याश्रयदोषः प्रसज्येत, शब्दाद् नियोगे ज्ञाते तत्र सङ्गतिग्रहः, तत्र सङ्गतिग्रहे च सति लिङादिशब्दाद् नियोगार्थज्ञानमिति।

इह तथा नोच्यते, किन्तु उत्तमवृद्धप्रयुक्तात् शब्दात् परेण प्रयोज्यवृद्धेन तमर्थमवगत्य या प्रवृत्तिः क्रियते, तया तमर्थमनुमाय प्रवृत्त्या सूचिते= अनुमितेऽर्थे बालस्य तत्पदस्य सम्बन्धज्ञानं जायते। अतो नात्रान्योन्याश्रयदोषस्य प्रसङ्गः। एवं प्रकारेण गवादिलौकिकपदार्थान्तरवद् नियोगार्थेऽपि लिङादिपदसङ्गतिग्रहः सुकर एव।

**तस्यैवमनुमेयत्वे कथं शब्दैकगोचरः॥ ८०॥**
**तस्यापि शब्दपूर्वत्वादनुमानैकगोचरः।**
**कस्मान्न, शाब्दबोधोऽपि ह्यनुमानपुरस्सरः॥ ८१॥**
**नेदंप्रथमता लभ्या बीजाङ्कुरवदेतयोः।**
**शब्दाद् बोद्धुश्चानुमानं सर्वस्यैव पुनः स्थितम्॥ ८२॥**

---

अत्र अनुमानस्वरूपमाह– **'नूनमनेन वृद्धेन प्रतिपन्नः'** इत्यादि। अत्रायमनुमानप्रकारः– इयं प्रवृत्तिः प्रवर्तकधीपूर्विका स्वतन्त्रप्रवृत्तित्वाद् मदीयप्रवृत्तिवदिति। सा च धीः शब्दान्वयव्यतिरेकाभ्यां शब्दकार्येति निश्चीयत इत्यर्थः। लौकिकदृष्टान्तमाह– **'गामानय'** इत्यादि। इति पूर्वपक्षिमतविशेषः।

सिद्धान्ती "शब्दादेव मिते योऽपि" इत्यादि कारिकाभिरुक्तं पूर्वपक्षिमतविशेषं निराकरोति– **"तस्यैवमनुमेयत्वे"** इत्यादितः **"तत्सिद्धेर्लौकिकादपि"** इत्यन्तकारिकाभिः। तस्य= प्रवृत्तिहेतोर्ज्ञानस्य अनुमेयत्वे= अनुमितिगम्यत्वे तज्ज्ञानं शब्दैकगोचरः कथं स्यात्? शब्दकार्यं कथं स्यादिति सिद्धान्तिनः प्रश्नमुखेन उत्तरम्। पूर्वपक्षी आह– **तस्यापि शब्दपूर्वत्वादिति**। परप्रवृत्तिलिङ्गेन याऽनुमितिः सापि उत्तमवृद्धेन प्रयुज्यमानात् 'गामानय' इत्यादिशब्दादेव भवति। अत एव तस्यानुमित्यात्मकज्ञानस्यापि शब्दकार्यत्वमुच्यत इत्याशयः।

सिद्धान्ती प्रश्नमुखेनैव पुनरुत्तरमाह – **अनुमानैकगोचरः कस्मान्नेति**। यं भवान् अनुमेयमपि पदपदार्थसंसर्गबोधं शब्दपूर्वकत्वेन शब्दैकगोचरम् ब्रूते, स अनुमानैकगोचरः कथं न स्यादिति। यतो हि गवानयनादौ प्रवर्तमानस्य मध्यमवृद्धस्य यः शाब्दबोधोऽजायत, सोऽपि कस्यचिदपरस्य वृद्धतरस्य प्रवृत्तिहेतुं तज्ज्ञानम् अनुमायैव भवति। तथा च मध्यमवृद्धस्यापि पदार्थसम्बन्धग्रहः प्रवृत्तिलिङ्गादेवाभूत्। तथा च सोऽपि संसर्गबोधोऽनुमानात्मक एवाङ्गीकार्यः। एवं वृद्धतरस्यापि संसर्गबोधः स्वापेक्षया वृद्धतमस्य कस्यचित् प्रवृत्तिलिङ्गेनैव भवतीति परम्परया सर्वोऽपि संसर्ग-

शब्दादेव मिते योऽपि मन्यते सङ्गतिग्रहम् ॥ ७८ ॥
नान्योन्यसंश्रयावद्यं न स्वयं प्रमिते हि सः ।
परेण शब्दावगते तत्प्रवृत्त्या च सूचिते ॥ ७९ ॥
पदार्थान्तरवत् तत्र सुकरः सङ्गतिग्रहः ॥ ७९-१/२ ॥

**योऽपि मन्यते – न प्रमाणान्तरसिद्धे विध्यर्थे सम्बन्धज्ञानम्, अपि तु शब्दसिद्ध एव। न चान्योन्यसंश्रयदोषः – शब्दात् सिद्धे सम्बन्धज्ञानम्, सम्बन्धज्ञानपूर्विका च शब्दात् सिद्धिरिति। यतो न स्वयं शब्दात् प्रमिते तदुच्यते, किन्तु वृद्धप्रयुक्ताद् वृद्धान्तरेणावगते। तदवगमाच्च तस्य वृद्धस्य या प्रवृत्तिस्तयाऽनुमिते – "नूनमनेन वृद्धेन प्रतिपन्नः कश्चित् प्रवृत्तिहेतुरर्थोऽस्माच्छब्दात्, येनायमेतच्छ्रवणात् प्रवृत्तः" इति। यथा – 'गामानय' इति सास्नादिमदानयनदर्शनात् तत्प्रत्ययमनुमाय तत्र सम्बन्धग्रहणमिति।**

---

प्रमाणान्तरासिद्धे नियोगे लिङादिपदस्य सङ्गतिज्ञानासम्भवः प्रतिपादितः। इदानीं तत्र प्रकारान्तरेण सङ्गतिज्ञानसम्भावनामपि निराकर्तुं मतान्तरमुत्थापयति – **शब्दादेव मिते इति**। अयमत्र कारिकार्थः– "प्रमाणान्तरात् सिद्धेऽर्थे मा नाम भूत् लिङादिपदस्य सङ्गतिग्रहः, उत्तमवृद्धप्रयुक्तात् शब्दादेव मिते ज्ञाते अनुमिते इति यावद् नियोगे लिङादिपदस्य संगतिग्रहः सम्भवतीति कश्चिन्मन्यते। न चैवंरीत्या सङ्गतिज्ञाने अन्योन्याश्रयो दोषः, शब्दाद् ज्ञाते नियोगे लिङादिपदस्य सङ्गतिग्रहः, लिङादिपदसङ्गतिग्रहे च सति लिङादिशब्दाद् नियोगज्ञानसम्भवादिति वाच्यम्, यतः शब्दात् स्वयमर्थं प्रमाय बालस्य यदि तत्र सङ्गतिग्रह उच्येत तदा उक्तान्योन्याश्रयदोषः प्रसज्येत, शब्दाद् नियोगे ज्ञाते तत्र सङ्गतिग्रहः, तत्र सङ्गतिग्रहे च सति लिङादिशब्दाद् नियोगार्थज्ञानमिति।

इह तथा नोच्यते, किन्तु उत्तमवृद्धप्रयुक्तात् शब्दात् परेण प्रयोज्यवृद्धेन तमर्थमवगत्य या प्रवृत्तिः क्रियते, तया तमर्थमनुमाय प्रवृत्त्या सूचिते= अनुमितेऽर्थे बालस्य तत्पदस्य सम्बन्धज्ञानं जायते। अतो नात्रान्योन्याश्रयदोषस्य प्रसङ्गः। एवं प्रकारेण गवादिलौकिकपदार्थान्तरवद् नियोगार्थेऽपि लिङादिपदसङ्गतिग्रहः सुकर एव।

**तस्यैवमनुमेयत्वे कथं शब्दैकगोचरः॥ ८०॥**

**तस्यापि शब्दपूर्वत्वादनुमानैकगोचरः।**

**कस्मान्न, शाब्दबोधोऽपि ह्यनुमानपुरस्सरः॥ ८१॥**

**नेदंप्रथमता लभ्या बीजाङ्कुरवदेतयोः।**

**शब्दाद् बोद्धुश्चानुमानं सर्वस्यैव पुनः स्थितम्॥ ८२॥**

---

अत्र अनुमानस्वरूपमाह– **'नूनमनेन वृद्धेन प्रतिपन्नः'** इत्यादि। अत्रायमनुमानप्रकारः – इयं प्रवृत्तिः प्रवर्तकधीपूर्विका स्वतन्त्रप्रवृत्तित्वाद् मदीयप्रवृत्तिवदिति। सा च धीः शब्दान्वयव्यतिरेकाभ्यां शब्दकार्येति निश्चीयत इत्यर्थः। लौकिकदृष्टान्तमाह – **'गामानय'** इत्यादि। इति पूर्वपक्षिमतविशेषः।

सिद्धान्ती "शब्दादेव मिते योऽपि" इत्यादि कारिकाभिरुक्तं पूर्वपक्षिमतविशेषं निराकरोति – **"तस्यैवमनुमेयत्वे"** इत्यादितः **"ततिसद्धेर्लौकिकादपि"** इत्यन्तकारिकाभिः। तस्य= प्रवृत्तिहेतोर्ज्ञानस्य अनुमेयत्वे= अनुमितिगम्यत्वे तज्ज्ञानं शब्दैकगोचरः कथं स्यात्? शब्दकार्यं कथं स्यादिति सिद्धान्तिनः प्रश्नमुखेन उत्तरम्। पूर्वपक्षी आह – **तस्यापि शब्दपूर्वत्वादिति।** परप्रवृत्तिलिङ्गेन याऽनुमितिः सापि उत्तमवृद्धेन प्रयुज्यमानात् 'गामानय' इत्यादिशब्दादेव भवति। अत एव तस्यानुमित्यात्मकज्ञानस्यापि शब्दकार्यत्वमुच्यत इत्याशयः।

सिद्धान्ती प्रश्नमुखेनैव पुनरुत्तरमाह – **अनुमानैकगोचरः कस्मान्नेति।** यं भवान् अनुमेयमपि पदपदार्थसंसर्गबोधं शब्दपूर्वकत्वेन शब्दैकगोचरम् ब्रूते, स अनुमानैकगोचरः कथं न स्यादिति। यतो हि गवानयनादौ प्रवर्तमानस्य मध्यमवृद्धस्य यः शाब्दबोधोऽजायत, सोऽपि कस्यचिदपरस्य वृद्धतरस्य प्रवृत्तिहेतुं तज्ज्ञानम् अनुमायैव भवति। तथा च मध्यमवृद्धस्यापि पदार्थसम्बन्धग्रहः प्रवृत्तिलिङ्गादेवाभूत्। तथा च सोऽपि संसर्गबोधोऽनुमानात्मक एवाङ्गीकार्यः। एवं वृद्धतरस्यापि संसर्गबोधः स्वापेक्षया वृद्धतमस्य कस्यचित् प्रवृत्तिलिङ्गेनैव भवतीति परम्परया सर्वोऽपि संसर्ग-

**पदार्थान्तरवत्तेन तस्य शब्दोऽनुवादकः।**

**अनुमानाद् बुध्यमानः शब्दाद् बुद्धं न बुध्यते॥ ८३॥**

**प्रतिपत्रन्तरे बोधो नान्यबोधानुवादकृत्।**

**प्रवृत्तिहेतुमात्रं च शब्दार्थः स्यादलौकिकः॥ ८४॥**

**न स कल्पयितुं शक्यस्तत्सिद्धेर्लौकिकादपि॥ ८४—१/२॥**

---

बोधोऽनुमित्यात्मकः सिध्यति। एतदेवोक्तम्—"नेदंप्रथमता लभ्या" इति। एतयोः प्रवृत्तिलिङ्गसंसर्गबोधयोः इदंप्रथमता न लभ्यते, किन्तु अनादि-रेवानयोरन्योन्यकार्यकारणभावोऽस्ति। अतोऽनयोर्विशेषाग्रहणात् संसर्गबोधे शब्दैकगोचरत्वमसिद्धम्।

प्रत्युत अनुमेयत्वपक्ष एवास्ति विशेष इत्याह – **शब्दाद् बोद्धुश्चानुमानमिति।** अर्थात् शब्दात् संसर्गं बुध्यमानस्य सर्वस्यैव पुरुषस्य अनुमानमेव पुरःस्थितं भवति।

निगमयति – **पदार्थान्तरवदिति।** अयमर्थः – वेदे पदार्थान्तरं यथा प्रमाणान्तर-गम्यतया शब्देन अनूद्यमानमेव भवति, तथा सर्वोऽपि शब्दोऽनुवादक एव भवति, अनुमानावगतस्यैव संसर्गस्य बोधकत्वादिति।

प्रकृते वस्तुस्थितिमाह – **अनुमानादिति।** वृद्धेन शब्दात् बुद्धमपि संसर्गम् अनुमानाद् बुध्यमानः, अर्थाद् वृद्धेन शब्दादयमर्थो बुद्ध इत्यनुमिमानो बालः स्वीयानुमानसम्बन्धनिमित्ताद् वृद्धेन शब्दाद् बुद्ध इति नावगच्छतीत्यर्थः। कस्मात् तथा न बुध्यत इत्याह – **प्रतिपत्रन्तरे इति।** अर्थाद् यतः प्रतिपत्रन्तरे बाले जायमानो बोधो न वृद्धगतशब्दजन्यबोधस्यानुवादको भवति; किन्तु तं बोधमनुमिनोति। अतः स्वयमनुमानात् संसर्गं बुध्यमानो बालः 'वृद्धेन शब्दाद् बुद्धः संसर्गः" इति कथं जानीयादिति बालस्य स्वतन्त्र एव संसर्गबोधोऽनुमित्यात्मकः। अतः संसर्गबोधः शब्दैकगोचर इत्यसिद्धम्।

एवं मध्यमवृद्धस्य या गवानयनादौ प्रवृत्तिर्भवति, तस्याः प्रवृत्तेर्हेतुः कश्चिदवश्यं नियोगरूपोऽलौकिकः शब्दार्थः स्यादिति रीत्या सूचिते नियोगे

**यदि प्रवृत्त्युन्नीयमानप्रत्ययविशेषणत्वेन व्यवस्थितोऽनुमेयो विधायकार्थः सम्बन्धज्ञानविषयः, न तर्हि शब्दैकप्रमाणकः। अथानुमानं शब्दपूर्वकमिति तथोच्यते, शाब्दोऽपि प्रत्ययोऽनुमानपूर्वक इत्यनुमानैकगोचरः स्यात्। न खलु बीजाङ्कुरयोरिवानयोरेकस्य प्राथम्यं व्यवस्थापयितुं शक्यम्। शब्दावगतस्यानुमानात्, अनुमितस्य विदितसङ्गतेः शब्दादवगमात्।**

**अपि च सर्वप्रतिपत्तॄणामनुमानपूर्वा शब्दात् प्रतिपत्तिरिति तेषां शब्दोऽनुवादक एव। तथा हि – शब्दाद् बुध्यमानोऽनुमितं विदितसङ्गतिं बुध्यते सर्वः प्रतिपत्ता, न तु अनुमिमानः शब्दावगतमनुमिमीते।**

---

विधिपदस्य सङ्गतिग्रहो बालस्य भविष्यतीत्याशङ्कते – **"प्रवृत्तिहेतुमात्रं च शब्दार्थः स्यादलौकिकः"** इति। निराकरोति– **"न स कल्पयितुं शक्यः"** इति। अर्थाद् मध्यवृद्धप्रवृत्त्या अलौकिको नियोगो न कल्पयितुं शक्यते, यतो हि सा प्रवृत्तिः लौकिकात् समीहितश्रेयःसाधनत्वबोधादपि मध्यवृद्धस्य भवितुमर्हतीति। तस्माद् वेदे विधिकल्पना व्यर्थेति कारिकार्थः।

कारिकोक्तमर्थं ग्रन्थकृत् स्वयं विवृणोति – **यदीति**। प्रयोज्यवृद्धस्य प्रवृत्त्या उन्नीयमानः = बालेन अनुमीयमानो यः प्रत्ययो ज्ञानं तस्य विशेषणत्वेन व्यवस्थितः, अर्थात् तस्मिन् ज्ञाने विशेषणीभूतः स विधायकार्थः = विध्यर्थो नियोगोऽनुमेय एव भवति। तस्मिन्ननुमेय एव च नियोगे यदि बालस्य विधिपदस्य सङ्गतिग्रहो जायते तदा स नियोगो न शब्दमात्रैकप्रमाणविषयः, अनुमानप्रमाणस्यापि तत्र प्रयोजकत्वात्।

शङ्कते – **अथानुमानमिति**। तथोच्यते = शब्दैकप्रमाणविषयो नियोग इत्युच्यत इत्यर्थः। विनगमकाभावेन समाधत्ते – **शाब्दोऽपीति**। विनिगकाभावमेवोपपादयति – **न खल्विति**। प्रयोज्यवृद्धेन शब्दावगतस्य नियोगस्य बालेन तदीयप्रवृत्त्या अनुमानात्, पुनश्च अनुमित एव नियोगे विधिपदसङ्गतिं गृहीत्वा बालस्य लिङादिपदाद् नियोगबोधो भवतीति न शब्दैकगोचरो नियोग इत्यर्थः।

**ननु शब्दावगत एवानुमीयते। सत्यमन्येन तु प्रतिपत्रा। न चान्यदीया प्रतिपत्तिरन्यप्रतिपत्तिमनुवादीकरोति। प्रवृत्तिहेतुमात्रे च सम्बन्धव्युत्पत्तेस्तन्मात्रं शब्दार्थः स्यात्। न चालौकिकः कल्पयितुमपि शक्यः, लौकिकादपि प्रवृत्तिसिद्धेः।**

**स्यादेतत् – वैदिकीषु प्रवृत्तिषु तदसम्भवादलौकिककल्पना। नैतत्, लोकावगतसामर्थ्यो हि शब्दो वेदेऽपि प्रतिपादकः। तत्र लौकिकीषु प्रवृत्तिषु लौकिके विदितसम्बन्धे वेदेऽपि तत्प्रतिपत्तिरेव स्यात्, असम्भवे वा मिथ्यात्वम्।**

---

शब्दोऽनुवादक एवेत्यत्र उपपत्त्यन्तरमाह - अपि चेति। उपपत्तिमेव प्रदर्शयति – **तथा हीति**। अयं भावः– बालो वा भवेत्, प्रयोज्यवृद्धो वा भवेत्, प्रयोजकवृद्धो वा भवेत्, सर्वोऽपि प्रतिपत्ता कस्यचित् प्रवृत्त्याऽनुमिते अर्थे तत्पदस्य सङ्गतिं गृहीत्वैव तत्पदश्रवणानन्तरं तमर्थं बुध्यते, न तु पूर्वं शब्दादवगत्य पश्चात् तमर्थमनुमिमीत इति।

पूर्वपक्षी पुनः प्रत्यवतिष्ठते – **ननु शब्दावगत एवानुमीयत इति**। सिद्धान्ती समाधत्ते – **सत्यमनेनेति**। बालेन प्रवृत्त्याऽनुमीयमानोऽर्थः पूर्वं शब्दादवगतोऽभूदिति सत्यमुच्यते। किन्तु न बालेन प्रत्युत तदन्येन प्रतिपत्रा प्रयोज्यवृद्धेनैव स शब्दादवगत इति ज्ञातव्यम्। एवञ्च सति अन्यस्य प्रयोज्यवृद्धस्य शाब्दीं प्रतिपत्तिं प्रति बालस्य आनुमानिकी प्रतिपत्तिर्नानुवादरूपा, किन्तु प्रवृत्त्या जायमानायाः स्वानुमितेरेव विषयो नियोग इति अनुमेयार्थबोधकत्वाद् विधिशब्दोऽनुवाद एवेति स्वीकार्यम्। एवं प्रवृत्त्या कार्येण हेतुसामान्य एव लिङादिपदस्य सम्बन्धः प्रतीयेत, सामान्यमेव च लिङर्थः स्यात्। न तु नियोगरूपविशेषः प्रतीयेत, नापि च स विध्यर्थः सम्भवेत्।

यद्युच्यते सामान्ये व्यवहाराभावात् अलौकिकस्य नियोगरूपविशेषस्य प्रतीत्यभावेऽपि प्रवृत्तिहेतुविशेषतया स कल्पयिष्यत इति, तदप्ययुक्तम्, लौकिकादेव श्रेयःसाधनत्वज्ञानात् प्रयोज्यवृद्धस्य गवानयनादौ प्रवृत्त्युपपत्तेस्तस्य कल्पयितुमशक्यत्वात्।

**अथ बहुविधत्वात् प्रवृत्तिहेतूनां व्यभिचारादशब्दार्थत्वे प्रवृत्तिहेतु-सामान्यं शब्दार्थः। तत्र वेदे लौकिकानां विशेषाणामसम्भवादलौकिकं विशेषान्तरं प्रतीयते।**

---

शङ्कते – **स्यादेतदिति**। अयं भावः – भिन्ना हि वैदिक्यः प्रवृत्तयो लौकिकीभ्यः प्रवृत्तिभ्यः। अतो वैदिकीषु प्रवृत्तिषु लौकिकस्य प्रवृत्तिहेतोः श्रेयःसाधनत्वज्ञानादेर-सम्भवाद् अलौकिको हेतुः कल्प्यत इति सिद्धो नियोग इति।

समाधत्ते – **नैतदिति**। "य एव लौकिकास्त एव वैदिकाः" इति न्यायेन लोकावगतसामर्थ्यः शब्दो वेदेऽपि बोधकः। तत्र लौकिकीषु प्रवृत्तिषु लौकिक एव प्रवृत्तिहेतुर्विदितसङ्गतिकः, न त्वज्ञातसङ्गतिकोऽलौकिकः प्रवृत्तिहेतुर्भवितुमर्हतीति स लौकिक एव प्रवृत्तिहेतुर्वेदे स्वीकार्तव्यः। यदि लौकिकस्य प्रवृत्तिहेतोर्ज्ञानं न सम्भवेत्, तदा वेदे नियोगरूपप्रवृत्तिहेतोर्ज्ञानं जायमानं मिथ्यैवेति युक्तम्, न तु तदर्थम् अलौकिककल्पना युक्तेति भावः।

नियोगवादी शङ्कते – **अथ बहुविधत्वादिति**। अयं भावः – "य एव लौकिकास्त एव वैदिकाः" इति सत्यम्। एतन्नियमानुसारेण प्रवृत्तिहेतुः सामान्यमेव लोके वेदे च शब्दार्थः। यतो हि प्रवृत्तिहेतूनां विशेषाणां बहुविधत्वात् तेषामेकैकस्य शब्दार्थत्वे व्यभिचारः प्रसज्येत। प्रवृत्तिहेतुत्वेन सामान्यस्य शब्दार्थत्वे तु नास्ति व्यभिचारः। तत्र विशेषं विना सामान्यस्य अपर्यवसानाद् लोके लौकिका विशेषाः प्रत्येष्यन्ते। वेदे तु लौकिकानां विशेषाणामसम्भवाद् अलौकिक एव विशेषान्तरे सामान्यस्य पर्यवसानं स्यात्। तच्च विशेषान्तरं नियोग एवेति वेदे नियोग एव प्रवृत्तिहेतुः सिद्ध्यतीति।

समाधत्ते – **एवमपीति**। तथापि वेदे यः सामान्यं शब्दार्थः, स लोकसिद्ध एवेति विधिरूपवैदिकशब्दस्याप्यनुवादकत्वमेवायातम्। यथेतरपदार्थप्रत्यायकं पदान्तरं प्रमाणान्तरसिद्धस्यार्थस्यानुवादकमात्रं भवति तद्वदित्यभिप्रायः। योऽपि नियोगो भवता विशेषत्वेन परिकल्प्येत सोऽपि परिशेषानुमानस्यैव विषयः स्यादिति तस्य प्रमाणान्तरविषयत्वेन तत्कल्पनाधारो विधिरनुवादक एव भवेत्, नापूर्वार्थ-

एवमपि यः शब्दार्थो वेदे सामान्यं स लोकसिद्ध इति नानुवादता व्यावर्तते, पदार्थान्तरवत्। योऽपि विशेषः सोऽन्यासम्भवेन परिशेषानुमान-गोचर इति न प्रमाणान्तराविषयत्वम्। न च परिशेषानुमानमपि, श्रेयः-साधनतायाः सम्भवात्।

अथ मतम् — लोकव्यवहार इव वेदव्यवहारोऽप्यनादिः। तत्र वैदिकीषु प्रवृत्तिषु लौकिकप्रवृत्तिहेत्वभावाद् अलौकिके तु प्रवृत्तिहेतौ वैदिकानां विधायकानां सम्बन्धज्ञानम्। न चानुमेयत्वम्, तत्प्रत्ययस्य प्रवृत्त्यानुमानात्। तत्सिद्धिस्तु तत्प्रत्ययसामर्थ्येनैव। स च प्रत्ययः शब्दोत्थ इत्यनन्यप्रमाणता।

---

बोधकः। एतच्च समाधानमभ्युपगमवादेनोक्तम्, वस्तुतस्तु परिशेषानुमानेनापि नालौकिको नियोगः प्रवृत्तिहेतुतया सेद्धुमर्हति, श्रेयःसाधनताज्ञानस्यैव लौकिकस्य प्रवृत्तिहेतोःसम्भवात्। तस्यासम्भवे तु भवदीयस्यालौकिकप्रवृत्तिहेतुज्ञानस्य मिथ्यात्वमेव युक्तमिति भावः।

पुनः प्रतिपक्षी प्रत्यवतिष्ठते– "**अथ मतमि**"त्यादिना "**शब्दार्थानुप्रवेशिनी**" इत्यन्तेन प्रघट्टकेन। अयमर्थः– यथा लोकव्यवहारोऽनादिः पृथग्भूतः, तथा वैदिकव्यवहारोऽपि अनादिः पृथगेव। अत एव वैदिकीषु प्रवृत्तिषु न लौकिकाः प्रवृत्तिहेतव उपयुज्यन्ते। किन्तु तासु प्रवृत्तिष्वलौकिक एव प्रवृत्तिहेतुरुपयोगी भवतीति वैदिकप्रवृत्तिस्थले अलौकिक एव नियोगाख्ये प्रवृत्तिहेतौ वैदिकानां लिङादिविधायकपदानां सङ्गतिज्ञानं भवति, वैदिकव्यवहारस्य पृथङ्मार्गत्वात्। अयमपि वैदिको व्यवहारोऽनादिरेव स्वतन्त्रः, यथा लौकिको व्यवहारोऽनादिः स्वतन्त्रश्चेति। अतो नियोग एव विध्यर्थो वेदे, तज्ज्ञानादेव च वैदिकक्रियासु प्रवृत्तिः पुरुषस्य।

न च वाच्यम् "नियोगोऽनुमेय एव प्रवृत्तिरूपहेतुना, न विधायकशब्दबोध्यः" इति, यतः प्रवृत्त्या प्रयोज्यगताया नियोगप्रतीतेरेवानुमानं भवति बालस्य। प्रतीतिविशेषणीभूतो नियोगस्तु तत्प्रतीतिसामर्थ्येनैव सिध्यति। तस्याश्च नियोगप्रतीतेः प्रयोज्यवृद्धगतायाः प्रयोजकवृद्धप्रयुक्तशब्दोत्थत्वात्, सिद्धं प्रवृत्तिहेतोर्नियोगस्य शब्दातिरिक्तप्रमाणागोचरत्वम्, शब्दैकगम्यत्वमिति यावत्।

**न च लौकिकस्यैव श्रेयःसाधनत्वस्य सम्भव इति युक्तम्; लौकिकी हि प्रमाणान्तरावगम्या श्रेयःसाधनता, तत्र प्रयोगदर्शनाल्लिङादेः, तदनुसारेण च शब्दार्थावधारणात्। प्रमाणान्तरगम्यताऽपि शब्दार्थानुप्रवेशिनी।**

**अत्रोच्यते– भवतु नाम वेदव्यवहारादेव शब्दार्थानुगमः, तथापि न प्रमाणान्तरगोचरता व्यावर्तते। तथा हि – अलौकिके प्रवृत्तिहेतौ शब्दस्य सामर्थ्यज्ञानकाले प्रमितो वा स्यात्, न वा? प्रमितश्चेत् शब्दसम्बन्धस्य तदैव ज्ञायमानत्वादवश्यं प्रमाणान्तरेणेति वाच्यम्। अथ न प्रमितः, कथं तत्र सम्बन्धज्ञानम्? न ह्यप्रमितयोः सम्बन्धिनोस्तदाश्रयः सम्बन्धः प्रमातुं शक्यः।**

---

न च वाच्यम् 'लौकिकमेव श्रेयःसाधनत्वं वेदेऽपि प्रवृत्तिहेतुः सम्भवतीति' यतो हि लौकिकी श्रेयःसाधनता प्रत्यक्षादिप्रमाणान्तरगम्या भवति।प्रमाणान्तरगम्य एव लिङादेर्लोके प्रयोगदर्शनात्। एवं सति लौकिकप्रयोगानुसारेणैव वेदेऽपि शब्दार्थो निर्धारणीयः स्यात्।तथा च वेदेऽपि प्रमाणान्तरगम्यता शब्दार्थेऽनुप्रविष्टा स्यात्। किन्तु वेदे नैवं लौकिकप्रयोगानुसरणं सम्भवति। वेदस्य अपौरुषेयत्वेन तत्र प्रमाणान्तराभावात्। तस्मादलौकिक एव प्रमाणान्तराविषयो लिङर्थ इति स्वीकार्यम्।अतो वैदिको लिङादिशब्दो नानुवादकः किन्तु अपूर्वार्थवाचक एवेति पूर्वपक्षिमतम्।

मतमिदं निराकरोति– **अत्रोच्यत इत्यादिना**। अयं भावः– भवतु नाम लोकव्यवहारवद् अनादिवेदव्यवहारात् शब्दार्थानुगमः = शब्दार्थयोः परस्परं सम्बन्धज्ञानम्, तथापि न विध्यर्थस्य प्रमाणान्तरगोचरता व्यावर्तते। तथा हि– अलौकिके नियोगरूपे प्रवृत्तिहेतौ लिङादिविधिशब्दस्य सामर्थ्यज्ञानकाले स नियोगः प्रमितो न वा? प्रमितश्चेत्, अर्थेन नियोगेन सह तदैव शब्दसम्बन्धस्य ज्ञायमानत्वेन पूर्वमज्ञातसम्बन्धस्य शब्दस्याबोधकत्वात् प्रमाणान्तरेणैव सोऽर्थः प्रमितो वाच्यः। तदा प्रमाणान्तरगम्यत्वं विध्यर्थस्य नियोगस्य प्रसज्येत।यदि तु न प्रमितस्तदाऽप्रमितेऽर्थे शब्दस्य सम्बन्धः कथं ज्ञायेत।न ह्यप्रमितयोः सम्बन्धिनोस्तदाश्रयः सम्बन्धः प्रमातुं शक्यते। तथा च नियोगस्य प्रमितत्वे अप्रमितत्वे चोभयथा

**योऽपि मन्यते— शक्तिर्हि शब्दस्य सम्बन्धः। सा च नार्थे, तस्य व्यवस्थिततत्वात्। प्रत्ययस्तु तस्य कार्यः, स च प्रवृत्त्याऽनुमितः। तत्रैव सामर्थ्यलक्षणः सम्बन्धः प्रमीयत इति।**

**स इदं प्रष्टव्यः— किं प्रत्ययमात्रे सामर्थ्यं गृह्यते? अथ विशिष्टे प्रवृत्तिहेतुप्रत्यये? यदि प्रत्ययमात्रे, यत्किञ्चित् ततः प्रतीयेत।**

---

तत्र न लिङादिविधिपदसम्बन्धज्ञानसम्भव इति न लिङादिपदाद् नियोगः प्रतीयेतेति न विध्यर्थोऽलौकिको नियोग इति सिद्धान्तः। एतच्चाभ्युपगमवादे-नोक्तम्। वस्तुतस्तु लिङादयो न केवलं वैदिकाः शब्दाः, तेन पश्वादिशब्दवत् लिङादिशब्दानामपि लोकव्यवहारादेव व्युत्पत्तिर्युक्तेति बोध्यम्।

प्रवृत्तिहेतोर्नियोगरूपार्थस्य प्रमाणान्तरागम्यत्वं शङ्कते— **योऽपि मन्यत इति।** अयमाशयः— शब्दस्य शक्तिरेव सम्बन्धः शब्दशक्तिश्च न प्रवृत्तिहेतौ अर्थे, अर्थस्य पूर्वत एव व्यवस्थिततत्वेन शब्दाकार्यत्वात्। किन्त्वर्थप्रत्यय एव शब्दस्य शक्तिरूपः सम्बन्धः, प्रत्ययस्यैव शब्दजन्यत्वेन कार्यत्वात्। स च प्रत्ययो बालेन प्रयोज्यवृद्धप्रवृत्त्या तत्रानुमितो भवति। अतस्तस्मिन् प्रत्यय एव बालेन सामर्थ्यलक्षणः = शक्तिरूपः सम्बन्धः प्रमीयते = गृह्यते। तथा च लिङादि-शब्दस्य शक्तिग्रहणार्थं साक्षात् शब्दसम्बन्धिनः प्रत्ययस्यैवानुमानरूप-प्रमाणान्तरगम्यत्वमायाति। प्रत्ययविशेषणीभूतः प्रवृत्तिहेतुर्नियोगस्तु प्रमाणान्त-रागम्य एवेति सिद्धं वेदे लिङादिपदस्यापूर्वार्थबोधकत्वमिति मतान्तरम्।

तदेतन्मतं विकल्प्य दूषयति— **स इदं प्रष्टव्य इत्यादिना।** किं शब्दस्य सामर्थ्यं = शक्तिः प्रत्ययमात्रे प्रयोज्यवृद्धस्य प्रवृत्त्याऽनुमिते बालेन गृह्यते, अथवा विशिष्टे = अलौकिकप्रवृत्तिहेतुप्रत्यये? यदि आद्यः पक्षस्तदा ततः = प्रयोज्य-प्रवृत्त्याऽनुमितात्प्रत्ययात् यत्किञ्चिदेव बालेन प्रतीयेत न त्वलौकिकः प्रवृत्तिहेतुः प्रतीयेत। यदि तु विशिष्टे अलौकिकप्रवृत्तिहेतुभूतस्य प्रत्यय इति द्वितीयः पक्षस्तदा अयं क्रमः स्यात्— पूर्वं प्रयोजकवृद्धप्रयुक्तशब्दात् प्रयोज्यस्य प्रवृत्तिहेतुज्ञानम्, ततः प्रयोज्यस्य प्रवृत्तिः, ततस्तत्प्रवृत्त्या बालस्य लौकिकासम्भवेन पारिशेष्यात्

**अथ विशिष्टे = लौकिकव्यतिरिक्तप्रवृत्तिहेतुप्रत्यये, प्रवृत्तिपरिशेषाभ्यां तस्यानुमितत्वात् प्राप्तं प्रमाणान्तरगोचरत्वम्।**

**द्वयी हि विशेषणस्य गतिः— स्मार्ताकृष्टं विशिष्टप्रमितावङ्गत्वमेति, यथा अग्निमान् धूमादिति। विशिष्टग्राहिप्रमाणप्रमेयं वा, यथा— शुक्लो गौरिति। उभयथा च प्रमाणान्तरविषयः, शब्दस्यानधिगतसम्बन्धत्वात्। स्मार्ताकृष्टत्वे प्रमाणान्तरमन्वेष्यम्। द्वितीयेऽपि कल्पे विशिष्टप्रत्ययानुमानानुमितत्वात्।**

---

अलौकिकार्थविषयकानुमानम्, ततश्च तस्मिन् अलौकिकार्थेऽनुमिते बालस्य लिङादिशब्दस्य शक्तिग्रह इति। एवं सति बालद्वारा प्रयोज्यगतस्य विशिष्टस्य प्रवृत्तिहेतु(नियोग)प्रत्ययस्य क्रियमाणायामनुमितौ प्रवृत्तिहेतोस्तद्विशेषणस्यापि अलौकिकस्य (नियोगस्य) नियोज्यप्रवत्तिपरिशेषाभ्यामनुमितत्वाद् बलादायातमलौकिकस्य तस्य प्रमाणान्तरगोचरत्वम्।

तदेवोपपादयति ग्रन्थकृत्— **द्वयी हि विशेषणस्य गतिरिति**। अयमर्थः— गम्यत इति गतिः = स्वरूपम्। विशेषणस्य स्वरूपं द्विविधमित्यर्थः। प्रथममाह— **स्मार्ताकृष्टमिति**। स्मृतिरेव स्मार्तम्, तेन आकृष्टं = गृह्यमाणं स्मर्यमाणमित्यर्थः। अथवा स्मृतेरिदं स्मार्तम्, स्मृतिगोचरमिति यावत्। स्मार्तं च तदाकृष्टं स्मार्ताकृष्टम्। अर्थाद् एकं विशेषणं स्मर्यमाणं भवति। यथा — अग्निमान् धूमादित्यत्र विशिष्टे पर्वते विशेष्ये स्मृत्युपनीतोऽग्निरनुमीयमानतया विशेषणं भवतीति।

द्वितीयमाह — **विशिष्टग्राहीति**। विशिष्टग्राहकं यत् प्रत्यक्षादिप्रमाणं तेनैव प्रमाणेन गृह्यमाणं न तु प्रमाणान्तरेणेति द्वितीयं विशेषणम्। यथा — शुक्ला गौरिति विशिष्टगोज्ञाने शुक्लत्वविशेषणमपि गोप्रत्यक्षेणैव तत्काल एव

**अथानुमानस्य प्रत्यय एव प्रामाण्यम्, प्रतीतिमात्रं तु तत्र विशेषणस्य, तावता च तद् विशिष्टप्रतीत्यङ्गम्। विशेषणप्रमितिस्त्वनुमितात्**

---

गृह्यमाणं भवतीति। उभयथा च = प्रत्ययमात्रे अर्थात् प्रत्ययसामान्ये लिङादिशब्दस्य सामर्थ्यं = शक्तिर्गृह्यते, अथवा विशिष्टे प्रवृत्तिहेतुभूतस्य नियोगस्य प्रत्यये वा लिङादिशब्दस्य शक्तिर्गृह्यते, उभयथाऽपि प्रवृत्तिहेतुरलौकिकार्थो नियोगः प्रमाणान्तरविषय एव, न शब्दैकगम्यः। प्रत्ययमात्रपक्षे स्मृत्युपनीते नियोगे, विशिष्टप्रत्ययपक्षे च विशेषणीभूते नियोगे लिङादिशब्दस्य सामर्थ्यरूपसम्बन्धाग्रहणादित्यर्थः। अत उभयपक्षे नियोगस्य प्रमाणान्तरविषयत्वमुपपादयति – **स्मार्ताकृष्टत्वे इत्यादिना।** स्मृत्युपनीतत्वपक्षे नियोगस्मृतिहेतुभूतमनुभवरूपं प्रमाणान्तरमन्वेषणीयमापद्येत। विशेषणविशिष्टप्रत्यये शब्दसामर्थ्यग्रहणपक्षेऽपि च गोप्रत्यक्षेणैव शुक्लप्रत्यक्षवत् प्रयोज्यप्रवृत्त्या जायमानेन विशिष्टप्रत्ययानुमानेनैव विशेषणस्य नियोगस्याप्यनुमितत्वादिति सिद्धं नियोगस्य प्रमाणान्तरविषयत्वम्।

अलौकिकार्थस्य नियोगस्य प्रमाणान्तरागोचरत्वं शब्दैकगम्यत्वं च प्रकारान्तरेणाशङ्कते – **अथानुमानस्येति।** सत्यम्, वेदे अलौकिकप्रवृत्तिहेतुविशिष्ट एव प्रयोज्यवृद्धगतः प्रत्ययस्तदीयप्रवृत्त्या पारिशेष्यादनुमानेन बालद्वाराऽनुमीयते, तथापि प्रयोज्यप्रत्यय एवानुमानस्य प्रामाण्यं न तु प्रत्ययविशेषणे प्रवृत्तिहेतावलौकिके नियोगार्थेऽपि। प्रवृत्तिहेतोरलौकिकार्थस्य तु प्रतीतिमात्रं भवति, न तु प्रमितिर्भवति। प्रतीतमात्र एव च सोऽलौकिकार्थः प्रयोज्यप्रत्यये अङ्गं विशेषणं भवति, न स्मार्ताकृष्टः, न वा प्रमित इति भावः।

तत् किं बालोऽलौकिकार्थं न प्रमिणोति? यदि न प्रमिणोति तदा कथं तस्य अलौकिकार्थे नियोगे लिङादिशब्दस्य शक्तिग्रहः? अत्रोच्यते – **विशेषणप्रमितिस्त्विति।** अयमर्थः – बालः पूर्वं प्रयोज्यवृद्धे प्रवृत्त्या प्रयोज्यगतं प्रत्ययमनुमिनोति। पश्चाच्चानुमितात् तत्प्रत्ययात् तद्विशेषणं प्रवृत्तिहेतुमलौकिकार्थमपि प्रमिणोति। तस्याश्चालौकिकार्थप्रमितेर्हेतुः प्रयोज्यप्रत्ययजनको लिङादिशब्द एवेति सिद्धं नियोगस्य शब्दैकगम्यत्वं प्रमाणान्तरागोचरत्वं चेति।

**प्रत्ययात्, यथा पुरुषवचनाद् विशिष्टार्थप्रमाणेऽनुमितेऽर्थसिद्धिस्तत एव प्रमाणात्। तत्र ह्यर्थः प्रतीतिमात्रेणैव वक्तृज्ञानस्य विशेषणम्।**

**तदेतदपेशलम् – स्मृतिप्रमाणसंशयविपर्यासविकल्पान्तर्गमात् प्रतीतेः। तत्रालौकिकविशेषणप्रतीतिर्न स्मृतिः प्रागनधिगतेः। न सशंयः,**

---

प्रतीतमात्रं प्रयोज्यप्रत्यये विशेषणं न प्रमितम्, प्रमितिस्तु पश्चात् प्रयोज्यप्रत्ययादित्यत्र दृष्टान्तमाह – **यथा पुरुषवचनादिति**। अयमर्थः– आप्तवचनं विशिष्टे वक्तृगतप्रत्यये प्रमाणं भवति, न प्रत्ययमात्रे। न हि वक्ता सामान्यतो निर्विषयं प्रतीत्य वचनं प्रयुङ्क्ते किन्तु विशिष्टं प्रतीत्यैव। विशिष्टता च प्रत्ययस्यार्थानुबन्धेनैव न स्वतः। स चार्थः प्रतीत एव सन् प्रत्यये विशेषणं भवति, अप्रतीतस्य विशेषणत्वासम्भवात्। न चासावर्थ आप्तवचनप्रमितो भवति, आप्तवचनस्य वक्तृगतप्रत्यय एव प्रामाण्यात्। अर्थस्य प्रमितिस्तु वक्तृप्रत्ययादेव तदुत्तरकाले श्रोतुर्भवति। विशिष्टप्रत्ययप्रतीतिस्त्वर्थप्रमितेः पूर्वमेव भवति।

तस्मात् प्रतीतमात्रः प्रवृत्तिहेतुस्तत्प्रत्ययानुमितौ विशेषणं न स्मर्यमाणो न वा प्रमित इति विध्यर्थनियोगवादिनोऽभिप्रायः। तथा च नियोगस्य प्रमाणान्तरागोचरत्वं शब्दैकगम्यत्वं च सूपपन्नम्।

अत्रेदं सिद्धान्तिनः समाधानम्–

प्रयोज्यप्रत्यये विशेषणीभूतः प्रवृत्तिहेतुरलौकिकार्थः प्रतीतमात्रो न प्रमित इति यदुक्तं तन्निराकरोति – **तदेतदपेशलमिति**। अपेशलमयुक्तमित्यर्थः। अयुक्तत्वमेव विवृणोति – **स्मृतिप्रमाणेत्यादिना**। अयं भावः – सर्वा प्रतीतिः स्मृतिप्रमाणादिपञ्चसु अन्तर्गता न ततोऽतिरिक्ता। तत्र प्रवृत्तिहेतुप्रतीतिर्न स्मृतिर्न संशयः, न विकल्पः, न विपर्यास इति परिशेषात् प्रमाणान्तर्गतैव वाच्या। तथा च सिद्धं प्रवृत्तिहेतोर्नियोगस्य प्रमाणान्तरगोचरत्वम्। अतः शब्दैकगम्यत्वाभावात् तद्बोधकः शब्दोऽनुवादक एव न प्रमाणमिति।

**कोटिद्वयसंस्पर्शाभावात्। न विकल्पः, प्रवृत्तिहेतुप्रत्ययस्यापि तथा प्रसङ्गात्। तथा न विपर्यासः, कथं हि तत्र यथार्थत्वे तथाभूतग्राहिणी तत्प्रतीतिरर्थशून्या स्यात्? परिशेषात् प्रमाणम्। परज्ञानेन च परः प्रतिपद्यत इति सुभाषितम्।**

**अथ मतम्—न परज्ञानेन परः प्रतिपद्यते, किन्तु स्वज्ञानेनैव, परज्ञानसामर्थ्यात्। अथ तस्य स्वज्ञानं कतमत् प्रमाणमिति वाच्यम्। न तावच्छाब्दम्, शब्दविज्ञानादर्थे विज्ञानमिति लक्षणात्। न च तच्छब्द-ज्ञानात्। कुतस्तर्हि? शब्दोत्थज्ञानादनुमितात्। अथ तस्य प्रामाण्ये**

---

यच्चोक्तम्—प्रयोज्यप्रत्ययादनुमिताद् बालस्य प्रवृत्तिहेतुप्रमितिः पश्चाद् भवति। स च प्रत्ययः प्रयोज्यगतः शब्दोत्थ इत्यनन्यप्रमाणकत्वम्= शब्दैकगम्यत्वं नियोगस्येति, तदप्ययुक्तम्, प्रयोज्यगतो हि शब्दोत्थः प्रवृत्तिहेतुप्रत्ययो न बालस्य। न चान्यप्रत्ययेन अन्योऽवबुध्यते। तस्माद् बालो नूनं प्रमाणान्तरेण प्रवृत्तिहेतुं प्रमिणोतीति न शब्दैकगम्यो विध्यर्थः। एतदेवोक्तं मूले सपरिहासम्—"**परज्ञानेन च परः प्रतिपद्यत इति सुभाषितमि**"ति।

पुनः प्रकारान्तरेणाशङ्कते—**अथ मतमिति**। अयमर्थः—परो बालः परज्ञानेन = प्रयोज्यप्रत्ययेन न विध्यर्थं नियोगं बुध्यते, किन्तु स्वप्रत्ययेनैव तं बुध्यते। बालस्य च विध्यर्थप्रत्ययस्तेन प्रयोज्यप्रवृत्त्यानुमितस्य लिङादि-शब्दोत्थस्य प्रयोज्यगतप्रत्ययस्य सामर्थ्येनैव जायते। इत्थं च बालकगतायां प्रयोज्यप्रत्ययानुमितावपि परम्परया शब्दस्यैव प्रयोजकत्वात् सिद्धं नियोगस्य शब्दैकगम्यत्वमिति।

आशङ्कामिमां प्रश्नमुखेनोत्तरयति—**अथ तस्य स्वज्ञानमिति**। बालकस्य यत् स्वं ज्ञानं तत् कतमत् प्रमाणम्? न तावत् तत् शाब्दम्, यतो हि शब्दज्ञानादेव यदर्थज्ञानं तदेव शाब्दं भवति। पूर्वमव्युत्पन्नस्य बालस्य तु न शब्दज्ञानात् तज्ज्ञानमुत्पद्यते किन्तु प्रयोज्यस्यैव। अतः प्रयोज्यस्यैव तज्ज्ञानं शाब्दं भवति। लिङादिशब्दोत्थस्य प्रयोज्यगतविध्यर्थप्रत्ययस्य बालेन तु

**गतिरुक्ता। तत्र स्मृत्यसम्भवात् प्रमीयमाण एव स विशिष्टार्थप्रमित्यङ्गम्, अन्यथाऽर्थे प्रमाणान्तरमन्वेष्यं स्यात्। न च वक्तृज्ञानेनैवार्थसिद्धिः, परज्ञानेन न परः प्रतिपद्यत इत्युक्तम्।**

**यत्तूक्तम्— वक्तृज्ञानाधीनार्थसिद्धिरिति, तत् तन्मिथ्यात्वे तदसम्भवे वा प्रमाणप्रतीतिबाधनेऽर्थप्रतीतेरपि बाधनात् तदबाधे चाबाधात्,**

---

स्यात्, तदा पूर्वोक्तमुपपद्येत, न त्वेवमस्ति। एतदेवोक्तं मूले— **पुरुषवचनमपि नार्थे न प्रमाणमिति**। अर्थात् पुरुषवचनमपि स्वत एवार्थे प्रमाणं भवतीति। एवं सत्यपि बालकस्य प्रवृत्तिहेतुप्रत्ययानुमितौ क्रियमाणायां यत् पुरुषवचनस्यापेक्षा भवति., तत् तत्र अनुमितौ सविशेषणस्य प्रत्ययस्य प्रमेयान्तर्गतत्वाद् भवति, विशेषणीभूतमर्थमप्रतीत्य विशिष्टज्ञानस्य प्रत्येतुमशक्यत्वात्। न तु तस्यामनुमितौ पुरुषवचनं प्रमाणमिति कृत्वा पुरुषवचनस्यापेक्षा भवति नातो बालस्य नियोगप्रत्ययः शाब्द इति तात्पर्यम्।

विशेषणप्रतीतिरीतिमुपपादयति— **द्वयी चेति**। स्मर्यमाणः प्रमितश्चेति द्वे गती विशेषणस्य। वेदेऽलौकिकार्थस्याननुभूतत्वेन स्मृत्यसम्भवात् प्रमीयमाण एव सोऽलौकिकार्थो विशिष्टार्थप्रमितेः = प्रवृत्तिहेतुप्रत्ययस्याङ्गं भवति। न च तत्प्रमितिः शब्दान्येन प्रमाणेन, प्रमाणान्तरस्यानुपलब्धेः। तदुक्तं मूले— **अन्यथाऽर्थे प्रमाणान्तरमन्वेष्यमिति**। न च वाच्यम्, वक्तृज्ञानमेव शाब्दम्, तेनैव च श्रोतुरलौकिकार्थनिश्चय इति, 'परज्ञानेन न परः प्रतिपद्यते' इति पूर्वमेवोक्तत्वात्।

अत्र शङ्खपाणिः — ननु पुंवचसि स्वज्ञानेन चेत् श्रोताऽर्थं बुध्यते न वक्तृज्ञानेन, कथं तर्हि "अपि च पौरुषेयाद् वचनात्" इत्यादिना वक्तृज्ञानाधीनाऽर्थसिद्धिरित्युच्यते? तद् वक्तृज्ञानमिथ्यात्वे तदसम्भवे वा चैत्यवन्दनादिवाक्येषु या पुंवाक्याद् वक्तृज्ञानप्रतीतिः सा बाध्यते, वक्तृज्ञानप्रतीत्यबाधे च सा न बाध्यत इति कृत्वा न पुनः पुंवचसोऽर्थो न विषयः किन्तु वक्तृज्ञानेन श्रोतुरर्थप्रतीतिरित्यभिप्रायेण।

**न तु वचसोऽर्थो न विषयः। अन्यथा प्रमाणान्तरपरतन्त्रं पुरुषवचोऽर्थे सापेक्षमित्येतदेव न स्यात्। न हि यो यस्याविषयः स तत्र सापेक्षोऽनपेक्षो वा। तथा च "प्रामाण्यस्थापनं तु स्याद् वक्तृधीहेतुसम्भवात्" (श्लो०वा०,पृ०९६) इत्युक्तम्। स्थापनमबाधः, न तु प्रामाण्यमेव। तच्च वक्तृधीहेतुसम्भवाद् वाक्यस्य, न वक्तृधिय एव। शब्दस्य चार्थेन सम्बन्धः, न तु ज्ञानेन। एवं ह्युक्तम् – "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" (मी०सू० १।१।५) इति।**

**अर्थग्रहणमत्र 'अर्थासंस्पर्शी शब्दः, ज्ञानेनैव शब्दस्य सम्बन्धः' इति पश्यतां निराकरणाय। तस्मादन्योन्ययोग्यता शब्दार्थयोरेव सम्बन्धः।**

---

यदि तु पुंवचसोऽर्थो न विषयः स्यात्, ततः पुंवचसोऽर्थे सापेक्षत्वम् "अर्थमात्रे च सापेक्षत्वम्" इत्यत्र यदुक्तं तन्न स्यात्। विषये हि सापेक्षनिरपेक्षे भवतः, नाविषये। तथा चोक्तं वार्तिककृता– "प्रामाण्यस्थापनन्तु स्याद् वक्तृधीहेतुसम्भवात्" इति। एतदुक्तं भवति– पुंवचसोऽर्थे प्रामाण्यं स्वत एव, वक्तृधीहेतुसम्भवेन तु प्रतिष्ठाप्यते।

यदि तु वक्तृबुद्धेर्हेतुर्न सम्भवेत् चैत्यवन्दनादाविव बुद्धबुद्धेः, ततो बाध्यते। तेनाबाधनमंत्र स्थापनमभिप्रेतम्, न तु प्रामाण्यमेव। तथा प्रामाण्यस्थापनं वाक्यस्य, न तु वक्तृधिय एव। तेन न वक्तृधियोऽर्थे प्रामाण्यम्, अपि तु वाक्यस्य।

किञ्च, "औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः" इत्यर्थग्रहणादप्यर्थेनैव शब्दस्य वाच्यवाचकयोग्यतालक्षणः सम्बन्धोः न ज्ञानेन। स चाप्रमिते सम्बन्धिन्यर्थे ज्ञातुमशक्य इत्यापन्नं विध्यर्थस्य प्रमाणान्तरगोचरत्वम्।

**न चाप्रमितेऽर्थे स शक्यो ग्रहीतुम्। प्रमिते प्रमाणान्तरविषयत्वमुक्तम्। न च प्रतीतिमात्रे, अर्थवत्याः प्रतीतेः स्मृतिप्रमाणयोरन्यतरत्रान्तर्गमात्। आनर्थक्ये केन सम्बन्धः? यदि च शब्दप्रतीतिव्यतिरेकिण्याऽपि प्रतीत्या स विषयीक्रियतेऽप्रमाणात्मिकयाऽपि, भवत्ययमशाब्दस्यापि ज्ञानस्य गोचर इति प्रमाणान्तराशङ्का केन वार्यते ?**

---

स च विध्यर्थो नियोगो मानान्तरसिद्धो न वा ? इति विकल्प्य आद्यं प्रत्याह – **न चाप्रमिते इति**। अर्थाद् यदि अलौकिको नियोगो न सिद्धस्तदा तस्मिन् लिङादिशब्दस्य वाच्यवाचकयोग्यतालक्षणः सम्बन्धो न ग्रहीतुं शक्यते। अतः स सिद्ध एव (प्रमित एव) मन्तव्यः। प्रमितत्वे (सिद्धत्वे) च तस्य प्रमाणान्तरविषयत्वमायातम् इत्युक्तमेव पूर्वम्।

यद्युच्यते– "न प्रमिते नियोगे लिङादेः सम्बन्धग्रहणं किन्तु प्रतीति-(प्रतीते) मात्रे" इति, तर्हि सा प्रतीतिर्यदि अर्थवती भवेत् तदा स्मृतिप्रमयोरन्यतरा स्यात्। उभयथाऽपि प्रमाणान्तरविषयत्वं नियोगस्यायातं स्यात्। यथार्थस्मृतेरपि प्रमाभूतानुभवजन्यत्वात्, प्रमायाश्च प्रमाणजन्यत्वादिति।

यदि तु सा प्रतीतिर्नार्थवती किन्तु अनर्थिका ( अर्थशून्या) तदा अर्थाभावे केन सह लिङादिविधेः सम्बन्धो गृह्येत इति घट्टकुटीप्रभातायितम्। तस्याः प्रतीतेरानर्थक्ये दोषान्तरमप्याह– **यदि चेति**। यदि शाब्दप्रतीतिभिन्नयाऽपि कयाचिदप्रामाणिक्या प्रतीत्या स नियोगार्थो विषयीक्रियते तदाऽयमर्थोऽशाब्दस्यापि ज्ञानस्य गोचरोऽस्तीत्यायातम्। अस्यां स्थितौ नियोगस्य शब्दैकगोचरत्वातिक्रमात् प्रमाणान्तरगम्यत्वाशङ्का कथं निवारिता स्यादिति। अर्थाद् नियोगार्थस्य प्रतीतिमात्रगोचरत्वेऽपि शब्दैकसमधिगम्यत्वं व्याहन्यत एवेति भावः।

इदानीं सिद्धान्ती श्रेयःसाधनत्वं (इष्टसाधनत्वं) लिङाद्यर्थ इति स्वपक्षं समर्थयितुं प्रतिवादिशङ्कां निराकरोति– **न चेत्यादिना श्रेयोहेतुत्वं तावच्छब्दार्थ** इत्यन्तेन ग्रन्थेन।

**न च प्रमाणान्तरावगम्यता शब्दार्थमनुप्रविशति, यतो नान्वयमात्रेण व्यतिरेकमात्रेण वा शब्दार्थः। सति ह्यन्यस्मिन् प्रयोजकेऽर्थे यस्याभावे न प्रयोगः सोऽपि तस्य शब्दस्य प्रयोजक इति गम्यते। यथा सत्सु हेत्वन्तरेषु यस्याभावे न कार्यं सोऽपि हेतुर्गम्यते। इह च श्रेयोहेतु-विवक्षायां लिङादेर्दर्शनात्, तदभावे सत्यपि प्रमाणान्तरगम्यत्वेऽदर्शनाच्छ्रेयो-हेतुत्वं तावच्छब्दार्थः।**

---

अयमर्थः– श्रेयःसाधनतायाः शब्दार्थत्वे तद्दृष्टान्तेन प्रमाणान्तरगम्यताऽपि शब्दार्थेऽनुप्रविष्टा स्यात्। अर्थात् प्रमाणान्तरगम्यमपि शब्दार्थः स्यादित्याशङ्का। तां परिहरति– **न च प्रमाणान्तरगम्यत्वं शब्दार्थत्वे प्रयोजकमिति**। अत्र हेतुमाह-यतो न केवलेन अन्वयमात्रेण केवलेन व्यतिरेकेण वा कश्चित् शब्दार्थो भवति। एवञ्च यदि क्वचित् शब्दार्थः प्रमाणान्तरगम्यो भवति, न तावतैव सर्वत्र प्रमाणान्तरगम्यत्वस्य शब्दार्थेऽनुप्रवेशः स्वीकर्तुं शक्यते।

कथं तर्हि शब्दार्थत्वमिति जिज्ञासायामाह– **सति हीति**। अयं भावः– "हरतेर्दृतिनाथयोः पशौ" इति स्मरणाद् दृतिहरत्वपशुत्वयोरुभयोर्मिलितयोः सत्त्व एव दृतिहरशब्दस्यार्थनिर्णयः। केवले दृतिहरे कर्मकारे,केवले च पशौ गवादौ तच्छब्दस्याप्रयोगात्, उभावेव मिलितधर्मौ दृतिहरशब्दस्य प्रयोगहेतुः। तस्मात् शब्दार्थत्वेऽयं नियमो यद् अन्यस्मिन् प्रयोजके विद्यमानेऽपि यस्यार्थस्याभावे यः शब्दो न प्रयुज्यते, सोऽप्यर्थस्तस्य शब्दस्य प्रयोगहेतुर्भवति। तच्छब्दस्य प्रवृत्तिनिमित्तं भवतीत्यर्थः।

अत्र दृष्टान्तमाह – **यथा सत्सु इति**। यथा सत्सु वह्न्यादिषु आर्द्रेन्धनसंयोगस्याभावे धूमकार्यं न भवति, अतः स संयोगोऽपि धूमहेतुरवगम्यते। प्रकृते श्रेयोहेतुविवक्षया वक्तारो लिङादिकं प्रयुञ्जत इति दर्शनात् तादृशविवक्षाया अभावे च अश्रेयोहेतौ प्रमाणान्तरगम्यत्वे सत्यपि लिङादिशब्दप्रयोगादर्शनात् श्रेयोहेतुत्वम् (इष्टसाधनत्वम्) एव लिङ्शब्दार्थो निर्णीयत इति भावः।

**प्रमाणान्तरगम्यत्वे यद्यपि दर्शनम्, तदभावे च यद्यप्यदर्शनम्, न तु श्रेयोहेतुत्वे सति प्रमाणान्तरगम्यताया अभावात्। तत्र सन्दिग्धो व्यतिरेकः – उभयाभावेऽप्रयोगात् किं निबन्धनोऽप्रयोग इति। तत्र श्रेयःसाधनतायाः प्रयोजकत्वस्यावधारितत्वात् तदभावे तन्निबन्धन इति गम्यते। तन्मात्रेणान्वयव्यतिरेकोपपत्तौ नान्यस्य शब्दार्थत्वे प्रमाणम्। अन्यथा शिंशपाशब्दार्थे सत्त्वादयोऽप्यनुप्रविशेयुः, तेषु सत्सु प्रयोगात् तदभावे चाप्रयोगात्।**

---

ननु यः श्रेयोहेतुः स प्रमाणान्तरगम्योऽपि भवतीति लोके दृश्यते। अत एव प्रमाणान्तरगम्यत्वाभावे नृशृङ्गादौ लिङादिशब्दप्रयोगो न दृश्यते। तस्मात् प्रमाणान्तर-गम्यत्वमपि शब्दार्थत्वे प्रयोजकमिति चेत्, भवतु नामैवम्, तथापि श्रेयोहेतुत्वे तु प्रमाणान्तरगम्यताया अभावकारणाद् लिङादिशब्दप्रयोगस्यादर्शनं नास्ति, किन्तु श्रेयोहेतुत्वे सति प्रमाणान्तरगम्यत्वाभावेऽपि लिङादिशब्दप्रयोगो भवेदेव।

अत एव यत्रोभयस्याभावो भवति अर्थाद् यत्र श्रेयोहेतुत्वमपि नास्ति प्रमाणान्तरगम्यत्वमपि च नास्ति नृशृङ्गादौ, तत्र लिङादिशब्दप्रयोगाभावात् किं श्रेयोहेतुत्वस्य व्यतिरेकादप्रयोगः, उत प्रमाणान्तरगम्यत्वस्य व्यतिरेकादप्रयोगः? इति सन्दिग्धो व्यतिरेक इति।

अत्रायं निर्णयः – श्रेयःसाधनताया लिङादिशब्दप्रयोगहेतुत्वं लोकेऽव-धारितमस्ति। अतः श्रेयोहेतुत्वाभावे सति तत्प्रयुक्त एव नृशृङ्गादौ लिङादिशब्दा-प्रयोग इति निश्चीयते। अतः श्रेयःसाधनतामात्रस्य अन्वयव्यतिरेकाभ्यां (सत्त्वासत्त्वाभ्यां) लिङादिशब्दस्य प्रयोगाप्रयोगयोरुपपत्तौ प्रमाणान्तरगम्यस्य लिङादिशब्दार्थत्वे नास्ति किमपि प्रमाणमिति।

यस्य कस्यचित् सत्त्वासत्त्वाभ्यां शब्दप्रयोगाप्रयोगयोरभ्युपगमे तु शिंशपा-शब्दार्थे सत्त्वद्रव्यत्वादयोऽपि अनुप्रविष्टाः स्युः। अर्थात् सत्ताद्रव्यत्वादिकं च शिंशपा-शब्दार्थः स्यात्। यतो हि सत्तायां द्रव्यत्वे च सति वृक्षे शिंशपाशब्दस्य प्रयोगो

**अथ शिंशपात्वस्य शब्दार्थत्वात् तदभावनिबन्धन एव सत्ताद्यभावेऽप्रयोगः, तत्सद्भावाच्च प्रयोग उपपद्यत इति न तेषु सामर्थ्यकल्पना, समानमेतदत्रापि।**

**अथ श्रेयोहेतुत्वस्य प्रमाणान्तरविषयत्वात् तस्य च वेदेऽसम्भवादप्रामाण्यम्। तदसत् – न हि य एकत्र यस्य प्रमाणस्य गोचरः सोऽन्यत्रापि**

---

भवति, तथा तयोरभावे सामान्यादौ प्रयोगो न भवति। तस्मात् सत्त्वद्रव्यत्वादिकं न शिंशपाशब्दप्रयोगे हेतुः, किन्तु शिंशपात्वमेव।

यदि भवान् मन्येत – शिंशपात्वमेव शिंशपाशब्दार्थः, अतः शिंशपात्वाभावप्रयुक्त एव सत्तादिरहिते सामान्यादौ शिंशपाशब्दस्याप्रयोगः। अतः सामान्यादौ शिंशपाशब्दार्थत्वं न कल्पयितुं शक्यत इति, तदा लिङादिशब्दार्थत्वेऽपि तुल्यमेतत्। श्रेयोहेतुत्वे लिङ्शब्दप्रयोगात् तदभावे च नृशृङ्गादावप्रयोगात् श्रेयस्साधनतैव लिङर्थः, न त्वलौकिको नियोग इति भावः।

श्रेयःसाधनत्वस्य वैदिकलिङर्थत्वमाक्षिपति – **अथेति**। अयं भावः – भोजनादिविषये श्रेयःसाधनता प्रत्यक्षाभ्यामन्वयव्यतिरेकाभ्यां दृष्टा। वैदिके तु श्रेयःसाधनत्वे प्रमाणान्तरासम्भवाद् अप्रामाणिकी श्रेयःसाधनता। अतः प्रमाणशून्यत्वात् श्रेयःसाधनत्वं न लिङर्थः। आक्षेपं निराकरोति – **तदसदिति**। "य एकत्र यस्य प्रमाणस्य विषयः, सोऽन्यत्रापि तस्यैव प्रमाणस्य विषयः, तत्प्रमाणाभावे वा स विषयो मिथ्या भवेत्" इति नास्ति नियमः। यथा– यो ह्यग्निः समीपे बहिरिन्द्रियविषयो भवति, स दूरे व्यवधानदशायामनुमानगम्यो भवति। यागादेः फलं स्वर्गादि विप्रकृष्टे व्यवहिते भविष्यत्काल एव जायत इति यागादेः श्रेयःसाधनत्वस्य प्रत्यक्षादिप्रमाणान्तराऽयोग्यत्वात् तद् वेदावगम्यमेव भवतीति न काप्यनुपपत्तिः। न हि एकप्रमाणावगम्यो विषयः प्रमाणान्तरानुपलब्धिमात्राद् बाधितो भवति। विषयव्यवस्थया हि प्रमाणानि प्रवर्तन्ते, कस्मिंश्चिद् विषये भिन्नं प्रमाणं विषयान्तरे च भिन्नं प्रमाणं भवतीति।

**तस्यैव, तदभावे वा अप्रतीयमानोऽपि मिथ्या। समीपे हि बहिरिन्द्रियविषयः, दूरे त्वागमानुमानगम्यः। तथा यागादिषु विप्रकृष्टकालफलेषु वेदावगम्यं श्रेयःसाधनत्वं भविष्यति। न च प्रमाणान्तरानुपलब्ध्या प्रमाणान्तरगम्यो बाध्यते, विषयव्यवस्थयाऽपि प्रमाणप्रवृत्तेः।**

**अथ प्रमाणान्तरविषयत्वे तद्विरोधादप्रामाण्यम्, अनन्तरफलानुपलब्धेः। तदविषये तु शब्दार्थे न तद्विरोध इति। स्यात्, यदि विरोधः स्यात्, न चासौ, "आनन्तर्यं ह्यचोदितम्" (श्लो०वा०, पृ० ६८) इत्युक्तम्।**

---

शङ्कते – **अथेति**। सर्वत्र लोकेऽव्यवधानेन श्रेयःसाधनता प्रमाणान्तरस्य विषयो दृश्यते। अतो वैदिक्यां व्यवधानेन श्रेयःसाधनतायां प्रत्यक्षादि-प्रमाणान्तरविरोधादप्रामाणिकत्वं स्यात्। अनन्तरफलानुपलब्धेः = लोकवद् अव्य-धानेन फलानुपलब्धेरित्यर्थः।

समाधत्ते – **तदविषये त्विति**। अयं भावः – अन्यत्र प्रमाणान्तरेण विरोधो भवतु नाम। वेदे तु अव्यवहितफलानुपलब्धेः प्रमाणान्तरस्याविषयभूते श्रेयःसाधनत्वरूपे शब्दार्थे लिङर्थे नास्ति कश्चिद् विरोधलेशोऽपि। **स्यादिति**। अप्रामाणिकत्वं श्रेयःसाधनत्वस्य तदा स्याद् यदि तत्र कश्चिद् विरोधः स्यादित्यर्थः। प्रमाणान्तराविषयत्वान्न प्रमाणान्तरकृतो विरोध इति भावः।

यदि उच्यते– यागादौ श्रेयःसाधनत्वे वेदेनैव विरोधः स्यादिति, तत्राह-**न चासाविति**। न चास्त्यसौ वेदो योऽव्यवधानेन श्रेयःसाधनत्वं विदध्यात्। तथा चोक्तम्– "आनन्तर्यमचोदितमि"ति। यागानन्तरमेव स्वर्गादिफलमिति न श्रुत्या विहितमिति नास्ति श्रुत्यापि विरोधः। न हि लिङादिर्यागादेरव्यवधानेन श्रेयःसाधनतां प्रतिपादयति, किन्तु श्रेयःसाधनतामात्रं प्रतिपादयतीति कुतः श्रुतिविरोधोऽपि। तस्मान्नास्ति अप्रामाणिकत्वं श्रेयःसाधनत्वस्य लिङर्थत्व इति सर्वं पुष्कलम्।

**अथ मा भूदानन्तर्यचोदना, मा च भूत् प्रमाणान्तरावगम्यता शब्दार्थः। सर्वथा प्रमाणान्तरसिद्धश्चेत् पदार्थ आश्रीयते, स यथासिद्ध्याश्रयणीयः, अन्यथा न तत्सिद्धः स्यात्। अनन्तरश्रेयोहेतुता च तत्सिद्धा।**

**तन्न, न तावदनन्तरफलसाधनता नियोगतः कर्मणाम्, कृष्यौषधपानादिष्वन्यथाऽपि दर्शनात्। अवान्तरकार्यस्य यागादावपि प्रमाणसामर्थ्येन सिद्धेः।**

---

शङ्कते – **अथ मा भूदिति**। अयं भावः – यद्यपि आनन्तर्यमचोदितमस्ति, प्रमाणान्तरगम्यता च नास्ति शब्दार्थः, तथापि लोके इव प्रमाणान्तरसिद्धा या श्रेयःसाधनता सैव यदि वेदेऽपि लिङर्थस्तदा यादृशी सा लोके सिद्धा तादृशी वेदेऽप्याश्रयितव्या। अन्यथा सा न प्रमाणसिद्धा स्यात्। अनन्तरश्रेयोहेतुत्वेनैव हि लोके सा शब्दार्थतया प्रमाणसिद्धा। अतो वेदेऽपि लोकवदेव बहुदूरभविष्यत्-स्वर्गादिश्रेयःसाधनता लिङर्थो न भवितुमर्हतीति।

समाधत्ते – **तन्नेति**। अयमर्थः – नियोगतः = नियमेन कर्मणाम् अनन्तर-फलहेतुता नास्ति, कृष्यादिषु व्यवहितफलजनकेषु तस्या व्यभिचारदर्शनात्। यद्युच्येत कृष्यादौ भूसंस्काराङ्कुरजननादिकमवान्तरफलमनन्तरमेव भवति, औषधपानादावपि धातुसाम्यादिकमवान्तरफलमनन्तरमेव भवतीति; तर्हि यागादावपि अपूर्वरूपमवान्तरकार्यं यागादनन्तरमेव भवति। तच्चापूर्वरूपं कार्यं यद्यपि न दृष्टिगोचरं तथापि अर्थापत्तिप्रमाणबलेन तत्सिध्यति। तदुक्तम् –

**फलाय विहितं कर्म क्षणिकं चिरभाविने।**

**तत्सिद्धिर्नान्यथेत्येवमपूर्वं च प्रकल्प्यते॥ इति।**

एवं यत्र कर्मणि विशिष्टा अव्यवधानेन श्रेयःसाधनता सिद्धा, तत्रापि कर्मविशेषणीभूतं श्रेयःसाधनत्वमात्रं सिध्यति, तावन्मात्रमेव

**अपि च विशिष्टसिद्धौ विशेषणमपि श्रेयोहेतुत्वमात्रं सिद्धम्, तावच्च शब्दार्थः, न च तावति प्रमाणविरोधः। तदेवं लौकिकेऽपि प्रवृत्तिहेतौ दोषाभावाद् व्यर्था अलौकिककल्पना। सुखादिवच्चास्यानुमेयत्वात्। तथा हि— मुखप्रसादाद्युन्नेयसंवेदनाः सुखादयस्तेनैव सहोन्नीयन्ते, नैषां सत्त्वे पृथक् प्रमाणमर्थ्यते।**

**यदपीदं दर्शनम् — वक्तृज्ञानमेव पुरुषवचनार्थः, तत्र ज्ञानं नार्थमन्तरेण सम्भवतीत्यर्थापत्त्याऽनुमानेन वाऽर्थसिद्धिः। तदापि प्रवृत्ति-**

---

च विधिशब्दार्थो भवति। यथा हि गोत्वविशिष्टायां व्यक्तौ गोशब्दप्रयोगे विशेषणीभूतं गोत्वमेव शब्दार्थो भवति, न तद्विशेषः, तथैव लिङादिविधिशब्दस्थलेऽपि श्रेयःसाधनतामात्रं लिङर्थः, न त्वानन्तर्यरूपविशेषोऽपि। अतो यागादावव्यवहितफलादर्शनेऽपि नास्ति प्रमाणविरोधः।

इत्थञ्च लोके प्रवृत्तिहेतुः श्रेयःसाधनत्वमेव, तदेव च लिङर्थः, तथात्वे दोषाभावात्। अतो वेदेऽपि लौकिकं श्रेयःसाधनत्वमेव लिङर्थः, व्यर्थाऽलौकिकनियोगरूपविध्यर्थकल्पना।

श्रेयःसाधनताया विध्यर्थत्वपक्षे दोषाभावमुपपाद्य नियोगस्य विध्यर्थत्वं पुनर्दूषयति — **सुखादिवदिति**। अस्य = नियोगस्य। अयमर्थः — यथा मुखप्रसादादिना कस्यचित् पुरुषस्य सुखानुभवेऽनुमीयमानेऽनुभवविषयः सुखमपि सहैवानुमानगम्यं भवति, न तदर्थं पृथक् प्रमाणमन्विष्यते, तथैव प्रयोज्यवृद्धप्रवृत्त्या प्रवृत्तिहेतोस्तदीयज्ञानेऽनुमीयमाने ज्ञानविषयीभूतः प्रवृत्तिहेतुर्नियोगोऽपि सहैव अनुमेय एव भवेत्, न तु शब्दैकगम्यः। तथा चोक्तं पूर्वम्— "कथं शब्दैकगोचरः" इति।

पूर्वं पुरुषवचोऽर्थे प्रमाणम् (अर्थाभावे निरर्थकं वचः स्यात्) इति पक्षे नियोगरूपार्थो निराकृतः। इदानीं पौरुषेयवचसो वक्तृज्ञानमेव अर्थः=प्रमेयः, वक्तृज्ञान एव तद्वचः प्रमाणम्, ज्ञानं विना कथं तद्वचः प्रयुञ्जीत इति यावत्।

**प्रमितस्तद्धेतुप्रत्ययो न तमन्तरेणेत्याप्तवचनार्थवदनुमेयता न व्यावर्तते।**

**अथानुमानहेतोः प्रत्ययस्य शब्दसाधनत्वाच्छब्दप्रमाणफलकत्वम्, तदसत्, नाप्तवचनार्थज्ञानस्याक्षसाधनत्वात् तदर्थः श्रोतुः प्रत्यक्षप्रमाणको भवति। तस्मात् सुष्ठूच्यते– "तस्यैवमनुमेयत्वे कथं शब्दैकगोचरः" इति।**

---

तच्च वक्तृज्ञानमर्थं विना अनुपपन्नमित्यर्थापत्त्या प्रमाणेन अर्थः सिध्यति ।अथवा "आप्तज्ञानमर्थान्वितम् आप्तज्ञानत्वात् पूर्वदृष्टाप्तज्ञानवत्" इत्यनुमानेन पश्चादर्थः सिध्यतीति पुरुषवचो वक्तृज्ञान एव प्रमाणमिति पक्षेऽपि नियोगस्य शब्दैकगम्यत्वं नोपपद्येत ।यतो हि यथाऽऽप्तवचनार्थोऽर्थापत्त्यनुमानान्यतरगम्यो भवति, तथा प्रयोज्यवृद्धस्य प्रवृत्त्या प्रमितः (अनुमितः) प्रवृत्तिहेतु (नियोग) प्रत्ययो न प्रवृत्तिहेतुभूतनियोगमन्तरेण भवेदिति प्रवृत्तिहेतुनियोगोऽप्यनुमेय एव वा भवेदर्थापत्तिगम्य एव वा भवेत् श्रोतुर्बालकस्य ।अतो न नियोगस्य शब्दगम्यत्वं सिध्यतीति भावः।

पुनः शङ्कते– **अथानुमानहेतोरिति**। यद्युच्येत–"यस्मात् प्रवृत्तिहेतुप्रत्ययात् प्रवृत्तिहेतुर्नियोगोऽनुमीयते, स च नियोगः प्रयोजकवृद्धेन प्रयुक्ताद् लिङादि-शब्दादेव गम्यो भवति ।अतः शब्दैकगम्यत्वं प्रवृत्तिहेतोर्नियोगस्य सिध्यतीति"। तदेतन्निराकरोति – **तदसदिति**। अयमाशयः– यथा आप्तवचनस्थले वचनप्रयोक्तुर्यदाप्तज्ञानं तद्यदीन्द्रियजन्यं भवति, तदा तज्ज्ञानविषयः श्रोतुरपि प्रत्यक्षप्रमाणको नैव भवति, किन्तु अनुमेय एव भवति, तथैव प्रयोज्यवृद्धस्य जायमानःप्रवृत्तिहेतुप्रत्ययःशब्दाद् भवतु नाम, किन्तु बालकस्य तु प्रयोज्यवृद्धप्रवृत्तिं दृष्ट्वा प्रवृत्तिहेतुर्नियोगोऽनुमेय एव भवति, न तु शाब्दः। अतो प्रवृत्तिहेतुर्नियोगो न शब्दैकगम्य इति मन्तव्यम्। तस्मात् सुष्ठूच्यते– **"तस्यैवमनुमेयत्वे कथं शब्दैकगोचरः"** इति।

एवं नियोगस्य शब्दगम्यत्वाभावं पूर्वोक्तं स्मारयन् तस्याकल्पनीयत्वमपि पूर्वोक्तमेव स्मारयति– "न स कल्पयितुं शक्यस्तत्सिद्धेर्लौकिकादपि" इति। तत्सिद्धेः प्रवृत्तिसिद्धेरित्यर्थः। लौकिकादपि= श्रेयोहेतुत्वज्ञानादपीत्यर्थः।

**अथ प्रमाणरूपेण स स्वशब्दप्रकाशितः॥ ८५॥**

**आक्षेप्ता निरपेक्षश्च कथ्यतेऽन्यप्रमां प्रति॥ ८५–१/२॥**

**अथोच्यते– न ब्रूमो विधिरन्यथा वृथा स्यादिति तदधीनः संसर्गः। किन्तु प्रमाणात्मनैव स स्वशब्देन प्रतिपाद्यते। तथा च प्रमाणत्वात् प्रमेयस्याक्षेप्ताऽपूर्वस्य, प्रमाणान्तरानपेक्षश्च। न ह्यसौ शब्दवत् सम्बन्धापेक्षत्वात् पूर्वसिद्धिमपेक्षत इति।**

**तथाप्यसिद्धे प्रागुक्तौ दोषौ सिद्धेऽनुवादता॥ ८६॥**

---

संसर्गमन्तरेण नियोगस्यानर्थक्यात् संसर्गाक्षेपकत्वे पदार्थान्तरमपि तमन्तरेणानर्थक्यात् संसर्गमाक्षिपेत् किन्तु तथा नास्ति। अतो नियोगबोधार्थं नियोगलिङ्शब्दयोर्वाच्यवाचकभावसम्बन्धज्ञानमपेक्षितमिति पूर्वत्र सिद्धान्तिना यदुक्तं तस्य परिहारमाशङ्कते पूर्वपक्षी– **अथ प्रमाणरूपेणेति**। सः = नियोगः प्रमाणरूपेणैव लिङादिशब्दात् प्रकाशितो भवति, अतः स्वयंप्रमाणरूपः स नियोग आक्षेप्ता = अंन्वयबोधको भविष्यति, तथा चक्षुरादिवद् अन्यप्रमां प्रति निरपेक्षश्च भविष्यतीति कारिकार्थः।

अमुमेवार्थं विवृणोति मूलकारः– "**अथोच्यते**" इत्यादिना "**पूर्वसिद्धिमपेक्षत इति**" इत्यन्तेन शब्देन। विधिः = विध्यर्थो नियोगः। सः = विध्यर्थो नियोगः, स्वशब्देन = लिङादिना प्रमाणरूपेणैएव प्रतिपादितो भवतीत्यर्थः। तथा च सः अपूर्वस्यापि प्रमेयस्य = संसर्गस्याक्षेप्ता बोधको भविष्यति, स्वयं प्रमाणत्वात्।

प्रमाणान्तरनिरपेक्षश्च भविष्यति।यतो हि न हि स नियोगो गोप्रभृतिशब्दवत् सम्बन्धज्ञानसापेक्षत्वात् तदर्थं प्रमाणान्तरात् स्वपूर्वसिद्धिमपेक्षत इति पूर्वपक्षभावः। समाधानमाह– **तथापीत्यादिकारिकया**। नियोगो मानान्तरादसिद्धः, सिद्धो वेति विकल्प्याद्यपक्षं दूषयति – **तथापीति**। असिद्धत्वे लिङादिपदस्य तत्र नियोगेऽगृहीतसङ्गतिकस्य बोधकत्वप्रसङ्गात् पदधर्मव्यतिक्रमः

**प्रामाण्यमस्य यत्रास्तु श्रुतेस्तत्र वृथा त्वयम्॥ ८६–१/२॥**

**एवमप्यव्युत्पन्नप्रवृत्तिपदधर्मव्यतिक्रमौ प्रमाणात्मापि स यदि न प्रमाणान्तरसिद्धः। अथ सिद्धो यथावगतानुवादान्नापूर्वार्थाक्षेपः। अपि च यत्रास्य प्रामाण्यमिष्यते, शब्दस्यैव तत्रास्तु किमनेन ?**

**ननूक्तम्— शब्दसङ्गतिज्ञानापेक्षत्वादनुवादको नापूर्वार्थावगमाय प्रभवति, नैतत् सारम्, शब्दश्चेदनुवादकः, तत्प्रकाश्यं प्रमाणमपि**

---

वाक्यधर्माश्रयणञ्च दोषावापद्येते। द्वितीयपक्षे दोषमाह – **सिद्धेऽनुवादतेति।** अर्थाद् अस्मिन् सिद्धत्वपक्षे लिङ्शब्दोऽनुवादक एव स्यात् प्रमाणान्तरसिद्धस्य बोधकत्वाद् इति। किञ्च अस्य = विध्यर्थस्य श्रेयःसाधनत्वस्य प्रामाण्यं यत्र (यदा) तत्र (तदा) श्रुतेरेव तस्मिन् प्रामाण्यमस्तु, अयमप्रामाणिको नियोगस्तु वृथेति कारिकार्थः।

ग्रन्थकृत् स्वयं कारिकार्थं विशदयति – **एवमिति।** प्रमाणात्मापि= स्वयमेव प्रमाणरूपोऽपि स नियोगो यदि न प्रमाणान्तरसिद्धस्तदा अव्युत्पन्नप्रवृत्तिपदं स्यात् पदधर्मव्यतिक्रमश्चेति दोषौ प्रसज्येयाताम्। अव्युत्पन्नेऽज्ञाते सम्बन्धिनि नियोगे लिङादिपदस्य प्रवृत्तिः स्वीकृता स्यात्, सा चासम्भवा, अव्युत्पन्ने लिङ्पदसङ्गतिग्रहस्याशक्यत्वादिति प्रथमो दोषः। गृहीतसङ्गतिकस्यैव पदस्य बोधकत्वमिति पदधर्मस्य व्यतिक्रमोऽपि स्यादिति द्वितीयो दोष इत्यर्थः।

यदि स प्रमाणात्मा नियोगः प्रमाणान्तरेण सिद्धस्तदा पदार्थान्तरवत् स्वप्रमेयेण संसर्गेण सहैव स नियोगोऽनूद्येत तस्य तथैव सिद्धत्वात्। तथा च संसर्गस्यापि नियोगवत् लिङादिपदेनानूद्यमानत्वात् नापूर्वसंसर्गाक्षेपकत्वं नियोगस्येत्यर्थः। किञ्च श्रेयःसाधनत्वरूपविध्यर्थस्य प्रामाणिकत्वेन तस्मिन्नर्थे शब्द एव प्रमाणमस्तु, किमनेनाप्रामाणिकेन नियोगेनेति स्फुटार्थः।

स्वयं प्रमाणरूपो नियोग एवापूर्वसंसर्गमाक्षेप्स्यति, शब्दस्तु सङ्गतिज्ञानापेक्षित्वेनानुवादकत्वाद् नापूर्वसंसर्गावगमाय प्रभवतीत्यतः शब्दवाच्यो

**अनूद्यमानं यथाधिगमं कथमपूर्वार्थं बोधयेत् ? न प्रमेयसंस्पर्शरहिता प्रमाणावगतिः। अतो यथाऽधिगतप्रमेयमेव तत् प्रतीयते।**

**क्व च प्रमाणमेषोऽर्थे न यागादौ स्वशब्दके॥ ८७॥**

**लौकिकेऽपूर्वसंसर्गः श्रोतुरस्त्यविधावपि।**

**फलसाधनशक्तौ चेच्छब्दस्तत्र न दुष्यति॥ ८८॥**

---

विध्यर्थो नियोग एव संसर्गावगमे प्रमाणमिष्यत इति पूर्वोक्तं स्मारयति पूर्वपक्षी– **ननूक्तमिति।**

तन्निराकरोति सिद्धान्ती – **नैतत् सारमिति।** अयं भावः– शब्दश्चेदनुवादकः, तद्वाच्यं नियोगाख्यं प्रमाणमपि यथावगमम् अनूद्यमानमेवेति कथं तदपि संसर्गाख्यमपूर्वमर्थमवबोधयेत् ?

ननु शब्देन प्रमाणमेवानूद्यते, न तु प्रमाणस्य प्रमेयभूतः संसर्गोऽपि। तेन प्रमाणरूपो नियोगः संसर्गाख्यमपूर्वमर्थं बोधयिष्यतीति चेत्, न, प्रमेयसंस्पर्शरहितायाः प्रमाणावगतेरभावात् प्रमाणं चेच्छब्देनानूद्यते नूनं तत्प्रमेयमपि संसर्गाख्यमनुवदितव्यमेव। अतः प्रमाणमनूद्यमानं प्रमेयसंस्पर्शसहितमेव प्रतीयते न त्वेकाकि। तस्मान्न नियोगाख्यप्रमाणेन अपूर्वसंसर्गाक्षेपसिद्धिरिति।

नियोगस्य प्रमाणरूपत्वमिति पक्षमभ्युपगम्य पूर्वोक्तदोषोऽभ्यधायि। इदानीं नियोगस्य प्रमाणत्वमपि नोपपद्यते, तत्प्रमेयनिरूपणादित्याह – **क्व चेत्यादि-कारिकाभिः।** अयमर्थः – एष नियोग इति कस्मिन्नर्थे प्रमाणम् ? न तावत् स्वशब्दके यागादौ, यागादेः 'यजेत' इति स्वशब्देनैव प्रतिपादितत्वात्। न अपूर्वसंसर्गे, 'पुत्रस्ते जातः' इत्यादिलौकिके प्रयोगे विध्यभावेऽपि श्रोतुरपूर्वसंसर्गप्रतीतेः। न वा फलसाधनसामर्थ्ये नियोगस्य प्रमाणत्वम् इति पक्षो युक्तः, लिङादिशब्दस्यैव तद्बोधकत्वे दोषाभावात्।

**पदार्थान्तरतुल्यत्वाद् विध्याकाङ्क्षानिबन्धनः।**

**न संसर्गः पदार्थानां स्वशब्दैस्तु प्रकाशिताः॥ ८९॥**

**सम्बन्धयोग्यरूपेण तस्मात् संसर्गभागिनः।**

**विशिष्टार्थप्रयुक्ता हि समभिव्याहृतिर्जने॥ ९०॥**

**अतो न विध्यभावेन संसर्गो न प्रकल्पते॥ ९०-१/२॥**

---

तस्माद् नियोगोऽपि विध्यर्थः पदार्थान्तरैस्तुल्य एव, न तेभ्यः पृथक्स्वभावः। पदार्थान्तराणि यथा सङ्गतिज्ञानसापेक्षशब्दैरवगम्यन्ते, तथा नियोगावगमोऽपि सङ्गतिज्ञानापेक्षादेव लिङादिशब्दाद् भवितुमर्हेत्, सङ्गतिज्ञानं चासिद्धे नियोगे लिङ्शब्दस्य नास्त्येवेति अप्रमाणमेव नियोगः।

एवं विध्यर्थस्यापि नियोगस्य पदार्थान्तरतुल्यत्वान्न विध्याकाङ्क्षानिबन्धनः (विध्यर्थनियोगनिबन्धनः) पदार्थानां संसर्गः। तस्मात् सम्बन्धयोग्य-रूपेण (संसर्गयोग्यताशालिनः) पदार्थाः स्वशब्दैः प्रकाशिताः सन्तः परस्पर-संसर्गभाजो भवन्ति। संसर्गयोग्यता च आकाङ्क्षायोग्यतासन्निधिरूपा। पदार्थानां परस्परसंसृष्टत्वे युक्तिमाह – **विशिष्टार्थेति**। अर्थाद् जने वृद्धे, समभिव्याहृतिः = पदानां सहोच्चारणं, विशिष्टार्थप्रयुक्ता = क्रियाकारकभावेनं विशिष्टार्थज्ञानप्रयोजनेनैव भवति। न हि परस्परनिराकाङ्क्षैः 'गौरश्वः पुरुषो हस्ती' इत्यादिपदार्थमात्रैः कश्चिद् व्यवहारो भवति।

अतो विध्यभावेन संसर्गो न प्रकल्पेतेति नास्ति। अर्थात् पदार्थसंसर्गयैव नियोगार्थको विधिराश्रयणीयः = नियोग एव पदार्थानां संसर्गबोधे प्रमाणमिति यावत्, इत्येवं नास्तीति 'क्व च' इत्यादिकारिकाणामाशयः।

**न च नियोगस्य प्रमेयं निरूप्यते। न तावद् यागादयः प्रमेयाः, तेषां यजत्यादिशब्दविषयत्वात्। नापि तेषां प्रमाणान्तरस्यागोचरः संसर्गः। तथा हि– अविधिष्वपि लौकिकेषु वाक्येषु श्रोतुरनधिगतोऽपूर्वः संसर्गः प्रतीयते "ब्राह्मण! पुत्रस्ते जातः" इत्यादिषु।**

**अथ फलसाधनसामर्थ्यं प्रमेयमुच्यते, न किल कामिनो नियोगोऽकामोपाये धात्वर्थेऽवकल्पते। अनुपायत्वे हि तस्य न स कामिना कृतः स्यादिति। तदप्यसाम्प्रतम् – न हि शब्दस्य तत्र कश्चिदपराधो**

---

प्रकारान्तरेण नियोगस्य प्रमाणत्वं निषेधति – **न च नियोगस्येति**। यदि नियोगः प्रमाणं तदा तस्य प्रमेयं निरूपणीयम्, न च स निरूपयितुं शक्यते। अतो नियोगो न प्रमाणमित्यर्थः। प्रमेयाभावमेव प्रपञ्चयति – **न तावदिति**। यागादयः = यागदानहोमा न नियोगस्य प्रमेयाः, तेषां 'यजति', 'ददाति', 'जुहोति' इत्यादिशब्दविषयत्वाद् इत्यर्थः। क्रियाकारकसंसर्गः प्रमाणान्तरस्यागोचरः, अत एवापूर्वः नियोगस्य प्रमेयः स्यादिति पक्षं निषेधति – **नापीति**। तेषाम् = यागस्वर्गादिपदार्थानामित्यर्थः। यागस्वर्गादिपदार्थानां संसर्गस्य नियोगप्रमेयत्वाभावे हेतुमाह – **तथा हीति**। नियोगाप्रतिपादकेष्वविध्यात्मकेष्वपि "ब्राह्मण! पुत्रस्ते जातः" इत्यादिलौकिकवाक्येषु श्रोत्रा पूर्वमनधिगतोऽपूर्वः संसर्गः प्रतीयत एवेति न संसर्गोऽपि नियोगस्य प्रमेयः।

ननु यागादेः स्वर्गसाधनत्वं नियोगस्य प्रमेयमिति शङ्कते – **अथेति**। फलसाधनसामर्थ्यम् = स्वर्गसाधनत्वमित्यर्थः। तदेवोपपादयति – **न किलेति**। अर्थात् कामिनः = फलकामिनः फलसाधने धात्वर्थे यागादौ नियोगो नोपपद्यते। यदि यागो न स्वर्गोपायः, तदा स्वर्गकामो जनो यागे नियुक्तोऽपि न तं कुर्यात्। अतः फलसाधनत्वमेव नियोगस्य प्रमेयं समुपपद्यत इति शङ्कितुराशयः।

उक्ताशङ्कां परिहरति – **तदपीत्यादिना**। नियोगकल्पनाया अयुक्तत्वमुपपादयति– **न हीति**। यदि लिङादिशब्द एव यागादेः स्वर्गफलसाधनता प्रति

**येन तमतिक्रम्यान्यत् प्रमाणं मृग्यते। प्रमाणान्तरापेक्षता प्रत्युक्ता। अनन्तरफलादर्शनेन तु विरोधो नियोगगम्येऽपि तस्मिन्नविशिष्टः। आनन्तर्यस्याप्रमाणार्थत्वेन तदभावः शब्देऽपि तुल्यः।**

---

पादयितुं क्षमस्तदा कोऽपराधः शब्दस्य येन शब्दप्रमाणमुल्लङ्घ्य तदर्थं नियोगप्रमाणमन्विष्यते। भवताऽपि नियोगे प्रमाणत्वेन लिङादिशब्दोऽङ्गीक्रियत एवेति स एव यागादिनिष्ठस्वर्गसाधनत्वे प्रमाणमस्तु, लाघवादित्यर्थः।

ननु श्रेयःसाधनत्वस्य प्रमाणान्तरगम्यत्वात्-प्रमाणान्तरसापेक्षत्वेन वेदस्य निरपेक्षप्रामाण्यं व्याहन्येतेति चेत्, तत्राह – **प्रमाणान्तरसापेक्षता प्रत्युक्तेति**। अर्थाद् वह्निर्हि समीपे बहिरिन्द्रियविषयोऽपि परोक्षे इन्द्रियनिरपेक्षेणानुमानेन प्रमाणेन गम्यते। तद्वद् लौकिके कर्मणि श्रेयःसाधनत्वस्य प्रत्यक्षगम्यत्वेऽपि वैदिके यागादौ स्वर्गादिसाधनत्वं प्रत्यक्षादिप्रमाणान्तरनिरपेक्षेणैव वेदेनावगम्यं भविष्यतीति न काप्यनुपपत्तिरिति भावः।

ननु धात्वर्थस्य यागादेः स्वर्गादिसाधनत्वं यदि लिङादिशब्दार्थः, तदा यागादिक्रियानिष्पत्त्यनन्तरमेव स्वर्गादिफलेन भवितव्यम्। क्रियाया अनन्तरमेव फलोत्पत्तेः प्रसिद्धेः। तस्मात् श्रेयोहेतुत्वं न लिङर्थः, किन्तु नियोग एव लिङर्थः स्वीकरणीय इति शङ्कायामाह – **अनन्तरफलादर्शनेन त्विति**। अर्थात् श्रेयःसाधनत्वस्य नियोगप्रमाणगम्यत्वपक्षेऽप्युक्तविरोधस्तुल्य इति।

यद्युच्येत – फलस्यानन्तर्यं न नियोगप्रमाणार्थः, किन्तु नियोगो धात्वर्थस्य फलसाधनत्वमात्रं बोधयति। "आनन्तर्यमचोदितम्" इति न्यायात्। अतोऽनन्तरमेव फलाजननेऽपि न विरोध इति, तदा लिङ्शब्देऽपि आनन्तर्यापेक्षाऽभावस्तुल्य इति श्रेयःसाधनत्वं लिङादिशब्दस्यैव प्रमेयो न तु नियोगस्येति सिद्धम्।

**अथवा शब्दस्तत्र न दुष्यति फलसाधनसामर्थ्ये। नियोगस्तु दुष्यत्येव। न हि ततः पुरुषार्थसाधनावबोधः सम्भवति। तच्चेदं विधिविवेक-भावनाविवेकाभ्यामवगन्तव्यम्। तस्मात् सम्बन्धज्ञानापेक्षत्वेन पदार्थान्तरैः समानत्वाद् विधायकार्थस्य न शक्यं विशेषेण वक्तुम् – तन्निबन्धनः पदार्थसंसर्ग इति। सर्व एव तु पदार्थाः सम्बन्धयोग्यैः कारकादिभावैः स्वपदेभ्यः प्रतीताः सन्निकर्षेण संसृज्यन्ते, यतो लोकाच्छब्द-व्यापारावगमः।**

---

नियोगपक्षशब्दपक्षयोरुभयोस्तुल्यत्वेऽत्र कतरः पक्ष उपादेय इति विशेषापेक्षायामाह – **अथवेति**। अथवा न द्वयोस्तुल्यता , विशेषात्। को विशेष इति चेदयं विशेषो यत्-फलसाधनसामर्थ्ये= फलसाधनताबोधे लिङादिशब्दो न दुष्यति = सर्वथा दोषरहितः। नियोगस्तु दुष्यत्येव। अर्थाद् नियोगस्य तु फलसाधनताबोधकत्वपक्षेऽस्त्येव दोषः। दोषमेवोद्घाटयति – **न हीति**। ततः= नियोगात् पुरुषार्थस्य = पुरुषाभिलषितस्य स्वर्गादेर्यागादौ साधनतावबोधो न हि सम्भवतीत्यर्थः। तच्चेदं विधिविवेकभावनाविवेकाग्रन्थाभ्यामवगन्तव्यम्। तत्रेत्थमुक्तम् – नियोगो विषयनियोज्यमात्रापेक्षो न फलसाधनापेक्षः। अधिकारी च नियोज्यः। न चाविशिष्टोऽधिकारी भवतीति तत्र स्वर्गकामपदम-धिकारिविशेषणम्। स्वर्गकामनायाश्च (जीवन् यजेत इति) जीवनादिवद् निमित्तत्वेनाप्यधिकारिविशषणत्वोपपत्तेर्न नियोगात् स्वर्गस्य साध्यत्वं यागस्य तत्साधनत्वमवगन्तुं शक्यत इति। कामनाविशेषणीभूतः स्वर्गो निमित्तत्वेना-धिकारिविशेषणतया निमित्तकोटावायाति न साध्यकोटावतो न नियोगो यागादेः फलसाधनतायां प्रमाणमिति प्रघट्टकाशयः। किञ्च फलसाधन-शक्तिश्चेन्नियोगस्य प्रमेयः, नित्येषु (कर्मसु) तदभावात् (फलाभावात्) प्रमेयानुपपत्तिः।

**लोके च पदैः स्वार्थानां प्रतिपादनं सन्निकर्षेण विशिष्टार्थपरतया, न स्वार्थमात्रप्रतिपत्तिपरतया। तथा च सर्वपदार्थाकाङ्क्षानिबन्धन एव संसर्गः। सर्वे हि ते पदैरपर्यवसितरूपाः स्वरूपमात्रे प्रकाश्यन्ते। एवं पदार्थान्तरैस्तुल्यत्वाद् विधेः, न विशेषेण तन्निबन्धनः संसर्गः। सर्वपदार्थनिबन्धने च संसर्गे न विध्यभावेन संसर्गो नोपपद्यते। तदेवं न संसगार्थमपि विधिरुपासनीयः।**

---

निगमयति – **तस्मादिति**। यस्मात् पदार्थान्तरापेक्षया नियोगस्य प्रमाणत्वेन विशेषो नास्ति, तस्मात् पदार्थान्तरवद् नियोगस्यापि सम्बन्धज्ञानापेक्षैव प्रतीतिरिति अनूद्यमानत्वेनापूर्वसंसर्गमाक्षेप्तुं नियोगोऽपि न शक्तः पदार्थान्तरवदेवेति सर्वथा पदार्थान्तरैस्तुल्यो नियोगः, न तु तस्मिन् कश्चिद् विशेषः। एवञ्च विधायकार्थस्य = विध्यर्थस्य नियोगस्य कृते पदार्थान्तरविशेषेण एतद् वक्तुं नैव शक्यते यद् नियोगनिबन्धनः पदार्थसंसर्ग इति। अर्थाद् न नियोगस्यैव विषयसिद्ध्यर्थं या संसर्गाकाङ्क्षा तन्निबन्धनः पदार्थानां संसर्ग इति। प्रत्युत सर्व एव पदार्थाः स्वस्वशब्देभ्योऽन्योन्यसम्बन्धयोग्यक्रियाकारकरूपेण प्रकाशिताः सन्तः परस्परं संसर्गभागिनो भवन्ति। यतो हीदृशेऽन्वित एवार्थे लोके शब्दव्यापारोऽनुभूयते।

लोकानुभवमेव प्रदर्शयति – **लोके चेति**। लोके हि पदानि संसर्गविशिष्टानेव स्वार्थान् प्रतिपादयन्ति, न स्वार्थमात्रप्रतिपत्तिपराण्यनुभूयन्ते। तस्मात् सर्वेषां पदार्थानां परस्पराकाङ्क्षानिबन्धन एव संसर्गः। अतः सर्व एव पदार्थाः संसर्गाक्षेपकाः, न तु नियोग एव। संसर्गबोधात् पूर्वं तु सर्वे पदार्थाः पदैः अपर्यवसितरूपाः = असंसृष्ध निजरूपमात्रे प्रकाश्यन्ते, पश्चात्तु अन्योन्याकाङ्क्षा-बलात् संसर्गभाजो भवन्ति।

निगमयति – **एवं पदार्थान्तरैरिति**। विधेः = विध्यर्थस्य पदार्थान्तरैस्तुल्यत्वादिति योजना। अतो नियोगाभावेऽपि पदार्थानां संसर्ग उपपद्यत इति न संसर्गार्थमपि वेदान्तेषु विध्यर्थत्वेन नियोगः कल्पनीय इति रहस्यम्।

**कथं नोपासनीयः? यदा नियोगपरतयैव पदानां स्वार्थेषु संसर्गज्ञानम्? प्रवर्तकवचनानन्तरप्रवृत्तिदर्शनेन हि तद्धेतुप्रत्ययमनुमाय तत्र तस्य सामर्थ्यं गम्यते। नैतत्, अप्रवर्तकेऽपि वाक्ये स्वरूपनिष्ठे सम्बन्धग्रहात्।**

**सन्निधापिताग्निव्यतिरिक्तं पाक्योपकरणमग्न्यर्थिनं प्रति यदोच्यते— 'चैत्रगृहे कृशानुः' इति, तदा ततस्तेनानयनं दृष्ट्वा गम्यते— 'इहानेनाग्निसत्ता प्रतीता, सा चास्माद् वाक्यात्'। न च शक्यं वक्तुम् — 'तत आनय, गच्छ वा तत्र' इति वाक्यात् प्रत्ययः। अग्निसत्तामात्रप्रत्ययेन**

---

लोके नियोगपरतया एव स्वार्थे पदानां सङ्गतिग्रहाद् अवश्यं वेदेऽपि संसर्गार्थं विध्यर्थतया नियोग उपासनीय इति पुनः शङ्कते – **कथमिति**। तदेवोपपादयति – **प्रवर्तकेति**। सर्वत्र 'गामानय' इत्यादिप्रवर्तकवचनानन्तरं प्रयोज्यस्य प्रवृत्तिर्दृश्यते। प्रवृत्तिदर्शनाच्च तस्य प्रवृत्तिहेतुज्ञानमनुमीयते। एतावता गम्यते यद् अस्य वचनस्य प्रवृत्तिहेतौ सामर्थ्यमस्तीति। "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादिकेषु वैदिकप्रवर्तकवचनेषु प्रवृत्तिहेतुर्नियोग एव प्रतीयत इत्यवश्यं तत्र नियोग उपासनीय इति शङ्कार्थः।

व्यभिचारप्रदर्शनेन तन्निराकरोति – **नैतदिति**। स्वरूपनिष्ठेऽप्रवर्तकेऽनियोगपरेऽपि वाक्ये सम्बन्धग्रहात् प्रवृत्तिदर्शनाच्च न वाक्यस्य नियोगपरत्वनियम इति भावः। सम्बन्धग्रहणमेव दृष्टान्तेन प्रदर्शयति – **सन्निधापितेति**। सन्निधापितानि = समीपे स्थापितानि अग्निव्यतिरिक्तानि पाक्योपकरणानि येन तादृशमग्निकामिनं जनं प्रति 'चैत्रगृहेऽग्निरस्ति' इति विधिभिन्नं वाक्यमुच्यते, तदा तस्माद् वाक्याद् आनयनं दृष्ट्वा समीपस्थो बालको जानाति—इहानेन जनेनाग्निसत्ता प्रतीता। सा स्मात् चा = चैत्रगृहेऽग्निरस्ति इति अविध्यात्मकवाक्यादेव प्रतीता भवति। प्रतीत्य च वह्निसत्ताम् अग्न्यर्थी जनश्चैत्रगृहाभिमुखं प्रवर्तत इति।

**वाक्यात् प्रवृत्तिसिद्धे वाक्यस्य नियोजनेऽपि सामर्थ्यं शक्यते कल्पयितुम्। अर्थान्तरान्वये च प्रयोगप्रत्ययोपपत्तौ न विशेषान्वये प्रमाणम्। अन्यथा वेदार्थो निष्प्रमाणक एव स्यादित्युक्तम्।**

**अथ कत्तर्व्यताज्ञानाद् विनानर्थक्यमुच्यते॥ ९१॥**
**न प्रवृत्तिनिवृत्तिभ्यामन्यद् वाक्यप्रयोजनम्।**
**प्रतिपत्तिविधौ तुल्यं यदि सैव प्रयोजनम्॥ ९२॥**

---

न चात्रापि 'तत आनय, गच्छ वा तत्र' इति प्रवर्तकपदाध्याहाराद् नियोगः कल्पनीयः, तत्रोक्तवाक्यादग्निसत्तामात्रप्रत्ययेन प्रवृत्तिसिद्धे अध्याहारेणोक्त-वाक्यस्य न नियोजनसामर्थ्यं कल्पयितुं शक्यते। ननु पदार्थमात्रे पदप्रयोग विशिष्टार्थबोधयोरनुपपत्त्या तयोरुपपत्त्यर्थं नियोगान्वयः कल्पनीय इति चेदाह– **अर्थान्तरान्वये चेति**। पदार्थान्तराणामन्वयेऽपि पदप्रयोगविशिष्टार्थबोधयोरुपपत्तौ विशेषेण नियोगान्वये प्रमाणाभावादित्यर्थः। ननु लोके नियोगान्वयदर्शनाद् वेदेऽपि नियोगान्वयः कल्पनीय इत्यत्राह – **अन्यथेति**।

अर्थात् लोके प्रमाणान्तरविषयत्वेन पदार्थान्वयदर्शनाद् वेदेऽपि तथा स्यात्। किन्तु नियोगे प्रमाणान्तराभावाद् वेदार्थो निष्प्रमाणक एव प्रसज्येतेति पूर्वमप्युक्तमिति भावः।

अयमत्र कारिकार्थः – वाक्यात् कर्त्तव्यताज्ञानं कृत्वा जनस्य प्रवृत्तिर्वा भवति निवृत्तिर्वा भवति। यतो हि प्रवृत्तिनिवृत्तिभ्याम् अन्यत् किमपि वाक्य-प्रयोजनं नास्ति। अतः प्रवृत्तिनिवृत्तिहेतुकर्तव्यताज्ञानं विना वाक्यस्यानर्थक्यमेव भवति। तथा च जैमिनीयं सूत्रम् – "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानाम्" इति। अतो वेदान्तेषु कर्त्तव्यता(नियोग)रूपो विध्यर्थ उपासनीय इति पूर्वपक्षे दूषणमाह – **"प्रतिपत्तिविधौ तुल्यं यदि सैव प्रयोजनम्"** इति। अर्थात् "आत्मा प्रतिपत्तव्यः" इति प्रतिपत्तिविधौ सत्यपि कर्त्तव्यताज्ञाने आत्मप्रतिपत्त्यनन्तरं प्रवृत्तिनिवृत्त्योरभावात् तुल्यमेव वाक्यानर्थक्यम् इति।

**समानमेतदर्थं च समर्पयति चेदयम्।**
**प्रज्ञाक्रियोपासनाधिकारसिद्धिव्यपेक्षितम् ॥ ९३ ॥**
**हन्त! तर्हि स्वरूपे तन्न वचः पर्यवस्यति।**
**तुल्यमेतत्, समाप्तं च वाक्यं वाक्यान्तरानुगम्॥ ९४ ॥**

---

यद्युच्यते– "आत्मा प्रतिपत्तव्यः" इत्ययं विधिः प्रवृत्तिनिवृत्तिरूपप्रयोजनाभावेऽपि आत्मप्रतिपत्तिमेव प्रयोजनं समर्पयतीति नानर्थक्यम्। यतो हि एष आत्मप्रतिपत्तिरूपोऽर्थः "प्रज्ञां कुर्वीति" इति प्रज्ञाक्रियायाः "उपासीत" इत्युपासनाया अधिकारविधिसिद्ध्यर्थमपेक्षितः। न ह्यात्मप्रतिपत्तिमन्तरा आत्मनः प्रज्ञा उपासना वा सम्पादयितुं शक्यते। अतः प्रतिपत्तिविधेर्नानर्थक्यमिति। अत्राह सिद्धान्ती– **हन्त! तर्हि स्वरूप इति**। अर्थात् स्वरूपनिष्ठत्वेऽपि वेदान्तवाक्यस्य नास्त्यानर्थक्यम्, यतोऽस्यापि वाक्यस्य प्रज्ञोपासनाद्यधिकारविधिसिद्ध्यर्थत्वेन उपासनादिविषयभूतात्मस्वरूपसमर्पकत्वम् आत्मप्रतिपत्तिविधिना समानमेवास्ति। अतश्चैवमपि प्रतिपत्तिविधिर्व्यर्थ एव, विनापि विधिं स्वरूपनिष्ठवाक्याद् उपासनादिविषयभूतात्मस्वरूपसमर्पकत्वोपपत्तेः।

"हन्त! स्वरूपे" इति पदं पूर्वपक्षगतत्वेन पुनरावर्त्य शङ्कते– **हन्तेति**। स्वरूपे = स्वरूपनिष्ठत्वे तद् वेदान्तवाक्यं न पर्यवस्यति = न स्वस्मिन् परिसमाप्तं भवति प्रज्ञोपासनादिनियोगानुप्रवेशित्वात्। एवं हि स्वरूपनिष्ठता तस्य हीयेतेति शङ्कितुराशयः। उत्तरयति– **तुल्यमेतदिति**। यदि प्रज्ञोपासनादि विध्यनुप्रवेशित्वाद् मत्पक्षे वेदान्तवाक्यस्य स्वरूपनिष्ठता हीयते, तर्हि तवापि आत्मप्रतिपत्तिवचः प्रज्ञादिनियोगानुप्रवेशान्न स्वगतप्रतिपत्तिनियोगनिष्ठं स्यादित्यर्थः।

यद्युच्यते – आत्मप्रतिपत्तिविधिवाक्यं स्वगतनियोगे समाप्तं = पर्यवसितं सदेव वाक्यान्तरे = प्रज्ञोपासनादिविधिवाक्येऽनुगतं भवति। तेन प्रतिपत्तिविधिवाक्यस्य न स्वगतनियोगनिष्ठता (परत्वं) हीयते– तदा स्वरूपनिष्ठत्वेऽपि=

**नियोगानुप्रवेशोऽस्ति तावद् यदि वृथाऽन्यथा।**
**तत्त्वावबोधविध्वंशस्तावदेवं समुद्धृतः॥ ९५॥**

**अथ मन्यते— वस्तुस्वरूपमात्रज्ञानं कर्त्तव्यताज्ञानरहितं प्रवृत्तिनिवृत्तिशून्यमनर्थकम्। प्रवृत्तिनिवृत्तिप्रयुक्ता हि वाक्यप्रवृत्तिः। अतोऽर्थवत्त्वाय विधिः, अन्यथाऽऽनर्थक्यम्।**

**तत्रोच्यते— प्रतिपत्तिविधावपि तुल्यमानर्थक्यम्। तथा हि—'एवंविधः प्रतिपत्तव्यः' इत्यपि न तत्त्वस्वरूपज्ञानातिरिक्ता काचन**

---

वेदान्तवाक्यस्य प्रज्ञोपासनादिनियोगानुप्रवेशेऽपि त्वदीयप्रतिपत्तिविधिवाक्यवदेव स्वरूपनिष्ठता न हास्यत इत्यर्थः।

पुनः शङ्कते— **नियोगानुप्रवेशोऽस्ति तावदिति**। अयं शङ्काशयः -- स्वरूपनिष्ठं वेदान्तवाक्यं न स्वस्मिन् परिसमाप्तं पर्यवसितं सद् वाक्यान्तरानुगं भवति, अर्थाद् उपासनादिनियोगानुप्रविष्टं भवति, किन्तु नियोगानुवेशे सत्येव तत् पर्यवसितं भवति। अन्यथा = नियोगानुप्रवेशाभावे वैयर्थ्यमेव स्वरूपनिष्ठस्य वेदान्तवाक्यस्य स्यात्। अतः स्वतो वैयर्थ्यनिवारणाय स्वरूपबोधकस्यापि वेदान्तवाक्यस्य नियोगपरत्वं स्वीकरणीयम्।

उत्तरयति— **तत्त्वावबोधेति**। स्वरूपनिष्ठवेदान्तवाक्यस्य वैयर्थ्यवारणाय कामं प्रज्ञोपासनादिविधिशेषत्वं भवतु, तथापि उपासनादिविषयसमर्पणं तु तस्याव्याहतमेव, अन्यथा किमुपास्येत। एवं सति उपासनाविषयसमर्पकस्य आत्मप्रतिपत्तिविधिवाक्यस्यापि आत्मतत्त्वावबोधस्य विध्यंशो निराकृत एव जायते। यतो हि विषयसमर्पणार्थश्चेद् आत्मतत्त्वप्रतिपत्तिविधिः, तदा स्वरूपनिष्ठा वेदान्ता एव उपास्यविषयं समर्पयिष्यन्ति, किं तत्त्वावबोधविधिना? एवञ्च तत्त्वावबोधे विध्यंशः समुद्धृतः = निराकृत एव सम्पद्यत इत्यभिप्रायाः "अथ कर्त्तव्यताज्ञानादि त्यारभ्य समुद्धृतः" इत्यन्तकारिकाणां बोध्याः।

"अथ कर्तव्यताज्ञानात्" इति पूर्वपक्षकारिकार्थं ग्रन्थकृत् स्पष्टयति— **अथ मन्यते** इत्यादिना। स्फुटोऽर्थः। "प्रतिपत्तिविधौ तुल्यम्" इत्युत्तरपक्ष-

**प्रवृत्तिर्वा निवृत्तिर्वा। अथ स्वरूपज्ञानमेव प्रयोजनम्, तत् स्वरूपमात्रनिष्ठेऽपि तुल्यम्।**

**अथ प्रतिपत्तिविधिः "प्रज्ञां कुर्वीत" (बृ० ४।४।२१), "स क्रतुं कुर्वीत" (छा० ३।१४।१), "आत्मेत्येवोपासीत" (बृ० १।४।७) इत्यधिकारविधिव्यपेक्षितप्रज्ञोपासनाविषयसमर्पणेनार्थवान, नानवगतविषयस्वरूपा प्रज्ञा शक्येति, स्वरूपनिष्ठमपि वचस्तथार्थवत्, तस्य समर्पणे सुतरां सामर्थ्यम्। नन्वेवमस्य स्वरूपनिष्ठता हीयते नियोगानुप्रवेशिनः। स्वगतनियोगनिष्ठमपि तर्हि तन्न, नियोगान्तरानुप्रवेशात्।**

**अथ मतम् — स्वार्थपर्यवसितमेव वाक्यं वाक्यान्तरेणैकवाक्यतामुपैति,**

---

कारिकांशस्यार्थं व्याकरोति **"तत्रोच्यते"** इत्यारभ्य तथा हीत्यादि वाक्येन। शङ्कते- **अथेति**। उत्तरयति – तत्स्वरूपमात्रनिष्ठेऽपि तुल्यमिति। एतावता भागेन "यदि सैव प्रयोजनम्, समानमेतत्" इति शङ्कासमाधाने उभे व्याख्याते।

इह **अथ प्रतिपत्तिविधिः** इत्यारभ्य **सुतरां सामर्थ्यम्** इति पर्यन्तवाक्यभागेन "अर्थं च"इत्यादिः "व्यपेक्षित"मित्यन्तः पूर्वपक्षकारिकांशः, "हन्त! तर्हि स्वरूपे"इत्युत्तरपक्षकारिकांशश्च व्याख्यातौ वेदितव्यौ ।विधिनिष्ठ-त्वेऽन्यपरत्वेन न तथा आत्मस्वरूपं वेदान्ताः समर्पयन्ति, यथा स्वरूपनिष्ठत्वे इत्यभिप्रायेण ग्रन्थकारो व्याख्यायां 'सुतराम्' इत्युक्तवान् इति बोध्यम् ।अत्रत्यापि ग्रन्थकृद्व्याख्या कारिकार्थव्याख्ययैव गतार्था ज्ञेया।

"स्वरूपे" इति पदमग्रेऽप्यनुवर्त्य "स्वरूपे तन्न वचः पर्यवस्यति" इति पूर्वपक्षकारिकांशः, "तुल्यम् एतत्" इत्युत्तरपक्षकारिकांशश्च "नन्वेवमि"त्यारभ्य "नियोगान्तरानुप्रवेशात्" इत्यन्तभागेन व्याख्यातौ वेदितव्यौ।

**"अथ मतम्"** इत्यारभ्य **"अन्यथा वाक्यलक्षण एव स्यात्"** इत्यन्तो भागः " समाप्तं च वाक्यं वाक्यान्तरानुगम्" इति पूर्वपक्षकारिकांशस्य

**सोऽयं प्राकरणिकः सम्बन्ध उच्यते, अन्यथा वाक्यलक्षण एव स्यात्। एतदपि समानम्, नियोगानुप्रवेशेऽपि न स्वरूपनिष्ठता हीयते। नन्वस्ति नियोगानुप्रवेशः, अन्यथा आनर्थक्यात्। कामम्, तत्त्वप्रतिपत्तिविधिस्तु तावदानर्थक्यान्निराकृतः, विधेर्विनापि तस्माच्छब्दात् तत्त्वावबोधसिद्धेः।**

---

व्याख्या। अत्रोत्तरपक्षेऽपि तुल्यमिति पुनरावर्तनीयम्। इत्थं चात्र– "चेत्" इति "तुल्यम्" इति चावर्त्य पूर्वपक्षोत्तरपक्षयोरयमर्थः – प्रतिपत्तिविधिवाक्यं स्वगतनियोगे समाप्तं (पर्यवसितम्) सत् प्रज्ञोपासनादिवाक्यानुगं भवति, अर्थात् प्रज्ञादिवाक्येनान्वितं भवति। तेन प्रतिपत्तिविधिवाक्यस्य स्वगतनियोगनिष्ठता न हीयत इति चेत्, उच्यते– वेदान्तवाक्यस्य स्वरूपनिष्ठत्वेऽपि तुल्यमेवैतत्। यतो हि प्रतिपत्तिविधिवाक्यवत् प्रज्ञादिनियोगानुप्रवेशिनोऽपि वेदान्तवाक्यस्य स्वरूपनिष्ठता न हास्यत, इत्यर्थः।

अत्रत्यपूर्वपक्षे – "सोऽयं प्राकरणिकः सम्बन्ध उच्यते" इत्यस्यायमभिप्रायः–प्राकरणिको हि सम्बन्धः स्वनियोगपर्यवसितस्यैव भवति, नापर्यवसितस्य। यथा – प्रयाजादिवाक्यस्य दर्शादिवाक्यैः। अपर्यवसितस्य तु वाक्यलक्षणः = वाक्यप्रमाणक एव सम्बन्धो भवति, यथा – अर्थवादानां विधिवाक्यैः। प्राकरणिकश्चायं प्रतिपत्तिविधेः प्रज्ञादिविधिवाक्यैः सम्बन्ध इति विशेषः। तस्मात् स्वार्थपर्यवसितं प्रतिपत्तिविधिवाक्यं भवति।

अत्रायमुत्तरपक्षाशयः – वाक्ययोः परस्परसम्बन्धः प्राकरणिको वा भवतु, वाक्यप्रमाणको वा भवतु, सर्वथैव स्वार्थपर्यवसितत्वं न हास्यत इति।

"नियोगानुप्रवेशोऽस्ति तावद् यदि वृथाऽन्यथा" इति पूर्वपक्षीयकारिकांशः– "नन्वस्ति नियोगानुप्रवेशः, अन्यथाऽऽनर्थक्यात्" इति वृत्तिग्रन्थेन व्याख्यातः। "तत्त्वावबोधविध्यंशस्तावदेवं समुद्धृतः" इत्युत्तरपक्षकारिकांशश्च "कामम्" इत्यादिना "तत्त्वावबोधसिद्धेः" इत्यन्तेन वृत्तिग्रन्थेन व्याख्यातो बोध्यः। समुद्धृतः = निराकृत इत्यर्थः। अयमत्रोत्तरपक्षार्थः – विषयसमर्पणार्थश्चेत् आत्मतत्त्वाव-

ननूत्पत्तिविधिः कर्मरूपबोधे व्यवस्थितः।
यथा तत्त्वज्ञानविधिस्तथा बोधेऽवतिष्ठताम् ॥ ९६ ॥
अधिकारात् प्रवृत्तिश्च मता कर्माधिकारवत्।
अज्ञातज्ञापनमतोऽथाप्रवृत्तप्रवर्तनम् ॥ ९७ ॥
विधिमाचक्षते धीरा इत्येतदपि तादृशम्।
कर्मस्वरूपावगमस्तत्र नेष्टं विधेः फलम् ॥ ९८ ॥

---

बोधविधिः, तदा तु वेदान्ता एव आत्मतत्त्वावबोधं समर्पयिष्यन्ति किं तत्त्वावबोधविधिना? एवं हि तत्त्वावबोधविध्यंशस्तावद् निराकृत इत्यर्थः।

परमार्थतस्तु वेदान्तानां न नियोगान्तरानुप्रवेशः, स्वरूपनिष्ठत्वेऽपि प्रतिपत्त्युपपत्तेरिति सारः।

वेदान्ता एव प्रज्ञोपासनादिविध्यपेक्षितम् आत्मस्वरूपावबोधं समर्पयिष्यन्ति, किम् आत्मतत्त्वावबोधविधिना ? इति रीत्या आत्मतत्त्वावबोधविध्यंशो निराकृतः पूर्वम्। इदानीं पूर्वपक्षी तत्त्वावबोधविधिं समर्थयन् पुनः प्रत्यवतिष्ठते– **ननूत्पत्तिविधिः** इत्यादिकारिकाभिः। अयमर्थः, यथा–"आग्नेयोऽष्टाकपालो-भवति" इत्यादिरुत्पत्तिविधिः आग्नेयादिकर्मस्वरूपबोधे व्यवस्थितस्तत्त्वावबोधार्थ एव भवति, न प्रवृत्त्यर्थः, तथैवात्मतत्त्वावबोधविधिरपि तत्त्वावबोधे व्यवस्थितः सन् तत्त्वावबोधमात्रार्थ एवास्तु, न प्रवृत्त्यर्थः। प्रवृत्तिस्तु "प्रज्ञां कुर्वीत, आत्मेत्येवोपासीत" इत्यधिकारविधेरेव भविष्यति। यथा च आग्नेयादौ "दशपूर्णमासाभ्यां यजेत" इत्यधिकारविधेरेव प्रवृत्तिर्भवति, तद्वत्। इदमत्र तात्पर्यम्– यथोत्पत्तिविधिः कर्मस्वरूपं बोधयन् नानर्थकः, एवमात्मतत्त्वावबोधविधिरपि आत्मस्वरूपं बोधयन् नानर्थक इति न वैयर्थ्यान्निराकर्तव्य इति। अत एव धीरा अज्ञातज्ञापनरूपम् अप्रवृत्तप्रवर्तनरूपं द्विविधं विधिमाचक्षते उत्पत्तिविधिमधिकारविधिं चेति। अतोऽयमात्मावबोधविधिरज्ञातं ज्ञापयिष्यति "प्रज्ञामिति" अधिकारविधिस्तु प्रवर्तयिष्यतीति नानर्थक्यं तत्त्वज्ञानविधेरिति पूर्वपक्षः।

किन्तु कार्यव्यपेक्षस्य फलवाक्येन सङ्गतिः।
इहाधिकारसम्बन्धो यस्य तन्न विधीयते॥ ९९॥
तत्त्वं तत्त्वावबोधस्य नाधिकारप्रवेशिता।
न हि व्रीह्यादिविषयं प्रत्यक्षमधिकारभाक्॥ १००॥

---

तदेतत् पूर्वपक्षिप्रत्यवस्थानं दूषयति सिद्धान्ती – एतदपि तादृशमित्यादि-कारिकांशैः। तादृशम् = पूर्वोक्तिवदसारमेवेत्यर्थः।

असारत्वमेवोपपादयति– **कर्मेति**। विधेः = "आग्नेयोऽष्टाकपालः" इति उत्पत्तिविधेः आग्नेयादिकर्मस्वरूपज्ञानमात्रं फलं नेष्टम्, किन्तु कार्यव्य-पेक्षस्य= कार्यफलं विना निष्फलस्योत्पत्तिविधेः फलवाक्येन= "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यनेन फलवता वाक्येन सङ्गतिः सम्बन्धः फलमित्यर्थः। अत्र फलवाक्येन सह सङ्गत्या फलवाक्यगतमेव स्वर्गादिकं फलमुत्पत्तिवाक्यस्यापीति यावत्।

इहात्मतत्त्वावबोधे विधौ यस्यात्मतत्त्वस्य "प्रज्ञां कुर्वीत, आत्मेत्येवोपासीत" इत्यधिकारविधिना सम्बन्धस्तत्तत्त्वं न विधीयते, भावभिन्नत्वात्, भावो हि विधीयते न वस्तु। यस्तु तत्त्वावबोधो विधीयते, तस्य "प्रज्ञां कुर्वीत" इत्यधिकारानुप्रवेशो नास्ति।

ननु अनवबुद्धस्य तत्त्वस्योपासितुमशक्यत्वात् तत्त्वमिव तत्त्वाव-बोधोऽपि अधिकारविधावनुप्रविशतीति चेदाह – **न हीति**। अयमभिप्रायः – अप्रत्यक्षो व्रीह्यादिः अधिकारविध्यङ्गं न भवति इत्यतो व्रीह्यादिविषयकं प्रत्यक्षमपि अधिकारभाक् = अधिकारविधिमनुप्रविशतीति नास्ति, अर्थाद् अधिकारविधिना क्रियमाणस्य अनुष्ठानस्यैकदेशतां न यातीति। व्रीहिदध्यादिविषयकं प्रत्यक्षं नानुष्ठेयं भवतीति यावत्। एवं तत्त्वावबोधोऽपि विधेयो न भवतीति विध्यानर्थक्यं दृढमेवेति भावः।

ननूत्पत्तिविधिः कर्मरूपबोधे व्यवस्थितः।
यथा तत्त्वज्ञानविधिस्तथा बोधेऽवतिष्ठताम् ॥ ९६ ॥
अधिकारात् प्रवृत्तिश्च मता कर्माधिकारवत्।
अज्ञातज्ञापनमतोऽथाप्रवृत्तप्रवर्तनम् ॥ ९७ ॥
विधिमाचक्षते धीरा इत्येतदपि तादृशम्।
कर्मस्वरूपावगमस्तत्र नेष्टं विधेः फलम् ॥ ९८ ॥

---

बोधविधिः, तदा तु वेदान्ता एव आत्मतत्त्वावबोधं समर्पयिष्यन्ति किं तत्त्वावबोधविधिना? एवं हि तत्त्वावबोधविध्यंशस्तावद् निराकृत इत्यर्थः।

परमार्थतस्तु वेदान्तानां न नियोगान्तरानुप्रवेशः, स्वरूपनिष्ठत्वेऽपि प्रतिपत्त्युपपत्तेरिति सारः।

वेदान्ता एव प्रज्ञोपासनादिविध्यपेक्षितम् आत्मस्वरूपावबोधं समर्पयिष्यन्ति, किम् आत्मतत्त्वावबोधविधिना ? इति रीत्या आत्मतत्त्वावबोधविध्यंशो निराकृतः पूर्वम्। इदानीं पूर्वपक्षी तत्त्वावबोधविधिं समर्थयन् पुनः प्रत्यवतिष्ठते– **ननूत्पत्तिविधिः** इत्यादिकारिकाभिः। अयमर्थः, यथा–"आग्नेयोऽष्टाकपालो- भवति" इत्यादिरुत्पत्तिविधिः आग्नेयादिकर्मस्वरूपबोधे व्यवस्थितस्तत्त्वावबोधार्थ एव भवति, न प्रवृत्त्यर्थः, तथैवात्मतत्त्वावबोधविधिरपि तत्त्वावबोधे व्यवस्थितः सन् तत्त्वावबोधमात्रार्थ एवास्तु, न प्रवृत्त्यर्थः। प्रवृत्तिस्तु "प्रज्ञां कुर्वीत, आत्मेत्येवोपासीत" इत्यधिकारविधेरेव भविष्यति। यथा च आग्नेयादौ "दशपूर्णमासाभ्यां यजेत" इत्यधिकारविधेरेव प्रवृत्तिर्भवति, तद्वत्। इदमत्र तात्पर्यम्– यथोत्पत्तिविधिः कर्मस्वरूपं बोधयन् नानर्थकः, एवमात्मतत्त्वावबोधविधिरपि आत्मस्वरूपं बोधयन् नानर्थक इति न वैयर्थ्यान्निराकर्तव्य इति। अत एव धीरा अज्ञातज्ञापनरूपम् अप्रवृत्तप्रवर्तनरूपं द्विविधं विधिमाचक्षते उत्पत्तिविधिमधिकारविधिं चेति। अतोऽयमात्मावबोधविधिरज्ञातं ज्ञापयिष्यति "प्रज्ञामिति" अधिकारविधिस्तु प्रवर्तयिष्यतीति नानर्थक्यं तत्त्वज्ञानविधेरिति पूर्वपक्षः।

किन्तु कार्यव्यपेक्षस्य फलवाक्येन सङ्गतिः।
इहाधिकारसम्बन्धो यस्य तन्न विधीयते॥ ९९॥
तत्त्वं तत्त्वावबोधस्य नाधिकारप्रवेशिता।
न हि व्रीह्यादिविषयं प्रत्यक्षमधिकारभाक्॥ १००॥

---

तदेतत् पूर्वपक्षिप्रत्यवस्थानं दूषयति सिद्धान्ती – एतदपि तादृशमित्यादि-कारिकांशैः। तादृशम् = पूर्वोक्तिवदसारमेवेत्यर्थः।

असारत्वमेवोपपादयति– **कर्मेति**। विधेः = "आग्नेयोऽष्टाकपालः" इति उत्पत्तिविधेः आग्नेयादिकर्मस्वरूपज्ञानमात्रं फलं नेष्टम्, किन्तु कार्यव्य-पेक्षस्य= कार्यफलं विना निष्फलस्योत्पत्तिविधेः फलवाक्येन= "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यनेन फलवता वाक्येन सङ्गतिः सम्बन्धः फलमित्यर्थः। अत्र फलवाक्येन सह सङ्गत्या फलवाक्यगतमेव स्वर्गादिकं फलमुत्पत्तिवाक्यस्यापीति यावत्।

इहात्मतत्त्वावबोधे विधौ यस्यात्मतत्त्वस्य "प्रज्ञां कुर्वीत, आत्मेत्येवोपासीत" इत्यधिकारविधिना सम्बन्धस्तत्तत्त्वं न विधीयते, भावभिन्नत्वात्, भावो हि विधीयते न वस्तु। यस्तु तत्त्वावबोधो विधीयते, तस्य "प्रज्ञां कुर्वीत" इत्यधिकारानुप्रवेशो नास्ति।

ननु अनवबुद्धस्य तत्त्वस्योपासितुमशक्यत्वात् तत्त्वमिव तत्त्वाव-बोधोऽपि अधिकारविधावनुप्रविशतीति चेदाह – **न हीति**। अयमभिप्रायः – अप्रत्यक्षो व्रीह्यादिः अधिकारविध्यङ्गं न भवति इत्यतो व्रीह्यादिविषयकं प्रत्यक्षमपि अधिकारभाक् = अधिकारविधिमनुप्रविशतीति नास्ति, अर्थाद् अधिकारविधिना क्रियमाणस्य अनुष्ठानस्यैकदेशतां न यातीति। व्रीहिदध्यादिविषयकं प्रत्यक्षं नानुष्ठेयं भवतीति यावत्। एवं तत्त्वावबोधोऽपि विधेयो न भवतीति विध्यानर्थक्यं दृढमेवेति भावः।

**यदपि चोद्यते— यथोत्पत्तिविधेः कर्मरूपप्रतिपत्तिमात्रमर्थः "आग्नेयोऽष्टाकपालः" इति (तैत्ति० सं० ७।५।२१।१), न ततः प्रवृत्तिः, अधिकारविधिनिबन्धनत्वात् तस्याः। तथा तत्त्वावबोधविधेस्तत्त्वावबोधमात्रमर्थः। प्रवृत्तिरधिकारविधेः "प्रज्ञां कुर्वीत" (बृ०४।४।२१) इत्यादेः। यतश्च प्रवृत्तिप्रतिपत्तिप्रयोजनभेदो विधेः, अतोऽस्य लक्षणद्वयमाहुः— अज्ञातज्ञापनमप्रवृत्तप्रवर्तनमिति।**

**एतदप्यसारम्, यतो नोत्पत्तिगतस्य विधायकस्य स्वरूपावगममात्रमिष्यते फलम्, अपि त्वधिकारवाक्यसम्बन्धः। तथा हि — विधेः पुरुषार्थमात्रसाधनत्वेऽवबुद्धे तद्विशेषाकाङ्क्षायामधिकारसम्बन्धो लभ्यते। न च तत्त्वप्रतिपत्तिविधेरपि तदेव फलम्, यतो यस्याधिकारसम्बन्ध उपासनादिविषयस्यात्मतत्त्वस्य, तदक्रियात्मत्वान्न विधिविषयः। यत्तु तद्विषयस्तत्त्वज्ञानम्, तस्य नाधिकारसम्बन्धः, व्रीह्यादिप्रत्यक्षवत्। न हि व्रीह्यादिस्वरूपावगाहिप्रमाणं प्रयोगैकदेशतां भजते। प्रमितानामधिकारसम्बन्धान्निष्पन्नानामिवानोवासःप्रभृतीनाम्। वानतक्षणादिर्हि तत्क्रिया नाधिकारमनुप्रविशतीति।**

---

"नूनत्पत्तिविधिः" इत्यादिकारिकाणामभिप्रायं स्वयं ग्रन्थकार उद्घाटयति— **"यदपि चोद्यते"** इत्यादिना। एतद् व्याख्यानं कारिकाणामुक्तव्याख्यानेनैव गतार्थमिति न पुनरावर्तते।

अत्र सिद्धान्ते "किन्तु कार्यव्यपेक्षस्य" इत्यादिकारिकाद्वयस्य व्याख्यानं "तथा हि" इत्यारभ्य "नाधिकारमनुप्रविशतीति" पर्यन्तमिति बोध्यम्। व्रीह्यादिस्वरूपावगाहिप्रमाणम् = प्रत्यक्षज्ञानमित्यर्थः। प्रयोगैकदेशताम् = अनुष्ठानविषयतामित्यर्थः। अत्र दृष्टान्तमाह — **प्रमितानामिति**। अनः = शकटम्, वासः = वस्त्रम्। वानम् = वयनमित्यर्थः। शेषं स्पष्टम्।

**इदानीं तृतीयप्रतिपत्तिगोचरो विधिः परास्यते, तत्त्वावबोधविषयत्वेन सम्बन्धात्। द्वितीयप्रतिपत्तिविषयो हि न तत्त्वावबोधविषयः, किन्तु तदभ्यासविषयः।**

**सोपायमन्यत् तर्हीदं शाब्दाज्ज्ञानं विधीयते ।**
**प्रलीनग्रहणग्राह्यविभागोद्ग्राहमद्वयम् ॥१०१॥**
**न हि भिन्नार्थसंसर्गरूपवाक्यार्थधीपदम्।**
**आत्मतत्त्वं निष्प्रपञ्चमित्येतदपि पेलवम् ॥१०२॥**

---

"आत्मा प्रतिपत्तव्यः" इति विधिः आत्मतत्त्वावबोधरूपां प्रथमां प्रतिपत्तिं विषयीकरोतीति पक्षं निरस्य अधुना स विधिः आत्मसाक्षात्काररूपां तृतीयां प्रतिपत्तिं विषयीकरोतीति पक्षं निरसितुमुपक्रमते – **इदानीमिति**। ननु ततः परम् उपासनाख्यद्वितीयप्रतिपत्तिगोचरो विधिरेव निरसनीयः, कथं तमुल्लङ्घ्य आत्मसाक्षात्काररूपतृतीयप्रतिपत्तिविषयकविधिं निराकरोतीत्याशङ्क्योक्तम्– "तत्त्वावबोधविषयत्वेन सम्बन्धात्" इति। अयमत्राशयः– साक्षात्काराख्यतृतीयप्रतिपत्तिगोचरविधिःप्रमात्मकतत्त्वावबोधविषयकत्वेन प्रथमप्रतिपत्तिगोचरविधिना सम्बद्ध इति तदनन्तरं तृतीय एव विधिर्बुद्धिस्थो भवति, न उपासनाख्यद्वितीयप्रतिपत्तिगोचरो विधिः। उपासनाख्या प्रतिपत्तिस्तु स्मृतिरूपतत्त्वाभ्यासरूपतया न प्रमात्मिका, स्मृतेः प्रमानन्तर्गतत्वाद् इति। तदुक्तम्– द्वितीयप्रतिपत्तिविषयको विधिर्न तत्त्वावबोधविषयकः किन्तु स्मृत्यात्मकतदभ्यासविषयक इति। अतोऽधुना साक्षात्काराख्यतृतीयप्रतिपत्तिविषयकविधिपक्षं तन्निरसनायोपन्यस्यति– **सोपायमन्यत्तर्हीदमिति**।

अयमर्थः –यदि प्रथमाऽऽत्मतत्त्वावबोधरूपा प्रतिपत्तिर्न विधिविषयस्तर्हि शाब्दात्तज्ज्ञानादन्यद् इदं साक्षात्काराख्यं ज्ञानं सोपायं शमदमाद्युपायजन्यम् "आत्मा प्रतिपत्तव्यः" इति विधिविषयोऽङ्गीक्रियताम्। इदं हि ज्ञानं

**अद्वयात्मप्रकाशोऽसावनवच्छेदविभ्रमः।**
**स्वात्मस्थितिः सुप्रशान्ता फलं तन्न विधेः पदम्॥ १०३॥**
**तत्साधनावबोधे हि विधातृव्यापृतिर्मता।**
**अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः॥ १०४॥**
**ततो ह्यध्यवसायादिर्नाकस्मान्नाभिधानतः॥ १०४—१/२॥**

---

प्रलीनग्रहणग्राह्यविभागोद्ग्राहम् अद्वयं चास्ति।प्रलीनः प्रत्यस्तमितः "इदं ग्रहणम्, इदं ग्राह्यम्" इति विभागोद्ग्राहः = भेदावभासो यत्र, तादृशम्, अत एव अद्वयम्, तथाविधद्वितीयज्ञानाभावाद् इति भावः। शाब्दज्ञानाद् अन्यत् तज्ज्ञानमित्यत्र हेतुमाह— **न हीति**। भिन्नानामर्थानां परस्परसंसर्गरूपो हि वाक्यार्थः, तद्धीपदं = तज्ज्ञानविषयो निष्प्रपञ्चमात्मतत्त्वं न भवति। अतः शाब्दज्ञानादन्यदिदं साक्षात्कारात्मकमात्मतत्त्वज्ञानम् (तृतीया प्रतिपत्तिः) एवात्र विधिविषयो भवेदिति पूर्वपक्षः।

तदपि दूषयति— **एतदपीति**।न हि पेलवम्= असारम्।असारत्वमेवोपपादयति— **"अद्वयात्मप्रकाशः"** इति कारिकया।अद्वयश्चासौ आत्मप्रकाश इत्यद्वयात्मप्रकाशः, अत एवानवच्छेदविभ्रमः = देहेन्द्रियविषयकृतावच्छेदभ्रमरहितः अपरिच्छिन्नः अनन्तः सोऽद्वयात्मप्रकाशो देहेन्द्रियविषयैर्न परिच्छिन्नः क्रियत इति यावत्। अत एव स्वात्मसंस्थितिः = स्वमहिमप्रतिष्ठपरमानन्दरूपा सा स्थितिः सुप्रशान्ता = निरस्तसमस्ताशिवा। अत एव दुःखनिवृत्त्यानन्दावाप्तिरूपपरमपुरुषार्थतया सा स्थितिः फलम्, तच्च न विधेः पदं= विषय इत्यर्थः।

अयमभिप्रायः— तृतीयप्रतिपत्तिरूपो य आत्मतत्त्वसाक्षात्कारो विधिविषयतया प्रतिपाद्यते, सोऽद्वयात्मप्रकाशस्वरूपादन्यो नास्ति।स चाद्वयात्मप्रकाशः सच्चिदानन्दात्मकत्वात् फलमतो न विधिविषयः, फलस्य विध्यविषयत्वात्।तदुपादानभूतः शमादिः कामं भवतु विषयो विधेरिति। तदुक्तम्— **"तत्साधनावबोधे हि विधातृव्यापृतिर्मता"** इति। विधातृव्यापृतिः = विधिव्यापारः अज्ञातस्य

**न ब्रूमः – शब्दोत्थस्तत्त्वबोधो विधीयत इति, किन्तु प्रत्यस्तमित-बुद्धिबोध्यभेदावग्रहः। अतश्चाद्वयो द्वितीयतद्विधबोधाभावाद् वा प्रमातृप्रमेयद्वयविरहाद् वा ततोऽन्यः। तस्य चालौकिकस्य प्रमाणान्तरादुत्पत्त्युपायस्यानवगमात् सहोपायैः शमदममननध्यानब्रह्म –**

---

साधनस्य ज्ञापनरूप इत्यर्थः। अत्र वृद्धसंवादमाह– **"अपेक्षितोपायतैव विधिरिष्टो मनीषिभिः"** इति। अपेक्षितोपायता = इष्टसाधनतेत्यर्थः।

ननु अध्यवसाय एव विध्यर्थोऽस्तु, का क्षतिः? तत्राह – **"ततो ह्यध्यव-सायादिर्नाकस्मान्नाभिधानतः"** इति। अपेक्षितोपायत्वादेव तस्मिन्नुपायेऽध्यवसायो भवति। अतोऽपेक्षितोपायत्वमेव विध्यर्थो नाध्यवसायादिः। स चाध्यवसायादिः नाकस्मात् = नाकस्मिकोऽकारण इति यावत्। किन्तु लिङादिविधायकपद-जन्याद् इष्टसाधनताबोधादेव भवति। न च लिङादिशब्द एवाध्यवसायादेः कारणं स्यादित्याह – नाभिधानत इति। अभिधानतः = शब्दाद् इत्यर्थः। शब्दो हि ज्ञापको नोत्पादकः। अतः स नाध्यवसायादिकं जनयिष्यतीति सक्षिप्तः कारिकार्थः।

प्रकारान्तरेण तत्त्वावबोधस्य विधिविषयत्वमुपपादयति – **न ब्रूम इत्यादिना**। लिङादिविधिशब्दजन्यस्तथोक्तस्तत्त्वावबोधोऽत्र विधेय इति वयमपि न ब्रूमः, किन्तु प्रत्यस्तमितो = नष्टो बुद्धिबोध्यस्य भेदस्य अवग्रहः = आकारो यस्मिन् सः, अर्थाद् ज्ञानज्ञेयभेदाकाररहितः साक्षात्कारात्मक एव आत्मतत्त्वावबोधो विधेय इत्येव ब्रूमः। अयं हि तत्त्वावबोधो द्वैतविरोधित्वाद् द्वैतभिन्नत्वाद् वा न अद्वयो विध्यर्थः; किन्तु द्वितीयस्य तथाविधस्य शब्दजनितबोधस्य अभावादद्वयः। यथाऽस्मिन् ग्रामेऽयमद्वय इति तत्सदृशस्यान्यस्याभावादुच्यते, तद्वदित्यर्थः। तत्राऽऽत्मतत्त्वसाक्षात्कारे प्रमातृ – प्रमेयद्वयविभागविरहाद्वा सोऽद्वय इत्युच्यते। अत एव हेतोस्ततः = शब्दात् तत्त्वावबोधादयमन्यः साक्षात्कारात्मकः "आत्मा प्रतिपत्तव्यः" इत्यत्र विधेयः।

**चर्यादिभिर्विधानम्, यतो न शाब्दज्ञानविषय आत्मतत्त्वम्। वाक्यलक्षणो हि शब्दः प्रमाणम्। तस्य च विषयो नानापदार्थसंसर्गात्मा, तदनुगमेन प्रतीतेः। तज्ज्ञानस्य च विविधार्थमात्रसम्भेदावभासस्यात्मतत्त्वं निष्प्रपञ्चं द्वैतलेशेनाप्यनवमृष्टं कथं गोचरं स्यादिति।**

**एतदप्यसारम् — यतो योऽसावद्वयो द्वैतलेशसंस्पर्शविकलः, आत्मतत्त्व-**

---

एवंविधोऽलौकिकस्तत्त्वावबोधो विहितोऽपि कुतो जायताम्, साधना-भावात्, अतो व्यर्थस्तद्विधिरित्याह — **तस्य चालौकिकस्येति**। तस्य चालौकिकस्य बोधस्य य उत्पत्त्युपायः, स प्रमाणान्तराद् नावगम्यतेऽतः शम-दम-मनन-ध्यान-ब्रह्मचर्याहिंसाऽस्तेयादिभिरुपायैः सहैव स बोधः "आत्मा प्रतिपत्तव्यः" इति वाक्येन विधीयते। ननु शब्दादेव सोऽलौकिकस्तत्त्वावबोधोऽद्वयो जायताम्, किं शमाद्युपायैरित्याशङ्क्याह — **यतो नेति**। यत आत्मतत्त्वं न शाब्दज्ञानविषयोऽतः शमाद्युपायोऽपेक्षणीयस्तदुत्पत्तये। तदेवोपपादयति — **वाक्यलक्षणो हीति**।

अयमाशयः — शब्दो द्विविधः — वाक्यलक्षणः पदलक्षणश्चेति। तत्र पदमात्रं न प्रमाणम्, तदुक्तम्— "पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते" इति। तस्माद् वाक्यलक्षण एव शब्दः प्रमाणम्, पदार्थसंसर्गबोधरूप-शाब्दज्ञानजनकत्वात्। नानार्थसंसर्गात्मा हि वक्यार्थः, नानापदार्थसंसर्गानुगमेन वाक्यार्थप्रतीतेः।तद्विरुद्धस्वरूपं चाद्वयमात्मतत्त्वम्।अतो न तत् शाब्दज्ञानविषयः, अद्वयत्वेन संसर्गानात्मकत्वात्।अतस्तत्साक्षात्कारार्थं शमादिरेवोपाय इति भावः। निष्कर्षमाह — **तज्ज्ञानस्य चेति**। विविधार्थानां सर्वेषां परस्परं संसर्गविभासात्मकस्य शाब्दज्ञानस्य द्वैतलेशेन = भेदलेशेनापि अस्पृष्टं निष्प्रपञ्चमात्मतत्त्वं कथं विषयो भवेदिति न शब्दजन्य आत्मतत्त्वबोधः। तस्मादुपायजन्य एव तद्बोधः, स एव च "आत्मा प्रतिपत्तव्यः" इति विधिविषय इति।

पूर्वपक्षमिमं दूषयति— **एतदप्यसारमिति**। असारत्वमेवोपपादयति— **यतो योऽसाविति**।योऽसौ साक्षात्कारात्मक आत्मतत्त्वबोधोऽद्वयः, अर्थाद् द्वैतलेशस्यापि संस्पर्शेन रहित उक्तः, स अवच्छेदभ्रान्तिविरहितो भवति। अत एव तस्य

**बोधः, सोऽवच्छेदविभ्रान्तिविरहात् तस्य स्वरूपावस्थानम्। अवच्छेद-कलुषतया हि तदनात्मकरूपेण प्रकाशते, न तु ततोऽन्यस्तत्त्वबोधः "सत्यं ज्ञानमनन्तम्" (तैत्ति० २।१।१) इति श्रुतेः। आत्मतत्त्वं च प्रशान्तशोकादि-विश्वाशिवम्, अपहतपाप्मादिश्रुतेः। प्रकाशमानानतिशयानन्दम् "विज्ञानमानन्दं ब्रह्म" (बृ० ३।९।२८), "एषोऽस्य परम आनन्दः, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृ०४।३।३२) इति श्रुतिभ्यः।**

**तथा च तत्स्वरूपस्थितिर्विश्वाशिवोपशमान्निरतिशयाह्लादा-वाप्तेश्च सुष्ठु प्रशान्तापरः पुरुषार्थः फलम्। उक्तं च – "आत्मलाभान्न परं विद्यते" इति। न च पुरुषार्थे फले विधायकस्य व्यापारः, स्वयं प्रवृत्तेः। न च पुरुषार्थेऽप्यज्ञातोपाये न प्रवर्तत इति**

---

बोधस्य आत्मस्वरूपेणावस्थानं भवति, स आत्मस्वरूपे पर्यवस्यतीति यावत्। अवच्छेदभ्रान्तिश्च अनन्तस्याप्यात्मनो देहेन्द्रियविषयैरन्तवत्त्वविभ्रमः। तेनावच्छेद–विभ्रमेण रहितत्वात् तस्य बोधस्य स्वात्मरूपेणावस्थितिः प्रकाशो भवति। यदा तु स देहेन्द्रियविषयैरवच्छेदविभ्रमेण कलुषितो जायते, तदा स एवावबोधोऽनात्मरूपेण प्रकाशते। वस्तुतस्तु स तत्त्वबोधस्ततः = आत्मस्वरूपाद् अन्यो नास्ति, "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतिप्रमाणात्। एवं स आत्मतत्त्वबोधः साक्षात्कारात्मको निरतिशयानन्दस्वरूपोऽप्यस्ति "विज्ञानमानन्दं ब्रह्म", "एषोऽस्य परमानन्दः, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इत्यादिश्रुतिप्रमाणेभ्यः। सा च तत्त्वबोधस्यात्मस्वरूपावस्थितिर्विश्वा-शिवोपशमात्–सकलाकल्याणापगमाद् निरतिशयाह्लादाधिगमाच्च सुष्ठु प्रशान्ता सती परमपुरुषार्थमोक्षाख्यफलमिति उच्यते। तदुक्तम्– **"आत्मलाभान्न परं विद्यते"** इति।

**युक्तम्, यतः प्रवृत्तेः पूर्वरूपमिच्छा। तथा च तद्द्वारेण प्रवृत्त्युपदेशः क्वचित् – "अथातो धर्मजिज्ञासा" (मी०सू०१।१।१)। तथा "यो हि यदिच्छति स तत् करोति" (विधिविवेकः, पृ० ४६०) इत्युक्तम्।**

**अपि च अज्ञातोपाये चेन्न प्रवर्तते, अवश्यमुपायज्ञापनया तत्र प्रवर्त्यः फलमुद्दिश्य। तावता च तत्रापि प्रवृत्तिसिद्धेर्न विधायकस्य तत्र व्यापार आश्रयितव्यः। तदुक्तम् – "तस्य लिप्सार्थलक्षणा" (मी०सू०४।१।२) इति। तस्मात् फलसाधन एव विधिव्यापारः।**

---

परमपुरुषार्थतया फलभूते आत्मतत्त्वबोधे लोकः स्वयमेव प्रवर्ततेऽतस्तत्र प्रवृत्तये नास्ति विधेः कोऽपि व्यापारः।

शङ्कते – **न चेति**। अयमर्थः – ननु अज्ञातोपाये पुरुषार्थे, अर्थाद् न ज्ञात उपायो यस्य एवंविधे फलेऽप्युपायज्ञानाभावान्न कश्चित् प्रवर्तते। अतः कथं तत्र लोकस्य स्वयं प्रवृत्तिः ? तस्माद् विधिरेव उपायज्ञापनद्वारा प्रवर्तयतीति स्वीकरणीयमिति चेत्, अत्रोत्तरमाह – **यतः प्रवृत्तेः पूर्वरूपमिच्छेति**। अयमर्थः – इच्छया हि कश्चित् प्रवर्तते। अस्ति च पुरुषार्थ(फल)विषयिणीच्छा स्वारसिकीति फलेच्छयैव प्रवृत्तिसिद्धेर्न तदर्थं विध्यपेक्षेति। अत एव यदि प्रवृत्त्युपदेशोऽपि क्वचिद् भवति तर्हि तत्रापीच्छाद्वारैव भवति। यथा "अथातो धर्मजिज्ञासा" इत्यादौ। अत एव चोक्तम् – "यो हि यदिच्छति स तत् करोति" इति। उपपत्त्यन्तरमाह – **अपि चेति**। अयमर्थः – कश्चिद् इच्छायां सत्यामपि उपायज्ञानाभावान्न प्रवर्तते चेत्, तत्र अवश्यं स उपायं ज्ञापयित्वा प्रवर्तनीयः, किन्तु तत्रापि स फलोद्देश्येनैव प्रवर्तनीयो भवति, न निष्फलं प्रवर्त्यते। अत्र सूत्रवचनं प्रमाणयति – "तस्य लिप्साऽर्थलक्षणा" इति। तस्य लक्षणशब्दोऽत्र निमित्तार्थकः। तथा चायमिह सूत्रार्थः – तस्य = फलस्य लिप्सा लाभेच्छा, अर्थलक्षणा प्रयोजनवस्तुनिबन्धना न विधिनिबन्धनेत्यर्थः। निगमयति – तस्मात् फलसाधने = फलोपाय एव विधिव्यापारो न फले इति।

**ननु फलवत्यपि अर्थलक्षणा प्रवृत्तिः क्व तर्हि विधिव्यापारः? इत्थंभावे। नैतत् सारम्, यतो यथैव साधनसामान्येऽर्थात् प्रवृत्तिः, तथेत्थंभावसामान्येऽपि। यतो नाननुग्राहकं साधनं समर्थम्। अथ च तद्विशेषे प्रवर्त्यः, साधनविशेषेऽपि तथास्तु।**

**अपि च अपेक्षितोपायतैव विधि ,तस्या अप्रवृत्तप्रवर्तनालक्षणत्वात्, प्रवृत्तिहेतोश्च धर्मस्य प्रवर्तनाशब्दाभिधेयत्वात्, इष्टतायास्तत्साधन-**

---

ननु फले (परमपुरुषार्थे) अर्थलक्षणा प्रयोजननिमित्ता प्रवृत्तिर्न विधि-निबन्धना, तदुपाये तु विधिनिमित्तैव प्रवृत्तिरित्युक्तिर्न सङ्गच्छते, यतः फले इव फलवति तदुपायेऽपि प्रयोजननिमित्तैव (अर्थलक्षणैव) प्रवृत्तिर्भविष्यति। अत इष्टसाधनेऽपि न विधिव्यापार इति पूर्वपक्षिणाऽऽक्षिप्तः सिद्धान्ती पृच्छति– **क्व तर्हि विधिव्यापारः?** इति। पूर्वपक्षी प्रभाकरदृष्ट्या आह – **इत्थंभावे इति**। इतिकर्तव्यतायां विधिव्यापार इत्यर्थः। इतिकर्तव्यता च कर्तव्यस्य प्रकारः।

अत्र सिद्धान्ती दूषयन् आह– **नैतत् सारमिति**। असारत्वे हेतुमाह– **यतो यथैवेति**। अयमभिप्रायः – यथा फलसाधने यागसामान्ये अर्थात् = प्रयोजनरागात् प्रवृत्तिः स्यादित्युच्यते, तथैव यागेतिकर्त्तव्यतायामपि फलरागादेव प्रवृत्त्युपपत्तेर्न तत्रापि विधिव्यापार इति। पूर्वपक्षी पुनः प्रत्यवतिष्ठते – **यतो नाननुग्राहकमिति**। अयमर्थः – न हि साधनसामान्यं फलानुग्राहकं भवतीति तद्विशेषे = इतिकर्त्तव्यताविशेषे यदि विधिव्यापारोऽभ्युपगम्यते, तदा न यागसामान्यं फलानुग्राहकं भवति साधनविशेष एव यागे विधिव्यापारो भविष्यतीति। इतिकर्त्तव्यतायामिव इष्टसाधनतायामपि विधिव्यापारः समान इति समाधातुराशयः।

अपेक्षितोपायतैव = इष्टसाधनतैव विध्यर्थ इत्यत्र उपपत्त्यन्तरमाह – **अपि चेति**। अत्रेयमुपपत्तिः – 'अपेक्षितोपायता विध्यर्थः' इति प्रतिज्ञा, तस्याः

**तायाश्चान्यस्य प्रवृत्तिहेतोरभावात्। इष्टतायाश्च प्रमाणान्तरावसेयत्वात् स्वयं प्रवृत्तेर्जानात्येवासौ 'मयैतत् कर्तव्यम्' इति नेष्टतायामप्रवृत्त-प्रवर्तनात्वम्। इष्टसाधनतायां तु प्रमाणान्तरावगमाभावाच्छब्दैकगम्यायां न शब्दमन्तरेणाप्रवृत्तपुरुषप्रवृत्तिहेतुत्वम्। अतः सा शब्दप्रमाणिका सती विधिरिति गीयते।**

**अनुतिष्ठतश्च साधनमनुष्ठेयं प्रवृत्तिहेतुः, न स्वभावसिद्धम्। तेनानुतिष्ठतः साधनताविधिः। अतोऽनुष्ठानं साधनविषयमेव विधायकाच्छब्दादवगम्यते।**

---

अपेक्षितोपायताया अप्रवृत्तप्रवर्तनारूपविधिलक्षणोपेतत्वादिति हेतुः। प्रवृत्ति-हेतुभूतस्य धर्मस्य प्रवर्तनाशब्दार्थत्वात्। स च धर्म इष्टतारूपः, इष्टसाधनता-रूपश्च। एतदुभयभिन्नस्य प्रवृत्तिहेतोरभावात्।

इष्टतायाश्च प्रमाणान्तरेण ज्ञानं विधाय स्वयमेवेष्टे फले प्रवर्तते, न तत्र विधिशब्दापेक्षा। यतो हि स जानात्येव 'मयैतत् कर्तव्यम्' इति। अत इष्टतायां नास्ति अप्रवृत्तप्रवर्तनात्वरूपविधिलक्षणोपेतत्वमिति।इदमिष्टसाधनमिति ज्ञानन्तु न शब्दातिरिक्तेन केनापि प्रमाणेन भवितुं शक्यमिति शब्दैकगम्यैव सा अप्रवृत्तप्रवृत्तिहेतुर्भवति। अत एव इष्टसाधनता शब्दप्रमाणैकगम्या सती विध्यर्थ इति गीयत इति भावः।

अत एव साधनविषयकमेवानुष्ठानं विधायकाद् लिङादिशब्दाद् गम्यते न फलविषयकम्, फलस्यानुष्ठानाविषयत्वात्।यतो विधिं श्रुत्वाऽनुष्ठाने प्रवर्तमानस्य पुरुषस्य अनुष्ठेयमेव= कृतियोग्यमेव यागादिकं फलसाधनं भवति, न स्वभावसिद्धम् अनुष्ठानायोग्यम्। तादृशमनुष्ठानयोग्यं यागादिकमेवेष्टसाधनीभूतं प्रवृत्तिहेतुः। एवञ्च प्रवर्तनलक्षणो विधिरनुष्ठेये याग एव सङ्गच्छते। अनुष्ठास्यमानो याग एव च इष्टसाधनमिति इष्टसाधनत्वमेव प्रवर्तकत्वात् प्रवर्तनालक्षणविध्यर्थ इति। वृत्तौ साधनताविधिरित्यस्येष्टसाधनता विध्यर्थ इत्यर्थः।

**नन्वध्यवसाय आकूतम्, आद्या प्रवृत्तिः, कालत्रयवियुक्तं प्रवृत्तिमात्रम्, अज्ञातक्रियाकर्तृसम्बन्ध इति विधिविदो विधिं व्याचक्षते। नैतत् सारम्। यतोऽध्यवसायादीनामेव हेतुरत्र मृग्यते, स च नान्योऽपेक्षितोपायतायाः, न च ते निरस्तहेतवः।**

**स्यादेतत् – अभिधानमेषां हेतुः। तच्च वार्तम्, अभिधानाद्धि प्रतीतिरेषां स्यात्, नोत्पत्तिः। न हि प्रतीतिमात्रेण घटादयः प्रवृत्तिहेतव इत्यादि वर्णितं विधिविवेके। अथवा नाभिधानतः, न च शब्दादध्यवसायादिः, ज्ञापकत्वाद् अव्युत्पन्नप्रवृत्तिप्रसङ्गादित्यादि तत्रैवोक्तम्।**

---

ननु अध्यवसायादिलक्षणो विधिरिति विधिविदो वदन्ति, तत्कथमुच्यते इष्टसाधनता विधिरिति शङ्कते – **ननु अध्वसाय आकूतमित्यादि**। तत्र 'ममेदं कार्यम्' इति निश्चयोऽध्यवसायः, ततः सङ्कल्पविशेष आकूतः, तत आद्या प्रवृत्तिः, तथा 'पचति' इत्यादिवर्तमानादिकालव्यापारवर्जितं 'पचेत्' इति कालत्रयपरिच्छेदरहितं प्रवृत्तिमात्रम्, तथा प्रमाणान्तरेणाज्ञातः 'यजेत' इत्यस्मादेव गम्यमानाँ यागादिक्रियायास्तत्कर्तुश्च सम्बन्धो विधिरिति। तथा चेष्टसाधनताया विधित्वकथनं प्रसिद्धिविरुद्धमिति शङ्काशयः।

उत्तरयति – **नैतत् सारमिति**। अयं भावः – एषामध्यवसायादीनां को हेतुरित्येव तु अन्विष्यते । अन्विष्यमाणे च हेतौ इष्टसाधनतैव अध्यवसादीनां हेतुः सिद्ध्यति, नान्यः। न च वक्तुं शक्यतेऽध्यवसायादयो निरस्तहेतवोऽकारणकाः अकस्मादेव भवन्तीति, कारणं विना कार्यानुत्पादात्। तस्माद् इष्टसाधनतैव मूलभूता प्रवृत्तिहेतुः, सैव विधिः, नाध्यवसायादय इति।

'नाभिधानतः' इति कारिकांशं व्याख्यातुकामोऽत्र पूर्वपक्षमुपस्थापयति– स्यादेतदिति। अध्यवसायादीनां हेतुः लिङादेरभिधानरूपो व्यापार एवास्ति न त्विष्टसाधनतेति। एतन्निराकरोति – **तच्च वार्तम् इति**। तच्च निःसारमित्यर्थः। यतो हि लिङादिशब्देनाभिधानाद् एषामध्यवसायादीनां प्रतीतिमात्रं भवति न

**अथवा यो मन्यते– 'मयेदं कर्तव्यम्' इति यतोऽध्यवसायः, 'नियुक्तोऽस्मि' इति यतो बुद्धिः, स नियोगो विधिशब्दपर्याय इति ; तं प्रत्युच्यते, तत एवापेक्षितोपायत्वात् 'कर्तव्यम्' इत्यध्यवसायः।**

**तथा हि– कर्तुरिष्टाभ्युपाये 'कर्तव्यम्' इति लोके बुद्धिः, तदभावे तु 'अकर्तव्यम्' इति, अन्वयव्यतिरेकाभ्याम्। ते च तद्विषये गम्येते।**

**तथा 'नियुक्तोऽस्मि' इति 'प्रवर्तितोऽस्मि' इति स्वात्मप्रवृत्तिहेतुप्रतीतिः, न च सोऽन्य इष्टाभ्युपायतायाः। न खलु दृष्टसामर्थ्येऽकस्माद् विना हेतुनाऽहेतुरिति युक्तिमत्, न हि तं परित्यज्य लौकिकमलौकिककल्पने प्रमाणमस्ति।**

---

तूत्पत्तिः। दृष्टान्तेनैतद् द्रढयति– **न हीति**। यथा प्रतीतिमात्रेण घटादयः प्रवृत्तिं न जनयन्ति तद्वत्। एवं हि विधिविवेके वर्णितं स्वयं ग्रन्थकारेण। अथवा 'नाभिधानतः' इत्यस्यार्थान्तरम् अपि तत्रैव विधिविवेके वर्णितम्। तच्चेत्थम्– न अभिधानतः= शब्दाद् अध्यवसायादिः, शब्दस्य अर्थज्ञापकत्वाद् नाध्यवसायजनकत्वम्। ज्ञापकत्वाभावे शब्दश्रवणमात्रेण अव्युत्पन्नस्यापि वायुप्रेरितस्येव प्रवृत्तिप्रसङ्गादित्यादि।

तस्यैव व्याख्यान्तरमाह – **अथवा यो मन्यत इति**। अयमर्थः – 'मयेदं कर्तव्यम्' इति यतोऽध्यवसायः प्रयत्नो भवति, तथा 'नियुक्तोऽस्मि' इति यतो बुद्धिर्जायते, स एवालौकिको नियोगो विधिरिति कस्यचिन्मतम्। तत्प्रतिषेधति – **तं प्रत्युच्यत इति**। तत एव = अपेक्षितोपायत्वादेव (इष्टसाधनत्वादेवेत्यर्थः) 'मया कर्त्तव्यम्' इति अध्यवसायो जायते। तथा हि कर्तुरिष्टाभ्युपाये= कर्त्तुरिष्टसाधने 'मया इदं कर्तव्यम्' इति बुद्धिर्लोके जायते, तदभावे तु 'न कर्त्तव्यम्' इति अन्वयव्यतिरेकाभ्यां गम्यते। ते च बुद्धी इष्टसाधनतातदभावविषयिण्यौ भवत इति गम्यते।

'नियुक्तोऽस्मि' इति बुद्धिर्नियोगाज्जायत इति पक्षं निराकरोति– **तथा 'नियुक्तोऽस्मी'ति** 'नियुक्तोऽस्मि' इत्यस्यैव व्याख्यानं 'प्रवर्तितोऽस्मि' इति। विधिशब्दं शृण्वतः पुरुषस्य या स्वात्मप्रवृत्तिर्जायतेऽनुष्ठाने, तस्याः

कुतश्च ? नाभिधानतः। न खल्वलौकिकस्याभिधानं सम्भवति, सम्बन्धाग्रहादित्युक्तम्। अथवा ततो ह्यध्यवसायप्रारम्भानुष्ठान-परिसमापनाः, अपेक्षितोपायत्वात्। तत्सद्भाव एव नियुक्तप्रवृत्तेः यस्य कस्यचिन्नियोगादप्रवृत्तेः।

स्यादेतत् – 'कर्तव्यम्' इति प्रत्ययात् प्रवर्तते, अन्यथा कर्तव्यं न कृतं स्यात्। तच्च न, नाकस्मात् कर्तव्यप्रत्ययोत्पादः। स हि

---

प्रवृत्तेः कारणीभूतायाः कर्तव्यताबुद्धेः कश्चिद्धेतुः प्रतीयते। स च कर्त्तव्यता-बुद्धिहेतुः इष्टोपायतायाः = इष्टसाधनताया अन्यो नास्ति। अकस्मादेव कर्तव्यता-बुद्धिरिति मतं खण्डयति – **न खल्विति**। अयं भावः – लोके कर्तव्यताबुद्धिजनने इष्टसाधनतैव हेतुः सामर्थ्यवान् दृष्टः, अतः कर्तव्यताबुद्धिरकस्मात् कारणं विनैव भवतीति कथनं न युक्तिसङ्गतम्। न च तस्यां बुद्धौ नियोग एव हेतुरिति वाच्यम्, दृष्टसामर्थ्यं लौकिकहेतुमिष्टोपायं परित्यज्य अलौकिकनियोगकल्पने प्रमाणाभावात्।

अलौकिकनियोगास्वीकारे निमित्तमप्याह – **कुतश्चेति**। नाभिधानत इति = अभिधानासम्भवादित्यर्थः। अभिधानासम्भवमुपपादयति – **न खल्विति**। सम्बन्धा-ग्रहात् = अलौकिकार्थेन सह विधिशब्दस्य सङ्गतिग्रहाभावादित्यर्थः। कारिकायां 'ततो ही' ति पदस्य अर्थान्तरमाह – अपेक्षितोपायत्वात् = इष्टसाधनत्वाद् अध्यवसायः = चिकीर्षा, प्रारम्भः = चिकीर्षापूर्वकः प्रयत्नः, अनुष्ठानम् = प्रयत्नपूर्विका चेष्टा ततः समापनमित्यर्थः। नियुक्तस्यापि इष्टसाधनतासद्भाव एव प्रवृत्तिर्भवति नान्यथा। इष्टसाधनताज्ञानरहितस्य यस्य कस्यचिद् नियुक्तस्यापि अप्रवृत्तेरित्यभिप्रायः।

ननु लौकिकवचनम् इष्टसाधनतासापेक्षं 'मया कर्तव्यमिति' कर्तव्यतावगमे भवतु नाम, वेदस्तु तदनपेक्षं साक्षादेव 'मया कर्तव्यम्' इति यागस्य कर्तव्य-तामवगमय्य पुरुषं प्रवर्तयति, न इष्टसाधनत्वादिति शङ्कते– **स्यादेतदिति**। अन्यथा = यदि कर्तव्यतावगमान्न प्रवर्तते, तदा वेदप्रमाणोक्तं कर्तव्यं न कृतं स्यात्, तच्च न युक्तम्, वेदेऽननुष्ठानलक्षणाप्रामाण्यप्रसङ्गात्।

**स्वार्थावाप्तिनिमित्तः। स्यादेतत् -- शब्दादेव कर्तव्यताबुद्धिः। तत्रोच्यते — नाभिधानतः = न शब्दात् कर्तव्यताबुद्धिः। नियोगो हि शब्दार्थः, स हि नियोक्तृधर्मः स्वतन्त्रो वा स्यात्, कर्तव्यता तु विषयधर्मः।**

**अथ विषयधर्मं नियोगं ब्रूयात्, प्राप्तमपेक्षितोपायत्वम्। अथ नियोगात् कर्तव्यता स्यात्, एवमपि न तस्यां शब्दः प्रमाणम्, साक्षात् तस्य नियोगाभिधायित्वात्। नाप्यर्थात्, अकर्तव्येऽप्यनाप्तनियोगदर्शनात्।**

---

समाधत्ते – **तच्च नेति**। यतो हि वेदादपि कर्तव्यताज्ञानं न अकस्मात् कारणं विना उत्पद्यते, किन्तु स्वार्थस्य इष्टस्य अवाप्तिनिमित्तेनैव = इष्टसाधनता-निमित्तेनैवेति यावत्, तत् कर्तव्यताज्ञानमुत्पद्यत इति भावः। ननु विधिशब्दादेव कारणात् कर्तव्यताबुद्धिरुत्पद्यते नाकस्मात्, न वेष्टसाधनत्वादिति पुनः शङ्कते – **स्यादेतदिति**। समाधानमाह – **तत्रोच्यत इति**। नाभिधानतः = न शब्दात् कर्तव्यताबुद्धिरुत्पद्यते। यतो हि तव मते नियोग एव विधिशब्दार्थ इष्टः। स च नियोक्तृधर्मो वा स्यात् स्वतन्त्रो वा भवेत्, कर्तव्यता तु विषयस्य यागादेर्धर्मः। तथा च नियोगकर्तव्यतयोर्वैयधिकरण्यान्न परस्परं कार्यकारणभाव इत्याशयः। तस्मात् सुष्ठूक्तम् – **नाभिधानत इति**।

यद्युच्येत नियोगोऽपि विषयधर्म एवेति न कार्यकारणयोर्वैयधि-करण्यमिति न कर्व्तयताबुद्धेरनुत्पादप्रसङ्ग इति, तर्हि अपेक्षितोपायत्वमेव प्राप्तम् इष्टसाधनत्वस्वरूप एव नियोगः प्राप्त इत्यर्थः। यतो हि यागो विषयः, तस्यैव धर्मो नियोगः, तस्यैव च धर्म इष्टसाधनत्वमित्युभयोरेकरूपत्वं प्राप्तमिति घट्टकुटीप्रभातायितम्।

पुनः शङ्कते – **अथ नियोगादिति**। उत्तरयति– **एवमपीति**। अयमाशयः– यदि उच्यते – विधिशब्दाद् नियोगो गम्यते, नियोगाच्च कर्तव्यताबुद्धिरुत्पद्यत इति। तदपि "नाभिधानतः" इत्येनैव समाहितम्। यतोऽभिधानं = शब्दस्तस्यां कर्तव्यतायां प्रमाणं नैव जातम्, तस्य साक्षाद् नियोगार्थाभिधायकत्वात् तव मते। यद्युच्यते शब्दो यद्यपि साक्षात् कर्तव्यताबुद्धिं नोत्पादयति तथापि शब्दाद्

**अथ नियोगस्य कार्यता गम्यते, तन्निष्पत्तिश्च विषयनिष्पत्त्यधीनेति विषये कर्तव्यतावगमः। तदसत्, विषये कार्यताप्रतीतेर्लोके। तथा हि 'गौर्दुह्यतां त्वया' इति नियोगेऽन्येन दुग्धायां न पुनर्दोहमारभते, विषयस्य कार्यताप्रतीतेस्तस्य निष्पादि-तत्वात्। न चान्येनैव नियोगो निष्पादितः, तस्यानियुक्तत्वात्। तत्र नियोगसिद्धये पुनर्दोहारम्भः स्यात्। विस्तरेण चायमर्थो विधिविवेके विचारित इत्यलमतिप्रसङ्गेन।**

---

नियोगावगमः, नियोगानुपपत्त्या च अर्थात् कर्तव्यताबुद्धिरिति शब्दनिमित्तिकैव नेष्टसाधनत्वनिमित्तिका सेति, तदपि न सत्, अकर्तव्येऽपि अनाप्तनियोगदर्शनात्। अर्थाद् नियोगाद् यदि कर्तव्यता तदा कथमकर्तव्येऽपि अनाप्तजनकृतो नियोगो दृश्यते? तस्माद् नियोगानुपपत्त्या कर्तव्यतावगम इति रिक्तं वचः।

इष्टसाधनत्वं विनैव यागस्य कर्त्तव्यत्वं प्रकारान्तरेणाशङ्कते– **अथ नियोगस्येति**। वैदिकाद् विधिवाक्याद् नियोगस्य कार्यता = अनुष्ठेयताऽवगम्यते। कथमिति चेत्, इत्थम् = नियोगो नाम वैदिक आदेशः, स चादेशो नियोज्ये-नानुष्ठेयो निष्पादनीयो भवति, अन्यथा वेदवचनोल्लङ्घनदोषः प्रसज्येत। तन्निष्पत्तिश्च विषयभूतयागस्य निष्पत्तावेव आयत्ता यागानुष्ठानमेव नियोगानुष्ठानमिति यावत्। अतो यागनिष्पत्तिं विना अनुपपद्यमाना नियोग-निष्पत्तिरेव अर्थाद् यागविषये निष्पाद्यतां कर्तव्यतां बोधयति। तस्माद् विधिवाक्योक्ता नियोगस्य कार्यतैवानुपपन्ना सती यागे कर्तव्यतां बोधयन्ती यागे प्रवृत्तिहेतुर्भवति, नेष्टसाधनतेति नेष्टसाधनता विध्यर्थः किन्तु नियोग एवेति शङ्कितुरभिप्रायः।

उत्तरयति– **तदसदिति**। अयमर्थः – लोके विषय एव कर्तव्यता प्रतीयते न नियोगे। अत एव 'गौर्दुह्यतां त्वया' इति नियोगे सति यदि केनचिदन्येनैव सा गौर्दुग्धा, तदा न पुनः सा दुह्यते। यतस्तत्र गोदोहनमेव कर्त्तव्यतया प्रतीयते, तच्च निष्पादितमेव, अतो न नियोगस्य कर्त्तव्यता।

**स्यादेतत्— अस्य ज्ञानस्य मोक्षसाधनत्वाद् विधानम्, विद्यासाध्यो हि मोक्षः श्रूयते "विद्यया तदारोहन्ति", "विद्ययाऽमृतमश्नुते" (ईशो० ११।) "यस्तमात्मानमनुविद्य विजानाति स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" (छा०८।७।१) तथा "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुपतिष्ठन्ति" (छा०८।२।१) इत्यादि।**

---

पुनः प्रत्यवतिष्ठते – **न चान्येनैवेति**। अयमभिप्रायः पूर्वपक्षिणः – यदि अन्येन सा गौर्दुग्धा, तदापि 'गौर्दुह्यताम्' इति नियोगो निष्पादित एवेति नियोगस्य कर्त्तव्यता निर्बाधेति। समाधत्ते – **तस्यानियुक्तत्वादिति**। कामं सा गौर्दुग्धा, तथापि येन दुग्धा, स न दोह्ने नियुक्तः, यश्च नियुक्तः, न तेन दोहनकार्यं निष्पादितम् इति तद्गतो नियोगो निरर्थक एवेति स्वनियोग-सार्थक्याय स पुनर्गोदोहनमारभेत। न च तथा करोति। तस्माद् नियोगस्य कर्तव्यताऽसिद्धेति न नियोगः स्वनिष्पत्तये यागस्य कर्तव्यतां बोधयति, न वा यागे प्रवृत्तिहेतुर्भवति। अत इष्टसाधनत्वमेव यागे कर्तव्ये प्रवृत्तिहेतुर्भवति। एवमिष्टसाधनत्वमेव 'आत्मा प्रतिपत्तव्यः' इति प्रज्ञारूपायामुपासनारूपायां वा प्रतिपत्तावपि प्रवृत्तिहेतुर्भवतीतीष्टसाधनत्वमेव विध्यर्थो न नियोग इति सर्वमवदातम्। अयमर्थो ग्रन्थकारेण सविस्तरं निजे विधिविवेके विचारित इतीह तदतिप्रसङ्गाद् विरमतीति ज्ञेयम्।

ननु "आत्मा प्रतिपत्तव्यः" इति वचनं विधायकमेवास्ति, तेन च तृतीय-बोधोऽद्वयात्मसाक्षात्काररूपो विधीयते, अद्वयात्मसाक्षात्काररूपस्य ज्ञानस्य मोक्षसाधनत्वात्। यतो विद्यासाध्यो हि मोक्षः श्रूयते। यथा – "विद्यया तदारोहन्ति" "विद्ययाऽमृतमश्नुते" "यस्तमात्मानमनुविद्य विजानाति स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्"। तथा "स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुपतिष्ठन्ति" इत्यादिश्रुतयोऽत्र प्रमाणानि सन्ति। "अनुविद्य विजानाति" इत्यस्यार्थः – शब्दात् प्रथमं विदित्वा पश्चाद् विशेषेण अपरोक्षतया जानातीति।

**न च साध्यत्वेऽप्यन्तवत्त्वम्, शब्दगम्यत्वादनावृत्तेः – "न च पुनरावर्तते" (छा० ८।१५।१) इति। न ह्येष तर्कगम्यः, येन तर्केणास्य तत्त्वं व्यवस्थाप्येत, शब्दगम्यस्य तु शब्दादेव व्यवस्था। अनन्तविद्यासाध्यत्वाद् वाऽनन्तत्वम्, क्षणिकत्वेऽपि च विज्ञानस्य सन्ततिरूपेणानन्तत्वम्। तत्राहुः –**

**न च मोक्षः फलं तस्य साध्यो मोक्षो न चापरः॥१०५॥**

**अविद्यास्तमयो मोक्षः सा संसार उदाहृता।**

**विद्यैव चाद्वया शान्ता तदस्तमय उच्यते॥१०६॥**

---

शङ्कते – **न च साध्यत्व** इति। मोक्षस्य ज्ञानसाध्यत्वे अन्तवत्त्वम् = अनित्यत्वं मोक्षस्य प्रसज्येतेति। समाधत्ते – **शब्दगम्यत्वादिति**। अनावृत्तेः = आत्यन्तिकमोक्षस्य शब्दप्रमाणेन सिद्धत्वात्। तथा च श्रुतिः – **"न च पुनरावर्तते"** इति। न च मोक्षः अनित्यः साध्यत्वाद् घटवद् इत्यनुमानेन मोक्षस्यानित्यत्वं सिध्यतीति वाच्यम्, मोक्षस्य तर्काविषयत्वात्। अतस्तर्केण नास्य मोक्षतत्त्वस्य व्यवस्थापनं सुशकम्। यतः शब्दगम्यस्य तत्त्वस्य शब्देनैव व्यवस्था उपपद्यते नान्यथेति।

अथवा नित्यात्मस्वरूपया अनन्तविद्यया साध्यत्वाद् मोक्षोऽपि अनन्तो नित्य एवेति। येऽपि मन्यन्ते क्षणिकं विज्ञानमिति, तेषां मतेऽपि विज्ञानस्य क्षणिकत्वेऽपि विज्ञानप्रवाहस्य अनन्तत्वेन तत्साध्यो मोक्षोऽपि अनन्त एवेति न विद्यासाध्यत्वेन मोक्षस्यानित्यत्वप्रसङ्ग इति भावः। अमुमेवार्थं कारिकाभिराहुर्ग्रन्थकृतः – "न च मोक्षः फलं तस्य" इत्यादिभिः। अयमत्र कारिकार्थः – तस्य तृतीयबोधस्य साक्षात्कारस्य न मोक्षः फलं साध्यम्। यतो मोक्षो नित्यसिद्धब्रह्मात्मस्वरूपाद् अपरो भिन्नो नास्ति। तर्हि विद्यायाः क उपयोग इत्यत्राह – **अविद्यास्तमय इति**। अविद्याध्वंसरूपे मोक्ष एव तदुपयोगः। अविद्यैव च संसारनाम्नाऽभिधीयते। तथा चाविद्याध्वंस एव संसारध्वंसरूपो मोक्ष इत्यर्थः।

ननु मोक्षस्य अविद्याध्वंसरूपत्वेऽपि विद्यासाध्यत्वमापतितम् अविद्याध्वंसस्य विद्याजन्यत्वादिति शङ्कामपि निराकरोति– **विद्यैवेति**। अद्वया प्रशान्ता विद्यैव अविद्याध्वंसो नातिरिक्त इति सर्वथा सिद्धं मोक्षस्यानन्तत्व नित्यत्वमिति न तदर्थं विधेरपेक्षेति परमाशयः।

कः पुनरेष मोक्षः ? यद्यनागतदेहेन्द्रियबुद्ध्यनुत्पादः "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" (छा० ८।१२।१) इति दर्शनात्, स प्रागभावो न साध्यः। अथ ब्रह्मप्राप्तिः, सा चैत्रग्रामयोरिव वा स्याज्जीवब्रह्मणोर्मार्गश्रुतिभ्यः —

"शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति" (कठो० २।३।१६)।"स यावत् क्षिपेन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारम्" (छा० ८।६।५) तथा "तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहः" (बृ०६।२।१५) इत्यादि। यथा वा मधुनि नानाकुसुमरसानां समुद्रे च नदीनां प्राप्तिरविभागलक्षणा, तथा स्यात्, "यथा लोके मधुकृतो मधु कुर्वन्ति" (छा०६।९।१) इति, "यथा लोके सोम्येमा नद्यः" (छा० ६।१०।१) इति च दर्शनात्। कार्यस्य वा कारणभावापत्तिः, "तथा

---

अविद्यानिवृत्तिरेव मुक्तिरिति स्वपक्षः सपद्येव "अविद्यास्तमयो मोक्षः" इति कारिकाभागेन व्यवस्थापितः। तमेव समर्थयितुं पराभिमतान् मोक्षविकल्पान् निरसितुकामः प्रश्नपूर्वकं तानुपन्यस्यति — **कः पुनरेष मोक्ष इति**। तत्र अनागतदेहेन्द्रियबुद्ध्यनुत्पादो मोक्ष इति प्रथमो विकल्पः।

तत्र "अशरीरं वाव सन्तम्" इति श्रुतिर्मानम् । स प्रागभावो न साध्य इति। प्रागभावस्य अनादित्वात्, न स केनापि हेतुना साधयितुं शक्य इत्यर्थः। अतस्तद्रूपो मोक्षो न साध्य इत्यर्थः। ब्रह्मप्राप्तिर्मोक्ष इति द्वितीयो विकल्पः, तत्र "**शतं चैका हृदयस्य नाड्यः**, स यावत् क्षिपेन्मनः, तेऽर्चिषमभिसम्भवन्ति" इत्याद्या मार्गप्रतिपादिकाः श्रुतयो मानम्। एतदनुसारेण चैत्रो यथा मार्गाद् मार्गान्तरे गच्छन् ग्रामं प्राप्नोति, तथा जीवोऽपि श्रुत्युक्तमार्गेण ब्रह्म प्राप्नोति। ब्रह्मप्राप्तिर्मोक्ष इति द्वितीयो विकल्पोऽयं पुनः पञ्चधा विकल्पितः। तस्यायं मार्गरूपः प्रथमः

**विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'' (मुण्ड० ३।१।३) इति श्रुतेः। तद्रूपपरिणामलक्षणा वा योगव्याघ्रवत्, ''स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति'' (मुण्ड० ३।२।९) इति दर्शनात्। ''ब्रह्म संपद्यते'' (ब्रह्मबिन्दूप० ६) इति च। स्फटिकस्येव रागापकर्षणेन स्वरूपप्राप्तिलक्षणा, ''परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'' (छा०८।३।४) इतिं श्रवणात्।**

**तत्र न तावत् प्रथमः कल्पः, सर्वगतत्वात्—''तदन्तरस्य सर्वस्य'' (ईश० ५) ''नित्यं विभुं सर्वगतम्'' (मुण्ड० १।१।६) इति। अनन्यत्वाच्च,**

---

प्रकारो निदर्शितः ''शतं चैका'' इत्यादि श्रुत्या। अयं प्रकारो ब्रह्मणा सह संयोगरूपो गतिपूर्वक इति बोध्यम्।

तत्रैव द्वितीयो विकल्पः— जीवब्रह्मणोरविभागलक्षणा प्राप्तिरेव मोक्ष इति। यथा – नानाकुसुमरसानां मधुनि प्राप्तिर्यथा वा नानानदीनां समुद्रे प्राप्तिरविभागलक्षणा प्राप्तिस्तद्वदिति। तत्र ''यथा लोके मधुकृतो मधु कुर्वन्ति'' सोम्येमा नद्यः'' इत्याद्याः श्रुतयो मानम्।

तत्रैव तृतीयो विकल्पः – कार्यस्य कारणभावापत्तिर्मोक्ष इति। तत्र ''तथा विद्वान् पुण्यपापे विधूय'' इत्यादिश्रुतिः प्रमाणम्।

तत्रैव चतुर्थो विकल्पः – यथा कश्चिद् योगबलाद् व्याघ्ररूपेण परिणमते, तद्वद् जीवस्य ब्रह्मरूपपरिणामलक्षणा प्राप्तिर्मोक्ष इति। तत्र ''स यो ह वै तत् परमं ब्रह्म वेद'' इति ''ब्रह्म सम्पद्यते'' इति च श्रुती प्रमाणभूते स्तः।

तत्रैव पञ्चमो विकल्पः – स्वरूपप्राप्तिर्मोक्ष इति। तत्र ''परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते'' इति श्रुतिर्मानमिति। एते पक्षाः समीक्षणीया अग्रे इति।

तत्र पृथक्स्वरूपस्य जीवस्य गतिपूर्वकं ब्रह्मप्राप्तिप्रकारं तावद् दूषयति— **तत्र न तावदिति**। तत्र हेतुः – **सर्वगतत्वादिति**। चैत्रोऽव्यापकः, अतस्तस्य ग्रामप्राप्तिर्युक्ता। ब्रह्मणस्तु सर्वगतत्वात्, सर्वगतस्य च तस्य नित्यप्राप्तत्वादिति

**कः पुनरेष मोक्षः ? यद्यनागतदेहेन्द्रियबुद्ध्यनुत्पादः "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" (छा० ८।१२।१) इति दर्शनात्, स प्रागभावो न साध्यः। अथ ब्रह्मप्राप्तिः, सा चैत्रग्रामयोरिव वा स्याज्जीवब्रह्मणोर्मार्गश्रुतिभ्यः –**

**"शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका। तयोर्ध्वमायन्नमृतत्वमेति" (कठो० २।३।१६)।"स यावत् क्षिपेन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारम्" (छा० ८।६।५) तथा "तेऽर्चिषमभिसम्भवन्ति अर्चिषोऽहः" (बृ०६।२।१५) इत्यादि। यथा वा मधुनि नानाकुसुमरसानां समुद्रे च नदीनां प्राप्तिरविभागलक्षणा, तथा स्यात्, "यथा लोके मधुकृतो मधु कुर्वन्ति" (छा०६।९।१) इति, "यथा लोके सोम्येमा नद्यः" (छा० ६।१०।१) इति च दर्शनात्। कार्यस्य वा कारणभावापत्तिः, "तथा**

---

अविद्यानिवृत्तिरेव मुक्तिरिति स्वपक्षः सपद्येव "अविद्यास्तमयो मोक्षः" इति कारिकाभागेन व्यवस्थापितः। तमेव समर्थयितुं पराभिमतान् मोक्षविकल्पान् निरसितुकामः प्रश्नपूर्वकं तानुपन्यस्यति – **कः पुनरेष मोक्ष इति**। तत्र अनागतदेहेन्द्रियबुद्ध्यनुत्पादो मोक्ष इति प्रथमो विकल्पः।

तत्र "अशरीरं वाव सन्तम्" इति श्रुतिर्मानम् । स प्रागभावो न साध्य इति। प्रागभावस्य अनादित्वात्, न स केनापि हेतुना साधयितुं शक्य इत्यर्थः। अतस्तद्रूपो मोक्षो न साध्य इत्यर्थः। ब्रह्मप्राप्तिर्मोक्ष इति द्वितीयो विकल्पः, तत्र "**शतं चैका हृदयस्य नाड्यः**, स यावत् क्षिपेन्मनः, तेऽर्चिषमभिसम्भवन्ति" इत्याद्या मार्गप्रतिपादिकाः श्रुतयो मानम् ।एतदनुसारेण चैत्रो यथा मार्गाद् मार्गान्तरे गच्छन् ग्रामं प्राप्नोति, तथा जीवोऽपि श्रुत्युक्तमार्गेण ब्रह्म प्राप्नोति। ब्रह्मप्राप्तिर्मोक्ष इति द्वितीयो विकल्पोऽयं पुनः पञ्चधा विकल्पितः। तस्यायं मार्गरूपः प्रथमः

विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति'' (मुण्ड० ३।१।३) इति श्रुतेः। तद्रूपपरिणामलक्षणा वा योगव्याघ्रवत्, ''स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति'' (मुण्ड० ३।२।९) इति दर्शनात्। ''ब्रह्म संपद्यते'' (ब्रह्मबिन्दूप० ६) इति च। स्फटिकस्येव रागापकर्षणेन स्वरूपप्राप्तिलक्षणा, ''परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'' (छा०८।३।४) इतिं श्रवणात्।

तत्र न तावत् प्रथमः कल्पः, सर्वगतत्वात्–''तदन्तरस्य सर्वस्य'' (ईश० ५) ''नित्यं विभुं सर्वगतम्'' (मुण्ड० १।१।६) इति। अनन्यत्वाच्च,

---

प्रकारो निदर्शितः ''शतं चैका'' इत्यादि श्रुत्या । अयं प्रकारो ब्रह्मणा सह संयोगरूपो गतिपूर्वक इति बोध्यम् ।

तत्रैव द्वितीयो विकल्पः– जीवब्रह्मणोरविभागलक्षणा प्राप्तिरेव मोक्ष इति । यथा – नानाकुसुमरसानां मधुनि प्राप्तिर्यथा वा नानानदीनां समुद्रे प्राप्तिरविभागलक्षणा प्राप्तिस्तद्वदिति । तत्र ''यथा लोके मधुकृतो मधु कुर्वन्ति'' सोम्येमा नद्यः'' इत्याद्याः श्रुतयो मानम् ।

तत्रैव तृतीयो विकल्पः – कार्यस्य कारणभावापत्तिर्मोक्ष इति । तत्र ''तथा विद्वान् पुण्यपापे विधूय'' इत्यादिश्रुतिः प्रमाणम् ।

तत्रैव चतुर्थो विकल्पः – यथा कश्चिद् योगबलाद् व्याघ्ररूपेण परिणमते, तद्वद् जीवस्य ब्रह्मरूपपरिणामलक्षणा प्राप्तिर्मोक्ष इति । तत्र ''स यो ह वै तत् परमं ब्रह्म वेद'' इति ''ब्रह्म सम्पद्यते'' इति च श्रुती प्रमाणभूते स्तः ।

तत्रैव पञ्चमो विकल्पः – स्वरूपप्राप्तिर्मोक्ष इति ।तत्र ''परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते'' इति श्रुतिर्मानमिति ।एते पक्षाः समीक्षणीया अग्रे इति ।

तत्र पृथक्स्वरूपस्य जीवस्य गतिपूर्वकं ब्रह्मप्राप्तिप्रकारं तावद् दूषयति– **तत्र न तावदिति**। तत्र हेतुः – **सर्वगतत्वादिति**। चैत्रोऽव्यापकः, अतस्तस्य ग्रामप्राप्तिर्युक्ता । ब्रह्मणस्तु सर्वगतत्वात्, सर्वगतस्य च तस्य नित्यप्राप्तत्वादिति

**तद्विज्ञानेन सर्वविज्ञानोपदेशात्, "तत्त्वमसि" (छा०६।८।७) इति साक्षात् प्रतिपादनात्, प्रत्यगात्मवृत्तिना च सर्वत्रात्मशब्देन निर्देशात्, "अथ योऽन्याम्" (बृ०१।४।१।०) इति भेददर्शनापवादात्। अत एव च न द्वितीयः, निरवयवत्वाच्च, "निष्कलं निष्क्रियम्" (श्वेता० ६।) इति परस्परावयवसम्भेदलक्षणस्याविभागस्यानुपपत्तेः।**

---

भावः। तत्र श्रुतिद्वयं प्रमाणयति – "तदन्तरस्य" इति "नित्यं विभुम्" इति चेति।अनन्यत्वाच्च = जीवस्य ब्रह्माभिन्नत्वादित्यर्थः।चैत्रस्तु ग्रामाद्भिन्नोऽतोऽस्य ग्रामप्राप्तिर्युक्ता। जीवब्रह्मणारेनन्यत्वे प्रमाणमाह – **तद्विज्ञानेन सर्वविज्ञानोपदेशादिति**। तथा च श्रुतिः – "आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति" इति। "तत्त्वमसि" इति श्रुतिः साक्षादेवाह जीवब्रह्मणोरनन्यत्वम्। तथा "अनेन जीवेनात्मना" इति आत्मशब्दः प्रत्यगात्मनि वर्तमानो जीवस्य ब्रह्मात्मत्वं प्रतिपादयति, अतोऽपि जीवस्य ब्रह्मानन्यत्वम्। न ह्यन्यत् स्वात्मा भवति। अत्र च जीवो ब्रह्मणः स्वात्मतया उक्तोऽतोऽनन्य इति। एवम् "अथ योऽन्यां देवतामुपास्ते" इति श्रुतिर्जीवब्रह्मणोर्भेददर्शनं निन्दयन्ती तन्निषेधति। अतोऽपि जीवब्रह्मणोरनन्यत्वम्।

अत एव अविभागलक्षणा प्राप्तिर्ब्रह्मप्राप्तिरिति द्वितीयकल्पोऽपि न युक्तः, अनन्यत्वादेव। पूर्वं विभागे सति पश्चाद् अविभाग उपपद्यते मधुनदीदृष्टान्तयोः। प्रकृते तु जीवब्रह्मणोरनन्यत्वादेव नास्ति विभाग इति कुतः पश्चादविभागोपपत्तिर्मोक्षे इति। एवं निरवयवत्वाच्च न अविभागलक्षणा प्राप्तिः। सावयवो हि विभक्तः सन् पुनरविभक्तो भवति, परस्परं मिश्रितो भवति, न निरवयवः। सावयवस्यैव तिलतण्डुलद्वयस्य मिश्रणदर्शनात्। निरवयवत्वे श्रुतिः प्रमाणम् "निष्कलं निष्क्रियम्" इति। एकादशेन्द्रियाणि पञ्च महाभूतानि षोडशकलाः, तद्रहितत्वाद् ब्रह्म निष्कलमुच्यते। अत एव च निरवयवमिति। तस्माद् जीवब्रह्मणोः परस्परावयवसम्मिश्रणलक्षणोऽविभागो नोपपद्यत इति भावः।

**नापि तृतीयः, कार्यस्य सर्वदा कारणत्वात्। अथ कार्यरूपनाशः, उच्छेदात्मताप्रसङ्गो मोक्षस्य। तत्र "विद्ययाऽमृतमश्नुते" (ईश० ११) इति विरोधः, विद्ययैवोच्छेदप्रसङ्गात्। आत्मोच्छेदस्य चानिष्टत्वादफलत्वम्। प्रतिषिद्धश्च "अक्षरम्" इत्यत्र मुख्यः कार्यकारणभावः "वाचारम्भणं विकारो नामधेयम्" (छा० ६।१।४) इति विकारानृतत्वप्रतिपादनाच्छ्रुत्या।**

**न चतुर्थः, अनन्यत्वादेव, चैतन्यस्य च ब्रह्मरूपस्याविशेषात्।**

---

कार्यस्य कारणभावापत्तिर्ब्रह्मप्राप्तिरिति तृतीयपक्षं निराकरोति – **नापीति**। अयं भावः – "यथाऽग्नेर्ज्वलतः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति, एवमेवास्मादात्मनः" इत्यादिश्रुतिप्रमाणाद् जीवस्य बह्मकार्यत्वम्, कार्यभूतस्य तस्य पुनर्ब्रह्मरूपकारणभावापत्तिर्ब्रह्मप्राप्तिरिति तृतीयपक्षोऽपि न साधु, कार्यस्य हि सर्वदैव कारणात्मकत्वान्न कादाचित्की कारणभावापत्तिः, अत एव न विद्यया साध्या। विद्यासाध्यश्च मोक्षः श्रूयते। यद्युच्येत यावदवस्थिति जीवस्य ब्रह्मात्मकत्वेऽपि तस्य कार्यरूपताया नाशो ब्रह्मणि लयो ब्रह्मप्राप्तिर्मोक्ष इति, तदपि न सत्, तथात्वे मोक्षस्य उच्छेदरूपत्वं प्रसज्येत। तच्च "विद्ययाऽमृतमश्नुते" इति श्रुतिविरुद्धम्। या हि विद्याऽमृतत्वप्रापिका श्रूयते, तयैवोच्छेद उच्यत इति विरोधः। एवम्, न कस्यापि आत्मोच्छेद इष्टो भवति, इष्यमाणमेव च फलं भवतीति मोक्षस्य फलत्वं = पुरुषार्थत्वमपि हीयते, परमपुरुषार्थत्वं तु दूरं गतं स्यात्।

प्रकारान्तरेण तृतीयपक्षं दूषयति– **प्रतिषिद्धश्चेति**। अक्षरप्रकरणे जीवब्रह्मणोः कार्यकारणभाव एव निराकृतोऽवास्तविक इति कृत्वा "वाचारम्भणं विकारो नामधेयम्" विकारो = घटादिर्घट इति नामधेयं च वाचा = व्यवहारेण केवलमारभ्यते, न तु तत्त्वतोऽस्ति। मृत्तिका = कारणमात्रेण तु सत्यम्। वागिति व्यवहारोऽत्र लक्ष्यते। अनया श्रुत्या विकारमात्रस्यानृतत्वप्रतिपादनात्।

जीवस्य ब्रह्मरूपेण परिणामप्राप्तिरेव मोक्ष इति चतुर्थपक्षं निषेधति – **न चतुर्थ इति**। निषेधे हेतुमाह – **अनन्यत्वादिति**। यो हि जीवो ब्रह्मणोऽनन्यः, स एव ब्रह्मरूपेण कथं परिणमेत? कथमनन्यत्वमित्याह – **चैतन्यस्य चेति**। यथा हि चैतन्यं ब्रह्मणस्तथा जीवस्यापीति। अविशेषादनन्यत्वमिति भावः।

**अथ विज्ञानात्मनां शोकमोहाद्यभावो विशिष्यत इति चेत्, तत्रापि शोकादयश्चेदात्मानो विज्ञानात्मनाम्, अनुच्छेद्याः। अथ गुणा अर्थान्तरमागमापायिनः क्षणिकाः, क्षणिकत्वादेव चोच्छिद्यन्त इति न तत्साधनमपेक्ष्यम्। न चागामिनामनुत्पत्तयेऽपेक्ष्यत इत्युक्तम्।**

**अथ ऐश्वर्यविशेषो ब्रह्मणि, तत्प्राप्तिस्तद्रूपपरिणामो मोक्षः, "स स्वराड्भवति" (छा० ७।२५।२) इति श्रुतेः। तदसत्, अनेकेश्वरानुपपत्तेः। ब्रह्मणो न्यूनं समं वा विज्ञानात्मनामैश्वर्यं स्यात्, न्यूनत्वेन ब्रह्मरूपापत्तिर्न**

---

शङ्कते – **अथेति**। ननु जीवब्रह्मणोरुभयोर्विज्ञानात्मकत्वे समानेऽपि शोकमोहादिग्रस्ताज्जीवाद् ब्रह्मणः शोकमोहाद्यभावो विशेष इति न तयोरनन्यत्वमिति चेदुत्तरमाह – **तत्रापीति**। अयमाशयः – शोकादयो विज्ञानात्मकानां जीवानामात्मानः= स्वरूपभूताः सन्ति गुणा वा सन्ति? यदि स्वरूपभूतास्तदा अनुच्छेद्यास्त इति न कदाचिज्जीवा मुच्येरन्। यदि तु शोकादयो गुणभूताः, तदा अर्थान्तरम्= जीवस्वरूपाद् बहिर्भूताः, अत एवागमापायिन उत्पत्तिविनाशशालिनः क्षणिकाश्चेति क्षणिकत्वादेव स्वयमुच्छिद्यमानास्सन्तीति न तदर्थं विद्यासाधनमपेक्ष्येतेति विद्याया निरर्थकत्वं प्रसज्येत। न च वाच्यम्– आगामिनां शोकादीनामनुत्पत्तये विद्याऽपेक्ष्यत इति दत्तोत्तरत्वात् पूर्वम्। प्रागभावस्यानादित्वेन तस्यासाध्यत्वाद् अनुत्पत्तेः प्रागभावरूपत्वादिति भावः।

ब्रह्मणि विशेषान्तरमाशङ्कते– **अथेति**। ननु चैतन्ये समानेऽपि ब्रह्मणि ऐश्वर्यविशेषोऽस्ति। तथाविधैश्वर्यप्राप्तिरेव जीवस्य ब्रह्मरूपपरिणामो मोक्षः, तथा च श्रुतिः –"स स्वराड् भवति" इति। इयं श्रुतिर्मुक्तस्य जीवस्य स्वराट्त्वं स्वयंप्रभुत्वं प्राप्तं भवतीत्याह। आशङ्कामिमां निरस्यति – **तदसदिति**। **अनेकेश्वरानुपपत्तेरिति**। मुक्तो जीवो यदि ब्रह्मवद् ऐश्वर्यवान् भवति, तदाऽनेकेश्वराः प्रसज्यन्ते, तच्चानुपपन्नम्। अनुपपत्तिमेव व्याकरोति– **ब्रह्मण इति**। अयमर्थः – विज्ञानात्मनां मुक्तजीवानामैश्वर्यं ब्रह्मापेक्षया न्यूनं वा समानं

**स्वाराज्यम् । तथा हि – ब्रह्मशब्दवाच्यः परमेश्वरस्तेषामधिपतिः स्यात्, तथा चान्यराजता। तत्र चान्तवत्त्वं श्रूयते "अथ येऽन्यथातो विदुः, अन्यराजानस्ते क्षय्यलोका भवन्ति" (छा० ७।२५।२) इति।**

**उपपद्यते च, परमेश्वरेच्छया न्यूनैश्वर्याणामैश्वर्यप्रच्युतिदर्शनाल्लोके। समत्वस्य त्वनुपपत्तिरेव युगपत्। एकश्चेत् सर्वाधिपतिः सर्वस्य प्रशासिता, परः किं कुर्वन्नीशः स्यात्? विरोधाच्च। न खल्वेषामेकमतित्वे हेतुरस्ति। तत्रैकस्मिन् वस्तुनि विरुद्धाभिप्राययोरेकाभिप्रायानुविधायित्वे तस्येतरस्यानीश्वरत्वम्। उभयाभिप्रायानुविधानं न, विरोधात्, उभयोरननु-**

---

वा स्यात्? न्यूनत्वे ब्रह्मरूपतापत्तौ सत्यां स परमेश्वस्तेषां मुक्तजीवानां स्वाराज्यं प्राप्तः स्यात्। तथा हि ब्रह्मशब्दवाच्यः परमेश्वरस्तेषां मुक्तजीवानामधिपतिर्भवेत्, तथात्वे तेषां स्वराट्त्वं भज्येत अन्यराजाधीनत्वं च प्रसज्येतेति भावः। तथा अन्यराजाधीनानामन्तवत्त्वं = क्षय्यलोकत्वं श्रूयते। यथा–"अथ येऽन्यथातो विदुः, अन्यराजानस्ते (अन्यो राजा येषां तेऽन्यराजानः) क्षय्यलोका भवन्ति" इति क्षय्यो लोको येषां ते क्षय्यलोका इत्यर्थः। तथा च स्वर्गिणामिव मुक्तानामपि संसारे पुनरावृत्तिः स्यादिति हृदयम्। अन्यराजाधीनत्वे तदैश्वर्यस्यान्तवत्त्वे न केवलं श्रुतिरेव मानमस्ति, उपपत्तिरप्यस्ति इत्याह – **उपपद्यते चेति**। परमेश्वस्येच्छया न्यूनैश्वर्याणामैश्वर्यस्य प्रच्युतिरपि लोके दृश्यते। तथा च तेषामैश्वर्यस्यान्तवत्त्वे प्रत्यक्षमपि प्रमाणमस्तीति।

अनेकेषामीश्वराणां ब्रह्मणा समानमैश्वर्यं युगपन्नैवोपपद्यते। यतो हि अनेकेष्वीश्वरेषु मध्ये यद्येकः कश्चित् सर्वाधिपतिः सर्वस्य प्रशासिता भवेत्, तदाऽपरस्य किञ्चित् कर्तव्यमेव नास्तीति स किं कुर्वन् ईश्वरः स्यात्। अर्थात् किञ्चिदकुर्वतस्तस्येश्वरत्वं भज्येत! समानानेकेश्वरसद्भावे विरोधोऽप्यस्ति। कस्यापि कार्यस्यानुष्ठाने सर्वेषामीश्वराणामैकमत्यं स्यादित्यत्र हेतुर्नास्ति। अत एकस्मिन् वस्तुनि द्वयोरीश्वरयोविरुद्धाऽभिप्राये सति कस्यचिदेकस्याभिप्रायानुसारमनुष्ठाने इतरस्यानीश्वरत्वं प्रसक्तम्। उभयोरप्यभिप्रायानुसरणं तु असम्भवम्, विरोधाद् उभयोर्विरुद्धाभिप्रायत्वादित्यर्थः। अथवा एकोऽभिप्रेयात्

**विधानेऽनीश्वरत्वमुभयोः। कार्यसिद्धिश्चेदैकमत्ये हेतुः परिषद्वत्, अन्यथा तस्यासिद्धेरिति चेत् प्रत्येकमनीश्वरत्वम्।**

**अथ पर्यायेणैश्वर्यमविरोधायोच्यते, अन्तवत्ता। जगत्सर्गस्य चासम्भवान्न ब्रह्मतुल्यमैश्वर्यम्। यतः पर एव जगत्सर्गे श्रूयते, तदुपासनेन सर्गोत्तरकालोऽपवर्ग इति। तस्मात् स्फटिकस्येव रागाद्यपकर्षणेन स्वरूपाविर्भावो ब्रह्मप्राप्तिः, ब्रह्मरूपत्वाद् विज्ञानात्मनः। तथा च "परं**

---

'नवमिदमस्तु', अपरोऽभिप्रेयात् 'पुराणमिदमस्तु'। अस्यां स्थितौ उभावव्याहतकामौ स्त इत्यत एकमेव वस्तु युगपदेव नवं पुराणं च प्रसक्तम्, तच्च विरुद्धमित्यर्थः। यदि चेदुभयोरपि अभिप्रायो नानुस्रियते, तदा उभयोरपि अनीश्वरत्वं प्रसज्येत, नास्ति तयोः कोऽपीश्वर इति।

यद्युच्यते, अनेकेश्वराणामैकमत्ये कार्यसिद्धिरेव हेतुः = प्रमाणम्, परिषद्वत्। यथा बहूनां सदस्यानामेका परिषत् किमपि कार्यं करोति तेषामैकमत्यं कार्यसिद्धिं दृष्ट्वा निश्चीयते, अन्यथा तत्कार्यमेव न सिद्ध्येत्, तथेहापि तेषामीश्वराणामैकमत्यं कार्यं दृष्ट्वा निश्चेष्यत इति, तन्न युक्तम्, तथाङ्गीकारे तेषां समुदाय एव ईश्वरो भवेत्, प्रत्येकन्तु अनीश्वरत्वमेवापद्येतेति।

यदि पूर्वोक्तो विरोधो मा भूदित्येतदर्थं पर्यायेणोभयोरीशत्वमभ्युपगम्येत तदा तयोर्मध्ये यस्यैश्वर्यमुपरतम्, तस्यैश्वर्यं क्षीणमिति पूर्वोक्तश्रुत्यनुसारं क्षय्यल्लोकत्वेन तस्य मोक्षोऽन्तवान् प्रसज्येत। मोक्षस्तु अनन्तो भवति, अपुनरावृत्तिश्रुतेः। एवमैश्वर्याभावदशायां स जगत्स्रष्टुं न प्रभवेदिति ब्रह्मैव कथं ब्रह्मसमानमैश्वर्यं तस्य स्यात्? यतो ब्रह्मैव जगत्सृजतीति श्रुतिषूच्यते। मुक्तास्तु ब्रह्मोपासनया संसारोत्तरमपवर्गसुखमात्रमनुभवन्तीति। एतत्सर्वमुक्तम्– **अथ पर्यायेणेत्यादिना।**

निष्कर्षमाह – **तस्मात् स्फटिकस्येवेति।** अर्थात् शोकमोहाद्यभावेन स्वरूपाविर्भाव एव ब्रह्मप्राप्तिरूपो मोक्षः, यतो विज्ञानात्मा ब्रह्मरूप एव परमार्थतोऽस्तीति मोक्षदशायां स्वरूपेणाविर्भावमात्रं तस्येति सिद्धान्तः। तत्र

**ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते'' (छा०८।३।४) इत्युक्तम्। अन्यरूपनिष्पत्तौ स्वशब्दानुपपत्तेः। निष्पद्यमानस्याभेदात् सम्बन्धाद् वोपपत्तिरिति चेत्, न, विशेषणानर्थक्यात् सर्वस्य तस्य निष्पद्यमानस्य स्वत्वात्। तत्र यथा मलापगमे शुक्लमेव सद् वस्त्रं 'शुक्लं जातम्' इत्युच्यते, तथा मोहावरणविगमे स्वरूपाविर्भावे ''स्वेन रूपेणाभिनिष्पद्यते'' (छा० ८।३।४) इत्युच्यते। तथा ''ब्रह्मैव सन् ब्रह्माप्येति'' (बृ० ४।४।६) इति।**

---

श्रुतिं प्रमाणयति – **''परं ज्योतिरुपसम्पद्येति''**। यदि तु ब्रह्म अन्यत् स्यात्, मुक्तश्च तत्प्राप्नोति, तदा ''स्वेन रूपेण'' इत्यत्र स्वशब्दोऽनुपपन्नः स्यात्।

शङ्कते – **निष्पद्यमानस्याभेदादिति**। निराकरोति – **नेति**। अयमाशयः – मोक्षदशायां स्वरूपनिष्पत्तिर्नाम ब्रह्मणा सहाभेदप्राप्तिः सम्बन्धप्राप्तिर्वा भवतीति न काचिदनुपपत्तिः स्वशब्दस्याभेदवाचित्वात् स्वीयेति सम्बन्धिवाचित्वाच्चेति चेत्, न, तथा सति 'स्वेन' इति विशेषणमनर्थकं स्यात्, यत आत्मा निष्पद्यमानः, आत्मीयो वा निष्पद्यमानः सर्वोऽपि 'स्व' एव भवति, स्वशब्दस्य आत्मात्मीयाभाववाचित्वात्। अतो 'निष्पद्यते' इत्येतावन्मात्रकथनेनैवोपपत्तौ 'स्वेन' इति विशेषणं निरर्थकमेव श्रुतौ स्यात्। तस्माद् नात्र श्रुतौ अभेदो वा सम्बन्धो वा मोक्षोऽभिप्रेतः, किन्तु स्वरूपाविर्भाव एवेति परमार्थः। अत्र दृष्टान्तमाह – **यथा मलापकर्षणे इति**। श्रुतिमप्याह – ''ब्रह्मैव सन् ब्रह्माप्येति'' इति। जीवस्य विद्यमानैव ब्रह्मरूपता केवलमभिव्यक्ता भवति मोक्षदशायामिति

**तदेवं स्वरूपस्थितिलक्षणत्वान्मोक्षस्य न कार्यता, प्रागपि स्वरूपस्य भावात्, आगन्तुकस्यास्वरूपत्वात्। न चान्यत्वम्, यतोऽविद्यापगम एवोक्तेन प्रकारेण मुक्तिः। अविद्या संसारः, विद्यैव चाविद्यानिवृत्तिः यद्यग्रहणमविद्या, यतो भाव एवाभावव्यावृत्तिः। अथ विपर्यासः, तथापि विरोधितत्त्वज्ञानोदय एव तन्निवृत्तिः । न हि शुक्तिकाज्ञानोत्पादादन्या रजताज्ञाननिवृत्तिस्तत्साध्या प्रयत्नान्तरसाध्या वा, तयोर्यौगपद्यात् प्रयत्नान्तरानपेक्षणाच्च।**

---

श्रुत्यर्थः। कारिकोक्तं मोक्षस्यासाध्यत्वमुपसंहरति– **तदेवमित्यादिना**। यतो मोक्षः स्वरूपावस्थितिरूपोऽतो न ज्ञानसाध्यः, ज्ञानात् प्रागपि स्वरूपस्य सद्भावात्। आगन्तुकस्य = साध्यस्य अस्वरूपत्वात्। 'न चापरः' इति कारिकांशं व्याचष्टे– **न चान्यत्वमिति**। कारिकायां नकारः काकाक्षिन्यायेनोभयत्र सम्बध्यते – मोक्षो न साध्यो न चापर इति। अथवा 'मोक्षः साध्योऽपरश्च न' इति चकारबलेनैव नञ् साध्यपदार्थेन अपरपदार्थेन च सम्बद्धो भविष्यति, यथा "रामः श्यामश्च गच्छतः" इत्यत्र चकारेणैव गमनम् उभयाभ्यां सम्बध्यते तद्वदिति बोध्यम्। अन्यत्वाभावमुपपादयति– **यतोऽविद्यापगम एवेति**। अविद्यास्तमय एव मोक्षः, संसारोऽपि अविद्यैव, अतः संसारनिवृत्तिर्मोक्ष इत्यपि सङ्गच्छते। विद्यैव चाविद्यास्तमयः संसारनिवृत्तिर्वा। यतो ब्रह्मस्वरूपाया नित्यविद्याया आविर्भाव एव मोक्षः, अतो नापरः = न विद्यातोऽन्य इत्यर्थः। मोक्षो न विद्यायाः साध्यो नापि विद्याभिन्नः किन्तु विद्यैव मोक्ष इति तात्पर्यम्।

ननु अविद्यास्तमयो मोक्षो भवतु नाम न तु विद्या मोक्ष इत्याशङ्क्य निराकरोति– **विद्यैव चाविद्यानिवृत्तिरिति**। यद्यग्रहणमविद्या विद्यैव चाविद्यानिवृत्तिरित्यन्वयः। एतदुपपादयति – यत इति। अग्रहणमविद्या चेद् अविद्यानिवृत्तिः अग्रहणाभावरूपा, अथोद् भावात्मकग्रहणरूपा, ग्रहवं च विद्यैवेति सिद्धं विद्यैव अविद्यानिवृत्तिरिति। अथ विपर्यासः, अर्थाद् विपरितज्ञानमविद्या, तथापि तद्विरोधि तत्त्वज्ञानोदय एव अविद्यानिवृत्तिरिति शब्दान्तरे विद्यैवाविद्यानिवृत्तिरित्यायातम्। दृष्टान्तमाह – त हि शुक्तिकाज्ञानोदयादन्या

**तथा च विद्याब्रह्मप्राप्त्योस्तुल्यकालता श्रूयते – "ब्रह्म वेद ब्रह्मैव भवति" (मुण्डक० ३।२।९) इति, तथा "आनन्दं ब्रह्मणो विद्वान्, न बिभेति" (तैत्तिरी० २।४।१), "तदाऽऽत्मानमेव वेदाहं ब्रह्मास्मीति तस्मात्तत् सर्वमभवत्" (बृ० १।४।१०), "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" (ईशा० ७)– वेद, भवति, विद्वान् न बिभेति, को मोहः, पश्यतः – इति पौर्वापर्याश्रवणात्। यत्तु क्वचित् पौर्वापर्य्यम् तत् 'व्यादाय स्वपिति' इति यथा।**

**नन्वेकत्वे तुल्यकालताऽप्यनुपपन्ना, न, एकस्यापि वस्तुनो भावाभावरूपेण व्यपदेशात्, यथा – 'यदा घटो नश्यति तदा कपालानि जायन्ते' इति।**

---

रजतज्ञाननिवृत्तिर्भवति। सा चाविद्यानिवृत्तिर्न विद्यया साध्या भवति, न वा केनापि प्रयत्नान्तरेण साध्या भवति। यतो विद्यैव अविद्यानिवृत्तिः, विद्याया अविद्यानिवृत्तेश्च युगपदेवं भावात्। न हि यौगपद्ये कार्यकारणभावो भवतीत्याशयः। अतो विद्यैवाविद्यानिवृत्तिरिति सिद्धम्। सा विद्यैव च मोक्षो न विद्यासाध्य इति साधूक्तम्– "साध्यो मोक्षो न चापरः" इति।

ब्रह्मप्राप्तिरूपो मोक्षो न विद्यासाध्य इत्यत्र श्रुतीः प्रमाणयति– **तथा चेति।** "तद्ध ब्रह्म वेद ब्रह्म भवति" इति श्रुत्या ब्रह्मज्ञानकाल एव ब्रह्मभवनं प्रतिपाद्यते। "आनन्दं ब्रह्मणो विद्वान् न बिभेति" इति श्रुत्या विद्वत्ताकाल एव भयरहितत्वं प्रतिपाद्यते। "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति एकत्वपश्यत्ताकाल एव मोहशोकादिराहित्यं प्रतिपाद्यते, न तु ब्रह्म वेद ब्रह्मभवनादिषु पूर्वापरभावरूपः कार्यकारणभावः श्रूयते। यत्र पौर्वापर्यं श्रूयते, यथा– "तमेव विदित्वातिमृत्युमेति" इत्यादौ, तत्र "मुखं व्यादाय स्वपिति" इत्यादाविव काल्पनिकं भेदमादाय उपपादनीयम्।

शङ्कते – **नन्विति**। अयमाशयः – ननु यदि विद्यैव मोक्षो न भिन्नस्तदाऽभेदे तुल्यकालतापि नोपपद्यते, भिन्नत्वे सत्येव सादृश्यव्यवहारात्, यथा– चन्द्रसदृशं मुखमित्यादाविति। समाधत्ते – एकस्यापि वस्तुनो भावाभावोभयरूपेण एककाल एव व्यवहारो दृश्यते। यथा 'यदा घटो नश्यति तदा कपालानि जायन्ते' इत्यत्र

**कथं तर्हि मार्गाविभागसर्गाप्ययैश्वर्यश्रुतयः ? तत्राहुः — न मार्गश्रुतयो निरुपाधिविशुद्धब्रह्मविद्याविषयाः। यत्र हि सर्वोपाधिविशुद्धमस्थूलादिकं ब्रह्मोपास्यम्, तत्र "ब्रह्मैव सन् ब्रह्माप्येति" (बृ० ४।४।६) "न तस्मात् प्राणा उत्क्रामन्ति, अत्रैव समवलीयन्ते" इति (नृसिंहोत्तरताप० ५)**

---

घटनाश एव कपालोत्पत्तिर्नान्या। न तयोर्भिन्नकालता, अत एव न तयोः कार्यकारणभावोऽपि, तद्वदिहापि बोध्यम्।

ननु विज्ञानात्मकस्य ब्रह्मणः स्वरूपाविर्भाव एव यदि विद्योदयः, विद्यैव च मोक्षस्तदा विद्याकाल एव मुच्यते, एवं तर्हि कथं तत्प्राप्तये अर्चिरादि-मार्गश्रुतिरुपपद्यते, तदानीमेव तत्रैव् मुक्तत्वात्। एवं स्वाभाविके जीवब्रह्मणोरविभागे कथं विभागस्याभावो लयः श्रूयते, "यथा सौम्य नद्यः" इति, "लोके यथा मधुकृतः" इति च। कथं "तत्तेजोऽसृजत" इति सर्गश्रुतिः, एकत्वे सर्गकर्तृत्वा-सम्भवात्। कथं च "स्वमपीतो भवति" इति स्वस्मिन्नेव स्वस्याप्ययः श्रूयते, अभिन्नत्वे तदसम्भवात्। कथं च "स स्वराड् भवति" इत्यैश्वर्यश्रुतिरुपपद्यते ? अपरिणामित्वे ऐश्वर्यविशेषानुत्पत्तेरिति आशङ्कते — **कथं तर्हीति**। अत्र मार्गश्च अविभागश्च सर्गश्च अप्ययश्च ऐश्वर्यं चेति विग्रहः।

समाधत्ते — **तत्राहुरिति**। आचार्या आहुरित्यर्थः। एतच्चादरार्थमुक्तम्, तेन ग्रन्थकृतः स्वानभिमतत्वं नाशङ्कनीयम्। प्रथमं तावद् मार्गश्रुतीरुपपादयति— **न मार्गश्रुतय इति**। अयं भावः — "शतं चैका हृदयस्य नाड्यः" इत्यादि मार्गश्रुतयो निरुपाधिविशुद्धब्रह्मविषयिण्यो न सन्ति। किन्तु विद्यायाः सगुणनिर्गुणभेदेन द्विविधत्वात् सगुणब्रह्मविषया एव मार्गश्रुतय इति बोध्यम्। निर्गुणस्य तु ब्रह्मणो गतिमेव निषेधति "ब्रह्मैव सन् ब्रह्म भवति" इति श्रुतिः। इयं हि श्रुतिः सर्वगतस्य ब्रह्मस्वरूपस्य तत्रैव देशे सुलभत्वाद् अन्यत्र गतिं निषेधति। एवं "न तस्य प्राणा उत्क्रामन्ति" इति श्रुतिरपि 'मरणकाले ज्ञानिनः प्राणा देहान्न उत्क्रामन्ति किन्तु इहैव समवलीयन्ते' इति वदन्ती विज्ञानात्मनो विदुषो गतिं निषेधति न तत्सम्बद्धो मार्गोपदेशः, किन्तु सगुणब्रह्मसम्बद्ध एवेति।

**प्राणानुत्क्रमणेन विज्ञानात्मन एवागतिरुच्यते। न हि तदगमने तदुपाधेस्तस्य ब्रह्मणो भेदेन विज्ञानात्मत्वम्। यत्र तु "मनोमयः प्राणशरीरो भारूपः" (छा० ३।१४।२) इति सोपाध्युपास्यम्, तद्विषयास्ताः। तत्र च न परं ब्रह्म गन्तव्यम्, किं तर्हि? कार्यब्रह्मलोकः।**

---

कथमेतन्निश्चीयते सगुणब्रह्मोपासकस्यैवोपदिष्टमार्गेण गमनं न निर्गुणब्रह्मोपासकस्येति शङ्कायामाह – **यत्र हीति**। विज्ञानात्मन एवागतिरिति [1]वृत्तिग्रन्थ एवकारो भिन्नक्रमः। तथा चायमर्थः – अत्रोदाहृतश्रुत्यनुसारेण ब्रह्मीभूतस्य विदुषः प्राणानुत्क्रमणेन अगतिरेवोच्यत इति। अत्र विदुषो मार्गेण गत्यभावे प्राणानुत्क्रमणं हेतुरुक्तः।

ननु मा भूत् प्राणानां गतिस्तथापि विज्ञानात्मनः किमिति गतिर्न स्यात् दिति शङ्कायामाह – **न हीति**। विज्ञानात्मनो मार्गगत्यर्थं प्राणोपाधिकत्वा-वश्यकत्वेन प्राणोपाधेरभावे तस्य ब्रह्मैक्याद् उपदिष्टमार्गेण श्रुत्युक्ता गतिर्नैव सम्भवतीत्यर्थः। अतो गत्युपपादनार्थं सोपाधिकत्वमावश्यकम्, सोपाधिकत्वे च प्राणानां गतिरपि (उत्क्रमणमपि) स्वीकार्या एव। तस्मात् सोपाधिकस्यैव मार्गगमनं सोपाधिकस्य मार्गगमनमेव न विशुद्धस्येति तात्पर्यम्। अत्रेत्थं वाक्ययोजना – तदगमने = मुक्तस्य मार्गागमने (एव) विज्ञानात्मकत्वं (सूपपन्नम्), (मार्गगमने तु) सोपाधिकस्य तस्य ब्रह्मणो भेदेन (ब्रह्मभिन्नत्वेन) विज्ञानात्मकत्वं न हि (उपपद्येतेति शेषः)।

ननु यदि विशुद्धब्रह्मोपासकस्य मुक्तस्य न मार्गगमनं तदा "शतं चैका" इत्याद्याः श्रुतयः किंविषयाः? इति शङ्कायामाह – **यत्र त्विति**। अर्थात् "मनोमयः प्राणशरीरो भारूपः" इति श्रुत्यनुसारं सोपाधि यदुपास्यं ब्रह्म, तद्विषया एव ताः श्रुतयः, तस्यां च सोपाधिकब्रह्मोपासनायां न ब्रह्म गन्तव्यम् = न ब्रह्मप्राप्तिरूपो मोक्षः, किन्तु कार्यब्रह्मलोकप्राप्तिरेव भवतीति भावः।

---

१. वृत्तिग्रन्थः = ग्रन्थकृत्कृतः स्वीयोऽयं व्याख्याग्रन्थः।

**यत्रैतच्छ्रूयते— "अरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरंमदीयं सरस्तदश्वत्थः सोमवनस्तदपराजिता पूर्ब्रह्मणः प्रभुविमितं हिरण्मयं वेश्म" (छा० ८/५/३) इति। तथा चाब्रह्मविदामपि तद्गतिश्रवणम् – "ये चामी अरण्ये श्रद्धां सत्यं तप इत्युपासते" (बृ० ६।२।१५) इति। परब्रह्मप्राप्तिस्तु नाब्रह्मविदां युज्यते।**

**"विद्यया तदारोहन्ति यत्र कामाः परागताः।**

**न तत्र दक्षिणा यान्ति नाविद्वांसस्तपस्विनः"॥ इति।**

**तथा "तमेव विदित्वाऽतिमृत्युमेति" (श्वेता० ३।८) इति वचनात्।**

---

कार्यब्रह्मलोकास्तित्वे श्रुतिं प्रमाणयति– **यत्रैतच्छ्रूयत इति**। "अरश्च ह वै" इत्यादि श्रुतिस्वरूपम् ।अयं श्रुत्यर्थः – अरनामा ण्यनामा चार्णवौ = अमृतपूर्णौ समुद्रौ ह्रदौ, इतः = पृथिव्यन्तरिक्षापेक्षया तृतीयस्यां दिवि = त्रैलोक्ये सर्वस्मादुपरि ब्रह्मणः = चतुर्मुखस्य लोके तद् ऐरम् = इराया अन्नरसस्य विकारः, मदीयं = मदकरं सरः, तत्राश्वत्थो वनस्पतिः, स च सोमसवनः = अमृतस्रवोस्ति। तत्र ब्रह्मलोके अपराजिता पूः सर्वपुरीणामुपरि वर्तमानतया दुरवगमा, तस्यां पुर्यां प्रभुणा = ब्रह्मणा विमितं निर्मितं हिरण्मयं वेश्मास्ति। तदेषां समूह एव ब्रह्मलोकः। तत्र ह्रद-महीरुह-पुरगृहाणां श्रवणाद् ब्रह्मलोक एवायमित्यर्थः।

तस्मिन् ब्रह्मलोके पञ्चाग्निविद्याभ्याससम्पन्नानाम् अब्रह्मविदामपि गमनं श्रूयते, यथा– **"ये चामी अरण्ये श्रद्धां सत्यं तप इत्युपासते"** इति। न च वाच्यम्, तल्लोकप्राप्तिरेव ब्रह्मप्राप्तिरस्तु इति, अब्रह्मविदां तेषां परब्रह्मप्राप्त्यसम्भवात्। उक्तं "ये चामी" इति श्रुतिवाक्यं पञ्चाग्निविद्यावाक्यस्यापि उपलक्षकं बोध्यम्। सगुणोपासकानामब्रह्मविदां न ब्रह्मप्राप्तिरित्यत्र वचनप्रमाणमाह– **"विद्यया"** इति, **"तमेव विदित्वा" इति चेति**। "कामाः परागताः" इत्यनेन विदुषो निष्कामत्वमुच्यते। दक्षिणाः कर्मिण इत्यर्थः। "अतिमृत्युमेति" मृत्युमत्येतीत्यन्वयः।

**अपुनरावृत्तिश्रुतिस्तर्हि कथम् ?अत्र केचिन्मन्यन्ते – क्रममुक्त्याश्रयणात् तत्प्राप्य तत्रोत्पन्ननिरुपाधितत्त्वज्ञानाः परं पदमश्नुवते। यथोक्तम्–**

**''वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वाः।**
**ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे''॥**

**(मुण्डक० ८।३।४)**

**ब्रह्मलोकेष्विति कार्यब्रह्मलोकनिर्देशः, बहुवचनात् तत्रावयवद्वारेण**

---

ननु सगुणोपासकानां यदि न परब्रह्मप्राप्तिरूपो मोक्षः, किन्तु कार्यब्रह्मलोकस्यैव प्राप्तिस्तदा कार्यब्रह्मलोकस्य महाप्रलये नाशात् तेषां संसारे पुनरावृत्तिः स्यात्। यद्येवम्, तर्हि ''इमं मानवमावर्तं नावर्तन्ते'' इति अनावृत्तिः कथमुपपद्येत? इत्याशङ्कते – **अपुनरावृत्तिश्रुतिस्तर्हि कथमिति**। अत्रैकदेशिमतेनोत्तरयति– **अत्र केचिदिति**।

अयं भावः – मुक्तिर्द्विधा सगुणोपासकानां क्रमशः, निर्गुणोपासकानां क्रममनाश्रित्य सद्योमुक्तिरिति।तत्र सगुणोपासकाः क्रममुक्त्याश्रयणात् तत्प्राप्य = ब्रह्मलोकेऽवस्थानं प्राप्य तत्रैव हिरण्यगर्भोपदेशात् सर्वोपाधिविनिर्मुक्तब्रह्म-तत्त्वज्ञानमधिगताः सन्तो महाप्रलये प्राप्ते क्रमेण परं पदं मुक्तिं प्राप्नुवन्ति। इत्थं च सद्योमुक्तानामिव क्रममुक्तानामपि पुनः संसारे आवृत्तिर्न भवतीत्य-पुनरावृत्तिश्रुतिरुपपद्यते तेषामपि विषय इति।अत्र श्रुतिमुदाहरति– **यथोक्तमिति। वेदान्तविज्ञानेत्यादि**। वेदान्तविज्ञानेन सुनिश्चितो तत्त्वमस्यादिवाक्यार्थो येषां ते उत्पन्नवाक्यार्थमात्रज्ञाना इत्यर्थः।अनुत्पन्नविशुद्धाद्वैतब्रह्मसाक्षात्कारा इति यावत्।

''ते ब्रह्मलोकेषु'' इत्यत्र ब्रह्मपदेन परं ब्रह्म मा ज्ञायि इति तद् व्याचष्टे– कार्यब्रह्मलोकेषु इत्यर्थः। बहुवचनाद् बहुत्वं प्रतीयते, तच्चैकस्मिन् निरवयवे परब्रह्मणि न सङ्गच्छते।अतोऽपि हेतोरिह कार्यब्रह्मलोका एव गृह्यन्ते। कार्यब्रह्मापि यद्यपि एकमेवास्ति तथापि ब्रह्मलोके ह्रदमहीरुहपुर–वेश्मरूपाणां तदवयवानां बहुत्वात् तदवयवबहुत्वद्वारेण बहुत्वमुपपद्यत इति।

बहुत्वोपपत्तेः। परान्तकालो महाप्रलयो ब्रह्मणः स्वाधिकारपर्यवसानम्, तस्मिन् परामृताः परब्रह्मरूपेणामृताः सन्तः संन्यासयोगाद्भेदेन परमेश्वरे स्वकृतानां कर्मणां फलानां च संन्यासात्, योगाच्च सर्वमिदं कर्त्रादिब्रह्म इत्युपासनात्। तथा च स्मृतिः –

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्॥

(कूर्म०१, खण्डः १२-२६९)

अन्ये तु मन्यन्ते– यथा चन्द्रलोके यावत्सम्पातमुषित्वा स्थित एव तस्मिन् भुक्तभोगा आवर्तन्ते, नैवं स्थित एव ब्रह्मलोके तत आवृत्तिः, किन्तु तत्प्रलयपर्यवसाना तत्र स्थितिः। तत्प्रलये हि न तत आवृत्तो

---

परान्तकालो नाम महाप्रलयः स्वाधिकारसमाप्तिः "यावदधिकारमाधिकारिकाणाम्" इति वैयासकसूत्रानुसारात्। परामृताः= कार्यब्रह्मरूपेण मरणधर्माणोऽपि परब्रह्मरूपेण अमृता इत्यर्थः। संन्यासश्च योगश्चेति तयोः समाहारः संन्यासयोगम्, तस्मादित्यर्थः। संन्यासो नाम भेदपुरस्सरं परमेश्वरे स्वकृतकर्मणां फलानां च समर्पणम्, तस्मात्। योगश्च सर्वमिदं कर्त्रादिब्रह्म इत्युपासनम्, तस्माच्च इत्यर्थः। सर्वे शुद्धसत्त्वा यतयो ब्रह्मलोके उत्पन्नविशद्धब्रह्मतत्त्वज्ञानाः सन्तो महाप्रलयान्ते निर्मुक्ता भवन्तीति वाक्यार्थः।

अत्रैव स्मृतिमपि प्रमाणयति– **"ब्रह्मणा सह"** इत्यादिम्। प्रतिसञ्चरे– महाप्रलये इत्यर्थः। कृतात्मानः= संस्कृतबुद्धयः। परस्य प्रधानस्य ब्रह्मणोऽन्ते= अधिकारसमाप्तावित्यर्थः।

अनावृत्तिश्रुतेरन्येषामभिप्रायान्तरमाह– **अन्ये तु मन्यन्त इति**। अयमभिप्रायः– यथा इष्टादिकारिणां धूमादिमार्गेण चन्द्रमण्डलमधिरूढानां स्थित एव (अनष्ट एव) चन्द्रमण्डले ततः प्रत्यवरोहणं श्रूयते–"यावत् सम्पातमुषित्वाताऽथैतमेवाध्वानं पुनरावर्तन्ते यथेतम्" इति। सम्पातः= कर्माशयः, सम्पतत्यस्माल्लोकाल्लोकान्तर-

भवति, ततश्चानावृत्तिः श्रूयते। तथा च "इमं मानवमावर्तं नावर्तन्ते" (छा०४।१५।५) इति "इमम्, इह" इति विशेषणम्(णात्) "अमृतत्वमेति" (छा०८।६।६) इत्यमृतत्वमापेक्षिकम्, यथा – "अमृता देवाः" इति। तथा च पौराणिकं स्मरणम् – "आभूतसम्प्लवं स्थानममृतत्वं हि भाष्यते" इति।

यत्तु मन्यते– सर्वगतत्वेऽपि ब्रह्मणो विकृताविकृतत्वभेदः, ततश्च देशभेदः। तथा चाविकृतस्य ब्रह्मणो देशभेदः श्रूयते – "अथ यदतः परो दिवो ज्योतिर्दीप्यते" (छा० ३।१३।७) इति। अतोऽविकृतस्य

---

मनेनेति व्युत्पत्तेः। नैवं यथापूर्वमवस्थित एव ब्रह्मलोके कार्यब्रह्मोपासकानां ततो ब्रह्मलोकादावर्तनम्, किन्तु तत्प्रलयपर्यवसाना तत्र तेषां स्थितिः। तत्प्रलयपर्यवसाना= तस्य ब्रह्मलोकस्य प्रलय एव पर्यवसानमन्तिमोऽवधिर्यस्यास्तादृशीत्यर्थः। ब्रह्मलोकस्य प्रलये जाते तु न तत आवर्तत इति ब्रह्मलोकादिहानावृत्तिः श्रुत्या उच्यते। तथा च श्रुतिः – "इमं मानवमावर्तं नावर्तन्ते" इति। इमं मानवं= मनुप्रवर्तितम् = सृष्टिचक्रं नावर्तन्ते। आवर्तन्तेऽस्मिन् जननममरणप्रबन्धचक्रारूढा घटीयन्त्रवत् पुनः पुनरित्यावर्तः, तं न प्रतिपद्यन्त इति श्रुतेरर्थः। श्रुतौ "इमम्" इति विशेषणम् "इह" इत्यस्याप्युपलक्षकम्। तेनोक्तश्रुतेरयमभिप्रायः – इममिह मानवमावर्तम्, अर्थाद् अस्यां सन्निहितायां वर्तमानमनुप्रवर्तितसृष्टौ नावर्तन्ते इति। न तु सर्वथाऽनावृत्तिस्तस्य,'इमम्' 'इह' इति विशेषनिर्देशा दिति बोध्यम्।

एवं सति "तयोर्ध्वमायन्नमृतत्वमेति" इति अमृतत्वोक्तिः कथं सङ्गच्छताम्? इति शङ्कां निरस्यति – **"अमृतत्वमेति"** इत्यमृतत्वमापेक्षिकमिति। चन्द्रलोकस्थितान् अपेक्ष्य ब्रह्मलोकस्थिता अमृता इत्यर्थः। यथा "अमृता देवाः" इति। एवंरूपेऽमृतत्वे "आभूतसम्प्लवं स्थानममृतत्वम्" इति स्मृतिः प्रमाणमित्यन्येषां मतसंक्षेपः।

इदानीं मतान्तरोक्तां मार्गश्रुतिगतिं दूषयितुमनुवदति– **यत्तु मन्यत इति**। अयमर्थः – यद्यपि परं ब्रह्म सर्वगतमस्ति, सर्वगतस्य च सर्वत्र सुलभत्वेन न तत्प्राप्तये मार्गोपदेशो युज्यते, तथापि विकृतत्वमविकृतत्वं चेति ब्रह्मणो धर्मद्वयमस्ति। अतो विभिन्नधर्मणोर्द्विविधब्रह्मणोः प्राप्त्यर्थं देशभेदेन भवितव्यम्,

**नियतदेशस्य ब्रह्मणः प्राप्तये युज्यते मार्गविशेषः। तत्सम्प्रधार्यम्। न तत्सम्प्रधार्यम्। न तावदनुत्पन्नाद्वयविशुद्धविद्यस्यायं मार्गः, ब्रह्मविदः श्रवणात्। नापि विद्यावतः, विद्योदये निखिल-भेदोच्छेदादिति। मधुनदीनिदर्शनाविभागश्रुतिरपि विवेकज्ञानाभावपरा, न तु तद्विध एवाविभागः।**

---

विरुद्धयोरेकत्रावस्थानायोगात्। तथा च अविकृतस्य शुद्धब्रह्मणो देशभेदः (देशविशेषः) श्रूयते –"अथ यदतः परो दिवो ज्योतिर्दीप्यते" इति। तस्माद् एतच्छ्रुत्यनुसारं नियतो देशो यस्य, एवंविधस्य अविकृतस्य परब्रह्मणः प्राप्त्यर्थं मार्गविशेषो युज्यते, इतीयमेव गतिर्मार्गश्रुतीनामिति मतं कस्यापि।

तदेतन्मतं विविच्य निर्धारणीयमित्याह– **तत्सम्प्रधार्यमिति**। तत्र च विकल्पद्वयं प्रदर्श्य निरस्यति– **न तावदिति**। अयं मार्गविशेषः किं विद्यारहितस्य विद्यावतो वेति विकल्पे आद्यपक्षं दूषयति– न तावद् अनुत्पन्नाद्वयविशुद्धब्रह्मविद्यस्य अर्थाद् विद्याहीनस्य श्रुत्युक्तो मार्गः, ब्रह्मविदं प्रकृत्य मार्गश्रवणात्, छन्दोगेषु परविदं प्रकृत्य "तयोर्ध्वमायन्" इति श्रवणादित्यर्थः। नापि विद्यावतो मार्गोपदेशः, विद्योदये निखिलभेदोच्छेदात्। अर्थात् तस्य विदुषोऽपि विद्यया निःशेषाविद्यानिवृत्तौ सत्याम् अविद्याजन्यस्य भेदप्रपञ्चस्य सर्वत्र विलयाद् मार्गाविशेषेण देशविशेषे गतिं विनैव इहैवाविकृतं विशुद्धं ब्रह्म सुलभमिति न तत्प्राप्तयेऽन्यत्र गतिरुपयुज्यत इति न विद्यावतः कृते मार्गोपदेशः। तस्मात् सगुणोपासकस्य कार्यब्रह्मलोक-विषयक एवायं मार्गोपदेश इति गतिविषये द्वितीयं 'यत्तु'-मतमपि निरस्तं वेदितव्यम्।

मार्गश्रुतीनां गतिमुपपाद्य अविभागप्रतिपादकश्रुत्योर्गतिमुपपादयति – **मधुनदीनिदर्शनेति**। अयमर्थः – मधुनदीदृष्टान्तेन जीवब्रह्मणोरविभागप्रतिपादिका या श्रुतिः पूर्वं प्रदर्शिता, तस्या अपि यथा मधुनि कुसुमरसानां समुद्रे च नदीनां संसर्गिद्रव्यरूपेण परस्परं प्रविभागः, तथाविध एव विभागो जीवब्रह्मणोरप्य-

**सर्गश्रुतयोऽपि न सर्गपराः। किं तर्हि? एकात्मतत्त्वप्रतिपत्ति-प्रधानाः। तदस्तदनुगुणतयैव तासामर्थव्यवस्थापनम्, न तु तद्विरोधेन। तथा हि– "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति?" (मुण्ड० १।१।३) "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" (छा० ६।२।१) इत्येकत्वेनोपक्रमात्, "ऐतदात्म्यमिदं सर्वं तत् सत्यम्, स आत्मा, तत्त्वमसि" (छा० ६।८।७) इत्युपसंहारादेकत्वेनैवैकात्म्य-तत्त्वप्रतिपत्तिपरमेकमिदं वाक्यं गम्यते। तत्र यद्यपरस्तेजप्रभृतितत्त्वसर्गः सत्यतया विधीयेत, वाक्यभेदः स्यात्।**

---

स्तीत्यत्र न तात्पर्यम्, जीवब्रह्मणोरसंसर्गिद्रव्यत्वात्। किन्तु यथा मधुसमुद्राभ्यां कुसुमरसनदीनां विवेकेन ज्ञानाभावस्तथैव जीवब्रह्मणोरपि विवेकेन ज्ञानाभाव एव तात्पर्यम्, न तु संसृष्टत्वरूपेऽविभागे। सर्वांशे सादृश्याभावेऽपि यत्किञ्चित् सादृश्येनापि दृष्टान्तत्वोपपत्तेरिति।

सर्गश्रुतीरपि अद्वयात्मतत्त्वपरतया उपपादयति– **सर्गश्रुतयोऽपीति**। अयं भावः– सर्गप्रतिपादिकाः श्रुतयो यदि सृष्टिपराः स्युस्तदा सृज्यमानप्रपञ्चस्य सत्यत्वेन अद्वैतहानिराशङ्क्येत, किन्तु ताः श्रुतयोऽपि न सर्गपराः सन्ति, प्रत्युत मुख्यतया एकमेवात्मतत्त्वमस्तीति प्रतिपादनपरा एव सन्ति।अतस्तदनुसारेणैव तासामर्थो व्यवस्थापनीयो न तु तद्विरोधेन।

एतच्च उपक्रमोपसंहारश्रुतीः समुदाहृत्य समर्थयति – **तथा हीति**। "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" ? इति, "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्" इति चोपक्रमश्रुतिभ्यां युक्तितः साक्षाच्च एक एवात्मा जगतस्तत्त्वमिति प्रतिपाद्यते। तथा "ऐतदात्म्यमिदं सर्वम्" इत्युपसंहारश्रुतिरपि आत्मैकत्वमेव प्रतिपादयति। तेनात्मैकत्वप्रतिपत्तिपरमिदं महावाक्यम्। यदि तु तेजआदिसृष्टिरपि सत्याऽस्तीति प्रतिपाद्येत तदा अत्रत्यं वाक्यं भिद्येत, तथा एकवाक्यस्य विभिन्नार्थद्वयत्वे वाक्यभेददोषप्रसङ्गः।

**अतो यथोपांशुयाजवाक्येऽजामित्वोपक्रमोपसंहारे "विष्णुरुपांशु यष्टव्यः" (तैत्ति० २।६।६) इत्यादीनि वचांसि वाक्यभेददोषात् पृथग् विधित्वमलभमानानि तादर्थ्यात्तदानुकूल्येन स्तुत्यर्थतया व्यवतिष्ठन्ते, तथा सर्गश्रुतयोऽप्येकत्वोपायतया।**

**न च विपरीतं शक्यं वक्तुम् एकत्वश्रुतिरेव भेदप्रतिपत्त्यर्थेति, सर्वत्रै-कत्वेनोपक्रमाद् उपसंहाराच्च। येनोपक्रमते येन चोपसंह्रियते, स वाक्यार्थः।**

---

उपक्रमोपसंहारयोरेकार्थत्वे तन्मध्यवर्तिवाक्यमपि तत्परमेवेति उदाहरणेन समर्थयति– **अतो यथेति**। अयमर्थः – यथा "पौर्णमासीवदुपांशुयाजः स्यात्" इत्युपांशुयाजवाक्ये अजामित्वाय एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुराडाशौ" इत्युपक्रमात् "उपांशुयाजमन्तरा यजत्यजामित्वाय" इत्युपसंहाराच्च एकवाक्य-त्वेऽवगते तन्मध्यवर्तीनि "विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय" इति वचांसि वाक्यभेददोषान्न पृथग् यागविधायकानि भवितुमर्हन्ति, पूर्ववाक्यविहितोपांशु-याजशेषत्वात्। किन्तु पूर्वविहितोपांशुयाजानुकूल्येन उपांशुयाजस्तुत्यर्थतया व्यवतिष्ठन्ते, न तु पृथग् विष्ण्वादियागविधायकानीति भावः। स्तुतेश्चायमाकारः – 'ईदृशोऽयमुपांशुयाजो महाभागो यस्मिन् इज्यमाने विष्ण्वादयोऽपि इष्टा भवन्ति' इति। तथैव "तत्ते जो असृजत्" इत्यादिसृष्टिश्रुतयो महावाक्यार्थभूतजो-सृज्यमानप्रपञ्चाभेदप्रतिपत्तिपरा एव सन्तीति। यतो हि एकत्वेनैवोपक्रमोपसंहारौ सर्वत्र श्रुतौ स्तः। येन च तौ श्रुतौ, स एव महावाक्यार्थः, यश्च वाक्यार्थः स एव प्रधानम्– यच्च प्रधानं तदङ्गत्वमेवान्यस्य सृष्टिवाक्यादेर्युक्तम्। तथा च महावाक्यार्थभूतसृज्यमानप्रपञ्चाभेदरूपैकात्मकात्मतत्त्वप्रतिपत्त्यानुकूल्येन भेदबोधकानि सृष्टिवाक्यानि एकात्मत्वोपायतया व्यवतिष्ठन्त इति बोध्यम्। कथमुपायत्वमित्यनुपदं वक्ष्यते।

ननु यदि वाक्यभेदपरिहाराय भेदप्रतिपादकसृष्टिवाक्यानि एकत्वबोधक-श्रुत्यानुकूल्येन व्यवस्थाप्यन्ते, तदा विनिगमकाभावेन विपरीतमेव किं न शक्येत? एकत्वश्रुतिरेव भेदप्रतिपत्त्यर्थाऽस्तु इति शङ्कते – **न च विपरीतमिति**। निराकरोति– **सर्वत्रैकत्वेनेति**। स्पष्टोऽर्थः। स वाक्यार्थः = एकात्मत्वमेव मुख्यो वाक्यार्थः,

**भेदप्रतिपत्तेश्चाफलत्वात्। एकत्वप्रतिपत्तेस्तु दृष्टं श्रुतं च फलं शोकादि-निवृत्तिः, विशुद्धैकात्म्यदर्शनेन तदवगमात् "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" (ईशा० ७) इति श्रवणात्। फलवदङ्गता चाफलस्य।**

**उपायत्वं च। न चेदं जगदसन्मूलम्, किं तर्हि? अद्वितीयैकसन्मूलम्। कारणाव्यतिरेकाच्च कार्यस्य सदेकमेवेदम्, घटादिवत्, मृद्रूपेण हि घटादयो**

---

भेदबोधकसृष्टिवाक्यार्थो गौणः। उपक्रमोपसंहारयोस्तात्पर्यलिङ्गत्वात्, तात्पर्य-विषयस्यैव मुख्यत्वादित्याशयः।

एवम् "फलवत्सन्निधौ अफलं तदङ्गम्" इति न्यायेनापि सृष्टिश्रुती-नामेकात्मपरत्वमेव न्याय्यम्, न विपरीतमित्याह – **भेदप्रतिपत्तेश्चाफलत्वादिति** "तत्तेजोऽसृजत्" इत्यादिश्रुतिप्रतिपाद्यं भेदज्ञानमफलम्, आत्मैकत्वज्ञानस्य तु शोकादिनिवृत्तिरेव फलं दृष्टं श्रुतञ्चास्ति। विशुद्धैकात्मत्वज्ञानेन शोकादिनिवृत्ति-फलस्यानुभूयमानत्वात्, "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति श्रुतत्वाच्चेति भावः।

"भेदबोधकानि सृष्टिवाक्यानि एकत्वोपायतया व्यवस्थितानि न भेदपराणि इत्युपपादयति– **उपायत्वं चेति**। तथा हि, नेदं जगद् असन्मूलकम्, "कथमसतः सज्जायेत" इति श्रुतिविरोधाद् युक्तिविरोधाच्च। यदि असतः किञ्चिज्जायेत, असतः शशशृङ्गादपि किञ्चिज्जायेत इति युक्तिविरोधः। एवमिदं जगद् अद्वितीयैकसन्मूलम्, "सदेवेदमग्र आसीदेकमेवाद्वितीयम्" इति श्रुतेः।

अद्वितीयैकसन्मूलत्वेन एकत्वे युक्तिं दृष्टान्तं च प्रदर्शयति – **कारणा-व्यतिरेकाच्चेति**। न हि कार्यं कारणाद् व्यतिरिक्तं भवति, कारणं च अद्वितीयैकसत् तदा कार्यभूतं जगदपि अद्वितीयैकसदात्मकमेव सदेकमेवेदम् = इदं जगद् अद्वितीयैकसदात्मकमेव न भिन्नमित्यर्थः। अत्र 'घटादिवत्' इति दृष्टान्तम् प्रकृते घटयति – **मृद्रूपेणेति**। यथा घटशरावोदञ्चनमल्लिकादीनि सर्वाण्यपि कार्याणि मृद्रूपेण एकमेव सन्ति न भिन्नानि, तथैव स्थावरजङ्गमात्मकं सर्वमपि जगद् मूलभूताद्वितीयैकसदात्मकमेव न भिन्नं कार्यस्य कारणाव्यतिरेकादिति भावः।

**नैकत्वमतिक्रामन्ति। नन्वेवं मुख्य एव कार्यकारणभाव उक्तः स्यात्। नैतत्, एकत्वावतारोपायमात्रत्वात्। न खल्वत्र कार्यकारणंभाव एव प्रतिपाद्यः, येनासौ यथाशब्दं मुख्य एव गृह्येत, एकत्वोपायत्वादित्युक्तम्। एकत्वं चानेनोपायेनावतार्यते पुरुषः। स च मुख्यः, प्रधानविरोधी।**

---

ननु जगतः सन्मूलकत्वे जगतो मुख्यमेव (वास्तवमेव) कार्यत्वम्, सतश्च मुख्यमेव (वास्तविकमेव) कारणत्वं स्यात्। इत्थञ्च जगत्सदात्मनोर्द्वयोः कार्यकारणभावो वास्तविक एव स्यात्। तथा च प्रपञ्चस्य सत्यत्वापत्त्याऽद्वितीयैकात्मतत्त्वस्य हानिः स्यादिति शङ्का– **नन्विति**। निराकरोति– **नैतदिति**। श्रुत्युक्तः कार्यकारणभावो मृद्घटादिन्यायेन एकत्वावतारस्य = आत्मैकत्वपर्यवसानस्य आत्मैकत्वनिश्चयस्य उपायमात्रम्, न तु सृष्टिवाक्यानां मुख्यः प्रतिपाद्यस्तात्पर्यविषय इति यावत्। यदि सृष्टिवाक्यानां तात्पर्यं वास्तविककार्यकारणभावप्रतिपादने भवेत्, तदा कार्यकारणभावः प्रधानः सन् प्रपञ्चसत्यत्वमापादयेत्, प्रपञ्चसत्यत्वाच्च अद्वितीयैकात्मतत्त्वं हीयेत। तस्मादेकत्वाववतारोपायत्वेनैव सृष्टिवाक्यानि व्यवस्थितानीति युक्तम्। तदुक्तं वृत्तिग्रन्थे –"एकत्वं चानेनोपायेनावतार्यते पुरुषः" इति। पुरुषः एकत्वमवतार्यते = नानात्वेन प्रतीयमानोऽपि पुरुष एकत्वेऽवस्थाप्यत इत्यर्थः। अयमाशयः– भेदाभिनिवेशप्राबल्यात् सहसैवाभेदं बोद्धुमशक्तो जनः सदुपादानतया सद्रूपेणाभिन्नं जगत् प्रतिबोध्यते मृद्घटन्यायेनेति ज्ञेयम्।

शङ्कते– **स च मुख्य इति**। ननु कार्यकारणभावो मुख्य एव सन् आत्मन एकत्वावतारे उपायो भविष्यति। तथा च कार्यकारणभावस्य मुख्यत्वेन प्रपञ्चस्य सत्यत्वमक्षुण्णं स्यादिति चेदुत्तरयति– **प्रधानविरोधीति**। 'च' शब्दो यद्यर्थे वर्तते। स कार्यकारणभावो यदि मुख्यः स्यात्, प्रधानस्य = एकत्वस्य विरोधी स्यादित्यर्थः। सृष्टिवाक्यानां मुख्यार्थत्वे "सदेवेदमग्र आसीद् एकमेवाद्वितीयम्" इति श्रुतिवाक्यार्थस्यैकत्वस्य प्रधानस्य विरोधः स्यात्। तस्मात् कार्यकारणभावः सृष्टिवाक्यानां न मुख्योऽर्थ इति भावः।

"एकमेवाद्वितीयम्" (छा० ६।२।१-२) इति पुनः पुनः श्रुतेः सर्वभेदनिरासपरत्वान्न शक्यं वक्तुम् – "कारणात्मनैकत्वम्, कार्यात्मना नानात्वम्, "तत् सत्यम्, स आत्मा" (छा० ६।८।७) इति च कारणस्यैव सत्यत्वावधारणात्। अन्यत्र च 'इन्द्रो मायाभिः' (बृ० २।५।१९) इति भेदस्य मायामयत्वश्रुतेः। साक्षाच्च भेदाभावस्य श्रवणात् "नेह नानास्ति किञ्चन" (बृ० ४।४।१९) इति। भेदाभेदयोश्च विरोधात् प्रागनुपपत्तेर्वर्णितत्वात्।

तदविरोधेन वर्ण्यते, तदुपादानमात्रतया भेदविकल्पस्य, बिम्बप्रतिबिम्बवद् वर्णपदवाक्यादिवच्च। यथा हि न बिम्बात् प्रतिबिम्बा-

---

ननु कारणात्मना सद्रूपेण एकत्वमप्यस्तु, तथा कार्यात्मना प्रपञ्चरूपेण नानात्वमप्यस्तु, को विरोध इति शङ्कायामाह – **एकमेवाद्वितीयमित्यादि**। एतस्याः श्रुतेः पुनः पुनरभ्यासात् श्रुतिरियं सजातीयविजातीयस्वगतानां सर्वविधिभेदानां निरासाद् एकान्तेन कारणात्मना एकत्वमेवास्ति प्रपञ्चस्य, न तु कार्यात्मना नानात्वमप्यस्तीति। किञ्च कार्यात्मना नानात्वमपि यदि जगतः सत्यं स्यात्, तदा धर्मिकार्यं जगदपि सत्यं स्यात्, तथा सति "तत्सत्यं स आत्मा" इति कारणस्यात्मन एव सत्यत्वप्रतिपादिका श्रुतिर्विरुध्येत। ननु यदि सर्वथा एकत्वमेव परमार्थस्तदा नानात्वस्य प्रतीयमानस्य का गतिरित्याशङ्क्याह– **अन्यत्रेति**। "इन्द्रो मायाभिः" इति श्रुतिबलात् प्रतीयमानं नानात्वं मायामयमेव न वास्तविकमित्यर्थः। साक्षादपि नानात्वाभावबोधिकां श्रुतिमुदाहरति– **"नेह नानास्ति किञ्चन"** इति। युक्तिविरोधादपि जगत्प्रपञ्चस्य कारणात्मनाऽभेदः कार्यात्मना च भेद इति भेदाभेदपक्षो नोपपद्यत इति वर्णितं प्राक् तर्ककाण्डे "एकत्वमविरोधेन" इत्यत्र।

**तदविरोधेनेति**। यंस्माद् अद्वितीयैकात्म्यमेव श्रुतीनां प्रधानं प्रतिपाद्यम्, तस्मात् तदविरोधेन = एकत्वाविरोधेन श्रुत्या कार्यकारणभावो वर्ण्यत इत्यर्थः। तदेवाह – **तदुपादानमात्रतया भेदविकल्पस्येति**। यथा रजतविकल्पस्य

**नामुत्पत्तिर्नानारूपाणाम्, बिम्बोपादानमात्रतया प्रतिबिम्बभेद- विकल्पस्य। न हि बिम्बात् परस्परतो वा व्यावृत्तानि कानिचिद् वस्तूनि प्रतिबिम्बानि। बिम्बोपादानन्तु तन्नानानिर्भासमात्रम्। तथा न वर्णेभ्यः पदवाक्य-प्रकरणादीनि कानिचिद् वस्तूनि सन्ति, तदुपादानमात्रत्वात् तत्कल्पनायाः 'वर्णेभ्यः पदानि निष्पद्यन्ते पदेभ्यो वाक्यम्' इत्युच्यते।**

**अपि च स्वप्नेऽपि सृष्टिः श्रूयते "न तत्र रथा न रथयोगा न पन्थानो भवन्ति, अथ रथान् रथयोगान् पथः सृजते" (बृ०४।३।१०) इति, तद्वदेषा स्यात्, अन्यपरत्वात्। स्वयमेव "वाचारम्भणं विकारो नामधेयम्" (छा०६।१।४) इति विकारासत्यतया न पारमार्थिकीत्युक्तम्।**

---

शुक्तिरधिष्ठानमिति रजतविकल्पः शुक्त्युपादानस्तथा प्रपञ्चविकल्पस्य ब्रह्म अधिष्ठानम् इति जगत्प्रपञ्चविकल्पो ब्रह्मोपादानः। इत्थञ्च प्रपञ्चविकल्पस्य ब्रह्मोपादानमात्रतया विकल्पविषयः प्रपञ्चोऽपि रजतवदेव न स्वतन्त्रास्तित्वं भजत इत्यर्थः। अत्र ग्रन्थकारः स्वयं दृष्टान्तद्वयमुदाहरति– **बिम्बप्रतिबिम्बवद् वर्णपदवाक्यादिवच्चेति**। यथा च बिम्बात् प्रतिबिम्बानि सम्भूतानीति उच्यन्ते, न च परमार्थतः प्रतिबिम्बानि भवन्ति, तथा "आत्मन आकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः" इत्युच्यते, न चाकाशादीनां पारमार्थिकी सत्ताऽस्तीति।एवमेव पदवाक्यप्रकरणाद्युत्पत्तिव्यवहारोऽपि कल्पनामात्रं न पारमार्थिक इति ज्ञेयम्। अत्रैव श्रुत्युक्तं दृष्टान्तमाह – **अपि चेति**। स्वप्नेऽपि रथादिसृष्टिरस्तीति श्रूयते, किन्तु न सा सृष्टिः पारमार्थिकी। यथा–न तत्र रथा न रथयोगा न पन्थानो भवन्तीति। तद्वदेव एषा आकाशादिभूतसृष्टिरपि न पारमार्थिकीति बोध्यम्। अन्यपरत्वादिति = आत्मैकतत्त्वपरा हि आत्मन आकाशादिभूतसृष्टिश्रुति, आत्मोपादानमात्रत्वाद् नातिरिक्ता भूतसृष्टिरिति यावत्। यथा मृदो घटादिसृष्टिर्मृदैकतत्त्वान्नातिरिक्ता, तद्वदिति भावः। रथे युज्यन्त इति रथयोगा अश्वा इत्यर्थः। किञ्च स्वयमेव "वाचारम्भणं विकारो नामधेयम्" इति श्रुतिर्विकारमात्रस्यासत्यतां तत्कारणस्य पारमार्थिकतां मृद्घटदृष्टान्तेनाहेति च द्रष्टव्यम्।

ऐश्वर्यश्रुतिष्वपि सगुणविद्याविपाकोऽयं श्रूयते – "स एकधा भवति त्रिधा भवति" (छा०७।२६।२) "सर्वांश्च कामानाप्नोति" (छा०८।७।१) "स स्वराड् भवति" (छा०७।२५।२) इति, न तु मोक्षः। स हि निरुपाधिब्रह्मविद्यानिमित्त एव। यदपि क्वचिद-पुनरावृत्तिश्रवणम्, तस्यापि द्वयी गतिर्व्याख्यातेत्येकं दर्शनम्।

अन्ये तु मन्यन्ते– आविर्भूतब्रह्मरूपो ब्रह्मणः सर्वात्मत्वात्, सर्वेशितृत्वाच्च सर्वोपभोगानां च भोक्तृत्वात् तदानन्दमात्रारूपत्वाद् देवाद्यानन्दानां "सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" (छा०८।७।१) "स स्वराड् भवति" (छा०७।२५।२) इति तस्य तत्सङ्कीर्तनं ब्रह्मरूपाविर्भाव-लक्षणमोक्षप्रशंसार्थम्।

---

आत्मैकबोधोपायतया सृष्टिप्रतिपादकश्रुतीनां गतिमुक्त्वा इदानीम् ऐश्वर्य-गतिमाह – **ऐश्वर्यश्रुतिष्वपीति**। अयमर्थः – "स एकधा भवति त्रिधा भवति" "सर्वांश्च कामानाप्नोति", "स्वराड् भवति" इत्यादिश्रुतिभिरुक्तम् ऐश्वर्यं सगुणविद्याया एव विपाकः फलम्। मोक्षस्तु फलं निर्गुणविद्याया एव। अतो भेदपराणाम् ऐश्वर्यश्रुतीनां न मोक्षफलनिमित्तभूताया निरुपाधि(निर्गुण)ब्रह्मविद्याया आत्मैकत्वविषयिण्या जननीभिरभेदश्रुतिभिर्विरोधो भिन्नफलत्वात्। न वा कार्यब्रह्मलोकप्राप्तिरेव मोक्षः। किन्तु निरुपाधिब्रह्मात्मैक्यविद्योदय एव मोक्षः। तस्मिन् सत्येव अपुनरावृत्तिश्रुतेः। यदपि क्वचित् सगुणविद्ययाऽपि अपुनरावृत्तिः फलं श्रूयते, यथा–"इमं मानवमावर्तं नावर्तन्ते" इति, सा अपुनरावृत्तिर्द्विधा सङ्गमयितव्या–एका क्रममुक्त्यभिप्रायेण द्वितीया च महाप्रलयात् पूर्वमपुनरावृत्ति-रित्यभिप्रायेण महाप्रलयानन्तरं तु पुनरावृत्तिरेवेति। एतच्च पूर्वमुपपादितम्। ऐश्वर्यगतिसम्बन्धे इदमेकं मतं बोध्यम्।

ब्रह्मरूपाविर्भावो मोक्ष इत्यन्येषामेकदेशिनां मतानुसारेण ऐश्वर्यश्रुतीनां गतिमाह– **अन्ये त्विति**। ज्ञानैश्वर्यानन्दभोगा हि ब्रह्मणो रूपाणि सन्ति। यस्य विदुषस्तानि ब्रह्मणो रूपाणि आविर्भवन्ति, आविर्भूतब्रह्मरूपः स मुक्तपुरुषो

**ननु सर्वात्मत्वेन सर्वकामावाप्तौ सर्वशोकमोहाद्याप्तिरपि स्यात्, न, तेषामब्रह्मरूपत्वात् अविद्याध्यस्तत्वात् । ज्ञानैश्वर्यानन्दभोगास्तु ब्रह्मणो रूपम्, "विज्ञानमानन्दं ब्रह्म" (बृ० ३।९।२८-७) "नान्योऽतोऽस्ति द्रष्टा" (बृ०३।७।२८) "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" (बृ०४।३२) "सर्वस्येशानः (बृ०५।६।१) "एतस्य वा अक्षरस्य प्रशासने गार्गि" (बृ०३।८।९) इत्यादिश्रुतिभ्यः।**

**तथा च यत्किञ्चिदीश्वरत्वं यच्च विज्ञानं यश्चानन्दो ब्रह्मादिषु**

---

ब्रह्मणः सर्वात्मत्वात् सर्वात्मा भवति, ब्रह्मणः सर्वेशितृत्वात् सर्वेशिता भवति, ब्रह्मणः सर्वभोगानां भोक्तृत्वात् सर्वभोगभोक्ता भवति । तत्र हेतुः – देवाद्यानन्दानां तस्य ब्रह्मण एवानन्दस्य मात्रारूपत्वादिति । अतो यत्किञ्चिद् ईश्वरत्वादिकं ब्रह्मादिस्थावरपर्यन्तेषु भूतेषु अस्ति, तत्सर्वं ब्रह्मणि समाहितमस्ति, यच्च ब्रह्मणि अस्ति, तत्सर्वमपि आविर्भूतब्रह्मरूपो विद्वान् प्राप्नोति ब्रह्मणः सर्वात्मत्वात् । तथा च श्रुतिः – "सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्" इति, "स स्वराड् भवति" इति च । इयं हि श्रुतिः आविर्भूतब्रह्मरूपस्य मुक्तस्य तस्य विदुषः सर्वलोकप्राप्तिं सर्वकामप्राप्तिं स्वराड्भवनं च सङ्कीर्तयन्ती ब्रह्मरूपाविर्भावलक्षणं मोक्षं प्रशंसतीति ज्ञेयम् । अयमाशयः – अविद्याभूमावेव शुभकर्मवशात्, तत्तत्कामप्राप्त्या ये आनन्दास्ते सर्वे ब्रह्मानन्द एव, "एतस्यैवानन्दस्य" इति श्रुतिबलात् । अत एवोच्यते भूतपूर्वगत्या "स सर्वान् कामान् अवाप्नोति" इति, न तु अविद्यावस्थायामिव स्वरूपेणैव सर्वान् कामानवाप्नोति स मुक्ताविति ।

ननु सर्वात्मत्वेन यदि सर्वान् कामानवाप्नोति तदा सर्वात्मत्वेनैव हेतुना अशुभकर्मभ्यः सर्वान् शोकमोहादीनपि प्राप्नुयान्मुक्त इति मोक्षे दुःखमपि स्यादिति शङ्कते – **नन्विति** । निराकरोति – **नेति** । अयमर्थः – न हि विज्ञानैश्वर्यानन्दभोगा इव शोकमोहादयोऽपि ब्रह्मणो रूपाणि, शोकादीनामविद्याध्यस्तत्वात् । विज्ञानैश्वर्यानन्दभोगानां ब्रह्मरूपत्वे श्रुतीरुदाहरति – "विज्ञानमानन्दं ब्रह्म" इत्याद्याः । शोकादीनां ब्रह्मरूपत्वे तु नास्ति काचित् श्रुतिः प्रमाणम् । प्रत्युत तन्निषेध एव श्रूयते "तत्र को मोहः कः शोकः" इत्यादौ ।

**स्थावरान्तेषु भूतेषु, ब्रह्मणि तानि। तान्याविर्भूतब्रह्मरूपः समनुश्ते इति युक्तम्। शोकादयस्त्वविद्याध्यस्ता न ब्रह्मस्वरूपम्। ते कथमाविर्भूतब्रह्मस्वरूपमास्कन्देयुः ?**

**ननु प्रपञ्चशून्यस्याद्वैतस्य ब्रह्मरूपस्य ज्ञेयाभावादीशितव्याभावाच्च विज्ञानमैश्वर्यं चानुपपन्नम्, तत्र "सर्वज्ञः" (मुण्ड. १/१/९) "सर्वेश्वरः" (माण्डू० ६) इत्यपि श्रुती समाधेये एव। नैतत् सारम्। यतो नेशितव्यकृतमीश्वरत्वम्, ज्ञेयकृतं वा ज्ञातृत्वम्, किन्तु सिद्धेन ज्ञानरूपेण सिद्धया चेशनशक्त्या ज्ञेयमवाप्नोति, ईशितव्यं च विनियुङ्क्ते प्रशास्ति च, प्रकाशदाहवत्। सिद्धेन हि प्रकाशरूपेण प्रकाश्यं प्रकाशयति विवस्वान्, न तु प्रकाश्याधीनं तस्य प्रकाशरूपम्, दाह्याधीना वा अग्नेर्दाहशक्तिः।**

---

निष्कर्षमाह – **तथा चेति**। ब्रह्मादि-स्थावरपर्यन्तेषु यान्यैश्वर्यादीनि भवन्ति, तानि सर्वाणि ब्रह्मण एव ।तान्येव च आविर्भूतब्रह्मरूपो मुक्तः समश्नुतेऽवाप्नोतीति युक्तम्। शोकादीनि त्वविद्याध्यस्तत्वान्न ब्रह्मणः स्वरूपाणि। तस्माद् आविर्भूतब्रह्मस्वरूपं मुक्तजनं ते कथम् आस्कन्देयुः = सङ्क्रमेयुरिति भावः।

प्रपञ्चशून्ये विशुद्धेऽद्वैते ब्रह्मणि ज्ञेयस्य विषयस्याभावाद् ईशितव्यवस्तुनश्चाभावाद् विज्ञानम् = सर्वज्ञत्वम् ऐश्वर्यम् = सर्वेश्वरत्वं च ब्रह्मणो नोपपद्येते। एवं सति "सर्वज्ञः", "सर्वेश्वरः" इति श्रुत्योः का गतिरित्यपि समाधेयमेवेति शङ्कते – **नन्विति**। परिहरति – **नैतत् सारमिति**। अयं समाधानार्थः – **ब्रह्मणः** सर्वेश्वरत्वं न ईशितव्याधीनं न वा ज्ञातृत्वम् = सर्वज्ञत्वं ज्ञेयकृतम् = ज्ञेयाधीनम्, किन्तु स्वतःसिद्धं तस्य ज्ञानरूपं स्वतःसिद्धा चेशनशक्तिः। ततो हि परमार्थतो विषयाभावेऽपि आविद्यकं ज्ञेयप्रपञ्चमवाप्नोति = अवभासयतीति तस्य सर्वज्ञत्वमुपपन्नम्। एवमद्वये ब्रह्मणि ईशितव्याभावेऽपि आविद्यकमेव ईशितव्यं विनियुङ्क्ते = प्रशास्तीत्यर्थः। अत्रोभयमपि दृष्टान्तद्वयेन समर्थयति – **प्रकाश-**

**तथा च तच्चैतन्येनैव कृत्स्नस्य प्रपञ्चस्यावभासनात् "तस्य भासा सर्वमिदं विभाति" (कठ० ५।१५) "नान्योऽतोऽस्ति द्रष्टा" (बृ० ३।७।२३) इत्यादिश्रुतेः सर्वज्ञत्वम्। सर्वेश्वरत्वमपि तदैश्वर्येणैव यथायथमीश्वरैरीशितव्यानामीशनात्। एवञ्च "एष भूताधिपतिः" (बृ० ४।४।२२) "एष लोकपालः" (कौष० ३।८) इति ब्रह्मेन्द्रयमादीनां चैश्वर्यमुक्तम्।**

**सर्वकामावाप्तिश्च तदीयत्वाद् देवाद्यानन्दस्य। कामेष्वानन्दप्राप्त्या कामा आप्ता भवन्ति, न स्वरूपेण। एवं "स तत्र पर्येति जक्षन् क्रीडन् रममाणः स्त्रीभिर्वा" (छा० ८।१२।३) इति वर्णनीयम्, तद्विषया-**

---

**दाहवदिति**। प्रकाशवद् दाहवच्चेत्यर्थः। स्पष्टमन्यत्। "दाह्याधीना वा" इत्यतः पूर्वमपि "न तु" इति योजनीयम्।

दृष्टान्तद्वयं प्रदर्श्य दार्ष्टान्तिकद्वयं प्रदर्शयति – तत्रोभयविधां श्रुतिं च प्रमाणयति – **तथा चेत्यादिना**। "तस्य भासा" इति, "नान्योऽतोऽस्ति द्रष्टा" इति च श्रुती सर्वज्ञत्वे प्रमाणम्। "एष भूताधिपतिः, "एष लोकपालः" इति श्रुतिद्वयं सर्वेश्वरत्वे प्रमाणम्। ब्रह्मेन्द्रयमादिभिरीश्वरैः पृथक् पृथग् यद् ईशितव्यानामीशनं क्रियते, तदपि ब्रह्मण एव ऐश्वर्येण, न तु तेषां स्वत ऐश्वर्यमस्तीति सिद्धं ब्रह्मणः सर्वेश्वरत्वम्। "एष भूताधिपतिः, "एष लोकपालः" इति श्रुत्योरर्थः– ब्रह्मैव वस्तुतो भूताधिपतिः, ब्रह्मैव वस्तुतो लोकपालः, ब्रह्मेन्द्रयमादयस्तु तदैश्वर्येणैव शासति, राजैश्वर्येणामात्यवदित्याशयः।

मुक्तावाविर्भूताद्वयब्रह्मस्वरूपं प्रति सर्वकामावाप्तिश्रुतिरनुपपन्ना मुक्तं प्रति स्वर्गादिकामस्याभावादित्याशङ्क्य तामप्युपपादयति – **सर्वकामावाप्तिश्चेति**। अर्थाद् देवादीनां य आनन्दः स ब्रह्मण एवानन्दस्यांशरूपः। कामेषु सत्सु एष आनन्दः प्राप्यते, अत आनन्दे प्राप्ते कामाः प्राप्ता इत्युच्यते। आनन्दप्राप्तिरेव कामप्राप्तिः– न तु मुक्तैः स्वरूपेण स्त्र्यादिकामसंसर्गः प्राप्यत इति। अत

**नन्दभोगात्, न तु स्त्र्यादियोगः। यथा "आत्मरतिरात्मक्रीड आत्ममिथुनः" (छा० ७।२५।२) इति। न हि मुख्यमात्मक्रीडत्वमात्ममिथुनत्वं वा सम्भवति।**

**यतश्चानवच्छिन्नानि तदीयान्येव सर्वभूतेषु ज्ञानादीनि कल्पितावच्छेदानि, अतो यत्र यत्र नात्यन्तमवच्छेदः समुत्कर्षात्तेषां तानि तानि प्रत्यासत्तेर्भूतान्यात्मत्वेन भगवानुक्त्वा – "मुनीनामप्यहं व्यासः" (गी० १०।३७) इत्यादि, उपसंजहार – "यद्यद्विभूतिमत् सत्त्वम्" (गी० १०।४१) इति। तथा "अदृष्टं द्रष्टृ, अश्रुतं श्रोतृ" (बृ०३।८।११) इत्यादि, सर्वभूतदर्शनादीनां तच्चैतन्यनिबन्धनत्वात्।**

---

आविर्भूतब्रह्मस्वरूपो विद्वान् यत् सर्वान् देवाद्यानन्दान् प्राप्नोति, तदेव "सर्वान् कामानवाप्नोति" इति श्रुत्या उच्यत इति भावः।

अनयैव रीत्या "स तत्र पर्येति जक्षन्", "आत्मरतिरात्मक्रीड" इत्यादिश्रुत्यन्तरस्याप्यभिप्रायो वर्णनीय इत्याह – **एवमिति**। न हि मुक्तौ विदुषः स्त्र्यादियोगः, मुख्यमात्मक्रीडत्वमात्ममिथुनत्वं वेति भावः। पर्येति = पर्यायेण व्यवहरति इन्द्राद्यात्मना इत्यर्थः।

यतश्च तदीयान्येव = भगवदीयान्येव अनवच्छिन्नानि = अपरिच्छिन्नानि ज्ञानादीनि सर्वभूतेषु सावच्छिन्नानि भवन्ति। तत्रापि देहादिपरिच्छेदः कल्पित एव, न हि भगवदीयं ज्ञानादि वस्तुतः परिच्छिन्नं भवतीति। अत एव = कल्पितावच्छेदकारणादेव यत्र यत्र भूतेषु व्यासादिषु नात्यन्तमवच्छेदो ज्ञानादीनां किन्तु अतिशयेन समुत्कर्ष एव भवति। अत एव च तानि तानि व्यासादिभूतानि भगवतो ब्रह्मणो अतिप्रत्यासन्नानि = सन्निहितानि भवन्ति। अतिप्रत्यासन्नत्वाच्च भगवान् तानि आत्मत्वेन वक्ति गीतासु – **"मुनीनामप्यहं व्यासः"** इति। उक्त्वा चोपसंहरत्यचावसाने – **"यद्यद्विभूतिमत् सत्त्वम्"** इति। एवम् अपरिच्छिन्नं ब्रह्मचैतन्यमेव कल्पितावच्छेदं सत् "अदृष्टं द्रष्टृ अश्रुतं श्रोतृ" इत्यादिश्रुतिषु द्रष्टृत्व – श्रोतृत्वादिरूपेण व्यपदिश्यते, सर्वभूतकर्तृकदर्शनश्रवणादीनां ब्रह्मचैतन्यनिमित्तकत्वादिति ज्ञेयम्।

**अन्ये त्वाहुः– यावान् कश्चित् परस्मिन्नामरूपाश्रयो व्यपदेशः, सर्वोऽसावाध्यानाय। यथा "योऽसावादित्ये पुरुषः" (बृ० ३।९।१२) "हिरण्यश्मश्रुः" (छा० १।६।६) इत्यादि। न हि स्वमहिमप्रतिष्ठस्य परस्य देशविशेषावरोधः, सर्वविशेषातिगस्य च रूपविशेषयोगः। परश्चैषः, सर्वपाप्मोदयश्रुतेः– "उदितः सर्वेभ्यः पाप्मभ्यः" (छा० १।६।७) इति। आध्यानन्तु तथा विधीयते। तथा सर्वज्ञत्वाद्यपि द्रष्टव्यमिति। तदेवं ब्रह्मात्मनस्तद्रूपाविर्भावस्तत्प्राप्तिः, स मोक्षः। सा च विद्यैव। तस्मान्न साध्यो मोक्षः, न च विद्याया अन्य इति पुष्कलम्।**

---

सर्वज्ञत्वादिव्यपदेशस्य गत्यन्तरं मतान्तरेणाह– **अन्ये त्वाहुरिति**। परस्मिन् ब्रह्मणि नामरूपे आश्रयौ यस्य स इति व्युत्पत्त्या नामरूपाश्रितो यावान् कश्चिद् व्यपदेशोऽस्ति श्रुतिषु, सर्वोऽप्यसौ व्यपदेश आध्यानाय ध्यानायैवास्ति। ध्यानविधायकश्रुती उदाहरति– "योऽसावादित्ये पुरुषः" इति, "हिरण्यश्मश्रुः" इति चेति।व्यपदेशस्य ध्यानायत्तत्वमुपपादयति – **न हीति**। स्वमहिम्नि एव प्रतिष्ठा यस्य, तादृशस्याधारानपेक्षस्य परब्रह्मणः "आदित्ये" इति देशविशेषनियमः "हिरण्यश्मश्रुः" इति रूपविशेषयोगो नैव सम्भवतीत्यर्थः। कथं न सम्भवतीत्यत्र हेतुमाह– **परश्चैष इति**। यत एषः = श्रुत्युक्तः पुरुषः परब्रह्मैव विवक्षितः "उदितः सर्वेभ्यः पाप्मभ्य" इति सर्वपाप्मोदयश्रवणात्। पाप्मशब्देन पुण्यमप्युपलक्षितम्। तेन सर्वपुण्यपाप्मभ्योऽसंस्पृष्ट इत्यर्थः। आध्यानन्तु तथा विधीयते। अर्थात् तस्य परब्रह्मणो देशविशेषाश्रितत्वेन रूपविशेषयुक्तत्वेन च ध्यानं करणीयमिति।एवमेव सर्वज्ञत्वसर्वेश्वरत्वादिकमपि ध्यानार्थमेव परब्रह्मणः प्रतिपादितमिति द्रष्टव्यम् इत्यन्येषामाचार्याणां मतमस्ति।

तदेवं ब्रह्मात्मनः = ब्रह्मभूतस्य विदुषो ब्रह्मस्वरूपाविर्भाव एव ब्रह्मप्राप्तिरूपो मोक्ष इति पक्षे मार्गादिश्रुतीनां गतिरुपपादिता। तेन तथाविधा ब्रह्मप्राप्तिरेव मोक्ष इति सिद्धान्तः। सा च ब्रह्मप्राप्तिर्न विद्यासाध्या, किन्तु विद्यास्वरूपैवेति न साध्यो मोक्षो न वा विद्याया अन्य इति सिद्धम्।

अथ मतम् – मा भूद्द मोक्षः साध्यः, बन्धहेतुक्षयस्तु साध्यते, तत्साधनमात्मदर्शनं स्यात् । श्रूयते च तस्य फलं बन्धहेतूनां कर्मणां क्षयः – "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (मुण्ड० २।२।८) तथा "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" (छा० ५।२४।३)। पाप्मशब्देन पुण्यमपि सङ्गृहीतम्, सावद्यफलत्वात् । अन्यत्र च "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्" (छा० ८।४।१) इत्युपक्रम्य "सर्वे पाप्मानोऽतो निवर्तन्ते" (छा० ८।४।१) इत्युपसंहारात् । न च तत्क्षयमन्तरेण क्षेमप्राप्तिः। अतोऽवश्यकर्त्तव्यः।

---

बन्धहेतुक्षय एव मुक्तिस्तत्साधनं चात्मसाक्षात्कार इति बन्धहेतुक्षयार्थमेव आत्मसाक्षात्कारः श्रुत्या विधीयते "आत्मा प्रतिपत्तव्यः" इति मतान्तरमुत्थापयति – **अथ मतमिति**। ब्रह्मस्वरूपाविर्भावलक्षणो मोक्षः साध्यो न भवतु नाम, बन्धहेतूनां कर्मणां क्षयस्तु साध्यो भविष्यत्यात्मदर्शनेनेत्यर्थः। आत्मदर्शनस्य फलं बन्धहेतूनां कर्मणां क्षय इत्यत्र श्रुतिं प्रमाणयति – **"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"** इति। परः – हिरण्यगर्भादिः, अवरः = निकृष्टो यस्मात् तत् परावरं ब्रह्म तस्मिन् दृष्टे – साक्षात्कृते इत्यर्थः। अनारब्धफलानां सञ्चितकर्मणां विद्यया दाहे श्रुत्यन्तरं प्रमाणयति – **'तद्यथेषीकातूलमिति**। अत्र श्रुत्युक्तपाप्मशब्देन पुण्यस्यापि सङ्ग्रहात् पुण्यमपि विद्यया दह्यत इति श्रुत्यर्थो बोध्यते। पुण्यस्यापि सङ्ग्रहे हेतुमाह – **सावद्यफलत्वादिति**। सावद्यम् = सदोषं फलं यस्येति विग्रहः। दोषाश्च क्षयित्व-सातिशयत्व-साधनपारतन्त्र्यादयः पुण्यकर्मणामपि भवन्ति। पुण्यपाप्मनोः सह ग्रहणे उपक्रमोपसंहारश्रुती प्रमाणयति – **अन्यत्र चेति**। "नैतं सेतुम्" इत्युपक्रमश्रुतिः "सर्वे पाप्मानोऽतो निवर्तन्ते" इत्युपसंहारश्रुतिः।

सर्वविधकर्मक्षयस्य साध्यत्वे श्रुतिमुक्त्वा युक्तिमप्याह – **न चेति**। अयं भावः – ब्रह्मविद्यायाः फलं क्षेमप्राप्तिराम्नाता। पाप्मक्षये सत्यपि यावत्पुण्यस्यापि क्षयो न स्यात्, तावत् सा ब्रह्मविद्या क्षेमाय न कल्पते, पापपुण्ययोरुभयोः

**अन्ये त्वाहुः– यावान् कश्चित् परस्मिन्नामरूपाश्रयो व्यपदेशः, सर्वोऽसावाध्यानाय। यथा "योऽसावादित्ये पुरुषः" (बृ० ३।९।१२) "हिरण्यश्मश्रुः" (छा० १।६।६) इत्यादि। न हि स्वमहिमप्रतिष्ठस्य परस्य देशविशेषावरोधः, सर्वविशेषातिगस्य च रूपविशेषयोगः। परश्चैषः, सर्वपाप्मोदयश्रुतेः– "उदितः सर्वेभ्यः पाप्मभ्यः" (छा० १।६।७) इति। आध्यानन्तु तथा विधीयते। तथा सर्वज्ञत्वाद्यपि द्रष्टव्यमिति। तदेवं ब्रह्मात्मनस्तद्रूपाविर्भावस्तत्प्राप्तिः, स मोक्षः। सा च विद्यैव। तस्मान्न साध्यो मोक्षः, न च विद्याया अन्य इति पुष्कलम्।**

---

सर्वज्ञत्वादिव्यपदेशस्य गत्यन्तरं मतान्तरेणाह– **अन्ये त्वाहुरिति**। परस्मिन् ब्रह्मणि नामरूपे आश्रयौ यस्य स इति व्युत्पत्त्या नामरूपाश्रितो यावान् कश्चिद् व्यपदेशोऽस्ति श्रुतिषु, सर्वोऽप्यसौ व्यपदेश आध्यानाय ध्यानायैवास्ति। ध्यानविधायकश्रुती उदाहरति– "योऽसावादित्ये पुरुषः" इति, "हिरण्यश्मश्रुः" इति चेति। व्यपदेशस्य ध्यानायत्तत्वमुपपादयति – **न हीति**। स्वमहिम्नि एव प्रतिष्ठा यस्य, तादृशस्याधारानपेक्षस्य परब्रह्मणः "आदित्ये" इति देशविशेषनियमः "हिरण्यश्मश्रुः" इति रूपविशेषयोगो नैव सम्भवतीत्यर्थः। कथं न सम्भवतीत्यत्र हेतुमाह– **परश्चैष इति**। यत एषः = श्रुत्युक्तः पुरुषः परब्रह्मैव विवक्षितः "उदितः सर्वेभ्यः पाप्मभ्य" इति सर्वपाप्मोदयश्रवणात्। पाप्मशब्देन पुण्यमप्युपलक्षितम्। तेन सर्वपुण्यपाप्मभ्योऽसंस्पृष्ट इत्यर्थः। आध्यानन्तु तथा विधीयते। अर्थात् तस्य परब्रह्मणो देशविशेषाश्रितत्वेन रूपविशेषयुक्तत्वेन च ध्यानं करणीयमिति। एवमेव सर्वज्ञत्वसर्वेश्वरत्वादिकमपि ध्यानार्थमेव परब्रह्मणः प्रतिपादितमिति द्रष्टव्यम् इत्यन्येषामाचार्याणां मतमस्ति।

तदेवं ब्रह्मात्मनः = ब्रह्मभूतस्य विदुषो **ब्रह्मस्वरूपाविर्भाव** एव ब्रह्मप्राप्तिरूपो मोक्ष इति पक्षे मार्गादिश्रुतीनां गतिरुपपादिता। तेन तथाविधा **ब्रह्मप्राप्तिरेव** मोक्ष इति सिद्धान्तः। सा च ब्रह्मप्राप्तिर्न विद्यासाध्या, किन्तु विद्यास्वरूपैवेति न साध्यो मोक्षो न वा विद्याया अन्य इति सिद्धम्।

**अथ मतम् – मा भूद् मोक्षः साध्यः, बन्धहेतुक्षयस्तु साध्यते, तत्साधनमात्मदर्शनं स्यात्। श्रूयते च तस्य फलं बन्धहेतूनां कर्मणां क्षयः – "क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (मुण्ड० २।२।८) तथा "तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते" (छा० ५।२४।३)। पाप्मशब्देन पुण्यमपि सङ्गृहीतम्, सावद्यफलत्वात्। अन्यत्र च "नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्" (छा० ८।४।१) इत्युपक्रम्य "सर्वे पाप्मानोऽतो निवर्तन्ते" (छा० ८।४।१) इत्युपसंहारात्। न च तत्क्षयमन्तरेण क्षेमप्राप्तिः। अतोऽवश्यकर्त्तव्यः।**

---

बन्धहेतुक्षय एव मुक्तिस्तत्साधनं चात्मसाक्षात्कार इति बन्धहेतुक्षयार्थमेव आत्मसाक्षात्कारः श्रुत्या विधीयते "आत्मा प्रतिपत्तव्यः" इति मतान्तरमुत्थापयति – **अथ मतमिति**। ब्रह्मस्वरूपाविर्भावलक्षणो मोक्षः साध्यो न भवतु नाम, बन्धहेतूनां कर्मणां क्षयस्तु साध्यो भविष्यत्यात्मदर्शनेनेत्यर्थः। आत्मदर्शनस्य फलं बन्धहेतूनां कर्मणां क्षय इत्यत्र श्रुतिं प्रमाणयति – **"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"** इति। परः – हिरण्यगर्भादिः, अवरः = निकृष्टो यस्मात् तत् परावरं ब्रह्म तस्मिन् दृष्टे – साक्षात्कृते इत्यर्थः। अनारब्धफलानां सञ्चितकर्मणां विद्यया दाहे श्रुत्यन्तरं प्रमाणयति – **'तद्यथेषीकातूलमिति**। अत्र श्रुत्युक्तपाप्मशब्देन पुण्यस्यापि सङ्ग्रहात् पुण्यमपि विद्यया दह्यत इति श्रुत्यर्थो बोध्यते। पुण्यस्यापि सङ्ग्रहे हेतुमाह – **सावद्यफलत्वादिति**। सावद्यम् = सदोषं फलं यस्येति विग्रहः। दोषाश्च क्षयित्व-सातिशयत्व-साधनपारतन्त्र्यादयः पुण्यकर्मणामपि भवन्ति। पुण्यपाप्मनोः सह ग्रहणे उपक्रमोपसंहारश्रुती प्रमाणयति – **अन्यत्र चेति**। "नैतं सेतुम्" इत्युपक्रमश्रुतिः "सर्वे पाप्मानोऽतो निवर्तन्ते" इत्युपसंहारश्रुतिः।

सर्वविधकर्मक्षयस्य साध्यत्वे श्रुतिमुक्त्वा युक्तिमप्याह – **न चेति**। अयं भावः – ब्रह्मविद्यायाः फलं क्षेमप्राप्तिराम्नाता। पाप्मक्षये सत्यपि यावत्पुण्यस्यापि क्षयो न स्यात्, तावत् सा ब्रह्मविद्या क्षेमाय न कल्पते, पापपुण्ययोरुभयोः

**न चादत्तफलस्य कर्मणो न क्षयः, प्रायश्चित्तानां दोषसंयोगेन चोद्यमानानां तत्क्षयफलत्वात् । तस्मात् प्रायश्चित्तैरिव विद्यया बन्धहेतुक्षयः साध्यते । सैव च मुक्तिः, बन्धनविश्लेषार्थत्वान्मुचेः । एवञ्च नान्तवत्त्वदोषः, प्रध्वंसस्य कार्यस्याप्यविनाशात् । (इति पूर्वपक्षः)**

**अत्रोच्यते –**

**प्रायश्चित्तदिशा बन्धहेतूच्छेदोऽपि नो ततः ।**
**सर्वाविद्याप्रविलये न च्छेद्यमवशिष्यते ॥ १०७ ॥**

---

समानरूपेण बन्धहेतुत्वात् । अतः पापकर्मणामिव पुण्यकर्मणामपि क्षयोऽवश्यं कर्तव्यः क्षेमलाभायेति ।

शङ्कते – **न चादत्तेति** । ''नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि'' स्मृतेरित्यर्थः । समाधत्ते – **प्रायश्चित्तानामिति** । गोवधादिदोषाणां संयोगे सति विधीयमानानां प्रायश्चित्तानामेव अदत्तफलानां दुष्टकर्मणां क्षयजनकत्वात् । तेन प्रायश्चित्तेन अदत्तफलमेव पापं कर्म क्षीयते, विद्यया च बन्धहेतुकर्मक्षय इति बोध्यम् । ''नाभुक्तमिति'' स्मृतिस्तु अज्ञानिकृतम् अकृतप्रायश्चित्तं यत् कर्म, तद्विषया बोध्या ।

पुण्यपाप्मसर्वविधकर्मणां क्षयोऽवश्यं कर्तव्यो विद्ययेति निगमयति – **तस्मादिति** । ननु मोक्षसाधने प्रस्तुते कर्मक्षयसाधनमुच्यत इत्यसङ्गतमित्याशङ्कायामाह – **सैव च मुक्तिरिति** । अस्मिन् मते बन्धहेतुकर्मक्षय एव मुक्तिर्न तु ब्रह्मप्राप्तिरिति । इममर्थं मुक्तिशब्दव्युत्पत्त्या समर्थयति – **बन्धविश्लेषेति** । ननु कर्मक्षयरूपमुक्तेर्विद्यासाध्यत्वे कार्यत्वेन मुक्तेरन्तवत्त्वम् = अनित्यत्वदोषः प्रसज्येतेत्याशङ्कां समाधत्ते – **एवञ्चेति** । यथा कार्योऽपि घटध्वंसोऽविनाशी तथा कार्योऽपि कर्मक्षयो न विनश्यतीति न मुक्तेरन्तवत्त्वप्रसक्तिरिति भावः ।

उक्तं परमतं दूषयति – **अत्रोच्यत इति** । प्रायश्चित्ते या दिक् पूर्वमुक्ता, तयैव दिशा ततः = ब्रह्मज्ञानाद् अपि बन्धहेतूनाम् अदत्तफलानां सञ्चितकर्मणामुच्छेदो नो भवति । तत्र हेतुमाह – **सर्वाविद्येति** । यतो विद्यया

बन्धहेतुरविद्यात्मा विद्यायां साऽस्तमागता ॥ १०७-१/२ ॥

बन्धहेतुध्वंसोऽपि नात्मदर्शनसाध्यः। तद्धि विदधदेव निखिला-विद्याव्यवहारप्रविलयम् उदीयते। कर्मफलभोगविभागश्चाविद्योपादानः। तत्रानवयवेनोन्मूलितायामविद्यायां न च्छेत्तव्यमस्ति। अविद्याध्यस्तानि हि कर्माणि तत्समुच्छेदे विद्यया समुच्छिन्नान्येव भवन्ति। तद्विपाकस्यावकाश एव नास्ति अद्वैतात्मतत्त्वं पश्यतः, भेददर्शनाश्रयत्वात् तस्य। यतश्चा-विद्योच्छेदेनैव कर्मोच्छेदः, अतस्तुल्यवत् संशयविपर्यासाभ्यां प्रसंख्यातानि कर्माणि —

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ (मुण्ड० २।२।८)

---

सर्वाविद्याप्रविलये जाते छेद्यं कर्मैव नावशिष्यत इति किमुच्छिद्येत ? ननु अविद्यायाः प्रविलयेऽपि कथं न कर्मणामवशेष इत्याशङ्कां निरस्यति – **बन्धहेतुरिति**। अर्थाद् बन्धहेतुभूतानि कर्माणि नाविद्यातो भिन्नानि, किन्तु अविद्यात्मकान्येव सन्ति। अतो विद्यायां सत्यां यदा सा अविद्या अस्तमागता = नाशं प्राप्ता, तदा अविद्यात्मकानि कर्माणि कुतोऽवशिष्येरन् ? किञ्च ब्रह्मज्ञानाद् उच्छिद्येत ? अतः साधूक्तम् – **बन्धहेतूच्छेदोऽपि नो ततः** इति।

स्पष्टीकृतोऽयमर्थो ग्रन्थकृता वृत्तावपि – **बन्धहेतुध्वंसोऽपि नात्मदर्शनसाध्य** इत्यादिना। हि = यतः, तत् = आत्मदर्शनं निखिलाविद्याव्यवहारप्रविलयं विदधदेव उदीयते = जायत इत्यन्वयः। कर्म च तत्फलभोगश्च कर्मफलभोगौ, तयोर्विभागः अविद्योपादानः = अविद्याकृतो न वक्तव्यो वास्तवः। अनवयवेन = समग्ररूपेण अविद्यायामुन्मूलितायां सत्यां किमपि उच्छेत्तव्यं कर्म नावशिष्टमस्ति। एतदेवोपपादयति – **अविद्याध्यस्तानि हीति**। एवं सति तद्विपाकस्य = कर्मफल-भोगस्य अवसर एव नास्ति अद्वैतात्मतत्वं साक्षात्कुर्वतो ज्ञानिनः। कर्मफलविपाक-स्यावसराभावे निमित्तमाह – तस्य कर्मफलभोगस्य भेददर्शनाश्रयत्वात् = भेदबुद्ध्य-धीनत्वात्। भेदबुद्धिश्च अद्वैतात्मदर्शनेनैव प्रणष्टेत्याशयः।

नन्वेवं कर्मक्षयाभ्युपगमे तत्त्वदर्शनसमनन्तरमेव मुक्तिः स्यात्, न देहपातप्रतीक्षा। "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्ये" (छा० ६।१४।२) इति देहपातप्रतीक्षाश्रुतिर्बाध्येत। यस्य तु विद्या तत्क्षय-साधनं शास्त्राद् गम्यते तस्य तदनुसारेण केषाञ्चित् क्षयो विद्यया, केषाञ्चिदुपभोगेन। तत्र "क्षीयन्ते चास्य कर्माणि" (मु० २।२।८) इत्यविशेषात् सर्वक्षयप्रसङ्गे "तस्य तावदेव चिरम्" (छा० ६।१४।२) इति देहपाताविधि-श्रवणाद् मुक्तेरारब्धकार्याणां प्रवृत्तभोगानां न ततः क्षयः, भोगे-

---

अविद्योच्छेदेन कर्मोच्छेदे प्रमाणं दर्शयति— **यतश्चेति**। अविद्योच्छेदेनैव कर्मोच्छेदस्य जायमानत्वादेव श्रुतिः संशयविपर्ययतुल्यतयैव कर्माणि प्रसंख्याति = गणयति "भिद्यते हृदयग्रन्थिः" इति। अत्र श्रुतौ अविद्योच्छेदेन उच्छिद्यमानाभ्यां संशयविपर्ययाभ्यां सहैव कर्मणां समुल्लेखोऽविद्योच्छेदेन ताभ्यां सहैव कर्मणामपि समुच्छेदं सूचयति। हृदयग्रन्थिरित्यनेन विपर्ययोऽभिप्रेत इति बोध्यम्। अर्थाद् विद्यया अविद्यायां प्रणष्टायां यथा संशयविपर्ययौ = स्वतो निवर्तेते तथा आविद्यकानि कर्माण्यपि स्वत एव विनष्टानि भवन्तीति न तदुच्छेदे विद्याया अविद्यानिवृत्त्यतिरिक्तिः कश्चित् पृथग् व्यापार इति भावः।

विद्या कर्मक्षयसाधनं कर्मक्षयार्थमेव च ज्ञानविधिरिति वादी शङ्कते— **नन्विति**। एवम् = अविद्यानिवृत्तिरेव कर्मक्षयः, न तदर्थं विद्यायाः पृथग् व्यापार इत्यभ्युपगमे तत्त्वदर्शनसमनन्तरमेव विद्वान् मुच्येत न देहपातं प्रतीक्षेत। तथा सति "तस्य तावदेव चिरम्" इति देहपातप्रतीक्षाप्रतिपादिका श्रुतिर्बाधिता स्यात्। कर्मक्षयसाधनं विद्येति पक्षे तु नायं दोष इत्याह— **यस्यत्विति**। तस्मिन् पक्षे शास्त्रानुसारेण केषाञ्चित् कर्मणां विद्यया क्षयः केषाञ्चिच्च उपभोगेन क्षय इति व्यवस्था उपपद्यत इत्यर्थः।

व्यवस्थामेव प्रदर्शयति— **तत्रेति**। तत्र = तस्मिन् पक्षे "क्षीयन्ते चास्य कर्माणि" इति श्रुत्यनुसारेण अविशेषात् सर्वेषामेव आरब्धफलानारब्धफलानां कर्मणां क्षये प्रसक्ते सति "तस्य तावदेव चिरम्" इति श्रुतिर्व्यवस्थां प्रतिपादयति

**नैव क्षय इति गम्यते। न हि सर्वक्षये देहपातप्रतीक्षोपपद्यते। तदुक्तम् – "अनारब्धकार्ये एव तु पूर्वे तदवधेः" (ब्र० सू० ४।१।१५) "भोगेन त्वितरे क्षपयित्वा सम्पद्यते" (ब्र० सू० ४।१।१९) इति। विद्यया त्वविद्योच्छेदे कर्मविपाकव्यवहारोच्छित्ताववि‌शेषात् सर्वोच्छेद इति सपद्येव मुच्येत।**

**नैष दोषः। न हीयं श्रुतिश्चिरकालताविशिष्टं देहपातावधिं मुक्तेराह, किन्तु क्षिप्रताम्। यथा कश्चित् क्षेपीयस्तां प्रतिपादयन् ब्रवीति क्वचित् कार्ये – 'एतावन्मे चिरं यत् स्नातो भुञ्जानस्य च' एवमियमपि।**

---

यत् तत्र देहपातानन्तरमेव मुक्तिः, न तु आरब्धफलानामर्थात् प्रवृत्तफलानां कर्मणामपि ततः =विद्यातः क्षयो भवति। किन्तु भोगेनैव तेषां क्षयः। इयं हि विदेहमुक्तिः। अनारब्धफलानां कर्मणान्तु विद्यात एव क्षयो भवति। इयं च जीवन्मुक्तिरिति व्यवस्था। अस्यां व्यवस्थायां हेतुमाह – **न हीति**। अयमर्थः – सर्वेषां कर्मणामविशेषेण विद्ययैव क्षये विद्योदयानन्तरमेव मुक्तिः स्यात्, श्रुत्युक्ता देहपातप्रतीक्षा नोपपद्येत। अतः केषाञ्चित् कर्मणां तु भोगेन क्षय इति गम्यते।

अत्र पारमर्षं सूत्रद्वयं पठति – "अनारब्धकार्ये एव तु पूर्वे तदवधेः" इति, "भोगेन त्वितरे क्षपयित्वा सम्पद्यते" इति चेति। अयमर्थः – अनारब्धकार्ये = अप्रवृत्तफले पूर्वे = संचिते पुण्यपापे एव ज्ञानाद् नश्यतः। तुशब्दो भोगापेक्षां व्यावर्तयति। तदवधेः = तस्या विदेहमुक्तेरेव अवधिश्रवणात् "तस्य तावदेव चिरम्" इति आद्यसूत्रार्थः। इतरे तु = आरब्धकार्ये प्रवृत्तफले तु पुण्यपापे भोगेन क्षपयित्वा विनाश्य, सम्पद्यते = विद्वान् ब्रह्म सम्पद्यते "ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुतेरिति द्वितीयसूत्रार्थः। (इति पूर्वपक्षः)

पूर्वपक्षं निराकरोति – **नैष दोष इति**। पूर्वम् एकदेशिमतेन निराकरणमाह – **न हीति**। अयं भावः = "तस्य तावदेव चिरम्" इति श्रुतिर्मुक्तेश्चिरकालताविशिष्टः अर्थात् चिरकालभावी = अतिविलम्बेन भावी देहपातोऽवधिरिति न ब्रूते, किन्तु

**अन्यथा 'तावदेव' इति न वाच्यं स्यात्, 'चिरम्' इत्येव ब्रूयात्। 'तावदेव' इति तु वचनात् क्षैप्र्यपरता गम्यते। अतः क्षिप्रैव मुक्तिः, न प्रतीक्षणीयमस्ति। देहपातप्रतीक्षा तु तत्र नान्तरीयकत्वाद् भवत्येव।**

**अथवा चिरत्वमनूद्य देहपातावधित्वमत्रोच्यते। अन्यथा चिरत्वेऽवधिविशेषे चोच्यमाने वाक्यं भिद्येत। तत्रायमर्थः– यदि कस्यचिच्चिरम्, तावदेव यावन्न विमोक्ष्ये इति।**

---

मुक्तेः क्षिप्रतां शीघ्रभावितामेव प्रतिपादयति। तत्र लौकिकदृष्टान्तमुपस्थापयति– **यथा कश्चिदिति**। क्षेपीयस्ताम् = अतिशीघ्रताम्। दृष्टान्तस्वरूपमाह – **एतावदिति**। मम तावानेव विलम्बो यावत् स्नामि भुञ्जे चेत्यर्थः। अत्र यथा क्षिप्रतैव गम्यते न विलम्ब इति तथा उक्तश्रुतिरपि ज्ञानिनो मुक्तौ क्षिप्रतामेवाह न चिरत्वमिति निर्धारयति – **एवमियमपीति**। विपक्षेऽनुपपत्तिमाह – **अन्यथेति**। यदि मुक्तेश्चिरत्वमात्रमुक्तश्रुत्या विवक्षितं स्यात् तदा 'चिरम्' इत्येव ब्रूयात्, न तु 'तावदेव' इत्यवधिविशेषं ब्रूयात्। क्षयिते तु कर्मणि क्षिप्रतैव मुक्तेर्गम्यते उक्तश्रुत्या। अन्यथा 'तावदेव' इति वचनमनर्थकं स्यादिति भावः। उपसंहरति – **अत इति**। विद्यानन्तरं क्षिप्रैव मुक्तिर्भवति, न तु मुक्तिः प्रतीक्षणीया भवति। ननु एवमपि देहपाताभावे मुक्त्यसम्भवाद् मुक्तौ विलम्बोऽर्थात् सिद्ध इति शङ्कायामाह – **देहपातेति**। नान्तरीयकत्वात् = देहपातमन्तरा मुक्तेरसम्भवाद् देहपातप्रतीक्षा तु भवत्येव कदा देहपातो भवतीति। किन्तु प्रतीक्षणीयः स देहपातोऽपि विद्यानन्तरं भवत्येवेति न मुक्तौ विलम्ब इति एकदेशिमतेन समाधानम्। अस्मिन् मते विदेहमुक्तिरेव भवति न जीवन्मुक्तिरिति हृदयम्।

स्वमतमाह – **अथवेति**। अथवा अनया श्रुत्या आरब्धकर्मफलस्य ज्ञानिनो मुक्तिचिरत्वमनूद्य देहपातावधित्वमुच्यते – कस्यचिद् मुक्तौ यत् चिरत्वम्, तद्देहपातावधीति। अन्यथा चिरत्वम् अवधिविशेषश्चोभयमपि यदि स्वातन्त्र्येणोक्तं स्यात् तदा वाक्यभेददोषः प्रसज्येत। अस्मिन् पक्षे श्रुत्यर्थमाह – **यदि कस्यचिदिति**। स्पष्टार्थः। विमोक्ष्ये इति छान्दसस्तकारलोपः, तेन 'विमोक्ष्यते' इत्यर्थः।

**ननु पूर्वस्मिन् पक्षे तत्त्वज्ञानान्नतरत्वाद् देहपातस्य स्थितप्रज्ञलक्षणाभिधानं न युज्यते – "स्थितप्रज्ञस्य का भाषा" (गी० २।५४) इत्यादि। द्वितीयोऽपि सर्वक्षये चिरत्वानुपपत्तेस्तत्रावधिविशेषविधानायोगादनुपपन्नः।**

**उच्यते – स्थितप्रज्ञस्तावन्न विगलितनिखिलाविद्यः सिद्धः, किन्तु साधक एवावस्थाविशेषं प्राप्तः स्यात्। न च ब्रूमः – ब्रह्मवेदनानन्तर एव देहवियोगः, किन्तु आरब्धकार्यकर्मक्षयं भोगेन प्रतीक्षत इति। तत्र कस्यचित् तत्कालोऽपवर्गः, कस्यचित् कियांश्चित् क्षेपः। यथा रज्ज्वां सर्पसमारोपसमुत्थभयजन्मानो वेपथुप्रभृतयस्तत्त्वदर्शनादपावृत्ते भये कस्यचित् तदैव निवर्तन्ते, कस्यचित् कियन्तञ्चित् कालमनुवर्तन्ते, तत्संस्कारात्। तथा सर्वकर्मक्षये भुज्यमानविपाकसंस्कारानुवृत्तिनिबन्धना शरीरस्थितिः, कुलालव्यापारविगम इव चक्रभ्रान्तिः।**

---

पूर्वोक्तपक्षद्वये क्रमेणानुपपत्तिं शङ्कते – **नन्विति**। तत्र पूर्वस्मिन् पक्षे तत्त्वज्ञानानन्तरमेव मुक्तस्य देहपाताद् विद्वान् स्वरूपतो नास्त्येवेति "स्थितप्रज्ञस्य का भाषा" इत्यर्जुनस्य प्रश्ने कस्य स्थितप्रज्ञस्य लक्षणं भगवतोच्यत इति भगवतस्तल्लक्षणाभिधानमयुक्तम्। द्वितीयोऽपि पक्षो नोपपद्यते। यतो विद्योदयात् सर्वकर्मक्षये जाते कर्मजन्यदेहस्य तत्क्षणमेव पातात् "तस्य तावदेव चिरम्" इति श्रुत्या विदुषो मुक्तौ अवधिविशेषविधानस्यायुक्तत्वादिति। अस्यां शङ्कायां समाधानमाह – **उच्यत इति**।

अयं समाधानाशयः – विगलिता = नष्टा निखिला अविद्या यस्य स विगलितनिखिलाविद्यः प्राप्तब्रह्मात्मैक्यसिद्धिर्यदि स्थितप्रज्ञः स्यात्, तदा तल्लक्षणाभिधानमनुपपन्नं स्यात्, न त्वेवमस्ति। स तु अवस्थाविशेषं प्राप्तस्तावत् साधक एव वर्तते न सिद्ध इति तथाविधस्यैव सदेहस्य सतः स्थितप्रज्ञस्य लक्षणमाह भगवानिति न काचिदनुपपत्तिः। द्वितीयाप्यनुपपत्तिर्नास्ति। यतो न हि ब्रह्मज्ञानानन्तरमेव तस्य देहपातो जायते येन तदीयमुक्तेश्चिरत्वमनुपपन्नं स्यात्।

**नन्वेवं ब्रह्मविदोऽपि चेद् भोक्त्रादिविभागदर्शनमनुवर्तते, स देहपातादुत्तरकालमप्यनुवर्तेत। तत्र विदुषोऽपि नावश्यंभावि कैवल्यं स्यात्। तथा च "तावदेव चिरम्" (छा० ६।१४।२) इति श्रुत्या विरोधः। अथोच्छेदादविद्याया नानुवृत्तिः, क्षणमपि न स्यादिति स एव विरोधः, सैषोभयतःपाशा रज्जुः।**

**उच्यते – यथा भयविगमे लब्धाश्वासस्यापि संस्कारमात्रात् कम्पाद्यनुवृत्तिः। न च भयविगमेऽप्यनुवृत्तिरित्येतावता चिरकाला भवति। न च**

---

किन्तु स विदेहमुक्तये प्रारब्धफलानां कर्मणां क्षयं प्रतीक्षत इति तदीयमुक्तेरवधिविशेषप्रतीक्षात्मकं चिरत्वं सूपपन्नमेव ।इममेवाशयं संक्षेपेणाह – **तत्र कस्यचिदिति**।

अत्र निदर्शनमाह – **यथेति**।स्पष्टार्थः ।दृष्टान्तमिमं प्रकृते सङ्गमयति – **तथेति**। अयमर्थः – यद्यपि विद्यया सर्वकर्मक्षयो जातस्तथापि भुज्यमानस्य तत्कर्मविपाकस्य संस्कारस्तु कर्मक्षयानन्तरमपि अनुवर्तत एवेति संस्कारनिमित्तेनैव ज्ञानिनो देहोऽवतिष्ठते ।यथा कुलालस्य व्यापारे विरतेऽपि कियन्तं कालं तत्संस्कारप्रभावात् चक्रं भ्रमत्येवेति। अर्थात् तदानीमपि 'अहं शरीरी भोक्ता इदं भोग्यम्' इति यः संस्कारस्तदनुवृत्त्या – तन्निबन्धनादेव स्थितिरिति भावः।

अत्र शङ्कते – **नन्विति**। अर्थाद् जातेऽपि ब्रह्मज्ञाने यदि भोक्तृभोग्यविभागदृष्टिः(संस्कारः)अनुवर्तते, तदा देहपातादूर्ध्वमपि संस्कारः कथं नानुवर्तताम्? तथात्वे च ब्रह्मज्ञानिनोऽपि कैवल्यं (मुक्तिः) नावश्यं भवेत् ।एवं च सति "तावदेव चिरम्" इति मुक्तेः किञ्चित्कालात्मकस्यावधिविशेषस्य प्रतिपादिका श्रुतिर्विरुध्येत । एतद्विरोधपरिहाराय अविद्यायाः = अविद्यासंस्कारस्यापि उच्छेदाद् नानुवृत्तिरिति यद्युच्येत, तदा क्षणमपि मुक्तौ विलम्बो न स्यादिति पुनश्चिरत्वप्रतिपादिका श्रुतिर्विरुध्येतैवेति **उभयतःपाशा** रज्जुः सिद्धान्तिन इति शङ्कार्थः।

समाधत्ते – **उच्यत इति**। समाधाने दृष्टान्तं वर्णयति – **यथा भयविगमे** इत्यादिना। रज्जुतत्त्वज्ञानात् सर्पभये नष्टे लब्धाश्वासस्य = मुक्तचिन्तस्य अपि संस्कारमात्राद् देहकम्पादिकमनुवर्तते। अर्थात् तत्र भयनाशेऽपि क्षणं कम्पानुवृत्तिरित्येतावता चिरकालं कम्पानुवर्तनं भवेदिति नास्ति। अत्र हेतुमाह – **न मूलकारणेति**।

**मूलकारणतुल्यफलः संस्कारः। न च स्थायी, अन्यथा कम्पादीनां निवृत्तिरेव न स्यात्। न च भयविगमहेतोस्तत्त्वदर्शनात् तन्निवृत्तये हेत्वन्तरमपेक्ष्यते। तत एव हि स क्रमेण निवर्तते, स्वयमेव वा कुलालचक्रभ्रान्तिसंस्कारवत्। तथा निवृत्तायामविद्यायां कर्मसु चाविशेषेणारब्धकार्येष्वनारब्धकार्येषु च निवृत्तेष्वारब्धविपाकसंस्कारात् शरीरिणं भोक्तारमिव चायमात्मानं प्रत्येत्याभासमात्रेण विद्वानपि, न त्वविद्वानिवारूढाभिनिवेशः।**

---

कम्पस्य यन्मूलकारणं भयं तस्य यावान् कालस्तावानेव कालो भयफलस्य कम्पस्यापीति यावद्भयं कम्पोऽनुवर्तिष्यत एव, फलस्य प्रबलत्वात्। भये विगते संस्कारमात्रादनुवर्तमानं कम्पनफलं दुर्बलमिति भये विगते नाग्रे सततमनुवर्तते किन्तु क्षणमात्रमनुवर्तत इति। एवं स संस्कारोऽपि स्थायी नास्ति, येन तद्वशाज्जायमानः कम्पोऽपि स्थायी भवेत्। अन्यथा = संस्कारस्य स्थायित्वे कम्पादयो न कदाचिदपि निवर्तेरन्। अतो मन्यते – संस्कारो न स्थायी न वा तत्फलं कम्पादिकमपि स्थायीति। तद्वत् तत्त्वदर्शने जातेऽविद्यासंस्कारो न सततमनुवर्तिष्यत इति भोगसमाप्तौ कैवल्यावश्यंभाव इति।

एवं येन रज्जुतत्त्वदर्शनेन भयं निवृत्तं तेनैव तत्संस्कारोऽपि (तज्जन्य-कम्पोऽपि वा) क्रमेण निवर्तिष्यत इति तन्निवृत्तये न हेत्वन्तरमपेक्षितं भवति। तद्वदिह ब्रह्मतत्त्वदर्शने जाते तत एव हेत्वन्तरमनपेक्ष्यैव क्रमेणाविद्यासंस्कारोऽपि निवर्तत एव। स्वयमेव इत्यस्य काले प्राप्ते इत्यर्थः। तथा च काल एव हेतुर्न तु सौगतवद् अहेतुको विनाशः। अत एव 'क्रमेण' इत्युक्तम्। दृष्टान्तोक्तमर्थं दार्ष्टान्तिके योजयति – **तथेति**। अविशेषेण = सामान्यत आरब्धकार्येषु = आरब्ध-फलेषु, अनारब्धकार्येषु = अनारब्धफलेषु च कर्मसु निवृत्तेषु इत्यन्वयः। आरब्ध-विपाकसंस्कारात् = आरब्धफलभोगसंस्काराद् अयं विद्वान् आत्मानं शरीरिणं भोक्तारमिव आभासमात्रेण = छायाभासमात्रेण विद्वानपि = ज्ञातब्रह्मतत्त्वोऽपि

**स चायमीदृशः स्थितप्रज्ञो वर्णितो वीतकाम आत्मरूपसन्तुष्टो दुःखेषु च्छायामात्ररूपेषु तत्त्वदर्शनादभिनिवेशाभावात् कृत्रिमेभ्य इव व्याघ्रादिभ्योऽनुद्विग्नमनाः सुखेषु च कृत्रिमरमणीयेष्विव विगतस्पृहः।**

**यथा खल्वविदुषो मृद्दारुरचिते स्त्र्यादौ विषये छायामात्रदर्शनमभिनिवेशविकलम्, तथा विदुषः क्षीणकर्माविद्यस्य तत्संस्कारमात्राद् दर्शनं छायामात्रेणैव विषयेषु। तथा च ''तद्यथाऽहिनिर्ल्वयनी वल्मीके**

---

प्रत्येति = मन्यते, न तु अविद्वानिव तत्रारूढाभिनिवेशो भवति। आरूढः प्रादुर्भूतोऽभिनिवेश आस्थातिशयो यस्येति विग्रहः।

अस्मिन् पक्षे स्थितप्रज्ञलक्षणकथनमपि उपपद्यत इत्याह – **स चायमीदृश इति**। सोऽयमीदृश एव स्थितप्रज्ञो वर्णितो गीतायामिति ज्ञेयम्। पूर्वं साधकः स्थितप्रज्ञ उक्तः, इदानीं सिद्ध इति विशेषः। स च वीतकामः, यथोक्तं तत्रैव – ''प्रजहाति यदा कामान्'' इति। आत्मरूपसन्तुष्टः, यथोक्तम् – ''आत्मन्येव च सन्तुष्टः'' इति। तथा छायामात्रेषु दुःखेषु सत्सु कृत्रिमेभ्यो व्याघ्रादिभ्य इव अनुद्विग्नमनाः, तत्र हेतुः – तत्त्वदर्शनात् कारणाद् अभिनिवेशाभावाद् इति। तेषां वास्तविकत्वे आस्थारहितत्वादित्यर्थः। अस्मादेव हेतोः कृत्रिमरमणीयेषु क्रीडनकादिवस्तुष्विव सुखेष्वपि विगतस्पृहः, तदुक्तं तत्रैव – ''दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः'' इति।

अत्र दृष्टान्तमाह – **यथा खल्विति**। यथा अविदुषो मृद्दारुरचिते स्त्र्यादौ आस्थावैकल्यम्, तथा विदुषो विषयेषु आस्थावैकल्यमिति। अत्र श्रुतिमपि प्रमाणयति – **तद्यथा अहिनिर्ल्वयनीत्यादि**। अहिनिर्ल्वयनी = अहिनिर्मोकः = तन्मुक्ता त्वक्। अयं श्रुत्यर्थः – यथा अहिमुक्ता त्वक् प्रत्यस्ता = प्रतिक्षिप्ता = अनात्मभावेन सर्पेण परित्यक्ता सती शयीत वर्तेत, तथैव इदं शरीरं सर्पस्थानीयेन मुक्तविदुषाऽनात्मभावेन परित्यक्तं सद् मृतमिव शेते इति।

**मृता प्रत्यस्ता शयीत एवमेवेदं शरीरम्'' (बृ० ४।४।७) इति विदुषः शरीरेऽनास्थां दर्शयति, यतो न मूलकारणतुल्यफलः संस्कारः कम्पादिवदेव। न च चिरकालानुवृत्तिः, अल्पकालस्थायित्वात् संस्कारस्य। तद्वदेव च न तन्निवृत्तये हेत्वन्तरमपेक्ष्यते, तत्त्वदर्शनादेव क्रमेण तस्यापि निवृत्तेः, स्वयमेव वा। सा चेयमवस्था जीवन्मुक्तिरिति गीयते।**

**आरब्धकार्यकर्मसंस्कारक्षयश्च देहपातादेव गम्यते; तदनुवृत्तौ देहपात एव न स्यादिति न देहपातोत्तरकाले तद्विपाकस्य च्छायामात्रेणापि दर्शनं शक्यते। येन हि कर्मणा यच्छरीरमारब्धं तत्रैव तद्विपाकशेषाभासः।**

---

संसारसंस्कारेऽनुवर्तमाने कथं देहेऽनास्था ? अत्राह – **यतो नेति**। मूलकारणस्य कर्मणो यत् फलं दुःखसुखादिकम्, तत्तुल्यं फलं संस्कारस्य नास्ति। अतः संस्कारेऽनुवर्तमानेऽपि न पूर्ववदास्था देहे ।अत्र सर्पभयेऽपगतेऽपि संस्कारानुवृत्त्या अल्पकालप्रवर्तमानम् आस्थारहितं देहकम्पं पुनरुदाहरति – **कम्पादिवदिति**। दृष्टान्तोक्तमर्थं दार्ष्टान्तिके योजयति – **न च चिरकालेत्यादि**। ननु संसारसंस्कारस्याग्रेऽपि कथं नानुवृत्तिः ? तन्नाशकस्य हेत्वन्तरस्य विदुषि अभावात् ।अत्रोत्तरमाह – **तद्वदेव चेति**। यथाऽनुवर्तमानकम्पजनकसंस्कारस्य निवृत्तये हेत्वन्तरस्य नापेक्षा भवति, तथैव तत्त्वदर्शनादेव क्रमेण संसारसंस्कारोऽपि निवर्तिष्यते। अथवा काले प्राप्ते स्वयमेव स संस्कारो निवर्तत इति भावः।इयमेव विदुषो जीवन्मुक्तिरिति शास्त्रेषु वर्ण्यते।

ननु प्रारब्धफलानां कर्मणां यः संस्कारः स क्रमेण स्वयं वा नश्यतीति उक्तम् ।तथापि कथमिदमवगम्यते संस्कारक्षयो जात इति ।तत्रोच्यते – **आरब्धकार्येति**। यदि स संस्कारो न क्षयं प्राप्तश्चेत् संस्कारानुवृत्तौ देहपात एव न सम्भवेत्। अतः संस्कारस्यापि नष्टत्वादेव देहपातानन्तरं तद्विपाकस्य = कर्मफलभोगस्य छायामात्रमपि = आभासोऽपि द्रष्टुं न शक्यते। अत्रोपपत्तिं प्रदर्शयति – **येनेति**। येन कर्मणा यच्छरीरमारब्धं तत्रैव शरीरे तत्कर्मणः फलं प्राप्यते तत्रैव च शरीरे तत्फलभोगस्य संस्काराभासः। तस्माद् देहपातोत्तरकाले न कर्मफलं नापि तत्फलभोगस्य संस्कार आभासत इति भावः।

**अनारब्धकार्याणां त्वलब्धवृत्तीनामेव निवृत्तत्वान्नास्ति तत्संस्कारः। लब्धवृत्तिकारणसंस्काराद्धि कार्यशेषानुवृत्तिः। न खलु भयेऽप्रतिलब्ध-वृत्तावनुपजनितकम्पादौ तत्संस्कारात् कम्पाद्यनुवृत्तिः। तस्मादनारब्ध-कार्याणामलब्धवृत्तित्वादारब्धकार्यसंस्कारक्षयस्य च देहपातादवगमाद् विदुषः पतितेऽस्मिन् शरीरे कैवल्यमवश्यम्भावि।**

**अत्र च लब्धवृत्तिकारणसंस्काराद् वा कार्यशेषः, कार्यसंस्कारादेव वा, तथोभयसंस्कारादेव वा कम्पाद्यनुवृत्तिः। भयसंस्काराद् वा**

---

ननु यानि कर्माणि अनारब्धफलानि, यतोऽलब्धवृत्तीनि = फलदानाय अलब्धव्यापाराणि सन्ति, तेषां संस्कारो देहपातोत्तरमनुवर्तताम् इति शङ्कां समाधत्ते – **अनारब्धकार्याणामिति**। तथाविधानि सञ्चितकर्माणि फलदानाय अलब्धव्यापाराण्येव निवर्तन्ते, इति न तेषां कर्मणां संस्कारानुवर्तनप्रसङ्गः। तत्रोपपत्तिमाह – **लब्धवृत्तीति**। लब्धा फलदानाय वृत्तिः = व्यापारो यैः कारणैः = कर्मभिः, तेषामेव कर्मणां संस्कारात् कार्यशेषस्य = फलशेषस्य अनुवृत्तिः।अत्र इयमेव फलशेषस्यानुवृत्तिर्यत् कम्पाद्यनुवृत्तिः।फलशेषस्यानुवृत्तिः "तस्य तावदेव चिरम्" इति श्रुत्या प्रतिपादिता।एतद् दृष्टान्तेन साधयति – **न खल्विति**। अप्रतिलब्धवृत्तावत एवानुपजनितकम्पादाविति हेतुहेतुमद्भावः। अप्रतिलब्धा वृत्तिर्येन तथा अनुपजनितं कम्पादि येन इति विग्रहौ। एवंविधे भये तत्संस्काराद् न कम्पाद्यनुवृत्तिः खल्वित्यन्वयः। फलितार्थमाह – **तस्मादिति**। अनारब्धकार्याणां सञ्चितकर्मणामलब्ध- व्यापारत्वात्, आरब्धफलकर्मणां संस्कारक्षयस्य च देहपातादेव सिद्धत्वाद् एतद्देहपातानन्तरं विदुषः कैवल्यमवश्यम्भावीति तात्पर्यम्।

क्वचित् कारणसंस्कारादनुवृत्तिरुक्ता क्वचित् कार्यसंस्कारादिति, तदुभयं विविच्य दर्शयति – **अत्र चेति**। अयमर्थः – कारणं कर्म, कार्यं च तत्फलम्। तेन लब्धवृत्तेः = प्रारब्धकार्यस्य कारणस्य (कर्मणः) संस्काराद् वा तत्कार्यसंस्काराद् वा विदुषोऽपि कार्यशेषः = शरीरस्थितिः अनुवर्तत इति शेषः। एषैव दिग् दृष्टान्तेऽप्यस्तीति दर्शयति – **तथेति**। दृशमिमां दृष्टान्ते स्फुटीकरोति – **भयसंस्काराद्**

भयम्, ततः कम्पादयः। कम्पादिसंस्काराद् वा कम्पाद्यनुवृत्तिः। सर्वथा भवति कारणविगमेऽपि कार्यशेषानुवृत्तिः, संस्कारात्। अतो लब्धवृत्तिकर्मसंस्कारात् तद्विपाकसंस्काराद् वा विदुषोऽपि शरीरस्थितिः। तदुक्तं तन्त्रान्तरेऽपि– "तिष्ठति संस्कारवशाच्चक्रभ्रमिवद् धृतशरीरः" इति।

ये तु मन्यन्ते– प्रवृत्तभोगानां कर्मणां प्रवृत्तवेगस्येषोरिव चक्रस्येव वा न शक्यः प्रतिबन्धः, अतो भोगेन क्षयप्रतीक्षेति। तदसत्। शक्यो हीषुः प्रतिबद्धुं कुड्यादिभिः, नाशयितुं च च्छेदादिभिः। स्वप्नादिसूचितोपस्थितविपाकवर्तमानदेहभोग्यकर्मक्षयार्थानि च शान्तिकानि कर्माणि। तस्मात् संस्कारादेव स्थितिः।

---

**वेति**। तस्मादिह संस्कारविशेषो नाद्रियते, किन्तु कारणकार्योभयसाधारणात् संस्कारादेव कारणविगमेऽपि कार्यशेषानुवृत्तिः (शरीरानुवृत्तिः कम्पाद्यनुवृत्तिर्वा) भवतीत्याह– **सर्वथेति**। प्रकृतमुपसंहरति– **अत इति**। तेन "तस्य तावदेव चिरम्" इति श्रुतेर्नास्ति विरोध इति भावः। विद्वान् संस्कारसामर्थ्यात् कञ्चित् कालं सशरीरस्तिष्ठतीत्यत्र कापिलतन्त्रसंवादमाह– **तदुक्तमिति**।

तत्त्वज्ञानिनोऽपि संस्कारादेव कञ्चित् कालं शरीरस्थितिरिति पक्षं सुदृढीकर्तुं मतान्तरमुपन्यस्यति– **ये तु मन्यन्त इति**। दूषयति च– **तदसदिति**। स्पष्टार्थः। शान्तिकर्मविध्यन्यथानुपपत्तिरपि प्रारब्धफलानां कर्मणां प्रतिबन्धे उच्छेदे वा प्रमाणमित्याह– **स्वप्नादीति**। खरारोहणादिस्वप्नेन गृध्रपतनाद्यापातेन च सूचितः, उपस्थितः= प्रत्यासन्नो विपाकः= फलं यस्य, तच्च वर्तमानदेहभोग्यं च तत् कर्म चेति समासः। एवंविधस्य कर्मणः क्षयार्थानि शान्तिकानि कर्माणि विधीयन्त इत्यपि प्रारब्धकर्मणां प्रतिबन्धे समुच्छेदे वा प्रमाणमिति भावः। स्वपक्षमुपसंहरति– **तस्मादिति**। स्थितिः= शरीरस्थितिरित्यर्थः। संस्कारादेवेत्येवकारेण मुक्तौ प्रारब्धकार्यकर्मणः क्षयप्रतीक्षां निवर्तयति।

**ननु संस्कारकार्यशेषावप्यविद्यैव, तत्र कथं सर्वाविद्याप्रविलयः, कथं वा न च्छेद्यमवशिष्यते ? उच्यते — विशुद्धैकात्म्यदर्शनप्रतिपक्षग्रस्तौ विलीनावेव तावुदितौ, अकिञ्चित्करत्वाद् अबन्धत्वात्। तन्निवृत्तये हेत्वन्तरस्यानपेक्षणात्। विशुद्धं खल्वात्मानं साक्षादनुभवतो विपाकाभासस्तमस्पृशन् न किञ्चित्करः बन्धात्मा प्रलीन एव। यथा चित्रादौ चित्रादितत्त्वमनुभवतः स्त्र्याद्याभासो रागादीनामनिमित्तत्वात्, तथावदातमात्मानं जानतो विपरीतं वा खड्गादिषु श्यामाद्यवभास उत्पन्नोऽपि तत्त्वदर्शनादवकाशमलभमानः प्रविलीन एव। तथा च न तन्निबन्धनेन मलिनत्वेन शोचत्यात्मानम्, न तेजस्वितयाऽभिनन्दति, अवभासमानयोरपि तयोरात्मनि तत्त्वदर्शनप्रतिहतावभासत्वात्।**

---

ननु संस्कारपक्षे स संस्कारः कर्मशेषश्चेत्युभावपि अविद्यात्मकावेव अवशिष्टौ स्त इति "सर्वाविद्याप्रविलये न च्छेद्यमवशिष्यते" इति यदुक्तं पूर्णं तत् तिरस्कृतमिति शङ्कते— **ननु संस्कारेति**। समाधत्ते—**उच्यत इति**। विशुद्धैकात्म्यदर्शनेन बाधितावेव तावुदितौ इति न पूर्वोक्तविरोधः। बाधितोदितत्वे हेतुमाह — **अकिञ्चित्करत्वादिति**। अकिञ्चित्करत्वादित्यस्य व्याख्यानम् — **अबन्धत्वादिति**। अबन्धकत्वादिति तदर्थः। 'विलीनावेव तावुदितौ' इत्यस्योपपादकम् — तन्निवृत्तये हेत्वन्तरस्यानपेक्षणादिति। यदि तौ बाधितावेव नोदितावभविष्यताम्, तदा तयोर्बाधनाय हेत्वन्तरमपेक्षितम् अभविष्यदिति भावः।

अकिञ्चित्करत्वादिकमेवोपपादयति — **विशुद्धं खल्विति**। विपाकाभासः = सुखाद्यवभासः। न किञ्चित्करः = रागादिजनको बन्धको वेति तथाविध एव प्रलीनो भवतीत्यर्थः। अत्र दृष्टान्तमाह — **यथेति**। दृष्टान्तान्तरमाह — **तथावदातमिति**। अवदातम् = गौरम्। विपरीतम् = अनवदातम्। "आत्मानम्" इत्यस्य लौकिकं शरीरात्मानमित्यर्थः। शरीरात्मा एव गौरो वा श्यामो वाऽवभासत इति स एव दृष्टान्तः। गौरं खड्गादिके श्याममवभासते, श्यामं च सुवर्णादौ गौरमिति द्विविधमुदाहृतम्। शरीरस्य वास्तविकं रूपतत्त्वं यो जानाति, तस्य श्यामाद्यवभासो

**एवञ्च यदुच्यते – कर्मणो वा शरीरस्थितिः स्यात् संस्काराद् वा, को विशेषः ? कश्च कर्मणः क्षयः कार्यानुवृत्तौ ? तन्निवृत्त्या हि तत्क्षयो गम्यते। तस्मात् "भोगेन त्वितरे क्षपयित्वा सम्पद्यते" (ब्र०सू०४।१।१९) इत्येव युक्तम्।**

**तदप्यपास्तम्। कर्मविपाको ह्यात्मसंस्पर्शी शोकाभिनन्दनवानविदुषः, विदुषस्तु तदसंस्पर्शादाभासमात्रं मणिकृपाणदर्पणादिनिबन्धनविशेषवत्। न विपाकः, अनभिनन्द्यमानत्वाद् अद्विष्यमाणत्वाच्च। तथा च "तत् तत् प्राप्य शुभाशुभम्। नाभिनन्दति न द्वेष्टि" (गी० २।५७) इति**

---

विलीनप्राय एवोदेतीत्यर्थः। दार्ष्टान्तिकेऽपि द्रढयति – **तथा चेति**। तद्वत् विशुद्धमात्मतत्त्वमनुभवतः सुखाद्यवभासो विलीनात्मा एवोदेतीति न किञ्चित् करोति न बन्धको भवतीत्यभिप्रायः।

संस्कारात् कञ्चित् कालं विदुषोऽपि शरीरस्थितिरिति साधितम्। अत्रैव पूर्वपक्षान्तरमप्याह – **एवञ्चेति**। अयमाशयः– कर्मणो वा शरीरस्थितिः स्यात् संस्काराद् वा स्याद्, अनयोः पक्षयोर्नास्ति कश्चिद् विशेषः, उभयोः शरीरानुवृत्तेस्तुल्यत्वात्। एवं यदि शरीरमनुवर्तत एव तदा कर्मक्षयस्य कोऽर्थः ? अतो विदुषः कर्मक्षयं स्वीकृत्य संस्कारात् शरीरस्थितिकल्पने किञ्चिद् विनिगमकं नास्ति। तस्माद् यावद्देहपातं कर्मैवानुवर्तत इति स्वीकारार्हम्, कर्मक्षयश्च देहनिवृत्त्या गम्यत इत्येव युक्तम्। पक्षेऽस्मिन् "भोगेन त्वितरे क्षपयित्वा सम्पद्यते" इति सूत्रमपि प्रमाणम् इति।

मतमिदं निराकरोति – **तदप्यपास्तमिति**। शोकाभिनन्दने = शोकहर्षौ शोकहर्षात्मकः कर्मविपाकोऽविदुष एवात्मानं संस्पृशति। अर्थाद् यस्यात्मविद्यानोदिता, तस्यैव शोकरूपो हर्षरूपो वा विपाको भवति, ज्ञानिनस्तु न तयोः संस्पर्शः, किन्त्वाभासमात्रम्, मणिकृपाणदर्पणादिषु मुखप्रतिबिम्बविशेषाभासवत्। अतो ज्ञानिनो न हर्षशोकरूपो विपाको भवतीति जीवन्मुक्तिसिद्धान्तः। तत्र हेतुमाह – **अनभिनन्द्यमानत्वादिति**। ज्ञानी प्राप्तं हर्षसाधनं नाभिनन्दति, नापि प्राप्तं शोक-

**दर्शितम्। तथा "यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः" (गी०२।६९) पश्यत एव शरीरादिप्रपञ्चो निशा, तदसंस्पर्शाद-दृश्यमानसमत्वात्।**

**ननु तत्त्वज्ञानप्रतिहतश्चेदुत्पन्नोऽपि प्रपञ्चावभासो नात्मसंस्पर्शी, न किञ्चित्करः, न बन्धः, शब्दादेव तस्योत्पत्तेः किमर्थमुपासनादि ? उच्यते— परोक्षरूपं शाब्दज्ञानम्, प्रत्यक्षरूपः प्रपञ्चावभासः। तेन तयोरविरोधेन प्रपञ्चावभासो नात्मासंस्पर्शी, नाकिञ्चित्करः, न न बन्धः। यथा प्रमाणान्तरादवसीयमानमाधुर्येऽपि द्रव्ये प्रत्यक्षसरूप इन्द्रियद्वार-स्तिक्तावभासोऽद्रव्यसंस्पर्शी नाभासमात्रतयाऽवतिष्ठते, तथा च तद्द्रव्यं परमार्थतिक्तमिवानवसितमाधुर्यमिव दुःखाय भवति।**

---

साधनं द्वेष्टि। यदि अभिनन्दति द्वेष्टि वा तदा स नैव ज्ञानीति मन्तव्यम्। अत्र गीतोक्तं वचनद्वयं प्रमाणयति—"नाभिनन्दति न द्वेष्टि" इति, "यस्यां जाग्रति भूतानि" इति च। श्लोकोक्तनिशाशब्दार्थं स्फुटयति— **पश्यत इति**। पश्यतो ज्ञानिन इत्यर्थः।

अत्र तत्त्वदर्शनानन्तरमुत्पद्यमानोऽपि प्रपञ्चावभासस्तत्त्वज्ञानेन प्रतिहतत्वाद् ज्ञानिनो न किञ्चित् सुखदुःखादिकं करोति, न वा तं बध्नातीत्युक्तं पूर्वम्। तच्च तत्त्वज्ञानं श्रुतिवाक्यादेव भवतीति तत एव मुक्तिसिद्धौ तत्त्वज्ञानोत्तरम् उपासनादिकं नादरणीयमिति शङ्कते— **नन्विति**। समाधत्ते— **उच्यत इति**। समान-जातीयं विरोधि भवति, न विजातीयम्। शब्दजन्यं ज्ञानं परोक्षरूपं भवति, प्रपञ्चावभासश्च प्रत्यक्षरूपोऽस्ति। अतः प्रत्यक्षरूपः प्रपञ्चावभासः परोक्षरूपेण शब्दजन्यतत्त्वज्ञानेन बाधितो नैव भविष्यति, विरोधाभावात्। तत्त्वज्ञाने जातेऽपि प्रपञ्चावभास आत्मनि संस्पृष्टो भवेदेव, सुखदुःखादिकं कुर्यादेव नाकिञ्चित्करः, तथा न न बन्धः किन्तु बन्धापादकश्च भवेदेवेति तद्विघाताय उपासनाऽऽदरणीयैव न व्यर्थेति। परोक्षस्य रूपमिव रूपं यस्य तत् परोक्षरूपम्, प्रत्यक्षस्य रूपमिव

**उपासनादिना साक्षात्कृतात्मतत्त्वस्य तु विरोधात् सन्नपि प्रपञ्चावभासो नात्मसंस्पर्शी, देवदत्त इव सिंहावभासः। सिंहो देवदत्त इति समारोपेऽवभासमानोऽपि तदसंस्पर्शी, अकिञ्चित्करः, न भयहेतुः। नित्यश्चात्मतत्त्वप्रकाशः, तत्र न पुनर्विपर्ययावकाशोऽस्ति। शाब्दं तु प्रमाणाधीनं क्षणिकं ज्ञानम्, तत्र पुनरपि विपर्ययावकाशः। दृष्टं हि प्रमाणाननुसन्धाने पुनः सर्पभ्रान्त्या रज्जोर्भयम्।**

---

रूपं यस्य स प्रत्यक्षरूपः इति विग्रहः । अत्र दृष्टान्तमाह – **यथेति** । यथाऽनुमानाद् आप्तवचनाद्वा प्रमाणान्तरात् खण्डादेर्माधुर्येऽवगतेऽपि इन्द्रियद्वारा जायमानः प्रत्यक्षरूपस्तिक्तावभासः खण्डासंस्पर्शी अपि नाभासमात्रतयाऽवतिष्ठते । किन्तु मधुरमपि खण्डद्रव्यमननु-भूयमानमाधुर्यतयाऽमधुरमिव परमार्थतिक्तमिव करोत्येव दुःखम् । अत एव थूत्कृत्य तत्खण्डस्त्यज्यते । तद्वदिहापि तत्त्वज्ञाने जातेऽपि प्रपञ्चावभासस्य दुःखकरत्वमेवेति आवश्यकी उपासनेति ।

उपासनाया आवश्यकत्वं साधयति – **उपासनादिनेति** । अर्थाद् उपासनायां सत्यां तया साक्षात्कृतात्मतत्त्वस्य विदुषोऽपरोक्षेणात्मतत्त्वदर्शनेन अपरोक्षस्य प्रपञ्चावभासस्य सजातीयत्वेन विरोधः स्यात् । ततश्चापरोक्षात्म-दर्शनेन बाधितोऽसत्कल्पः प्रपञ्चावभासो नात्मसंस्पर्शी नात्मनो दुःखाय सुखाय वा कल्पेत । तस्मादस्त्युपासनोपयोग इति । अत्र दृष्टान्तमाह– **देवदत्त इवेति** ।

इतश्चात्मतत्त्वापरोक्षज्ञानायोपासनापेक्षेत्याह – **नित्यश्चेति** । उपासनया एकदा आत्मतत्त्वसाक्षात्कारे जाते तत्र पुनर्विपर्ययस्य भ्रमस्य अवसर एव नास्ति । प्रमाणाश्रितं तु शाब्दज्ञानं क्षणिकं भवति । तेन तत्र पुनरपि विपर्ययस्यावकाशोऽस्त्येव । दृष्टं चैतद् यत् प्रमाणाननुसन्धाने सर्पभ्रान्त्या रज्जोर्बिभेति जनः । अत आत्यन्तिक-प्रपञ्चावभासनिवृत्तये शाब्दज्ञानं न समर्थमित्यस्त्युपासनापेक्षा ।

**अथात्रापि सततं शाब्दं ज्ञानमनुसन्दधीत, किमन्यदुपासनमस्मात् ? तस्माद् बन्धहेतुच्छेदोऽपि विद्यैव, न तया साध्यः। एवमुत्तराघाश्लेषेऽपि वाच्यम्, "यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" (छा० ४।१४।३) इति कर्तृकर्तव्यविभागस्य**

---

एवन्तर्हि पुनरात्मनि प्रपञ्चावभासो मा भूदित्येतदर्थं शाब्दज्ञानमेव सततमनुसन्धेयम्, नोपासनमपेक्षितमिति शङ्कते – **अथात्रापीति**। निराकरोति – **किमन्यदुपासनमस्मादिति**। अस्मात् पुनः पुनः श्रुतिजन्यात्मज्ञानानुसन्धानादन्यदुपासनमपि किमिति प्रश्नमुखेन समाधानम्। पुनः पुनरात्मतत्त्वज्ञानानुसन्धानमेव तु उपासनमुच्यत इति मदुक्तमेव समर्थितं त्वयापीति भावः।

एवम् 'तस्य तावदेव चिरम्' इति श्रुतिविरोधः परिहृतः, वाक्यार्थज्ञानातिरिक्तम् उपासनम् आत्मैक्यसाक्षात्कारोपाय इति चोक्तम्। इदानीम् "न च्छेद्यमवशिष्यते" इति श्लोकोक्तमुपसंहरति – **तस्मादिति**। बन्धच्छेदोऽपि न विद्यातिरिक्तो न वा विद्यासाध्यः किन्तु विद्यैवेति सिद्धम्।

एवम्, अविद्यानिवृत्तिरूपदृष्टद्वारैव विद्या आरब्धानारब्धफलानां पूर्वार्जितकर्मणां क्षयहेतुर्भवतीति संसाध्येदानीम् उत्पन्नात्मतत्त्वसाक्षात्कारस्य उत्तरकालभवेन प्रमादजेन पापेन अलेपं कयाचिददृष्टशक्त्या विद्या करोतीति केषाञ्चिन्मतं दूषयितुमतिदिशति – **एवमुत्तरेति**। उत्तरपापाश्लेषेऽपि दृष्टद्वारैव विद्या हेतुरिति नादृष्टशक्तिकल्पना युक्ता। तत्र श्रुतिं प्रमाणयति – **"यथा पुष्करपलाश"** इत्यादिकम्।

दृष्टद्वारैव विद्या उत्तरपापालेपहेतुरिति दर्शयति – **कर्तृकर्तव्येति**। 'अहमस्य पापस्य कर्ता, इदं मया कर्तव्यम्' इति यावज्जानाति, तावदेव पापलेपः। विद्यया यदा अविद्यात्मकः कर्तृकर्तव्यविभागः प्रविलयं प्रापितोऽर्थात् कर्तृकर्तव्यविभाग एव नास्ति, तदा कस्य केन लेपः ? तथा च दृष्टेनैव कर्तृकर्तव्यविभागप्रविलयेन विद्या उत्तरपापालेपस्यापि हेतुर्भवतीति नादृष्टशक्तिकल्पना समुचितेति भावः।

**यदुक्तम् – न शाब्दज्ञानविषयो ब्रह्मेति, तत्रोच्यते –**

**न ब्रह्म शब्दधीगम्यं यद्यशक्यो धियो विधिः ॥१०८॥**

**विद्यया प्रविलयात्। एवं न विद्याया अनेकफलकल्पना भविष्यति, वर्तमानापदेशानां च फलविधित्वेन न विपरिणतिरिति।**

---

एवं शक्तिकल्पनायां पूर्वकर्मणां क्षयस्य उत्तरकर्मणामश्लेषस्य च भेदाद् विद्याया अनेकशक्तिकल्पने महद्गौरवं प्रसज्येत। एतदेवोक्तम् – **एवं न विद्याया अनेकफलकल्पना भविष्यतीति**। प्रकारान्तरेणापि स्वपक्षस्य निर्दोषत्वं प्रदर्शयति – **वर्तमानापदेशानां चेति**। अयमाशयः – "न च पुनरावर्तते" इति वर्तमानव्यपदेशश्रुतीनाम् "अपुनरावृत्तिकामो ज्ञानं कुर्यात्" इत्येवंरूपेण फलविधित्वेन विपरिणामोऽपि अस्मत्पक्षे न प्रसज्यते। यतो विद्यया अविद्या-प्रविलय एव अपुनरावृत्तिः, न तु देहपातरूपावधिविशेषसम्बद्धं फलान्तरमस्ति यदर्थं वर्तमानव्यपदेशं विपरिणमय्य "न च पुनरावर्तेत" इति श्रुतिस्वरूपं मन्येतेति।

अथवा "भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः" इतिवत् "क्षीयन्ते चास्य कर्माणि" इत्यपि वर्तमानापदेश एव स्वीकारार्हः। तथा च विद्यायां जातायामेव यथा हृदयग्रन्थेरविद्याया भेदः = प्रविलयः, यथा च सर्वसंशयानां समुच्छेदः, तथैव सर्वकर्मणामपि तत्क्षण एव क्षयः, 'क्षीयन्त' इति तत्रापि वर्तमानव्यपदेशात्. देहपातादूर्ध्वं कर्मक्षयस्वीकारे तु 'क्षेष्यते' इत्याकारेण पृथगेव फवविधिः कल्प्येत, वर्तमानव्यपदेशश्च त्यक्तः स्यादिति दोषोऽपि प्रसज्यत इत्यभिप्रायो बोध्यः।

यदुक्तम् – नानापदार्थसंसार्गात्मिका हि शाब्दप्रतिपत्तिरतो निष्प्रपञ्चं ब्रह्म शाब्दज्ञानविषयो न भवितुमर्हतीति तत्साक्षात्कारात्मकम् "आत्मा प्रतिपत्तव्यः" इति श्रुत्याऽलौकिकं ज्ञानं विधेयमिति तदुपन्यस्येदानीं दूषयति – **यदुक्तमिति,**

धीविशेषप्ररूपाय नासिद्धो विषयः क्षमः।
विधिर्नारूपितपदो धीमात्रं न विधीयते॥ १०९॥

**न खलु ज्ञानमात्रं विधीयते, ज्ञानविशेषस्तु। न चाप्रसिद्धेऽनिरूपिते तत्र नियोगः, न ह्यप्रसिद्धे विषये नियोक्तुं शक्यते। ज्ञानस्य च विशेषोऽर्थद्वारः। न चाप्रसिद्धोऽर्थस्तद्विशेषनिरूपणाय प्रभुः। न चात्मरूपस्य शब्दादन्यतः सिद्धिः। शब्दादपि चेन्न सिद्धिः, तद्द्वारज्ञानविशेषासिद्धौ विषयाऽनुपपत्तेर्नियोगानुपपत्तिः।**

---

**तत्रोच्यत इति** चेत्यादिना। यदि ब्रह्म शब्दधीगम्यं न, (तदा) धियो विधिरशक्य इत्यन्वयः। अशक्यत्वे हेतुमाह – **धीविशेषप्ररूपायेति**। असिद्धो विषयो धीविशेष-प्ररूपाय न क्षम इत्यन्वयः। अर्थाद् ब्रह्म यदि वेदान्तश्रुतिजन्यशाब्दज्ञानविषयो न स्यात् तदा प्रत्यक्षादिप्रमाणान्तरेण असिद्धमनवगतं ब्रह्म धीविशेषस्य = ब्रह्मविशिष्टबुद्धेः प्ररूपाय = निरूपणाय क्षमं न भवेत्, विशेषणासिद्धेः ब्रह्मविशिष्टबुद्ध्यसिद्धेरित्यर्थः। एतदेवोपपादयति– **विधिर्नारूपितेति**। अनिरूपित-पदो विधिर्न (भवति) धीमात्रं (च) न विधीयत इत्यन्वयः। अनिरूपितं पदं = विषयो यस्येति विग्रहः। असिद्धविषयकः प्रतिपत्तिविधिर्न भवितुमर्हतीत्यर्थः। धीमात्रम् = निर्विषयैव धीर्विधीयेत इत्याशङ्क्याह – **धीमात्रं न विधीयत इति**। निर्विषया निराकारा धीः = प्रतिपत्तिर्नैव विधातुं शक्यत इति कारिकार्थः।

कारिकार्थं स्वयं विवृणोति ग्रन्थकारः – **न खल्वित्यादिना**। ज्ञानमात्रम् = प्रतिपत्तिमात्रं न विधीयते श्रुत्या। ज्ञानविशेषस्तु = ब्रह्मविषया प्रतिपत्तिस्तु विधीयेत। अनिरूपिते = अप्रसिद्धे च ब्रह्मणि नियोगो = विधिः प्रवर्तना नास्ति। हि = यतः अप्रसिद्धे = वेदान्तशब्दादनवगते विषये = ब्रह्मणि नियोक्तुं = प्रवर्तयितुं न शक्यत इत्यर्थः। कथं विषयविशिष्टमेव ज्ञानं विधीयते न निर्विषयम्? इत्याह – **ज्ञानस्य च विशेषोऽर्थद्वार इति**। उक्तं च – **अर्थेनैव विशेषो हि निराकारतया धियामिति**। निराकारं ज्ञानं विधातुमेव न शक्यत इति ज्ञानस्य स्वरूपविशेष-निरूपणाय = साकारत्वाय विषयप्रसिद्धिरावश्यकी। यतोऽप्रसिद्धो विषयो ज्ञानस्य विशेषस्वरूपावगमाय न प्रभुः = समर्थः। आत्मरूपस्य = ब्रह्मणः प्रतिपत्ति-

**अपि च, ज्ञानविशेषविधिवादिन आत्मतत्त्वे प्रामाण्यमेव हीयत इति दर्शयति —**

**विधिः स्वसिद्धिनिष्ठो वा क्रियासिद्धिपरोऽथवा।**
**अद्वैतब्रह्मतत्त्वस्य प्रतिपत्तिरहेतुका ॥ ११० ॥**
**विनियोगादधिगतिर्यास्या ज्ञानक्रियार्थता।**
**अतत्परा न प्रमाणं सार्थवादोत्थबुद्धिवत् ॥ १११ ॥**

---

विषयभूतस्य वेदान्तशब्दं विहाय अन्यतः = प्रमाणान्तरात् प्रसिद्धिर्नास्ति । अतो वेदान्तशब्दादपि यदि ब्रह्मावगमो न भवेत्, तदा द्वारभूतस्य ज्ञानविशेषकस्य अर्थस्य असिद्धौ विषय एव नोपपद्यते, विषयानुपपत्तौ च कुत्र पुरुषो नियुज्येतेति भवदभीष्टो नियोगोऽनुपंपन्न एवेति परमार्थः।

एवं प्रतिपत्तिविशेषविधिपरा यदि वेदान्तास्तदा आत्मतत्त्वे प्रामाण्यमेव हीयत इत्याह — **अपि चेति**। अद्वैतब्रह्मतत्त्वं निष्प्रमाणकमेव स्यादित्यर्थः। एतदेवाह कारिकाभिः— **विधिः स्वसिद्धिनिष्ठो** वेत्यादिभिः। विधिः= लिङाद्यर्थो नियोगः स्वसिद्धिनिष्ठः= आत्मनः कार्यतायां पर्यवसितः= नियोगः कार्य इत्येवमभिप्रायो विधेरित्येकः पक्षः प्राभाकरानुसारेण। अथवा क्रियासिद्धिपर इति भाट्टानुसारेण। क्रियायाः= क्रियात्मकस्य बोधादिविषयस्य सिद्धौ = कार्यतायां पर्यवसितः, बोधः कार्य इत्येवमभिप्रायो विधेरिति द्वितीयः पक्षः। उभयथापि अद्वैतब्रह्मतत्त्वस्य प्रतिपत्तौ प्रमाणाभावः प्रसज्येत, विधेस्तु नियोगस्य बोधादिविषयस्य वा कार्यताबोधे व्यापृतत्वादद्वैतब्रह्मतत्त्वप्रतिपत्तिरहेतुका स्यादित्यर्थः।

**विनियोगादिति**। विनियोगाद् याऽधिगतिः, अस्या ज्ञानक्रियार्थता, अतः अतत्परा सा अर्थवादोत्थबुद्धिवद् न प्रमाणम् इत्यन्वयः। अयमर्थः— यद्यपि "आत्मा प्रतिपत्तव्यः" इति विधिवाक्याद् ब्रह्मात्मस्वरूपं न प्रतीयते, तथापि विनियोगात् = "य आत्माऽपहतपाप्मा" इत्यादिनाऽऽत्मस्वरूपबोधकवाक्येन सह विधिवाक्यस्य एकवाक्यतावशात् पदार्थानां यः परस्परसम्बन्धस्तस्मादित्यर्थः।

**विधिः क्रियागोचरत्वान्न द्रव्ये व्यापृतिक्षमः।**
**सत्तान्वयात्तु तत्सिद्धिः प्रत्युतेति स दुष्यति॥ ११२॥**
**विशिष्टान्यक्रियाबोधः प्रमाणं च विशेषणे।**
**प्रतिपत्तिर्विशिष्टाऽपि विषयस्य नियोगतः॥ ११३॥**

---

पदार्थानां परस्परसम्बन्धोऽत्र विनियोगस्तस्माद् जायमाना याऽधिगतिः= आत्मस्वरूपावगतिः, इयमवगतिरीदृग् ब्रह्म ज्ञातव्यमिति ज्ञानकर्त्तव्यतापरा न त्वपहतपाप्मादिरूप आत्मेति आत्मस्वरूपपरा। अतोऽतत्परत्वाद् आत्मस्वरूपबोधे तात्पर्याभावात्, नात्मस्वरूपे साधिगतिः प्रमाणमित्यर्थः। यत्परः शब्दः स शब्दार्थ इति न्यायात्। अत्र दृष्टान्तः– **अर्थवादोत्थबुद्धिवदिति**। यथा अर्थवादवाक्यजन्या बुद्धिर्विधिस्तुतिमात्रपरा भवति न तु स्वातन्त्र्येण किञ्चिद् विधत्ते, तद्वदित्यर्थः।

यद्युच्येत ''आत्मा प्रतिपत्तव्यः'' इति विधेरात्मस्वरूपबोध एव तात्पर्यमस्तु न तु ज्ञातव्ये= ज्ञानकर्तव्यताप्रतिपादने इत्यर्थः, तत्राह– **विधिः क्रियागोचरत्वादिति**। अर्थात् क्रियां गोचरयन् विषयीकुर्वन् विधिर्द्रव्ये= वस्तुस्वरूपे व्यापारवान् भवितुं नार्हति। स विधिरात्मनो ज्ञातव्यतां प्रतिपादयति नात्मस्वरूपमिति भावः। न केवलं सिद्धवस्तुत्वेनात्मनो विधिविषयत्वाभावः, किन्तर्हि कालत्रयसम्भिन्नसत्तान्वयादपि आत्मस्वरूपं न विधिविषय इत्याह– **सत्तान्वयात्त्विति**। सत्तान्वयात्तु कालत्रयसंसृष्टसत्तानुगमादेव तत्सिद्धिः= आत्मस्वरूपप्रतीतिः''आत्मस्वरूपमभूत्, अस्ति, भविष्यति चेति''। न हि काचित् क्रिया कालत्रयसम्भिन्नया सत्तया प्रतीयते। न हि वर्तमानकालिकक्रियायामभूद् भविष्यति चेति प्रतीतिर्जायते। अतोऽपि क्रियाबोधको विधिर्वस्तुस्वरूपबोधे न क्षमः। प्रत्युत स दुष्यति, स्वरूपहानात्। कालानवच्छिन्नभावमात्रविषयकत्वं हि विधेः स्वरूपं कालावच्छिन्नसिद्धवस्तुस्वरूपबोधने तु तस्य निजं स्वरूपमेव हीयेतेति दोष इति भावः।

ननु यथा ''सोमेन यजेत'' इति सोमविशिष्टयागविधिवाक्यमेव तद्विशेषणे सोमे प्रमाणं भवति, तथा ब्रह्मविशिष्टज्ञानकर्तव्यतायां प्रमाणम् ''एवंभूत आत्मा

**सत्तां न साधयत्येव समारोपेण सम्भवात्॥ ११३-१/२ ॥**

**यदि तावन्नियोगस्यैव कार्यता प्रतीयेत, तदा स स्वनिष्पत्तौ पर्यवसितः सह शब्देन। अथ विनियोगाद् विषये कर्तव्यतावगमः, तथापि विषयसिद्धौ। उभयथा न वस्तुतत्त्वं संस्पृशति। तत्राद्वैतात्मतत्त्वप्रतिपत्तिरप्रमाणिका स्यात्।**

---

प्रतिपत्तव्यः" इति विधिरेव विशेषणभूते आत्मस्वरूपे प्रमाणमस्ति। अतः कथमात्मतत्त्वप्रतीतिरप्रामाणिकीत्याशङ्कायामाह – **विशिष्टान्येति**। विशिष्टा चासौ अन्यक्रिया चेति विग्रहः। विशिष्टा = सोमविशिष्टा, अन्यक्रिया प्रतिपत्तितो भिन्ना यागक्रिया। तथा च सोमविशिष्टा या प्रतिपत्तितोऽन्या यागक्रिया, तस्या बोधको विधिः सोमात्मके विशेषणे प्रमाणं भवितुमर्हति। किन्तु प्रतिपत्तिस्तु विशिष्टापि = ब्रह्मविशिष्टापि सती विशेषणभूते ब्रह्मणि प्रमाणं भवितुं नार्हति। अयमेव हि प्रतिपत्तिविधेर्यागविधौ विशेषो यद् यागविधिः यागविशेषणे सोमेऽपि प्रमाणं भवति, सोमस्यान्यतोऽप्राप्तत्वात्। प्रतिपत्तिविधिस्तु न प्रतिपत्तिविशेषणें ब्रह्मणि प्रमाणं भवतीति। प्रतिपत्तिविधिः कथं न ब्रह्मणि प्रमाणं भवतीत्यत्रोपपत्तिमाह – **प्रतिपत्तिर्विशिष्टाऽपीत्यादि**। विशिष्टापि प्रतिपत्तिर्नियोगतो विषयस्य सत्तां न साधयत्येव, समारोपेण (अपि) सम्भवाद् इत्यन्वयः।

अयमाशयः – "एवभूत आत्मा प्रतिपत्तव्यः" इति विहिता प्रतिपत्तिस्तु आत्मस्वरूपविशेषणविशिष्टाऽप्रि विषयस्य = प्रतिपत्तिविषयस्यात्मनोऽपहतपाप्मादिरूपस्य सत्तां नियोगतो नियमेन साधयत्येवेति नास्ति। कुतः ? समारोपेण अतद्रूपे तद्रूपाध्यारोपेणापि "योषा वाव गौतमाग्निः" इतिवत् सम्भवाद् इति भावः।

विधिः स्वसिद्धिनिष्ठो वा" इति कारिकार्थं विवृणोति ग्रन्थकृत् – **यदि तावन्नियोगस्यैवेति**। प्राभाकरमतानुसारेणेदम्। भाट्टमतेनाह – **अथ विनियोगादिति**। विषये = ब्रह्मणि यागादौ चेत्यर्थः। भाट्टरीतिमनुसृत्य समाधत्ते – **तथापीति**। विषयसिद्धौ = ब्रह्मणो ज्ञाने = ज्ञातव्यत्वे इति यावत्, शब्देन सह विधिः पर्यवसित इति शेषः। पक्षद्वयमपि दूषयति – **उभयथेति**। स्पष्टमेतत्।

**स्यादेतत् – "य आत्माऽपहतपाप्मा विजरः" (छा० ८।७।१) इति पदानां सामानाधिकरण्येन सम्बन्धादन्यथा वा वस्तुतत्त्वप्रतिपत्तिरिति। तच्च न, अन्यपरत्वात्। सा हि न 'एवमिदम्' इति पर्यवसिता, किन्तु 'एवमिदं प्रतिपत्तव्यम्' इति कर्तव्यतानिष्ठा न वस्तुतत्त्वे प्रमाणं वृत्तान्तेष्विवार्थवादोत्थज्ञानम्, अन्यपरत्वात्। न चात्मतत्त्वमेव विधेर्विषयः,**

---

शङ्कते – स्यादेतदिति। अयमर्थः – "स आत्मा प्रतिपत्तव्यः" इति विधिवाक्यं यद्यपि साक्षाद् ब्रह्मतत्त्वे प्रमाणं नास्ति, ब्रह्मात्मतत्त्वस्य ज्ञातव्यत्व एव तस्य प्रमाणत्वात्, तथापि "य आत्माऽपहतपाप्मा विजरः" इति पदानां "स आत्मा प्रतिपत्तव्यः" इति वाक्येन सह सामानाधिकरण्येन सम्बन्धाद् अर्थाद् एकवाक्यत्वाद् वस्तुतत्त्वस्य ब्रह्मणोऽपि प्रतिपत्तिर्भविष्यति। अथवा अन्यथा = वैयधिकरण्येन सम्बन्धाद् ब्रह्मतत्त्वस्य प्रतिपत्तिर्भविष्यति। वैयधिकरण्येन सम्बन्धो यथा – "एष त आत्मा" इति पदानां "स आत्मा प्रतिपत्तव्यः" इति वाक्येन सह त इति स इति असमान-विभक्तिकत्वाद् वैयधिकरण्येन सम्बन्ध इति बोध्यम्। अथवा 'अन्यथा' इत्यस्य 'अनुपपत्त्या' इत्यर्थः। निर्विषयकप्रतिपत्त्यनुपपत्त्या प्रतिपत्त्यविषयत्वेन ब्रह्मवस्तुनः सिद्धिरिति भावः। तथा च प्रतिपत्तिविधिरेव एकवाक्यताबलाद् अनुपपत्त्या वा ब्रह्मवस्त्वपि बोधयिष्यतीति न वेदान्तानां सिद्धब्रह्मबोधे तात्पर्यमिति पूर्वपक्षः।

निराकरोति – **तच्च नेति**। निराकरणे हेतुमाह – **अन्यपरत्वादिति**। अर्थात् "आत्मा प्रतिपत्तव्यः" इति विधिवाक्यं नियोगपरत्वाद् न सिद्धार्थे ब्रह्मणि मानमित्यर्थः। तदुपपादयति – **सा हीति**। यतः सा = उक्तविधिवाक्यजन्या प्रतिपत्तिर्न 'एवमिदं ब्रह्म' इत्यर्थपरा, किन्तु 'एवमिदं ब्रह्म प्रतिपत्तव्यम्' इति प्रतिपत्तिकर्तव्यतापरा, अत एव तद्वाक्यं न ब्रह्मवस्तुनि प्रमाणम्। अत्र दृष्टान्तमाह – **वृत्तान्तेष्विवेति**। यथा अर्थवादवाक्यं विधेयनिषेध्ययोः प्रशंसा-निन्दान्यतरपरं भवति न तु यथाश्रुतवृत्तान्तादिपरम्, तद्वदित्यर्थः। अत्र "वायुर्वै क्षेपिष्ठा देवता, इन्द्रो वृत्राय वज्रमुदयच्छत्" इत्याद्यर्थवादवाक्यमुदाहार्यम्। "विधिः क्रियागोचरत्वात्" इति कारिकांशं स्फुटार्थीकरोति – **न चात्मतत्त्वमिति**।

**तस्यानुष्ठेयविषयत्वात्, क्रियायाश्च तथाभावात्। सिद्धवत् स्वशब्दोपादानेऽननुष्ठेये द्रव्ये व्यापारायोगात्। प्रत्युताविधेयकालत्रयान्यतमसंस्पृष्टसत्तानुगमेन द्रव्यस्वरूपसिद्धिः— ईदृशं वस्त्वभूत्, अस्ति, भविष्यति वेति।**

**तस्मात् स्वरूपसिद्धौ दुष्यति। न हि विधेयस्य कालत्रयेऽपि**

---

कारिकार्थव्याख्यानेनैव व्याख्यातप्रायमेतत्। तस्य = विधेः प्रतिपत्तिरूपानुष्ठेयविषयत्वात्। क्रियायाः = प्रतिपत्तिरूपक्रियाया एव तथाभावात् = अनुष्ठेयत्वादित्यर्थः।

ननु क्रियायामिव वस्तुन्यपि लिङादिविधेर्बोधनरूपो व्यापारो भविष्यतीति चेदत्राह — **सिद्धवदित्यादि**। यथासिद्धे वस्तुनि विधेर्न कश्चिद् व्यापारस्तथैव स्वशब्दोपादाने द्रव्येऽपि अननुष्ठेये = अनुष्ठेयत्वरहिते न विधेर्व्यापारसम्भव इत्यर्थः। स्वशब्देनोपादानं यस्य तत्स्वशब्दोपादानम्, तस्मिन् स्वशब्दोपादाने = स्वशब्दोपात्ते इत्यर्थः। अयं भावः — यथा स्वशब्दोपात्तायां क्रियायां विधेर्व्यापारो भवति क्रियाया अनुष्ठेयत्वात्, तथा एकवाक्यताबलाद् अनुपपत्त्या वा स्वशब्दोपात्तेऽपि द्रव्येऽनुष्ठानायोग्ये सिद्धवस्तुनीव विधेर्बोधनव्यापारः = मुख्यं तात्पर्यं न सम्भवतीत्यर्थः। "सत्तान्वयात्तु तत्सिद्धिः प्रत्युतेति स दुष्यति" इति कारिकांशं स्वयं व्याचष्टे ग्रन्थकृत् — **प्रत्युतेति**। एतदर्थस्तु कारिकाव्याख्यानप्रसङ्ग एव विशदीकृतो नेह पुनर्वितन्यते।

द्रव्यस्वरूपसिद्धौ क्रियातो विशेषं प्रदर्शयति — **प्रत्युतेति**। अविधेयः = विध्यविषयभूतो यः कालत्रयान्यतमो भूतकालो वर्तमानकालो भविष्यत्कालो वा, तेन संस्पृष्टा या सत्ता — ईदृशं वस्तु अभूत्, अस्ति, भविष्यतीति, तथाविधसत्तानुगतैव द्रव्यस्वरूपप्रतीतिर्भवति। विध्यर्थक्रियाप्रतीतिस्तु न कालसंस्पृष्टसत्तानुगता भवतीति द्रव्यक्रिययोर्विशेषः।

स दुष्यतीति निष्कर्षमाह — **तस्मादिति**। स्वरूपसिद्धौ = विधिवाक्याद्

**सत्तावगमः। न हि 'यजेत' इत्युक्ते यागस्य भूतकाला वर्तमानकाला भविष्यत्काला वा सत्ता प्रतीयते। ननु भविष्यत्कालाऽवगम्यते, भविष्यत्काल-विषयत्वाद्विधेः। नैतत्, न हि विहितं नियोगतोऽनुष्ठास्यते, विहिताकरणदोषाभावप्रसङ्गात्।**

**ननु विशिष्टक्रियाभिधानं विशेषणेऽपि प्रमाणमिष्यते— यथा, 'सोमेन यजेत' तथा 'अङ्गदी कुण्डली व्यूढोरस्को देवदत्तस्य पुत्रोऽधीते'**

---

कालावच्छिन्नद्रव्यस्वरूपसिद्धौ तु स विधिरेव दुष्यति = कालानवच्छिन्नभावमात्र-बोधकाद् निजस्वरूपादेव च्यवत इत्यर्थः। एतदुपपादयन्नाह— **न हि विधेयस्येति**। कुत इति जिज्ञासायामाह— **न हि 'यजेत' इति**।

ननु 'यजेत' इति लिङादियुक्ताद् वाक्याद् नियोगस्य विध्यर्थस्य भविष्य-त्कालोपरक्तैव सत्ता प्रतीयते, यागस्य करिष्यमाणत्वादिति शङ्कते— **नन्विति**। समाधत्ते— **नैतदिति**। अयमर्थः—नियोगविधिविहितस्य यागस्य भविष्य-त्कालोपरक्तसत्तावगमे अवश्यमेव यागानुष्ठानेन भवितव्यम्, अन्यथा विधिश्रुतिर्निरा-लम्बना प्रसज्येत। एवं च विहितस्याकरणं न स्यादित्यतश्च "अकुर्वन् विहितं कर्म" इत्यकरणे दोषप्रतिपादिका श्रुतिर्निरर्थिकैव स्यात्। विहिताकरणप्रयुक्तस्य दोषस्याभावप्रसक्तेरिति भावः। तस्मात् सुष्ठूक्तम्— कालत्रयान्यतम-संस्पृष्टसत्तानुगतस्य द्रव्यस्वरूपस्य (ब्रह्मात्मतत्त्वस्य) प्रत्यायने विधेः स्वरूपमेव दुष्यतीति।

ननु यथा वेदे "सोमेन यजेत" इति सोमविशिष्टयागविधानवाक्यं सोमरूप-विशेषणस्यापि विधाने प्रमाणं भवति, लोके वा यथा "अङ्गदी कुण्डली व्यूढोरस्कः (विशालवक्षाः) देवदत्तस्य पुत्रोऽधीते" इति वाक्यं पुत्राध्ययनक्रियां बोधयत् पुत्रस्य अङ्गदादिसर्वं विशेषणसमूहमपि बोधयति, तद्वद् उक्तैकवाक्यताबलात् "अपहतपाप्मादिरूप आत्मा प्रतिपत्तव्यः" इति विशिष्टप्रतिपत्तिविधिवाक्यमेव प्रतिपत्तिविशेषणे अपहतपाप्मादिस्वरूपे आत्मन्यपि प्रमाणमभ्युपगम्यते। अतो नात्मतत्त्वप्रतीतिरप्रामाणिकी प्रसज्यते, प्रतिपत्तिविधेरेव तत्रापि प्रमाणत्वा-

**इत्यध्ययनक्रियावत् सर्वो विशेषणकलापः प्रतीयते। सत्यम्। विशिष्ट-क्रियाप्रमाणं विशेषणेऽपि प्रमाणमन्यत्र प्रतिपत्तेः। प्रतिपत्तिर्हि विषयविशेषविशिष्टा प्रमीयमाणा न विषयविशेषस्य सद्भावं गमयति, अन्यथाभूते तथाभावसमारोपेणापि सम्भवात् "असौ वाव लोको गौतमाग्निः" (छा० ५।४।१) इति यथा द्युप्रभृतिष्वनग्निदृष्टेः।**

**अत्राह —**

**ननु नो विपरीतार्था धीः, प्रतीतिविरोधतः॥ ११४॥**

**अनाश्वासाच्च रजतप्रत्ययो रजते स्मृतिः॥ ११४-१/२॥**

---

दित्याशयेनाशङ्कते – **नन्विति**। उत्तरयति – **सत्यमिति**। अयमभिप्रायः – प्रतिपत्तिभिन्ना या विशिष्टा क्रिया यागक्रिया अध्ययनक्रिया च, तस्यां प्रमाणं वाक्यं सोमादिविशेषणेऽपि प्रमाणं भवतु नाम, सोमादिविशेषणवस्तु विना तूक्तक्रियाया अनिष्पत्तेः। विषयविशेषविशिष्टायां प्रतिपत्तौ तु यत् प्रमाणं तत्तु विषयविशेषस्य सद्भावे प्रमाणं नावश्यमेव भवति, अन्यथाभूतेऽपि वस्तुनि तथात्वारोपेणापि विशिष्टप्रतिपत्तिसम्भवात्। विशिष्टप्रतिपत्तिविधिर्विशेषणस्य प्रतीतिमात्रमाक्षिपेत्, न तु तत्सद्भावेऽपि प्रमाणमिति हृदयम्। अत्र वैदिकं दृष्टान्तमाह – "असौ वाव लोको गौतमाग्निः" इति। 'द्युप्रभृतिष्वनग्निदृष्टेः' इत्यस्य 'द्युप्रभृतिषु अनग्निषु अग्निदृष्टेः' इत्यर्थः। अथवा 'द्युप्रभृतिष्वग्निदृष्टेः' इत्येव पाठः।

समारोपेणापि विशिष्टप्रतिपत्तिसम्भवादित्युक्तमसहमानः प्रतिपक्षी प्रत्यवतिष्ठते – **अत्राहेति**। अत्रेयं पूर्वपक्षकारिका – **ननु नो विपरीतार्थेत्यादिः**। अयमर्थः कारिकायाः – अत्र 'नो'शब्दो निषेधार्थः। ननु प्रतीतिविरोधतः अनाश्वासाच्च विपरीतार्था धीः नो (नास्ति)। रजतप्रत्ययः (तु) रजते स्मृति-रित्यन्वयः। अयं श्लोकार्थः – 'यो ह्यर्थो यस्यां बुद्धौ भासते स एव तस्या बुद्धेर्विषयो नान्यः' इति नियमात् 'इदं रजतम्' इति बुद्धौ रजतं भासते शुक्तिर्विषय इति कथनं प्रतीतिविरुद्धम् = अनुभवविरुद्धमित्यर्थः। यथा घटज्ञाने

**न खल्वन्यदन्यथा प्रतीयत इति युक्तम्, प्रतीतिविरोधात्। कथमन्यस्मिन् प्रतिभासमानेऽन्यो विषयः? अनाश्वासाच्च। विषयरूपव्यभिचारिणि ज्ञाने न ततो विषयनिश्चयः स्यात्। अपि च विषयरूपमननुकुर्वद-विषयमनालम्बनं ज्ञानमग्राह्यमेव स्यात्। ज्ञानहेतुमात्रस्यानालम्बनत्वात् चक्षुरादिवत्। तथा चावेदकत्वान्नान्यापेक्षादपि ततोऽर्थसिद्धिः।**

---

पटोऽवभासते इत्यनुभवविरोधस्तद्वत् तस्मात् प्रतीतिविरोधाद् विपरीतोऽर्थो विषयो यस्याः सा, अयथार्था बुद्धिर्नास्ति। एवम्, अनाश्वासात् = अविश्वासादपि अयथार्था बुद्धिर्न भवति। अर्थाद् ज्ञानं यदि अन्यं विषयमन्यथा गृह्णीयात् तर्हि व्यभिचारशङ्कया सर्वेषु ज्ञानेषु अनाश्वासः स्यात्, अर्थात् 'स एव विषयः' इति निश्चयो न क्वापि स्यादिति। ननु यदि शुक्तिः अन्यथा (रजततया) न भाति, तदा शुक्तौ रजतप्रत्ययः कीदृश इति जिज्ञासायामाह – **रजतप्रत्ययो रजतविषयिणी स्मृतिरेवेति**। अर्थात् पुरोवर्तिनी शुक्तिरिदन्त्वेनानुभूयते हट्टस्थं रजतं च तत्र स्मर्यत इति नायमयथार्थः प्रत्यय इति कारिकार्थः। **'न खल्वि'**-त्यारभ्य **'न ततो विषयनिश्चयः स्यात्'** इत्यन्तेन वृत्तिग्रन्थेन कारिकायाः पादत्रयं व्याख्यातं बोद्धव्यम्। विषयरूपव्यभिचारिणि ज्ञाने = विषयाभावेऽपि ज्ञानाभ्युपगम इत्यर्थः। शेषः स्पष्टार्थः। निर्विषयज्ञानस्वीकारे दोषान्तरमप्याह – **अपि चेति**। **विषयरूपमननुकुर्वत्** = विषयाकारमदधद् अत एवाविषयम् = निर्विषयम्, **अनालम्बनम्** = आलम्बनशून्यं ज्ञानम् अग्राह्यमेव स्यात्। उक्तं हि – "अर्थेनैव विशेषो हि निराकारतया धियाम्" इति।

ननु मा भूद् वेद्यतया शुक्तिरालम्बनं ज्ञानस्य हेतुतया तु स्यात्, निरधिष्ठानभ्रमाभावादिति शङ्कायामाह – **ज्ञानहेतुमात्रस्येति**। अर्थात् चक्षुरादिरपि ज्ञानस्य हेतुर्भवति, न तु तदवलम्ब्य ज्ञानावस्थितिः। तस्माद् विषयाभावे निरवलम्बनं ज्ञानं कथं स्वरूपतोऽवतिष्ठेत ?

यद्युच्येत, इष्टमेव ज्ञानानामौत्सर्गिकमनालम्बनत्वम्, यत्र पुनरर्थक्रिया, तत्र विषयानवभासेऽपि ज्ञानस्य सालम्बनत्वमपवाद इति, तत्राह – **तथा चेति**।

**किं तर्हीदं शुक्तिसन्निकृष्टे चक्षुषि 'रजतम्' इति? स्मृतिः, सामान्यग्रहणात्। भ्रान्तिस्तर्हि कथम्? प्रत्यक्षस्मर्यमाणयोर्विवेकाग्रहणात्। सोऽयं भेदाग्रहणेऽभेदग्रहणाभिमानो विवेकरहितानाम्, यथा दूरादन्तरालाग्रहणे वृक्षादिषु संश्लेषग्रहणाभिमानः। तस्मात् 'स्मरामि' इति विवेकशून्या रजतस्मृतिरेषा।**

---

अवेदकत्वात् = विषयानवभासकत्वाद् अर्थक्रियापेक्षयाऽपि ज्ञानस्य प्रामाण्यं न स्यात्। विषयावभासकत्व एव ज्ञानस्य प्रामाण्यम्। प्रामाण्याभावे च न निरालम्बनात्तस्माद् ज्ञानाद् अर्थसिद्धिर्विषयनिश्चय इति भावः।

सिद्धान्ती पृच्छति – **किं तर्हीदमिति**। यदि शुक्तौ 'रजतमिदम्' इति ज्ञानं नान्यथाख्यातिरूपं = न भ्रमात्मकम्, तदा शुक्तिसन्निकृष्टे चक्षुषि सत्येव जायमानमिदं रजतज्ञानं किं रूपम्? इति। रजतज्ञानयाथार्थ्यवादी प्रत्याह – **स्मृतिरिति**। स्मृत्यात्मकमेव तत्र रजतज्ञानमित्यर्थः। तत्र हेतुमाह – **सामान्यग्रहणादिति**। अर्थाद् भास्वर-शुक्लत्वादिरूपस्य शुक्तिरजतोभयसामान्यधर्मस्य दर्शनाद् रजतसदृशीं शुक्तिं दृष्टवतो रजतविषयकसंस्कारोद्बोधाद् रजतस्मृतिस्तत्र जायत इति।

पुनः सिद्धान्ती पृच्छति – **भ्रान्तिस्तर्हि कथमिति**। अर्थात् 'इदं रजतम्' इति ज्ञाने 'इदम्' इति शुक्तेर्ग्रहणम्, 'रजतम्' इति च रजतस्मरणम्, तदा उभयमपि यथार्थमेवेति कथं भ्रान्तित्वव्यवहारः? इति। उत्तरयति – प्रत्यक्ष-स्मर्यमाणयोः शुक्तिरजतयोर्विवेकाग्रहणात् = भेदाग्रहणात् = शुक्तेर्ये विशेषा नीलपृष्ठत्रिकोणत्वादयस्ते अभिभवान्न गृहीताः, रजतस्य च यो विशेषः पूर्वदेशकाल-गतत्वादिरूपः सोऽपि मनोदोषान्न गृहीत इति तयोर्विवेकाग्रहणाद् रजतबुद्ध्या शुक्तौ प्रवृत्तस्य व्यवहारे विसंवादात् तत्र यथार्थयोरपि प्रत्यक्षस्मरणयोर्भ्रान्तित्वमुच्यते। तथा च विवेकरहितानां पुरुषाणां भेदाग्रहण एवाभेदग्रहणाभिमानः, स एव च भ्रमसंज्ञया व्यवह्रियत इति। अत्र दृष्टान्तमाह – **यथेति**। स्वपक्षमुपसंहरति पूर्वपक्षी – **तस्मादिति**। मूले 'अत्राह' इत्यारभ्य 'रजतस्मृतिरेषा' इति पर्यन्तो भागोऽख्यातिवादिनः पूर्वपक्षः।

अत्रोच्यते –

नैतन्नहि प्रवर्तेत शुक्तिकाशकले तदा ॥ ११५ ॥
रजते सा प्रवृत्तिश्चेन्न तस्यासन्निधानतः ॥
असन्निधानाबोधाच्चेत् प्रवृत्तिनियमः कुतः ॥ ११६ ॥
प्रवर्तते यत्तत्रैव तत्तत्सन्निधिकारितम् ।
अन्यत्र भेदग्रहणाद् विवेकाग्रहणात्तथा ॥ ११७ ॥

---

नान्यस्य शुक्तिकाशकलस्य अन्यथा रजतत्वेन भानं किन्तु विवेकाग्रह एव प्रवृत्तिहेतुरिति पूर्वपक्षं निराकरोति – **नैतदिति**। 'न' इति पदेन पूर्वपक्षं निषेधति । 'एतत्' इत्यस्य 'तदा' इत्यनेन सम्बन्धः। तथा चेत्थं श्लोकान्वयः– यदुक्तं नान्यस्यान्यथा भानमिति, तन्न, (यदि) एतत् (पूर्वोक्तं मतम्) तदा शुक्तिकाशकले न हि प्रवर्तेत । अर्थाद् यदि चक्षुःसंयुक्तं शुक्तिशकलं रजतमिति न प्रतीयात्, देशान्तरस्थरजतं च पुरोवर्तितया न प्रतीयात्, तदा रजतार्थी शुक्तिशकले न प्रवर्तेत, शुक्तिशकलस्य भवन्मते रजतत्वेन अनवगमात् । यद्युच्येत – स्मर्यमाणे रजत एव सा प्रवृत्तिरिति चेत्, न, तस्य स्मर्यमाणरजतस्य पुरोवर्तिदिशेऽसन्निधानात् = सन्निधानाभावात् पुरोवर्तिदिशे प्रवृत्तिर्न स्यात् । यद्युच्येत – पुरोवर्तिदिशे रजतस्य सन्निधानाभावेऽपि तस्य असन्निधानस्याज्ञानात् तत्र प्रवृत्तिरिति चेत्, तदा प्रवृत्तिनियमः कथं स्यात् ? अर्थाद् यदि असन्निधानस्य अग्रहणात् प्रवृत्तिस्तदा शुक्तिदेश एव प्रवृत्तिः, न लोष्ठादिदेश इति नियमः कुतः स्यात् ? रजतसन्निधानाभावस्य शुक्तिदेश इव लोष्ठादिदेशेऽपि तुल्यत्वात् शुक्तिदेश इव लोष्ठादिदेशेऽपि रजतार्थी प्रवर्तेतेति सिद्धान्तिनोऽभिप्रायः। शुक्तिशकल एव प्रवृत्तिरित्युपपादयति – **प्रवर्तते इति**। यत् = यस्मात् तत्रैव = शुक्तिशकल एव प्रवर्तते, तत् = तस्मात् तत् = प्रवृत्तिरूपं कर्म तत्सन्निधिकारितम् = शुक्तिशकलस्य रजतात्मना प्रतीतिकृतमित्यर्थः। तथा च सिद्धाऽन्यथाख्यातिः।

**प्रवृत्तिभेदः सादृश्याद् विवेकाग्रहणं यदि।**
**अदृष्टेषु प्रवर्तेत लोष्टादिष्वविवेकतः॥ ११८॥**
**न तत्र यदि तद्बुद्धिः शुक्तिकाशकलेऽपि न।**
**अथास्ति विपरीतार्था ख्यातिर्निह्नूयते कथम्॥ ११९॥**
**अदृष्टत्वादप्रवृत्तिः शुक्तिकाशकले समा।**
**दृष्टं तद् येन रूपेण तत् प्रवृत्तेरकारणम्॥ १२०॥**

---

अख्यातिवादी स्वंपक्षमुपपादयन्नाशङ्कते – **अन्यत्रेति**। अन्यत्र = **लोष्टादौ** भेदग्रहणात् = रजतविवेकग्रहणाद् अप्रवृत्तिः, शुक्तिशकले तु विवेकाग्रहणात् = रजतभेदाग्रहणात् प्रवृत्तिभेदः = प्रवृत्तिविशेषो विसंवादिनी प्रवृत्तिरित्यर्थः। तच्च विवेकाग्रहणं शुक्तिरजतयोः सादृश्यादिति। इमामाशङ्कां "यदि" इत्यनेनोद्भाव्य सिद्धान्ती निराकरोति – **अदृष्टेष्विति**। अयं भावः – प्रत्यक्षलोष्टादिषु रजतभेद-ग्रहणात् कामं न प्रवर्ततां नाम। अदृष्टेषु लोष्टादिषु तु रजतभेदग्रहणं नास्त्येवेति अविवेकतः = विवेकाग्रहणात् प्रवर्ततैवेति अख्यातिवादिनो दोष इति।

अख्यातिवादी शङ्कते – **न तत्रेति**। तत्र = अदृष्टेषु लोष्टादिषु तद्बुद्धिः = रजतज्ञानं नास्ति, अत एव तत्र रजताद् विवेकाग्रहणेऽपि न प्रवर्तत इति। इमामप्याशङ्कां 'यदि' शब्देनोत्थाप्य निराकरोति सिद्धान्ती – **शुक्तिकाशकलेऽपि नेति**। तव मते तु शुक्तिशकलेऽपि रजतज्ञानं नास्त्येवेति तत्रापि न प्रवर्तेत। अथास्ति = यदि तु तव मतेऽपि शुक्तिशकले रजतार्थिप्रवृत्तिदर्शनाद् रजतज्ञानमस्ति, तदा विपरीतार्था ख्यातिः = अन्यथाख्यातिः कथं निह्नूयते = अपलप्यते। तदिदं घट्टकुटी- प्रभातायितम्। यदि उच्येत – परोक्षलोष्टादौ अदृष्टत्वान्न प्रवर्तत इति, तदा तव मते शुक्तिशकलमपि रजततया अदृष्टमेवास्तीति तत्रापि रजतार्थी न प्रवर्तेत।

यदि उच्यते – शुक्तिशकलं तु "इदम्" इति सामान्यरूपेण दृष्टमेवास्तीति, तत्राह सिद्धान्ती – **दृष्टं तदिति**। अर्थाद् येन रूपेण = इदन्त्वेन रूपेण शुक्तिशकलं

**दृष्टस्मृताविवेकाच्चेदिदमत्र परीक्ष्यताम्।**
**तत्त्वबोधादथातत्त्वाबोधाद् रजतवेदनात्॥ १२१॥**
**दृष्टे प्रवृत्तिः पूर्वस्मिन् विपरीतार्थता मतेः।**
**न दृष्टादृष्टयोर्भेदः परस्मिन्नोपयोगिनी॥ १२२॥**
**खयोगदर्शने ते हि समारोपोपयोगिनी।**
**नादृष्टेऽसम्प्रयुक्ते वा चाक्षुषः स्याद् विपर्ययः॥ १२३॥**

---

दृष्टम्, तत् = तेन रूपेण तद्दर्शनं प्रवृत्तिं प्रति नैव कारणमिति तथापि नैव प्रवर्तेतेति भावः।

ननु दृष्टस्मृतयोः शुक्तिरजतयोरविवेकात् सामान्यतो दृष्टायां शुक्तौ प्रवृत्तिरुपपन्ना, अतोऽदृष्टेषु लोष्टादिषु न विवेकाग्रहणमात्रेण प्रवृत्तिप्रसङ्ग इति शङ्कते — **दृष्टस्मृताविवेकाच्चेदिति**। एतद् दूषयितुमाह — **इदमत्र परीक्ष्यतामिति**। अत्र विकल्पमुपस्थापयति — **तत्त्वबोधादथातत्त्वाबोधादिति**। तत्त्वबोधः = अभेदग्रहः, अतत्त्वाबोधः = भेदाग्रहः। तथा चायं विकल्पार्थः = रजतज्ञानाद् दृष्टशुक्तौ या प्रवृत्तिर्भवति, सा प्रवृत्तिर्दृश्यमानस्मर्यमाणयोरभेदग्रहणाद् भवति ? अथवा तयोर्भेदाग्रहणाद् भवति ? तत्र पूर्वस्मिन् पक्षे अर्थाद् अभेदग्रहपक्षे मतेः = रजतबुद्धेः विपरीतार्थता = रजतभिन्नशुक्तिविषयता प्राप्ता तथा च शुक्तिशकलस्यैव रजतत्वेन ग्रहणाद् अन्यथाख्यातिरेव सिद्धा।

द्वितीये भेदाग्रहपक्षे दोषमाह — **न दृष्टादृष्टयोर्भेदः परस्मिन् इति**। दृष्टे शुक्तिशकले अदृष्टे लोष्टादौ चोभयत्रापि रजतस्य भेदो न गृहीतः। अतो दृष्टादृष्टयो-र्भेदाभावाद् दृष्टे भेदाग्रहात् शुक्तिशकले इव अदृष्टे लोष्टादावपि रजतार्थिनः प्रवृत्तिः स्यात्।

ननु दृष्टे शुक्तिशकले दर्शनमस्ति, खयोगः = इन्द्रिययोगश्च भवति, अदृष्टलोष्टादौ तु इमे उभे अपि न भवतः। अतोऽस्ति तयोर्भेदः, कथमभेद इत्याशङ्कायामाह — **नोपयोगिनी इति**। खयोगश्च दर्शनं चेति खयोगदर्शने ते न उपयोगिनी = भेदस्य

**यदि चक्षुषा सम्प्रयुक्तं शुक्तिशकलं न 'रजतम्' इति प्रतीयात्, रजतं वा तथा, न शुक्तिशकल आदित्सया प्रवर्तेत रजतार्थी, तस्य 'रजतम्' इत्यनवगतेर्लोष्टादिवत्। न च स्मर्यमाणे रजते सा प्रवृत्तिः, तद्देशासन्निधेः। न हि प्रतीतिमुपगतेऽपि वस्तुनि यत्र तस्यासन्निधिस्तत्र तेनार्थी प्रवर्तते।**

**स्यादेतत् – रजतस्य प्रतीतेरसन्निधेश्चाप्रतीतेस्तत्र प्रवृत्तिः। तन्न, शुक्तिकाशकल एव प्रवृत्तेः। तत्रैव तु प्रवृत्तिस्तत्सन्निधिनिबन्धना।**

---

अग्रहणे न उपयोगिनी इत्यर्थः। क्व तर्हि तयोरुपयोग इत्यपेक्षायामाह – **ते हीति**। रजतस्य शुक्तिशकले समारोपे तयोरुपयोग इत्यर्थः। अयमेवान्यथाख्यातिपक्षः। अत्र हेतुमाह – **नादृष्टे इति**। विपर्ययः=भ्रमः। चाक्षुषो हि रजतभ्रमः। स च चक्षुःसंयुक्तेऽधिष्ठानभूत इदमर्थवस्तुनि दृष्टे च सम्भवति। अधिष्ठानस्याप्रत्यक्षत्वे चाक्षुषभ्रमानुपपत्तेः। अतस्तत्र खयोगदर्शनयोरुपयोग इति भावः।

प्रकारान्तरेणान्यथाख्यातिं समर्थयति – **यदीति**। चक्षुषा संयुक्तं शुक्तिशकलं 'रजतमिदम्' इति प्रतीत्य अथवा रजतम् पुरोवर्तितया प्रतीत्य रजतार्थी जनः शुक्तिशकले प्रवर्तते रजतग्रहणेच्छया, अन्यथा शुक्तिशकलस्य रजतात्मना ग्रहणाभावे तथा देशान्तरस्थरजतस्य पुरोवर्तितया ग्रहणाभावे न शुक्तिशकले प्रवर्तेत, यथा रजतात्मनाऽप्रतीते लोष्टादौ रजतार्थी न प्रवर्तते, तद्वत्। एतावता अन्यथाख्यातिरेव समर्थिता भवति। न च वाच्यम्, रजतात्मना प्रतीते शुक्तिशकले न प्रवृत्तिः किन्तु स्मर्यमाणे रजत एवेति नान्यथाख्यातिसिद्धिरिति। यस्मिन् देशे प्रवृत्तिर्भवति, तस्मिन् देशे स्मर्यमाणरजतस्यासान्निधानात्, यत्र च देशे सन्निधानं रजतस्य तस्मिन् देशे च अप्रवृत्तेरवश्यमन्यथाख्यातेरेव शरणत्वात्। एतद् व्यतिरेकव्याप्त्या समर्थयति– **न हीति**। अत एव गृह्यमाणेऽपि ध्रुवादौ न प्रवृत्तिर-सन्निधानादिति भावः।

ननु रजतस्य स्मरणात्मकप्रतीतिः, तस्य शुक्तिशकलदेशेऽसन्निधानस्या-प्रतीतिः (अग्रहश्च) पुरोवर्तिदेशे प्रवृत्तौ हेतू न तु शुक्तिशकलस्य रजतात्मना प्रतीतिरित्याशङ्कते– **स्यादेतदिति**। निराकरोति– **तन्नेति**। शुक्तिकाशकल एव

**रजतमात्रप्रतीतेः स्मृतिविवेकशून्यत्वाच्च प्रवृत्तिरन्यत्रापि स्यात्, असन्निधानाग्रहणस्य तत्राप्यविशेषात्।**

**अथ मतम् – अन्यदेशेषु वस्तुषु सविशेषेषु प्रत्यक्षावगतेषु रजताद् विवेकग्रहणादप्रवृत्तिः, शुक्तिकाशकले तु रजतसाधारणशुक्लभास्वररूपमात्रप्रतीतेर्विशेषाप्रत्ययाच्च स्मृतिविपरिवर्तिनो रजताद् विवेकाग्रहणात् प्रवृत्तिः। एवमप्यदृष्टेषु लोष्टादिषु ततोऽन्यतानवधारणात् प्रवृत्तिः स्यात्।**

**अथ न तेषु रजतावगमः, इतरत्रापि न। भावे वा विपरीता ख्यातिरभ्युपगता स्यात्। अथादृष्टत्वादेवादृष्टेषु न प्रवर्तते, शुक्तावपि**

---

प्रवृत्तिदर्शनाद् अवश्यं शुक्तिशकलस्य रजतात्मना ख्यातिरेव प्रवृत्तिहेतुरिति मन्तव्यम्। तदेवोपपादयति – **तत्रैवेति**। तत्सन्निधिनिबन्धना रजतसन्निधाननिबन्धनेत्यर्थः। शुक्तिदेशे रजतसन्निधानञ्च शुक्ते रजतात्मना प्रतीतिः। तथा च सिद्धाऽन्यथाख्यातिः। ननु ग्रहणस्मरणयोर्विवेकरहिताद् रजतज्ञानादेव प्रवृत्त्युपपत्तेरख्यातिवादे न काचिद् बाधेति पूर्वपक्षे आह – **रजतमात्रप्रतीतेरिति**। प्रवृत्तिरन्यत्रापि स्यात् = शुक्तीतरस्थले लोष्टादावपि प्रवृत्तिः स्यादित्यर्थः। असन्निधानाग्रहणस्य रजतस्मृतिविवेकशून्यत्वस्य चान्यत्रापि समानत्वादिति।

प्रत्यक्षेण लोष्टादिषु सविशेषेषु रजताद् विवेकग्रहणाद् अप्रवृत्तिः, शुक्तिशकले तु इदन्त्वेन प्रत्यक्षत्वेऽपि तत्र रजतसाधारणशुक्लभास्वररूपमात्रस्य प्रतीतेः, शुक्तिगतविशेषस्य नीलपृष्ठत्वादेश्चाप्रतीतेः स्मर्यमाणरजताद् विवेकाग्रहणात् प्रवृत्तिरित्यख्यातिवादिमतमुपपादयति पूर्वपक्षी – **अथ मतमिति**। दूषयति – **एवमपीति**। अयं भावः – प्रत्यक्षलोष्टादिषु रजताद् विवेकग्रहणात्। प्रवृत्तिर्मा भवतु नाम, अप्रत्यक्षलोष्टादिषु तु अदृष्टत्वादेव तद्विस्मरणाच्च तत्र रजताद् विवेको न गृहीत इति शुक्तिशकल इव तेष्वपि प्रवृत्तिः स्यात, न तु भवति। तस्मादख्यातिवादिनो विवेकाग्रहस्य प्रवृत्तिकारणत्वकथनमकिञ्चित्करमिति सिद्धान्तिनोऽभिप्रायः।

पुनराशङ्क्य समाधत्ते – **अथेत्यादिना**। अयमर्थः – यद्युच्येत – अप्रत्यक्षलोष्टादिषु रजतबुद्धिर्नास्ति, तेन तेषु न प्रवृत्तिर्भवतीति, तर्हि शुक्तावपि

**न प्रवर्तेत। ननु दृष्टा शुक्तिः सामान्यरूपेण, सत्यम्, न तु तद्रजतार्थिनः प्रवृत्तिहेतुः। यत्तु तथा रजतरूपम्, न तेनावगमः। स यथा चक्षुषा असम्प्रयुक्तस्य नास्ति, तथा सम्प्रयुक्ताया अपि शुक्तेः।**

**यदि मन्येत— दृश्यमानस्मर्यमाणयोरविवेकाच्चक्षुःसंयुक्त एव प्रवर्तते, नेतरस्मिन्। तत्रापीदं विचार्यम्— विवेकग्रहस्य विवेककृतोऽभावात्**

---

अख्यातिवादिनस्तव मते रजतबुद्धिर्नास्ति इति तत्रापि न प्रवर्तेत। यद्युच्येत शुक्तौ तु रजतबुद्धिरस्तीति, तदाऽनिच्छतोऽपि तव शिरसि विपरीत–ख्यातिरापतिता। यद्युच्यते— प्रवृत्तिं प्रति वस्तुनो दृष्टत्वमपि प्रयोजकम्, अतोऽदृष्टत्वादेव अप्रत्यक्षेषु लोष्टादिषु न प्रवृत्तिरिति चेत्, तर्हि शुक्तिरपि नास्ति दृष्टेति तत्रापि न प्रवर्तेत। यद्युच्यते— शुक्तिस्तु सामान्यरूपेण इदन्त्वेन शुक्लभास्वरत्वेन च दृष्टैवास्ति, तेन न तत्र प्रवृत्तेरनुपपत्तिरिति, तदपि न युक्तम्, यतः शुक्तिः सामान्यरूपेण दृष्टास्तीति सत्यम्, तथापि सामान्यरूपेण शुक्तिदर्शनं न प्रवृत्तिं प्रति हेतुः किन्तु रजतरूपेण, अतो रजतार्थिजनो नैव तत्र प्रवृत्तः स्याद् रजतरूपेण तस्या अदृष्टत्वात्। तदेतदुक्तम्— **यत्तु तथा रजतरूपम्, न तेनावगम इति**। अर्थाद् यत्तु तथा =प्रवृत्तिजनकं रजतरूपम्= रजतत्वम्, तेन= रजतत्वरूपेण नास्ति अवगमः शुक्तिकायास्तव मते, अन्यथाख्याति-स्वीकारापत्तेः। एतदेव दृष्टान्तेनाह—स यथेति। सः=रजतत्वेनावगमः, यथा चक्षुषाऽसंयुक्तस्य दूरस्थलोष्टादेर्नास्ति तथा पुरोवर्तिन्याः शुक्तेरपि नास्तीति तुल्ययोगक्षेमत्वात् परोक्षलोष्टादिष्विव सन्निहितशुक्तिशकलेऽपि रजतार्थिप्रवृत्तिर्न स्यादिति भावः।

अख्यातिवादी शङ्कते— **यदीति**। दृश्यमानायाः शुक्तेः स्मर्यमाणस्य रजतस्य च योऽविवेकः= विवेशग्रहः, स एव प्रवृत्तिहेतुः। अतः चक्षुःसंयुक्ते शुक्तिशकल एव प्रवर्तते, न इतरस्मिन्=अदृश्यमानलोष्टादाविति नाख्यातिपक्षे दोष इति। तदेतद् दूषयितुं विकल्पमुपन्यस्यति—**तत्रापीति**। तत्र विवेककृतः= विवेकप्रयोजकस्य विवेकग्रहस्याभावाद् हट्टस्थस्यापि रजतस्य सन्निधिप्रतीतेः= पुरोवर्तित्वेन प्रतीतेश्च शुक्तिरजतयोरभेदबोधाद् अर्थात् शुक्तौ रजतज्ञानाद्

**सन्निधिप्रतीतेरभेदबोधस्ततो वा प्रवृत्तिः ? भेदावबोधाभावमात्राद् वा ? पूर्वस्मिन् विपर्ययः, उत्तरस्मिन् दृश्यमानादृश्यमानयोः सम्प्रयुक्तासम्प्रयुक्तयोर्वा न विशेषः, भेदाग्रहणस्य तुल्यत्वात् । न हीन्द्रियसंयोगस्य दर्शनस्य वा कश्चिदग्रह उपयोगः, अभूतसमारोपे त्वस्ति । न कथञ्चिदगृहीतेऽसम्प्रयुक्ते वैन्द्रियकः समारोप उपपद्यते ।**

---

बोधात् प्रवृत्तिरित्येको विकल्पः । अथवा शुक्तिरजतयोर्यो वास्तविको भेदस्तस्य ज्ञानाभावमात्रात् शुक्तौ रजतार्थिनः प्रवृत्तिरिति द्वितीयो विकल्पः ।

तत्राद्यविकल्पं दूषयति – **पूर्वस्मिन्निति** । विपर्ययः = विपरीतख्यातिस्वीकारापत्तिः शुक्तेः रजतरूपेण बोधादित्यर्थः । द्वितीयं विकल्पं दूषयति – **उत्तरस्मिन्निति** । अर्थाद् दृश्यमानादृश्यमानयोः चक्षुःसंयुक्तासंयुक्तयोर्वा शुक्तिरजतयोर्यदि भेदबोधाभावमात्रात् प्रवृत्तिस्तदाऽदृष्टलोष्टादिनाऽपि रजतभेदबोधो नास्तीति शुक्तिलोष्टयोर्विशेषाभावात् शुक्तिवत् लोष्टेऽपि रजतार्थी प्रवर्तेत लोष्टवत् शुक्तावपि च न प्रवर्तेत वा । यद्युच्येत – शुक्तौ अस्ति लोष्टाद् विशेषः चक्षुःसंयुक्तत्वं दृश्यमानत्वं चेति । लोष्टं तु न चक्षुःसंयुक्तं न वा दृश्यमानमिति । तत्राह – **न हीत्यादि** । अयं समाधानाशयः – भवतु नाम शुक्तौ चक्षुरिन्द्रियसंयोगो दृश्यमानत्वं वा, तथापि तस्य भेदाग्रहं प्रति नास्ति कश्चिदुपयोग इति तादृशः शुक्तिगतो विशेषो न लोष्टरजतयोरनादिभेदाग्रहे ततो लोष्टे प्रवृत्तिवारणे चोपयोगः । क्व तर्हि इन्द्रियसंयोगस्य दृश्यमानत्वस्य चोपयोग इत्यपेक्षायां स्वपक्षे तयोरुपयोगमाह – **अभूतेति** । अभूतस्य तत्रासतो रजतस्य शुक्तिशकले समारोपे = मिथ्याज्ञाने उपयोगस्तयोरित्यर्थः । उपयोगमेवोपपादयति – **न कथञ्चिदिति** । शुक्तौ रजतसमारोपः = रजतभ्रम ऐन्द्रियकः = चाक्षुषो भवति । अतः चक्षुःसंयोगाभावे 'इदम्' इति सामान्येन दृष्टत्वाभावे च कथञ्चिदपि स समारोपो नोपपद्यत इति रजतसमारोपार्थमेव तयोरुपयोग इति मन्तव्यम् ।

**स्मृतं प्रत्यक्षतो भिन्नं स्वज्ञानादेव चेत् कुतः।**
**अविवेकोऽन्यथा तु स्यात् सदा सामान्यदर्शने॥ १२४॥**
**विपर्ययोऽन्यं स्मरतो न च संशयदर्शनात्।**
**स्मृतद्वयाविवेकोत्थं संशयं यदि मन्यते॥ १२५॥**
**तन्नोभयोरपि यतः स्मृतौ दृष्टो विपर्ययः।**
**विशेषज्ञानतोऽध्यक्षे स्मृतं यदि विविच्यते॥ १२६॥**

---

अख्यातिपक्षे प्रवृत्तिरनुपपन्नेत्युक्तम्, इदानीं विवेकाग्रहणमप्यनुपपन्नमित्याह – **स्मृतं प्रत्यक्षतो भिन्न**मित्यादिकारिकाभिः। स्मृतम् = स्मर्यमाणं रजतं प्रत्यक्षतः = पुरोवर्तिनः = शुक्तिशकलात् स्वज्ञानात् = स्मृत्यात्मकाद् एव तस्य विवेचनसामर्थ्यमहिम्ना भिन्नं चेत् कुतोऽविवेकः = स्मृतप्रत्यक्षयोर्विवेकाग्रहः ? अन्यथा तु = नो चेत् सामान्यदर्शने (सति) अन्यस्मरणेऽपि सदा विपर्ययः स्यादित्यन्वयार्थः। अयं भावः – रजतस्मृतिः स्वयमेव स्वविवेचनसामर्थ्यमहिम्नैव स्वविषयं रजतं प्रत्यक्षात् शुक्तिशकलाद् विवेचयेद् न वा, आद्यपक्षे रजतस्मृतिकाल एव शुक्तिरजतयोर्विवेको गृहीत इति कुतो विवेकाग्रहः ? कथं च भ्रमोपपत्तिः ? यदि तु रजतस्मृती रजतं शुक्तिशकलाद् न विवेचयेत्, तदा विषयान्तरस्मरणेऽपि शुक्तेः सामान्यदर्शनमात्रात् सदैव अविवेकसम्भवात् सदैव पुरोवर्तिनि विपर्ययः = रजतभ्रमः स्यादित्यर्थः। इष्टापत्तिमाशङ्क्य निषेधति – **न चेति**। तथाविधस्थले न हि विपर्यय एव भवति, संशयस्यापि दर्शनात्। अत एव तमसि ऊर्ध्वत्वादिसामान्यदर्शने सति स्थाणोः पुरुषस्य चोभयोः स्मरणे पुरुषः स इति यदा विपर्यय एव न भवति, किन्तु 'स्थाणुर्वा पुरुषो वा' इति संशयोऽपि दृश्यत इत्यर्थः।

सामान्यदर्शने सति एकस्मृतौ सत्यां पुरोवर्तिवस्तुनस्तदविवेकाद् भ्रमः, अनेकस्मृतौ तु स्मर्यमाणवस्तुद्वयाविवेकात् संशय इति व्यवस्थामाशङ्कते- **स्मृतद्वयेति**। शब्दार्थः स्पष्टः। तदूदूषयति – **तन्नेति**। यत उभयोरपि स्मृतौ

**न स्वज्ञानादसत्यस्मिन् द्विस्मृतौ कथमेकधीः।**
**एकत्वमेव स्मरतः प्राग्रूपं शशिनि स्फुटम्॥ १२७॥**
**तिमिरादिप्रदोषेण कथं ते द्वित्वविभ्रमः।**
**पिपासतश्च सलिलं शुक्तिकाहितचेतसः॥ १२८॥**
**विपर्ययो न हि भवेद् भवन् वा सलिले भवेत्॥१२८-१/२॥**

---

विपर्ययो दृष्ट इत्यन्वयः। यतः स्थाणुपुरुषयोरुभयोरपि स्मृतौ सत्यां कदाचिदन्यतरभ्रमो दृष्टः 'स्थाणुरयम्' इति 'पुरुषोऽयम्' इति। तथा च त्वदीया भ्रमसंशयव्यवस्था न साधीयसीति भावः।

शङ्कते– **विशेषज्ञानत इति**। अयं भावः – रजतस्मृतेः स्वार्थविवेचकत्वाभावेऽपि इन्द्रियसंयुक्तशुक्तेः शुक्तित्वादिविशेषज्ञानात् स्मर्यमाणं रजतं प्रत्यक्षगृह्यमाणशुक्तेर्विवेकेन गृहीतं स्यात्, तथा च न पूर्वापादितः सदा विपर्ययदोषः प्रसज्यत इति। एतदपि दूषयति– **असत्यस्मिन्निति**। अस्मिन् = अधिष्ठानगतशुक्तित्वादिविशेषज्ञाने असति द्विस्मृतौ = द्वयोः स्मृतौ 'इदं रजतम्' इत्येकाकारो भ्रमो न स्यात्। भवति च कदाचिदसावपीति नायमपि पक्षः सम्यगिति भावः।

किञ्च गृह्यमाणस्मर्यमाणयोरविवेको न भ्रमः, चन्द्रस्य प्रागूरूढम् एकत्वमेव स्फुटं स्मरतो जनस्य तत्रैकत्वद्वित्वयोरविवेकाभावेऽपि तिमिरादिदोषवशात् चन्द्रे कथं तवापि द्वित्वभ्रमो जायते ? तव मते विभ्रमहेतोर्विवेकाग्रहस्य तत्राभावात् ? एतदेवोक्तम्– **"एकत्वमेव स्मरतः"** इत्यादिना **"कथं ते द्वित्वविभ्रमः"** इति कारिकांशेन। एवं सलिलं पिपासतः शुक्तिकावहितचेतसः शुक्तिकायामाहितं चेतो यस्य तस्य = अर्थात् शुक्तिकां विषयीकुर्वतः सलिलं स्मरतो रजतविभ्रमो न स्याद् रजतस्मरणाभावादित्यर्थः। शुक्तिकायां रजतविषयको विभ्रमो न भवेत्, रजतस्य अस्मर्यमाणत्वेन दृश्यमानस्मर्यमाणयोरविवेकाभावात्। तस्माद् गृह्यमाणस्मर्यमाणयोरविवेको न भ्रमः। अभ्युपगमवादेनाह– **भवन् वेति**। यदि भवेदपि

**अपि चेदं तत्रभवान् व्याचष्टाम् – स्मर्यमाणं दृश्यमानात् स्वज्ञानादेव विविच्यते, न वा – स्मृतिज्ञानस्य स्वरूपमेव तादृशं यत् प्रमातव्याद् भेदेनावभासयति, स्वरूपमात्रनिष्ठं वा। तत्र पूर्वस्मिन् स्मरणगोचरयोरविवेकः कुतः ? स्वज्ञानादेव विविक्तत्वात् ? इतरस्मिन्नपि सदा स्मृतौ विपर्ययः स्यात्, सामान्यदर्शने चान्यस्मृतावविवेकात्। न च तत् तथा, संशयस्यापि दर्शनात्।**

**अथ मतम् – एकस्मृतौ विपर्ययः, ततोऽविवेकात्। अनेकस्मृतौ तु संशयः, नैकस्मादविवेकात्। तदसत्, अनेकस्मरणेऽपि हि दृश्यते विपर्ययः। यदि च प्रत्यक्षेऽर्थे विशेषज्ञानात् स्मर्यमाणं विविच्यते, न**

---

तदा सलिल एव भवेत्, सलिलस्य स्मर्यमाणत्वेन सलिलविषयकभ्रम एव स्यात्। सलिलस्य स्मर्यमाणत्वात् शुक्तिकया सह विवेकाग्रहाच्चेति भावार्थः कारिकाणाम्।

"स्मृतं प्रत्यक्षतो भिन्नम्" इति कारिकाभिप्रायमुद्घाटयति स्वयं ग्रन्थकारो विकल्पोपन्यासमुखेन – **अपि चेदमिति**। प्रमातव्यात् = शुक्तिशकलाद् भेदेन अवभासयति स्वविषयं स्मर्यमाणं रजतमिति शेषः। स्वरूपमात्रनिष्ठं वा = विवेकाविवेकयोरुदासीनं स्मृतिस्वरूप एव पर्यवसन्नं न तु शुक्तिरजतयोर्विवेकावभासकमित्यर्थः। अत्र विकल्पद्वये प्रथमं विकल्पं प्रश्नमुखेन निषेधति – **तत्र पूर्वस्मिन्निति**। स्मरणगोचरयोः = स्मर्यमाणदृश्यमानयोरित्यर्थः। द्वितीयविकल्पे दोषमाह – **इतरस्मिन्निति**। वृत्तिग्रन्थोऽयं कारिकाव्याख्यानेनैव गतार्थ इति न पुनरुच्यते।

कारिकोक्तां विपर्ययसंशययोर्व्यवस्थां प्रदर्शयत्यख्यातिवादी – **अथ मतमिति**। वृत्तौ 'नैकस्मात्' इति पदस्य 'अनेकस्मात्' इत्यर्थः। तदपि दूषयति – **तदसदिति**। एतावपि पूर्वोत्तरपक्षौ "स्मृतद्वयेति", "तन्नोभयोः" इति कारिकांशयोर्व्याख्यानेनैव गतार्थाविति पुनर्नेह प्रतन्यते। "विशेषज्ञानतोऽध्यक्षे" इत्यारभ्य "कथमेकधीः"

**स्वज्ञानात्। असति तत्र विशेषज्ञाने च द्वयोः स्मृतौ संशय एव स्यात्, नैकावभासो विपर्ययः।**

**अथ तु स्वज्ञानात् स्मृतं विविच्यते, स्मृतिविपर्ययभेदश्चाभ्युपगम्यते, तदाऽनेकस्मरणेऽपीन्द्रियदोषविशेषाद् युक्तो विपर्ययः। दर्शितञ्चेदम्—सामान्यदर्शनेऽपि कदाचिदेकां कोटिं स्मरतो न संशयो न विपर्ययः, दोषाणामपुष्टेः। अतः स्वज्ञानादेव तदा स्मृतं विविच्यते, न दृश्यविशेष-परिच्छेदात्। एवं चेत् कुतो दृश्यमानस्मर्यमाणाविवेकः ?**

---

इति पर्यन्तं कारिकांशं वृत्तिकृद् व्याचष्टे—**"यदि चे"**त्यादिना **"नैकावभासो विपर्ययः"** इत्यन्तेन वृत्तिग्रन्थेन। अयमपि पूर्वोत्तरपक्षः कारिकाव्याख्ययैव गतार्थो न पुनरुच्यते।

स्वज्ञानादेव स्मृत्यर्थो विविच्यते, न दृश्यगतविशेषपरिच्छेदाद् इत्यतः शुक्तिरजतस्थले दोषविशेषवशाद् यदा न विवेकग्रहस्तदा तत्राविवेककृतो भ्रमो भवति न विपर्ययकृतः, नान्यथाख्यातिकृत इति यावदिति स्वप्रथमविकल्पपक्षं पोषयन्नाह अख्यातिवादी—**"अथ तु स्वज्ञानात्"** इत्यादिना वृत्तिग्रन्थेन। अत्राह सिद्धान्ती—**तदानेकस्मरणे इति**। अयं भावः—अनेकस्मरणेऽपि हि क्वचिद् इन्द्रियदोषविशेषवशात् संशयं विहाय विपर्ययो दृश्यत इति तत्रान्यथा-ख्यातिरूपो विपर्यय एव युज्यते इत्यायातो भवान् अन्यथाख्यातिमार्गेण। अत्र "अनेकस्मरणेऽपि हि दृश्यते विपर्ययः" इति पूर्वोक्तं स्मारयति वृत्तिकारः—**दर्शितञ्चेदमिति**।

सिद्धान्ते दोषा विपर्ययोदयं प्रति हेतवो न विवेकाग्रहमात्रं प्रतीति व्यतिरेक-मुखेनोपपादयति—**सामान्यदर्शनेऽपीति**। तत्र न संशयः, द्विकोट्यस्मरणात्, न विपर्ययः, दोषाणामपुष्टेः। दोषेषु सत्स्वेव विपर्ययोदयादिति भावः। उपसंहरति—**अत इति**। अतः= दोषाणामेव दिपर्ययहेतुत्वात्। तदा= सामान्यदर्शनकाले स्मृतम्=स्मर्यमाणकोटिः स्वज्ञानादेव विविच्यते, दृश्यविशेषपरिच्छेदात्। सामान्य-

**अपि च अन्यदेव स्मरतः पूर्वरूढमेकत्वं शशिनि द्वित्वविभ्रमः, न स्मर्यमाणाविवेकजः। न च ज्ञानेन्द्रियवृत्तिभेदाविवेकात्, तयोरप्रत्यक्षत्वादस्मर्यमाणत्वाच्च। शुक्तिकाहितचेतसश्च सलिलं पिपासतो न स्याद् विपर्ययः सलिलाभासो वा, स्मर्यमाणस्य स्वज्ञानादविवेकात्।**

---

दर्शनावस्थायां विशेषपरिच्छेदस्याभावात्, विशेषपरिच्छेदस्य स्मर्यमाणविवेकहेतुत्वेऽनवस्थादोषाच्च। यतो विशेषपरिच्छेदस्यापि विशेषान्तरपरिच्छेदाधीनत्वेऽनवस्था, कस्यचिद् विशेषपरिच्छेदस्य स्वत एव विवेकहेतुत्वे तद्दृष्टान्तेन सर्वस्यैव तथात्वं स्यादविशेषादिति तात्पर्यम्।

स्वज्ञानादेव विवेक इतीष्टापत्तावाह – **एवं चेदिति**। एवं सति दूरमुत्सारितो दृश्यमानस्मर्यमाणयोर्विवेकाग्रहः, सर्वत्र स्मृत्या विवेकस्यैव गृह्यमाणत्वादिति भावः।

न विवेकाग्रहणं भ्रम इत्युदाहरणान्तरेण साधयति – **अपि चेति**। शङ्कते – **न चेति**। ज्ञानवृत्तिभेदो ज्ञानगतद्वित्वं तस्य अविवेकात् शशिनि द्वित्वभ्रमः, अथवा इन्द्रियवृत्तिभेदः, इन्द्रियरश्मिनिष्ठद्वित्वं तस्य अविवेकात् चन्द्रे द्वित्वभ्रम इति न वक्तुं शक्यते, तयोः ज्ञानेन्द्रिययोरप्रत्यक्षत्वाद् अस्मर्यमाणत्वाच्चेत्यर्थः। गृह्यमाणयोरेकत्वद्वित्वयोरविवेकासम्भवेऽपि गृह्यमाणस्मर्यमाणयोरविवेको भविष्यतीति चेदत्राह – **अस्मर्यमाणत्वाच्चेति**। गृह्यमाणस्मर्यमाणयोरविवेको भ्रम इत्यत्र दोषान्तरमाह – **शुक्तिकेति**। पुरोदेशस्थं शुक्तिशकलं गृह्णतः सलिलं च स्मरतः कदाचिद् जायमान इदं रजतमिति भ्रमो न भवेत्, रजतस्मरणाभावाद् इति। इन्द्रियदोषाद् रजतभ्रमो भवेदिति चेद् इन्द्रियदोषादेव 'सलिलमिति' भ्रमस्तत्र भवेत्, सलिलस्य स्मर्यमाणत्वात्, स्मर्यमाणस्य च तस्य सलिलस्य स्वज्ञानात् = स्मृतेर्गृह्यमाणशुक्तिशकलाद् अविवेकात् = विवेकेन अग्रहणादिति। अर्थात् तत्र सलिलस्य स्मरणमपि वर्तते, स्मरणात् तस्य शुक्तिशकलाद् विवेकोऽपि न गृहीत इति शुक्तिशकले सलिलभ्रम एव भवेत्, किन्तु रजतभ्रमो न भवेदिति दोष इति।

**न च सर्वा नियोगेन भ्रान्तिः सादृश्यबन्धना ॥ १२९ ॥**
**श्वेते पीतभ्रमो दृष्टो मधुरे तिक्तविभ्रमः।**
**किञ्चित् सादृश्यतो हि स्यात् न कश्चित्तत्र न भ्रमः ॥ १३० ॥**
**तस्मादिन्द्रियदोषाणां सामर्थ्यस्य विभागतः।**
**भ्रमेषु नियमो दोषादग्रहे न भ्रमे यमः ॥ १३१ ॥**

**यदि च सदृशदर्शनात् = सदृशस्मृतेर्भ्रमः, कथं श्वेते पीतभ्रमः मधुरे वा तिक्तभ्रान्तिः ? आन्तरपित्तसंवेदने। अव्यापारयतोऽपि बहिरिन्द्रियं**

---

ननु सदृशदर्शनात् सदृशान्तरस्मरणे सति दृष्टस्मृतयोरविवेके भ्रमो भवति। अतो रजत इव सलिले शुक्तिशकलसादृश्याभावात् तत्र शुक्तिशकले न सलिलभ्रम इति शङ्कां निराकरोति – **"न च सर्वा"** इति कारिकया। सर्वा भ्रान्तिः नियोगेन = नियमेन सादृश्यनिबन्धना = सदृशदर्शनाद् नैव भवति। यतः श्वेतपीतयो-र्मधुरतिक्तयोः सादृश्याभावेऽपि श्वेते शङ्खे पीतत्वभ्रमो मधुरे गुडे च तिक्तत्वभ्रमो दृश्यते 'पीतः शङ्खः, तिक्तो गुड' इति। यद्युच्येत 'पीतः शङ्खः तिक्तो गुडः' इति भ्रमस्थलेऽपि किञ्चित् सादृश्यमस्त्येवेति तत्रापि भ्रमः सादृश्यनिबन्धन एवेति, तत्राह – **किञ्चित् सादृश्यतो हीति**। एवं सति सर्वस्य सर्वेण सह वस्तुत्वादिरूपेण किञ्चित् सादृश्यसद्भावात् सर्वस्य सर्वत्र भ्रमः प्रसज्येत। 'हि' शब्दः त्वर्थे, किञ्चित्सादृश्यस्तु भ्रमस्वीकार इत्यर्थः।

तस्माद् भ्रमं प्रति इन्द्रियदोषाणामेव सामर्थ्यविशेषो हेतुरिति। सामर्थ्यस्य विभागतः = सामर्थ्यविशेषादित्यर्थः। इत्थं च भ्रमेषु नियमो दोषात् = दोषादेव नियमेन भ्रमो भवतीत्यर्थः। अग्रहे = विवेकाग्रहमात्रे सति भ्रमोत्पत्तौ न नियमः = नास्ति नियम इति कारिकार्थः। अत एव पिपासतोऽपि जनस्य शुक्तिशकले दोषवशाद् रजतभ्रम एव भवति न शुक्तिशकलसलिलयोर्विवेकाग्रहात् तत्र सलिलभ्रम इत्याशयः।

ग्रन्थकृत् स्वयं कारिकार्थं विवृणोति – **यदि चेति**। स्पष्टार्थः। अत्र सिद्धान्ति-प्रश्ने पूर्वपक्षी उत्तरम् आह – **आन्तरपित्तसंवेदन इति**। आन्तरपित्तसंवेदनम् =

**स्यात्। अञ्जनवच्चाक्षिगतस्य तद्गतकृष्णिमादिवच्चादृश्यत्वात्। किञ्चित् सादृश्ये सर्वप्रकारभ्रमप्रसङ्गः।**

**तस्मादिन्द्रियदोषसामर्थ्यभेदान्नियता विपर्ययोत्पत्तिः। अग्रहमात्रे तु दोषव्यापारे कामिलादिदोषाद् भ्रान्तिनियमो न स्यात्। न हि सादृश्यनिमित्तः, असदृशेऽपि भ्रान्तिदर्शनात्।**

---

आन्तरपित्तानुभवः, तस्मिन् सति शङ्खे पीतत्वभ्रमः। अयं भावः – न हि वयं रज्जुसर्पस्थल इव सर्वत्रैव सदृशस्मरणप्रयुक्ताद् विवेकाग्रहाद् भ्रमं स्वीकुर्मः; किन्तु प्रत्यक्षगृह्यमाणवस्तुविवेकाग्रहादपि क्वचिद्भ्रमो भवतीति मन्यामहे। तेन आन्तरम् = नेत्रगतं पित्तद्रव्यं पीतमनुभूयते, रसनागतं च पित्तद्रव्यं तिक्तमनुभूयते, न तु स्मर्यते। तयोरनुभूयमानयोः पित्तद्रव्यगतयोः पीतगुणातिरिक्तगुणयोरविवेकात् = शङ्खगुडाभ्याम् असम्बन्धाग्रहात् शङ्खे पीतभ्रमः, गुडे च तिक्तभ्रम इति। तत्र शङ्खद्रव्यम् इन्द्रियदोषात् स्वीयपूर्वश्वेतगुणरहितं गृह्यते, गुडद्रव्यं च इन्द्रियदोषादेव स्वीयमाधुर्यगुणरहितं गृह्यते। तथा च तत्रानुभूयमानयोरेव द्रव्यगुणयोर्विवेकानवबोधाद् भ्रम इति पूर्वपक्षिणोऽभिप्रायः।

अत्र सिद्धान्ती आपत्तिमुपस्थापयति– **अव्यापारयतोऽपीति**। अयमाशयः– बहिरिन्द्रियाणां बहिरेव व्यापार इति कथं नेत्ररसनाभ्यामान्तरपित्तद्रव्यसंवेदनम् स्यात्? यदि बहिर्व्यापाराभावेऽपि संवेदनं स्यात्, तदा चक्षुरिन्द्रियं बहिरव्यापारयतोऽपि जनस्य लोचनस्थाञ्जनसंवेदनं भवेत्। न भवति अतो लोचनगत एव पित्तद्रव्यसंवेदनमपीति। एवं बहिरिन्द्रियव्यापाराभावेऽपि यदि संवेदनं तदा चक्षुर्निमीलनेऽपि पीतिमादिसंवेदनं स्यात्, न चैवम्। एतत्सर्वमभिप्रेत्य वृत्तावुक्तम्– "अव्यापारयतोऽपि बहिरिन्द्रियं स्यात्" इति।

ननु "पीतः शङ्खः", "तिक्तो गुडः" इत्यादिभ्रमोऽपि सादृश्यनिबन्धन एव तत्रापि शङ्खगुडयोः पीततिक्ताभ्यां सत्त्वादिरूपकिञ्चित्सादृश्यसद्भावाद् इति शङ्कायामाह – **किञ्चित्सादृश्ये** इति। एवंविधसादृश्यं तु सर्वेण सहास्तीति शङ्खगुडयोः सर्वप्रकारो भ्रमः प्रसज्येत, न केवलं पीतत्वतिक्तत्वयोरेवेति भावः।

## विशेषस्मरणान्नापि, स्मृतावपि तदग्रहः ॥ १३१ - १।२ ॥

---

एवं भ्रमोत्पत्तौ परपक्षं दूषयित्वा स्वपक्षे भ्रमनियममाह – **तस्मादिति**। कस्यचिदिन्द्रियदोषस्य क्वचिद् भ्रमे सामर्थ्यमिति नेत्रादीन्द्रियदोषसामर्थ्यस्य विशेषात् क्वचित् कस्यचिद् भ्रमो न सर्वत्र सर्वस्येत्यतो विपर्ययस्य = भ्रमस्योत्पत्तिर्नियता भवति नानियता। यस्य मते विवेकाग्रहमात्रे दोषव्यापारस्तन्मते अग्रहमात्रस्य सर्वत्र सुलभत्वेन कामिलादिदोषभेदाज्जायमानस्य भ्रमविशेषस्य नियमो न स्यात्। यदुच्यते – यस्य येन सादृश्यं तस्मिन् तस्यैव भ्रम इति सादृश्यनिमित्त एव भ्रमनियमो भविष्यतीति, तन्निषेधति – **न हीति**। असदृशेऽपि पीतशङ्खादौ भ्रमदर्शनात्तु तादृशो नियमो नास्तीति भावः।

स्वज्ञानादेव स्मृतार्थो दृष्टार्थाद् विविच्यत इति न कदाचिदप्यविवेक इत्यतो नाविवेककृतो भ्रम इति यदुक्तं सिद्धान्तिना, तन्न युक्तम्, स्मृतार्थस्य स्वज्ञानादेव विवेकेऽपि कदाचिद् विशेषाग्रहदशायामविवेकस्य तत्प्रयुक्तभ्रमस्य चोपपत्तेः। तस्माद् विशेषग्रहदशायामेव स्मृतेः स्वार्थविवेकबोधकत्वम्, विशेषाग्रहदशायान्तु स्मृतार्थस्य दृष्टार्थाद् अविवेकस्तत्प्रयुक्तो भ्रमश्च उपपत्स्यत एवेति पूर्वपक्षमुत्थाप्य निराकरोति – **विशेषस्मरणान्नापीति**। विशेषस्मरणात् = विशेषग्रहात्। अर्थाद् विशेषग्रहाद् विवेकोपपादनं विशेषाग्रहाच्च अविवेकोपपादनमित्यपि न सम्भवति। कुतो न सम्भवतीत्यत्राह – **स्मृतावपि तदग्रह इति**। रजतस्मृतावपि तस्य अविशेषस्य अग्रह एव। तत्रापि शुक्तित्वरूपस्य विशेषस्याग्रहेऽपि रजतत्वरूपो विशेषो गृह्यत एवेत्यर्थः। न हि तत्र वस्तुमात्रं स्मृत्वा "इदं रजतम्" इति भ्राम्यति जनः किन्तु रजतं स्मृत्वा। अतो रजतत्वमेव तत्र विशेषो गृह्यत इति नास्ति विशेषाग्रह इति कथमविवेकः कथन्तरां च भ्रम इति सिद्धान्तिनोऽभिप्रायः।

"विशेषस्मरणान्नो चेत्" इति कारिकापाठे तु "विशेषस्मरणात् चेत्, रजतस्मृतावपि नो तदग्रहः" इत्यन्वयः। तथात्वे चायमर्थः – विशेषग्रहाद् विवेकः, विशेषाग्रहाच्च अविवेक इति रीत्या विवेकाविवेकौ यदि उपपाद्येते, तदा स्मृतावपि = रजतस्मृतावपि तदग्रहः = विशेषाग्रहो नो भवति, रजतमिति

**देशकालविशेषाच्च न स्मृतं प्रविविच्यते ॥ १३२ ॥**

**अनेकदेशाधिगतं विविक्तं न पुनस्ततः।**

**स्मृतिरित्यपि विज्ञानं स्मृतेरन्यदुदाहृतम् ॥ १३३ ॥**

---

विशेषस्मरणादित्यर्थः। तथा च विशेषग्रहात् शुक्तिरजतयोरविवेको न स्यात्, प्रत्युत स्वज्ञानादेव स्मर्यमाणं रजतं गृह्यमाणात् शुक्तिशकलाद् विविक्तमेव गृहीतं स्यादिति शुक्तौ रजतभ्रमो न स्यादिति रहस्यम्।

पुनः शङ्कते – **देशकालविशेषाच्चेति**। अयं भावः – रजतस्मृतौ रजतत्वविशेषो न गृह्यत इति न ब्रूमः, किन्तु स्मर्यमाणोऽप्यसौ विशेषो यदा पूर्वदेशकालविशेषापन्नः स्मर्यते, तदा स विशेषो गृह्यमाणशुक्त्यादेर्विविच्यते स्वज्ञानादेव। यदा तु पूर्वदेशकालविशेषानापन्नं रजतत्वमात्रं स्मर्यते, तदा विशेषाग्रहाद् न शुक्तिशकलाद् विविच्यते। अतस्तत्र अविवेकाद् भ्रम उपपद्यत इति।

तदेतन्निराकरोति – **न स्मृतं प्रविविच्यत इति**। अर्थादुक्तप्रकारेण देशकालविशेषादपि स्मृतं वस्तु न विविच्यत इति। तत्र हेतुमाह – **अनेकदेशाधिगतमिति**। देशपदं कालस्याप्युपलक्षकम्। अयमर्थः – अनन्तेषु देशेषु कालेषु च पूर्वम् अधिगतं रजतं स्मर्यमाणं सत् शुक्तिशकलाद् विविक्तं गम्यते स्वज्ञानादेव स्मरणात्मकात्, न तु तत्तद्देशकालविशेषग्रहणात्, तदानीम् अनन्तदेश-कालस्मरणानुपपत्तेरिति भावः।

ननु 'स्मृतिरियम्' इति स्मृतित्वावगाहि 'रजतं स्मरामि' इति स्मर्यमाणताज्ञानं यत्र, तत्र स्मृतस्य रजतस्य विवेकः। यत्र तु तथाविधं ज्ञानं न भवति, तत्र रजतस्य शुक्तिशकलादविवेक इति तत्रैव रजतभ्रम इति शङ्कते – **स्मृतिरिति**। उत्तरयति – स्मृतिरित्यपि विज्ञानं स्मृतेरन्यदुदाहृतमिति। अयं भावः – 'रजतं स्मरामि' इति स्मर्यमाणताज्ञानं यद् रजतविवेकावगाहितया उदाहृतम्, तद् रजतस्मृतेरन्यदेव स्मृत्यनुव्यवसायरूपमुदाहृतं भवता। अतस्तत्सद्भावासद्भावयोर्न प्रस्तुते उपयोगः। या तु स्वरूपसती रजतस्मृतिः, सा उक्तस्मृत्यनुव्यवसाया-

**न च मानफलाद् भिन्नात् तत् सिध्यति फलादृते।**
**सति स्मृतिविवेके च प्रत्यभिज्ञानविभ्रमः॥ १३४॥**
**अथासन्निहितो व्यर्थो वेद्यः सन्निधिमत्तया।**
**अविविक्तस्मृतेरेवं विपरीतार्थता भवेत्॥ १३५॥**

---

भावेऽपि परिपूर्णैवास्तीति सा यदि स्वयं रजतं विवेचयेत्, तदा कुतो भ्रमः स्मृतगृहीतयोरविवेकाभावात्। तस्माद् दोष एव शुक्तौ रजतभ्रमहेतुर्न विवेकाग्रह इति।

ननु 'स्मरामि' इति विज्ञानं स्मृतेरन्यदेवास्तु, तथापि तस्मिन् सत्येव स्मृत्या रजतविवेकः। तदभावे तु अविवेक एवेति तत एव भ्रमो न दोषादिति शङ्कामपाकरोति – **न च मानफलादिति** कारिकांशेन। 'स्मरामि' इति विज्ञाने सत्येव स्मृत्या रजतं विविच्यत इति नास्ति, तथा विज्ञानात् प्रागेव स्मृत्या विवेकस्य ग्राह्यत्वात्। यतो मानफलाद् भिन्नं यत् फलं तस्मात् फलाद् विना 'स्मृतिः' इत्यपि विज्ञानं न सिद्ध्यति। अयं भावः– स्वस्वफलादेव तत्तज्ज्ञानभेदः सिद्ध्यति। यदि रजतस्मृतेर्यत् फलं विवेकः, तदेव यदि 'स्मरामि' इति विज्ञानस्यापि फलं न भिन्नं, तदा स्वफलाभावात् फलानुमेयं तद् विज्ञानं कुतः सिद्ध्येत्? यदि तत्सिद्ध्यर्थं तस्य भिन्नं फलमङ्गीक्रियते, तदा तत्सहकारं विनैव रजतस्मृत्या विवेकेन रजतस्य ग्रहणात् कथं भ्रम उपपद्येत? तस्माद् दोष एव रजतभ्रान्तिकारणं न विवेकाग्रह इत्येव सम्यक्।

किञ्च 'स्मृतिरियम्' इति स्मृतिविवेके सत्यपि 'स एव' इति प्रत्यभिज्ञाभ्रमो दृश्यते, अतोऽपि स्मरामि' इति ज्ञानं न विवेचकम्, न वा एवंविधज्ञानप्रमोषादविवेक इति। तस्मादुक्तप्रत्यभिज्ञाभ्रमहेतुरपि दोष एवेति स्वीकार्यम्। एतदभिप्रेत्योक्तम् – **"सति स्मृतिविवेके च प्रत्यभिज्ञानविभ्रमः"** इति। अत्र चकारोऽप्यर्थकः।

शङ्कते– **अथासन्निहित इति**। "व्यर्थः असन्निहितः सन्निधिमत्तया वेद्यः" इत्यन्वयः। व्यर्थः = दृष्टविपरीतार्थः स्मृतरजतादिरसन्निहितोऽपि

**मनसोऽनुपघाताच्च नासन्निध्यपरिग्रहः।**
**दोषो ह्यग्रहणे हेतुरिन्द्रियाणामुदाहृतः॥ १३६॥**
**प्रवृत्तिनियमो न स्यादिति चात्र निवेदितम्।**
**सर्वज्ञानानि मिथ्या च प्रसज्यन्तेऽत्र कल्पने॥ १३७॥**

---

सन्निधिमत्तया = पुरोवर्तित्वेन वेद्यः सन् अविविक्त इत्युच्यते। अतश्च अविवेक एव भ्रमे हेतुर्न दोष इत्यख्यातिवादिनोऽभिप्रायः।

दूषयति– **अविविक्तस्मृतेरेवमिति**। अर्थाद् असन्निहिततया विविक्तस्यापि रजतस्य सन्निधिमत्तया = अविविक्ततया या स्मृतिः सा विपरीतार्था = अन्यथाख्यातिरूपैव भवेत्, न अख्यातिरूपेति भावः।

ननु असन्निहितस्य सन्निधिमत्तया प्रतीतिर्नाविवेकः, येनान्यथाख्यातिः स्यात्। किन्तु असन्निधेरपरिग्रह एवेह अविवेकः। तथा चाख्यातिरेवेयं नान्यथाख्यातिरिति। तामिमामाशङ्कां निराकरोति– **मनसोऽनुपघाताच्चेति**। मनस उपघातो मनोदोषः, स चेह नास्ति। स्वप्नादौ मनोदोषाद् भवतु नाम असन्निधेरपरिग्रहः, इह तु स्वस्थमनस एव इन्द्रियगततिमिरादिदोषकारणात् सर्पादिभ्रान्तिरित्यन्यथाख्यातिरेवेति। एतदेव स्फुटीकृतम्–**दोषो ह्यग्रहण इति**। यद्धि असन्निध्यग्रहणं ब्रवीषि, तद् भ्रमात्मकं सर्वग्रहणमेव, तच्च तिमिराद्युपघातरूपादिन्द्रियाणामेव दोषोज्जायत इत्यर्थः।

एवम्, असन्निधानाग्रहणपक्षे शुक्तावेव रजतार्थिनः प्रवृत्तिर्नान्यत्रेत्यपि प्रवृत्तिनियमो न स्यात्। तच्च निवेदितं पूर्वम् "असन्निधानाबोधाच्चेत् प्रवृत्तिनियमः कुतः" ? इत्यत्र। एतदेवोक्तम्–**प्रवृत्तिनियमो न स्यादिति चात्र निवेदितमिति**।

दोषान्तरमाह–**सर्वज्ञानानीति**। अस्यां कल्पनायां सर्वाणि ज्ञानानि मिथ्या प्रसज्येरन्। अयं भावः– स्मर्यमाणं रजतं तत्तद्देशकालविशिष्टत्वादिभिः सर्वै

सर्वात्मनार्थो ज्ञानेन केनचिन्न हि गृह्यते।

तथाज्ञातविवेकस्य द्विचन्द्रादिविपर्ययात्॥ १३८॥

अनुवृत्तिमतः पश्यन् कस्य स्वात्मापनिह्नुते॥ १३८-१/२॥

**अथ मतम् – स्वज्ञानादेव स्मृतं विविच्यते। कदाचित्तु तत्र प्रत्यक्ष इव विशेषाग्रहस्ततोऽविवेकः। सति तु विशेषग्रहणे इन्द्रियसंयुक्ते**

---

रूपैर्न स्मर्यते, गृह्यमाणा शुक्तिरपि शुक्तित्वादिभिः सर्वैर्विशेषैर्न गृह्यते, अतो विवेकाग्रहादेव रजतभ्रान्तिरिति यदि उच्यते, तदा सर्वाण्येव ज्ञानानि मिथ्या स्युः। यतो हि न कश्चिदप्यर्थः केनचिद् ज्ञानेन सर्वात्मना गृह्यते।अतो बहिरिन्द्रियदोषादेव भ्रमो न विवेकाग्रहादिति।

दोषान्तरमाह – **तथा ज्ञातविवेकस्येत्यादि**। अयं भावः– प्रमाणान्तरेण 'एकश्चन्द्रो नानेकः', 'प्राचीयं दिक् नोदीची' इति विवेकज्ञानवतोऽपि पुरुषस्य द्विचन्द्रदिङ्मोहादिविपर्यया (भ्रमाः) दृश्यन्ते। न केवलं क्षणं दृश्यन्ते किन्तु कतिपयकालपर्यन्तमनुवर्तमाना अपि भवन्ति। एवंविधान् अनुवृत्तिमतः = अनुवर्तमानान् विपर्ययान्=भ्रमान् पश्यन्=अनुभवन् कस्य स्वात्मा तान् विपर्ययान् अपनिह्नुते=अस्वीकार्यान् मन्यते।तस्माद्विवेकज्ञानेऽपि उक्तभ्रमदर्शनाद् न विवेकाग्रहो भ्रान्तिहेतुः किन्तु दोष एवेति मन्तव्यम्।

''विशेषस्मरणान्नापि, स्मृतावपि तदग्रहः'' इति कारिकांशं वृत्त्या स्वयं व्याचष्टे **'अथ मतम्'** इत्यादिना **'विशेषस्मरणात्'** इत्यन्तेन ग्रन्थेन। तत्रापि 'एकस्मृतौ न संशयो न विपर्ययः' इत्यन्तो भागः पूर्वपक्षस्य 'एवमपि' इत्यादिभागः सिद्धान्तपक्षस्येति ज्ञेयम्। वृत्तिग्रन्थार्थः स्पष्टः। वृत्तौ 'प्रत्यक्ष इव' इति दृष्टान्तार्थस्तु – यथा विशेषग्राहिण्यपि प्रत्यक्षे दूरत्वादिदोषादूर्ध्वतादिदर्शने कदाचिद् विशेषाग्रहस्तथा स्मृतावपि मनोदोषाद् अग्रहः कदाचिद् भवति। एतदर्थविस्तरस्तु कारिकाव्याख्यानतोऽवगन्तव्यः।

सामान्यदर्शनेऽपि नाविवेकः। तत उभयकोटिस्मरणे न संशयः, एकस्मृतौ न संशयो न विपर्ययः। एवमपि द्वयोः स्मरणे न विपर्ययः स्यात्। न च स्मृतौ विशेषाग्रहणम्, विशेषस्मरणात्।

अथ देशकालविशेषात् स्मर्यमाणं विविच्यते, तत्र देशकालभेदाग्रह इति। तन्न, अनन्तदेशकालभेदावगतं तद्देशावगतं च दृश्यात् स्मर्यमाणं विविक्तं गम्यते। न च देशकालभेदग्रहणात्, अनन्तस्मरणानुपपत्तेः। तद्देशावगते च देशभेदाभावात्।

---

'देशकालविशेषाच्चे'त्यारभ्य 'न पुनस्ततः' इति कारिकाभागं वृत्त्या व्याचष्टे– **"अथ देशकालविशेषादित्यादिना देशभेदाभावात्"** इत्यन्तेन। अत्रत्यौ पूर्वोत्तरपक्षौ कारिकार्थव्याख्यानेनैव गतार्थाविति न पुनरुच्यते। उत्तरपक्षवाक्ये स्मर्यमाणमिति सावधारणम्। तथा च स्मर्यमाणमेव=स्मृत्यैव रजतं विविक्तं गम्यत इत्यर्थः। एवकारव्यवच्छेद्यमाह– **न च देशकालभेदग्रहणादिति**। अत्र विविक्तं गम्यत इति शेषः। तत्र हेतुमाह– **अनन्तस्मरणानुपपत्तेरिति**। अनन्तदेशकालानां रजत-भ्रान्तिकाले स्मरणानुपपत्तेरित्यर्थः। अतो येन पुंसा अनेकदेशकालस्थं रजतादि पूर्वमधिगतम्, तस्य सर्वदेशकालविशेषस्मरणासम्भवात् स्मृत्या सदैव विवेकाग्रहात् सदैव भ्रान्तिः स्यात्। मम मते तु विवेकाग्रहो न भ्रान्तिहेतुः किन्तु दोष एव हेतुरिति सदा दोषासत्त्वे न सदा भ्रान्तिप्रसङ्गः।

दोषान्तरमाह– **तद्देशावगते च देशभेदाभावादिति**। एवम्, समुच्चितयोर्देशकालयोर्यदि विवेचकत्वम्, तदा तद्देशाधिगते तद्देशगतत्वेनैव स्मर्यमाणे कालभेदे सत्यपि देशभेदाभावात् "एकसत्त्वेऽपि द्वयं नास्तीति" रीत्या देशकालोभय-भेदाभावाद् नित्यमविवेकः स्यात्। ततश्च सदैव अख्यातिवादिमते भ्रान्तिः स्यात्। एतदभिप्रेत्योक्तं वृत्तौ– **तद्देशावगते च देशभेदाभावादिति**। तद्देशावगते = कालविशेषं विना तद्देशमात्रगतत्वेन स्मर्यमाणे देशभेदाभावात् = कालभेदे सत्यपि देशभेदाभावेन उभयाभावसत्त्वाद् उभयोर्देशकालविशेषयोः अस्मरणात् सदैव अविवेकः सदैव तत्प्रयुक्तो भ्रमश्च प्रसज्येयातामित्यक्षरार्थः।

**अथ स्मर्यमाणताया अग्रहणादविवेकः, स्मर्यमाणताज्ञानाच्च विवेकः। तस्मात् 'स्मरामि' इति ज्ञानशून्यानि रजतादिज्ञानानि भ्रान्तिहेतवः। परिपूर्णैव तर्हि स्मृतिः, न तया स्वविषयस्य किञ्चिन्न गृहीतम्। स्वयमेव सा स्वविषयं दृश्याद् विविनक्तीति नास्ति दृश्यमानस्मर्यमाणयोरविवेकः। यतः 'स्मरामि' इति ज्ञानमन्यदेव दर्शनस्मरणविवेककारि स्मृतेः।**

**तत्रेदं विचार्यम् – स्मृतिः स्वविषयं विविनक्ति वा न वा? यदि विविनक्ति, तदा विपर्ययाभावः। अथ न स्मृतिः स्वविषयं विविनक्ति,**

---

"स्मृतिरित्यपि विज्ञानं स्मृतेरन्यदुदाहृतम्" इति कारिकाभागं स्वयं व्याचष्टे मूलकारः– **अथ स्मर्यमाणताया अग्रहणाद् अविवेक** इत्यादिना 'स्मरामि' इति ज्ञानमन्यदेव दर्शनस्मरणविवेककारि स्मृतेरित्यन्तेन वृत्तिग्रन्थेन। कारिकायां 'स्मृतिरि'त्यंशः पूर्वपक्षरूपः, 'इत्यपि विज्ञानं स्मृतेरन्यदुदाहृतम्' इति समाधानपक्षः। वृत्तावपि 'भ्रान्तिहेतवः' इत्यंशः पूर्वपक्षः, 'परिपूर्णैव तर्हि स्मृतिः' इत्यादिभागस्तन्निराकरणपरो बोध्यः। अयमभिप्रायः– 'स्मरामि' इति स्मर्यमाणताया ग्रहणमग्रहणं वा भवतु नाम, न तावता स्मृतेः स्वविषयविवेचकत्वं हीयते। यतः स्मृतिः स्वयमेव परिपूर्णा दृश्याद् विषयविवेकावगमजनने। यतश्च 'इदं रजतम्' इति स्मृतेः 'स्मरामि' इति ज्ञानं भिन्नमेवास्ति यद् दर्शनात् स्मरणं विविनक्ति, न तु स्मृतिरिव दृष्टात् शुक्तिशकलात् स्मृतं रजतं विविनक्तीति। तथा च 'स्मरामि' इति ज्ञानाभावेऽपि स्मृत्यैव शुक्तिरजतयोर्विवेकग्रहणात् कुतः स्मर्यमाणगृह्यमाणयोरविवेकः, येन तत्राविवेकाद् भ्रमः सम्भवेदिति भावः।

'प्रस्तुतप्रसङ्गे स्मृतं प्रत्यक्षतो भिन्नं स्वज्ञानादेव चेत्, कुतः? अविवेकोऽन्यथा तु स्यात् सदा सामान्यदर्शने। 'विपर्ययोऽयं स्मरतः' इति पूर्वोक्तं स्मारयन् विचारयति– **तत्रेदं विचार्यमिति**। अयमर्थः – स्मृतिज्ञानं यदि स्वविषयं रजतं शुक्तिशकलाद् विवेकेन गृह्णाति तदा विपर्ययाभावः = भ्रमो न भवेत्। यदि तु विवेकेन न गृह्णाति तदा शुक्तिशकलस्य सामान्येन इदन्त्वेन दर्शने सति

**तदा सामान्यदर्शने चान्यस्मृतौ विपर्ययः स्यादित्युक्तम्। न, 'स्मरामि' इति विवेकाच्चेत्, स एव स्मृतेः स्वयमविवेचकत्वे न स्यात्। कार्यगम्यस्य हि ज्ञानस्य भेदः कार्यविशेषोन्नेयः। न चेत् स्मृतेः प्रमाणकार्यात् कार्यं विविक्तं स्यात्, केन सा विविक्ता गम्येत ? सत्यपि स्मृतिविवेके दृष्टः**

---

अन्यस्य = रजतातिरिक्तस्य वस्त्वन्तरस्य स्मृतावपि विपर्ययः = रजतभ्रमो भवेत्, तदापि रजतविवेकाभावस्य सद्भावादिति पूर्वमप्युक्तमिति।

शङ्कते – **नेति**। न = नैष दोषः 'स्मरामि' इति विवेकात्। अर्थाद् यद्यपि रजतस्मृतिः स्वयं न रजतं विविनक्ति, तथापि 'स्मरामि' इति स्मरणानुव्यवसायेनैव दृश्यमानशुक्तिशकलात् स्मर्यमाणं रजतं विविच्यत इति तदानीं भ्रमाभावः। यदा तु न तथाविधः स्मृत्यनुव्यवसायस्तदा तु विवेकाभावकृतो रजतभ्रमो भवतीति शङ्काग्रन्थार्थः।

समाधानमाह – **स एवेति**। स्मृतेः स्वयमविवेचकत्वे 'स्मरामि' इत्यनुव्यवसायात् स एव न स्यात् = विवेक एव न स्यादित्यर्थः। तस्मात् 'स्मरामि' इत्यभिमानात् प्रागेव अनुभवफलापेक्षया विलक्षणफलजनकत्वेन स्मृत्यैव दृष्टार्थात् स्मृतार्थस्य विवेकावगमात् 'स्मरामि' इत्यनुव्यवसायस्य न स्मृतार्थविवेचकत्वम्। उक्तमेवोपपादयति – **कार्यगम्यस्य हीति**। अयं भावः – कार्येण = फलेन गम्यं हि ज्ञानं भवति। अतः फलगम्यस्य ज्ञानस्य भेदः कार्यविशेषेण = फलविशेषेणैव उन्नेयः = अनुमेयो भवति नान्यथा। अतः प्रमाणकार्यात् = प्रमाणफलात् स्मृतेः कार्यम् = फलं यदि विविक्तं न स्यात्, तदा केन निमित्तेन सा स्मृतिः प्रमाणफलादनुभवाद् विविक्ता गम्येत ? अयमेव हि प्रमाणफलादनुभवात् स्मृतेर्भेदो यत् स्मृतिः स्मृतार्थं दृष्टार्थान् विविक्तमेवानुभावयतीति। तस्मात् स्मृतेरविवेचकत्वे फलभेदाभावात् 'स्मरामि' इति स्मृत्यनुव्यवसायः स्मृतिमपि अनुभवात् स्वातन्त्र्येण विविक्तां गमयितुं न वा स्मृतार्थं दृष्टार्थाद् विवेचयितुमर्हतीति न तत्प्रमोषप्रयुक्ताद् विवेकाग्रहाद् भ्रम उपपादयितुं शक्यः।

'स्मरामि' इति स्मृत्यनुव्यवसायात् स्मृतिविवेकमभ्युपगम्यापि दोषमाह– सत्यपीति। अयं भावः– 'स्मरामि' इति स्मरणाभिमानो यदि स्मृतिम् अनुभवाद्

**प्रत्यभिज्ञाभ्रमः 'स एव' इति। न च प्रत्यक्षस्याविवेकः, एकविवेकेनोभयोर्विवेकात्। स्मृतादविवेकाच्च स्मृतिविभ्रमः स्यात्, न प्रत्यक्षभ्रमः। तस्मात् न 'स्मरामि' इति प्रमोषादविवेकः।**

**अथासन्निहितस्य सन्निहितात्मना प्रतीतिरविवेकः, स्मृतेर्विपरीतार्थत्वप्रसङ्गः। अथासन्निध्यग्रहणात्, भवतु स स्वप्नज्ञाने, न त्विन्द्रियजायां**

---

विविक्तां गमयेदपि, तथापि कदाचित् तत्र 'स एवायम्' इति प्रत्यभिज्ञाभ्रमो दृश्यते, स नोपपद्येत। यतो भवानेवाह– 'स्मरामि' इति स्मृत्यनुव्यवसायप्रयुक्तविवेककारणाद् विपर्ययाभाव इति।

ननु 'स्मरामि' इति ज्ञानेन स्मृतं वस्तु प्रत्यक्षाद् विवेचितमेव, तथापि प्रत्यक्षग्राह्यस्य पुरोवर्तिनः स्मृताद् विवेकाभावात् 'स एवायम्' इति प्रत्यभिज्ञाभ्रम इति चेत्, तत्राह– **न च प्रत्यक्षस्याविवेक इति**। प्रत्यक्षग्राह्यस्य पुरोवर्तिवस्तुनः स्मृताद् विवेकाभाव इति यदुक्तम्, तन्न युक्तम् इत्यर्थः। अयुक्तत्वे हेतुमाह – **एकविवेकेनोभयोर्विवेकादिति**। अर्थात् स्मृतस्य चेत् प्रत्यक्षाद् विवेकः, ततः प्रत्यक्षस्यापि स्मृताद् विवेकः सिद्ध एवेति उक्ता प्रत्यभिज्ञाभ्रमानुपपत्तिस्तदवस्थैव। दोषान्तरमाह – **स्मृतादविवेकाच्चेति**। अत्र स्मृतादाववविवेकाच्चेति पाठो युक्तो भाति। अर्थात् स्मृतार्थविषयेऽविवेकात् स्मृतिभ्रमोऽयं स्यात्, न प्रत्यक्षभ्रमः प्रत्यभिज्ञात्मकः स्यात्। प्रत्यक्षभ्रमस्त्वयं प्रसिद्धः। तस्मात् 'स्मरामि' इति स्मरणाभिमानस्य प्रमोषादविवेकः, अविवेकाच्च भ्रम इति मतं नोचितम्। सर्वत्र दोषादेवान्यथाख्यातिरूपो भ्रम इति युक्तम्।

प्रकारान्तरेण स्वपक्षं साधयति अख्यातिवादी – **अथेति**। तद्दूषयति अन्यथाख्यातिवादी – **स्मृतेर्विपरीतार्थत्वप्रसङ्ग इति**। ननु असन्निहितस्य सन्निहिततया ग्रहणं नाविवेकः, येन अन्यथाख्यातिः प्रसज्येत। किन्तु असन्निहितस्य असन्निधेरग्रहणमेवाविवेक इति क्वान्यथाख्यातिप्रसङ्ग इति शङ्कते – **अथेति**। तदपि दूषयति सिद्धान्ती – **भवतु स इति**। स्वप्नज्ञाने मनोदोषात् तद्धेतुकम्

भ्रान्तौ। मनसोऽनुपघातादुपघातहेतुत्वाच्चाग्रहणस्य। न चेत्थं प्रवृत्तिनियमः स्यादित्युक्तम्। सति च वस्तुग्रहे कस्यचिदंशस्याग्रहाद् भ्रान्तौ सर्वज्ञानभ्रमत्वम्। न हि कस्यचिज्ज्ञानस्य सर्वात्मना वस्तु विषय इति। सत्यपि च विवेकज्ञाने प्रमाणान्तराद् द्विचन्द्रदिङ्मोहाद्यनुगतिर्दृष्टेति नाग्रहणमात्रं विपर्ययः।

प्रसक्तप्रतिषेधात्मा ख्यातिः प्राप्तौ प्रकल्पते॥ १३९॥
नाग्रहः प्रापकोऽभावः प्रापिका विपरीतधीः।
ये च ख्याती तु रजतचक्षुःसंयुक्तवस्तुनोः॥ १४०॥

---

असान्निध्यग्रहणं भवतु नाम। किन्तु यत्र बहिरिन्द्रियजायां भ्रान्तौ नास्ति मनस उपघातः=दोषः, तत्र स्वस्थमनस एव तिमिरादिदोषोपहतेन्द्रियस्य जनस्य भ्रमोत्पत्तिर्भवति। किन्तु भवत्पक्षे मनोदोषाभावात् स भ्रमो न स्यादिति भावः। किञ्च असन्निधानाग्रहपक्षे अन्यत्रापि लोष्टादावपि रजतस्य असन्निधानाग्रहणस्य सुलभत्वेन तत्रापि प्रवर्तेत रजतार्थी, न शुक्तावेव। तथा प्रवृत्तिनियमो न स्यात्। एतच्चोक्तम् "असन्निधानाबोधाच्चेत् प्रवृत्तिनियमः कुतः? इति कारिकया।

यद्युच्यते– भ्रमस्थले स्मृतवस्तुनो रजतादेर्दृष्टवस्तुनश्च शुक्त्यादेः कतिपयांशग्रहणेऽपि कस्यचिदंशस्याग्रहणापराधाद् भ्रमो जायते। लोष्टादेस्तु नैकोऽप्यंशो गृह्यत इति तत्र भ्रमानुत्पत्तेर्नान्यत्र प्रवृत्तिप्रसङ्ग इति तत्राह–**सति च वस्तुग्रह इति**। अत्र वृत्त्यर्थः स्पष्टः।

विवेकाग्रहणमात्रस्य भ्रमहेतुत्वे दोषान्तरमाह– **सत्यपि चेति**। प्रमाणान्तरात्= आप्तवाक्यानुमानादिना विवेकज्ञाने सत्यपि द्विचन्द्रदिग्भ्रमाद्यनुवृत्तिर्दृश्यत इति न विवेकाग्रहणमात्राद् भ्रम इत्याशयः।

अख्यातिमते भ्रमो नोपपद्यत इति प्रसाधितम्, इदानीं 'नेदं रजतम्' इति भ्रमबाधोऽपि अनुपपन्न इत्याह– **"प्रसक्तप्रतिषेधात्मा"** इत्यादिकारिकाभिः। सिद्धान्ती आह–तव मते अख्यातिरूपं भ्रमं ख्यातिर्बाधते। ख्यातिस्वरूपं च "नेदं

**नायं तदुपनीतार्थप्रतिषेधोऽवगम्यते ।**
**न चाग्रहणमेवैषा प्रतीतिरपबाधते ॥ १४१ ॥**
**सर्वा ह्यग्रहबाधेन जन्मनः स्यात्तथेदृशी ।**
**विवेकविज्ञानमिदं न प्रसक्तनिषेधधीः ॥ १४२ ॥**

---

रजतम्'' इत्याकारकम् । सा च प्रसक्तप्रतिषेधात्मिका । अतः प्रसक्तप्रतिषेधरूपा ख्यातिः प्राप्तौ सत्यां प्रकल्पते । तव मते विवेकाग्रह एव प्रापको भवेद् रजतस्य । तन्न सम्भवति, विवेकाग्रहस्याभावरूपत्वेन प्रापकत्वासम्भवात् । अतो विपरीतधीरेव अन्यथाख्यातिरूपा रजतस्य प्रापिका = प्रसञ्जिका स्यादिति बाधान्यथानुपपत्त्यैव सिद्धाऽन्यथाख्यातिरिति कारिकार्थः ।

ननु अस्माकमपि 'इदम्' इति शुक्तिशकलग्रहणं रजतस्मरणञ्च प्रापके विद्येते, ते च भावरूपे । अतस्ताभ्यां प्राप्तौ सत्यां 'नेदं रजतम्' इति निषेध उपपत्स्यत इति शङ्कां निराकुर्वन्नाह – **ये च ख्याती त्विति, नायं तदुपनीतेति च** । स्मर्यमाणरजतस्य चक्षुःसंयुक्तवस्तुनः शुक्तिशकलस्य तु ये च ख्याती = ख्यातिद्वयं भावात्मकम् , ताभ्यामुपनीतस्य रजतस्य शुक्तिशकलस्य च प्रतिषेधः 'नेदं रजतम्' इत्यनेन ज्ञानेन नावगम्यते । किन्तु शुक्तौ रजतत्वस्य, रजते पुरोवर्तित्वस्यैव वा प्रतिषेधोऽवगम्यते । स च प्रतिषेधोऽप्राप्तस्य न सम्भवति । न च विवेकाग्रहणं तयोः प्रापकम्, अभावत्वात् । तस्मात् शुक्तौ रजतत्वस्य, रजते पुरोवर्तित्वस्य च प्रापिका विपरीतख्यातिरेवाङ्गीकरणीयेति उक्तकारिकार्थः ।

**''न चाग्रहणमेवैषा''** इत्यादेरयमर्थः – एषा प्रतीतिरग्रहणमेव अपबाधत इति च नास्ति । तथा (तथा सति) जन्मनः सर्वा हि (प्रतीतिंः) अग्रहबाधेन ईदृशी स्याद् इत्यन्वयः । अर्थाद् एषा 'नेदं रजतम्' इति प्रतीतिर्विवेकाग्रहणमेव प्रसक्तं बाधत इति स्वीकारे सर्वासां घटादिप्रतीतीनामग्रहणबाधेनैव उत्पत्तेः सर्वा एव घटादिप्रतीतिरीदृशी = प्रसक्तप्रतिषेधरूपा स्यात्, न त्वेवमस्तीति ।

**इति ब्रुवाणो वैयात्यात् स्वां प्रतीतिमपह्नुते।**
**न क्रमे यौगपद्ये वा विवेकमतिरीदृशी॥ १४३॥**
**प्राप्ते स्यादैक्यसंवित्तौ न भेदस्यानिरूपणे।**
**रजतस्य स्मरंश्चक्षुःसंयुक्तस्य च वस्तुनः॥ १४४॥**

---

शङ्कते – **"विवेकविज्ञानमिदं न प्रसक्तनिषेधधीः"** इति कारिकांशेन। अयमाशयः – इदं रजतमिति भ्रमो दृष्टस्मृतयोः शुक्तिरजतयोर्विवेकाग्रहरूपः, "नेदं रजतमिति" इति ज्ञानं च विवेकविज्ञानरूपम्। इत्थं चेदं विवेकविज्ञानं विवेकाग्रहमेवापसारयति न किमपि प्रसक्तं प्रतिषेधति। अतो नेयं प्रसक्तप्रतिषेध-बुद्धिरस्ति, येन प्रतिषेधाय प्राप्तिरपेक्ष्येत, तत्प्राप्तये च किमपि प्रापकमप्यपेक्ष्येतेति न पूर्वोक्तो दोष इति।

एतन्निराकरोति – **"इति ब्रुवाणो वैयात्यात्"** इति, **"न क्रमे यौगपद्ये वा"** इति चेति। 'नेदं रजतम्' इति बुद्धिर्न प्रसक्तप्रतिषेधरूपा इति वैयात्यात् = धाष्टर्याद् ब्रुवाणः पूर्वपक्षी निजां स्वारसिकीं प्रतीतिमपि तिरस्करोति। यतो भ्रमाभावे क्रमे वा यौगपद्ये वा ईदृशी विवेकबुद्धिर्न जायत इति सर्वानुभवः। अर्थाद् अभ्रान्तस्य शुक्तिरजतयोः, क्रमे सति पूर्वं रजतमुपलभ्य पश्चात् शुक्तिं विविक्तां पश्यतः, यौगपद्ये वा = युगपच्छुक्तिरजते विविक्ते पश्यतो या विवेकमतिर्भवति सा ईदृशी = "नेदं रजतम्" इत्याकारा न भवति, किन्तु 'विविक्ते एते शुक्तिरजते' इतीदृशी मतिरेव भवति। भ्रान्तस्य भ्रमापगमे तु भवन्ती 'नेदं रजतम्' इतीदृशी एव मतिर्भवति, सा प्रसक्तप्रतिषेधरूपैवेति। एवं जानन्नपि पूर्वपक्षी स्वानुभूतिमपि अपह्नुते इति धाष्टर्यमेव तस्य बोध्यम्।

**"प्राप्ते स्यादैक्यसंवित्तौ न भेदस्यानिरूपणे"** इति कारिका। ऐक्यसंवित्तौ (सत्याम्) स्यात् (ईदृशी मतिः स्यात्) प्राप्ते, न भेदस्यानिरूपणे (अनिरूपणमात्रे) इत्यन्वयः। ऐक्यसंवित्तौ = 'इदं रजतम्' इति शुक्तिरजतयोर्विपरीतख्यातौ सत्यामेव प्राप्तेः = पुरोवर्तिनि शुक्तिशकले रजतरूपत्वस्य प्राप्तत्वात् 'नेदं रजतम्' इति तन्निषेधात्मिका मतिः स्यात्, न भेदस्य अनिरूपणे = भेदाग्रहमात्रे ईदृशी मतिः

**सामान्यदृष्ट्या रजतादबुद्ध्वा च विविक्तताम् ।**
**पश्चाद् विविञ्चन् प्रत्येति नैवं, सामान्यदर्शने ॥ १४५ ॥**
**कोटिद्वयस्मृत्यभावे संशयो न नियोगतः ॥ १४५-११२ ॥**

---

स्यात्, भेदाग्रहस्याभावरूपस्याप्रापकत्वेन प्राप्तेरभावात् । तस्मात् प्रसक्तप्रतिषेधात्मिकैव सा बुद्धिरिति मन्तव्यम् ।

विवेकबुद्धिः 'नेदं रजतम्' इति प्रसक्तप्रतिषेधात्मिका न भवतीत्यत्र उपपत्त्यन्तरमाह पूर्वपक्षी– **"रजतस्य स्मरन्"** इत्यारभ्य **"प्रत्येति नैवम्"** इत्यन्तेन कारिकाभागेन । रजतस्येति कर्मणि षष्ठी । तथा च रजतं स्मरतः, चक्षुःसंयुक्तवस्तुनो रजताद् विविक्ततामज्ञात्वाऽपि पश्चात् चक्षुषः प्रसादगुणाद् रजतात् शुक्तिशकलस्य विवेको जायते 'शुक्तिरियम्' इत्येव स प्रत्येति च । किन्तु स जनस्तत्र 'नेदं रजतम्' इत्येवमन्यनिषेधेन न प्रत्येति शुक्तिशकलम् । तथा सति 'इदं रजतम्' इति रजताविवेके सत्येव तन्निषेधपरतया 'नेदं रजतम्' इति प्रसक्तप्रतिषेधात्मिका विवेकबुद्धिरभविष्यत् । किन्तु तत्र रजताविवेकाभावेऽपि, अप्रसक्तप्रतिषेधात्मिका 'शुक्तिरियम्' इति विवेकबुद्धिर्जायत एव, सा च न प्रसक्तप्रतिषेधात्मिका, 'रजतमिदम्' इत्याकारायाः प्रसक्तेस्तत्रानुदितत्वादिति कारिकार्थः ।

ननु सामान्यदर्शने अन्यस्मृतौ सत्यां द्वयी गतिः, विपर्ययो वा भवेत् संशयो वा भवेदिति । यत्र न विपर्ययस्तत्र संशयो भवेत् । तत्र च जायमानं तन्निवारकं 'शुक्तिरियम्' इत्याकारकमपि निर्णयज्ञानमितरकोटिनिषेधात्मकमेव भवति । इतरकोटिश्च रजतकोटिः, सा च संशयघटकतया प्रसक्तैवास्तीति कथमुच्यते "विविञ्चन्नैवं प्रत्येति" इति । अर्थाद् विवेकबुद्धिः प्रसक्तप्रतिषेधात्मिका नेति कथमुच्यते ? इति चेत्, आह – "सामान्यदर्शने कोटिद्वयस्मृत्यभावे संशयो न नियोगतः" इति । नियोगतः = नियमत इत्यर्थः । तथा चायं कारिकार्थः – स्यादेवं यदि नियमेन सामान्यदर्शने संशय एव स्यात् । स तु यदि भवेत् कोटिद्वयस्मरण एव भवेत्, तदभावे क्वचिन्नापि भवति संशयः । अस्यां स्थितौ तत्र जायमाना

**विवेकग्रहणाभावात् •कालसन्निधिसंविदः॥ १४६॥**
**तद्वदाभासनात् प्राप्ताविष्टः स्यादन्यथाग्रहः।**
**तत्राग्रहो निमित्तं स्यादथवा सन्निधिग्रहः॥ १४७॥**
**भेदग्रहापवादेन रहितो भावरूपतः॥१४७-१/२॥**

---

'शुक्तिरियम्' इति विवेकबुद्धिर्न प्रसक्तप्रतिषेधात्मिका। अतः सुष्ठूक्तं कारिकायाम् ''विविञ्चन्नैवं प्रत्येति'' इति समाधानाशयः।

ननु चक्षुःप्रसादजन्यात् 'शुक्तिरियम्' इति ज्ञानात् प्राग् विवेकाग्रहणादेव रजतस्य शुक्तिदेशकालसान्निध्यावगमात् शुक्तिवदवभासनाद् अस्त्येव तत्रापि रजतप्रसक्तिरिति तदनन्तरं जायमानं 'शुक्तिरियम्' इति विवेकज्ञानमपि प्रसक्तप्रतिषेधात्मकमेवेति आशङ्कामुत्थापयन्नाह – ''विवेकग्रहणाभावात् कालसन्निधिसंविदः। तद्वदाभासनात् प्राप्ताविष्टः स्यादन्यथाग्रहः''॥ इति। कालपदं देशस्याप्युपलक्षकम्। कालसन्निधिसंविदः = रजतस्य शुक्तिदेशकालसान्निध्यमवगच्छत इत्यर्थः। कारिकायाम् 'प्राप्तौ' इत्यन्तो भाग आशङ्कायाः। 'इष्टः स्यादन्यथाग्रहः' इति च भागः समाधानस्य। उक्तरीत्या प्राप्तिसमर्थने तवापि अन्यथाख्यात्यभ्युपगमप्रसङ्गः, रजतस्य शुक्तिदेशकालसान्निध्याभावेऽपि तत्सान्निध्यावगमादिति समाधानाशयः।

ननु तथापि अस्मदभिमतस्य विवेकाग्रहणस्य विभ्रमनिमित्तत्वमस्त्येवेति अख्यातिवादिनोक्ते आह सिद्धान्ती – **तत्राग्रहो निमित्तं स्यादिति**। अयं भावः – विवेकाग्रहोऽपि तत्र = रजतस्य शुक्तिदेशकालसान्निध्यावगम एव निमित्तम्, न तु साक्षाद् भ्रमे निमित्तमिति विभ्रमं प्रति विवेकाग्रहस्य निमित्तत्वं दूरापास्तमिति।

अथवा विवेकाग्रहोऽभावरूपत्वाद् विभ्रमं प्रति हेतुर्न भवितुमर्हतीति शुक्तिदेशकालसान्निध्यग्रह एव भावरूपत्वात् साक्षाद् विभ्रमहेतुर्भवताऽकामेनापि अभ्युपगन्तव्य एव। कीदृशोऽसौ सन्निधिग्रह इति विशिनष्टि – **भेदग्रहापवादेन रहितो भावरूपत** इति। सन्निधिग्रहस्य अपवादः = प्रतिबन्धकीभूतो यो भेदग्रहः = 'न

**विपर्ययानभ्युपाये भ्रमोऽग्रहनिबन्धनः ॥ १४८ ॥**

**शब्दैकगम्य उक्तः स्यादग्रहोऽग्रहबन्धनः ॥ १४८-१/२ ॥**

**'नेदं रजतम्' इति प्रसक्तप्रतिषेधरूपा प्रतीतिर्नाग्रहणेऽवकल्पते, प्रसङ्गाभावात्। न खल्वग्रहणं कस्यचित् प्रसञ्जकम्, अभावो हि सः। विपरीता तु ख्यातिः सन्निहितस्य रजततामभूतां रजतस्य वा सन्निहितताम-दर्शयन्ती प्रसञ्जयति। ननु च रजतनयनघटितवस्तुनोः ख्याती स्तः, ते एव प्रसञ्जिके। सत्यम्, न तु तदुपनीतयोरियं निषेधावगतिः। न हि 'नेदं रजतम्' इति रजतमात्रं चक्षुःसंयुक्तवस्तुमात्रं वा निरस्यमानमवस्यामः, किन्तु चक्षुःसंयुक्तस्य तु रजततां रजतस्य वा चक्षुःसंयुक्तताम्। न**

---

रजतं सन्निहितम् अपि तु शुक्तिः' इत्याकारकः, स यावन्नापतति तावत् तेन प्रतिबन्धकेन अपवादभूतेन भेदग्रहेण रहितः सन्निधिग्रहो विभ्रमस्यान्यथाग्रहस्य निमित्तम्, न तु भेदग्रहरूपेणापवादेन तिरस्कृतो निमित्तमिति तात्पर्यम्।

विवेकाग्रहपक्षे दोषान्तरमाह – **विपर्ययानभ्युपगम इति**। विपर्ययः = अन्यथा-ख्यातिः, तदनभ्युपगमे विवेकाग्रहरूपो भ्रमोऽग्रहनिबन्धनः = विवेकाग्रहनिमित्त इति पक्षः शब्दैकगम्यो भवेत् = शब्देनैव गम्यः (वाङ्मात्रगम्यः) स्यात्, न तु तस्मिन् प्रमाणमस्ति। यतोऽग्रहोऽग्रहनिबन्धन इति पक्षे अग्रह एव निमित्तम् अग्रह एव च नैमित्तिक इत्युक्तौ निमित्तनैमित्तिकयोरभेदाद् आत्माश्रयः प्रसज्येतेति कारिकाणां संक्षिप्तार्थः।

अख्यातिपक्षेऽन्यामनुपपत्तिं स्पष्टयितुकामः ''प्रसक्तप्रतिषेधात्मा ख्यातिः'' इति कारिकां स्वयं व्याचष्टे ग्रन्थकृत् – **''नेदं रजतम्''** इत्यादिना **''प्रसञ्जयति''** इत्यन्तेन वृत्तिग्रन्थेन। अभूताम् = अपार्थाम्। स्पष्टोऽर्थः। ''ये च ख्याती तु'' इतीमां कारिकां व्याचष्टे – **''ननु चे''**त्यादिना **''विपरीतख्यातिरुपासनीया''** इत्यन्तेन। रजतस्य ख्यातिः स्मृतिरूपा, नयनघटितस्य नयनसंयुक्तस्य वस्तुनः शुक्तिशकलस्य

**चैतयोरग्रहणं प्रापकम्, अग्रहणत्वादेव। तस्मादवश्यं प्रतिषेध्यप्राप्तये विपरीतख्यातिरुपासनीया।**

**न च 'नेदम्' इत्यग्रहणमेव वार्यते, सर्वज्ञानेषु ताद्रूप्यप्रसङ्गात्। सर्वज्ञानानामग्रहबाधेनोत्पत्तौ च विवेकज्ञानमात्रमिदं न प्रसक्तप्रतिषेध-रूपमिति प्रतीत्यनुसारिणोऽनुरूपम्। न हि रजतशुक्तिकाशकलयोर्युगपद्-**

---

ख्यातिर्दर्शनरूपा, इतीमे उभे ख्याती भावभूते प्रसञ्जिके स्तः। अतो नाख्यातिपक्षे प्रापकानुपपत्तिरिति पूर्वपक्षार्थः। सत्यमित्याद्युत्तरपक्षार्थः स्पष्टार्थः कारिका व्याख्यानेनैव गतार्थश्च। न चैतयोरिति द्विवचनान्तैतच्छब्दस्यार्थः– चक्षुःसंयुक्ते रजतताया:, रजते च चक्षुःसंयुक्तताया इत्यर्थः।

''न चाग्रहणमेवैषा'' इति कारिकां व्याचष्टे – न च **'नेदम्' इत्यग्रहणमेवेत्यादि-**वृत्तिग्रन्थेन। 'नेदं रजतम्' इत्यनेन स्मृतदृष्टयोर्विवेकाग्रहणमेव वार्यते = बाध्यते इति नास्ति। तथा सति सर्वेषु घटादिज्ञानेषु ताद्रूप्यप्रसङ्गात् = 'नेदं रजतम्' इति ज्ञानवदेव प्रसक्तप्रतिषेधरूपताप्रसङ्गादित्यर्थः। किञ्च सर्वज्ञानानि यदि अग्रहबाधेन उत्पद्येरन्, तदा घटपटादिज्ञानवत् 'नेदं रजतम्' इति ज्ञानमपि विवेकज्ञानमात्रं भविष्यति न प्रसक्तप्रतिषेधरूपं सम्भवति। एतद्धि प्रतीति-मनुसरतोऽनुरूपं स्यात्। इयं हि व्यङ्ग्योक्तिः। वस्तुतस्तु 'नेदं रजतमिति' रजतमत्र प्रतिषेध्यं भाति, नाग्रहणम्। अतः प्रतीतिविरुद्धश्चायं पक्षो यद् अग्रहणमेवैषा प्रतीतिरपबाधत इति। एतदेवाभिप्रेत्य– ''विवेकविज्ञानमिदं न प्रसक्तनिषेधधीः। इति ब्रुवाणो वैयात्यात् स्वां प्रतीतिमपह्नुते'' ॥ इति कारिका पठ्यत इति।

'नेदं रजतम्' इति बुद्धेः प्रसक्तप्रतिषेधपरत्वे निमित्तान्तरप्रदर्शनपरां ''न क्रमे, यौगपद्ये वा विवेकमतिरीदृशी'' इति कारिकां व्याचष्टे वृत्तौ – **न हि रजतशुक्तिकाशकलयोरित्यादिना।** रजतशुक्तिकाशकलयोर्युगपद् विविक्तयोर्ग्रहणे

**विविक्तयोर्ग्रहण ईदृशी प्रतीतिर्न क्रमेण। अविविक्तयोर्ग्रहण ईदृशी स्यात् इति चेद् युक्ता, विविक्तयोर्ग्रहणेऽविवेकप्रतिषेधरूपत्वात्। विविक्तयोरग्रहणे प्राप्त्यभावादयुक्ता।**

**अपि च भवति कदाचित् – यः स्मरति च रजतस्य, चक्षुःसंयुक्तस्य वस्तुनः सामान्यमात्रदर्शी, न रजताद् विवेकं गृह्णाति, पुनश्चक्षुःप्रसादात् प्रत्येति। न च तदा तथा प्रतीतिरविवेकग्रहणाभावात्।**

---

ईदृशी (नेदं रजतम् इति) प्रतीतिर्नहि भवति, न वा (तयोः) क्रमेण विविक्तयोर्ग्रहणे ईदृशी प्रतीतिर्भवतीत्यन्वितार्थः। वृत्तौ 'न क्रमेण' इत्यत्र 'न वा क्रमेण' इति पठनीयम्। अस्य "न ही"त्यादिना पूर्ववाक्येन सम्बन्धः। अविविक्तयोस्तयोर्ग्रहणे = अविविक्तत्वेन तयो रजतशुक्तिकाशकलयोर्ग्रहणे ईदृशी = तद्बाधात्मिका 'नेदं रजतम्' इति प्रतीतिर्भविष्यतीति यद्युच्यते, तर्हीदं युज्यते (इष्टमेवेत्यर्थः) अन्यथाख्यात्यनुकूलत्वादनुभवानुसारित्वाच्च।

अविविक्तयोर्ग्रहणे सा प्रतीतिः कथं युक्तेत्यत्र हेतुमाह – **विविक्तयोर्ग्रहण इति।** अयं भावः – यतो विविक्तयोः = विवेकेन शुक्तिरजतयोर्ग्रहणे तादृशं ग्रहणं तयोरविवेकस्य = तादात्म्यस्य प्रतिषेधरूपं स्यात्। न विविच्यत इत्यविवेकस्तादात्म्यम् इति व्युत्पत्तेः। तथा च विविक्तग्रहणे तयोस्तादात्म्यमेव यदा न प्रसक्तम्, तदा 'नेदं रजतम्' इति जायमाना प्रतीतिः प्रसक्तप्रतिषेधात्मिका कथं स्यात्?

विविक्तत्वेन ग्रहणपक्षे 'नेदं रजतम्' इति बुद्ध्यनुपपत्तिं प्रदर्श्य विविक्तयोरग्रहणपक्षेऽपि तादृशप्रतीतेरयुक्तत्वं प्रदर्शयति – **विविक्तयोरग्रहण इति।** अयमर्थः – यदा शुक्तिरजते विवेकेनापि न गृहीते, तदा सर्वथाऽग्रहणदशायामपि 'नेदं रजतम्' इति ईदृशी प्रतीतिर्न युज्यते, प्राप्त्यभावेन तन्निषेधानुपपत्तेरिति।

इतश्च 'शुक्तिरियम्' इति विवेकबुद्धिः प्रतिषेधात्मिका न भवतीति साधयन् ग्रन्थकृत् "रजतस्य स्मरंश्चक्षु रित्यादि प्रत्येति नैवम्" इत्यन्तां कारिकां व्याचष्टे – **"अपि च भवति कदाचिदित्यादिना अविवेकग्रहणाभावात्"** इत्यन्तेन वृत्तिग्रन्थेन। स्पष्टार्थः कारिकाव्याख्यानेन गतार्थश्चेति न पुनरावर्त्यते। तथा प्रतीतिः = नेदं रजतमिति प्रतीतिरित्यर्थः। अविवेकग्रहणस्य = शुक्तिशकले रजतमिदमिति रजताविवेकप्रसक्तेरभावादित्यर्थः।

**ननु सामान्यदर्शने न चेद् विपर्ययः, संशयः स्यात्, तदपनोदि च विपर्ययज्ञानमीदृशमेव। नैतत् सारम्—न ह्यसति कोटिद्वयस्मरणे सामान्यदर्शनेऽपि संशयः, न च विपर्ययः। भवति हि पुरोऽवस्थिते भास्वररूपमात्रप्रतीतिः, रजते च स्मृतिः। न च तयोरन्यत्वं प्रतिपद्यते, नैकत्वं च। तत्र न विवेकज्ञानमेवं रूपम्, एकत्वाप्रतिपत्तेः।**

**अथ मतम्—विवेकाग्रहणात् कालसन्निधिप्रतीतेश्च रजतं वा चक्षुःसंप्रयुक्तवदवभासते, चक्षुःसंयुक्तं वा रजतवत्। अतः प्राप्तिरिति प्रतिषेधोपपत्तिः। अभ्युपेता तर्हि विपरीतख्यातिः। न ह्यन्या सा अतदात्मनस्तथावभासनात्। कामं तत्त्वाज्ञाननिमित्ता स्यात्। न हि सा तत्त्वज्ञाने सत्युदेति, विरोधादिति।**

---

उक्तदशायां जायमानं 'शुक्तिरियम्' इति निर्णयज्ञानमपि इतर-निषेधात्मकमेवेति पूर्वपक्षी प्रत्यवतिष्ठते—**ननु सामान्यदर्शने न चेदिति।** तन्निराकरोति—**नैतत् सारमिति।** असारत्वमेवोपपादयति—**न ह्यसतीति।** तत्र कोटिद्वयस्मरणाभावे संशयोऽपि न भवति, विपर्ययस्तु नास्त्येव। किंविधं तर्हि ज्ञानं तत्र भवतीति जिज्ञासायामाह—**भवति हीति।** तत्र चक्षुःप्रसादात् प्राक् पुरोवर्तिवस्तुनि भास्वररूपमात्रप्रतीतिः, रजते च स्मृतिरिति पृथक् पृथग् ज्ञानद्वयं भवति। तयोश्च दृष्टस्मृतयोर्न भेदं जानाति न वाऽभेदं जानाति। अतस्तस्यामवस्थायां चक्षुःप्रसादाद् जायमानं 'शुक्तिरियम्' इति विवेकज्ञानं न एवंरूपम् = न प्रसक्तप्रतिषेधात्मकम्, शुक्तिरजतयोरेकत्वस्य पूर्वमप्रतिपत्तेरिति वृत्त्याशयः।

उक्तस्थले 'शुक्तिरियम्' इति विवेकबुद्धेः प्रकारान्तरेण प्रसक्तप्रतिषेधात्मकत्वं साधयति पूर्वपक्षी—**अथ मतमिति**। सिद्धान्ती समाधत्ते—**अभ्युपेता तर्हीति**। अत्रत्यौ पूर्वपक्षसमाधानार्थौ व्याख्यातौ "विवेकग्रहणाभावात्" इत्यारभ्य "इष्टः स्यादन्यथाग्रहः" इति पर्यन्तस्य कारिकाभागस्य व्याख्यानेनेति पुनर्व्याख्यानं नापेक्षते।

"तत्राग्रहो निमित्तं स्यात्" इति कारिकांशव्याख्यानं वृत्तौ—**कामं तत्त्वाज्ञाननिमित्ता स्यादिति। स्पष्टोऽर्थः।**

**तत्रापि सन्निधिख्यातिरेव निबन्धनम्, तस्यास्तु विवेकग्रहोऽपवादः, अग्रहणे निरपवादा सैव कारणम्, नाभावः। विपरीतख्यात्यनभ्युपगमे चाग्रहणनिबन्धनो भ्रम इत्यग्रहणमग्रहणनिबन्धनमिति सुव्याहृतम्। स्वप्ने च द्वितीयाभावात् कुतोऽविवेकः? स्मृतत्वेनाविविक्तस्य तथा विवेके धर्मिणि प्रतिपन्ने धर्मान्तरप्रतिपत्तेर्बाधकत्वं पूर्वस्याश्च भ्रान्तित्वं स्यातामिति।**

---

"अथवा सन्निधिग्रहः, भेदग्रहापवादेन रहितो भावरूपतः" इति कारिकांशं व्याचष्टे वृत्तौ – **तत्रापि सन्निधिख्यातिरेवेति**। उक्तकारिकांशे निबन्धनमिति शेषः पूरणीयः। तस्याश्च सन्निधिख्यातेरेकमात्रमपवादो विवेकग्रहः। अतस्तत्र शुक्तिरजतयोर्विवेके गृहीते सा सन्निधिख्यातिर्न रजतभ्रमे निमित्तं भवति। अग्रहणे = शुक्तिरजतयोर्विवेकाग्रहणे तु सति निरपवादा = निर्बाधा सती सैव = सन्निधिख्यातिरेव भ्रमे कारणं भवति, भावरूपत्वात्। नाभावः = न विवेकग्रहाभावो भ्रमनिमित्तम्, अभावत्वादिति वृत्तिग्रन्थार्थः। सा सन्निधिख्यातिरपि विपरीतख्यातिरूपैवास्ति, असन्निहितस्य रजतस्य सन्निहितत्वेन ख्यातेरिति सिद्धान्तिनोऽभिप्रायः।

विवेकाग्रहस्य भ्रमहेतुत्वे सपरिहासं दोषान्तरमाह – **विपरीतख्यात्यनभ्युपगमे चेति**। अयं भावः – सन्निधिख्यातिं विपरीतख्यातिं विहाय विवेकाग्रहणमेव यदि विवेकाग्रहणरूपस्य भ्रमस्य निबन्धनं मन्यसे तदा अग्रहणस्य अग्रहणमेव निबन्धनं (निमित्तम्) इति ब्रुवाणेन साधूक्तं त्वयेति व्यङ्ग्योक्तिः।

गृह्यमाणस्मर्यमाणयोर्विवेकाग्रहस्य भ्रमरूपत्वे कारिकानुक्तं दोषान्तरमप्याह वृत्तौ – **स्वप्ने चेति**। अस्यायमर्थः – स्मृतस्य दृष्टस्य च यदि विवेकाग्रहो भ्रमस्तदा स्वप्ने स्मर्यमाणातिरिक्तस्य कस्यचित् शुक्तिवत् सामान्यतो दृश्यमानस्य द्वितीयस्याभावाद् न ततः स्मर्यमाणस्याविवेको विवेकाग्रहो वाऽस्तीति स्वाप्नज्ञानस्य भ्रमत्वं कथमुपपद्येत? यद्युच्यते स्वप्ने गृह्यमाणस्य कस्यचिद् द्वितीयस्याभावेऽपि स्मृतमेव वस्तु 'स्मरामि' इति स्मृतत्वेन न विविच्यते मनोदोषात्। इत्थञ्च स्मृतत्वेन अविविक्तं सत् स्मृतमेव वस्तु स्वप्ने गृह्यमाणतया भाति। न

**यः प्रतीतिविरोधस्तु स स्वदोष उदाहृतः॥ १४९॥**

**सामानाधिकरण्येन बोधाद् रूप्यमिदं मितम्॥ १४९-१/२॥**

**'इदं शुक्लं रजतम्' इति सामानाधिकरण्येन प्रतीतेरात्मोपालम्भः परस्मिन्नासज्यते प्रतीतिविरोधः, ज्ञानभेदकल्पनायाः प्रमाणाभावात्।**

---

चैवमन्यथाख्यातिप्रसङ्गः, अन्यस्य अन्यथाप्रतीत्यभावात्। प्रत्युत जागरे कदाचिद् गृहीतं तदेव वस्तु स्मर्यमाणं सत् स्वप्ने स्मृतत्वाविवेकाद् गृह्यमाणतया भाति। जागरे च स्मृतिरियमिति स्मृतत्वाविवेकात् तस्य गृह्यमाणत्वं बाध्यत इति। तत्र दोषमाह – **स्मृतत्वेनाविविक्तस्येति**। अत्र 'स्मृतत्वेनाविविक्तस्य तथा विवेके' इत्यंशः पूर्वपक्षरूपः 'धर्मिणि प्रतिपन्ने' इत्यादिरंशः सिद्धान्तपक्षः। अयमभिप्रायः – स्मृतत्वेनाविवेके भ्रमः, स्मृतत्वेन विवेकज्ञाने च बाध इत्यवगम्यमाने यथा स्मृताव-ज्ञातस्य स्मृतत्वधर्मस्य ज्ञानं बाधकम्, तद्गतविशेषधर्मस्य वा ज्ञानं बाधकम्, यथा च तत्र स्मृतत्वरहितं तद्धर्मिमात्रं गृह्णती स्मृतिर्भ्रमः, तथा दूरादनिरूपित-रूपविशेषे धर्मिणि देवदत्तादौ प्रतिपन्ने = ज्ञाते सति पुनः समीपे 'गौरोऽयम्' इति विशेषधर्मान्तरप्रतीतेर्बाधकत्वं स्यात्, पूर्वतन्याश्च धर्मिमात्रप्रतीतेर्भ्रान्तित्वं स्यात्, न चैवमस्तीति शङ्खपाणिमनुसरन्ती व्याख्या। तथात्वे सर्वोऽपि निर्विक-ल्पको भ्रमः स्यात् सर्वश्च सविकल्पको बोधो बाधकश्च स्यादित्यपि दोष इत्यन्ये।

अख्यातिपक्षे भ्रमानुपपत्तिं बाधानुपपत्तिं चापाद्येदानीं परोक्तदूषणं तत्पक्ष एव योजयति – **यः प्रतीतिविरोधस्त्विति**। अयं कारिकार्थः – यच्चोक्तं पूर्वम् – अन्यथाख्यातिपक्षे रजतं प्रतीयते शुक्तिर्विषय इति प्रतीतिविरुद्धमिति, तन्न, यतः स विरोधदोषः पूर्वपक्षिणा अख्यातिवादिना स्वपक्षगत एवोद्घाटितः। तदुपपादयति – **सामानाधिकरण्येनेति**। इदं पुरोवर्ति सितं = शुक्लं द्रव्यं रजतमस्ति इति सामानाधिकरण्येन बोधः पुरोवर्तिशुक्लपदार्थं रजतत्वेन ख्यापयन् अन्यथाख्यातेरेवानुकूलो विरुद्धश्चाख्यातेरिति किमिति नावगच्छसि। एतदेव विवृतं वृत्तौ – **''इदं शुक्लं रजतम्'' इति**। एवं हि स्वगत एवोपालम्भः परस्मिन्ना-रोप्यते त्वया। यद्युच्येत – स्मरणाग्रहणरूपे भिन्ने इमे द्वे ज्ञाने इति, तत्राह–

**अनाश्वासो ज्ञायमाने ज्ञानेनैवापबाध्यते॥ १५०॥**

**व्यभिचारादसामर्थ्यं न, तत्कार्यस्य लाभतः।**

**व्यभिचारात् प्रमेयत्वकार्यमेव न लभ्यते॥ १५१॥**

**यो हि ज्ञायमानेऽर्थेऽन्यथापि स्यादित्यनाश्वासस्तस्य तेनैव ज्ञानेन तथात्वपरिच्छेदिनोत्पत्तिर्निरुध्यते। तथा हि — अनाश्वासनिवृत्तये तद्विधं**

---

**ज्ञानभेदकल्पनायाः प्रमाणाभावादिति**। ज्ञानैक्ये तु सामानाधिकरण्यप्रतीतिरेव प्रमाणमस्तीति।

**"अनाश्वासो ज्ञायमाने"** इत्यादिकारिकाणामयमर्थः — एकत्र ज्ञायमानेऽर्थे अनाश्वासात् सर्वत्रैव अनाश्वास इति नास्ति। यत्र अनाश्वासस्तत्र स ज्ञानेनैव अपाक्रियते।अथ व्यभिचारादनाश्वासः स्यात्, तत्राह —व्यभिचाराद् असामर्थ्यम् = अप्रामाण्यं न भवति, यतस्तत्कार्यस्य = प्रमाणकार्यस्य वस्तुपरिच्छेदस्य लाभात् प्रमाणे सति वस्तुपरिच्छेदो भवत्येवेति कथं तत्रानाश्वासः? ननु इदं नित्यं प्रमेयत्वाद् आत्मवद् इत्याद्यनुमाने प्रमेयत्वहेतोर्व्यभिचाराद् अप्रामाण्यं दृष्टमिति चेदाह — **व्यभिचारादिति**।यत्र व्यभिचारात् इत्युच्यते, तत्र प्रमेयत्वहेतोरप्रमाणत्वादेव तत्कार्यं = नित्यत्वपरिच्छेदो न लभ्यते, न तु व्यभिचाराद् इत्यर्थः।

अख्यातिवादिनाऽऽपादितं प्रतीतिविरोधं परिहृत्याधुना "अनाश्वासाच्च" इत्यनेन कारिकांशेन अन्यथाख्यातिपक्ष आपादितस्य सर्वज्ञानेषु अनाश्वास-प्रसङ्गदोषस्य "अनाश्वासो ज्ञायमाने" इति कारिकोक्तं समाधानं वृत्तौ विवृणोति ग्रन्थकृत् — **यो हीति**। अयं भावः — रजतज्ञानस्य शुक्त्यालम्बनत्वे 'घटोऽयम्' इति ज्ञानं किं घटालम्बनं किं वा अघटालम्बनमित्याकारो यो ज्ञायमानार्थविषयकोऽनाश्वासस्तस्य उत्पत्तिः, तथात्वपरिच्छेदिना = **घटत्वं** विषयीकुर्वता तेनैव ज्ञानेन निरुध्यते = वार्यते। अर्थात् प्रमाणभूतं तदेव ज्ञानं तथाविधानाश्वासोत्पत्तिं निवर्तयति। तदेवोपपादयति — **तथा हीति**। घटज्ञानेन विषयीक्रियमाणे घटे अनाश्वासनिवृत्तये यदि तथाविधमेव ज्ञानान्तरमपेक्ष्यते, तदा तत्राप्यनाश्वासे पुनर्ज्ञानान्तरमपेक्षणीयं स्यादित्यपरापरज्ञानापेक्षायामनवस्था

**ज्ञानमेवापेक्ष्यते, तच्चास्त्येव। न च व्यभिचारदोषादसमर्थप्रमाणं ज्ञानमिति युज्यते, प्रमाणकार्यस्य परिच्छेदस्य ज्ञानरूपादेव सिद्धत्वात्। परिच्छेदतो हि प्रामाण्यम्, अतन्त्रता तु व्यभिचाराव्यभिचारयोः। असति तस्मिन् धूमादेरव्यभिचारस्याप्यप्रमाणत्वात्। व्यभिचारवतोऽपि च सितासितादिषु चक्षुषः सति तस्मिन् प्रामाण्यात्।**

**न च व्यभिचारो बाधहेतुदोषवत् प्रामाण्योपघाती क्वचिद् दृष्टः,**

---

प्रसज्येत। तद्भीत्या यदि ज्ञानान्तरानुधावनं न क्रियते, तदा तथाविधं प्रथमज्ञानमस्त्येव। तेनैव अनाश्वासो नोत्पत्तुमर्हतीति क्व ज्ञायमानेष्वर्थेष्वनाश्वासाशङ्का ?

ननु ज्ञानं न समर्थं प्रमाणमनाश्वासनिरोधे, व्यभिचारात् शुक्तिरजतज्ञाने व्यभिचारदर्शनादिति शङ्कां निराकरोति – **न चेति**। विषयपरिच्छेदो हि प्रमाणकार्यम्, तच्च ज्ञानस्वरूपादेव सम्पादितम्। तस्माद् ज्ञानस्य प्रामाण्याप्रामाण्ये विषयपरिच्छेदापरिच्छेदाधीने न तु व्यभिचाराव्यभिचारतन्त्रे। एतच्च अन्वयव्यतिरेकाभ्यां समर्थयति – **असति तस्मिन्निति**। तस्मिन् असति = विषयपरिच्छेदाजनकत्वे अव्यभिचरितोऽपि धूमो प्रमाणं न भवति। तथा शङ्खादेः श्वेताश्वेतादिविषये व्यभिचरितमपि चक्षुः शङ्खपरिच्छेदे प्रमाणं भवत्येवेति प्रमाणत्वमप्रमाणत्वं वा न व्यभिचाराव्यभिचाराधीनं किन्तु परिच्छेदापरिच्छेदाधीनमेव स्वीकरणीयम्। अतो ज्ञाने न अनाश्वासप्रसङ्गावसरः।

ननु बाधवद् हेतुदोषवच्च व्यभिचारोऽपि प्रामाण्योपघाती स्यात्, तत्राह – **न च व्यभिचार इति**। अर्थाद् यथा बाधस्य हेतुदोषस्य च प्रामाण्योपघातित्वात् प्रामाण्ये तयोरभावोऽपेक्ष्यते, तथा व्यभिचारस्यापि प्रामाण्योपघातित्वात् प्रामाण्ये तस्याप्यभावोऽपेक्षणीय इति चेत्, न, व्यभिचारस्य क्वापि प्रामाण्योप-

**चक्षुरादौ व्यभिचारवति प्रमाणत्वात्। ननु दृष्टो व्यभिचारः प्रामाण्योपघाती प्रमेयत्वोर्ध्वत्वादौ, नैतत् सारम्, न तत्र व्यभिचारादप्रामाण्यम्, अपि तु परिच्छेदकार्याभावात्, तदभावश्च हेत्वभावात्। अव्यभिचाराद्धि लिङ्गाल्लिङ्गिपरिच्छेदः। यत्र त्वव्यभिचारो न कारणं तत्र व्यभिचारेऽपि सति परिच्छेदे प्रामाण्यमविवादम् अक्षेषु। तद्वदेव च ज्ञानं परिच्छेदनिमित्तम्, न लिङ्गवत्।**

---

घातित्वादर्शनात्। चक्षुषः शङ्खपीतत्वदर्शने व्यभिचारवत्त्वेऽपि शङ्खवस्तुबोधे प्रमाणत्वात्।

शङ्कते – **ननु दृष्टो व्यभिचार इति**। अयमत्र शङ्कार्थः – शब्दोऽनित्यः प्रमेयत्वात्, अयं पुरुष ऊर्ध्वत्वाद् इत्याद्यनुमाने व्यभिचाराद् अप्रामाण्यं दृष्टम्। अतः कथमुच्यते – व्यभिचारस्य प्रामाण्योपघातित्वं न क्वचिद् दृष्टमिति। एतां शङ्कां निराकरोति – **नैतत् सारमिति**। अयमाशयः – उक्तानुमानयोर्न व्यभिचाराद-प्रामाण्यम्, किन्तु ताभ्यां हेतुभ्यां क्रमशोऽनित्यत्वपरिच्छेदरूपस्य पुरुषत्व-परिच्छेदरूपस्य कार्यस्याभावादेव अप्रामाण्यम्। परिच्छेदाभाव एव कुतः? इत्यत्राह – **हेत्वभावादिति**।

अनुमाने लिङ्गि(साध्य)परिच्छेदे कीदृशो हेतुरपेक्षित इत्यत्राह – **अव्यभि-चाराद्धि लिङ्गादिति**। अयं भावः – लिङ्गादनुमानजनने व्यभिचाररहितं लिङ्गं कारणम्। अतस्तत्रानुमानप्रामाण्याय हेतौ व्यभिचाराभावोऽपेक्षितः। यत्र तु व्यभिचाराभावः कारणत्वेन नापेक्षितः, तत्र तु व्यभिचारे सत्यपि परिच्छेदे (ज्ञाने) प्रामाण्यं निर्विवादम्।

ननु ज्ञानकरणं चक्षुरादीन्द्रियं व्यभिचार्यपि प्रमाणं भवतु नाम, ज्ञानं तु लिङ्गवद् अव्यभिचार्येव प्रमाणं स्यादिति चेत्तत्राह – **तद्वदेवेति**। ऐन्द्रियक-ज्ञानस्थलेषु चक्षुर्वदेव व्यभिचार्यपि ज्ञानं परिच्छेदहेतुर्भविष्यति, न लिङ्गवद् अव्यभिचार्येवेति भावः।

**न च संशयोत्पत्त्या व्यभिचारः प्रामाण्यमुपहन्ति, सम्यक् परिच्छिन्ने द्वैविध्यस्यासंशयहेतुत्वात्। न निश्चिते स्थाणावूर्ध्वत्वेन संशेरते। उत्पत्त्यैव ज्ञानमर्थमवधारयति। अनवधारकं तु नैवेहाधिकृतम्। एवञ्चावधारणादेवानवधारणमिति विप्रतिषिद्धम्।**

**य एव त्वव्यभिचारमर्थयते ज्ञानस्याश्वासार्थं तस्यैवानाश्वासः, अव्यभिचारज्ञानेऽप्यनाश्वासात्। न हि तदसिद्धावव्यभिचारमात्मनि ज्ञानान्तरेषु चाश्वासकारणम्। ज्ञानान्तरात् सिद्धानवस्था।**

---

ननु व्यभिचारो यद्यपि हेतुदोषवत् साक्षात् प्रामाण्यं नोपहन्ति, तथापि किमिदं ज्ञानं रजतज्ञानवदयथार्थम् अथवा शुक्तिज्ञानवद् यथार्थमिति संशयोत्पादनेन प्रामाण्यमुपहन्तीति शङ्कते – **न चेति**। समाधत्ते – **सम्यगिति**। सम्यक् परिच्छिन्ने = बाधरहिते निश्चितेऽर्थे द्वैविध्यस्य = क्वचिद् ज्ञाने दृश्यमानव्यभिचारस्य संशयाजनकत्वात्। न हि "स्थाणुरयम्" इति निश्चिते स्थाणुपुरुषोभयसाधारणोर्ध्वत्वदर्शनमात्रेण लोकाः संशेरते। सम्यक् परिच्छेद एव कथम् ? तत्राह – **उत्पत्त्यैवेति**। यतो ज्ञानमुत्पत्त्यैव अर्थं 'तथैव' इत्यवधारयति परिच्छिनत्ति। अतो द्वैविध्याभावे कुतः संशयः ? यद्युच्यते – 'तथैव' इत्यवधारके ज्ञाने सति मा भवतु अर्थे संशयस्तथापि अनवधारके = 'तथैव' इति निश्चयानात्मके ज्ञाने सति अर्थसंशयः स्यादेवेति, तत्राह – अनवधारकं तु तादृशं ज्ञानं नेह विचार्यतयाऽधिकृतम्, प्रमाणाजन्यत्वेन अप्रमाणत्वात्। यत्तु प्रमाणजन्यत्वेन प्रमाणभूतं ज्ञानं तत्तु अर्थावधारणात्मकमेव भवति। अतोऽवधारणात्मकाद् प्रमाणभूतज्ञानाद् अर्थानवधारणं (अर्थे संशयः) इति कथनं विप्रतिषिद्धम् = वदतो व्याघात एवेति। प्रमाणं च अनिश्चायकं चेति विप्रतिषिद्धमिति भावः।

स्वपक्षेऽनाश्वासं परिहृत्य परपक्ष एवानाश्वास इत्यापादयति – **य एवेति**। अर्थाद् ज्ञानस्याश्वासार्थं यस्तस्याव्यभिचरितत्वमपेक्षते, तस्य जनस्य सर्वेष्वपि ज्ञानेष्वनाश्वासः प्रसज्येत। यतो यस्याव्यभिचारज्ञानस्य सत्त्वेन ज्ञाने आश्वासः प्राप्तव्यः, तस्मिन्नव्यभिचारज्ञानेऽपि व्यभिचारशङ्कयाऽनाश्वासात्। किञ्च तव

**अपि च ज्ञानरूपाच्चेन्नार्थाश्वासः, तस्यासिद्धौ केन सहाव्यभिचारो ज्ञानस्य गृह्येत? किञ्च ज्ञानरूपादेवाव्यभिचारोऽपि कथ्यते, विपरीतख्यातौ तद्विरोधात्। तथा सति तदेव विषयस्य साधकम्, व्यर्थोऽव्यभिचारः। न च व्यभिचारः प्रामाण्यमुपहन्तीत्युक्तम्।**

---

मतेऽन्योन्याश्रयानवस्थादोषावपि प्रसज्येयाताम्। तथा हि – अव्यभिचारज्ञानमपि आत्मनि = स्वविषये अव्यभिचारसिद्धिं विना ज्ञानान्तरेषु आश्वासं जनयितुं न समर्थम्। अतो ज्ञानान्तरेषु आश्वासेन तस्मिन् अव्यभिचारज्ञाने आश्वासः अव्यभिचारज्ञाने चाश्वासेन ज्ञानान्तरेषु आश्वास इत्यन्योन्याश्रयदोषः। अन्योन्याश्रयदोषपरिहाराय यदि केनाप्यन्येनैव ज्ञानेन तस्मिन् अव्यभिचारज्ञाने अव्यभिचारनिर्णयस्तदा तस्याप्यन्यज्ञानेन तस्यापि च पुनरन्यज्ञानेनेत्यनन्त-ज्ञानापेक्षायामनवस्थादोषः प्रसज्येतेति भावः।

विपक्षे अनुपपत्त्यन्तरमाह – **अपि चेति**। ज्ञानरूपात् = अर्थपरिच्छेदकत्वं हि ज्ञानस्य स्वरूपम्, ततो यदि अर्थे नाश्वासः, तदाऽर्थस्यैवासिद्धत्वात् केन सह ज्ञानस्याव्यभिचारो गृह्येत ? तस्मात् त्वयापि ज्ञानस्वरूपादेवार्थे समाश्वासः स्वीकरणीयः।

स्वपक्षे युक्त्यन्तरमाह – **किञ्चेति**। ज्ञानस्य यथाभूतार्थपरिच्छेदकत्वं स्वरूपमुक्तम्। अतो ज्ञानस्य तथास्वरूपादेव अर्थेन तस्याव्यभिचारोऽपि कथित एव भवति, न च तदर्थं प्रयासान्तरापेक्षा भवति। विपरीतख्यातौ = अर्थेन सह तस्य व्यभिचाराभ्युपगमे तु ज्ञानस्य यथाभूतार्थपरिच्छेदकत्वस्वरूपं विरुध्येत। फलितार्थमाह – **तथा सतीति**। अयं भावः – ज्ञानस्य यथाभूतार्थपरिच्छेदकत्वस्व-रूपमेव यदि स्वस्यार्थाव्यभिचारमपि साधयति, तदा तदेव विषयस्य = अर्थस्य साधकम् = निश्चायकं कथं न भवेत् ? तथा चार्थनिश्चयाय अन्तर्गडुभूताया अव्यभिचारकल्पनायाः किं प्रयोजनम् ? यद्युच्यते व्यभिचारे सति प्रामाण्यमेव ज्ञानस्योपहतं स्यादिति, तत्राह – **न च व्यभिचार इति**। अर्थाद् व्यभिचारः प्रामाण्यं नैवोपहन्तीति पूर्वं बहूक्तमस्माभिरिति।

**अपि चाग्रहणेऽभीष्टं यद्विवेकनिबन्धनम्।**
**न पराणुद्यते दण्डैस्तद् विपर्ययदर्शने॥ १५२॥**
**नोद्रेकहेतवो दोषाः कार्यसामर्थ्यघातिनः।**
**ग्रहाग्रहविभागः स्यादतस्तत्सदसत्त्वतः॥ १५३॥**
**विपर्यये हि नितरामुपघातः प्रकल्पते।**
**इष्टकार्योपरोधेन विपरीतोदयेन च॥ १५४॥**

---

सिद्धान्ती पुनः स्वपक्षं समर्थयन्नाह – **अपि चेति**। अपि च, अग्रहणे विवेकाग्रहपक्षे यद् विवेकनिबन्धनम् = विवेककारणं तव अभीष्टम्, तद् विपर्ययदर्शने = ममान्यथाख्यातिपक्षेऽपि न दण्डैः पराणुद्यते = वार्यत इति सान्वयः कारिकार्थः। अयं भावः – भ्रान्तिस्थले अन्यस्यान्यथाप्रतीत्यभ्युपगमेन परमार्थस्थलेऽपि अन्यस्यान्यथाप्रतीत्याशङ्कया ज्ञानमात्रेऽनाश्वासश्चेत्, भवतामपि भिन्नयोरेव शुक्तिरजतयोर्विवेकाग्रहाद् भ्रान्तौ सत्यां प्रवृत्तिस्वीकारे परमार्थस्थलेऽपि तथात्वशङ्का स्यादिति तवापि ज्ञानमात्रेऽनाश्वासः। यदि तु दोषसत्त्वे विवेकाग्रहः, दोषाभावे च विवेकग्रह इति तवाभीष्टं चेत् तदा ममापि न तद् दण्डवारितम्। अर्थाद् अन्यथाख्यातिपक्षेऽपि दोषसत्त्वेऽन्यथाख्यातिः, दोषाभावे च यथार्थ-प्रतीतिरिति न सर्वज्ञानेष्वनाश्वासप्रसक्तिरिति।

अख्यातिवादी आह – **नोद्रेकहेतव इति**। दोषा हि कार्यसामर्थ्यघातिनो भवन्ति न विपरीतकार्यजनका भवन्ति, प्राप्तकार्यनिरोधमात्रहेतुत्वादिति। अतो दोषसदसत्त्वाभ्यां विभागेन विवेकग्रहाग्रहौ भवत इति। अत्र सिद्धान्ती आह – **विपर्यये हीति**। अत्रायमन्वयार्थः – अख्यातिपक्षे दोषात् प्राप्तकार्यनिरोधमात्रं भवति, विपर्यये = अन्यथाख्यातिपक्षे तु नितराम् = अतितराम् उपघातो भवति – इष्टकार्योपरोधेन = शुक्तिशकलप्रतीतिप्रतिरोधेन विपरीतरजतप्रतीतिसमुदयेन चेति। अस्मिन् पक्षे अयमेव दोषादतितरामुपघातो यद् या प्रतीतिर्भाव्या सा न भवति, या च न भाव्या रजतप्रतीतिः सैव भवतीति। तस्माद् दोषसदसत्त्वाभ्यामत्र = अन्यथाख्यातावपि विवेकः = भ्रान्तिप्रमाद्वयविवेकः कल्पत इत्यर्थः।

**तस्मात् तत्सदसत्त्वाभ्यां विवेकोऽत्रापि कल्पते।**

**दोषेऽसत्यग्रहाशङ्का कथं च विनिवर्तते॥ १५५॥**

**न हि कारणसद्भावे कार्यसत्ता नियोगतः।**

**प्रत्यक्षं कार्यमेवं च हेतुनानुमितं भवेत्॥ १५६॥**

**विपर्यये फलाभावो हेत्वभावात्तु युज्यते॥१५६-१/२॥**

**विवेकोपायश्च दोषाभावभावौ ग्रहणाग्रहणयोर्न दण्डवारितौ। विपर्यये विपर्ययहेतवोऽभ्युपघातकाः सुतरामिष्टकार्योपरोधाद् विपरीतोदयाच्च।**

---

अपि च भवत एव विवेकोऽनुपपन्न इत्याह – **दोषेऽसतीति**। यत्र दोषोऽसन्, तत्रापि कदाचिदग्रहः स्याद् इत्यग्रहाशङ्का कथं निवर्तेत इत्यर्थः। यद्युच्यते – दोषेऽसति अदुष्टादिन्द्रियात् तत्त्वग्रहे (विवेके) जातेऽग्रहाशङ्का स्वतो निवर्तत इति, तत्राह – **न हीति**। अदुष्टेन्द्रियरूपकारणसद्भावे विवेककार्यं नियोगतः = नियमेन जायत एवेति नास्ति। यतः सत्यपि निर्दोषे चक्षुषि विस्फारिते ज्ञानानुदयः कदाचिद् दृश्यते। अतो न भवतो ग्रहाग्रहविवेकसिद्धिरिति भावः।

अख्यातिवादिनो दोषान्तरमाह – **प्रत्यक्षमिति**। अयमर्थः – यद्युच्यते – अदुष्टेन्द्रियसद्भावहेतुना तत्त्वग्रहरूपं कार्यमनुमास्यत इति न विवेकानुपपत्तिरिति, तदपि न सम्भवति। एवं सति संवित्प्रत्यक्षवादिनः स्वसिद्धान्तविरुद्धमुक्तं स्यात् स्वप्रकाशस्य संवित्कार्यस्य हेतुनाऽनुमेयत्वप्रतिपादनात। सिद्धान्ती स्वपक्षे समाधानमाह – **विपर्यये इति**। अर्थाद् अन्यथाख्यातिपक्षे तु दोषो भ्रान्तिहेतुः, दोषरूपभ्रान्तिहेत्वभावाद् भ्रान्तिरूपफलस्य कार्यस्याभावो युज्यत एव, कारणाभावात् कार्याभाव इति नियमादिति कारिकार्थः।

इमानेव कारिकाभिप्रायान् स्फुटीकरोति ग्रन्थकारः – "**विवेकोपायश्चे**"त्यादिना "**हेत्वभावे कार्यानुत्पादात्**" इत्यन्तेन वृत्तिग्रन्थेन। विवेकोपायभूतौ दोषाभावदोषरूपौ ग्रहणाग्रहणयोः कार्ययोर्विपरीतख्यातिपक्षेऽपि न दण्डवारितौ। प्रत्युत विपर्यये

**न चादुष्टेष्वपीन्द्रियादिषु अग्रहाशङ्कानिवृत्तिः, यतो हेतुभावेऽपि न नियोगतः कार्यम्। विपर्ययश्च स्यात्। प्रत्यक्षा संवित्तिर्हेतुनानुमीयेत। फलात्तु हेतोर्हेतुभावानुमानम्। दोषाभावात्तु विपर्ययकार्यासत्त्वं युक्तानुमानम्, हेत्वभावे कार्यानुत्पादात्।**

**अनालम्बनतापत्तिर्यथाकारान्तरार्पणात् ॥ १५७ ॥**
**स्वरूपानर्पणादेवं भवेदग्रहणेऽपि ते।**
**कस्यचित्त्वर्पणं तुल्यमथ तत्र न तत्तथा॥ १५८ ॥**

---

ये हेतवस्तिमिरादयस्ते सुतराम् = विशेषेण उपघातका भवन्ति, इष्टं रज्ज्वादि-प्रतीतिकार्यमुपरुध्य विपरीतां सर्पादिप्रतीतिं जनयित्वा चेति तरप्प्रत्ययेन संसूच्यते।

किञ्च, अख्यातिपक्षे दोषरहितेष्वपीन्द्रियादिषु अग्रहाशङ्का नावश्यं निवर्तेतैव। यतो हेतुसद्भावेऽपि मनोऽनवधानादिवशात् प्रतीतिकार्यानुत्पत्तिः अग्रहशङ्काया अनिवृत्तिश्च सम्भवत्येव। विपर्ययश्च स्यादिति वृत्तेः स्वाभ्युपगमविरोधश्च अख्यातिवादिनः स्यादित्यर्थः। विरोधमेवोपपादयति – **प्रत्यक्षा संवित्तिरिति।** प्रत्यक्षां = स्वप्रकाशां संवित्तिं हेतुना दोषाभावेनानुमिनोति, यावता फलेन कार्येण हेतुना कारणानुमानमेव सर्वानुभवसिद्धम्। सिद्धान्ती स्वपक्षं समर्थयति – **दोषाभावात्तु इति।** विवृतश्चायमंशो "विपर्यये फलाभावः" इति कारिकांशविवेचने।

यच्चाख्यातिवादिभिः चक्षुःसंप्रयुक्तपुरोवर्तिवस्तुनि आकारान्तरस्य रजतस्य समर्पणाद् अन्यथाख्यातावनालम्बनत्वमापादितम्, तथा ते = तव अग्रहणेऽपि = अख्यातावपि स्वरूपस्य = विशेषाकारस्यानर्पणाद् अनालम्बनत्वं तुल्यमेवापद्येत। यद्युच्यतेऽख्यातिपक्षे चक्षुःसंप्रयुक्ते इदन्त्वशुक्लभास्वरत्वादिसामान्याकारस्य भासमानत्वान्न निरालम्बनत्वमिति, तत्तु ममान्यथाख्यातिपक्षेऽपि तुल्यमिति न निरालम्बनत्वमित्याह – **कस्यचित्त्वर्पणं तुल्यमिति।** शङ्कते – **अथेति।** यदि तत्र

**परस्यापि हि तत्रैवमथ तत्र तथा स्थितेः।**
**सर्वत्र स्यात्तथाभासः, स्यादेवं ग्रहणेऽपि ते॥ १५९॥**
**यथा तत्रानिमित्तत्वात् सम्यग्ज्ञानेऽनिमित्तता।**
**शङ्क्यते, ग्रहणेऽप्येवमग्रहे सा निरूपिता॥ १६०॥**
**ज्ञानादेव निमित्तत्वमन्येषां न विशिष्यते॥ १६०-१/२॥**

---

अख्यातिपक्षे तत् = चक्षुःसंयुक्तं शुक्तेर्विशेषस्वरूपं न तथा = आलम्बनमेव न भवति, अतस्तदभानप्रयुक्तं निरालम्बनत्वं नापादयितुं शक्यते, तर्हि परस्य = ममापि तत्र = अन्यथाख्यातौ एवं हि = एवमेवास्तीति परिहरति – **परस्यापि हि तत्रैवमिति**। अर्थाद् ममापि तत्र मिथ्याज्ञाने शुक्तिशकलं स्वरूपेणैवमनालम्बनम्, अतः शुक्तिविशेषस्वरूपाभानप्रयुक्तमनालम्बनत्वमन्यथाख्यातावपि नापादनमर्हतीति।

अख्यातिवादी पुनराक्षिपति – **अथ तत्र तथा स्थितेः, सर्वत्र तथाभासः स्यादिति**। अर्थाद् अन्यथाख्यातौ तथास्थितेः = चक्षुःसंप्रयुक्तस्य अनालम्बनत्वात् सर्वत्र = अन्यत्रापि तथाभासः = अनालम्बनत्वाशङ्का स्यादिति। परिहरति – एवं तेऽपि ग्रहणे स्यादिति। अर्थात् तवापि ग्रहणे = सम्यग्ज्ञाने चक्षुःसंयुक्तस्य सर्वात्मना ग्रहणाभावात् तवापि सम्यग्ज्ञानस्य निरालम्बनत्वं प्रसज्येतेति भावः। तदेव प्रपञ्चयति – **यथा तत्रानिमित्तत्वादिति**। यथा तत्र – भ्रान्तौ अनिमित्तत्वात् = अनालम्बनत्वात् सम्यग्ज्ञांनेऽपि अनिमित्तता = अनालम्बनता शङ्क्यते, एवमेव अग्रहे = विवेकख्यात्यभावे त्वया निरूपिता = स्वीकृता चक्षुः–सम्प्रयुक्तानालम्बनता ग्रहणेऽपि = सम्यग्ज्ञानस्थलेऽपि शङ्क्येतेति तवापि सर्वत्रानाश्वासस्तुल्य इति भावः।

ननु घटादिज्ञाने अर्थपरिच्छेदकाद् ज्ञानादेव सिद्ध्यन् स घटादिरर्थस्तस्य ज्ञानस्य निमित्तम् = आलम्बनं भवतीति न सर्वत्र ज्ञाने अनालम्बनत्वशङ्केति अख्यातिवादी शङ्कते – **ज्ञानादेव निमित्तत्वमिति**। ज्ञानादेव सिद्ध्यतोऽर्थस्य

**आलम्बनत्वहानं च यथाकारान्तरावभासे चक्षुःसंयुक्तस्य तथाऽग्रहणेऽपि, स्वरूपानर्पणस्य तुल्यत्वात्। अथ कस्यचित् सामान्यरूपस्य स्वाकारत्वात् – अथ कानिचिच्चक्षुःसंयुक्तानि वस्तूनि स्वेन रूपेण गृह्यन्त इति कस्यचिदग्रहणेऽपि नानालम्बनत्वम् – तुल्यम्, आकारान्तरावभासेऽपि केषाञ्चित् स्वाकाराणामवभासनात्।**

**अथाग्रहणे नैव चक्षु संयुक्तस्यालम्बनत्वमिष्यते, परोऽपि नैव विपर्यय इच्छति। एवं ह्युक्तम् –**

**तस्माद् यदन्यथा सन्तमन्यथा प्रतिपद्यते।**

**तन्निरालम्बनं ज्ञानमभावालम्बनं च तत्॥ (श्लो० वा०, पृ०२४५)**

---

निमित्तत्वमालम्बनत्वमिति शब्दार्थः। तदेतदपाकरोति सिद्धान्ती – **अन्येषां न विशिष्यत इति।** अन्येषामन्यथाख्यातिवादिनामपि तदेव समाधानमिति न कश्चिद् विशेष इति कारिकानुसारी अर्थः।

"अनालम्बनतापत्तिः" इति कारिकार्थं स्फुटीकुर्वता ग्रन्थकृता वृत्तावुक्तम् – **आलम्बनत्वहानं चेति।** वृत्तिरियं तत्कारिकाव्याख्यानेन गतार्था स्फुटार्था चेति। "कस्यचित्त्वर्पणं तुल्यम्" इति कारिकाभागं व्याचष्टे – **अथ कस्यचित् सामान्यरूपस्येति।** सामान्यरूपस्य = सितभास्वरत्वादेः स्वाकारत्वात् = स्वस्यैवाकारत्वादित्यर्थः। कानिचित् = सितभास्वरत्वादीनि। कस्यचित् = शुक्तित्वादेः। पूर्वपक्षोऽत्र स्पष्टार्थः। तुल्यमिति समाधानार्थोऽपि स्पष्टः कारिकाव्याख्यया गतार्थश्चेति।

"अथ तत्र न तत्तथा। परस्यापि हि तत्रैवम्" इति कारिकाभागं व्याचष्टे – **"अथाग्रहणे नैव"** इत्यादिना वृत्तिग्रन्थेन। स्पष्टार्थौ पूर्वोत्तरपक्षौ। विपर्यये = भ्रान्तावित्यर्थः। अस्मन्मतेऽपि शुक्तिः शुक्तिस्वरूपेण नालम्बनं व्यवहारयोग्या च भवति, किन्तर्हि, रजतरूपेणैव साऽऽलम्बनं लोभात् प्रवृत्तिकारणं च भवतीत्याशयः। अत्र श्लोकवार्तिकं प्रमाणत्वेनोद्धरति –

**तस्माद् यदन्यथा सन्तमन्यथा प्रतिपद्यते।**

**तन्निरालम्बनं ज्ञानमभावालम्बनं च तत्॥** इति।

**अथ विपर्यये चक्षुःसंयुक्तस्यानालम्बनत्वादन्यत्राप्यनालम्बनता-शङ्का, अग्रहणेऽपि तुल्या। यथा खलु विपर्ययज्ञाने चक्षुसंप्रयुक्तवस्तुस्व-भावनिरपेक्षता दृष्टा सम्यग्ज्ञानेऽपि शङ्क्यते ज्ञानत्वसामान्यात्, तथा चक्षुःसंप्रयुक्तमपि वस्तु नाविकलरूपं गृह्यते, तेनानालम्बनं भवति, सदृशस्मृतिहेतुतां च प्रतिपद्यते—इत्यग्रहणे दृष्टानालम्बनता ग्रहणेष्वपि कस्मान्न शङ्क्यते ?**

**दोषाभावादिति चेत्, विपर्ययेऽपि तुल्यम्। न चान्यथालम्बने**

---

ईदृशमेव निरालम्बनत्वमभावालम्बनत्वञ्चेति न सौगतानामिव सर्वथाऽऽलम्बनशून्यत्वम् इति दृष्टान्तश्लोकार्थः।

"यथा तत्रानिमित्तत्वात्" इत्यादिं "सा निरूपिता" इत्यन्तां कारिकां व्याचिख्यासुराह वृत्तिम्—**"अथ विपर्यये"** इत्यारभ्य **"ग्रहणेष्वपि कस्मान्न शङ्क्यते"** इति पर्यन्ताम्। अयं वृत्तिभाग उक्तकारिकाव्याख्यानेनैव गतार्थः स्पष्टार्थश्चेति न पुनरावर्त्यते। वृत्तौ "नाविकलरूपं गृह्यते" इत्यस्य "न सर्वांशेन गृह्यते" इत्यर्थः। अंशतोऽनालम्बनं भवदपि सदृशस्मृतिहेतुर्भवत्येव। तथापि त्वया ग्रहणेष्वपि अनालम्बनता कथं न शङ्क्यत इति भावः।

यदि अख्यातिवादी ब्रूयात्—अग्रहणे दृष्टाऽनालम्बनता ग्रहणे न शङ्कितुं शक्यते, दोषाभावादिति। एवं तर्हि विपर्ययेऽपि तुल्यम्। अर्थाद् अन्यथाख्यातिपक्षेऽपि दोषे सति अनालम्बनतासत्त्वेऽपि सम्यग् ज्ञानस्थले दोषाभावाद् न अनालम्बनता-प्रसङ्ग इति भावः।

अभ्युपगमवादेनैतदुक्तम्। वस्तुतस्तु निरालम्बनत्वमपि ज्ञानानां नास्माभिरभ्युपगम्यते। रजतभ्रान्तिस्थले सा शुक्तिमेवालम्बते, तत्र शुक्तिरेव हि रजतात्मना गृह्यते। न चान्यथा गृह्यमाणेऽर्थे ज्ञानस्य निरालम्बनत्वं भवति।

**निरालम्बनत्वम्। चक्षुस्त्वन्यथापि नालम्ब्यते। आलम्बनार्थश्च रजतव्यवहारयोग्यता शुक्तेः। तथा हि— रजतार्थी तामादत्ते। घटस्यापि हि नैवान्यत् स्वज्ञानालम्बनत्वमन्यत्र व्यवहारयोग्यतायाः, यतो न**

---

एतदेवोक्तं वृत्तौ—**न चान्यथालम्बने निरालम्बनत्वमिति**। भ्रमे पुरोवर्तिवस्तुन एवाकारान्तरेण रजतात्मनाऽऽलम्बनत्वादित्यर्थः।

यच्चोक्तम्—भ्रान्तौ शुक्तिर्हेतुमात्रमतो नालम्बनं चक्षुरादिवत् इति, तत्राह—चक्षुस्तु शुक्तिवद् अन्यथाऽपि नालम्ब्यत इति न तद्भ्रान्तेरालम्बनं भवति। शुक्तेस्तु ततो भिन्ना स्थितिः— रजततया साऽऽलम्ब्यत इति। अयमाशयः—ज्ञानं प्रति चक्षुरपि हेतुः चक्षुःसंप्रयुक्तं पुरोवर्ति शुक्तिशकलमपि हेतुः, तथापि शुक्तिशकलं स्वविशेषाकारेण अनालम्बनमपि आरोपितेनाकारान्तरेणालम्बनं भवति। चक्षुस्तु ज्ञानेन न स्वरूपत आलम्ब्यते न वाऽऽरोपिताकारेणेति सर्वथाऽनालम्बनमेव चक्षुरिति शुक्तितो विशेषः।

अन्यथाख्यातिवादे भ्रमस्य निरालम्बनत्वमेव निराकर्तुमालम्बनशब्दार्थं निरूपयति वृत्तौ—**आलम्बनार्थश्चेत्यादिना**। रजततया ज्ञाता शुक्ती रजतव्यवहारयोग्या भवति। या शुक्ती रजततया न ज्ञाता, अथवा भ्रमहेतुभूतदोषे नष्टे यस्या रजततया ज्ञानं नष्टं सा शुक्ती रजतव्यवहारयोग्या न भवति रजतार्थिनः, सा शुक्तिसलम्बनभावं न भजते। तस्माद् यस्मिन् ज्ञाने जाते यद् वस्तु येन रूपेण व्यवहारयोग्यं भवति, तद् वस्तु तेन रूपेण तस्य ज्ञानस्यालम्बनं भवति। शुक्तिश्च रजतज्ञाने सति रजततया व्यवहारयोग्या भवति, न शुक्तितया। अतो भ्रान्तो जनो रजतबुद्ध्यैव शुक्त्या व्यवहरति, न शुक्तिबुद्ध्या। तस्माद् भ्रमे शुक्तिरेव रजतव्यवहारयोग्यताबलाद् रजतज्ञानस्यालम्बनं भवति, साऽपि च रजततयैव तज्ज्ञानस्यालम्बनं भवति, न शुक्तितयेति पर्यवसितम्। तदेवोपपादयति—**तथा हीति**। 'रजतार्थी' 'तामादत्ते' इत्युक्तिः शुक्ते रजतव्यवहारयोग्यताप्रदर्शनपरा। घटादिविषयकसम्यग्ज्ञानस्थलेऽपि घटादेरीदृशमेवालम्बनत्वमिति प्रदर्शयति— **घटस्यापि हीति**।

ज्ञाने स्वाकारसमर्पकत्वमेव विषयस्यालम्बनत्वं किं न स्यादिति शङ्कायामाह— **यतो नेति**। साकारविज्ञाननिषेधाद् इत्यर्थः। तथा च भाष्यम्—

**विषयाकारं ज्ञानम्। तत्र शुक्तिः स्वरूपेण नालम्बिता रजतज्ञानेन, तन्निबन्धनव्यवहाराभावात्। रजतरूपेण तु, तन्निबन्धनस्योपादानव्यवहारस्य तत्र भावादिति।**

**क्रियानिष्ठेऽपि विधौ वस्तुस्वरूपसिद्धये कश्चिदाह–**

**अवघातप्रोक्षणादेर्यथा द्रव्यार्थता स्थिता॥ १६१॥**
**ज्ञानं स्वभावाद् द्रव्यार्थं कर्मत्वाच्चात्मनस्तथा।**
**भवत्वेवं तथापीष्टरूपसिद्धिः कुतो मता॥ १६२॥**
**शब्दस्तदर्थकार्यत्वे तावज्ज्ञानस्य निष्ठितः।**
**ज्ञानाज्ज्ञेयस्य कोऽन्योऽर्थः स्वरूपप्रतिभासनात्॥ १६३॥**

---

''अनाकारामेव बुद्धिमनुमिमीमहे'' इति। एवं तर्हि सम्यङ् मिथ्याविभागः **कथं स्यात्** ? उभयत्र व्यवहारयोग्यत्वस्य समानत्वात्, तत्राह – **तत्र शुक्तिरिति**। **भ्रमे स्वरूपेण** शुक्तिर्न रजतज्ञानेनालम्बिता। किन्तु रजतरूपेण 'रजतार्थी **तामुपादत्ते**' इति रजतनिबन्धनस्यैवोपादानव्यवहारस्य दर्शनादिति भावः।

प्रतिपत्तिविधिपर आगम एवम्भूतं नित्यशुद्धबुद्धमुक्तस्वरूपं (अपहतपाप्मानन्दादि) ब्रह्म गमयितुं नार्हति, समारोपेणापि सम्भवादिति प्रसङ्गागतं संसाधितम्। अथ पूर्वप्रकृतं विधिनिराकरणमेवानुवर्तयन् पक्षान्तरमुपस्थापयति **क्रियानिष्ठेऽपीति**। क्रियानिष्ठेऽपि विधौ ब्रह्म वस्तुस्वरूपं सेद्धुमर्हतीति कस्यचिन्मतमाह – **अवघातप्रोक्षणादेरित्यादि**कारिकाभिः। अयमर्थः – ''व्रीहीन् अवहन्ति'', ''व्रीहीन् प्रोक्षति'' इति विधौ यथा अवघातप्रोक्षणयोः क्रिययोः व्रीहिरूपद्रव्यार्थतायामुपयोगः, व्रीहीन् इति द्वितीयाविभक्त्या व्रीहीणामीप्सिततमत्वेन प्राधान्यावगमात्। तथैव ''आत्मा वारे द्रष्टव्यः'' इति ज्ञानविधावपि ज्ञानं क्रियास्वभावात् तत्रात्मनः कर्मत्वेन निर्देशाद् आत्मनः प्राधान्यावगमाच्च ज्ञेयभूतात्मद्रव्यार्थं स्यात्। अतोऽत्र ज्ञानक्रियापरोऽपि विधिः अपहतपाप्मानन्दात्मकब्रह्मस्वरूपसिद्धौ पर्यवसास्यतीति विशेषः कारिकार्थः।

**अदृष्टकल्पना युक्ता न च दृष्टस्य सम्भवे।**
**तस्माद् यथा प्रोक्षणादिविधेर्व्रीहिषु गम्यते॥ १६४॥**
**अदृष्टा संस्कृतिर्ज्ञानविधे रूपं तथाऽऽत्मनः॥ १६४-१/२॥**

---

अत्र सिद्धान्ती शङ्कते – "भवत्वेवमित्यारभ्य निष्ठितः" इत्यन्तकारिकया। अयमर्थः – भवतु नाम क्रियायाः स्वभावाद् द्रव्यार्थत्वम्, भवतु च आत्मनः कर्मत्वेन इष्टतमत्वात् प्राधान्यम्, तथापि इष्टं यद् आत्मनः स्वरूपमपहतपाप्मानन्दादिरूपम्, तस्य सिद्धिः, "आत्मा वारे द्रष्टव्यः" इति विधिवाक्यात् कथं स्यात् ? न स्यादिति भावः। यतो हि 'द्रष्टव्यः' इति विधिशब्दः 'आत्मस्वरूपं ज्ञातव्यम्' इत्यात्म-पदार्थस्य यज्ज्ञानं तत्कर्तव्यम् इत्येवम् आत्मवस्तुज्ञानस्य कर्तव्यत्व एव निष्ठितः पर्यवसितः, न तु 'एवंभूत आत्मा' इति आत्मस्वरूपबोधनपरः, यत्परः शब्दः स शब्दार्थ इति न्यायात्। तस्माद् उक्तविधिशब्दस्तावद् अपहतपाप्मानन्दात्म-कात्मस्वरूपसिद्धौ न प्रमाणमिति सिद्धान्तिनोऽभिप्रायः।

उक्तशङ्कां विधिवादी परिहरति – **ज्ञानादिति**। ज्ञानाद् ज्ञेयस्य स्वरूपप्रतिभासनादन्यः कोऽर्थः ? किं प्रयोजनं साध्यमिति सान्वयोऽर्थः कारिकायाः। यद्युच्येत – उक्तज्ञानविधेः आत्मस्वरूपप्रतिभासनादन्यत् किमप्यदृष्टं प्रयोजनं सम्भवेदिति तत्राह – **अदृष्टकल्पना युक्ता न च दृष्टस्य सम्भवे इति**। अर्थाद् दृष्टस्य आत्मस्वरूपप्रतिभासनरूपप्रयोजनस्य सम्भवे अदृष्टप्रयोजनकल्पना नैव युक्तेत्यर्थः। तस्माद् ज्ञानक्रियानिष्ठोऽपि "आत्मा द्रष्टव्यः" इति विधिः अपहतपाप्मादि-ब्रह्मस्वरूपसिद्धौ प्रमाणं भविष्यतीति। उक्तमेवार्थं दृष्टान्तपूर्वकं विशदीकरोति ज्ञानविधिवादी – **तस्मादिति**। तस्माद् यथा "व्रीहीन् प्रोक्षति" इति प्रोक्षणादिविधेः = प्रोक्षणादिविधानाद् व्रीहिषु अदृष्टाऽपि = अनुक्तापि संस्कृतिः = संस्कारो गम्यते, तथा ज्ञानविधेः = 'द्रष्टव्य' इति ज्ञानविधानाद् आत्मनो रूपम् = अपहतपाप्मत्वादिकं विधावनुक्तमपि गंस्यते। एवञ्च ज्ञानविधेः कर्मत्वाभिमतस्यात्मनोऽपहतपाप्मत्वादिस्वरूपप्रकाश एव प्रयोजनमिति विधि-वादिनो मतनिष्कर्षः।

**यथा अवघातप्रोक्षणादयः स्वरूपेणैव द्रव्यार्थाः, द्वितीयया च द्रव्यस्य कर्मत्वेन निर्देशात्, तथा ज्ञानमपि स्वरूपेण परार्थम्, कर्मत्वेन चात्मनो निर्देशात् तदर्थम्। अतो ज्ञानविषयोऽपि विधिरात्मरूपं संस्पृशति, न ज्ञानमात्रे पर्यवस्यति। ज्ञानस्यात्मरूपार्थत्वेन कर्तव्यतावगमाद् ज्ञाननियोगेनैवात्मरूपस्याक्षेपात्।**

**स्यादेतत् – भवतु ज्ञानस्यात्मार्थताऽभिप्रेता, अपहतपाप्मादिरूपात्मप्रतीतौ तु प्रमाणं वाच्यम्। शब्दस्तावदेवंविधात्मज्ञानकर्तव्यतायां पर्यवसितः 'एवंविधात्मोद्देशेन ज्ञानं कुर्यात्' न तु 'एवंविध आत्मा' इति। तत्रोच्यते– न हि तत्राकिञ्चित्करस्य तादर्थ्येन कर्तव्यता युज्यते, ज्ञानस्य च कर्मणि नान्यत् फलं तद्रूपसंवित्तेः। न हि तस्यां**

---

ज्ञाननियोगेनैव = ज्ञानविधिनैव अपहतपाप्माद्यात्मस्वरूपस्याक्षेप इति मतविशेषपराम् "अवघातप्रोक्षणादे"रिति कारिकार्थं ग्रन्थकृत् स्वयं व्याचष्टे वृत्तौ – **यथा अवघातप्रोक्षणादय इति**। वृत्तिरियं स्पष्टार्था कारिकाविवरणेन गतार्था च। वृत्तौ "आत्मरूपं संस्पृशति" इत्यस्य अपहतपाप्माद्यात्मस्वरूपमाक्षिपतीत्यर्थः। तत्र हेतुमाह – **ज्ञानस्यात्मरूपार्थत्वेनेति**।

शङ्कामुखीम् "भवत्वेवम्" इति कारिकां व्याचष्टे – **स्यादेतदिति**। भवत्विति ज्ञानमात्मविषयकं कर्तव्यम् इति विधेरभिप्रायो भवतु नाम, तथापि अपहतपाप्मानन्दादिकं यदात्मनः स्वरूपं तत्प्रतीतिस्तु प्रमाणान्तरादेव भवेत्, न तु तस्माद् विधिवाक्यात्। विधिशब्दात् कुतो न भवेदित्यत्र हेतुमाह – **शब्दस्तावदिति**। अनेन वृत्तिग्रन्थेन "शब्दस्तदर्थकार्यत्वे तावज्ज्ञानस्य निष्ठितः" इति कारिका व्याख्याता।

उक्तशङ्कापरिहारपराम् "ज्ञानाज्ज्ञेयस्य कोऽन्योऽर्थः" इति कारिकां व्याचष्टे वृत्तौ – **तत्रोच्यत इत्यादिना**। तत्र = आत्मनि कर्मभूते अकिञ्चित्करस्य = किञ्चित् फलमजनयतो ज्ञानस्य तादर्थ्येन = आत्मविषयकतया कर्तव्यता

**दृष्टायामन्यस्यादृष्टस्य कल्पना। तत्र यथा "व्रीहीन् प्रोक्षति" (आपस्तम्ब-श्रौतसूत्रम्–१।९।१) इति प्रोक्षणविधेरेव व्रीहिष्वदृष्टसंस्कारावगमः प्रोक्षणविषयादपि। नान्यथा व्रीह्यर्थे प्रोक्षणे कर्तव्यता युज्यते। न हि तत्र किञ्चदकुर्वत् प्रोक्षणं तदर्थं कृतं स्यादित्येवंविधेरेवादृष्टसंस्कार-सद्भावसिद्धिः।**

**यथा "स्वर्गकामो यजेत" (तैत्तिरीयसंहिता– २।५।५) इति, नान्यथा स्वर्गकामस्य यागकर्तव्यताप्रतीतिर्युज्यते यदि न स्वर्गोपायो यागः। अनुपाये चेन्नियुज्यते, न स्वर्गकामो नियुक्तो भवति। अनुष्ठितोऽपि न स्वर्गकामेनानुष्ठितो भवतीति क्रियाविषयादपि विधेः साध्यसाधनभावः**

---

न युक्तेति पङ्क्त्यर्थः। आत्मनः फलाजननेन "आत्मा ज्ञातव्यः" इति विध्युक्ता ज्ञानकर्तव्यताऽयुक्तेत्याशयः। अतो ज्ञानकर्मभूते आत्मनि ज्ञानस्य फलमात्म-स्वरूपप्रतिपत्तिरेव न ततोऽन्यदिति। "अदृष्टकल्पना युक्ता न च दृष्टस्य सम्भवे" इत्यादि "रूपं तथात्मनः" इत्यन्तां कारिकां विवृणोति – **न हि तस्यां दृष्टाया-मन्यस्यादृष्टस्य कल्पना** इत्यादिना। अत्र दृष्टान्तं व्याकरोति – **यथा व्रीहीन् प्रोक्षतीति**। स्पष्टार्थः।

दृष्टान्तान्तरमुल्लिखति – **यथा "स्वर्गकामो यजेत"** इत्यादि। यदि यागो न स्वर्गोपायस्तदा अन्यथा = प्रकारान्तरेण स्वर्गकामस्य यागकर्तव्यताप्रतीतिर्न युज्यते यागविधेरित्यन्वयार्थः। ननु स्वर्गानुपायेऽपि नैयमिकाग्निहोत्रे यथा नियोगो दृश्यते, तद्वत् स्वर्गानुपायेऽपि यागे नियुज्येतेति चेत्तत्राह – **अनुपाये चेदिति**। तथात्वे स्वर्गकामो न नियुक्तो भवति। अर्थात् तदा स्वर्गकाम इति विधिविशेषण-मनर्थकं स्यात्। स्वर्गकामस्यानियोज्यत्वेऽपि यदि यागोऽनुष्ठितः स्यात्, तदा स स्वर्गेच्छां विनैवानुष्ठितो भवति। तच्चानुपपन्नम्। यतो यो हि यदिच्छति, स तं करोति, इतीच्छाकृत्योः समानविषयत्वनियमादित्यर्थः।

तस्माद् यागे स्वर्गकामस्य नियोज्यत्वप्रतिपादनात् स्वर्गयागयोः साध्यसाधनभावः क्रियाविषयकादपि विधिवाक्यात् शाब्द एव प्रतीयमानः

**शाब्दः। तथा ज्ञानविषयादपि विधेरात्मरूपबोधः। न हि तद्विध-मात्मानमुद्दिश्य ज्ञाननियोगो युज्यते, अतद्विधश्चेदात्मा तेन ज्ञानेन प्रतीयत इति।**

**उक्तोत्तरमिदं यस्मादरूपेणापि भासकम्॥ १६५॥**

**ज्ञानं प्रदर्शितं न स्यादन्यथा तद्विधेः फलम्।**

**लयो निवर्त्यो न तथा विक्षेपो हि यथासुखः॥ १६६॥**

**लयविक्षेपभेदश्च न स्यादग्रहमात्रके॥१६६-१/२॥**

---

सिद्ध्यति। दृष्टान्तद्वयं प्रदर्श्य दार्ष्टान्तिकमाह – **तथा ज्ञानविषयादपीति**। अर्थाद् ज्ञानविषयकादपि प्रतिपत्तिविधेर्ज्ञेयस्यात्मनोऽपहतपाप्मादिस्वरूपबोधः शाब्द एव सिद्ध्यति। यतो हि अपहतपाप्मादिरूपमात्मानमेव कर्मभूतमुद्दिश्य "आत्मा द्रष्टव्यः" इति ज्ञानविधिरस्ति। अतस्तत्स्वरूपश्चेदात्मा तेन विधीयमानेन ज्ञानेन प्रत्याय्येत, तदाऽपहतपाप्मादिस्वरूपमात्मानमुद्दिश्य श्रूयमाणो ज्ञाननियोगोऽयुक्त एव स्यादिति वृत्त्यभिप्रायः।

तदेतद् दूषयति सिद्धान्ती – **उक्तोत्तरमिदमिति**। यदिदं कस्यचिज्-ज्ञानविधिवादिनो मतम्, तदुत्तरमुक्तं पूर्वमिति। यस्माद् अरूपेणापि = समारोपेणापि ज्ञानं भासकं पूर्वं प्रदर्शितम्, तत एवास्य मतस्य निरासो जातः। अर्थात् "योषा वाव गौतमाग्निः" इत्यादावारोपितरूपेणापि ज्ञानविधानदर्शनान्न ज्ञानविधि-बलादात्मयाथार्थ्यसिद्धिरिति भावः। किञ्च, विपरीतख्यातिमनभ्युपगच्छतो ज्ञानविधिरपि निष्फलः स्यात्, ज्ञानेन निवर्तनीयस्य कस्यचिदभावादित्याह – **न स्यादन्यथा तद्विधेः फलमिति**। अन्यथा = विपर्ययज्ञानभाव इत्यर्थः।

यद्युच्यते – लयनिवृत्तिरेव ज्ञानविधेः फलमिति, तत्राह – **लयो निवर्त्यो न तथेति**। ज्ञानस्य द्वौ निवर्त्यौ लयो विक्षेपश्चेति। तयोर्मध्ये लयस्तथा न निवर्त्यो

**नन्वरूपावभासे स्याददृष्टफलकल्पना ॥ १६७ ॥**
**रूपावभासे दृष्टं तु फलं तत्सिद्धिलक्षणम् ।**
**न दृष्टमात्राद् दृष्टार्थं पुरुषार्थानुगन्तु तत् ॥ १६८ ॥**
**न भिद्यते च तद्भावो रूपारूपावभासयोः ।**
**यथा प्रपञ्चशून्यत्वे तत्त्वे ज्ञानावभासिते ॥ १६९ ॥**
**दुःखकर्मक्लेशहानमतत्त्वेऽपि तथा भवेत् ।**
**एतच्चात्र भवेद् युक्तं प्रत्यक्षाद्यविरोधतः ॥ १७० ॥**
**अनौपचारिकार्थाश्च स्युः कर्मविधयो यतः ॥ १७०-१/२ ॥**

---

भवति, यथाऽसुखो विक्षेपः । विक्षेपो हि असुखः = न सुखयतीति व्युत्पत्तेः, दुःखहेतुः । अतः स एव निवर्त्यः स्यात् । लयस्तु लीनावस्थारूपत्वाद् न दुःखरूपो न वा सुखरूप इति तत उदास्ते जनः । एवं विवेकाग्रहमात्रस्वीकारे सर्ववेदान्तप्रसिद्धो लयविक्षेपरूपोऽविद्याभेदोऽपि न सिद्ध्येत् ।

शङ्कते – **नन्वरूपावभास** इति । यदुक्तं सिद्धान्तिना– अरूपेणापि भासकं ज्ञानमिति, तदयुक्तम्, आत्मज्ञानविधिर्यद्यारोपितविषयकः स्यात्, तदा आरोपितविषयकस्य ज्ञानस्य फलादर्शनात्, तत्रादृष्टं फलं कल्पनीयम् । **रूपावभासे तु** = आत्मनो यथाभूतस्वरूपावभासे तु दृष्टमेव फलम् आत्मसिद्धिलक्षणम् = आत्मस्वरूपनिश्चयलक्षणमिति नास्मन्मतेऽदृष्टफलकल्पनेति शङ्काकारिकाशयः । समाधत्ते – **न दृष्टमात्राददिति** । दृष्टमात्रात् = यस्य कस्यचित् फलस्य दर्शनाद् ज्ञानं दृष्टार्थं = दृष्टफलकं न भवति, किन्तु पुरुषार्थानुगमपि भवेद् यद् ज्ञानं तदेव ज्ञानमिह दृष्टार्थकमभ्युपेयम् । पुरुषेणार्थ्यमानं यत् फलम्, तदनुगम् = तदनुकूलं यज्ज्ञानम्, तत् पुरुषार्थानुगं भवतीति समाधानकारिकार्थः ।

ननु रूपावभास एव पुरुषार्थो नेतरः = आरोपितावभासः । अतो ज्ञानविधौ पुरुषार्थानुगत्वानुरोधात् समारोपावभासो वारितो भवतीति चेत्तत्राह – **न भिद्यते च तद्भाव** इत्यादि । अयमत्र कारिकार्थः – रूपस्य स्वरूपस्यावभासो भवेत्,

**आत्मार्थज्ञानविधेरेतावद् गम्यते — ज्ञानेन सोऽवभास्यते, आलम्ब्यते, व्यवहारयोग्यतामापाद्यते। तच्चावभासनं स्वरूपेण च दृष्टम्, पररूपेण च रजतात्मना शुक्तिकायाः। प्रतिपादितमेतत् — नाग्रहमात्रमेतत्, अन्यथाख्यातिस्तु। तत्रोभयथा सम्भवे कुत एतत् — तत्त्वप्रतिपत्ति-रवश्याभ्युपेया, नातस्मिंस्तत्ख्यातिः ? अन्यथा नात्मज्ञानविधिः फलवान्**

---

अरूपस्य = आरोपितस्य वा अवभासो भवेत्, उभयथापि तद्भावः = आत्मस्वरूपं न भिद्यते। अतो ज्ञानेन प्रपञ्चशून्यत्वे तत्त्वेऽवभासिते यथा दुःखादिहानं जायते, तथा प्रपञ्चशून्यत्वेऽतत्त्वावभासिते तद्भवेत्। अतो नावभासमात्रं पुरुषार्थाय कल्पते किन्तु अपहतपाप्मानन्दादिरूपावभास एव तथेति समाधातुराशयः।

अथवा एतदपि युक्तमेव यद् विधीयमानं ज्ञानमारोपितविषयकमेव भवेत्। यतो हि विधीयमानं ज्ञानं यदि अद्वैतात्मयाथात्म्यविषयं भवति तदा प्रत्यक्षादिप्रमाणान्तरविरोधात् कर्मकाण्डविरोधाच्च अयथार्थत्वमेव तस्याभ्युपगन्तव्यम्, तदविरोधाय। एवं तथाविधज्ञानविधिसहभाविनः कर्मविधयोऽपि तद्वदेव अनौपचारिकार्था भवेयुरिति कारिकार्थः।

उक्तोत्तरमित्यादिकारिकार्थं स्वयं विवृणोति ग्रन्थकृत्—**आत्मार्थज्ञानविधेरिति**। अयमर्थः— "आत्मा द्रष्टव्यः" इति ज्ञानविधिरात्मार्थं विद्यत इत्यस्य त्रिधाऽभिप्रायः ? ज्ञानेन आत्मा अवभास्यते, आलम्ब्यते वा व्यवहारयोग्यतामापाद्यत इति। तच्चावभासनं स्वरूपेण च दृश्यते, यथा घटस्य घटात्मना। पररूपेण च दृश्यते, यथा शुक्तिकाया रजतात्मना। तत्र घटस्य घटरूपेणावभासनं ग्रहणमेव नाग्रहणं न वाऽन्यथाख्यातिः। किन्तु पररूपेणावभासनं तु अन्यथाख्यातिरेवास्ति न स्मृतदृष्टयोर्विवेकाग्रहणमात्रमिति प्रतिपादितपूर्वम्।

तत्र = ज्ञानं यथार्थमेवेति नियमाभावे उभयथा सम्भवः — यथार्थमपि अयथार्थमपीति। अस्यां स्थितौ तत्त्वप्रतिपत्तिर्यथार्थज्ञानम् अवश्यमेव स्वीकार्यम्, नातस्मिंस्तत्ख्यातिः = नान्यथाख्यातिरिति कुतो हेतोरुच्यते ? अन्यथाख्यातिम-

**स्यात्। स खल्वनात्मरूपप्रविलयार्थः। अनात्मरूपप्रविलयेन हि वस्तुनोऽवगतिर्दृष्टेति। यदि च नात्मनो नारूपप्रपञ्चरूपेण प्रकाशनम्, किं प्रविलाप्येत ?**

**अथ मतम् – द्विप्रकारेयमविद्या, प्रकाशस्याच्छादिका विक्षेपिका च। स्वप्नजागरितयोर्विक्षेपिका, सुषुप्त आच्छादिका लयलक्षणा। तत्राच्छादकाऽविद्यानिवृत्तिर्ज्ञानविधेः फलम्। तच्चासत्, यतो नाच्छादिकाया अविद्याया निवृत्तिः पुरुषेणार्थ्यते तथा यथा विक्षेपस्य। स हि विविधदुखात्मकः, लयस्तु विविधदुखनिवृत्तेरसकृदानन्दत्वेन श्रुतौ गीतः प्रत्युतार्थनीयः स्यात्।**

---

स्वीकुर्वाणं प्रति बाधकान्तरमाह – **अन्यथेति**। अन्यथा = अन्यथाख्यात्यभावे आत्मज्ञानविधिर्निष्फल एव भवेत्। यतो हि आत्मनि अनात्मप्रतिपत्तिरूपाऽन्यथाख्यातिस्तस्याः प्रविलयार्थमेव आत्मज्ञानविधिः, नान्यत् प्रयोजनं तस्य। तत्र हेतुमाह – **अनात्मरूपेति**। वस्तु तदैवावगतं भवति, यदा तस्य यदनात्मरूपम् = अस्वरूपम्, तस्य प्रविलयो जायेतेति। एवञ्च आत्मनो यदि नामरूपात्मकप्रपञ्चरूपेणावभासनं न भवति, तदा किं प्रविलाप्येत ? कस्य प्रविलयाय "आत्मा द्रष्टव्यः" इति ज्ञानविधिरुपयुज्येत ?

अख्यातिवादी स्वमतानुसारेण प्रविलाप्यं दर्शयति – **अथ मतमित्यादिना**। स्पष्टार्थः। तत्राच्छादिकाऽविद्यानिवृत्तिर्ज्ञानविधेः फलमिति पूर्वपक्षः। तदेतन्निराकरोति – **तच्चासदिति**। आच्छादिकाऽविद्यानिवृत्तिर्न तथा पुरुषार्थो यथा विक्षेपनिवृत्तिः। यतो न विक्षेपाविद्यानिवृत्तिवद् आच्छादकाऽविद्यानिवृत्तिः पुरुषेणार्थ्यते। विक्षेपे विशेषमाह – **स हीति**। स विक्षेपो नानादुःखात्मक इति हेतोस्तन्निवृत्तिर्नितान्तमर्थ्यते। लयलक्षणाऽऽच्छादिकाऽविद्या विविधदुःखनिवृत्तिरूपत्वेन आनन्दत्वेनैव "एष परमानन्दः" इत्यादिश्रुतौ नैकदा श्रुतेति पुरुषेण प्रत्युत अर्थनीयैव सा भवेदिति।

**अपि च विपर्यासमनिच्छतोऽविद्याभेद एव न स्यात्, अवस्थात्रयेऽप्यग्रहणमात्रत्वात्। तस्मादग्रहणविपर्ययग्रहणे द्वे अविद्ये कार्यकारणभावेनावस्थिते। स्वप्नजागरितयोरुभे, कारणभूताग्रहणलक्षणा सुषुप्त इत्यविद्याप्रविभाग उपपद्यते। तदुक्तम्—**

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिद्ध्यतः॥**

**(मा० का० १।११)**

---

**अपि चेति**। विपर्यासम् = अन्यथाख्यातिं ये वादिनो न मन्यन्ते तेषाम् अग्रहणमात्रमिच्छताम् अविद्याभेद एव अनुपपन्नः स्यात्। प्रत्युत तेषां जागरिते स्वप्ने सुषप्ते चेत्यवस्थात्रयेऽपि अग्रहणत्रयमेव स्यात्। सिद्धान्ते निष्कर्षमाह— **तस्मादिति**। तत्राग्रहणरूपाऽविद्या विक्षेपस्य कारणभावेनावस्थिता, विपर्ययग्रहण- (विक्षेप) रूपाऽविद्या तु कार्यभूताऽग्रहणरूपाविद्याया इति विवेकः। तत्र स्वप्नजागरितयोरवस्थयोरुभे कारणरूपा कार्यरूपा च अविद्ये भवतः। सुषुप्ते तु केवला कारणभूताऽग्रहणलक्षणैवाविद्या भवतीति अविद्याया विभाग उपपद्यतेऽन्यथाख्यातिवादे।अख्यातिवादे तु केवला अग्रहणरूपैवाविद्या भवेदिति, तच्च अनुभवविरुद्धम्। उक्तार्थे गौडपादाचार्यवचनं प्रमाणतयोपन्यस्यति— **तदुक्तमिति**।

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्य्ये न सिध्यतः॥**

एतत् कारिकार्थस्तु क्रियते इति कार्यं फलभावः, करोतीति कारणं बीजभावः।तथा च बीजफलभावरूपाभ्यां तत्त्वाग्रहणान्यथाग्रहणाभ्यां तौ विश्वतैजसौ बद्धौ स्तः। अत्र जागरिताभिमानी विश्वः स्वप्नाभिमानी च तैजस इति विवेकः। सुषुप्त्यभिमानी प्राज्ञस्तु कारणमात्रबद्धोऽर्थाद् बीजभूतेन तत्त्वाग्रहणमात्रेण बद्धो भवति सुषुप्तिकाले।तुर्ये ब्रह्मणि तु तौ द्वौ बीजफलभावौ = तत्त्वाग्रहणान्यथाग्रहणे न विद्येते न सम्भवत इति।

**नन्वन्यथायं भेदः — अग्रहणासम्यग्ग्रहणाभ्याम्। अग्रहण-लक्षणाऽऽच्छादिका सुषुप्ते, असम्यग्ग्रहणमितरयोः। तथा हि — अभिन्नस्य वस्तुनोऽप्रदेशस्य ग्रहणे तथाभावस्य चाग्रहणात् पृथक्त्वेन प्रत्यवभासः। नैतत् सारम्। यदि तावदसम्यग्ग्रहणमात्रं तदपटुत्वं वा ज्ञानस्य, केनचिद्रूपेण वा ग्रहणम् न सर्वात्मना। तत्र दूरस्थे सूक्ष्मे च भवत्यपटु ज्ञानं सामान्यज्ञानम्, न च तदविद्या।**

---

अख्यातिवादी अन्यथाख्यात्यनभ्युपगमेऽप्यविद्याद्वैविध्यमुपपन्नमिति शङ्कते — **नन्वन्यथायं भेद इत्यादि।** अग्रहणमेकाऽविद्या, असम्यग्ग्रहण-मन्याऽविद्येति भेदः। प्रथमाऽग्रहणलक्षणाऽऽच्छादिकाऽविद्या सुषुप्ते, द्वितीयाऽसम्यग्ग्रहणलक्षणा जाग्रत्स्वप्नयोरिति तयोरवस्थाभेदः। विपर्ययाति-रिक्तमसम्यग्ग्रहणं दर्शयति — **तथा हीति।** अभिन्नस्य = एकस्य, अप्रदेशस्य = निरवयवस्य विभोराकाशादिवस्तुनो ग्रहणे = ग्रहणदशायां तथाभावस्य = तदीयाभिन्नविभुभावस्य चाग्रहणात् पृथक्त्वेन यः प्रत्यवभासो भवति, स एवासम्यग्ग्रहणार्थः। एकोऽपि नीरूपोऽपि विभुरपि आकाशः क्वचित्पीतः, क्वचिन्नीलः, क्वचिद्धवल इति पृथक्त्वेन प्रत्यवभासते। इदं हि आकाशस्यासम्यग्ग्रहणं व्यवह्रियते। एवम्, अभिन्नोऽपि प्रपञ्चभेदै रहितो निरवयवोऽप्यात्मा तथाभावेनागृह्यमाणो देवदत्तादिभावेन पृथक्त्वेन प्रत्यवभासत इत्यप्यसम्यग्-ग्रहणमस्तीति। एवम् तथाभूतस्याकाशस्यात्मनो वा सर्वथाऽग्रहणमग्रहणपदार्थः। अथवा अभिन्नस्याप्रदेशस्य वस्तुनः सामान्यतो ग्रहणे विशेषाग्रहणे च असम्यग्-ग्रहणमिति व्यवहारस्तथा तथाभूतस्य सर्वथाऽग्रहणेऽग्रहणमिति व्यवहार इति तयोः पृथक्त्वेन व्यवहार इति व्याख्येयम् तदित्थमेकं सर्वथाऽग्रहणरूपमन्यच्च असमीचीनं ग्रहणमिति ग्रहणाग्रहणकृतोऽन्योर्भेदेन प्रतीतिरुपपद्यत इति पूर्वपक्षाभिप्रायः।

तदेतद् दूषयति सिद्धान्ती — **नैतत्सारमिति।** तत्र विकल्पयति — किं तावत् असम्यग्ग्रहणम् ? ज्ञानस्य तस्मिन् विषये अपटुत्वं वा, केनचिद्रूपेणैव ग्रहणं न सर्वात्मना ग्रहणमिति

**न च किञ्चिज्ज्ञानं सर्वात्मनाऽर्थस्य ग्राहकमिति सर्वज्ञानमिथ्यात्वापातः। अभेदस्याग्रहणेऽपि भेदस्यासंवित्तेर्न निवर्तनीयमस्ति विद्यया। न खल्वभेदाग्रहणं निवर्तनीयम्, न हि तत् किञ्चिदपराध्यति। भेदस्तु विविधदुःखायतनम्।**

**अथासम्यग्ग्रहणं पृथक् प्रत्यवभासोऽपृथगात्मनः, अभ्युपेता तर्हि विपर्ययख्यातिः— अपृथक् पृथक् प्रकाशत इति। अथोच्येत— न ब्रूमः**

---

वा ? तत्र नोभयमप्यविद्या इत्याह — **तत्र दूरस्थ इति**। अर्थाद् दूरस्थे सूक्ष्मे च वस्तुनि जायमानं सामान्यज्ञानम् अपटुज्ञानं भवति, किन्तु न तद् ज्ञानमविद्यान्तर्गतं मन्यते।

असम्यग्ग्रहणस्य द्वितीयविकल्पस्य स्वीकारेऽनुपपत्तिमाह — **न चेति**। अर्थात् किमपि ज्ञानं सर्वात्मना नार्थग्राहकं भवतीति सर्वेषु ज्ञानेषु मिथ्यात्वापत्तिः स्यात्। तस्माद् असम्यग्ग्रहणमविद्येति कथनमयुक्तम्। एवम्, निवर्त्याभावाद् ज्ञानविधानमनर्थकं स्यादिति दोषान्तरमाह— **अभेदस्येति**। अर्थाद् विद्या हि अविद्यां निवर्तयति, साऽविद्या यदि असम्यग्ग्रहणरूपा, असम्यग्ग्रहणं चाभिन्नस्यात्मनो भेदप्रतीतिरूपं तदाऽन्यथाख्यातिस्वीकारापत्तिः। यद्यविद्या अभेदाग्रहणरूपा तदा भेदप्रतीतेरभावाद् अभेदविद्याया निवर्तनीयाभावप्रसङ्गः। अभेदस्य अग्रहणं तु न विद्यया निवर्तनीयं भवितुमर्हति। यतोऽग्रहणं न किञ्चिदपराध्यति येन तन्निवर्तनीयं भवेत्, अभावरूपत्वात् तस्य। भेदस्तु त्रिविधदुःखायतनमिति कृत्वा तद्ग्रहणं विद्यया निवर्तनीयं स्यात्। तदेवं भेदग्रहणस्वीकारेऽन्यथाख्यातिप्रसङ्गः भेदग्रहणाभावे च विद्याया निवर्तनीयाभावप्रसङ्ग इत्युभयतः पाशारज्जुरख्याति-वादिनः स्यादिति।

शङ्कते — **अथासम्यग्ग्रहणमिति**। अयमर्थः — ननु असम्यग्ग्रहणमेवेहाविद्या, तच्च अपृथगात्मनः पृथक्प्रत्यवभासरूपम्, तदेव च विद्यया निवर्त्यमस्तीति न निवर्त्याभाव इति, तत्राह — अभ्युपेता तर्हि विपर्ययख्यातिः = अन्यथाख्यातिः = अपृथग् आत्मा पृथक् प्रकाशत इति। पुनः शङ्कते— **अथोच्येतेति**। अर्थाद्

**पृथक् प्रकाशते, किन्तु पृथगिव प्रकाशत इति। क इवार्थः? यदि यथा पृथग्भूतमप्रकाशमानैकत्वं प्रकाशते तथैकमप्यात्मतत्त्वमगृह्यमाणैकत्वं प्रकाशत इति। केनचिदंशेन ग्रहणं सर्वात्मना चाग्रहणमुक्तं भवति, तत्र चोक्तम्।**

**अथ प्रकाशत इव, न तु प्रकाशते। प्रकाशने क उपमार्थः? तन्निबन्धनव्यवहारप्रवृत्तिः। तन्निबन्धनश्चेद् व्यवहारः, प्राप्तं प्रकाशनम्—**

---

अपृथक् तत्त्वं पृथक् प्रकाशत इति न ब्रूमो येनान्यथाख्यातिः स्यात् किन्तु पृथगिव प्रकाशत इति मतमिति चेत् प्रश्नमुखेन तदपि निराकरोति—**क इवार्थ इति।** अयमत्र समाधानार्थः—इवशब्दार्थः सादृश्यम्। प्रकृते स भिन्नेन सहाभिन्नात्मनः कीदृशं सादृश्यम् 'इव'शब्दार्थः स्यात्। यदि यथा भिन्नं वस्तु अप्रकाशमानैकत्वं सत् प्रकाशते, तथाऽऽत्मतत्त्वमभिन्नमपि अप्रकाशमानैकत्वं प्रकाशते (तस्यैकत्वं न प्रकाशत इति यावत्) इतीदृशं सादृश्यं प्रकृते इवशब्दार्थस्तदा ईदृशं प्रकाशनं सर्वात्मनाऽप्रकाशनरूपमेवास्ति। यत एकत्वरहितस्यात्मनो ग्रहणात् केनचिदेवांशेनात्मा गृहीतो न सर्वात्मनेत्युक्तं स्यात्। तत्र च पूर्वं दत्तमेवोत्तरमिति तदेवानुसन्धेयमिति। तथा मते सर्वज्ञानानां मिथ्यात्वप्रसङ्ग इत्यभिप्रायः।

"पृथगिव प्रकाशते" इति अर्थगतमिवशब्दार्थं सादृश्यं दूषयित्वा "प्रकाशत इव" इति ज्ञानगत इवशब्दार्थः सादृश्यमिति पक्षमुत्थापयति दूषयितुम्—**अथेति।** दूषयति—प्रकाशने (ज्ञाने) क उपमार्थः? किं प्रकाशननिबन्धनस्य ज्ञाननिमित्तकस्य व्यवहारस्य प्रवृत्तिरिह इवशब्दार्थः सादृश्यम्? अर्थाद् यादृशी व्यवहारप्रवृत्तिः पृथक् प्रकाशने भवति तादृश्येवापृथक्स्वरूपेऽभिन्ने आत्मनि भवतीति। इमं कल्पं दूषयति—**तन्निबन्धनश्चेदिति।** अर्थाद् अपृथक्स्वरूपेऽप्यात्मनि पृथक्प्रकाशननिमित्तको व्यवहारः प्रवर्तते चेत् पृथक् प्रकाशनमेवात्मनः प्राप्तम्। यतो हि पृथक् प्रकाशनात्मके कारणेऽसति तन्निबन्धनं व्यवहारकार्यं नैव प्रवर्तितुमर्हतीति। तथा चापृथक्प्रकाशमानस्वरूपे आत्मनि पृथक् प्रकाशनमिति अन्यथाख्यातिरेवापतिताऽस्मिन् कल्पे।

**नासति कारणे कार्यं भवतीति। अथाभेदाग्रह एव पृथक्त्वग्रहाभिमानः। तदसत्। अग्रहणस्याभावस्य स्वरूपेण पररूपेण वा ग्रहणानभ्युपगमात्। अप्रकाशमाने च पृथक्त्वे कुतस्तदवग्रहः? अभिन्ने च भेदाभिमानं परित्यज्याभेदाग्रहणे भेदग्रहाभिमानमूरीकुर्वता किं परिहृतं स्यात्। तस्मात् सुष्ठूच्यते—"लयविक्षेपभेदश्च न स्यादग्रहमात्रके" इति।**

**नन्वनात्मरूपेण प्रतिपत्तेर्न दृश्यते किञ्चित् फलम्। तत्रादृष्टकल्पना स्यात्। आत्मरूपप्रतिपत्तेस्तु दृष्टं फलं तत्स्वरूपसिद्धिः। उच्यते— न**

---

द्वितीयकल्पमुत्थापयति— **अथाभेदाग्रह** इति। अर्थाद् आत्मनोऽभेदस्य एकत्वस्य = अपृथक्त्वस्य अग्रह एव पृथक्त्वग्रहस्याभिमान एव ज्ञानगतमिवार्थः सादृश्यमिति। एतदपि दूषयति— **तदसदिति**। अर्थाद् अभेदस्य अग्रहणं यदुच्यते तदग्रहणमपि अभावात्मकमेवास्ति, अतोऽभावभूतमग्रहणं स्वरूपेण पररूपेण वा ग्रहणात्मकमभ्युपगन्तुं न शक्यम्। अयमभिप्रायः— अभावं प्रमेयमनभ्युपगच्छतां तेषामभावो न स्वरूपेण पररूपेण वा कथमपि ग्राह्यः, अगृहीते च तस्मिन् कथं भेदग्रहणाभिमानो भवेत्? न चागृहीतायां शुक्तौ रजतग्रहाभिमानो भवति। तदुक्तं वृत्तौ— अप्रकाशमाने चापृथक्त्वे कुतस्तदवग्रहः? इति तदवग्रहः= भेदग्रहाभिमानः कथं भवेदित्यर्थः।

एवं हि गुरुमार्गावलम्बेऽपि नाख्यातिवादिनः कश्चिल्लाभः, प्रत्युतान्यथाख्यातेरेव शिरस्यापात इति सपरिहासमाह— **अभिन्ने चेत्यादि**। अयमर्थः— अभिन्ने ह्यात्मतत्त्वे प्रपञ्चात्मना भेदाभिमानरूपं विपरीतज्ञानमविद्या इति पक्षं परित्यज्य अभिन्नस्यात्मतत्त्वस्याभेदाग्रहे भेदग्रहाभिमानं स्वीकुर्वताऽपि विपरीतख्यातिरेवान्ततः स्वीकृतेति किं तेन परिहृतमिति। एतदभिप्रायिकीं पूर्वोक्तां कारिकां स्मारयति वृत्तौ— **"लयविक्षेपभेदश्च न स्यादग्रहमात्रके"** इति।

'नन्वरूपावभासे' इति कारिकां वृत्तौ व्याचष्टे— **नन्वनात्मरूपेणेति**। कारिकायाम् अरूपशब्दस्यार्थोऽनात्मरूप इति वृत्तौ कृतः। तथा च अनात्मरूपेण आत्मस्वरूपस्यावभासे दृष्टप्रयोजनाभावात्, तत्रादृष्टं फलं कल्पनीयं स्यात। प्रकृते

यस्य कस्यचिद् दर्शनाद् दृष्टार्थता, किन्तु पुरुषार्थसंस्पर्शिनः। तेन हि तद्विधिर्निराकाङ्क्षो भवति। न च पुरुषार्थभेदस्तत्त्वातत्त्वप्रतिपत्त्योः।

यथा हि विशुद्धमद्वैतमात्मानं प्रतिपद्यमानस्तथाभूतो न शोकेन संस्पृश्यते शोचनीयाभावात्। न कर्माशयमुपचिनोति कर्तव्याभावात्। न क्वचिद् रज्यति किञ्चिद् द्वेष्टि वा, विषयाभावात्। एवं जीवन्नेव विद्वान् विमुक्तो भवति। तथा अतथाभूतमपि तथाभावनापुरःसरं साक्षादिव प्रतिपद्यमानः। अभूतोऽप्यर्थः परिभावनातिशयाद् भूतव्यवहार-हेतुर्भवति।

---

तु ज्ञानविधिना विधीयमानाया आत्मस्वरूपप्रतिपत्तेर्दृष्टमेव फलम्, आत्मस्वरूप-सिद्धिरिति। अत "आत्मा ज्ञातव्यः" इति ज्ञानविधिरपि दृष्टार्थ एव स्यादिति नादृष्टफलकल्पनाप्रसङ्ग इति पूर्वपक्षः। पूर्वपक्षमिमं "न दृष्टमात्राद् दृष्टार्थम्" इति कारिकाव्याख्यया समाधत्ते – **न यस्य कस्यचिदिति**। अयमर्थः – न यस्य कस्यचिद् अपुरुषार्थस्यापि फलस्य दर्शनाद् ज्ञानस्य दृष्टार्थता भवति, किन्तु पुरुषार्थ-संस्पर्शिनः= पुरुषार्थानुकूलस्यैव फलस्य दर्शनाद् ज्ञानविधेर्दृष्टार्थता भवति। तेन हि = पुरुषार्थसंस्पर्शित्वेनैव ज्ञानविधेर्निराकाङ्क्षत्वं = चरितार्थत्वं भवति। अन्यथा तु साकाङ्क्ष एव = अपर्यवसितार्थ एव विधिः स्यादिति।

इह च ज्ञानविधिः अपहतपाप्मत्वादिकमात्मनः स्वरूपमिति कृत्वाऽव-भासयेद् अथवा नात्मनस्तत् स्वरूपमिति कृत्वाऽवभासयेत्, उभयथाऽपि ज्ञानविधिना अपहतपाप्मत्वादिना जायमानमात्मज्ञानं पुरुषार्थानुकूलमेव स्यात्, न प्रतिकूलम्। एतदभिप्रायेणोक्तं वृत्तौ – **न च पुरुषार्थभेदस्तत्त्वातत्त्वप्रतिपत्त्योरिति**। तत्त्वेन = आत्मस्वरूपत्वेन अपहतपाप्मत्वादिकं प्रतिपद्यताम् अनात्मरूपत्वेन वा तत् प्रतिपद्यताम् इत्युभयोः प्रतिपत्त्योः शोकादिनिवृत्तिरूपः पुरुषार्थो नैव भिद्यते। यथा रसायनौषधं पुष्टिकरत्वेन जानीयान्न वा जानीयात्, उभयथाऽपि भक्षितं सत् पुष्टिं करोत्येवेति तद्वत्। आत्मरूपस्यानात्मरूपस्य वा उभयथाऽपि अपहत-पाप्मत्वादेरवभासे पुरुषार्थफलत्वमविशिष्टमेवेति भावः।

**इदमेव चात्र युज्यते, प्रत्यक्षादीनामविरोधात् कर्मविधीनां च भूतार्थत्वात्। परमार्थे हि प्रपञ्चशून्यत्वे प्रत्यक्षादीनि प्रमाणानि बाध्येरन्। कर्मविधयश्चाभूतकल्पनोपादानव्यवहारसिद्धार्थगोचराः स्युः। तस्मादपरमार्थेनैवाद्वैतात्मज्ञानविधिर्युज्यते।**

---

तदेव फलाविशिष्टत्वं वृत्तौ प्रपञ्चयति – **यथा हीत्यादिना विमुक्तो भवतीत्यन्तेन** दृष्टान्तवचनेन। स्पष्टार्थम्। दार्ष्टान्तिकं स्पष्टयति – **तथेति**। अतथाभूतमपि = अनात्मस्वरूपमपि तथाभावनापुरस्सरम् = अपहतपाप्माऽऽत्मेति भावनापुरस्सरं साक्षादिव तथा प्रतिपद्यमानः पुमान् जीवन् विमुक्तो न शोकाद्यभिभूतो भवतीति शेषः। अर्थाद् अपहतपाप्मादौ अतत्त्वभूतेऽपि ज्ञानेन प्रकाशिते शोकादेः, कर्मणां रागादिक्लेशस्य च हानं भवेदित्याशयः।

ननु अविद्यमानमपहतपाप्मत्वादिकं कथं संसारबन्धनान्मोचयेत्? इत्याशङ्कायां लोकप्रसिद्धेश्चैवमभ्युपेयमित्याह – **अभूतोऽपीति**। अभूतोऽपि = असन्नपि भावनातिशयाद् भूतवद् यथार्थवद् व्यवहारहेतुर्भवति। अर्थात् सत्यपि भयशोकादिजनके तज्ज्ञानमन्तरेण भयाद्यनुत्पादो भवति, असत्यपि तस्मिन् ज्ञानमात्राद् भयाद्युत्पत्तिर्भवतीति लोके प्रसिद्धमेतदिति भावः।

ननु अपहतपाप्मत्वादेस्तत्त्वेऽतत्त्वे चोभयथा शोकादिनाशकत्वे कथमतत्त्व एव भवतामाग्रह इति जिज्ञासायामाह – **इदमेव चात्र युज्यत इति**। स्पष्टार्थः। "एतच्चात्र भवेद् युक्तम्" इति कारिकार्थव्याख्यानेनैवावगतार्थश्चेति न पुनरुच्यते। कर्मविधयश्चाभूतकल्पनोपादानव्यवहारसिद्धार्थगोचराः स्युरिति। अभूतकल्पनैव असत्कल्पनैव उपादानं यस्य व्यवहारस्य, तथाविधव्यवहारसिद्धार्थविषयका एव कर्मविधयो भविष्यन्तीत्यर्थः। निगमयति – **तस्मादिति**। "आत्मा द्रष्टव्यः" इत्यद्वैतात्मज्ञानविधिरपरमार्थविषयकत्वेनैव युज्यते, ब्रह्मात्मवस्तुनो विध्यविषयत्वादिति निष्कर्षः।

**जानातिस्तत्त्वबोधे चेन्न मिथ्यादिविशेषणात् ॥ १७१ ॥**
**नात्मा ज्ञातस्तथा स्याच्चेन्न तद्रूपाविधानतः।**
**प्रमाणान्तरसिद्धत्वे, नतरामन्यथा, यदि ॥ १७२ ॥**
**शब्दार्पितेन रूपेण तस्य ज्ञानं विधीयते।**
**अतत्त्वेनापि तेनास्य विज्ञानमवकल्पते ॥ १७३ ॥**

---

ननु "ज्ञा अवबोधने" इत्यनुशासनाद् यथार्थमेवापहतपाप्मादिरूपमात्मनो विधीयमानज्ञानविषयो न समारोपितमिति शङ्कते—**जानातिस्तत्त्वबोधे चेदिति**। परिहरति— **न, मिथ्यादिविशेषणादिति**। मैवम्, विधीयमानं ज्ञानं यदि तत्त्वावबोधरूपमेव स्यात् तदा मिथ्याज्ञानं संशयज्ञानमिति विशेषणे विरोधः स्यात्, सम्यग् ज्ञानमिति च विशेषणविशेष्ययोः पौनरुक्त्यं प्रसज्येतेत्यर्थः। पुनः शङ्कते— **नात्मा ज्ञातस्तथेति**। तथा = समारोपितरूपेण अपहतपाप्मन आत्मनो ज्ञाने आत्मा नैव ज्ञातः स्यात्, यतो वस्तुभूतेनैवात्मरूपेण प्रतीत आत्मा ज्ञातो भवति। अतस्तत्त्वेनैव ज्ञानं विधिविषयो नारोपितरूपेण इति शङ्कार्थः। समाधत्ते — **नेति**। तद्रूपाविधानत इति। उक्तकथनं न युक्तमित्यर्थः। तत्र हेतुमाह— **तद्रूपाविधानत इति**। "आत्मा ज्ञातव्यः" इति वाक्येन तत्त्वभूतस्य आत्मरूपस्य अपहतपाप्मादेः अविधानतः = विधातुमशक्यत्वाद् इत्यर्थः। तस्य विधातुमशक्यत्वे हेतुमाह — **प्रमाणान्तरसिद्धत्व** इति कारिकया। अयमर्थः — यदि तद्रूपं प्रमाणान्तरसिद्धं तदा सिद्धमेव तदिति व्यर्थोऽयं विधिरनुवादमात्रं स्यात्। अन्यथा = प्रमाणान्तरासिद्धं चेत्, तदा नतराम् = नैव तद् विधातुं शक्यमित्यर्थः।

पुनः शङ्कते — **शब्दार्पितेन रूपेणेति**। अयमाशयः — प्रमाणान्तरासिद्धत्वेऽपि —"अपहतपाप्मा विजरो विमृत्युः" इत्यादिशब्दसमर्पितेन रूपेण तस्यात्मनो ज्ञानं विधीयते "आत्मा ज्ञातव्यः" इति विधिवाक्येनेति। तद्दूषयति— **अतत्त्वेनापीति** कारिकाभागेन। अतत्त्वेनापि = समारोपितेनापि तेन = अपहपाप्मादिरूपेण अस्यात्मनो ज्ञानम् "वाचं धेनुमुपासीत" इतिवद् अवकल्पते।

**यदि मतम्– "स विजिज्ञासितव्यः" (छा० ८।७।१) इति जानातिस्तत्त्वपरिच्छेद एव वर्तते। तेन नाभूतसमारोपेण ज्ञानविधिः स्यादिति। तन्न, मिथ्यात्वादिभिर्ज्ञानं विशेष्यते– मिथ्याज्ञानं सम्यग्ज्ञानं संशयज्ञानमिति। तदेकनियमे नोपपद्येत, पौनरुक्त्याद् विरोधाच्च।**

**स्यादेतत्– अस्वरूपेण प्रतिपत्तौ न तदात्मज्ञानम्, अन्यज्ञानमेव भवति। तत्त्वज्ञानं च विधीयते। तस्मात् तत्त्वसिद्धिरिति। तच्च न, न खल्वेतावदेव तत् – "आत्मा ज्ञातव्यः" इति। यदि स्यात् तद्रूपज्ञानविधिः, तच्च न, उभयथाऽनुपपत्तेः । प्रमाणान्तरसिद्धं चेदात्मरूपं न तज्ज्ञानं विधेयम्। अथासिद्धम्, अशक्यमेव तत्।**

---

तथा च न तेन विधिना अपहतपाप्मादेरात्मरूपस्य तात्त्विकत्वं सिद्ध्येदिति कारिकार्थसंक्षेपः।

जानातीत्यादिकारिकार्थं स्वयं स्फुटीकरोति ग्रन्थकृत्– **'यदि मतम्'** इत्यादिवृत्तौ। पूर्वपक्षवृत्तौ 'नाभूतसमारोपेण' इत्यस्यार्थः – नातत्त्वसमारोपेणेति। पूर्वपक्षवृत्तिरियं स्पष्टार्था कारिकाव्याख्यानेन गतार्था च। निराकरोति– **तन्नेति**। अत्रत्योत्तरपक्षार्थः स्पष्टः, "न, मिथ्यादिविशेषणात्" इति कारिकांशविवरणेन गतार्थश्च। वृत्तौ तदेकनियमे इत्यस्य 'ज्ञा' धातुस्तत्त्वबोध एवार्थे नियत इति स्वीकार इत्यर्थः।

"नात्मा ज्ञातस्तथा स्याच्चेत्" इति पूर्वपक्षकारिकां व्याचष्टे– **स्यादेतदिति**। अयमर्थः – ज्ञानविधिना आत्मनस्तत्त्वज्ञानं विहितम्। तेन यदि आत्मनः अस्वरूपेण प्रतिपत्तिः क्रियेत तदा तज्ज्ञानमात्मतत्त्वज्ञानं न भवति। अतो ज्ञानविधिनैव आत्मनस्तत्त्वं प्रतिपद्यत इति पूर्वपक्षः। तन्निषेधति – **तच्च नेत्यादिना**। इयं हि उत्तरपक्षवृत्तिः **"न, तद्रूपाविधानतः। प्रमाणान्तरसिद्धत्वे, नतरामन्यथा"** इति कारिकांशव्याख्यानरूपा बोध्या। तच्च नेति निषेधार्थं विवृणोति– **न खल्वेतावदेव तदिति**। तत् = आत्मनः स्वरूपम् एतावदेव न खलु– यत् "आत्मा

**स्यादेतत्– "अपहतपाप्मा विजरो विमृत्युः (छा०८।७।१), "इदं सर्वं यदयमात्मा" (बृ०२।४।५) इति शब्दसमर्पितरूपस्य तस्य ज्ञानं विधीयते। तेन च तत्त्वेनापि तत् सम्भवति समारोपितेनापि । तेन न नियोगतस्तथाभूतज्ञानविधेस्तथाभावोऽस्य प्रतीयते।**

---

ज्ञातव्यः" इति ज्ञानविधिना निर्दिष्टम्। तत्र हि आत्मनो ज्ञानमात्रं विहितिम्, न तु आत्मनः कीदृशं स्वरूपं ज्ञेयमिति विधानं कृतम्। एतदेवाभिप्रेत्योक्तं मूले– **तद्रूपाविधानत इति**। न हि तेन विधिना आत्मनोऽपहतपाप्मादिरूपं विधीयते विधातुं वा शक्यत इत्यर्थः। तत्र हेतुमाह– प्रमाणान्तरसिद्धत्वे, नतरामन्यथा इति। अयं भावः– प्रमाणान्तरसिद्धमात्मस्वरूपं यदि ज्ञानविधिः प्रत्याययति, तदा प्रमाणान्तरादेव तत्प्रत्ययाद् ज्ञानविधिरनर्थकोऽनुवादमात्रमित्यर्थः । अन्यथा = प्रमाणान्तरासिद्धत्वे तु ज्ञानविधिनाऽऽत्मस्वरूपं नैव विधातुं शक्यते, तस्मिन्. विधिवाक्ये आत्मनः स्वरूपानिर्देशादिति भावः। तस्मात् सुष्ठूक्तम्– **तद्रूपाविधानत इति**। एतदेवोपपादितं वृत्तौ– **यदि स्यादित्यादिना**।

अयमर्थः– आत्मस्वरूपानिर्देशेऽपि यदि तद्रूपज्ञानविधिः स्यादित्याग्रहस्तत्राह– **तच्च नेति**। तत्र हेतुमाह – **उभयथाऽनुपपत्तेरिति**। अनुपपत्तिमेव विवृणोति– **प्रमाणान्तरसिद्धं चेदिति**। न तज्ज्ञानं विधेयम्, तत्रत्यविधेरनुवादमात्रत्वात्। अथ न सिद्धम्, अशक्यमेव तद्विधानमिति समाधानाभिप्रायः।

शब्दार्पितेन रूपेणेति कारिकार्थं विवृणोति – **स्यादेतदिति**। एतद्वृत्तिग्रन्थार्थः स्पष्टः कारिकाव्याख्यानेनैव व्याख्यातश्चेति न पुनरावर्त्यते। वृत्तौ नियोगत इत्यस्य नियमत इत्यर्थः। तथाभूतज्ञानविधेः = "आत्मा ज्ञातव्यः" इति ज्ञानविधेः अस्य = आत्मनस्तथाभावः = अपहतपाप्मादिभावः प्रतीयत इत्यर्थः ।

**ज्ञानं यदि च दृष्टार्थं प्राप्तं दृष्टत एव तत्।**
**आत्मरूपविजिज्ञासोरजिज्ञासोर्वृथैव तत् ॥ १७४ ॥**
**तदुपायो न चेज्ज्ञातस्तस्यैवास्तु विधिस्ततः।**
**अवघातादिविधयो नादृष्टस्पर्शवर्जिताः ॥ १७५ ॥**
**अलौकिकमिदं ज्ञानमतो यदि विधीयते।**
**न रूपसिद्धये तावद् यतः कर्तव्यता विधेः॥ १७६ ॥**

---

किञ्चाद्वयात्मकप्रकाशलक्षणं ज्ञानं यदि दृष्टार्थं तदा व्यर्थो विधिरित्याह – **ज्ञानं यदि चेति**। व्यर्थत्वे हेतुमाह – **प्राप्तं दृष्टत एव तद् इति**। यतो दृष्टतः= दृष्टफलादेव निमित्तात् तज्ज्ञानं कर्तव्यतया प्राप्तमतो व्यर्थो ज्ञानविधिरित्यर्थः। दृष्टफलेच्छयैव प्रवृत्तिसिद्धे विधिर्व्यर्थ इति यावत् । ननु य आत्मस्वरूपं जिज्ञासुरस्ति स कामं दृष्टफलेच्छया स्वयमेव ज्ञाने प्रवर्तेत, तथापि जिज्ञासोः प्रवृत्तिसिद्धये ज्ञानविधिरपेक्षित एवेति शङ्कानिरासायाह– **अजिज्ञासोर्वृथैव तद् इति**। अर्थात् तादृशजनस्य कृते विधीयमानमपि ज्ञानं व्यर्थमेव, यतो विधिशतेनापि तस्य तत्र प्रवृत्तेरिति ।

यद्युच्यते – ज्ञानस्य दृष्टफलार्थत्वेऽपि ज्ञानोपायाज्ञानाद् न स्वयं प्रवर्तते, अतो ज्ञानविधिरिति, तत्राह – तदुपायो न चेद् ज्ञातस्तस्यैवास्तु विधिस्तत इति । अर्थाद् यत उपायज्ञानाभावाद् न प्रवर्तते, ततः = तस्मात् कारणात् स उपाय एव विधीयताम्, यस्मिन्नुपायेऽयमज्ञानान्न प्रवृत्त इति ।

ननु यथा दृष्टफलेऽप्यवघातादौ विधिर्दृष्टः "व्रीहीन् अवहन्ति" इत्यादिः, एवमत्र ज्ञानेऽपि दृष्टफले विधिरस्तु इति, तत्राह – **अवघातादिविधयो नादृष्टस्पर्श-वर्जिता इति**। नखविदलनादिनापि तण्डुलनिष्पत्तेरवघातस्यादृष्टार्थमेव विधानमिति सिद्धान्तस्वीकारात् । ज्ञानन्तु दृष्टफलकमेवास्तीति तत्र विधिर्व्यर्थ एवेति भावः ।

कर्तव्यता च दृष्टार्थे दृष्टादेव प्रसिद्ध्यति।
अलौकिकेऽर्थरूपेऽतः शब्देन प्रतिपादिते॥ १७७॥
ज्ञाने ज्ञेयाभ्युपायत्वात् स्वयमेवोन्मुखः पुमान्।
तदुपाये त्वविज्ञाते विधिना स प्रवर्त्यताम्॥ १७८॥
नियोगानुप्रवेशोऽतो विहन्त्येव प्रमाणताम्।
भूतार्थ इति नोपास्यो भूतार्थगतिमिच्छता॥ १७९॥

---

ननु दृष्टफलत्वेऽपि आत्मज्ञानमलौकिकमिति हेतोस्तद् विधेयमिति शङ्कते – **अलौकिकमिदमिति**। समाधत्ते – **न रूपसिद्धये इति**। अर्थाद् ज्ञानविधानं ज्ञानस्वरूपसिद्धये स्यात्, अनुष्ठानार्थं वा ? प्रथमं निषेधति – न तावद् ज्ञानस्वरूपसिद्धये विधिः, किन्तु अनुष्ठानार्थमेव। यतो विधेः कर्तव्यता एव सिद्ध्यति। दृष्टार्थे= दृष्टफले कर्मणि कर्तव्यता च दृष्टात् फलादेव स्वयं सिद्ध्यति, न तु विधिबलादित्याह – **कर्तव्यता च दृष्टार्थे दृष्टादेव प्रसिद्ध्यतीति**। अतो विधिर्नानुष्ठानार्थमप्यपेक्षणीयः।

उक्तमेवार्थं विशदयन्नुपसंहरति – **अलौकिक इति**। अत आत्मस्वरूपे अलौकिके वस्तुनि "अपहतपाप्मा" इत्यादिशब्देन प्रतिपादिते सति ज्ञेयोपाय-भूते ज्ञाने पुमान् स्वयमेव उन्मुखो भवति प्रवर्तते, अतो ज्ञाने प्रवृत्तये विधिर्नापेक्षणीय इति। यथा विलक्षणवस्तुनि कस्यापि जनस्य शब्दाद् ज्ञाते सति औत्सुक्यात् तत्साक्षात्करणाय स्वयं लोकः प्रवर्तते, तद्वद् ब्रह्मणि निरतिशयसुखे शास्त्रादवगते सति तत्साक्षात्करणफलके ज्ञाने स्वयमेव प्रवर्तते, किं विधिनेत्याशयः।

ननु ज्ञान इव श्रवणादावपि विधिर्निराकृतः स्यादिति शङ्कायामुत्तरमाह– **तदुपाये त्विति**। अर्थात् तदुपाये = ज्ञानोपाये श्रवणमननादौ अविज्ञाते तु "श्रोतव्यो मन्तव्यः" इति विधिना लोकः प्रवर्त्यताम्, नात्र वेदान्तानां विरोध इत्यर्थः।

**यदि च ज्ञानस्य दृष्टं फलम्, तत एव प्रवृत्तिसिद्धेर्व्यर्थो विधिः। यो ह्यात्मरूपमनुभवितुकामः, स तस्य ज्ञाने स्वयमेव यतते। यस्तु न तथा, तस्य तद्व्यर्थमिति विधिशतेनापि स न प्रवर्त्यते। अथोपायाज्ञानाद् दृष्टफलेऽपि न प्रवर्तते स्वयम्, अतो विधीयत इति। तच्च वार्तम्। यतः स एवोपायो विधीयताम्, यत्रायमज्ञानान्न प्रवृत्तः। ज्ञाने तु दृष्टफलत्वात् प्रवर्तत एव।**

**स्यादेतत् – अवघातादिषु दृष्टफलेष्वपि दृष्टो विधिः। सत्यम्। न त्वदृष्टसंस्पर्शरहितः। तत्रापि हि नियमादृष्टं फलं तण्डुलेषु तत्प्रणाल्या वा प्रधानापूर्वसिद्धिरदृष्टैव।**

---

यतो वेदान्तेषु नियोगानुप्रवेशः = विध्यनुप्रवेशस्तेषां प्रमाणतामेव विहन्ति, इति = अत एव हेतोर्भूतार्थति गतिमिच्छता = भूतस्य अपहतपाप्मादेरर्थस्य ब्रह्मात्मनो गतिं तत्स्वरूपताप्राप्तिमिच्छता पुंसा भूतार्थे = सिद्धार्थे ब्रह्मवस्तुनि विध्यनुप्रवेशो नोपास्यो नाश्रयणीय इति कारिकार्थसंक्षेपः।

"ज्ञानं यदि च दृष्टार्थम्" इति कारिकां व्याचष्टे वृत्तौ – **यदि च ज्ञानस्येति**। आत्मरूपविजिज्ञासोरित्यंस्य विवरणम् – **यो ह्यात्मरूपमनुभवितुकाम इति**। "अजिज्ञासोर्वृथैव तत्" इति कारिकांशं विवृणोति – **यस्तु न तथेति**। स्पष्टार्था इमे वृत्तिग्रन्थाः पूर्वोक्तकारिकाव्याख्ययाऽवगतार्थाश्चेति। तदुपायो न चेज्ज्ञात इति कारिकोक्ते शङ्कोत्तरे विवृणोति– **अथोपायाज्ञानादिति**। तच्च वार्तम् = तच्च वाङ्मात्रं न तात्त्विकमित्यर्थः। वाङ्मात्रत्वमुपपादयति– **यत इत्यादिना**। उपाय एव विधिर्भवतु, ज्ञाने तु दृष्टफलत्वात् स्वयमेव प्रवर्तत इति। ज्ञाने विधिर्नापेक्षित इत्यर्थः।

"अवघातादिविधयो नादृष्टस्पर्शवर्जिताः" इति कारिकां विवरीतुकामः आशङ्कते – **स्यादेतदिति**। अवघातादिषु तण्डुलनिष्पत्तिरूपदृष्टफलेष्वपि यथा "व्रीहीनवहन्तीति" विधिर्दृश्यते, तथा दृष्टफलके ज्ञानेऽपि विधिरस्तु इति

**अथ मतम् – अद्वैतात्मज्ञानमदृष्टपूर्वमलौकिकम्, अतोऽनन्तरफलमपि विधीयत इति। तत्रोच्यते– किमर्थं विधीयते? प्रमाणान्तरागोचरस्य स्वरूपप्रतिपत्त्यर्थम्, आहोस्विदनुष्ठानार्थम्? तत्र न स्वरूपसिद्ध्यर्थम्, अनुष्ठानफलो हि विधिर्नानुष्ठानाय, दृष्टार्थत्वादेव तत्सिद्धेः। तस्मादलौकिकेऽपहतपाप्मादिरूप आत्मतत्त्वे शब्दात् प्रतिपन्ने तस्य साक्षाज्ज्ञानं प्रति तदनुभवोपायत्वात् स्वयमेव पुरुषस्याभिमुख्यं भवतीति व्यर्थं तद्विधानम्। यथाऽऽश्चर्यभूते कस्मिंश्चिदर्थे आगमात् प्रतिपन्ने तस्य साक्षात्करणे स्वयमेवोन्मुखत्वं भवति। तदुपायेषु त्वज्ञातेषूपायत्वज्ञापनाय विधानं युज्यते।**

---

शङ्कार्थः। उत्तरयति– **सत्यमिति**। तण्डुलनिष्पत्तिरूपदृष्टफलेन सहैव अदृष्टमपि फलमस्ति। अदृष्टफलमेवोपपादयति– **तत्रापि हीति**। नियमादृष्टं = नियमजन्यम्, अघातेनैव तण्डुला निष्पादनीया न तु नखविदलनादिनेति नियमकृतमित्यर्थः। तेनावघातेन तण्डुलेष्वदृष्टं संस्कारफलं जन्यते। अथवा तद्द्वारा प्रधानापूर्वसिद्धिरदृष्टैवास्तीति नावघातादौ केवलं दृष्टमेव फलमस्तीति अवघातादौ विधिरावश्यक एव। ज्ञाने तु नादृष्टं किमपि फलमस्तीति दृष्टफलत्वात् स्वत एव प्रवृत्तेर्व्यर्थ एव विधिरिति तात्पर्यम्।

अलौकिकमिदं ज्ञानमिति कारिकां विवृणोति– **अथ मतमिति**। दृष्टफलके लौकिके ज्ञाने लोकः कामं स्वयं प्रवर्तताम्, अद्वैतात्मज्ञानन्तु अदृष्टपूर्वमलौकिकं ज्ञानमस्ति, अतः अनन्तरफलमपि = दृष्टफलकमपि तद् विधीयते। विधानाभावे अलौकिकेऽद्वैतात्मज्ञाने स्वतः प्रवृत्त्यसम्भवादिति शङ्कायामुत्तरमाह – **तत्रोच्यत इति**। सिद्धान्ती पृच्छति –"किमर्थं ज्ञानं विधीयते? स्वरूपसिद्ध्यर्थमनुष्ठानार्थं वा"? इति। तत्र न तावत् आत्मस्वरूपसिद्ध्यर्थम्, यतो न आत्मप्रतिपत्तिमात्रफलो विधिर्भवति, किन्तु अनुष्ठानमेव विधेः फलं भवति। अतोऽनुष्ठानार्थं विधिरिति द्वितीयपक्षोऽवशिष्यते। किन्तु तदपि न सम्भवतीत्याह – **नानुष्ठानायेति**। तत्र हेतुमाह – **दृष्टार्थत्वादेवेति**। अनुष्ठानं हि ज्ञानस्य दृष्टं फलमतो भोजनादिवत् तदर्थं स्वत एव ज्ञाने प्रवृत्तिसिद्धेः किं विधिनेति भावः।

**तदेवं ज्ञाने नियोगानुपपत्तेर्नियोगे च वस्तुरूपावगमे प्रामाण्यायोगाद् व्यवस्थितात्मतत्त्वप्रतिपत्तिमिच्छता शब्दान्न तस्य नियोगानुप्रवेशोऽभ्युपगन्तव्य इति।**

**इदानीं द्वितीयप्रतिपत्तिविधिनिरासायाह –**

**अत एव न विज्ञानसन्तानविधिनिष्ठता।**
**तत्रापि पूर्ववन्न स्यात् स्वरूपावगतिप्रमा॥ १८०॥**

---

एतदेव प्रपञ्चति– **तस्मादलौकिके** इत्यादिना वाक्यसन्दर्भेण। स्फुटार्थ इति न व्याख्यायते। क्व नाम तर्हि विधिर्युज्यत इत्याह – **तदुपायेष्विति**। तदुपायेषु = ज्ञानोपायेषु अज्ञातेषु श्रवणादिषु विधिर्युज्यते। यतो विधिं विना श्रवणादिषु ज्ञानोपायत्वमेव न प्रतीयेतेति युक्तं श्रवणादिविधानमिति भावः। एतेन प्रघट्टकेन "अलौकिकमिद" मित्यारभ्य "तदुपाये त्वविज्ञाते विधिना स प्रवर्त्यताम्" इत्यन्ताः कारिका व्याख्याता इति बोध्यम्।

"नियोगानुप्रवेशोऽतः" इति कारिकां विवृण्वन्नुपसंहरति– **तदेवमिति**। अतः (अपहतपाप्मादिवचसां ज्ञान-) नियोगानुप्रवेशो भूतार्थे (तेषां वचनानां) प्रमाणतामेव विहन्ति (स्वार्थेऽतात्पर्येणातत्परत्वात्) इति (इति हेतोः) भूतार्थस्य (व्यवस्थितात्मतत्त्वस्य) गति(प्रतिपत्ति)मिच्छता तस्य नियोगानुप्रवेशः (नियोगाङ्गत्वम्) नोपास्यः = मनसाऽपि न चिन्तनीय इति तात्पर्यमवधेयम् इति।

अत एव न विज्ञानेत्यादिकारिकामवतारयति वृत्तिकारः – **इदानीमिति**। "आत्मा प्रतिपत्तव्यः" इति विधौ तिस्रः प्रतिपत्तयः पूर्वं निर्दिष्टाः। तासु प्रथमा शाब्दी प्रतिपत्तिः, तृतीया अद्वयात्मप्रकाशरूपा च विधातुं न शक्यत इत्युक्तं पूर्वम्। इदानीम् उपासनारूपा द्वितीयाऽपि प्रतिपत्तिर्नोपपद्यत इति तां निरसितुं कारिकां पठति–**अत एवेति**। उपासानाविधिनिष्ठत्वे वेदान्तवाक्यानां स्वार्थपरत्वाभावाद् अप्रमाणत्वप्रसङ्गादेवेत्यर्थः। तस्माद् विज्ञानसन्तानो विज्ञानप्रवाहः= उपासना, तद्विधिनिष्ठता वेदान्तवाक्यानां न सम्भवति। प्रयोजनार्थं वा ? अत एवेत्यनेनोक्तं

**स्वरूपनिष्ठाच्छब्दात्तु प्रमितस्य वचोऽन्तरात्।**
**उपासनविधानं स्यात् प्राप्तेस्तदपि वा वृथा ॥१८१॥**
**अभ्यासेन प्रत्ययस्य प्रकर्षस्याभिवीक्षणात्।**
**तस्माद् भवत्यकार्येऽर्थे वेदान्तानां प्रमाणता ॥१८२॥**

**यदपि मतम्—"स क्रतुं कुर्वीत" ( छा० ३।१४।१) "प्रज्ञां कुर्वीत" (बृ०४।४।२१) "निदिध्यासितव्यः" (बृ०२।४।५) इति, यत्रापि स्वरूप-**

---

हेतुं प्रपञ्चयति – **तत्रापि पूर्ववदिति**। अर्थाद् यथा तृतीयप्रतिपत्ति-विधिरपरत्वे वेदान्तवाक्यानां स्वार्थे तात्पर्याभावाद् न स्वरूपावगतौ प्रमाणत्वं तथोपासनाविधिनिष्ठत्वेऽपि अपहतपाप्मादिवाक्येभ्य आत्मस्वरूपावगतिरूपा प्रमा न स्यादित्यर्थः।

तर्हि किमुपासनविधिर्नास्त्येव? तत्राह – **स्वरूपनिष्ठादिति**। अर्थाद् अपहतपाप्मादिवाक्यम् आत्मस्वरूपनिष्ठमेव = आत्मस्वरूपप्रतिपत्तिपरमेवास्ति। अतस्तस्माद् वाक्यात् प्रमितस्य = विज्ञातस्यात्मनः वचोऽन्तरात् = "निदिध्यासितव्यः" इत्याद्यन्यवाक्याद् उपासनं तावद् विहितं स्यादिति नात्र मम विरोधः। मतान्तरेणाह– **प्राप्तेस्तदपि वा वृथेति**। अथवा उपासनस्य दृष्टमेव फलं स्वरूपाविर्भावमात्रम्। अतो दृष्टफलत्वे भोजनादिवत् स्वत एवोपासनस्य प्राप्तत्वाद् वृथैवोपासनविधिरित्यर्थः। वैयर्थ्यमेव स्पष्टयति– **अभ्यासेनेति**। अभ्यासेन= ज्ञानाभ्यासेन प्रत्ययस्य = ज्ञानस्य प्रकर्षो वीक्ष्यते लोके। अतो अभ्यासात्मकेन उपासनेन अपहतप्राप्मादिकमात्मस्वरूपं साक्षादिवानुभूयते। तथा हि – अयथार्थमपि वस्तु सततभावनया साक्षादनुभवमापद्यते, किं पुनर्यथार्थवस्तुनो ध्यानाभ्यासेन साक्षादनुभवः स्यादिति कारिकार्थसंक्षेपः।

शाब्दज्ञानाभ्यासस्य विधेयत्वे मूलमुपन्यस्यति पूर्वपक्षी– **यदपीत्यादिना**। "स क्रतुं कुर्वीत, प्रज्ञां कुर्वीत निदिध्यासितव्यः" इत्याद्याः श्रुतयो ज्ञानाभ्यासस्य विधेयत्वे स्पष्टं प्रमाणं सन्ति। ननु "तत्त्वमसि" इत्यादि प्रधानवेदान्तवाक्येषु

**निष्ठतैव लक्ष्यते "तत्त्वमसि" (छा० ६।८।७) इति, तत्रापि 'तदस्मि' इति चेतो धारयेद् इति विवक्षितत्वात् श्रवणादन्यदनुचिन्तनं ध्यानं प्रत्ययप्रवाहो विधीयते कर्मवदेवामृतत्वफलम्।**

**तदप्यत एव न युज्यते, पूर्वोक्तात् तत्त्वावगतिप्रमाणाभावप्रसङ्गादन्यनिष्ठत्वाद् वाक्यस्य। अथ तु वाक्यान्तरात् तत्त्वनिष्ठादधिगते तद्विषयकप्रत्ययप्रवाहविधानमिष्यते, भवतु, न कश्चिद् दोषः। तथा च "विज्ञाय प्रज्ञां कुर्वीत" (बृ०४।४।२१) इत्यात्मतत्त्वविज्ञानस्य सिद्धतां दर्शयति। तदपि वा व्यर्थमेव, प्राप्तार्थत्वात्। साक्षात्करणफलं हि तत्तदनुचिन्तनं दृष्टार्थम्, न ततोऽन्यत् फलमाकाङ्क्षते। अमृतत्वं हि न स्वरूपाविर्भावादन्यदिति प्रागुवर्णितम्। दृष्टा च ज्ञानाभ्यासस्य सम्यग्ज्ञानप्रसादहेतुता लोके। भावनाविशेषाद्धि अभूतमप्यनुभवमापद्यते, किं पुनर्भूतम्।**

---

विधानं न श्रूयत इति चेत्, तत्राह– **यत्रापीति**। "तत्त्वमसि" इत्याचार्यवचनं जीवब्रह्मणोरभेदपरम्। "सदस्मि" इति शिष्याभिप्रायेण वचनम्। अर्थाद् आचार्येण तथा उक्ते शिष्यः "सदस्मि" इति चेतो धारयेत्। अत्र "क्रतुं कुर्वीत" इति कीदृशं ध्यानं विहितमित्याह– **श्रवणादन्यदिति**। श्रवणात् = वेदान्तवाक्यार्थज्ञानात् अन्यद् अनुचिन्तनं ध्यानं प्रत्ययप्रवाहरूपं विधीयते। इदं ध्यानं अग्निहोत्रादिकर्मवदेवामृतत्वफलमुच्यते। अर्थाद् यथाऽग्निहोत्रादिकर्मणः स्वर्गादिफलं तथा ध्यानस्यामृतत्वं फलमित्यर्थः।

अयमपि मतविशेषो न युज्यत इति तन्निरस्यति– **तदपीति**। पूर्वमुक्तम्– "अपहतपाप्मादि"वाक्यस्य विधिपरत्वे आत्मस्वरूपावबोधे तात्पर्याभावात् तत्त्वावगतौ प्रमाणाभावप्रसङ्गात्, अन्यनिष्ठत्वात् = ध्यानविधिपरत्वात्तस्य वाक्यस्य स्वार्थेऽप्रमाणत्वादिति भावः।

**अथ त्विति**। यदि तु तत्त्वनिष्ठात् "अपहतपाप्मादि"वाक्यान्तराद् आत्मस्वरूपमधिगत्य पश्चाद् आत्मतत्त्वविषयकज्ञानप्रवाहरूपस्य ध्यानस्य

**"स क्रतुं कुर्वीत" (छा० ३।१४।१) इति तु न सकलविशेषातिगात्मतत्त्वानुचिन्तनं विधीयते तद्भावफलम्, अपि तु नामरूपोपाधिमनोमयप्राणशरीरादिरूपानुध्यानमैश्वर्यफलम्, क्रमेण वा साक्षात्करणफलम्।**

**"तमेव धीरो विज्ञाय" (बृ० ४।४।२१) इति न प्रज्ञाकरणविधिः, "तमेव" इत्यन्यनिवृत्तेः श्रुतत्वाद् निवृत्तौ तात्पर्यं गम्यते, 'रक्तः पटो**

---

विधानम् "आत्मा प्रतिपत्तव्यः" इति वाक्याद् भवतीति मन्यते, तदा तथा भवतु, ममापि तत्र न कश्चिद्दोषः। अत एव "विज्ञाय प्रज्ञां कुर्वीत" इति वाक्यम् आत्मतत्त्वज्ञानस्य ध्यानात् पूर्वं सिद्धत्वं दर्शयति।

अथवा वाक्यान्तरादात्मतत्त्वाधिगमादनन्तरमपि ध्यानविधानं व्यर्थमित्याह – **तदपि वा व्यर्थमेवेति**। एतदारभ्य "किं पुनर्भूतम्" इत्यन्तो वृत्तिग्रन्थो "प्राप्तेस्तदपि वा वृथा" इति श्लोकभागव्याख्यानेनैव गतार्थः स्पष्टार्थश्चेति न पुनरस्यार्थ उच्यते।

ननु ध्यानस्यापि विधानवैयर्थ्ये "स क्रतुं कुर्वीत" इत्युपासनाविधायकश्रुतीनां का गतिरित्यत उच्यते– **"स क्रतुं कुर्वीत" इति त्वित्यादि**। वृत्तौ "तद्भावफलम्" इत्यस्य स्वरूपाविर्भावफलमित्यर्थः। अग्रे "साक्षात्करणफलम्" इत्यस्यापि स्वरूपाविर्भावफलमित्येवार्थः।अयं भावः–"स क्रतुं कुर्वीत" इतीयं श्रुतिस्तावत् सकलविशेषनिर्मुक्तस्य निरुपाध्यात्मतत्त्वस्योपासनं निर्विशेषब्रह्मीभावफलकं न विधत्ते, किन्तु "मनोमयः प्राणशरीरो भारूपः" इति श्रुतिप्रसङ्गे मनोमयादिविशेषोपाधिकस्य सोपाध्यात्मन एव ध्यानम् ऐश्वर्यफलकमाह। अथवा ऐश्वर्यसुखमनुभूय क्रमेण निर्विशेषब्रह्मीभावफलमाह, न तु साक्षान्मुक्तिफलमित्यर्थः। अतो न तत्रोपासनश्रुतौ "अपहतपाप्मादि" श्रुतीनामन्वयो घटत इति।

"तमेव धीरो विज्ञाय" इति श्रुतिरपि न प्रज्ञाकरणरूपोपासनविधिपरा इत्युपपादयति– **तमेव धीर इति**। उपपत्तिमाह – "तमेव" इति तत्पदार्थसङ्गतैवकारेण तदन्यनिवृत्तेरेव श्रुतत्वात् तदन्यनिवृत्तावेव श्रुतेस्तात्पर्यमवगम्यते न प्रज्ञाकरणविधाविति भावः। न ह्यत्र एवकारः "विज्ञाय" इत्यनेन सम्बध्यते

**भवति' इति यथा रक्तपरत्वं वाक्यस्य। अत्र ह्याकाशादितत्त्वभेद-पूर्वमविभागः प्रतिपादितः, तत्र तथैव प्रज्ञाकरणप्रसङ्गे 'तमेव' इति विधीयते। तथा च पूर्वार्धे— "विरजः पर आकाशादज आत्मा महान् ध्रुवः"। (बृ०४।४।२०) इत्याकाशादिभ्यः परत्वेनात्मतत्त्वं दर्शितम्। तस्य तथैव प्रज्ञाकरणप्रसङ्गे तन्निवृत्तये 'तमेव' इत्युच्यते। अन्यथा न एवशब्दस्य फलम्, न च निवर्त्यं विज्ञायेत। तथा च तदेवोत्तरेण प्रपञ्च्यते—**

---

येन "तं विज्ञायैव" इति श्रुत्या प्रतिपादितं स्यात् प्रज्ञाकरणं च विहितं स्यादिति। तस्मादत्र प्रज्ञाकरणविधौ नोक्तश्रुतेस्तात्पर्यम्। अत्र लौकिकदृष्टान्तमाह— **"रक्तः पटो भवति"** इति। अत्र न रक्तस्य पटभावे वाक्यतात्पर्यं किन्तु पटस्य रक्तभावे। तद्वदिह श्रुतावपि अन्यनिवृत्तावेव श्रुतेस्तात्पर्यं न तु प्रज्ञाकरण इति भावः।

ननु अन्यस्य विज्ञेयत्वेनाप्राप्तत्वात् "तमेव" इत्यनेन अन्यनिवृत्तिप्रतिपादनमनर्थकम् इति चेदाह – **अत्र हीति**। अयं भावः – "यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः" इति श्रुतौ आकाशादितत्त्वानां भेदं प्रतिपाद्य आत्माऽभेदः प्रतिपादितः। तथैव प्रज्ञाकरणप्रसङ्गे पूर्वम् "विरजः पर आकाशादज आत्मा महान् ध्रुवः" इति श्रुतौ आकाशादिभ्यः परत्वेन आत्मतत्त्वं दर्शितम्। तस्य चाभिन्नस्य केवलस्यात्मनः, तथैव = आकाशादिपरत्वेनैव प्रज्ञाकरणप्रसक्तौ (प्राप्तौ सत्यां) "तमेव" इत्येवकारेण तथा प्रज्ञाकरणनिवृत्तिः क्रियते – "नाकाशात् परत्वेन आत्मनि प्रज्ञा कर्त्तव्या, अपि तु आकाशान्तर्भाविणैव "केवलः" इत्येव प्रज्ञा कर्त्तव्या इति तात्पर्यम्। आकाशात् परत्वेन आत्मनः प्रज्ञाकरणे प्रतियोगिविधया आकाशोऽपि ध्यातव्यकोटौ प्रविशतीति न केवल आत्मा ध्यातो भवेदिति दोष आपद्यते। अन्यथा = यद्येवं तात्पर्यं न स्यात्, तदा "तमेव" इत्येवकारो निष्फल एव स्यात्, यतो हि आत्मकैवल्ये न किमपि निवर्त्यं श्रुतौ विज्ञायते द्वितीयाभावादिति प्रघट्टकाशयः।

**"नानुध्यायाद् बहूञ्छब्दान्" (बृ०४।४।२१) इत्येकवाक्यता, अन्यथा वाक्यं भिद्येत। शब्दमात्रे चानुध्यानाप्रसङ्गात् शब्दपूर्वत्वात् तस्य शब्दार्थविषयमेवेदमिति। एवम् "आत्मेत्येवोपासीत" (बृ०१।४।७) इत्येवकारश्रुतेस्तदर्थविधिः। "निदिध्यासितव्यः" (बृ०२।४।५) इत्यपि "आत्मनस्तु कामाय" (बृ० २।४।५) इत्युपक्रमात् "इदं सर्वं यदयमात्मा" (बृ० २।४।६) इत्युपसंहारादात्मस्वरूपपरमेकं वाक्यम्। तदन्तर्गताः "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" (बृ० २।४।५) इति न पृथग् विधयः कृत्यप्रत्यययोगेऽपि। कृत्यप्रत्ययस्यार्थान्तरेऽपि स्मरणादर्हादौ स्तुत्यर्थाः, यथोपांशुयाजवाक्यान्तर्गताः "विष्णुरुपांशु यष्टव्यः" (तैत्ति० सं० २।६।६) इत्येवमादयः।**

---

एवं सति उत्तरेण प्रज्ञाकरणवाक्यैकवाक्यतापन्नेन "नानुध्यायाद् बहूञ्छब्दान्" इति वचनेन एतदेव प्रपञ्च्यत इति बोध्यम्। अन्यथा वाक्यभेदो दोषः स्यात्। अर्थात् "नानुध्यायात्" इत्यस्यान्यनिषेधार्थकत्वम्, "तमेव" इत्यस्य च प्रज्ञाकरणविधिपरत्वमिति वाक्यभेदः स्यात्। उभयवाक्ययोरन्यनिवृत्तिपरत्वे निर्बाधा एकवाक्यता सिद्ध्यतीति।

ननु "नानुध्यायात्" इति शब्दस्यानुध्याननिषेधः, नार्थस्येति शङ्कानिरासायाह– **शब्दमात्रे चेति**। शब्दमात्रस्यानुध्यानं न प्रसक्तमतस्तन्न निषेध्यमत्र, किन्तु शब्दपूर्वकत्वादर्थस्य शब्दार्थविषयकमेवेदं निषेधवचनमिति भावः।

"तमेव" इति वचनन्यायमन्यत्राप्यतिदिशति– **एवमात्मेति**। "आत्मेत्येवोपासीत" इत्यत्रापि अन्यनिवृत्तिपर एव विधिर्नोपासनापर इति भावः। एवं "निदिध्यासितव्यः इत्ययमपि नोपासनाविधिरस्ति। उपक्रमोपसंहारवाक्याभ्यामेकवाक्यतापन्नं "निदिध्यासितव्यः" इति वाक्यमपि आत्मस्वरूपपरमेव न विधिपरमिति।

**"ऐतदात्म्यमिदं सर्वम्, तत् सत्यं स आत्मा तत्त्वमसि" (छा० ६।८।७) इति भूत एव पर्यवसितं वाक्यम्। तत्र 'सदस्मि' इति धारयेद् इति कल्पनेयम्। तस्मात् त्रिविधस्यापि ज्ञानस्य विधेयत्वायोगात्, विना च विधेर्वाक्यार्थप्रतिपत्तेः, अपौरुषेयत्वेन निरपेक्षत्वाद् भूतेऽप्यर्थे वेदान्तानां प्रामाण्यसिद्धिः। तथा च "तत्तु समन्वयात्" (ब्र०सू०१।१।४) इति चोदनालक्षणाद् धर्मात् तुशब्देन विशेष्यं ब्रह्म समन्वयगम्यमुक्तम्। समन्वयो हि पदार्थानां संसर्गो विनियोगस्ततो ब्रह्म गम्यते, न चोदनात् इत्यर्थः।**

---

एवं यथा उपांशुयाजान्तर्गताः "विष्णुरुपांशु यष्टव्यः" इत्यादयो न पृथग् विधयस्तथा निदिध्यासनान्तर्गताः "द्रष्टव्यः श्रोतव्य" इत्यपि न पृथग् विधयः। तत्र कृत्यप्रत्ययप्रयोगस्य अर्थान्तरेऽपि अर्हादौ स्मरणात् स्तुत्यर्था एव सन्तीति बोध्यम्।

यत् पुनरुक्तम्– "तत्त्वमसि" इत्यादिवाक्येऽपि 'सदस्मि' इति चेतो धारयेद् इति विधिः कल्पनीय इति, तत्राह– **ऐतदात्म्यमिति**। "ऐतदात्म्यमिदं सर्वम्.... तत्त्वमसि" इति वाक्यं भूते = सिद्धार्थ एवात्मस्वरूपे पर्यवसितम्= निराकाङ्क्षम्। अतस्तत्रापि "सदस्मि" इति चेतो धारयेदिति या विधिकल्पना सा कल्पनैव, न वस्तुभूतेति मन्तव्यम्। काण्डार्थमुपसंहरति – **तस्मादिति**। भूतेऽप्यर्थे वेदान्तानां प्रामाण्यं सिद्धमित्यत्र त्रयो हेतवो वृत्तौ वर्णितास्ते च स्पष्टाः। अत्रार्थे पारमर्षं सूत्रमुदाहरति– तथा च "तत्तु समन्वयादिति" सूत्रे तत्पदेन ब्रह्म गम्यते। तुशब्देन चोदनालक्षणं जैमिनीयं धर्मं व्यवच्छिनत्ति। तथा च चोदनालक्षणो यो धर्मस्ततो विशिष्टं ब्रह्मेति समन्वयाद् गम्यमिति परमर्षेरभिप्रायः। न हि अग्निहोत्रादिवद् ब्रह्म चोदनागम्यं किन्तूपनिषद्गम्यमेव।

समन्वयपदार्थं विवृण्वन् ब्रह्मणश्चोदनागम्यत्वं प्रतिषेधति– **समन्वयो हीति**। स्पष्टीकृतं चैतद् भगवत्पादाचार्यैः शारीरकभाष्य इतीह नातिपल्लवनीयम्।

**नन्वविशेषेण कार्येऽर्थे वेदस्य प्रामाण्यं वर्णितम्—"चोदनालक्षणोऽर्थो धर्मः" (मी० सू० १।१।२) इति, चोदनालक्षणो वेदार्थ इत्यर्थः। नैतत् सारम्, एवं हि सिद्धप्रामाण्यवेदार्थविचारोऽयं स्यात् तदुत्तरलक्षणवत्। तत्रानन्तरं प्रामाण्यप्रतिपादनं न युज्येत, "वृत्तं प्रमाणलक्षणम्" (शाबरभाष्यम् – २।१।१) इति च। मन्त्रार्थवादेषु च कार्यार्थत्वेन विप्रतिपत्तिर्न स्यात्। सा चोपरिष्टादेव निरसिष्यते, बहु चात्र वक्तव्यमित्यलं प्रसङ्गेन।**

---

समन्वयस्य संसर्गमात्रार्थत्वे ब्रह्मणः प्राधान्यं न सिध्येत्, अत उक्तम् – विनियोग इति। प्रधानभूतस्यैकस्य पदार्थस्य संसर्गो विनियोग इत्यर्थः।

चोदनापदस्य वेदपरत्वमभिप्रेत्य पूर्वपक्षी प्रत्यवतिष्ठते – **नन्वविशेषेणेति।** सामान्येन कार्येऽर्थे वेदस्य प्रामाण्यं वर्णितम् "चोदनालक्षणो धर्मः" इति सूत्रेण। चोदनाशब्दस्य वेदपरत्वया वेदार्थो धर्म इति सूत्रार्थः सम्पद्यते। धर्मश्च कार्यरूप इति न सिद्धं ब्रह्म वेदार्थो भवितुमर्हतीति सूत्रविरुद्धमुपनिषदां भूतेऽर्थे प्रामाण्यमिति पूर्वपक्षः। निराकरोति– **नैतत् सारमिति।** पूर्वं सिद्धे हि प्रामाण्ये वेदस्य तद्विशेष विचारः स्यात्। तद्धि प्रामाण्यं सिद्धेऽपि वस्तुनि अस्ति, कर्मविषय एव वाऽस्तीति नाद्यावधि सिद्धमिति विचारो नैव युज्येत। तत्र दृष्टान्तमाह– **उत्तरलक्षणवदिति।** पूर्वमीमांसाया द्वितीयाध्यायवदित्यर्थः।

एवं सिद्धे प्रामाण्ये यदि वेदार्थविचारस्तदाऽनन्तरं कृतं प्रामाण्यप्रतिपादनं न युज्यते। तथा वेदस्यार्थवत्त्वपुरस्सरश्चेद् विचारारम्भस्तदा द्वितीयाध्याये आरम्भे– "वृत्तं प्रमाणलक्षणम्" इति भाष्यकारस्य वचनं विरुद्धं स्यात्। एवं कार्यरूपश्चेद् वेदार्थः, साधितः प्रथमपाद एव, ततो मन्त्रार्थवादाः कार्यार्थाः सिद्धा एवेति न तत्र विप्रतिपत्तिः स्यादित्याह – **मन्त्रेति।** तर्हि मा भूद् विप्रति-

**यथान्यमानव्यतिभेदमुक्ता मतिः प्रमाणत्वमुपैति कार्ये।**
**अपौरुषेयागमलब्धजन्मा तथैव सिद्धे निरपेक्षभावात् ॥ १८३ ॥**

**॥ इति श्रीमदाचार्यमण्डनमिश्रकृतौ ब्रह्मसिद्धौ नियोगकाण्डस्तृतीयः ॥**

---

पत्तिरिति चेत् तत्राह – **सा चेति**। आम्नायस्य क्रियार्थत्वाद् इत्यारम्भे त्रिपाद्या मन्त्रादिषु प्रामाण्यविप्रतिपत्तिर्निराकृतेत्युक्तम्– **निरसिष्यत इति**। तस्मात् लोकप्रसिद्धधर्ममुद्दिश्य तत्र लक्षणं प्रमाणं च प्रतिज्ञायेते द्वितीयसूत्रेण, न तु वेदार्थमात्रस्य चोदनालक्षणत्वमुच्यत इत्युपसंहरन्नाह– **बहु चात्र वक्तव्यमिति, अलं प्रसङ्गेन इति चेति**।

नियोगकाण्डार्थं श्लोकेन संगृह्णाति ग्रन्थकारः –

**यथान्यमानेति**। अन्येषां प्रत्यक्षादिमानानां व्यतिभेदः = संस्पर्शः, तेन मुक्ता अपौरुषेयागमलब्धजन्मा मतिः यथा कार्येऽर्थे निरपेक्षभावात् प्रामाण्यमुपैति, तथैव सिद्धेऽप्यर्थे प्रामाण्यमुपैतीति श्लोकार्थः। अन्यमानव्यतिभेदमुक्ता इत्यनेन अननुवादत्वमुक्तम्, अपौरुषेयागमेत्यादिना पुंदोषराहित्यमुक्तम्, तथा निरपेक्षभावाद् इत्यनेन संवादकप्रमाणानपेक्षत्वमुक्तं भवति। एतत्त्रयं प्रामाण्यकारणं कार्यार्थ इव सिद्धार्थेऽपि वेदेऽस्त्येवेति सिद्धं सिद्धब्रह्मणो वेदप्रमाणकत्वमिति भावः।

**॥ इति दर्शनरत्नेन श्रीकेदारनाथत्रिपाठिना कृतायां ब्रह्मसिद्धिविवेचनायां नियोगकाण्डस्तृतीयः ॥**

# अथ चतुर्थः सिद्धिकाण्डः

**एवं तावत् प्रतिपत्तिकर्तव्यताप्रमाव्याजेन यैरप्रामाण्यमुक्तं तत्प्रतिबोधनाय कृतः प्रयत्नः। इदानीं त्वप्रामाण्यमेवाहुर्ये तद्बोधनाय प्रयत्यते। तत्र पूर्वः पक्षः—**

**नन्वन्वितपदार्थत्वाद् वाक्यार्थस्य पदार्थताम्।**
**अप्राप्य न स्याद् वाक्यार्थः पदार्थत्वेऽन्यमानकः॥ १॥**

**न तावद् ब्रह्मान्तर्याम्यादिपदं प्रमाणम्, सम्बन्धज्ञानापेक्षया**

---

तर्ककाण्डेन द्वितीयेन तृतीयेन नियोगकाण्डेन च द्वितीया विप्रतिपत्तिर्निराकृता। इदानीं प्रथमां विप्रतिपत्तिं निराचिकीर्षुस्तुरीयं सिद्धिकाण्डमारभते— **एवं तावदिति**। ये आहुः — वेदान्तवाक्यानां नैव कथमपि ब्रह्मात्मनि प्रामाण्यमिति तेषां बोधार्थमत्र चतुर्थकाण्डे ग्रन्थकर्तुः प्रयत्न इत्यर्थः। वेदान्ता ब्रह्मणि प्रमाणं न वेति विप्रतिपत्तिः। न प्रमाणमिति पूर्वपक्षः, प्रमाणमिति सिद्धान्तपक्षः। तत्र पूर्वपक्षमुत्थापयति— **"नन्वित्यादि, पदार्थत्वेऽन्यमानकः"** इत्यन्तकारिकया।

ननु वाक्यार्थस्य अन्वितपदार्थत्वात् पदार्थतामप्राप्य ब्रह्म वाक्यार्थो न स्यात्। एतदापत्तिभिया ब्रह्मणः पदार्थत्वे = पदार्थत्वाङ्गीकारे ब्रह्मपदार्थः अन्यमानकः = प्रमाणान्तराधिगतः प्रसज्येत। तथा च वेदान्तानामनुवादकत्वमात्रं स्यात्, न ब्रह्मावबोधकत्वमिति पूर्वपक्षकारिकार्थः।

उक्तकारिकार्थं मूलकारः स्वयं विशदयति — **न तावदिति**। अयं भावः— अलौकिके ब्रह्मणि पदं प्रमाणं वाक्यं वेति विकल्पे आद्यपक्षे पूर्वपक्षयति—**न तावदिति**। ब्रह्मपदम् अन्तर्याम्यादिपदं च ब्रह्मणि प्रमाणं न भवितुमर्हति इत्यत्र हेतुमाह — **सम्बन्धज्ञानापेक्षयेति**। पदार्थेन सह सम्बन्धज्ञानमपेक्ष्यैव पदम् अर्थप्रतीतिहेतुर्भवति, नान्यथा। सम्बन्धज्ञानं च प्रत्यक्षादिप्रमाणतः पूर्वसिद्ध एव

**पूर्वसिद्धे प्रत्ययहेतुत्वेन। नापि वाक्यम्, न हि तत् साक्षाद् वाचकम्, पदार्थद्वारा तु ततः प्रतिपत्तिः, अपदार्थे ज्ञानस्याभावात्। ते हि संसर्गाद गुणप्रधानभावेनेतरपदार्थविशिष्टिमेकं पदार्थं गमयन्ति। तत्र पदार्थ एव विशिष्टो वाक्यार्थो भवति। न चानधिगतेषु प्रमाणान्तरेण पदार्थत्वम्, सम्बन्धज्ञानापेक्षणाद् इत्युक्तम्।**

---

पदार्थे भवति नापूर्वे। तस्मात् श्रुतं पदमर्थस्मारकमेव भवति नानुभावकम्, स्मारकत्वाच्च तन्न पदार्थे प्रमाणमिति ब्रह्मादिपदं न ब्रह्मणि प्रमाणमिति प्रथमविकल्पानुसारी पूर्वपक्षः।

नापि वेदान्तवाक्यं ब्रह्मणि प्रमाणं भवितुमर्हतीति द्वितीयविकल्पे पूर्वपक्षमाह– **नापीति**। वाक्यस्य ब्रह्मणि अप्रमाणत्वे हेतुमाह – **न हीति**। तत् = वाक्यम्। वाक्यस्यार्थेन सह सम्बन्धस्यानधिगतत्वेन तत् साक्षाद् बोधकं न भवति, किन्तु पदार्थद्वारैव ततः = वाक्यतः प्रतिपत्तिर्भवति। अर्थात् पूर्वं पदस्य पदार्थेन सह सम्बन्धग्रहणे सति पदार्थद्वारक एव वाक्याद् वाक्यार्थः प्रतीयते। अपदार्थे = पदार्थज्ञानाभावे ज्ञानस्य = वाक्यार्थज्ञानस्याभावादित्यर्थः।

कया रीत्या तर्हि वाक्यार्थप्रतीतिर्भवतीत्याह– **ते हीति**। पदार्था एव संसर्गात्= विशेषणविशेष्यभावेन परस्परसंसृष्टाः सन्तो गुणप्रधानभावेन परस्परविशिष्टमेकं वाक्यार्थं गमयन्तीत्यर्थः। एवं हि पदार्थ एव विशिष्टो वाक्यार्थो भवति। ननु भवतु पदार्थ एव परस्परसंसृष्टो वाक्यार्थः, किमेतावता? अत्राह– **न चेति**। प्रमाणान्तरेण अनधिगतेषु ब्रह्मादिषु यदा पदार्थत्वमेव नास्ति, तदा कुतो वेदान्तवाक्यात् तेषां बोध इत्यर्थः। ब्रह्मणोऽनधिगतत्वे पूर्वोक्तं स्मारयति– **सम्बन्धज्ञानापेक्षणाद् इत्युक्तमिति**।

उक्तार्थाभिप्रायमाह– **तत्रेति**। ब्रह्मान्तर्याम्याद्यर्थानां यद्यपदार्थत्वं तदा न वाक्यविषयत्वम्, पदार्थस्यैव वाक्यबोध्यत्वात्। तस्मान्न वेदान्तवाक्यं तेषामवबोधकं भवेत्। यदि च ब्रह्मादीनां पदार्थत्वं स्यात्, सम्बन्धज्ञानस्यापेक्षणात्

**तत्रापदार्थत्वे न वाक्यविषयत्वम्, अनवबोधकं तेषां वाक्यम्। पदार्थत्वे प्रमाणान्तराधिगतेरनुवादकम्। तत्रात्यन्तापरिदृष्टब्रह्माद्यर्थ-प्रमाणाभिमतेषु वाक्येषु तद्वाचीनि पदानि स्युः, न वा। यदि न सन्ति, न त इतरैः संसृज्येरन् न भिद्येरन्निति न तेषा प्रमेयाः, लोष्टा-दिवत्। अथ तु सन्ति, तथापि तैरधिगतसम्बन्धैर्न प्रतिपाद्येरन्, अप्रतिपन्नाश्च न विशिष्टवाक्यार्थप्रतिपत्तिहेतवः। तत्र यथा**

---

ते प्रमाणान्तेरणाधिगताः स्युः। अस्यां स्थितौ वेदान्तवाक्यं न व्रीह्यादिपदार्थानामव-बोधकं भवेत्, किन्तु अनुवादकमेव भवेदिति पूर्वपक्षाशयः।

उक्तमेवार्थं स्पष्टीकरोति – **तत्रात्यन्तेति**। अत्यन्तापरिदृष्टाः = प्रमाणान्त-रेभ्योऽनधिगता ये ब्रह्मान्तर्याम्याद्यर्थाः, तेषां प्रमाणत्वेन = बोधकत्वेन अभिमतेषु वेदान्तवाक्येषु घटकीभूतानि पदानि ब्रह्मार्थानां वाचकानि स्युर्न वेति विकल्पे यदि ब्रह्माद्यर्थवाचकानि न सन्ति तानि पदानि तदा ते पदार्था न इतरैः पदार्थैः संसृज्येरन् इति संसर्गबोध एव न स्यात्। एतच्च संसर्गो वाक्यार्थ इति वादिनां मताभिप्रायेणोक्तम्। भेदाभिमानिनः प्रत्याह– **न भिद्येरन् इति**। अर्थाद् यदा ते अर्थाः पदैर्वाच्यान्येव न सन्ति, तदा कथं तस्माद् वाक्यात् तेषां संसर्गो वा भेदो वा भासेतेति। अतस्तेऽर्थाः संसर्गविधया वा भेदविधया वा न तैर्वाक्यैः प्रमीयेरन् उदासीनलोष्टादिवदित्यर्थः। वेदान्तवाक्यानि तथाविधेष्वर्थेषु ब्रह्मादिषु न प्रमाणं भवितुमर्हन्तीति हार्दम्।

वेदान्तवाक्यघटकपदानां ब्रह्माद्यर्थवाचित्वपक्षमनूद्य आह – **अथ तु सन्तीति**। अयमर्थः – यदि तु वेदान्तवाक्यघटकपदानि ब्रह्माद्यर्थवाचकानि सन्ति, तथापि अधिगतसम्बन्धैः कृत्वा तैः पदैस्तेऽर्था नैव प्रतिपादिताः स्युः। अर्थाद् अत्यन्तापरिदृष्टतया सम्बन्धज्ञानाभावात् तेऽर्थास्तैः पदैर्नैव प्रतिपादिता भवेयुः। अप्रतिपन्नाश्च तेऽर्थाः सत्तामात्रेण न वेदान्तवाक्यतो विशिष्टार्थप्रतिपत्तिजनका भविष्यन्ति। एवं हि वेदान्तवाक्यानि न विशिष्टार्थबोधकानि भवितुं शक्ष्यन्तीति सर्वथाऽप्रमाणत्वमेव वेदान्तवाक्येषु प्रसज्येतेति भावः। अस्मिन्नर्थे दृष्टान्तमाह – **तत्र यथेति**। यथा पिकपदार्थमजानानो जनो 'वनात् पिक आनीयताम्' इति

**'वनात् पिक आनीयताम्' इति पिकपदार्थाज्ञानेऽनवबोधकत्वम्, तथा तेषामपि।**

**तस्मान्न चोदनातोऽपूर्वपदार्थावगमः। सा हि विधिप्रतिषेधाभ्यां क्रियासु पुरुषमधिकरोति। त्रैविद्यवृद्धपरिग्रहस्तु जपोपयोगात्, उपनिषदो वेदान्ता इति तत्र विनियोगात्। तत्रोच्यते–**

**सामान्येन पदार्थत्वे सिद्धेऽसाधारणैर्गुणैः।**
**शक्यापूर्वविशेषस्य लोकवत् प्रतिपादना॥२॥**

---

वाक्यं श्रुत्वा न ततो विशिष्टार्थमवबुध्यते, तथा तेषां वेदान्तवाक्यानामपि विशिष्टार्थावबोधकत्वं नैव सम्भवतीत्यर्थः।

स्वपक्षमुपसंहरति पूर्वपक्षी– **तस्मादिति**। तत्र 'चोदनातः' इति पदं सामान्यतो वैदिकवाक्यमात्राभिप्रायकम्। तथा च किमपि वैदिकं वाक्यं वेदान्तवाक्यं वाऽन्यद् वा भवतु, ततोऽपूर्वस्य अत्यन्तापरिदृष्टस्यानधिगत-सम्बन्धस्य पदार्थस्यावगमो नार्हति भवितुमित्युपसंहारवाक्यार्थः। चोदनायाः स्वविशिष्टस्वरूपपर्यालोचनयाऽप्याह – **सा हीति**। चोदनाऽपि विधिप्रतिषेधाभ्यां कृत्वा पुरुषं प्रवृत्तिनिवृत्तिक्रियासु प्रवर्तयति, न तु अपूर्वपदार्थावगममात्रपरा भवतीत्याशयः।

नन्वेवं यदि ब्रह्माद्यर्थेषु अप्रमाणमेव वेदान्तास्तर्हि किमिति ते त्रैविद्यवृद्धैः प्रयत्नेन गृह्यन्ते? अत्राह – **त्रैविद्येति**। अर्थाद् यतः प्रणवादिजपवद् वेदान्तानां जपमपि बुधाः स्वाध्यायमेवाहुरतो जपे ते उपयुज्यन्ते त्रैविद्यवृद्धैः। तत्रापि हेतुमाह – उपनिषदो वेदान्ता इति। अयं भावः – यतो वेदान्ता उपनिषदः = रहस्यवचनानि सन्ति ओंकारादिगायत्र्यादिवचनात्, अतस्ते तत्र जपे विनियुज्यन्त इति सर्वमेतत् पूर्वपक्षसन्दर्भः।सा चाग्रे निरसिष्यते सिद्धान्तिना– **तत्रोच्यत इत्यादिना**।

सामान्येन = सत्तादिसामान्यरूपेण ब्रह्मणः सामान्यतः पदार्थत्वे प्रसिद्धे सति असाधारणैरन्तर्यामित्वामृतत्वादिगुणैस्तदीयापूर्वविशेषस्वरूपस्यापि लोकवदेव

**यथा लोके "द्वीपविशेषे एवंनामानो मरकतमयपादाः पद्मरागमयचञ्चवः। सौवर्णराजतपक्षाः पक्षिणः" इति पक्षिसामान्यं प्रमाणान्तराधिगतमनन्यसाधारणेन धर्मकलापेन संसृज्यमानं प्रमाणान्तरानधिगतं विशेषरूपमासादयति, वाक्येन च प्रमीयते प्रमाणान्तरानधिगतेन विशेषणरूपेण। सर्वस्यैव हि वाक्यस्यानधिगतो विशेष एव प्रमेयः।**

**तथा कारणसामान्यं वा सत्सामान्यं वा "यतो वा इमानि भूतानि जायन्ते" (तै० ३।१) इति "अस्थूलमनण्वह्रस्वम्" (बृ० ३।८।८) इत्यादिपदार्थैः संसर्गाद् भेदाच्च प्रमाणान्तरानधिगतं विशेषरूपमासादयति, वाक्यस्य च प्रमेयं भवति। तदेवं लोकसिद्धपदार्थान्वयेनैवापूर्वार्थप्रतिपत्तेर्नानवबोधकत्वमनुवादकत्वं वा।**

---

वेदान्तवाक्यैः प्रतिपादना = प्रतिपत्तिः कर्तुं शक्येति शक्नोतीति कारिकार्थः। श्लोकार्थं स्वयं विवृणोति वृत्तौ – **यथा लोक इत्यादिना**। अयमर्थः – यथा लोके पक्षिसामान्यं जानानो जनो द्वीपविशेषं गतो मरकतमयपादादिना असाधारणधर्मकलापेन युक्तान् पक्षिणो दृष्ट्वा तेन तेषां प्रमाणान्तेरणानधिगतं विशेषस्व-रूपमासाद्यते – "एवंनामानो मरकतमयपादाः पद्मरागमयचञ्चवः सौवर्णराजत-पक्षास्तत्र पक्षिणो भवन्ती" ति वाक्येन प्रमाणान्तरानधिगतेन विशेषरूपेण ते पक्षिणः प्रतिपद्यन्ते चेत्यर्थः। सामान्यतो ज्ञातस्य वाक्येन विशेषप्रतिपत्तावुपपत्तिमाह– **सर्वस्यैवेति**।

उक्तलौकिकदृष्टान्तं दार्ष्टान्तिके ब्रह्मणि घटयति – **तथेति**। अयमर्थः – "यतो वा इमानि" इत्यादिश्रुत्या कारणत्वसत्त्वसामान्येन ब्रह्म ज्ञात्वा "विज्ञानमानन्दं ब्रह्म" इति वाक्येन विज्ञानानन्दादिपदार्थैः संसृज्यमानम् "अस्थलमनण्वह्रस्वम्" इति वाक्येन च स्थूलादिपदार्थैर्भिद्यमानं प्रत्यक्षादिप्रमाणान्तरानधिगतमेव ब्रह्मणो विशेषस्वरूपं प्रमीयत इति। कारिकार्थं निगमयति– **तदेवमिति**। अर्थात् लोकसिद्धपदार्थान्वयसरण्यैव ब्रह्मणोऽपि अपूर्वविशेषस्वरूपेण प्रतिपत्तिर्भवितुं शक्नोतीति न वेदान्तवाक्येषु अनवबोधकत्वमनुवादमात्रत्वं वा प्रसज्यत इत्यभिप्रायः।

**सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते।**
**प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते॥ ३॥**
**प्रविलीनप्रपञ्चेन तद्रूपेण न गोचरः।**
**मानान्तरस्येति मतमाम्नायैकनिबन्धनम्॥ ४॥**

**अथवा न लोकेऽत्यन्तमप्रसिद्धं ब्रह्म, सर्वप्रत्ययवेद्यत्वात्, ब्रह्मणो व्यतिरेकेण प्रत्येतव्यस्याभावात्, विशेषप्रत्ययानां च सामान्यरूपानुगमात्, भेदोपसंहारावशिष्टं च सत्यं ब्रह्म – इति प्रतिपादनात्, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" (बृ० ६।१।४) इति दृष्टान्तात्।**

---

**सर्वप्रत्ययवेद्य इति**। अयमर्थः– सर्वैरेव प्रत्ययैर्ब्रह्मस्वरूपं वेद्यत इति वाऽस्ति सिद्धान्ते व्यवस्था। अर्थात् संसर्गेण भेदेन वा ब्रह्मस्वरूपं समुदितेन वेदान्तवाक्येन प्रतिपद्यत इति पक्षं विहाय वेदान्तवाक्यघटकीभूतैः पदैरेव ब्रह्म प्रतीयत इति पदार्थत्वमेव ब्रह्मण इति व्यवस्था। कथं ब्रह्मणः सर्वपदार्थत्व-व्यवस्थेति चेत्, ब्रह्मणो व्यतिरिक्तत्वेन प्रत्येतव्यवस्तुनोऽभावात्। अनेन सर्व-प्रत्ययवेद्यत्वव्यवस्थापनेन ब्रह्मणोऽत्यन्ताप्रसिद्धत्वं निराकृतं भवति।

ननु यदि ब्रह्मव्यतिरेकेण प्रत्येतव्यं किञ्चिन्नास्ति, तदा कथं घटादयो विशेषाः प्रतीयन्त इति शङ्कामपाकर्तुमाह – **विशेषप्रत्ययानामिति**। घटादिविशेष-प्रत्ययाश्च ब्रह्मणो यत् सत्तादिसामान्यस्वरूपं तदेवानुगच्छन्ति, न तद्व्यतिरेकेण स्वातन्त्र्येण ते जायन्ते। न ह्यसन् घटो भवतीति सत्तासामान्यानुगमो घटादिप्रतीनां स्फुट एव। तथा च सत्प्रकाशात्मकस्य ब्रह्मणोऽसिद्धौ घटादि-सर्ववेद्यानामसिद्धिरेवेति तात्पर्यम्।

ननु सत्तासामान्यं ब्रह्मस्वरूपम्, घटादिविशेषप्रतीतयोऽपि तत्सामान्य-रूपमनुगच्छन्ति। तदा घटादिविशेषवद् ब्रह्मणोऽसाधारणं रूपमस्ति न वेति शङ्का-यामाह – **भेदोपसंहारेति**। "अस्थूलमनणु" इत्यादिश्रुत्यनुसारं स्थूलादिसर्व-भेदानामुपसंहारे यदवशिष्टं सत्यम् = सद्भूतं वस्तु तदेव ब्रह्मणोऽसाधारणं

**किं तर्हि शब्देन प्रतिपाद्यते ? प्रपञ्चाभावः। तत्र प्रपञ्चपदार्थोऽपि सिद्धः, निषेधोऽपि सिद्धः, तयोः संसर्गात्तदभावप्रतिपत्तिः। आम्नायैकनिबन्धनत्वं तु तस्योच्यते, प्रत्यक्षादीनामविद्यासम्भिन्नत्वात्। प्रत्यस्तमित-**

---

रूपमस्तीति प्रतिपादनात् = श्रुत्या बोधनादित्यर्थः। कल्पितस्य द्वैतस्य तत्त्वज्ञानेन बाधाद् असाधारणमेव = अनितरसाधारणमेव ब्रह्मस्वरूपं बोध्यत इति तात्पर्यम्। द्वैतस्य कल्पितत्वे प्रमाणमाह – **वाचारम्भणमिति**। स्फुटोऽर्थोऽस्याः श्रुतेः।

एतावता सन्दर्भेण "सर्वप्रत्ययवेद्ये वा ब्रह्मरूपे व्यवस्थिते" इति कारिकार्धं व्याख्यातम्। ननु यदि सर्वप्रत्ययवेद्यत्वेन सर्वभेदोपसंहारद्वारा ब्रह्मैवान्ते व्यवतिष्ठते, ब्रह्मव्यतिरेकेण प्रत्येतव्याभावात्, तदा ब्रह्मव्यवस्थातः पूर्वं वेदान्तशब्दस्य किं प्रतिपाद्यमस्तीति पृच्छति – **किं तर्हीति**। तत्रोत्तरमाह – "प्रपञ्चस्य प्रविलयः शब्देन प्रतिपाद्यते" इत्यंशेन। अर्थात् प्रपञ्चाभाव एव शब्देन प्रतिपाद्यत इति। यदि शङ्क्यते – प्रपञ्चस्याप्रामाणिकस्य कथं निषेधः प्राप्तौ सत्यां निषेधनियमाद् इति, तत्राह – **तत्र प्रपञ्चपदार्थोऽपीति**। सिद्धः = प्रतीतो, न प्रमितः। निषेधार्थं प्रतीतेरेवापेक्षा न प्रमितेः। प्रमितत्वे तु निषेधायोगः। एवं निषेधोऽपि सिद्धः प्रतीत एवेत्यर्थः। तथा च प्रतीतयोस्तयोः प्रपञ्चनिषेधयोः संसर्गात् = परस्परसम्बन्धात् प्रपञ्चाभावस्य शब्देन प्रतिपत्तिभर्वतीति प्रपञ्चाभावस्य शब्दप्रतिपाद्यत्वमिति भावः।

ननु एवं ब्रह्मणो मानान्तरागम्यत्वात् शास्त्रेण (शब्देन) च प्रपञ्चाभावस्य प्रतिपादनात् कथमौपनिषदत्वं ब्रह्मण इति शङ्कायामाह – **प्रविलीनप्रपञ्चेनेति**। तद् = ब्रह्म प्रविलीनप्रपञ्चेन रूपेण मानान्तरस्य = प्रत्यक्षादिप्रमाणस्य न गोचरः = न विषय इत्यतस्तद् आम्नायैकनिबन्धनम् = आम्नायैकगम्यं मतं सिद्धान्त इति कारिकार्थः। उक्तमेवार्थमुपपादयति वृत्तौ – **आम्नायैकनिबन्धनत्वं त्विति**। सिद्धान्ते तस्य ब्रह्मण आम्नायैकनिबन्धनत्वमुच्यते। कथमिति चेदत्र हेतुमुद्घाटयति – **प्रत्यक्षादीनामविद्यासम्भिन्नत्वादिति**। अयमर्थः – यतः प्रत्यक्षादिप्रमाणानि अविद्यासम्भिन्नानि = आविद्यकविषयसंवलितानि कल्पितविषयाणीति यावत्, अतः प्रविलीनप्रपञ्चं सन्मात्रं शुद्धं ब्रह्म आम्नायैकगम्यम्, न तस्मिन् प्रत्यक्षादिप्रमाणप्रसर इति।

**निखिलभेदेन रूपेणाविषयीकरणाद् भेदप्रत्यस्तमयस्याम्नायावगम्यत्वादिति।**

**परः पुनः प्रत्यवतिष्ठते—**

**ननु चापुरुषार्थत्वं भूतनिष्ठे प्रसज्यते॥४—१/२॥**

**यत् खलु वाक्यं न पुरुषं क्वचिद् हितसाधने प्रवर्तयति अहितसाधनाच्च निवर्तयति, केवलं सिद्धमर्थमन्वाचष्टे, तदपुरुषार्थम्। अपुरुषार्थत्वाच्चोन्मत्त-प्रलापवदप्रमाणम्। तथा च प्रायेण वेदान्ताः। उच्यते—**

**प्रमाणस्य न चैतावत् पुरुषार्थैकनिष्ठता॥ ५॥**

---

शुद्धब्रह्मबोधने प्रत्यक्षादीनामसामर्थ्यं प्रदर्शयति— **प्रत्यस्तमितेति**। प्रत्यक्षादी-नामाविद्यकप्रपञ्चभेदसम्भिन्नत्वेन निरस्तसमस्तभेदेन शुद्धेन रूपेण ब्रह्मणोऽविषयी-करणादित्यर्थः। ननु प्रपञ्चभेदप्रत्यस्तमयोऽपि प्रत्यक्षगम्यः स्यादित्यत्राह — **भेदप्रत्यस्तमयस्यापि आम्नायेनैवावगम्यत्वादिति**। न हि भेदोपजीविनां प्रत्यक्षादीनां भेदप्रत्यस्तमयावगमने सामर्थ्यमस्तीति भावः।

प्रकारान्तरेण वेदान्तेष्वप्रामाण्यमाशङ्कते— **परः पुनः प्रत्यवतिष्ठत** इत्यादिना। **ननु चेति**। यदि वेदान्तवाक्यं भूतनिष्ठं = सिद्धब्रह्मपरं स्यात् तदा तत्र अपुरुषार्थत्वं प्रसज्यत इति कारिकार्थः। कारिकार्थमेव विवृणोति वृत्तौ — **यत् खल्विति**। केवलं सिद्धमर्थमन्वाचष्टे = अनुवदति, न काञ्चित् प्रवृत्तिं निवृत्तिं वा जनयति, तथाविधं वाक्यमपुरुषार्थत्वाद् उन्मत्तप्रलापवदप्रमाणमेव मन्यते। प्रायेण सर्वे वेदान्ता अपि सिद्धवस्तुपरा यदि मन्यन्ते तदा तेषामपि अपुरुषार्थत्वेन अप्रामाण्यं प्राप्नोतीति शङ्कार्थः। "तमुपासीत" इत्यादिप्रवृत्तिपरवाक्यस्यापि दर्शनात् "प्रायेण" इत्युक्तम्।

वेदान्ता न प्रमाणम् अपुषार्थत्वाद् इति पराभिप्रेतं दूषयति— **उच्यत इत्यादिना। प्रमाणस्य न चैतावदिति।** प्रमाणस्य एतावन्मात्रपुरुषार्थैकनिष्ठता नास्ति। अर्थात् प्रमाणं प्रवृत्तिनिवृत्तिमात्रपुरुषार्थनिष्ठं न भवति, यत उपेक्षामपि प्रमाणस्य फलं प्रचक्षते बुधाः।

(उपेक्षामपि हि फलं प्रमाणस्य प्रचक्षते)।
अपि चाज्ञानतः शोकी दुःखी जीवः प्रकाशते॥ ६॥
तन्निवृत्तिश्च विज्ञानं पुरुषार्थः स्वयं मतम्।
कस्मिंश्चिदर्थेऽविज्ञाते कुतूहलवतां नृणाम्॥ ७॥
आकुलानां ज्ञानजन्म पुरुषार्थत्वसम्मतम्।
अक्षादौ च यथारूपनिष्ठे नापुरुषार्थता॥ ८॥
न च प्रवृत्तिनिष्ठत्वं तथास्मिन् केन वार्यते।
ज्ञेयस्य पुरुषार्थत्वं तत्र चेदत्र तत्समम्॥ ९॥
पुरुषार्थः स्वयं ब्रह्म प्रशान्तं विजरादिकम्।
अतस्तत्त्वमसीत्येवमनुशिष्याय शिष्यते॥ १०॥

---

एवं वेदान्तस्य प्रमाणत्वमुक्त्वा तत्र ब्रह्मत्वज्ञानमेव पुरुषार्थ इति न वेदान्तवाक्यानामपुरुषार्थत्वं प्रसज्यत इत्याह – **अपि चेति**। अयमर्थः – अज्ञानवशाद् जीवः शोकदुःखभागिव भाति। विज्ञाने च सति शोकदुःखयोर्निवृत्तिर्जायते। अतो विज्ञानं स्वयमेव पुरुषार्थो मन्यते।

एवं नायं नियमः – प्रवृत्तिनिवृत्ती विदधदेव शाब्दज्ञानं पुरुषार्थं भवति नान्यथेति। यतः कस्मिंश्चिदर्थेऽविज्ञाते यद् ज्ञानार्थं कुतूहलिनामाकुलित-जनानां ज्ञानजन्म दृश्यते, तच्च ज्ञानं पुरुषार्थत्वेनाभिमतं लोक इति। एवं नायमपि नियमः– वस्तुस्वरूपरं प्रमाणम् अपुरुषार्थं भवतीति, यतो यथास्वरूपनिष्ठमपि प्रत्यक्षादिप्रमाणं पुरुषार्थमेव भवति, न च तत्रापुरुषार्थता। प्रत्यक्षादौ प्रवृत्ति-निष्ठत्वाभावेऽपि वस्तुस्वरूपबोधफलमात्रेण पुरुषार्थत्वं मन्यते, तथा वेदान्त-वाक्येष्वपि पुरुषार्थत्वं कथं वारयितुं शक्येतेत्याह – **तथास्मिन् केन वार्यत इति**।

यद्युच्येत– वस्तुनिष्ठमपि प्रत्यक्षं पुरुषार्थं भवति, वस्तुनः प्राथ्यर्त्वाद् इति तत्राह– **ज्ञेयस्य पुरुषार्थत्वमिति**। साम्यं दर्शयति– **पुरुषार्थः स्वयं ब्रह्मेति**। अर्थात्

**परप्रवृत्तेरङ्गत्वं प्रत्यक्षादेर्मतं यदि।**

**अत्रापि साक्षात्करणप्रवृत्तावङ्गतेष्यताम्॥ ११॥**

**न तावन्नियोगतः प्रमाणस्य पुरुषार्थफलता। न खलु हितोपादानाहितहाने एव प्रमाणफले। उपेक्षामपि हि प्रमाणफलं प्रमाणविद आचक्षते। न च पुरुषार्थता प्रमाणलक्षणम्, प्रमाहेतुत्वं तु। तस्मान्न पुरुषार्थाभावेनाप्रामाण्यम्।**

---

प्रार्थ्यतया अक्षविषयज्ञेयवत् प्रशान्तं विजरं नित्यानन्दादिस्वरूपं ब्रह्मापि प्रार्थ्यतया स्वयमेव पुरुषार्थोऽस्तीति न तद्बोधकवेदान्तवाक्यानामपुरुषार्थत्वमिति।

फलितमाह–**अतस्तत्त्वमसीत्यादि**। यतो ब्रह्म स्वयं पुरुषार्थस्तस्माद् अनुशिष्याय = अनुशासनयोग्याय श्वेतकेतवे "तत्त्वमसि" इति श्वेतकेतोर्ब्रह्मात्मत्वमुपदिश्यते तत्पित्रा उद्दालकेन। यद्युच्यते– अस्ति प्रत्यक्षादिप्रमाणे वेदान्तवाक्याद् विशेषो यत् प्रत्यक्षादिना प्रमाणेनार्थमवगम्य तमर्थं कश्चित् प्राप्तुमिच्छति हातुं वेच्छतीति प्रेप्साजिहासाभ्यां प्रयुक्तो जनस्तमर्थं समीहते। ब्रह्म तु शब्दादवगम्य न समीहत इति, तत्राह – **परप्रवृत्तेरङ्गत्वमिति**। अर्थात् प्राप्तुं वा हातुं वा प्रवृत्तिं प्रति प्रत्ययादेरङ्गत्वाद् यदि पुरुषार्थत्वं मन्यते, तदा वेदान्तवाक्यानामपि ब्रह्मसाक्षात्कारं प्रति अङ्गभावः पुरुषार्थत्वं च स्वीक्रियताम्। तथा चाव्याहतं वेदान्तवाक्यानां प्रत्यक्षादिप्रमाणात् साम्यमिति कारिकाणामर्थः।

प्रमाणस्य न चैतावदित्यादिकारिकार्थं स्वयं विवृणोति मूलकृत्– **न तावन्नियोगत** इत्यादिवाक्यसन्दर्भैः। नियोगतः = हितोपादानाहितहानाभ्यामेव प्रमाणस्य पुरुषार्थफलता= पुरुषार्थपर्यवसायित्वं भवतीति नास्तीत्यर्थः। तत्र हेतुमाह – **न खल्विति**। स्पष्टोऽर्थः। शङ्कामुत्थाप्य समाधत्ते – **न चेति**। पुरुषार्थसाधनत्वं प्रमाणलक्षणमित्यपि नास्ति, किन्तु प्रमाहेतुत्वमेव प्रमाणलक्षणमस्ति। तच्च वेदान्तवाक्येष्वप्यस्ति। निष्कर्षमाह – **तस्मादिति**। हितोपादानाहितपरिहारावेव

अपि च "शोक्यहम्, दुःख्यहम्, धनादीनि मम नष्टानि" इति विशुद्धब्रह्मात्मनो जीवस्य मिथ्याज्ञानम्। एतन्निवृत्तिरूपं च विशुद्धानन्द-प्रकाशब्रह्मात्मतत्त्वज्ञानम्। तत् स्वरूपेणैव पुरुषार्थः, अनिष्टनिवृत्ति-रूपत्वादिष्टाविर्भावाच्च। यद्यपि च संस्कारात्तस्यानुवृत्तिस्तथापि शाब्दज्ञान-मनुसन्तन्वतो विदुषो न पूर्ववद् भवति निवर्तते चात्यन्ताय। दृष्टा च ज्ञानोत्पत्तरेव पुरुषार्थता क्वचित् कुतूहलाकुलितानामज्ञातेऽर्थे। न हि तज्ज्ञानात् परमन्यदर्थ्यते।

न च प्रवृत्तिनिवृत्तिविषयस्यैव पुरुषार्थतेति नियमः। प्रत्यक्षादीनि हि प्रमाणानि (सन्ति), न च तावत् प्रवृत्तिनिवृत्तिपराणि, सिद्धवस्तुविषयाणि (तानि), न च पुरुषार्थतां जहति।

---

प्रमाणफलमित्यभ्युपगम्यापि वेदान्तवाक्यस्य सफलत्वं साधयति– **अपि चेति**। अर्थात् 'शोक्यहम्' इत्यादिस्वरूपस्य मिथ्याज्ञानस्य निवृत्तिरूपं विशुद्धानन्द-प्रकाशात्मकब्रह्मात्मकत्वज्ञानं स्वरूपेणैव पुरुषार्थः, अनिष्टनिवृत्तिरूपत्वाद् इष्टाविर्भावरूपत्वाच्चेत्यर्थः।

ननु ब्रह्मात्मत्वज्ञानिनोऽपि संस्कारात् संसारानुवृत्तिदर्शनात् कथमुक्त-ज्ञानस्य वेदान्तवाक्यफलत्वमिति शङ्कते– **यद्यपीति**। उत्तरयति– **तथापीति**। शाब्दज्ञानम् = वेदान्तवाक्यजन्यं ज्ञानम्। अनुसन्तन्वतः = नित्यमभ्यस्यतो विदुषो न पूर्ववन्मिथ्याज्ञानमनुवर्तते, प्रत्युताभ्यासबलादत्यन्ताय निवर्तते चेत्यर्थः।

कस्मिंश्चिदर्थे इति कारिकां विवृणोति वृत्तौ– **दृष्टा चेति**। स्पष्टोऽर्थः। **न हीति**। यदर्थ्यते स पुरुषार्थः, न प्रवृत्तिनिवृत्ती इत्याशयः। ननु भवतु तत्र यथा तथा, वैदिकं ज्ञानं तु साध्यभूतप्रवृत्तिनिवृत्तिविषयकमेव सफलम्, न सिद्धब्रह्मविषयमिति शङ्कायामाह– **न च प्रवृत्तीति**। तदुपपादयति– प्रत्यक्षादीनीति।

**यदि मतम्— प्रत्यक्षादिज्ञेयं हि सिद्धं वस्तु पुरुषार्थः सलिलादिः, तदुपकारात्। ततः प्रत्यक्षादीनां पुरुषार्थता भूतनिष्ठानामपि । अत्रापि च शब्दप्रमेयं स्वयमेव ब्रह्म पुरुषार्थो जरादिविविधाशिवोपशमात् परमानन्द-प्रकाशत्वाच्च सुप्रसन्नम्। अत एव ''तत्त्वमसि'' (छा० ६।८।७) इति श्वेतकेतुमुखेनानुशासनीयाय पुरुषाय श्रुत्याऽभिन्नमुपदिश्यते, अभिन्नं हि तदनुशासनीयात्। भेदेन च प्रतीयमानं न पुरुषार्थः। तत्त्वे तादात्म्यज्ञाने च तथाभावात्। विश्वाशिवोपशमात् परमशिवभावाच्च परिपूर्णः पुरुषार्थ आप्तो भवति।**

---

अर्थात् प्रत्यक्षादीन्यपि प्रमाणान्येव सन्ति, न तानि प्रवृत्तिनिवृत्तिपराणि, किन्तु सिद्धवस्तुविषयाण्येव सन्ति, तथापि तेषां पुरुषार्थत्वं न हीयते, तद्वदिहापि स्यादित्यर्थः।

सिद्धवस्तुविषयत्वेऽपि प्रत्यक्षादौ वैशिष्ट्यमाशङ्कते— **यदि मतमिति**। तदुपकारात्—पिपासोपशमादिना पुरुषस्योपकारजननादित्यर्थः। भूतनिष्ठानामपि = सिद्धवस्तुविषयाणामपीत्यर्थः। समानं समाधानमाह — **अत्रापीति**। स्पष्टोऽर्थः कारिकाव्याख्यानेन गतार्थश्चेति। यस्माद् ब्रह्म स्वयं पुरुषार्थः, अत एवात्मनो ब्रह्माभेद उपदिश्यते श्वेतकेतुं प्रति तत्पित्रोद्दालकेन —**''तत्त्वमसि'' इति**। यतस्तद् ब्रह्म परमार्थतोऽभिन्नमेवास्ति अनुशासनीयात् श्वेतकेतोरित्यभिप्रायः। कथमभेदोपदेश इत्याह—**भेदेनेति**। ब्रह्म यदि भेदेन प्रतीयेत अपुरुषार्थः स्यादित्यर्थः। तत्त्वे = ब्रह्मात्मत्वे, ब्रह्मात्मत्वज्ञाने च तथाभावात् = पुरुषार्थ-भावात्। इतरपुरुषार्थापेक्षयाऽत्र वैशिष्ट्यं प्रदर्शयति — **विश्वाशिवोपशमादिति**। एवं हि ब्रह्म न सामान्यपुरुषार्थोऽपि तु परिपूर्णः पुरुषार्थः प्राप्तो भवति ब्रह्माभेदज्ञाने।

**यदि मतम् — प्रत्यक्षादीन्यपि प्रवृत्त्यङ्गान्येव, प्रमितेऽर्थे हानोपादानादिलक्षणायाः प्रवृत्तेस्तन्मूलत्वात्। ईदृशं प्रवृत्त्यङ्गत्वमत्राप्यस्त्येव, शब्दात् प्रमिते ब्रह्मणि साक्षात्करणाय प्रवृत्तेरिष्टत्वादिति।**

**एषा वेदान्ततत्त्वप्रविचयचतुरप्रस्फुरन्न्यायतेजा**
**मार्गं मुक्तेर्निरुन्धन् निबिडमपि तमोऽनादि निर्दारयन्ती।**
**सद्यः प्रक्षालयन्ती घनमपि जगतां तीर्थदुस्तर्कपङ्कं**
**व्याख्यातोत्खातविश्वाऽशिवनिरतिशयश्रेयसे ब्रह्मसिद्धिः ॥ १२॥**

**॥ इति श्रीमदाचार्यमण्डनमिश्राणां कृतिर्ब्रह्मसिद्धिः समाप्ता ॥**

●

---

ननु सिद्धवस्तुविषयाण्यपि प्रत्यक्षादीनि प्रवृत्त्यङ्गान्येव = प्रवृत्तिसाध्यफलकान्येव, अत एव तेषां प्रामाण्यम्। वेदान्तवाक्यानि तु नैवं प्रवृत्त्यङ्गानि, अतो न प्रत्यक्षादिवत् तेषां प्रामाण्यमिति शङ्कते— **यदि मतमिति**। स्वोक्ते हेतुमाह शङ्कक:— **प्रमितेऽर्थ इति**। प्रत्यक्षादितः प्रमितेऽर्थे या हानोपादानादिलक्षणा प्रवृत्तिर्भवति लोकस्य, तस्याः प्रत्यक्षादिमूलकत्वात् तत्र प्रत्यक्षादीनि प्रमाणानि प्रवृत्त्यङ्गानीत्युच्यन्त इति। अत्र समाधानसाम्यमाह सिद्धान्ती— **ईदृशमिति**। एवंविधं प्रवृत्त्यङ्गत्वं वेदान्तवाक्येऽप्यस्त्येव। यतः शब्दात् = वेदान्तवाक्यात् प्रमिते ब्रह्मणि तत्साक्षात्कारार्थं प्रवृत्तेः श्रुतेरिष्टत्वादित्यभिप्राय इति सर्वमवदातम्।

ग्रन्थान्ते तत्त्वानुस्मरणरूपं मङ्गलमाचरन् ग्रन्थकृद् ग्रन्थनिर्माणस्य विशिष्टप्रयोजनकथनपुरस्सरं शास्त्रार्थमुपसंहरति— **एषेति**।

वेदान्ततत्त्वप्रविचयचतुरप्रस्फुरन्न्यायतेजा, मुक्तेर्मार्गं निरुन्धद् निबिडमपि अनादितमो निर्दारयन्ती, जगतां घनमपि तीर्थदुस्तर्कपङ्कं सद्यः प्रक्षालयन्ती एषा ब्रह्मसिद्धिः उत्खातविश्वाशिवनिरतिशयश्रेयसे (मया) व्याख्याता इत्यन्वयः।

अयमर्थः – वेदान्तानां = वेदान्तवाक्यानाम्, तत्त्वस्य = तात्पर्यस्य अद्वितीय-ब्रह्मात्मपरत्वस्येति यावत्, प्रविचये= प्रकर्षेण प्रकाशने, चतुरः = समर्थः, प्रस्फुरन्न्यायः= (प्रद्योतमानो न्यायस्तर्कः) प्रद्योतमानस्तर्क एव तेजो यस्याम्, सा इति ब्रह्मसिद्धिविशेषणम्। एवम्, मुक्तेः = मोक्षस्य मार्गम् = अद्वितीयब्रह्मात्मतत्त्वानुभवम्, निरुन्धत् = आच्छादयत्, निबिडम् = अहङ्काराद्यध्यासैर्घनीभूतम्, अनाद्यपि तमः = अज्ञानम्, निर्दारयन्ती = निःशेषेण विनाशयन्ती, एवम्, घनमपि = अतिसंश्लिष्टमपि तीर्थं = शास्त्रम्, शास्त्रान्तरमिति यावत्। तथा च शास्त्रान्तरप्रतिपादिता ये दुस्तर्कास्तदात्मकं पङ्कं सद्यः = ब्रह्मसिद्धेरध्ययनाद् अव्यवहितोत्तरमेव प्रक्षालयन्ती= प्रकर्षेण खण्डयन्ती, एषा = एवंगुणविशिष्टा स्वोपज्ञवृत्त्युपेता जगताम् = मुमुक्षुजनानाम्, उत्खातम् = उन्मूलितम्, विश्वम् = सकलम्, अशिवम्= दुःखं यत्र तादृशे निरतिशयश्रेयसे = सर्वातिशायिकल्याणाय कारिकात्मिका ब्रह्मसिद्धिः, ब्रह्मणः सिद्धिः= निर्विचिकित्सनिश्चयो यया तादृशी मया (मण्डनमिश्रेण) व्याख्याता इति ग्रन्थपरोऽर्थः।

अत्र 'एषा' इति स्त्रीलिङ्गप्रयोगो न किञ्चिदसामञ्जस्यमावहति, ब्रह्मसिद्धिपदे षष्ठीसमासस्यैव मुख्यतोऽभिप्रेतत्वात्। अथवा प्रयोज्य-प्रयोजकयोरभेदविवक्षया समाधेयम्, तेन ब्रह्मसिद्धिप्रयोजको ग्रन्थोऽपि ब्रह्मसिद्धिरेवेत्याशयो बोध्यो ग्रन्थकर्तुरिति। निश्चयात्मिका ब्रह्मसिद्धिः साक्षाद् निरतिशयश्रेयोहेतुर्भवति ग्रन्थरूपा च परम्परयेति विवेचनीयम्। व्याख्यानमपि ब्रह्मसिद्धौ उभयथा सङ्गच्छते ग्रन्थविधयापि विषयविधयापीत्यप्यवधेयम्।

**विहारराज्ये सारण्यमण्डले प्राक्तने शुभे।**
**ग्रामे विष्णुपुरे रम्ये लब्धजन्माऽग्रजन्मनः॥ १॥**
**त्रिपाठ्युपाह्वरामादेर्विहारीति शुभाभिधात्।**
**न्यायवैशेषिकं शुक्लात् सूर्यनारायणाद् गुरोः॥ २॥**

महामहोपाध्यायाच्च द्विवेदोपाधिभूषितात् ।
वेदान्तं विश्रुताच्छ्रीमद्धरिहरकृपालुतः ॥ ३ ॥

श्रुत्वा, वादविदग्रणीः स विदितः केदारनाथः कृती
नैकग्रन्थप्रणेतृतासुविदितः शास्त्रेषु भूरिश्रमः ।
शून्येष्वम्बरनेत्रसम्मित (२०५०) इमां वर्षे व्यधाद् वैक्रमे
आषाढे सितपक्षयुग्मदिवसे व्याख्यां कुजे शोभनाम् ॥ ४ ॥

॥ इति न्यायवेदान्तसांख्ययोगाचार्येण काशीहिन्दूविश्वविद्यालये प्राच्यविद्याधर्मविज्ञानसंकाये दर्शनविभागाध्यक्षचरेण वाचस्पतिना (डी. लिट्.) आचार्य-श्रीकेदारनाथत्रिपाठिना 'दर्शनरत्नेन' प्रणीतं ब्रह्मसिद्धेर्विवेचनं सम्पूर्णम् ॥

॥ श्रीविश्वनाथार्पणमस्तु ॥